# अद्वैतसिद्धिः

बालबोधिन्याख्यया
व्याख्ययोद्भासिता

द्वितीयो भागः

तारा पब्लिकेशन्स
वाराणसी
१९७१

प्राच्यभारती ग्रन्थमाला-१३

# अद्वैतसिद्धिः

डी. लिट्. इत्युपाधिधारिणा तर्कसांख्यवेदान्ततीर्थेन बागचीत्युपाह्वेन
महामहोपाध्यायश्रीमद्योगेन्द्रनाथदेवशर्मणा प्रणीतया

बालबोधिन्याख्यया

व्याख्ययोद्भासिता

मिथिलाशोधसंस्थाननिदेशकेन डी. लिट्. इत्युपाधिधारिणा
बागचीत्युपाह्वेन श्रीशीतांशुशेखरदेवशर्मणा सम्पादिता

द्वितीयो भागः

तारा पब्लिकेशन्स
वाराणसी

Pracya Bharati Series-13

# ADVAITASIDDHI

*With the Commentary*

# BĀLABODHINĪ

BY

MM. DR. YOGENDRANATH BAGCHI
*D. Litt., Tarka-Sāṅkhya-Vedāntatīrtha*

EDITED BY

DR. SITANSUSEKHAR BAGCHI,
*M. A., LL. B., D. Litt.*
*Director, Mithila Research Institute, Darbhanga*

VOL. II

TĀRĀ PUBLICATIONS
VĀRĀṆASĪ
1971

# विषयानुक्रमणिका

## ॥ अद्वैतसिद्धिः ॥

### अथासतस्साधकत्वोपपत्तिः ।

ननु सत्त्वसाधकानां मिथ्यात्वसाधकानुमानेभ्यः प्राबल्यम् । मिथ्यात्वसाधकप्रतिज्ञाद्युपनीतपक्षादीनां मिथ्यात्वाबोधने सर्वमिथ्यात्वासिद्धिः । तद्बोधने परस्परव्याहतिराश्रयासिद्ध्यादिकश्चेति चेत् ॥१॥

---

१—शशविषाणादीनामसतां साधकत्वं कस्यापि मते न सम्भवति । तथा च कथमसतः साधकत्वं नाम प्रकरणं प्रारब्धम् ? अत्रेदं वक्तव्यम्—पूर्वपक्षिमते बाध्यत्वमेवासत्त्वम् । तच्च सिद्धान्तिमते व्यावहारिकप्रातिभासिकयोरस्त्येव । ब्रह्मज्ञानबाध्यत्वाद् व्यावहारिकस्य ब्रह्मज्ञानेतरबाध्यत्वात् प्रातिभासिकस्य । तथा च तयोः साधकत्वं यत् सिद्धान्तिनाऽङ्गीक्रियते तत्पूर्वपक्षिमतेऽसतः साधकत्वाङ्गीकारे एव स्यात्, बाध्यस्य साधकत्वाङ्गीकारात् । अतो बाध्यस्य साधकत्वसमर्थनमसतः साधकत्वसमर्थनमेव सद्विविक्तत्वमेव वाऽसत्त्वमित्यभिप्रायेणासतः साधकत्वमसमर्थनं प्रारभते मूलकारः इति भावः ।

प्रपञ्चसत्त्वसाधकप्रमाणापेक्षया प्रपञ्चमिथ्यात्वसाधकानुमानानां व्याहत्यादिना दौर्बल्यात् न सत्त्वसाधकमानबाधकत्वमित्यभिप्रेत्य पूर्वपक्षी शंकते—ननु सत्त्वसाधकानां मिथ्यात्वसाधकानुमानेभ्यः प्राबल्यम् । मिथ्यात्वसाधकप्रतिज्ञाद्युपनीतपक्षादीनां मिथ्यात्वाबोधने सर्वमिथ्यात्वासिद्धिः । तद्बोधने परस्परव्याहतिराश्रयासिद्ध्यादिकश्चेति चेत् । प्रपञ्चसत्त्वसाधकमानानां प्रत्यक्षानुमानागमादीनां परस्परव्याहत्यादिदोषराहित्येन प्राबल्यात् न तद्बाधाय प्रपञ्चमिथ्यात्वसाधकानुमानेन मिथ्यात्वसिद्धिः । मिथ्यात्वसाधकादृश्यत्वजडत्वपरिच्छिन्नत्वादयो हेतवः सिद्धान्त्यभिमताः एतैरेव हेतुभिः प्रतिज्ञाहेतूदाहरणादिप्रापितानां साध्यसाधनव्याप्त्यादीनां मिथ्यात्वं बोध्यते न वेति, न बोध्यते चेत्, सर्वमिथ्यात्वासिद्धिः, बोध्यते चेत्, परस्परव्याहतिः बाधस्वरूपासिद्धिव्याप्यत्वासिद्ध्यादिकञ्च स्यात् । कथं परस्परव्याहत्यादिकमिति चेत्, शृणु—विमतं मिथ्येति प्रतिज्ञारूपेण वाक्येन

न, मिथ्यात्वसाधकप्रतिज्ञाद्युपनीतपक्षादीनां मिथ्यात्वबोधनेऽपि व्याहत्यभावात्। प्रतिज्ञादिभिस्तेषां त्रिकालाबाध्यत्वरूपसत्त्वाप्रतिपादनात् ॥२॥

---

पक्षे मिथ्यात्वं विधीयते। अनुमानेन तु विश्वमिथ्यात्वं साधयता विश्वान्तर्गतस्य मिथ्यात्वरूपप्रतिज्ञार्थस्यात्यन्ताभावरूपं मिथ्यात्वं साध्यते इति परस्परं व्याहतिः। अनुमानेन विश्वान्तर्गतमिथ्यात्वस्यापि अत्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वबोधने पक्षे मिथ्यात्वरूपसाध्यस्याभावप्राप्त्या बाधः एवं मिथ्यात्वानुमानेन विश्वान्तर्गतदृश्यत्वादिहेतूनां अत्यन्ताभावसाधनपक्षे असत्त्वप्राप्त्या स्वरूपासिद्धिः एवमेवोदाहरणवाक्यप्राप्तिः तस्य व्याप्यत्वस्य मिथ्यात्वबोधने व्याप्यभावप्राप्त्या व्याप्यत्वासिद्धिरित्यर्थः एवं प्रतिज्ञावाक्योपनीतपक्षस्य अत्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वसाधने आश्रयासिद्धिश्च स्यात्। एवञ्चोभयथापि दोषेभ्योऽनिस्तारात् मिथ्यात्वानुमानमसंगतमेवेति भावः ॥१॥

२—प्रतिज्ञादिना पक्षसाध्यादेरबाध्यत्वं यल्लभ्यते इति यदुक्तं तत् प्रतिज्ञादेस्तद्बोधकत्वाद्वा तद्बोधकत्वान्यथानुपपत्तेर्वा, नान्त्यः, व्यवहारकालाबाध्यबोधकत्वेनैव तदुपपत्तेः, नाद्यः, तद्वाचकपदाभावात् इत्यभिप्रेत्य सिद्धान्ती समाधत्ते—**न मिथ्यात्वसाधकप्रतिज्ञाद्युपनीतपक्षादीनां मिथ्यात्वबोधनेऽपि व्याहत्यभावात्। प्रतिज्ञादिभिस्तेषां त्रिकालाबाध्यत्वरूपसत्त्वाप्रतिपादनात्।** प्रतिज्ञादिभिः पक्षादीनां त्रिकालाबाध्यत्वरूपसत्त्वप्रतिपादने पुनश्च तेषां मिथ्यात्वप्रतिपादने स्यादेव व्याघातः, किन्तु प्रतिज्ञादिभिस्तेषां पारमार्थिकसत्त्वं न प्रतिपाद्यते। व्यवहारकालाबाध्यत्वमात्रेणैव पक्षतादेरुपपत्तेः। ननु. स्वतः प्रामाण्यबलात् धीमात्रस्य तद्ग्राहकेण साक्षिणा अबाध्यविषयकज्ञानत्वरूपं प्रामाण्यं गृह्यते इति चेन्न। त्रिकालाबाध्यत्वादिघटितस्य प्रामाण्यस्य स्वतस्त्वासम्भवेन **मिथ्यात्वेन यदज्ञातं** तद्विषयकज्ञानत्वरूपप्रामाण्यस्यैव स्वतस्त्वात्। नहि ज्ञानग्राहकेण साक्षिणा स्वासम्बन्धं कालादिकं गृह्यते, अज्ञातत्वन्तु स्वसम्बन्धत्वात् गृह्यते एव तद्विशेषणतया मिथ्यात्वमपि गृह्यते, तदुक्तम् विवरणे—ज्ञाततयाऽज्ञाततया वा सर्वं साक्षिचैतन्यस्य विषय एव इति। [विवरणम्, पृ० ९९, मेट्रो सं०]उक्तञ्चाद्वैतरत्नरक्षायां [रक्षने] मधुसूदनेन—अज्ञातार्थनिश्चयात्मकत्वमेव प्रामाण्यमस्मत्पक्षे

ननु साधकत्वान्यथानुपपत्त्या परमार्थसत्त्वमायाति परमार्थसत एव साधकत्वात्। साधकतायाः प्राक्सत्त्वघटितत्वात् न तु धीमात्रविषयत्वम्। अपरोक्षधीविषयत्वं सत्त्वेन तादृशधीविषयत्वं वा साधकताप्रयोजकम्। तुच्छे नित्यातीन्द्रिये चातिव्याप्त्यव्याप्तिभ्याम्। तत्त्वेन ज्ञानमपि न तत्र प्रयोजकं वह्नित्वेनाज्ञातेऽपि वह्नौ दाहकत्वदर्शनात्। वह्नित्वेन ज्ञातेऽपि गुञ्जापुञ्जे तददर्शनाच्च। नापि त्रिचतुरकक्ष्यास्वबाधितासत्त्वप्रतीतिस्तन्त्रम् आत्मनो गौरत्वेन अनित्यत्वस्य नभसो नैल्येन स्पर्शवत्त्वस्य चापत्तेः। गौरोऽहं नीलं नभः इत्यादिप्रतीतावपि त्रिचतुरकक्ष्यास्वबाधात्। यौक्तिकबाधस्य त्वन्मते प्रकृतेऽपि भावादिति चेत् ॥३॥

---

सर्वत्रानुगतमिति [अद्वै० र० र०, पृ० ३२] एतेन वेदान्तपरिभाषाकृदुक्तलक्षणं परास्तम् व्यर्थविशेषणत्वात् प्रमात्वस्य स्वतो ग्राह्यत्वासम्भवाच्च ॥२॥

३—ननु अनुमानप्रयोगेन दृश्यत्वादीनां मिथ्यात्वबोधनेऽपि साधकत्वमुपपद्यत एव मिथ्याभूतस्यैव सिद्धान्तिना साधकत्वाङ्गीकारादित्यतः परमार्थस्य स्वत एव साधकत्वं साधयितुं शंकते पूर्वपक्षी—ननु साधकत्वान्यथानुपपत्त्या परमार्थसत्त्वमायाति परमार्थसत एव साधकत्वात् साधकतायाः प्राक् सत्त्वघटितत्वात् न तु धीमात्रविषयत्वम्, अपरोक्षधीविषयत्वं सत्त्वेन तादृशधीविषयत्वं वा साधकताप्रयोजकम्। तुच्छे नित्यातीन्द्रिये चातिव्याप्त्यव्याप्तिभ्याम्। तत्त्वेन ज्ञानमपि न तत्र प्रयोजकं वह्नित्वेनाज्ञातेऽपि वह्नौ दाहकत्वदर्शनात्। वह्नित्वे ज्ञातेऽपि गुञ्जापुञ्जे तददर्शनाच्च। नापि त्रिचतुरकक्ष्यास्वबाधिता सत्त्वप्रतीतिस्तन्त्रमात्मनो गौरत्वेन अनित्यत्वस्य नभसो नैल्येन स्पर्शवत्त्वस्य चापत्तेः। गौरोऽहं नीलं नभः इत्यादिप्रतीतावपि त्रिचतुरकक्ष्यास्वबाधात्। यौक्तिकबाधस्य त्वन्मते प्रकृतेऽपि भावादिति चेत्। साधकत्वं परमार्थसत्त्वं विना अनुपपन्नं परमार्थसत्त्वं कल्पयति। परमार्थसत्त्वस्य साधकत्वे तन्त्रत्वं परिशेषेणोपपादयन् आह—न तु धीमात्रविषयत्वं स्वरूपं सत्त्वं न साधकताघटकं किन्तु धीविषयत्वादिकं तत्राह—न धीमात्रविषयत्वमिति—

साधकतायाः प्राक्सत्त्वघटितत्वात् न धीमात्रविषयत्वं साधकताघटकं शब्दाभासादिना शशविषाणादीनामपि ज्ञानसम्भवेन ज्ञानविषयत्वस्य शशविषाणादावपि सत्त्वात् तेषामपि साधकत्वप्रसंगात्। तुच्छव्यावृत्तये अपरोक्षधीविषयत्वरूपं सत्त्वं साधकताघटकमस्तु इत्यपि न तुच्छस्यापरोक्षधीविषयत्वाभावेनातिव्याप्त्यभावेऽपि नित्यातीन्द्रियस्य धर्माधर्मादेः गुरुत्वस्य च अपरोक्षधीविषयत्वाभावेनाव्याप्त्यापत्तेः, नित्यातीन्द्रियाणामपि साधकत्वमस्त्येव तत्त्वेन ज्ञानमपि न तत्र प्रयोजकमिति अपरोक्षसत्त्वज्ञानमित्यर्थः अपरोक्षसत्त्वज्ञानमपि न साधकताघटकम्। कुत इत्यत आह वह्नित्वे ज्ञातेऽपीति। अस्मिन् पक्षेऽपि नित्यातीन्द्रियेऽव्याप्तिरस्त्येव। अस्मिन् पक्षेऽधिकं दूषणमाह—वह्नित्वेनापरोक्षज्ञानाभावेऽपि वह्नौ दाहजनकत्वदर्शनात् गुञ्जापुञ्जे वह्नित्वेनापरोक्षज्ञानसत्त्वेऽपि दाहजनकत्वादर्शनात् न तदपि साधकताघटकम्। परमार्थसत्त्वमेव साधकत्वे तन्त्रमिति साधयितुं प्रकारान्तरमाशंक्य निषेधति—नापि त्रिचतुरकक्ष्यास्विति उक्तञ्च भट्टपादैः श्लोकवार्तिके चोदनासूत्रे—

एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः।
प्रार्थ्यते तावदेकैकं स्वतः प्रामाण्यमश्नुते ॥ [६१] ॥

व्याख्यातञ्च सुचरितमिश्रैः—एवं त्रिचतुरैरेव ज्ञानैर्दोषाभावसिद्धेर्न ततोऽधिका मतिः प्रार्थनीया प्रामाण्यसिद्धये येनानवस्था भवेत्। यावदेव तृतीयं चतुर्थं वा ज्ञानमुत्पन्नं तावदेकैकं पूर्वमुत्तरं वा निरपवादं स्वतः प्रामाण्यमापद्यते इति भट्टपादोक्तिमनुसरन्नाह—त्रिचतुरकक्ष्यास्वबाधिता सत्त्वप्रतीतिस्तन्त्रं साधकत्वे इति शेषः। या सत्त्वप्रतीतिः उत्तरोत्तरोत्पन्नेषु त्रिषु, चतुर्षु वा ज्ञानेषु अबाधिता तिष्ठति तादृश्याः प्रतीतेर्विषयीभूतं सत्त्वमेव साधकत्वे तन्त्रं न परमार्थसत्त्वं तन्त्रमिति भावः। तन्निरस्यति, नैतद्वक्तुं युक्तं, यतः आत्मनो गौरत्वेन प्रतीतेः त्रिचतुरकक्ष्यासु अबाधितसत्त्वविषयकत्वादात्मनो गौरत्वेन प्रतीतेरपि साधकत्वप्रसंगात् तथा च आत्मा अनित्यः रूपवत्त्वात् घटादिवत् इत्येवं गौररूपेणात्मनि अनित्यत्वसिद्धिः स्यात्। भौतिकरूपस्य नाशव्याप्यत्वादिति भावः। तथा नीलं नभः इति प्रतीतेरपि त्रिचतुरकक्ष्यासु अबाधितसत्त्वविषयकत्वमस्ति। नभो नैल्यप्रतीतेरपि साधकत्वप्रसंगात्। तथा च नभः, स्पर्शवत्, नीलरूपवत्त्वात्, नीलघटादिवत्, इत्येवं नीलरूपे-

न, यादृश्या बुद्धया तव नभोनैल्यादिधीव्यावृत्तया घटादौ सत्त्वसिद्धिः तादृक्बुद्धिविषयत्वस्यैव साधकत्वे तन्त्रत्वात्। अत एव लोकप्रसिद्धिरपि तन्त्रमितीष्टसिद्ध्युक्तमप्युक्ताभिप्रायेण सम्यगेव। एवं त्रिचतुरकक्ष्यास्वबाधितवादिप्रतिवादिप्राश्निकादीनां सत्त्वबुद्धिस्तन्त्रमित्युपपन्नमेव। गुञ्जापुञ्जस्य वह्नित्वे आत्मनो गौरत्वे नभसो नीलत्वे च तादृग्बुद्धिविषयत्वस्य तवापि असम्प्रतिपत्तेः। अन्यथा तेषामपि तत्र सत्त्वसिद्धिप्रसंगात् ॥४॥

---

णाकाशेऽपि स्पर्शसिद्धिः स्यात् इति भावः। गौरोऽहं नीलं नभः इत्यादिप्रतीतेरपि त्रिचतुरकक्ष्यास्वबाधात्।

ननु त्रिचतुरकक्ष्यास्वबाधितत्वं न प्रत्यक्षमात्रेण बाधाभावः, किन्तु बाधसामान्याभावः, तथा च न त्रिचतुरकक्ष्यास्वबाधः। आत्माकाशौ न रूपवन्तौ विभुत्वादित्यनुमानबाधोऽस्ति चेत्? तत्राह यौक्तिकबाधस्य त्वन्मते इति सिद्धान्तिमते इत्यर्थः, प्रपञ्चे सत्त्वधियोऽपि अनुमानबाधिताया सिद्धान्तिना अङ्गीकृतत्वात् न त्रिचतुरकक्ष्यास्वबाधितसत्त्वधीस्त्वन्मतेऽस्तीति दृश्यत्वादीनां साधकत्वं न स्यादित्यर्थः।

सिद्धान्ती समाधत्ते—न, यादृश्या बुद्ध्या तव नभोनैल्यादिधीव्यावृत्तया घटादौ सत्त्वसिद्धिः तादृक्बुद्धिविषयत्वस्यैव साधकत्वे तन्त्रत्वात्। अत एव लोकप्रसिद्धिरपि तन्त्रमितीष्टसिद्ध्युक्तमप्युक्ताभिप्रायेण सम्यगेव। एवं त्रिचतुरकक्ष्यास्वबाधितवादिप्रतिवादिप्राश्निकादीनां सत्त्वबुद्धिस्तन्त्रमित्युपपन्नमेव। गुञ्जापुञ्जस्य वह्नित्वे आत्मनो गौरत्वे नभसो नीलत्वे च तादृक्बुद्धिविषयत्वस्य तवापि असम्प्रतिपत्तेः। अन्यथा तेषामपि तत्र सत्त्वसिद्धिप्रसंगात्। यादृश्या बुद्ध्या व्यावहारिकसत्त्वविषयया तव पूर्वपक्षिणो माध्वस्य घटादौ सत्त्वसिद्धिः। व्यावहारिकसत्त्वविषया बुद्धिः नभोनैल्यादिधीव्यावृत्ता नभोनैल्यादिबुद्धेः प्रातिभासिकसत्त्वविषयकत्वादिति भावः। तादृग्बुद्धिविषयत्वस्यैव—व्यावहारिकसत्त्वविषयकबुद्धिविषयत्वस्यैव साधकत्वे तन्त्रत्वात् व्यावहारिकसत्त्वं विना साधकत्वमनुपपन्नमतः साधकत्वं तादृक् सत्त्वमेव आक्षिपतीति भावः। अत एव

लोकप्रसिद्धिरपि साधकत्वे तन्त्रमिति इष्टसिद्धिकारोक्तमपि व्यावहारिकसत्त्वविषयकज्ञानाभिप्रायम् । अत एव खण्डनकारैरप्युक्तं कथं पुनः असतः कारणत्वमवसेयं प्राक् सत्त्वनियमानभ्युपगमात् असत्त्वस्य सर्वासत्सु अविशेषात् इति चेन्न, इदमस्मात् प्राक् सदिति बुद्धया विशेषात् । यादृश्या त्रिचतुरकक्ष्या बाधानवबोधे विश्रान्तया वस्तुसत्तानिश्चयस्तव मते, तादृश्यैव कारणतानिश्चयो ममापीति । उक्तञ्च खण्डने—

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥

अन्यत्रापि उक्तञ्च खण्डने यादृश्या हि धियः त्रिचतुरकक्षाबाधानवबोधविश्रान्तया वस्तुसत्त्वनिश्चयस्ते तादृश्यैव विषयीकृतस्य ममापि कारणतानिश्चयः केवलं ततः परास्वपि कक्षासु बाधात् पूर्वपूर्वभ्रान्तिसम्भवेन न तावता सत्त्वावधारणं वयं मन्यामहे इति विशेषः [खण्ड० पृ० ७१] एतस्मात् खण्डनवाक्यादेवाचार्येण सिद्धान्तः संगृहीतः । विवृतञ्च विद्यासागरेण—पूर्वपक्षिणोऽपि किं प्रतीतिमात्रं प्राक् सत्त्वव्यवस्थापकमुतात्यन्ताबाधितप्रतीतिः ? आद्ये, प्रसंगसाम्यम् भ्रान्त्यात्मकबुद्धिगोचरेऽतिप्रसंग इत्यर्थः । द्वितीये, देशकालान्तरभाविबाधाभावस्य प्राक्तानवसेयत्वादसिद्धिः । त्रिचतुरकक्षाऽबाधितया इति चेत्, ममापि तर्हि तादृश एव विषयीकृतस्य कारणत्वनियमः । त्रिचतुरकक्षासु यन्न बाधते तत् कालान्तरेऽपि न बाधिष्यत इति सम्भावनास्पदम्, तत्राह खण्डनकारः—परदर्शनसिद्धान्तस्य भूरिकक्षाधाविनोऽपि ततः परकक्षाबाध्यत्वेनातथाभावोपगमात् । अन्यथा एकदर्शने परिशेषः स्यात् । प्रामाणिकसिद्धान्त इति नियमात् परदर्शनसिद्धान्तप्रतीतौ अबाधितश्च यदि, तदा सर्वैः स्वीकार्या इति न दर्शनभेदो भवेदिति भावः । एकमेव या सत्त्वबुद्धिः वादिप्रतिवादिप्राश्निकानां त्रिचतुरकक्षास्वबाधिता तादृशबुद्धिविषयत्वमेव साधकत्वे तन्त्रम् । तादृशसत्त्वं विना साधकत्वमनुपपन्नम् । गुञ्जापुञ्जस्य वह्नित्वे तादृक्बुद्धिविषयत्वस्य त्रिचतुरकक्षाबाधितविषयत्वस्य पूर्वपक्षिणोऽपि असम्प्रतिपत्तेः । एवमेवात्मनो गौरत्वे, नभसो नीलत्वे च गुञ्जापुञ्जस्य वह्नित्वे, आत्मनो गौरत्वे, नभसो नीलत्वे च सत्त्वबुद्धिर्यदि त्रिचतुरकक्षासु अबाधिता स्यात्तर्हि तेषामपि सत्त्वसिद्धिप्रसंगः ॥ ४ ॥

अथ यादृश्या शब्दे क्लृप्तदोषरहितया बुद्धया तव ब्रह्मणि सत्त्वसिद्धिः तादृश्यां प्रत्यक्षे क्लृप्तदोषरहितया मम जगति सत्त्वसिद्धिरस्तु, साधकतुल्यत्वादिति चेत् ॥५॥

न, ब्रह्मसत्त्वबुद्धिवत् जगत्सत्त्वबुद्धेरबाधितत्वाभावात्। त्रिकालाबाध्यत्वरूपसत्त्वस्य प्रत्यक्षाविषयताया उक्तत्वाच्च ॥६॥

न च बुद्धिविषयत्वस्य तन्त्रत्वे वह्नित्वेनाज्ञातस्य वह्नेरदाहकत्वप्रसंगः। अमृतत्वेन ज्ञातस्य च विषस्य सञ्जीवकत्वप्रसंग इति वाच्यम्।

---

५—पूर्वपक्षी शंकते—अथ यादृश्या शब्दे क्लृप्तदोषरहितया बुद्धया तव ब्रह्मणि सत्त्वसिद्धिस्तादृश्या प्रत्यक्षे क्लृप्तदोषरहितया मम जगति सत्त्वसिद्धिरस्तु, साधकतुल्यत्वादिति चेत्। श्रुत्या अपौरुषेयया अत एव निर्दोषया ब्रह्मणि सत्त्वसिद्धिः, या श्रुतिर्ब्रह्मसाधिका तस्यां श्रुतौ दोषराहित्यधीर्यादृशी सिद्धान्तिनो वर्तते तादृशधीविषयत्वं जगत्सत्त्वग्राहकप्रत्यक्षेऽपि वर्तते। जगत्सत्त्वग्राहकं प्रत्यक्षमपि क्लृप्तदोषरहितमिति बुद्धिः सिद्धान्तिनोऽपि वर्तते। क्लृप्तदोषरहितत्वेन ज्ञाता श्रुतिर्यदि ब्रह्मसाधिका तदा क्लृप्तदोषराहित्येन ज्ञातं प्रत्यक्षम् कथं जगत्सत्त्वसाधकं न भवेत्? ब्रह्मणि सत्त्वसाधिकायाः श्रुतेः जगत्सत्त्वग्राहकप्रत्यक्षस्य तुल्यत्वाद्। जगत्सत्त्वग्राहकप्रत्यक्षस्य ब्रह्मसत्त्वसाधकश्रुतेश्च निर्दोषत्वेन तुल्यत्वादिति पूर्वपक्षिणोऽभिमानः ॥५॥

६—समाधत्ते—न, ब्रह्मसत्त्वबुद्धिवत् जगत्सत्त्वबुद्धेरबाधितत्वाभावात्। त्रिकालाबाध्यत्वरूपसत्त्वस्य प्रत्यक्षागम्यताया उक्तत्वाच्च। सर्वथा अबाध्यत्वमेव सत्त्वम्। तच्च न प्रत्यक्षगम्यमिति प्रत्यक्षबाधोद्धारे एव प्रपञ्चितम्। ब्रह्मणः सत्त्वं न प्रत्यक्षगम्यम्। किन्तु आगमैकवेद्यम्। तच्च त्रिकालाबाध्यत्वरूपं सर्वथा अबाध्यत्वम्। जगति सत्त्वं प्रत्यक्षेण गृह्यते। त्रिकालाबाध्यत्वरूपसत्त्वस्य प्रत्यक्षाविषयतया जगति त्रिकालाबाध्यत्वरूपसत्त्वस्य प्रत्यक्षप्रमाणेन सिद्धिर्न भवितुमर्हति। अतो जगत्सत्त्वबुद्धेरबाधितत्वं नास्ति। बुद्धिविषयत्वं साधकत्वे प्रयोजकं न भवितुमर्हतीति ॥६॥

७—पूर्वपक्षी शंकते—न च बुद्धिविषयत्वस्य तन्त्रत्वे वह्नित्वेनाज्ञातस्य वह्नेरदाहकत्वप्रसंगः। अमृतत्वेन ज्ञातस्य च विषस्य सञ्जीवक-

वह्नौ तादृक्बुद्धिविषयत्वस्य ईश्वरादिसाधारणस्य सत्त्वात्। विषे सञ्जीवकत्वप्रसंगस्य नभोनैल्यादितुल्यत्वाद्, वस्तुतस्तु— ज्ञाताज्ञातसाधारणं व्यावहारिकं सत्त्वमेव साधकत्वे तन्त्रं तच्च ब्रह्मज्ञानेतराबाध्यत्वमेव तच्च न मिथ्यात्वघटितं। अत्यन्ताबाध्ये ब्रह्मज्ञानबाध्ये च तुल्यत्वात्। अत एव नेदं परमार्थसत्त्वव्याप्यम्। एवञ्च परमार्थसत्त्वस्य साधकतायामतन्त्रत्वेन तदभावेऽपि न साधकत्वानुपपत्तिः। एतेन व्यावहारिकत्वं ब्रह्मज्ञानबाध्यत्वं वा व्यावहारिकविषयत्वे सति सत्त्वं वा सत्त्वेन व्यवहारमात्रं वा ? नाद्यः, मिथ्यात्वसिद्धेः प्राक् तदसिद्ध्या अन्योन्याश्रयात्। नापि द्वितीयः, तस्यास्माकं मिथ्यात्वाविरोधित्वेनेष्टत्वात्। न तृतीयः, सत्त्वाभावे साधकत्वानुपपत्तेरिति निरस्तम् उक्तनरुक्तेरदुष्टत्वात् ॥७॥

---

त्वप्रसंग इति वाच्यं निगदव्याख्यातोऽयं पूर्वपक्षग्रन्थः सिद्धान्ती समाधत्ते— वह्नौ तादृक्बुद्धिविषयत्वस्य ईश्वरादिसाधारणस्य सत्त्वात्। विषे सञ्जीवकत्वप्रसंगस्य नभोनैल्यादितुल्यत्वात्। वस्तुतस्तु—ज्ञाताज्ञातसाधारणं व्यावहारिकं सत्त्वमेव साधकत्वे तन्त्रं तच्च ब्रह्मज्ञानेतराबाध्यत्वमेव तच्च न मिथ्यात्वघटितमत्यन्ताबाध्ये ब्रह्मज्ञानबाध्ये च तुल्यत्वात्। अत एव नेदं परमार्थसत्त्वव्याप्यम्। एवञ्च परमार्थसत्त्वस्य साधकतायामतन्त्रत्वेन तदभावेऽपि न साधकत्वानुपपत्तिः एतेन व्यावहारिकत्वं ब्रह्मज्ञानबाध्यत्वं वा व्यावहारिकविषयत्वे सति सत्त्वं वा सत्त्वेन व्यवहारमात्रं वा, नाद्यः, मिथ्यात्वसिद्धेः प्राक् तदसिद्ध्या अन्योन्याश्रयात्। नापि द्वितीयः, तस्य अस्माकं मिथ्यात्वविरोधित्वेन इष्टत्वात्। न तृतीयः सत्त्वाभावे साधकत्वानुपपत्तेरिति निरस्तमुक्तनिरुक्तेरदुष्टत्वात्।

वह्नेरदाहकत्वप्रसंग इति यदुक्तं तन्न, वह्नित्वेन ज्ञानविषयत्वस्य वह्नौ तत्पुरुषीयज्ञानविषयत्वाभावेऽपि ईश्वरीयतादृशज्ञानविषयत्वस्य योगिनो वा तादृशज्ञानविषयत्वस्य च वह्नौ सत्त्वात् बुद्धिविषयत्वस्य साधकत्वे तन्त्रत्वमक्षतमेव। विषस्यामृतत्वेन ज्ञानं नभो नैल्यादिज्ञानतुल्यमेव। नभोनैल्यादिधीव्यावृत्त-

या धिया घटादेः सत्त्वसिद्धिप्रागुक्तैव। समाधानरहस्यमाह—बुद्धिविषयत्वस्य न साधकत्वे तन्त्रत्वं किन्तु व्यावहारिकसत्त्वमेव ज्ञाताज्ञातसाधारणं साधकत्वे तन्त्रम्, नभोनैल्यादेः प्रातिभासिकत्वात् न व्यावहारिकसत्त्वमज्ञातेऽपि वह्नौ व्यावहारिकसत्त्वस्य विद्यमानत्वात् न दाहादिजनकत्वानुपपत्तिः। नभोनैल्यादौ प्रातिभासिके तदभावात् न साधकत्वोपपत्तिः। तच्च व्यावहारिकसत्त्वं ब्रह्मज्ञानेतराबाध्यत्वमेव। एतच्च मिथ्यात्वनिरुक्तावेव कृतनिर्वचनम्, एतद् व्यावहारिकसत्त्वं न मिथ्यात्वघटितं यतः सर्वथाऽबाध्ये ब्रह्मणि ब्रह्मज्ञानबाध्ये वियदादिप्रपञ्चे च वर्तते। अतो बाध्याबाध्यसाधारणं व्यावहारिकसत्त्वं न मिथ्यात्वघटितम्। मिथ्यात्वघटितत्वेऽस्य ब्रह्मसाधारण्यं न स्यात्। अत एवेदं व्यावहारिकसत्त्वं न परमार्थसत्त्वव्याप्यम्। परमार्थसत्त्वव्याप्यत्वे ब्रह्मज्ञानमात्रबाध्ये व्यावहारिके देहात्मैक्यादौ परमार्थसत्त्वापातात्। साधकतायां परमार्थसत्त्वस्यातन्त्रत्वेन परमार्थसत्त्वाभावेऽपि वियदादिप्रपञ्चे न साधकत्वानुपपत्तिः। परमार्थसत्त्वाभावेऽपि व्यावहारिकसत्त्वेन साधकतायां उपपन्नत्वात् न साधकत्वेन परमार्थसत्त्वस्य सिद्धिरिति भावः। एतेन पूर्वपक्षिणा व्यावहारिकसत्त्वं विकल्प्य यद्दूषितं तदपि निरस्तं ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकसत्त्वस्य सर्वदूषणातीतत्वात्। अन्योन्याश्रयादिति—सिद्धे प्रपञ्चमिथ्यात्वे व्यावहारिकसत्त्वसिद्धिः व्यावहारिकसत्त्वसिद्धौ च तस्य साधकत्वे तन्त्रत्वासिद्ध्या व्यावहारिकसत्त्ववता दृश्यत्वादिना मिथ्यात्वसिद्धिरित्यन्योऽन्याश्रयात् प्रपञ्चस्य मिथ्यात्वे सिद्धे ब्रह्मज्ञानबाध्यत्वरूपव्यावहारिकत्वसिद्धिः ब्रह्मज्ञानबाध्यत्वसिद्धौ मिथ्यात्वसिद्धिरित्यन्योन्याश्रयात्। प्रपञ्चमिथ्यात्वसिद्धेः प्राक् ब्रह्मज्ञानबाध्यत्वरूपव्यावहारिकत्वासिद्ध्या अन्योऽन्याश्रयात्। व्यावहारिकविषयत्वे सति सत्त्वमिति द्वितीयपक्षोऽपि न संगतः। व्यावहारिकसत्त्वस्याबाध्यत्वरूपसत्त्वविशेषत्वे अस्माकं पूर्वपक्षिणः इष्टसिद्धिरेव। एतदेवाभिप्रेत्य उक्तं—तस्य अस्माकं मिथ्यात्वविरोधित्वेन इष्टत्वात्। अस्माभिरपि मिथ्यात्वविरोधिसत्त्वमेव व्यवस्थाप्यते। तच्चाबाध्यत्वरूपं सत्त्वम्। तद् यदि भवतापि अङ्गीक्रियते तर्हि इष्टापत्तिरेवेति भावः। एवं सत्त्वेन व्यवहारमात्रमिति तृतीयपक्षोऽप्यसंगतः। सत्त्वाभाववत्यपि सत्त्वेन व्यवहारमात्रं यदि स्यात् तर्हि तस्य साधकत्वं न स्यात्। सत्त्वेन व्यवहारमात्रं वस्तुतः सत्त्वं नास्तीत्यङ्गीकृतञ्चेत्; असतः साधकत्वं नास्तीत्यत्र किमायातम्?

न च हेत्वादीनां व्यावहारिकसत्त्वे साध्यस्यापि व्यावहारिकसत्त्वमेव स्यात्, अनुमितिविषयसाध्यस्य परामर्शविषयहेतुना समानसत्ताकत्वनियमात् इति वाच्यम् ॥८॥

दृश्यत्ववन्मिथ्यात्वस्यापि व्यावहारिकत्वेन समानसत्ताकत्वस्येष्टत्वात्। समानसत्ताकत्वनियमासिद्धेश्च। धूलीपटले धूमभ्रमादपि वह्न्यनुमितिप्रमादर्शनात्। गन्धव्याप्यपृथिवीत्वप्रमातोऽपि गन्धप्रागभावावच्छिन्ने घटे पक्षे बाधास्फूर्तिदशायामनुमितिभ्रमदर्शनाच्च। मिथ्यात्वस्य मिथ्यात्वेऽपि तत्त्वावेदकश्रुतिवेद्यत्वोपपत्तिः। सत्त्वेन सत

---

हेत्वादिवाक्यप्रतिपाद्यस्य दृश्यत्वादेः सत्त्वाभावात् स्वरूपासिद्ध्यादिदोषः स्यादतः साधकत्वायोग इति पूर्वपक्षिणाऽभिहिते नासतः साधकत्वं सिद्धान्तिनोच्यते दृश्यत्वादेर्व्यावहारिकसत्त्वाङ्गीकारात्। व्यावहारिकसत्त्वस्यैव साधकत्वे तन्त्रत्वादिति सिद्धान्तिनाभिहितम्। तत्र व्यावहारिकसत्त्वस्वरूपाविचारे वस्तुतः सत्त्वं नास्तीत्युक्तं सिद्धान्तिना। तथा चासतः एव पुनः साधकत्वोक्तेः असतः साधकत्वं नास्तीति पूर्वपक्षिभिरभिहितप्रमेये दूषणं किमायातमित्यादिकं पूर्वपक्षिभिरभिहितं दूषणजातं निरस्तम्। ब्रह्मज्ञानेतराबाध्यस्वरूपव्यावहारिकसत्त्वस्यैव साधकत्वे प्रयोजकत्वस्योक्तत्वात् ॥७॥

८—पुनः पूर्वपक्षी शंकते—न च हेत्वादीनां व्यावहारिकसत्त्वे साध्यस्यापि व्यावहारिकसत्त्वमेव स्यात्, अनुमितिविषयसाध्यस्य परामर्शविषयहेतुना समानसत्ताकत्वनियमादिति वाच्यम्। यथा प्रातिभासिकेन हेतुव्याप्त्यादिना व्यावहारिकसाध्यसिद्ध्यदर्शनेन हेतुव्याप्त्यादेरनुमितिविषयसमानसत्ताकत्वनियमेन व्यावहारिकेण पारमार्थिकासिद्धिः एवमेव व्यावहारिकेण दृश्यत्वादिना पारमार्थिकमिथ्यात्वासिद्धिरिति भावः।

९—समाधत्ते सिद्धान्ती—दृश्यत्ववन्मिथ्यात्वस्यापि व्यावहारिकत्वेन समानसत्ताकत्वस्येष्टत्वात्। समानसत्ताकत्वनियमसिद्धेश्च। धूलीपटले धूमभ्रमादपि वह्न्यनुमितिप्रमादर्शनात्। गन्धव्याप्यपृथिवीत्वप्रमातोऽपि गन्धप्रागभावावच्छिन्ने घटे पक्षे बाधास्फूर्तिदशायामनुमितिभ्रमदर्शनाच्च। मिथ्यात्वेऽपि तत्त्वावेदकश्रुतिवेद्यत्वोपपत्तिः।

इव, मिथ्यात्वेन मिथ्याभूतस्यापि प्रमाणगम्यत्वाविरोधात् । एकांशे तत्त्वावेदकत्वाभावेऽपि अपरांशे तत्त्वावेदकत्वोपपत्तेः ॥६॥

---

सत्त्वेन सत इव, मिथ्यात्वेन मिथ्याभूतस्यापि प्रमाणगम्यत्वाविरोधात् । एकांशे तत्त्वावेदकत्वाभावेऽपि अपरांशे तत्त्वावेदकत्वोपपत्तेः । यदुक्तं पूर्वपक्षिणा व्यावहारिकदृश्यत्वेन पारमार्थिकमिथ्यात्वस्य सिद्धिर्न स्यादिति तदस्माकमिष्टमेव । व्यावहारिकदृश्यत्वेन हेतुना व्यावहारिकमिथ्यात्वस्यैव साधनात् । हेतुसाध्ययोः समानसत्ताकत्वमव्याहतमेव मिथ्यात्वस्य व्यावहारिकत्वेन मिथ्यात्वमपि मिथ्यैव इत्येतत् सर्वमुपपादितम् मिथ्यात्वमिथ्यात्वनिरूपणे । तथा च अनुकूलमाचरति, कः प्रतिकूलो भवेत् ? यच्च पूर्वपक्षिणा अनुमितिविषयसाध्यस्य परामर्शविषयहेतुना समानसत्ताकत्वनियम इति सोऽसिद्ध एवेत्याह समानसत्ताकत्वनियमासिद्धेश्च । नियमासिद्धिमेव दर्शयति । धूलीपटले धूमभ्रमादपि दैवगत्या तत्र वह्निसत्त्वे हेतुमति प्रदेशे दैवगत्या वह्नेः सत्त्वेन वह्न्यनुमितिप्रमाया दर्शनात् । तथा च न्यूनसत्ताकहेतुनापि अधिकसत्ताकसाध्यसिद्धिर्दृष्टा । अतो न समानसत्ताकत्वनियमः । एवं यथार्थव्याप्त्याऽपि अनुमितिभ्रमदर्शनाच्च नायं नियमः सिध्यतीत्याह—पृथिवीत्वे गन्धव्याप्तेः प्रमात्वेऽपि गन्धप्रागभावावच्छिन्ने घटे पक्षे गन्धबाधास्फूरणदशायां भ्रमरूपानुमितिर्जायते । तथा च समानसत्ताकत्वनियमो नास्त्येव । नेह नानास्ति किञ्चनेत्यादि श्रुत्यां प्रपञ्चस्य मिथ्याभूतमिथ्यात्वप्रतिपादने श्रुतेरप्रामाण्यापत्तिरित्यपि न । तद्वति तत्प्रकारकज्ञानजनकत्वमेव प्रामाण्यम् । तथा च मिथ्याभूतस्य मिथ्यात्वेन प्रतिपादनात् न श्रुतेरप्रामाण्यम् । यथा सत्त्वेन सतः प्रतिपादने तद्वति तत्प्रकारकबोधजनकत्वेन प्रामाण्यम्, एवं मिथ्याभूतस्यापि मिथ्यात्वेन प्रतिपादने नाप्रामाण्यम् । अत्र तत्त्वं व्यवहारकालाबाध्यमबाध्यं वा ? यदि व्यवहारकालाबाध्यं तत्त्वं तत्प्रतिपादकमपि प्रमाणं व्यावहारिकप्रमाणमेवेत्युच्यते तर्हि सत्त्वेन स्वतः प्रतिपादकं प्रमाणमपि व्यावहारिकप्रमाणमेव । अर्थात् व्यावहारिकसत्त्वेन सतः प्रतिपादकमपि व्यावहारिकप्रमाणमेव । अबाध्यत्वरूपं तत्त्वं यदि स्यात्ततः आह—एकांशे न तत्त्वावेदकत्वाभावेऽपि अपरांशे तत्त्वावेदकत्वोपपत्तेः । अयं भावः—मिथ्यात्वबोधिकायाः श्रुतेः मिथ्यात्वबोधने मिथ्यात्वांशस्यातत्त्वरूपत्वेऽपि मिथ्यात्वघटकी-

ननु व्यावहारिकत्वं साधकताधामतन्त्रम्, अज्ञानादिसाधके परमार्थसति साक्षिणि तदभावादिति चेत् ॥१०॥

न, ब्रह्मज्ञानेतराबाध्यत्वस्यात्यन्ताबाध्येऽपि सत्त्वस्योक्तत्वात् त्रैविध्यविभागे पारमार्थिकव्यावृत्तव्यावहारिकत्वनिरुक्तावपि जनकतायां तत्साधारण्येऽप्यदोषात्। वस्तुतस्तु, साक्ष्यपि अज्ञानोपहित एव अज्ञानादिसाधकः स च व्यावहारिक एव। अनुपहितेन परमार्थसदाकारेण तस्यासाधकत्वात्। एवञ्च व्यावहारिकसत्त्वमेव सर्वत्र साधकतायां प्रयोजकमिति स्थितम्। यथा चाज्ञानोपहितस्य साक्षित्वेऽपि नात्माश्रयादिदोषस्तथोक्तं दृश्यत्वहेतूपपादने प्राक्, अग्रे च

---

त्यन्ताभावस्य तात्त्विकत्वेन तदंशे श्रुतेस्तत्त्वावेदकत्वमेव। मिथ्यात्वञ्च प्रतिपन्नोपाधौ अत्यन्ताभावप्रतियोगित्वम्। अतः अत्यन्ताभावस्याधिकरणब्रह्मरूपतया तात्त्विकत्वमेव। इतरांशस्य प्रतियोगित्वादिरूपस्य मिथ्यात्वेऽपि ब्रह्मरूपात्यन्ताभावस्य सर्वथाबाध्यत्वेन तात्त्विकत्वमेव। अतस्तात्त्विकात्यन्ताभावप्रतिपादिकाया मिथ्यात्वप्रतिपादिन्याः श्रुतेः तत्त्वावेदकत्वोपपत्तेः ॥९॥

१०—पुनः पूर्वपक्षी शंकते—ननु व्यावहारिकत्वं साधकतायामतन्त्रम्, अज्ञानादिसाधके परमार्थसति साक्षिणि तदभावादिति चेत्। यदुक्तं व्यावहारिकसत्त्वमेव साधकत्वव्यापकं तन्न संगच्छते। सिद्धान्तिमते परमार्थसतः साक्षिण एव अज्ञानादिसाधकत्वाङ्गीकारात्। साक्षिणि व्यावहारिकसत्त्वाभावेऽपि साधकत्वाङ्गीकारात्। व्यावहारिकसत्त्वस्य साधकत्वव्यापकत्वं नास्त्येव व्यावहारिकसत्त्वाभावेऽपि साधकत्वस्वीकारात् ॥१०॥

११—समाधत्ते—न ब्रह्मज्ञानेतराबाध्यत्वस्यात्यन्ताबाध्येऽपि सत्त्वस्योक्तत्वात्। त्रैविध्यविभागे पारमार्थिकव्यावृत्तव्यावहारिकत्वनिरुक्तावपि जनकतायां तत्साधारण्येऽप्यदोषात्। वस्तुतस्तु, साक्ष्यपि अज्ञानोपहित एव अज्ञानादिसाधकः। स च व्यावहारिक एव। अनुपहितेन परमार्थसदाकारेण तस्यासाधकत्वात्, एवं च व्यावहारिकसत्त्वमेव सर्वत्र साधकतायां प्रयोजकमिति स्थितम्। यथा चाज्ञानोपहितस्य साक्षित्वेऽपि नात्माश्रयादिदोषस्तथोक्तं दृश्यत्वहेतूपादने

वक्ष्यते । यत्र च यत्साधकं व्यावहारिकं तत्र तद्व्यावहारिकम्, यत्र तु साधकं प्रातीतिकं, तत्र फलमपि तथैव, न तु व्यावहारिकमितिसर्वविधिप्रतिषेधादिव्यवहारासङ्करः । अत एव लोकस्यापि व्यतिक्रमे विचारस्य यादृच्छिकबाधात् भ्रान्तत्वापत्तिरित्युदयनोक्तमपि निरस्तम् । व्यावहारिकसत्त्वेन लोकमर्यादानतिक्रमात् । भट्टाचार्यवचनानि विरुद्धत्वेन भासमानानि सत्त्वत्रैविध्यनिरूपणायामविरोधेन व्याख्यास्यन्ते । तस्मात् पक्षादिसर्वमिथ्यात्वसाधनेऽपि न व्याहृतिः ॥ ११ ॥

इत्यद्वैतसिद्धौ असतः साधकत्वोपपत्तिः।

---

प्राक् अग्रे च वक्ष्यते, यत्र च यत्साधकं व्यावहारिकं तत्र तद्व्यावहारिकम् । यत्र तु साधकं प्रातीतिकम्, तत्र फलमपि तथैव' न तु व्यावहारिकमिति सर्वविधिप्रतिषेधादिव्यवहारासङ्करः । अत एव लोकस्यापि व्यतिक्रमे विचारस्य यादृच्छिकबाधात् भ्रान्तत्वापत्तिरित्युदयनोक्तमपि निरस्तम् । व्यावहारिकसत्त्वेन लोकमर्यादानतिक्रमात् । भट्टाचार्यवचनानि विरुद्धत्वेन भासमानानि सत्त्वत्रैविध्यनिरूपणायामविरोधेन व्याख्यास्यन्ते । तस्मात् पक्षादिसर्वमिथ्यात्वसाधनेऽपि न व्याहतिः ।

साक्षिणः साधकत्वप्रयोजकं व्यावहारिकसत्त्वं नास्तीति यत् पूर्वपक्षिणोक्तं तदयुक्तम् । ब्रह्मज्ञानेतराबाध्यत्वस्य व्यावहारिकसत्त्वस्यात्यन्ताबाध्येऽपि सत्त्वस्योक्तत्वात् । ब्रह्मज्ञानेतराबाध्यं खलु द्विविधं भवति—सर्वथाऽबाध्यम्, ब्रह्मज्ञानमात्रबाध्यञ्च । सर्वथाऽबाध्येऽपि ब्रह्मज्ञानेतराबाध्यत्वस्य सत्त्वात् । तत्रापि व्यावहारिकसत्त्वमक्षतम् । एवं ब्रह्मज्ञानमात्रबाध्ये वियदादिप्रपञ्चेऽपि उक्तरूपव्यावहारिकसत्त्वमस्त्येव । तथा च निरुक्तं व्यावहारिकसत्त्वं पारमार्थिकव्यावहारिकसाधारणम् । सुतरां व्यावहारिकसत्त्वस्य साधकत्वव्यापकत्वे दोषलेशोऽपि नास्ति । त्रैविध्यविभाग इति । सत्तात्रैविध्यविभागे व्यावहारिकसत्त्वं पारमार्थिकावृत्तीति कुतः व्यावहारिकसत्त्वस्य पारमार्थिकव्यावहारिकसाधा-

रण्यं कथं वा साधकतायाः प्रयोजकत्वमित्याशंक्याह त्रैविध्यविभाग इति। अन्यत्र त्रैविध्यविभागेऽपि साधकतायां ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकत्वस्य पारमार्थिकव्यावहारिकसाधारणस्य प्रयोजकत्वे दोषाभावादित्यर्थः। साक्षिणः पारमार्थिकत्वमभ्युपगम्य परिहारोऽभिहितः। वस्तुतस्तु साक्षिणः पारमार्थिकत्वं नास्त्येव। सर्वथाऽबाध्यत्वमेव हि पारमार्थिकत्वम्। साक्ष्यपि अज्ञानोपहित एवाज्ञानादिसाधकः, नानुपहितः। अज्ञानानुपधानदशायां चैतन्यस्याज्ञानसाधकत्वाभावात्, यथा मोक्षदशायाम्। अज्ञानोपहितस्य व्यावहारिकत्वमेव। अज्ञानानुपहितेन परमार्थसत्त्वाकारेण शुद्धचैतन्यस्य अज्ञानाद्यसाधकत्वात्। एवञ्च व्यावहारिकसत्त्वमेव सर्वत्र साधकतायां प्रयोजकमिति स्थितम्। अज्ञानोपहितस्य अज्ञानसाधकत्वे आत्माश्रयादिदोषस्तु दृश्यत्वहेतूपपादने एव परिहृतः अग्रे च परिहरिष्यते। यत्र तु यस्य साध्यस्य साधकं व्यावहारिकं तत्र तत्साध्यमपि व्यावहारिकं इत्येव नियमः। एवं यत्र तु साधकं प्रातीतिकं तत्र फलं कार्यमपि प्रातीतिकम्। न तु प्रातीतिकात् साधकात् फलं व्यावहारिकं भवति। अत्रेदं बोध्यम्—ब्रह्मज्ञानेतराबाध्यत्वरूपं व्यावहारिकत्वं पारमार्थिकव्यावहारिकसाधारणसाधकत्वे प्रयोजकमुक्तम्। इदानीं मूलकारः प्रातिभासिकस्यापि साधकत्वं ब्रुवन् न निरुक्तव्यावहारिकत्वस्य प्रयोजकत्वमभ्युपैति, किन्तु पारमार्थिकव्यावहारिकप्रातिभासिकसाधारणमन्यत् किञ्चित् साधकत्वप्रयोजकमङ्गीकरोति। तच्च असद्विलक्षणत्वं वा, कालसम्बन्धित्वं वा इत्यादिकं बोध्यम्। अतः एतत् फलितं—साधकत्वप्रयोजकं न निरुक्तव्यावहारिकत्वं, किन्तु असद्विलक्षणत्वादिकमेव। यद्यपि पूर्वपक्षिणो मते बाध्यत्वमेवासत्त्वम्, अबाध्यत्वं सत्त्वम्, तथापि सिद्धान्ती बाध्ययोरपि व्यावहारिकप्रातिभासिकयोर्नासत्त्वम्, एतयोः सत्त्वेन प्रतीतिविषयत्वात्। असतः सत्त्वप्रकारकप्रतीतिविषयत्वं कदापि न सम्भवति। एतत्सर्वं द्वितीयमिथ्यात्वलक्षणविवरणप्रसंगे एव प्रपञ्चितम्। सिद्धान्तिमते बाध्ययोरपि व्यावहारिकप्रातिभासिकयोः साधकत्वमङ्गीकृतम्, एतच्च, पूर्वपक्षिमते असतः साधकत्वमेवाङ्गीकृतं स्यात्। अतः अस्य प्रकरणस्यासतः साधकत्वं नाम। एवं रूपेण सर्वविधिनिषेधव्यवहाराणामसांकर्यकरमुपपन्नम्। एवञ्च यदुक्तमा-

त्मतत्त्वविवेके बाह्यार्थभङ्गवादे [पृ० ५२३] लोकस्यापि व्यतिक्रमे विचारस्य यादृच्छिकवाङ्मात्रत्वोपपत्तेरिति तदपि अस्मन्मते निरस्तम्। अन्यदप्युक्तं तत्र एव—यदि हि लोकमर्यादातिक्रमो न विचारस्वरूपस्थितिः तत्स्वरूपस्थितिश्चेन्न तदतिक्रमः [पृ० ५४३] इति तदपि व्यवस्थाप्रदर्शनेन निरस्तम्। उदयन-वाक्यमुद्धरन् पूर्वपक्षी एवमभिप्रैति सदसतोः साधकत्वासाधकत्वातिक्रमे विचारस्य दैववशसम्पन्नवनस्थवेणुनिःसृतयादृच्छिकस्वनवत् यादृच्छिकवाङ्मात्रत्वापत्त्या प्रमाण-सिद्धत्वाभावापातेन अर्थनिश्चायकत्वाभावापातात् अतो लोकमर्यादानुसारेणैव सत एव साधकत्वं नासत इत्यङ्गीकार्यमिति भावः। समाधानं तु व्यावहारिक-सत्त्वेन लोकमर्यादानतिक्रमात् न प्रदर्शितो दोषः सम्भवति। भट्टाचार्य-वचनानीति—

"सत्यत्वं नहि सामान्यं मृषार्थपरमार्थयोः।
विरोधात् नहि सिंहत्वं सामान्यं वृक्षसिंहयोः॥

इत्यादीनि तर्कचरणीयानि भट्टवाक्यानि ब्रह्मप्रपञ्चप्रातीतिकसाधारणं त्वदभ्युपगतं तुच्छवैलक्षण्यरूपं सामान्यधर्मं न सहन्ते इत्यत आह भट्टाचार्य-वचनानीति [परमसत्यत्वस्य] ? मृषार्थनिष्ठत्वाभावेऽपि तुच्छवैलक्षण्यादेः मृषार्थसाधारण्यादिति सत्त्वत्रैविध्यनिरूपणायामविरोधेन व्याख्यास्यन्ते इति भावः। सत्त्वात्रैविध्यनिरूपणे एवमुक्तमबाध्यत्वरूपमारोपितानारो-पितयोः सामान्यम्। अन्यदा बाध्येऽपि स्वकालाबाध्यत्वमात्रेणारोपितेऽपि तत्सम्भवात्। आरोपितानारोपितयोः एकसामान्याभावे प्रवृत्त्याद्यनुपपत्ते-रुक्तत्वात्। अत एवोक्तं संक्षेपशारीरके—आकाशादौ सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या। तत्सम्पर्कात् सत्यता तत्र चान्या व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र इति। पारमार्थिकव्यावहारिकसाधारणव्यावहारिकसत्त्वनिरूपणेन सर्वाक्षेपनिरासात् असतः साधकत्वम् उपपन्नमेवेति तुच्छवैलक्षण्यरूपसत्त्वन्तु प्रातिभासिकसाधारणमपीति शिवम् ॥११॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासि-
श्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धि-
टीकायां बालबोधिन्यामसतः साधकत्वो-
पपत्तिविवरणम्।

## अथासतः साधकत्वाभावे बाधकनिरूपणम् ।

ननु सत्त्वापेक्षया तुच्छविलक्षणत्वादेः गौरवतरत्वेन साधकत्वे कथं तन्त्रत्वमिति चेत्, न । त्रिकालबाधविरहरूपस्य सत्त्वस्य लघुत्वाभावात्, जात्यादिरूपस्य तस्य मिथ्यात्वाविरोधित्वात् । उभयसिद्धे सद्विविक्ते साधकत्वदर्शनेन पारमार्थिकसत्त्वस्य साधकत्वाप्रयोजकत्वाच्च । तथा हि

---

१—असतः साधकत्वप्रकरणे तुच्छविलक्षणत्वस्य साधकत्वे प्रयोजकत्वमुक्तम् । तदसहमानपूर्वपक्षी सत्त्वस्यैव साधकत्वप्रयोजकत्वं साधयितुं शंकते—ननु सत्तापेक्षया तुच्छविलक्षणत्वादेः गौरवतरत्वेन साधकत्वे कथं तन्त्रमिति चेत् । पूर्वपक्षिमते अबाध्यत्वमेव सत्त्वम् । तदपेक्षया तुच्छविलक्षणत्वादेर्गुरुतरशरीरत्वेन साधकत्वे तन्त्रत्वं न स्यात् । तथा च सत्त्वस्यैव साधकत्वे तन्त्रत्वमायाति । न, त्रिकालबाधविरहरूपस्य सत्त्वस्य लघुत्वाभावात्, जात्यादिरूपस्य तस्य मिथ्यात्वाविरोधित्वात् । उभयसिद्धे सद्विविक्ते साधकत्वदर्शनेन पारमार्थिकसत्त्वस्य साधकत्वाप्रयोजकत्वाच्च । प्रपञ्चसत्त्वग्राहकेण प्रत्यक्षेण यत् सत्त्वं गृह्यते तत् यदि जात्यादिरूपं स्यात्तर्हि प्रपञ्चमिथ्यात्वग्राहकप्रमाणेन न विरुध्यते । नहि प्रपञ्चमिथ्यात्ववादिनाऽपि तस्य स्वरूपं वा देशकालसम्बन्धो वा तत्र जात्यादिकं वा नाभ्युपगम्यते, किन्तु प्रपञ्चस्य त्रिकालाबाध्यत्वरूपसत्त्वं नाभ्युपगम्यते । त्रिकालाबाध्यत्वरूपं सत्त्वं प्रत्यक्षेण न ग्रहीतुं शक्यत इत्युक्तम् । न वा त्रिकालाबाध्यत्वरूपसत्त्वस्य तुच्छविलक्षणत्वाद्यपेक्षया लघुतरम् । पूर्वपक्षिणा अबाध्यत्वरूपं यत् सत्त्वमुक्तं तत् त्रिकालाबाध्यत्वरूपमेव वक्तव्यम्, न तु केवलमबाध्यत्वम् । तथात्वे ब्रह्मज्ञानबाध्येऽपि व्यवहारकालाबाध्ये प्रपञ्चे प्रतिभासकालाबाध्ये प्रातिभासिके च सत्त्वात् तादृशाबाध्यत्वरूपसत्त्वस्य साधकत्वप्रयोजकत्वे सिद्धान्तिनोऽपि इष्टापत्तिरेव स्यात् । तथा च पूर्वपक्षिणा त्रिकालाबाध्यत्वरूपमेव सत्त्वं वक्तव्यम् । तस्य च तुच्छविलक्षणत्वाद्यपेक्षया लघुत्वाभावात् न तुच्छविलक्षणत्वादेः साधकत्वेऽप्रयोजकत्वम् । वादिप्रतिवाद्युभयसिद्धे सद्विविक्ते प्रतिबिम्बादौ साधकत्वदर्शनेन

प्रतिबिम्बे बिम्बसाधकत्वं तावदस्ति । तस्य बिम्बात्मना सत्त्वेऽपि प्रतिबिम्बाकारेण असत्त्वात् परमार्थसत्त्वं न साधकत्वे प्रयोजकम् । एवं स्वप्नार्थस्यासतोऽपि भाविशुभाशुभसूचकत्वम् । यद्यपि तत्रत्यदर्शनस्यैव सूचकत्वं पुरुषं कृष्णं कृष्णदन्तं पश्यतीत्यादिश्रुतिबलात् तथापि दर्शनमात्रस्य अतिप्रसक्तत्वेन विषयोऽपि अवश्यमपेक्षणीयः एव । एवं स्फटिकलौहित्यस्य उपाधिसन्निधानसाधकत्वञ्च ।

---

पारमार्थिकसत्त्वस्य कालत्रयाबाध्यत्वरूपस्य साधकत्वाप्रयोजकत्वात् । सद्विविक्ते साधकत्वदर्शनेन इति यदुक्तं तदेव प्रपञ्चयन्नाह—तथा हि प्रतिबिम्बे बिम्बसाधकत्वं तावदस्ति । तस्य बिम्बात्मना सत्त्वेऽपि प्रतिबिम्बाकारेण सत्त्वात् परमार्थसत्त्वं न साधकत्वे पयोजकम् । एवं स्वप्नार्थस्यासतोऽपि भाविशुभाशुभसूचकत्वम् । यद्यपि तत्रत्यदर्शनस्यैव सूचकत्वं पुरुषं कृष्णं कृष्णदन्तं पश्यतीत्यादिश्रुतिबलाद् तथापि दर्शनमात्रस्यातिप्रसक्तत्वेन विषयोऽपि अवश्यमपेक्षणीयः एव । एवं स्फटिकलौहित्यस्योपाधिसन्निधानसाधकत्वञ्च । सद्विविक्तस्य साधकत्वे निदर्शनं प्रतिबिम्बस्य बिम्बसाधकत्वमुक्तं मूले तन्न संगतं प्रतिबिम्बस्य बिम्बाभिन्नत्वात् बिम्बस्य च सद्रूपत्वात् सत एव साधकत्वं निदर्शितं स्यादित्यत आह तस्य बिम्बात्मनेति । प्रतिबिम्बस्य बिम्बाभिन्नत्वेऽपि प्रतिबिम्बाकारेण औपाधिकपरिच्छेदशून्यत्वे सति उपाध्यन्तर्गतत्वरूपेणारोपितधर्मेण विशिष्टत्वं प्रतिबिम्बत्वं सत्यन्तं घटाकाशे घटरूपोपाधिसमानपरिमाणे अतिव्याप्तिवारणाय । तथा च आरोपितमिथ्याधर्मविशिष्टत्वरूपेण प्रतिबिम्बस्यासत्त्वमेव । असतः प्रतिबिम्बस्य सन्निहितबिम्बसाधकत्वात् परमार्थसत्त्वं न साधकत्वव्यापकम् । एवं स्वप्नार्थस्य स्त्र्यादिरूपस्यासतोऽपि भाविशुभाशुभसूचकत्वं शास्त्रसिद्धम्—

> यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
> समृद्धिं तत्र जानीयात् तस्मिन् स्वप्नदर्शने ॥

इति [छान्दो—५।२।९] स्वप्नार्थस्य शुभसूचकत्वमेवं स्वप्ने कृष्णपुरुषदर्शनादेरशुभसूचकत्वमपि शास्त्रात् [ऐत० आ० ३।२।४] सिध्यति । तथा च न परमार्थसत्त्वं साधकत्वे प्रयोजकमिति भावः । यद्यपि स्वप्नदर्शनस्यैव

न च लौहित्यं स्फटिके न मिथ्या किन्तु धर्ममात्रप्रतिबिम्बः इति न पृथगुदाहरणमिति वाच्यम्। धर्मिभूतमुखादिनैरपेक्ष्येण तद्धर्मभूतरूपादिप्रतिबिम्बादर्शनात् प्रतिबिम्बस्याव्याप्यवृत्तित्वनियमेन लौहित्यस्य स्फटिके व्याप्यवृत्तिप्रतीत्ययोगाच्च। लौहित्ये स्फटिकस्थ त्वारोपे तस्य प्रतिबिम्बत्वं स्फटिके लौहित्यारोपे तु तस्य मिथ्यात्वमिति

---

शुभाशुभसूचकत्वं पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति—[ऐत आ० ३।२।४] इत्यादिश्रुतिबलाद् दर्शनन्तु सत्यमेव ततो न असतः साधकत्वं तथापि विषयविशेषविशेषितदर्शनमात्रस्य सत्यस्य न साधकत्वं तथात्वे घटादिदर्शनस्यापि शुभाशुभसूचकत्वप्रसङ्गात् स्वाप्नो विषयोऽपि साधकत्वे ज्ञानेन अपेक्षणीय एव। तथा च मिथ्याविषयापेक्षितज्ञानस्य साधकत्वे मिथ्याविषयस्यापि साधकत्वमायात्येव। विषयविशेषितज्ञानस्य कारणत्वे विषयस्य कारणतावच्छेदकत्वात् कार्यं प्रति प्रयोजकत्वरूपसाधकत्वमस्त्येव इति। तथा च न परमार्थसत्त्वं साधकत्वे प्रयोजकम्। स्वाप्नज्ञानस्य सत्यत्वमभ्युपेत्य इदमुदितम्। वस्तुतस्तु स्वाप्नज्ञानमपि विषयवत् मिथ्यैव। अविद्यावृत्तिरूपत्वात् मिथ्याविषयकज्ञानस्यापि मिथ्यात्वात् मिथ्याविषयकज्ञानस्य सत्यत्वं कथमपि न सम्भवति अतः परमार्थसत्त्वं साधकत्वे अप्रयोजकमेव। एवं स्फटिकलौहित्यस्य मिथ्याभूतस्य जवाकुसुमाद्युपाधिसन्निधानसाधकत्वं सर्वमतसिद्धं तथा च न परमार्थसत्त्वं साधकत्वे प्रयोजकमिति। स्फटिकलौहित्यस्यापि उपाधिभूतकुसुमादिधर्मप्रतिबिम्बत्वात् प्रतिबिम्बस्य च सत्यबिम्बात्मना सत्यत्वात् नासतः साधकत्वे स्फटिकलौहित्यं निदर्शनम्। प्रतिबिम्बस्य बिम्बसाधकत्वनिदर्शनेनैव स्फटिकलौहित्यरूपप्रतिबिम्बस्यापि बिम्बसाधकत्वं निदर्शितमेव पुनः पृथक्स्फटिकलौहित्यनिदर्शनं पुनरुक्तत्वात् व्यर्थमिवेति पूर्वपक्षी शंकते—न च लौहित्यं स्फटिके न मिथ्या किन्तु धर्ममात्रप्रतिबिम्बः इति न पृथगुदाहरणमिति वाच्यम्। शंकाग्रन्थस्तु प्रागेव व्याख्यातः। समाधत्ते—धर्मिभूतमुखादिनैरपेक्ष्येण तद्धर्मभूतरूपादिप्रतिबिम्बादर्शनात् प्रतिबिम्बस्याव्याप्यवृत्तित्वनियमेन लौहित्यस्य स्फटिके व्याप्यवृत्तिप्रतीत्ययोगाच्च। लौहित्ये स्फटिकस्य त्वारोपे तस्य प्रतिबिम्बत्वं स्फटिके लौहित्यारोपे तु तस्य मिथ्यात्वमिति विवेकः।

विवेकः। स्फटिकमणेरिव उपधाननिमित्तो लोहितिमेति. लोहितिम्नो मिथ्यात्वं दर्शितं प्रतिबिम्बसत्यत्ववादिभिः पञ्चपादिकाकृद्भिः एवं रेखातादात्म्येनारोपितानां वर्णानामर्थसाधकत्वम् ॥ १ ॥

---

स्फटिकमणेरिव उपधाननिमित्तो लोहितिमेति लोहितिम्नो मिथ्यात्वं दर्शितं प्रतिबिम्बसत्यत्ववादिभिः पञ्चपादिकाकृद्भिः एवं रेखातादात्म्येनारोपितानां वर्णानामर्थसाधकत्वम्। नापि स्वाश्रयमानाकर्षद्रूपमात्रं प्रतिबिम्बितं क्वचिदुपलब्धपूर्वमिति पञ्चपादिकाकृद्वचनमनुसृत्याह [पञ्चपा० पृ० २१ विजयनगर सं०] धर्मिभूतमुखादिनैरपेक्ष्येण तद्धर्मभूतरूपादिप्रतिबिम्बादर्शनात् न स्फटिकलौहित्यं प्रतिबिम्बः प्रतिबिम्बात् स्फटिकलौहित्यस्य अयमपि भेदः स्वाश्रयमाकर्षदेव रूपादिप्रतिबिम्बते लौहित्यन्तु स्वाश्रयकुसुमादिकमनाकर्षदेव स्फटिकगतत्वेन भाति, अतः—प्रतिबिम्बवैधर्म्यात् स्फटिकलौहित्यं न प्रतिबिम्बः। वैधर्म्यान्तरमाह—प्रतिबिम्बस्य अव्याप्यवृत्तित्वनियमेनेति दर्पणादौ मुखप्रतिबिम्बः दर्पणाद्येकदेशे वर्तते न तु कृत्स्नं दर्पणं व्याप्य वर्तते स्फटिके लौहित्यं तु कृत्स्नं स्फटिकं व्याप्य वर्तते। प्रतिबिम्बस्याव्याप्यवृत्तित्वं स्फटिके लौहित्यस्य च व्याप्यवृत्तित्वम् अतोऽपि वैधर्म्यात् स्फटिकलौहित्यस्य न प्रतिबिम्बत्वं प्रतिबिम्बत्वे स्फटिके लौहित्यस्य व्याप्यवृत्तितया प्रतीतिर्न स्यात्। लौहित्ये स्फटिकस्यारोपे स्फटिकस्य सर्वात्मना प्रकाशात् प्रतिबिम्बास्वीकारात् तस्य प्रतिबिम्बत्वमपि युज्यते। प्रतिबिम्बस्य सत्यत्वात् तस्य सत्यत्वं स्फटिके लौहित्यारोपे तस्य प्रतिबिम्बत्वासंभवात् लौहित्यस्य मिथ्यात्वमेव अयमेव आभास इत्युच्यते। आभासप्रतिबिम्बयोरयमेव विवेकः आभासस्य मिथ्यात्वं प्रतिबिम्बस्य सत्यत्वमिति। प्रतिबिम्बसत्यत्ववादिनां पञ्चपादिकाकृतां वचनमुद्धृत्य स्फटिकलौहित्यस्य मिथ्यात्वं द्रढयति स्फटिकमणेरिवेति। [पञ्चपादिका, पृ० २० विजयनगर सं०] तथा च सत्यप्रतिबिम्बात् मिथ्यास्फटिकलौहित्यस्य पृथक्त्वेन निदर्शनं युक्तमेव। असतः साधकत्वे निदर्शनान्तरमाह एवं रेखातादात्म्येनेति। उक्तञ्च शाङ्करभाष्ये—तथा अकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः। [ब्र० सू० २।१।१४] व्याख्यातञ्च भामतीनिबन्धे—यद्यपि रेखास्वरूपं सत्यं तथापि तद् यथा संकेतमसत्यं नहि संकेत

न च रेखास्मारिता वर्णा एव अर्थसाधका इति वाच्यम्। आशैशवम् अय ककारः, अयं गकार इत्यनुभवात् अभेदेनैव स्मरणात्। विवेके सत्यपि दृढ़तरसंस्कारवशान्नारोपनिवृत्तिः। अत एव ककारं पठति, लिखति च इति सार्वलौकिको व्यवहारः। वर्णारोपितदीर्घ-ह्रस्वत्वादीनाञ्चनगो नाग इत्यादौ अर्थविशेषप्रत्यायकत्वम्

---

यितारः संकेतयन्ति ईदृशेन रेखाभेदेन अयं वर्णः प्रत्येतव्यः अपि तु ईदृशो रेखाभेदो अकारः ईदृशश्च ककारः इति तथा च असमीचीनात् संकेतात् समीचीनवर्णावगतिरिति सिद्धम्। तथा च यथा सङ्केतं रेखातादात्म्येन आरोपितानां वर्णानाम् अर्थस्मारकत्वं तथा च असतः साधकत्वं सिद्धमिति ॥१॥

२—असतः साधकत्वमसहमानः पूर्वपक्षी रेखातादात्म्येन आरोपितानां वर्णानां न अर्थस्मारकत्वं किन्तु रेखास्मारितानां वर्णानामेवेति शङ्कते—न च रेखास्मारिता वर्णा एव अर्थसाधका इति वाच्यम्। आशैशवम् अयं ककारः, अयं गकार इत्यनुभवात् अभेदेनैव स्मरणात्। विवेके सत्यपि दृढतरसंस्कारवशान्नारोपनिवृत्तिः। अत एव ककारं पठति, लिखति च इति सार्वलौकिको व्यवहारः। वर्णारोपितदीर्घह्रस्वत्वादीनाञ्च नगो नाग इत्यादौ अर्थविशेषप्रत्यायकत्वम्। शङ्काग्रन्थः प्रागेव व्याख्यातः। सिद्धान्तमाह—आशैशवमिति। शिशुकालादारभ्य रेखाविशेषाणामेव ककार-गकारादिरूपेण ग्रहणात् अभेदग्रहणजन्यस्मरणमपि रेखाभिन्नवर्णस्यैव। रेखावर्ण-योर्विवेके सत्यपि आशैशवं दृढतराभेदसंस्कारवशात् न रेखावर्णयोरभेदारोपनिवृत्तिः। अत एव आरोपानिवृत्तेरेव ककारं पठति इति वर्णाभिप्रायः, ककारं लिखति चेति रेखाभिप्रायः सर्वलोकप्रसिद्धो व्यवहारः। आरोपितह्रस्वत्वदीर्घत्वादि-धर्मकवर्णेभ्यः अर्थविशेषप्रतीतिर्दृष्टा। प्रत्यायकानां वर्णानामारोपितह्रस्वत्व-दीर्घत्वधर्मेण मिथ्याभूतानां यथार्थप्रत्ययजनकत्वम्, अतोऽप्यसतः साधकत्वम्। तथा चोक्तं भामत्यामध्यासभाष्यनिबन्धने—"तथा च वर्णे ह्रस्वदीर्घत्वा-दयोऽन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः। नहि लौकिका नाग इति वा नग इति वा पदात् कुञ्जरं वा तरुं वा प्रतिपद्यमानाः भवन्ति भ्रान्ताः" [भामती, पृ. १०, निर्णयसागर सं.]। ह्रस्वत्वदीर्घत्वादयो गुणाः परिमाण-

नच वर्णेषु अनारोपितध्वनिसाहित्यं तदभिव्यक्तरूपं वा दैर्घ्यं प्रत्यायकम्, एवं ह्रस्वत्वादिकमपीति वाच्यम् ।

ध्वनीनामस्फुरणेऽपि दीर्घो वर्ण इत्यादिप्रत्ययात् । ननु आरोपितेन वर्णदैर्घ्यादिना कथं तात्त्विकार्थसिद्धिः । न ह्यारोपितेन धूमेन

---

विशेषाः द्रव्यस्यैव भवितुमर्हन्ति, न वर्णात्मकगुणस्य । शब्दानामाकाशैकगुणत्वात् । तथा च गुणात्मकेषु वर्णेषु ह्रस्वत्वदीर्घत्वादयो गुणा अन्यदीया एव स्फुरन्तीत्यङ्गीकर्तव्यम् । वर्णेषु भासमाना ह्रस्वत्वदीर्घत्वादयः वर्णाभिव्यञ्जकवायुधर्मा एव व्यङ्ग्येषु वर्णेषु प्रतिभासन्ते । अतः आरोपितह्रस्वत्वदीर्घत्वादयो वर्णाः स्वरूपेण सत्या आरोपितधर्मवत्तया मिथ्यैव । तथा च मिथ्याभूताद् यथार्थप्रतीतिरिति असतः साधकत्वं सिद्धम् ।

स्वतः साधकत्वमुपपादयन् पूर्वपक्षी शङ्कते—नच वर्णेषु अनारोपितध्वनिसाहित्यं तदभिव्यक्तिरूपं वा दैर्घ्यं प्रत्यायकम्, एवं ह्रस्वत्वादिकमपीति वाच्यम् । वर्णेषु दीर्घत्वं वस्तुतो नास्त्येव । वर्णेषु दीर्घत्वं नामदीर्घध्वनिसन्निहितत्वमेव, नान्यदित्यर्थः । दीर्घध्वनिव्यक्तत्वाख्यो धर्मः वर्णेषु, तथा च वस्तुतो दीर्घो यो ध्वनिस्तद्व्यक्तत्वरूपो धर्मः वर्णेष्वस्ति तदेव दीर्घत्वं, न ततोऽतिरिक्तम् । तत्सत्यमेव । तथा च एतादृशं दीर्घत्वं पारिभाषिकम् । दीर्घध्वनिसाहित्यमेव वर्णस्य दीर्घत्वम् । दीर्घध्वन्यभिव्यक्तत्वमेव वा वर्णस्य दीर्घत्वं, न ततोऽन्यत् । तच्च सत्यमेव । एवं ह्रस्वत्वादिकमपि ध्वनिगतमेव, न वर्णगतम् । समाधत्ते—ध्वनीनामस्फुरणेऽपि दीर्घो वर्ण इत्यादिप्रत्ययात् । यदि ह्रस्वत्वदीर्घत्वे ध्वनिगते एव, न वर्णगते तर्हि ध्वनीनामस्फुरणदशायां ह्रस्वो वर्णः, दीर्घो वर्ण इति प्रतीतिर्न स्यात् । ध्वनेरस्फुरणेऽपि दीर्घत्वादेः वर्णधर्मत्वेन स्फुरणात् न ह्रस्वत्वादीनां ध्वनिधर्मत्वम् । शङ्कते—ननु आरोपितेन वर्णदैर्घ्यादिना कथं तात्त्विकार्थसिद्धिः । न ह्यारोपितेन धूमेन तात्त्विकवह्निसिद्धिरिति चेत् । अतात्त्विकात्तात्त्विकार्थसिद्धिर्न भवितुमर्हतीत्यभिप्रेत्य—आरोपितवर्णदैर्घ्यादिना इति । कथं तात्त्विकार्थसिद्धिर्भवितुमर्हति ? तात्त्विकार्थसिद्धौ तु साधकमपि तात्त्विकमेव वाच्यम् । यथा आरोपितधूमेन वाष्पेण धूलिपटलेन वा न तात्त्विकवह्न्यनुमितिर्भवितुमर्हतीति ।

तात्त्विकवह्निसिद्धिरिति चेत्। न, साधकतावच्छेदकरूपवत्त्वमेव साधकतायाः प्रयोजकम्, न तु आरोपितत्वम्, अनारोपितत्वं वा। धूमाभासस्य तु असाधकत्वं साधकतावच्छेदकव्याप्त्यभावात्, न असत्त्वात्। अनाभासत्वग्रहस्य तत्र बहुलोर्ध्वतादिग्रहणवत् व्याप्तिग्रहणार्थमेवापेक्षितः। तदुक्तं वाचस्पतिमिश्रैः—यथा सत्यत्वाविशेषेऽपि चक्षुषा रूपमेव ज्ञाप्यते, न रसस्तथैवासत्त्वाविशेषेऽपि वर्णदैर्घ्यादिना सत्यं ज्ञाप्यते, न तु धूमाभासादिनेति। दृष्टं हि मायाकल्पितहस्त्यादेः रज्जुसर्पादेश्च भयादिहेतुत्वम्। सवितृसुषिरस्य च मरणसूचकत्वम्। शंकाविषस्य च मरणहेतुत्वम् ॥२॥

---

समाधत्ते—न साधकतावच्छेदकरूपवत्त्वमेव साधकतायाः प्रयोजकं, न तु आरोपितत्वमनारोपितत्वं वा। धूमाभासस्य तु असाधकत्वं साधकतावच्छेदकव्याप्त्यभावात्, न असत्वात्। अनाभासत्वग्रहस्य तत्र बहुलोर्ध्वतादिग्रहणवत् व्याप्तिग्रहणार्थमपेक्षितः। यदुक्तं वाचस्पतिमिश्रैः—यथा सत्यत्वाविशेषेऽपि चक्षुषा रूपमेव ज्ञाप्यते, न रसस्तथैवासत्त्वाविशेषेऽपि वर्णदैर्घ्यादिना सत्यं ज्ञाप्यते, न तु धूमाभासादिनेति। दृष्टं हि मायाकल्पितहस्त्यादेः रज्जुसर्पादेश्च भयादिहेतुत्वम्। सवितृसुषिरस्य च मरणसूचकत्वम्। शंकाविषस्य च मरणहेतुत्वम्। साधकतावच्छेदकरूपवत्त्वमेव साधकत्वे प्रयोजकम्। इति आरोपितमपि यदि साधकतावच्छेदकरूपवत् स्यात् तर्हि साधकं स्यादेव। अनारोपितमपि यदि साधकतावच्छेदकरूपवन्न स्यात्तर्हि न साधकं स्यात्। आरोपितत्वमनारोपितत्वं वा असाधकत्वसाधकत्वयोर्न प्रयोजकम्। न हि अनारोपितमित्येव साधकं भवति, नापि आरोपितमित्येवासाधकं भवति। किन्तु यत् साधकतावच्छेदकरूपवत्तत्साधकम्, अन्यदसाधकम्। उक्तञ्च खण्डने—"यदि तु अस्मद्वचसि सद्वचनाभासलक्षणं न भवान् दर्शयितुमीष्टे तदानभ्युपगम्य प्रमाणादीनि भवता प्रवर्तितोऽयं व्यवहार इति शतकृत्वस्त्वयोच्यमानेऽपि नास्माकमादरः। अन्यथा अभ्युपगम्य प्रमाणादीनि भवता प्रवर्तितोऽयं व्यवहार इत्येतावता भवदीयो व्यवहाराभासः इत्यस्माभिरपि वक्तुं

शक्यत एव।"—[खण्डनखण्डखाद्यम्—पृ० १९]। साधकतावच्छेदकरूप-विशिष्टहेतोर्वचनं सद्वचनम्। साधकतावच्छेदकरूपरहितहेतोर्वचनं सद्वचनाभासः। एतदेवोक्तं सिद्धान्तिना—साधकतावच्छेदकरूपवत्त्वमेव साधकतायाः प्रयोजकम्, न तु आरोपितत्वमनारोपितत्वं वा। यत्तु पूर्वपक्षिणा धूमाभासस्यासाधकत्वमुक्तं, तन्न धूमस्यारोपितत्वप्रयुक्तम्। किन्तु साधकतावच्छेदकव्याप्त्यभावात्, न तु आभासत्वात्। हेतोरनाभासत्वग्रहोऽपि यदपेक्ष्यते तद्व्याप्तिग्रहणार्थमेवापेक्ष्यते। यथा विच्छिन्नधूमे वह्निव्याप्तिर्नास्ति, अतो व्याप्तिग्रहणार्थमेव धूमस्याविच्छिन्नमूलतादिग्रहणम्। धूमस्य बहुलतोर्ध्वतादिग्रहणवत्। उक्तञ्च वाचस्पतिना आरम्भणाधिकरणे [२।१।१४]—"न च ब्रूमः सर्वस्मादसत्यात् सत्यस्योपजननः, यतः समारोपितधूमभावाया धूममहिष्याः वह्निज्ञानं सत्यं स्यात्। नहि चक्षुषो रूपज्ञानं सत्यमुपजायते इति रसाद्विज्ञानेनापि ततः सत्येन भवितव्यम्। यतो नियमो हि स तादृशः सत्यानां यतः कुतश्चिदेव जायते, एवमसत्यानामपि नियमो यतः कुतश्चिदसत्यात् सत्यं, कुतश्चिदसत्यम्। यथा दीर्घत्वादेर्वर्णेषु समारोपितत्वाविशेषेऽपि अजिनमित्यतः ज्यानिविरहमवगच्छन्ति सत्यम्। अजिनमित्यतस्तु समारोपितदीर्घभावात् ज्यानिविरहमवगच्छन्तो भवन्ति भ्रान्ताः। नचोभयत्र दीर्घसमारोपं प्रति कश्चिदस्ति भेदः। तस्मादुपपन्नमसत्यादपि सत्यस्योदय इति" एवं मायाकल्पितहस्त्यादेरसत्यात् सत्यस्य भयस्योत्पत्तिः। यथा वा अविद्याकल्पितात् रज्जुसर्पादेः सत्यभयादिजनकत्वं, सवितरि सुषिरदर्शनस्य च मरणसूचकत्वम् ऐतरेयारण्यके [३।२।४] श्रूयते। "अथापि यत्र छिद्र इव आदित्यो दृश्यते रथनाभिरिवाभिरव्यायेत छिद्रां वा छायां पश्येत् तदप्येवमेव विद्यादिति।" रामायणेऽपि—"आदित्ये विमले लक्ष्म नीलं लक्ष्मण दृश्यते।" [युद्धकाण्डम्, २३।८] एवमेव—"आदित्यमण्डले नीलं लक्ष्म लक्ष्मण दृश्यते।" [युद्धकाण्डम्, ४१।१८]। एवमेव भट्टिकाव्ये [१२।७०] श्लोके आदित्ये छिद्रदर्शनमुपद्रवकरं सूचितम्। शंकाविषस्य च मरणहेतुत्वम्। विधिविवेके "विनापि अहिदंशं शंकाविषेणापि मरणदर्शनादि" त्युक्तम्। [विधिविवेकः, पृ० ९] विवृतञ्चैतन्न्यायकणिकायाम्—दंशस्यैव मरणकारणत्वे, असति तस्मिन् न शंकाविषेण म्रियात्। बालाना-

ननु तत्र शंकैव भयमुत्पाद्य धातुव्याकुलतामुत्पादयति इति सैव मरणहेतुः न तु शंकितं विषमपि एवं सवितृसुषिरमायाकल्पितगजादीनामपि ज्ञानमेव तत्तदर्थक्रियाकारि न तु अर्थोऽपि तथा च सर्वत्र उदाहृतस्थलेषु ज्ञानमेव हेतुः तच्च स्वरूपतः सत्यमेव अन्वयव्यतिरेकावपि ज्ञानस्यैव कारणतां ग्राह्यतः न हि सन्निहितं सर्पमजानानो बिभेति। नच अर्थानवच्छिन्नस्य ज्ञानस्य हेतुत्वेऽतिप्रसंगादर्थावच्छिन्नज्ञानमेव ज्ञानं हेतुः। तथा च अर्थोऽपि हेतुरेवेति वाच्यम्, अर्थावच्छिन्नस्य ज्ञानस्य हेतुत्वेऽपि अवच्छेदकस्य अर्थस्य ताटस्थ्येन अहेतुत्वोपपत्तेः।

---

मपि प्रागभवीयभावनाप्रबोधात् अहिदंशविज्ञाने सति भयसम्भवात् मरणमिति मन्तव्यम् ॥२॥

३—असद्विषयकसद्ज्ञानस्यैव साधकत्वं न ज्ञानविषयस्य अतः असतः साधकत्वं कुत्रापि नास्तीति पूर्वपक्षी शंकते—ननु तत्र शंकैव भयमुत्पाद्य धातुव्याकुलतामुत्पादयति इति सैव मरणहेतुः न तु शंकितं विषमपि एवं सवितृसुषिरमायाकल्पितगजादीनामपि ज्ञानमेव तत्तदर्थक्रियाकारि न तु अर्थोऽपि तथा च सर्वत्र उदाहृतस्थलेषु ज्ञानमेव हेतुः तच्च स्वरूपतः सत्यमेव अन्वयव्यतिरेकावपि ज्ञानस्यैव कारणतां ग्राहयतः न हि सन्निहितं सर्पमजानानो बिभेति। न च अर्थानवच्छिन्नस्य ज्ञानस्य हेतुत्वेऽतिप्रसंगादर्थावच्छिन्नज्ञानमेव हेतुः तथा च अर्थेऽपि हेतुरेवेति वाच्यम् अर्थावच्छिन्नस्य ज्ञानस्य हेतुत्वेऽपि अवच्छेदकस्य अर्थस्य ताटस्थ्येन अहेतुत्वोपपत्तेः। शंकाविषेऽपि शंकानिमित्तभयजन्याधातुर्व्याकुलतैव मरणहेतुः न तु विषम्। धातुव्याकुलतायाञ्च भयं कारणं भये च विषशंकारूपं ज्ञानमेव हेतुः। तच्च सत्यमेवेति भावः। सवितृसुषिरादावपि तत्तज्ज्ञानं सत्यमेव अर्थक्रियाकारि न तु असन् विषय इति भावः। तथा च सिद्धान्त्युदाहृतसर्वस्थलेषु स्वरूपतः सत्यं ज्ञानमेव अर्थक्रियाकारि। अन्वयव्यतिरेकावपि ज्ञानस्यैव कारणतां ग्राहयतः। स्वरूपतः सत्योऽपि सर्पः सन्निहितः अज्ञातः सन्न भयमुत्पादयति, किन्तु ज्ञात एव। अतो ज्ञानमेव कारणम्;

[१] घटावच्छिन्नस्य तदत्यन्ताभावतद्ध्वंसादेः घटदेशकाल-भिन्नदेशकालादित्वेऽपि अवच्छेदकस्य घटस्य तदभाववत् [२] घटेच्छाब्रह्मज्ञानयोर्घटज्ञानवेदान्तसाध्यत्वेऽपि घटब्रह्मणोस्तदभाव-वत्। [३] घटप्रागभावस्य घटं प्रति जनकत्वेऽपि घटस्याजन-कत्ववत्। [४] विशेषादर्शनस्य भ्रमं प्रति जनकत्वेऽपि विशेषदर्शनस्य तदभाववत्। [५] विहिताकरणस्य प्रत्यवायजनकत्वेऽपि विहितकरणस्य तदभाववत्। [६] स्वर्गकामनायाः यागजनकत्वेऽपि स्वर्गस्य तदजनक-त्ववत्। [७] अतीतादिस्मृत्यादेर्दुःखादिजनकत्वेऽपि अतीतादेस्तदजन-कत्ववत्। [८] असद्विषयकपरोक्षज्ञानस्य तद्व्यवहारहेतुत्वेऽपि असतस्तदभाववत्। [९] चिकीर्षितघटबुद्धेर्घटहेतुत्वेऽपि घटस्य तदहे-

---

न तु विषयः। यदि विषयमनपेक्ष्य ज्ञानमेव भयकम्पादेः कारणमिष्येत तर्हि यत् किञ्चिज्ज्ञानमात्रात् भयादिकं स्यात् तथा चातिप्रसङ्गः। अतोऽर्थावच्छिन्न-मेव भयादेर्हेतुः। अर्थावच्छिन्नतया ज्ञानस्य कारणत्वेऽर्थस्यापि कारणत्वम्। अर्थस्य कारणतावच्छेदकत्वात्। कारणतावच्छेदकमपि प्रयोजकमेव। तथा चार्थस्यापि साधकत्वमित्यत उक्तं पूर्वपक्षिणा—अर्थावच्छिन्नस्य ज्ञानस्य हेतुत्वे-ऽपीति। अवच्छेदकस्यार्थस्य ताटस्थ्येन उपलक्षणत्वेनेत्यर्थः। ज्ञानस्य हेतुत्वोपपत्तेः विषयोपलक्षितमेव ज्ञानं जनकम्, उपलक्षितस्य जनकत्वेऽपि उपलक्षणस्याजनक-त्वात्। उपलक्षणस्यापि जनकत्वे पुनरतिप्रसङ्ग एव स्यात्। अतिप्रसङ्गमेव दर्शयन्नाह पूर्वपक्षी—[१] घटावच्छिन्नस्य तदत्यन्ताभावतद्ध्वंसादेः घटदेशकालभिन्नदेशकालादित्वेऽपि अवच्छेदकस्य घटस्य तदभाववत्, [२] घटेच्छाब्रह्मज्ञानयोर्घटज्ञानवेदान्तसाध्यत्वेऽपि घटब्रह्मणोस्तदभाव-वत्। [३] घटप्रागभावस्य घटं प्रति जनकत्वेऽपि घटस्याजनकत्ववत्। [४] विशेष दर्शनस्य भ्रमं प्रति जनकत्वेऽपि विशेषदर्शनस्य तदभाववत् [५] विहिताकरणस्य प्रत्यवायजनकत्वेऽपि विहितकरणस्य तदभाववत्। [६] स्वर्गकामनाया यागजनकत्वेऽपि स्वर्गस्य तदजनकत्ववत्। [७] अतीतादिस्मृत्यादेर्दुःखादिजनकत्वेऽपि अतीतादेस्तदजनकत्ववत्। [८] असद्विषयकपरोक्षज्ञानस्य तद्व्यवहारहेतुत्वेऽपि असतस्तद-

तुत्ववत् । [१०] ब्रह्मज्ञानस्य तदज्ञाननिवर्तकत्वेऽपि उदासीनस्वभावस्य ब्रह्मणस्तदभाववत् । [११] ब्रह्माज्ञानस्य जगत् परिणामिकारणत्वेऽपि ब्रह्मणस्तदभाववच्च ॥ ३॥

---

भावचत् । [९] चिकीर्षितघटबुद्धेर्घटहेतुत्वेऽपि घटस्य तदहेतुत्ववत् । [१०] ब्रह्मज्ञानस्य तदज्ञाननिवर्तकत्वेऽपि उदासीनस्वभावस्य ब्रह्मणस्तदभाववत् [११] ब्रह्माज्ञानस्य जगत्परिणामिकारणत्वेऽपि ब्रह्मणस्तदभाववच्च । अवच्छिन्नस्य यद्भवति, तदवच्छेदकस्यापि भवति इति नियमस्य व्यभिचारं दर्शयितुमाह—घटेत्यादि। घटावच्छिन्नस्य घटात्यन्ताभावस्य घटदेशमृत्पिण्डदेशभिन्नत्वेऽपि घटस्य तदभाववत् । घटस्य मृत्पिण्डदेशत्वादित्यर्थः । घटावच्छिन्नस्य ध्वंसस्य घटकालभिन्नकालत्वेऽपि घटस्य तदभाववत् । घटस्य घटकालीनत्वादित्यर्थः । द्वितीयमतिप्रसंगमाह—घटेच्छाया घटज्ञानसाध्यत्वेऽपि घटस्य न घटज्ञानसाध्यत्वम् । एवं ब्रह्मज्ञानस्य वेदान्तसाध्यत्वेऽपि ब्रह्मणो न वेदान्तसाध्यत्वम् । घटस्य नित्यब्रह्मणश्च घटज्ञानवेदान्तसाध्यत्वाभावात् । तृतीयमाह—घटप्रागभावे घटोऽवच्छेदकः । घटप्रागभावस्य घटं प्रति जनकता यथा वर्तते, तथा प्रागभावावच्छेदकस्य घटस्य घटं प्रति जनकता न वर्तते । घटस्य घटं प्रति अजनकत्वात् इति तृतीयो व्यभिचारः । एवमेव विशेषादर्शनस्य विशेषदर्शनाभावस्येत्यर्थः । भ्रमं प्रति जनकत्वेऽपि विशेषदर्शनस्य भ्रमजनकत्वं नास्तीति चतुर्थो व्यभिचारः । पञ्चमं व्यभिचारमाह—विहिताकरणस्येति । विहितकरणाभावस्येत्यर्थः । विहितकरणाभावस्य प्रत्यवायजनकत्वेऽपि अवच्छेदकस्य विहितकरणस्य प्रत्यवायजनकत्वं नास्ति । एवमेव निषिद्धकरणाभावस्य प्रत्यवायाभावं प्रति हेतुत्वेऽपि अवच्छेदकस्य निषिद्धकरणस्य प्रत्यवायाभावहेतुत्वाभाववत् । षष्ठं व्यभिचारमाह—स्वर्गकामनाया यागं प्रति हेतुत्वेऽपि अवच्छेदकस्य स्वर्गस्य यागहेतुत्वाभाववत् । सप्तमं व्यभिचारमाह—अतीतादिवस्तु स्मृत्यादेर्दुःखादिकं प्रति हेतुत्वेऽपि अवच्छेदकस्य अतीतादिवस्तुनः दुःखाद्यहेतुत्ववत् । अष्टमं व्यभिचारमाह—असद्विषयकपरोक्षज्ञानस्य असद्व्यवहारहेतुत्वेऽपि अवच्छेदकस्य अत्यन्तासतः तद्व्यवहारं प्रति हेतुत्वाभाववत् । न च स्वर्गस्य, अतीतादिवस्तुनः, असतश्च याग-दुःख-व्यवहा-

न च तथापि मिथ्यार्थे ज्ञानव्यावर्तकता अस्तीति असतोऽपि वाच्यम् ।

न हि व्यावृत्तिधीहेतुत्वं व्यावर्तकत्वं किन्तु व्यावृत्तिधीहेतुधीविषयत्वमेव, सत्यपि दण्डे तदज्ञाने व्यावृत्त्यज्ञानात् ।

---

रान् प्रति हेतुत्वं किं न स्यादिति वाच्यम्, कामनावत् कामनाविषयस्यापि स्वर्गस्य जनकत्वे तस्य पूर्ववृत्तित्वघटितत्वात् सुखापरपर्यायस्य स्वर्गस्य प्राक् सत्त्वापत्त्या तत्कामनैव व्याहन्येत सिद्धे इच्छाविरहात् । अतीतादिवस्तुनः दुःखजनकत्वे कार्याव्यवहितपूर्वसमये सत्त्वापत्तिः असतो जनकत्वे तु निःस्वरूपत्वव्याघात इत्यवधेयम् । नवमं व्यभिचारमाह—चिकीर्षितेति । कर्तुमिष्टेत्यर्थः, अनागतेति यावत् । अवर्तमानत्वोपादनाय इदं विशेषणम् । तथा च घटबुद्ध्यभावे घटं करिष्यामीति इच्छानुदयेन घटोत्पत्त्यनुपपत्तेर्घटबुद्धेर्घटं प्रति हेतुत्वेऽपि घटस्य घटं प्रति अहेतुत्ववत् स्वस्य स्वं प्रति अहेतुत्वादिति भावः । दशमं व्यभिचारमाह—ब्रह्मज्ञानस्येति । ब्रह्मज्ञानस्य ब्रह्मविषयकाज्ञाननिवर्तकत्वेऽपि उदासीनस्वभावस्य ब्रह्मणस्तदनिवर्तकत्वात् । कर्तृत्वकरणत्वाद्युदासीनस्वभावस्य ब्रह्मणः निवर्तकत्वाद्यनुपपत्तेरित्यर्थः । एकादशं व्यभिचारमाह—ब्रह्माज्ञानस्येति । ब्रह्माज्ञानं जगतः परिणामिकारणमिति सिद्धान्तिसम्मतम् । अज्ञानावच्छेदकस्य ब्रह्मणः कूटस्थत्वाङ्गीकारात् न तस्य परिणामिकारणत्वं सम्भवति । अवच्छिन्नस्य ब्रह्माज्ञानस्य जगत्परिणामिकारणत्वेऽपि अवच्छेदकस्य ब्रह्मणस्तदभावात् अवच्छिन्नस्य यद्भवति तदवच्छेदकस्यापि भवतीति नियमस्य प्रदर्शितेषु स्थलेषु सुदृढो व्यभिचारः तथा च अर्थावच्छिन्नस्य ज्ञानस्य हेतुत्वेऽपि अवच्छेदकस्य अर्थस्य ताटस्थ्येन अहेतुत्वोपपत्तेरिति यत् प्रागुक्तं तत् सूक्तमेवेति ॥ ३ ॥

४—ज्ञाने अर्थस्य तटस्थत्वं न सम्भवति मिथ्यार्थस्य ज्ञानव्यावर्तकत्वादिति शंकामाह—न च तथापि मिथ्यार्थे ज्ञानव्यावर्तकता अस्तीति असतोऽपि हेतुत्वमिति वाच्यम् । व्यावर्तकत्वं नाम व्यावृत्तिबुद्धिजनकत्वम् असतोऽर्थस्य ज्ञानविषयस्य ज्ञानव्यावर्तकत्वात् असतो जनकत्वं सिद्धमेवेति शंका न कर्तव्या, कुत इति चेत् तत्राह पूर्वपक्षी—न हि व्यावृत्तिधीहेतुत्वं व्यावर्तकत्वं किन्तु

अथ अवच्छेदकस्य मिथ्यात्वे अवच्छिन्नस्यापि तन्नियमः । न, तुच्छज्ञाने तुच्छवैलक्षण्ये च तुच्छत्वस्य प्रातिभासिकाद्वैलक्षण्ये प्रातिभासिकत्वस्य पञ्चमप्रकारायामात्मस्वरूपभूतायां वा अनिर्वचनीयाज्ञानस्य निवृत्तौ चतुर्थप्रकारानिर्वचनीयत्वस्य पारमार्थिकात्मस्वरूपे तद्भिन्ने वा अनृतद्वैतस्याभावे अनृतत्वस्य चादर्शनात् । तत्रावच्छेदकानामसदादीनां ताटस्थ्येऽत्रापि तथास्त्विति चेत् ।

---

व्यावृत्तिधीहेतुधीविषयत्वमेव, सत्यपि दण्डे तदज्ञाने व्यावृत्त्यज्ञानात् । न व्यावृत्तिधीहेतुत्वं व्यावर्तकत्वं किन्तु व्यावृत्तिधीहेतुधीविषयत्वं व्यावर्तकत्वं स्वरूपतः कस्यापि न व्यावर्तकत्वं धीविषयस्यैव व्यावर्तकत्वं युक्त्यनुभवाभ्यां सिद्धमित्याह—सत्यपीति । व्यावृत्त्यज्ञानात् दण्डिनि अदण्डिव्यावृत्त्यज्ञानात् । ज्ञानावच्छेदकस्यार्थस्य मिथ्यात्वे अवच्छिन्नस्यापि ज्ञानस्य मिथ्यात्वात् ज्ञानस्य व्यावर्तकत्वेऽपि असत एव साधकत्वमायाति । न तु सतः साधकत्वम् । अवच्छेदकमिथ्यात्वादवच्छिन्नस्यापि मिथ्यात्वम् इत्याशंक्य निराकरोति, पूर्वपक्षी—अथ अवच्छेदकस्य मिथ्यात्वे अवच्छिन्नस्यापि तन्नियमः । न, तुच्छज्ञाने तुच्छवैलक्षण्ये च तुच्छत्वस्य, प्रतिभासिकाद् वैलक्षण्ये प्रातिभासिकत्वस्य पञ्चमप्रकारायामात्मस्वरूपभूतायां वा अनिर्वचनीयाज्ञानस्य निवृत्तौ च चतुर्थप्रकारानिर्वचनीयत्वस्य पारमार्थिकात्मस्वरूपे तद्भिन्ने वा अनृतद्वैतस्य अभावे अनृतत्वस्य चादर्शनात् । तत्रावच्छेदकानामसदादीनां ताटस्थ्ये अत्रापि तथा अस्त्विति चेत् । अवच्छेदकस्य मिथ्यात्वेऽवच्छिन्नस्यापि मिथ्यात्वं तदैव भवितुमर्हति यदि अवच्छेदकस्य यद्भवति तदवच्छिन्नस्यापीति नियमः सिद्ध्येत् । न चैवं व्यभिचारात् । व्यभिचारानेव दर्शयितुमाह—तुच्छज्ञान इति । अवच्छेदकीभूतस्य तुच्छस्य तुच्छत्वेऽपि तदवच्छिन्नज्ञाने तुच्छत्वस्यादर्शनात् । एवं तुच्छवैलक्षण्येऽपि तुच्छत्वस्यादर्शनात् । एवमन्यत्रापि पष्ठ्यन्तशब्दात् परतः अदर्शनादिति पदं योजनीयम् । एवमेव प्रातिभासिकाद् वैलक्षण्ये प्रातिभासिकत्वस्यादर्शनात् सिद्धान्तिप्रदर्शितनियमस्य व्यभिचारो ज्ञेयः । अविद्यानिवृत्तिः पञ्चमप्रकारा, आत्मैव वा अज्ञाननिवृत्तिरिति मतद्वयसद्भावात् आह—पञ्चम-

अत्रोच्यते । यदुक्तं ताटस्थ्यलक्षणमुपलक्षणत्वमेव सर्वत्रावच्छेद्र-स्येति तन्न, विशेषणत्वे संभवत्युपलक्षणत्वायोगात्। विशेषणबाधपूर्व-कत्वादुपलक्षणत्वकल्पनाया। अन्यथा 'दण्डी प्रैषानन्वाह, लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादावपि वेदे दण्डलौहित्यादेरुपलक्षणत्वात् तद-भावेऽपि अनुष्ठानप्रसङ्गः। सर्वादीनि सर्वनामानी'त्यत्र सर्वशब्दस्य सर्वनामसंज्ञा न स्यात्।

जन्माद्यस्य यतः, इत्यत्र जन्मनो ब्रह्मलक्षणत्वं न स्यात्। विशेषणा-र्थत्वेन तद्गुणसंविज्ञानबहुव्रीहिसम्भवेऽप्युपलक्षणार्थत्वेनातद्गुणसंविज्ञा-

---

प्रकारायामात्मस्वरूपभूतायां वा। अनिर्वचनीयाज्ञाननिवृत्तौ चतुर्थप्रकारा-निर्वचनीयत्वस्यादर्शनात् पूर्वोक्तनियमस्य व्यभिचारो ज्ञेयः। पञ्चमप्रकाराविद्या-निवृत्तिपक्षेऽपि अविद्यायाः चतुर्थप्रकारत्वात् चतुर्थप्रकारानिर्वचनीयत्वं पञ्चम-प्रकाराविद्यानिवृत्तौ नास्ति। अनृतद्वैताभावो यदि वा आत्मस्वरूपस्तद्भिन्नो वा आत्मस्वरूपस्तदभिन्नो वा उभयत्रापि अनृतत्वस्य चादर्शनात् पूर्वोक्तनियमस्य व्यभिचारः, अनृतद्वैताभावो यदि पारमार्थिकात्मस्वरूपस्तत्र अनृतत्वस्यादर्शनाद् व्यभिचारः। अनृतद्वैताभावस्य पारमार्थिकात्मस्वरूपाद्भिन्नत्वेऽपि नाद्वैत-हानिः। अभावरूपधर्मा नाद्वैतं घ्नन्तीति मण्डनाचार्यवचनादिति बोध्यम्।

तुच्छज्ञाने तुच्छवैलक्षण्ये च तुच्छत्वस्यादर्शनात्तत्र अवच्छेदकानामसदा-दीनां ताटस्थ्ये अर्थात् उपलक्षणत्वे मिथ्याविषयकज्ञानानामपि तथैवास्तु अवच्छेद-कविषयस्य मिथ्यात्वेऽपि अवच्छिन्नज्ञानस्य सत्यत्वोपपत्तेः। सत्यस्य च ज्ञानस्य साधकत्वं सिद्धं, नासतो विषयस्य। ज्ञानस्य साधकत्वे ज्ञानविषयस्यार्थस्यापि साधकत्वमवर्जनीयमित्यभिप्रायेण सिद्धान्ती समाधत्ते—अत्रोच्यते। यदुक्तं ताटस्थ्यलक्षणमुपलक्षणत्वमेव सर्वत्रावच्छेदस्येति तन्न, विशेषणत्वे सम्भवति उपलक्षणत्वायोगात्। विशेषणबाधपूर्वकत्वादुपलक्षणकल्प-नायाः। अन्यथा दण्डी प्रैषानन्वाह, लोहितोष्णीषा ऋत्विजः प्रचरन्ती-त्यादावपि वेदे दण्डलौहित्यादेरुपलक्षणत्वात् तदभावेऽप्यनुष्ठानप्रसंगः, सर्वादीनि सर्वनामानि इत्यत्र सर्वशब्दस्य सर्वनामसंज्ञा न स्यात्। जन्माद्यस्य यतः, इत्यत्र जन्मनो ब्रह्मलक्षणत्वं न स्यात्। विशेषणार्थत्वेन

नबहुव्रीहिस्वीकारप्रसङ्गात् । एवमसिपाणयः प्रवेश्यन्तामित्यादिलौकिकप्रयोगेऽपि । प्रतिबिम्बादिज्ञानानां जनकत्वे च विशेषणतया प्रतिबिम्बानामपि जनकत्वे बाधाभावात नोपलक्षणत्वपक्षो युज्यते, उदाहृतस्थलेषु सर्वत्र बाधकमस्त्येवेति विशेषः ॥४॥

---

तद्गुणसंविज्ञानबहुव्रीहिसम्भवेऽपि उपलक्षणार्थत्वेनातद्गुणसंविज्ञान बहुव्रीहिस्वीकारप्रसंगात् । एवम् असिपाणयः प्रवेश्यन्तामित्यादिलौकिकप्रयोगेऽपि । प्रतिबिम्बादिज्ञानानां जनकत्वे च विशेषणतया प्रतिबिम्बानामपि जनकत्वे बाधाभावात् नोपलक्षणत्वपक्षो युज्यते । उदाहृतस्थलेषु सर्वत्र बाधकमस्त्येवेति विशेषः । विशेषणोपाध्युपलक्षणानां लक्षणानि आचार्य एवास्मिन् प्रकरणे स्वयमेव वक्ष्यति । पूर्वपक्षिणा यदुक्तम्—अवच्छेदकस्य सर्वत्र उपलक्षणत्वमेव, तन्न । विशेषणबाधपूर्वकत्वादुपलक्षणत्वकल्पनायाः सम्भवति विशेषणत्वे उपलक्षणत्वायोगात् । विशेषणत्वे सम्भवत्यपि यदि उपलक्षणत्वमेव स्यात्तर्हि वैदिकलौकिकमर्यादोच्छेदप्रसंगः । वैदिकमर्यादोच्छेदमेवाह—अन्यथा दण्डी प्रैषानन्वाह, लोहितोष्णीषा इत्यादि । इष्टिषु प्रैषस्याध्वर्युः कर्ता, अनुवचनस्य होता कर्ता । इष्टिविकृतौ पशौ प्रैषानुवचनयोर्मैत्रावरुणः कर्ता विधीयते, मैत्रावरुणः प्रेष्यति च, अन्वाह च । तेन दण्डी प्रैषानन्वाह इति दण्डिवाक्ये मैत्रावरुणकर्तृकयोः प्रैषानुवचनयोः प्राप्तत्वात् न विध्यन्वयित्वेन विवक्षा । किन्तु प्रैषानुवचनाङ्गत्वेन दण्डग्रहणमेव विवक्षितम् । यद्यपि क्रते सोमे मैत्रावरुणाय दण्डं प्रयच्छति इति विहितस्य दण्डदानस्य मैत्रावरुणकार्यार्थत्वावगमात् । मैत्रावरुणेन स्थित्वा उच्चैः कर्तव्ये प्रैषानुवचने बलार्थमवष्टम्भतया दण्डग्रहणस्य सामर्थ्यादपि प्राप्तिर्भवेत् । तथापि सामर्थ्यात् भवन्ती दण्डप्राप्तिः मैत्रावरुणेन कर्तव्ये रात्रिसंचारादावपि भवेत् । सा मा भूदिति कार्यान्तरपरिसंख्याफलकः प्रैषानुवचनरूपे कार्ये दण्डविधिः इति दण्ड एव विध्यन्वय इति विवक्षितम् । विवक्षितस्य विहितदण्डस्य उपलक्षणत्वे प्रैषानुवचने साधनतया तद्विधानेऽपि कदाचिद्दण्डसत्तामात्रेण दण्डस्य साधनत्वसम्भवेन उद्देश्यानुवचनकालव्याप्यं दण्डधारणं नानुष्ठीयेत । यद्यपि दण्डस्यावलम्बनरूपदृष्टद्वारा प्रैषानुवचने साधनता तथापि तत्पूर्वसत्तामात्रेणापि सम्भवात् प्रैषानुवचनकालसत्ता

तथा हि—प्रथमे घटदेशकालौ गृहीत्वा तद्भिन्नदेशकालत्वं तदत्य-

---

दण्डस्य न लभ्यते। विशेषणत्वस्वीकारे तु अनुवचनकर्त्तृकभावनायां साधनतया अन्वितस्य दण्डस्य विशेष्यीभूतभावनान्वयिनि अनुवचने समानकालीनत्व-सम्बन्धेन अन्वयात् अनुवचनकालीनदण्डस्य साधनतालाभः। तथा च दण्डि-वाक्ये दण्डस्य विशेषणत्वेन उपलक्षणत्वाभावात्। दण्डस्य उपलक्षणत्वे तु दण्डाभावेऽपि प्रैषानुवचनयोरनुष्ठानप्रसङ्गः। सर्वत्र अवच्छेदकस्योपलक्षणत्वे दण्डी प्रैषानन्वाहेति वाक्येऽपि विशेषणीभूतदण्डस्यापि उपलक्षणतया ग्रहणे अनुष्ठानवैकल्यप्रसङ्गः। एवमेव लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्रापि उष्णीषावच्छेदकलौहित्यस्य उपलक्षणत्वेनाग्रहणे यदा कदाचित् लोहितोष्णी-षसम्बन्धेनापि प्रचरणकाले लोहितोष्णीषाभावेऽपि ऋत्विजां प्रचरणप्रसङ्गः तथा चानुष्ठानवैकल्यम्। एवमेव "सर्वादीनि सर्वनामानि" इति पाणिनीयसूत्रे सर्वशब्दस्य सर्वनामसंज्ञा न स्यात्। सर्वशब्दस्योपलक्षणत्वेन अतद्गुणसंविज्ञान-बहुव्रीहिस्वीकारात्। तद्गुणसंविज्ञानबहुव्रीहिस्वीकारपक्ष एव सर्वपदस्य सर्वनामसंज्ञा भवेत्। सर्वपदस्य विशेषणत्वेन ग्रहणे तद्गुणसंविज्ञानबहुव्रीहिसंभवः। सर्वपदस्य उपलक्षणत्वेन ग्रहणे तु सर्वादिशब्दस्य अतद्गुणसंविज्ञानबहुव्रीहिः स्यात्। अवच्छेदकस्य सर्वत्रोपलक्षणत्वे सर्वपदस्य सर्वनामसंज्ञा न स्यात्। एवमेव असिपाणयः प्रवेश्यन्तामिति लौकिकप्रयोगेऽपि असेरुपलक्षणत्वे यदा कदाचित् पुरुषाणामसिसम्बन्धेऽपि असिरहितानामपि पुरुषाणां प्रवेशने असिपाणयः प्रवेश्यन्तामिति लौकिकप्रयोगाणामप्युपपत्तिः स्यात्। यदा कदाचिदसि-सम्बन्धे असिपाणयः प्रवेश्यन्तामिति लौकिकप्रयोगो न भवति। अतो लौकिक-प्रयोगोपपत्त्यर्थमपि अवच्छेदकस्यासेर्विशेषणत्वमेव नोपलक्षणत्वम्। विशेषणतया जनकत्वे बाधे सत्त्वे एव उपलक्षणतया जनकत्वम्। अत एव प्रतिबिम्बादिज्ञानानां जनकत्वे ज्ञानविशेषणतया प्रतिबिम्बादीनामपि जनकत्वे बाधाभावात् ज्ञानविषयस्य प्रतिबिम्बस्य उपलक्षणत्वपक्षो न युज्यते। यच्च पूर्वपक्षिणा एकादशोदाहरणानि नियमव्यभिचाराय प्रदर्शितानि तत्र सर्वत्र बाधकवशादेव विशेषणत्वत्यागः। न तु विना बाधकं विशेषणत्वं परित्यज्योपलक्षणत्वं गृहीतम् ॥४॥

५—तथा हि प्रथमे घटदेशकालौ गृहीत्वा तद्भिन्नदेशकालत्वं दत-

न्ताभावादौ ग्राह्यम्; घटस्यापि तत्सम्बन्धे तद्देशकालभिन्नदेशकाल-त्वमेव व्याहतं स्यात्। द्वितीये त्विष्टापत्तिः; क्वचित् घटज्ञानस्य घटेच्छाजनकत्ववत् घटं प्रत्यपि जनकत्वात्, ब्रह्मणो वेदान्तसाध्यत्वे तु नित्यत्वविरोधः। तृतीये प्रागभावद् घटस्य स्वजनकत्वे प्रतियोगिप्राग-भावयोः समानकालीनत्वापत्तिः, स्वावधिकपूर्वत्वघटितजनकत्वस्य स्वस्मिन्व्याहतत्वं च। चतुर्थे पञ्चमे च प्रतियोगितदभावयोः सहावृत्त्या भ्रमप्रत्यवाययोरनुत्पत्तिप्रसङ्गः। षष्ठे कामनावत् कामनाविषयस्य यागजनकत्वे तस्य प्राक्सत्तया तत्कामनैव व्याहन्येत, सिद्धे इच्छा-विरहात्। सप्तमे अतीतस्य जनकत्वे कार्याव्यवहितपूर्वकाले स्वस्वव्या-प्यान्यतरसत्त्वापत्तिः। अष्टमे असतो जनकत्वे निःस्वरूपत्वव्याघातः। नवमे चिकीर्षितघटज्ञानवत् स्वस्य जनकत्वे पूर्ववद्व्याघातः। दशमे उदासीनस्य ब्रह्मणो न निवर्तकत्वम्; स्वरूपतः उपहितस्यैव वृत्ति-विषयत्वेन तस्याविषयत्वात्, उपहितस्य च निवर्तकत्वमस्त्येव। एकादशे ब्रह्माज्ञानस्य परिणामिकारणत्वेऽपि न ब्रह्मणो जगत्कारणत्वम्;

---

त्यन्ताभावादौ ग्राह्यं घटस्यापि तत्सम्बन्धे तद्देशकालभिन्नदेशकालत्व-मेव व्याहतं स्यात्। द्वितीये तु इष्टापत्तिः। क्वचिद् घटज्ञानस्य घटे-च्छाजनकत्ववद् घटं प्रत्यपि जनकत्वात् ब्रह्मणो वेदान्तसाध्यत्वे तु नित्यत्वविरोधः। तृतीये प्रागभाववद्घटस्य स्वजनकत्वे प्रतियोगि-प्रागभावयोः समानकालीनत्वापत्तिः। स्वाव्यवहितपूर्वत्वघटितजन-कत्वस्य स्वस्मिन् व्याहतत्वञ्च। चतुर्थे पञ्चमे च प्रतियोगितदभावयोः सहावृत्त्या भ्रमप्रत्यवाययोरनुत्पत्तिप्रसङ्गः। षष्ठे कामनावत् कामना-विषयस्य यागजनकत्वे तस्य प्राक्सत्तया तत्कामनैव व्याहन्येत। सिद्धे इच्छाविरहात्। सप्तमे अतीतस्य जनकत्वे कार्याव्यवहितपूर्वकाले स्वस्वव्याप्यन्यतरसत्तापत्तिः। अष्टमे असतो जनकत्वे निःस्वरूपत्व-व्याघातः। नवमे चिकीर्षितघटज्ञानवत् स्वस्य जनकत्वे पूर्ववद्व्याघातः दशमे उदासीनस्य ब्रह्मणो न निवर्तकत्वम्। स्वरूपत उपहितस्यैव वृत्तिविषयत्वेन तस्या विषयत्वात्। उपहितस्य च निवर्तकत्वमस्त्येव।

कार्ये जडत्वोपलम्भात् । एवंविधबाधकबलेन तत्रोपलक्षणत्वस्वीकारात्, न च प्रकृते बाधकमस्ति; अव्यवहितदेशकालादिवृत्तित्वस्य प्रातिभासिकसाधारणत्वात् इदानीमत्र सर्प इत्यादिप्रतीत्यविशेषात् । न हि क्वचित् बाधकबलेन मुख्यपरित्यागः इति सर्वत्र तथैव भविष्यति ॥५॥

---

एकादशे ब्रह्मज्ञानस्य परिणामिकारणत्वेऽपि न ब्रह्मणो जगत्कारणत्वं कार्ये जडत्वोपलम्भात् । एवंविधबाधकबलेन तत्रोपलक्षणत्वस्वीकारात् न च प्रकृते बाधकमस्ति । अव्यवहितदेशकालादिवृत्तित्वस्य प्रातिभासिकसाधारणत्वात् । इदानीमत्र सर्प इत्यादिप्रतीतिविशेषात् । न हि क्वचिद्बाधकबलेन मुख्यपरित्यागः कृत इति सर्वत्र तथैव भविष्यति ।

प्रथमे उदाहरणे इदं बाधकम्—घटदेशं गृहीत्वा तद्भिन्नदेशित्वं तदत्यन्ताभावे ग्राह्यम् एवमेव घटकालं गृहीत्वा तद्भिन्नकालत्वं घटध्वंसे ग्राह्यम् । घटस्यापि यदि अत्यन्ताभावदेशत्वं स्यात् तर्हि घटात्यन्ताभावे घटदेशभिन्नत्वं यत् गृहीतमासीत् तदेव व्याहतं भवेत् । एवमेव घटभिन्नकालीनत्वं घटध्वंसे यद्गृहीतं तदपि व्याहतं भवेत् यदि घटस्य ध्वंसकालीनत्वं स्यात् । घटेच्छाया घटज्ञानसाध्यत्वेऽपि घटस्यापि घटज्ञानसाध्यत्वं स्यादिति याऽऽपत्तिः पूर्वपक्षिणोद्भाविता सा तु इष्टैव इत्याह—द्वितीये तु इष्टापत्तिः । क्वचित् घटज्ञानस्येति । क्वचित् सहकारिलाभस्थले कार्यमात्रस्य कर्तृज्ञानादिजन्यत्वम् । कुलालादेर्घटाद्यालोचनद्वारैव घटादिकर्तृत्वात् । अतो घटस्य घटज्ञानसाध्यत्वादिष्टापत्तिरेव । ब्रह्मणो वेदान्तसाध्यत्वे तु नित्यत्वविरोधः । साध्यमनित्यमेवेति भावः । तृतीये प्रागभाववत् घटस्य स्वजनकत्वे इति । यथा घटप्रागभावो घटजनकस्तथा प्रागभावावच्छेदकघटोऽपि यदि घटजनकः स्यात्तर्हि तत्प्रागभावयोरुभयोर्घटजनकत्वे प्रागभावप्रतियोगिनोः समानकालीनत्वापत्तिः । स्वस्य स्वहेतुत्वे स्वावधिकपूर्वत्वघटितजनकत्वस्य स्वस्मिन् व्याहतत्वञ्च । चतुर्थे पञ्चमे चेति—विशेषदर्शनविशेषादर्शनयोः प्रतियोगितदभावयोः सहावृत्त्या भ्रमानुत्पत्तिप्रसङ्गः । विशेषादर्शनविशेषदर्शनयोः भ्रमकारणत्वे द्वयोः सहवृत्तित्वाभावात् कुत्रापि भ्रमोत्पत्तिर्न स्यात् तथा च भ्रमानुत्पत्तिप्रसंग एव

बाधकः। पञ्चमे च विहितकारणविहिताकारणयोः प्रतियोगितदभावयोः सहावृत्त्या प्रत्यवायानुत्पत्तिप्रसङ्गः। विहिताकारणकरणयोः प्रत्यवायकारणत्वे द्वयोः सहवृत्तित्वाभावात् कुत्रापि प्रत्यवायोत्पत्तिर्न स्यात् तथा च प्रत्यवायानुत्पत्तिप्रसङ्ग एव बाधकः। षष्ठे इति। स्वर्गकामनाया इव कामनाविषयस्वर्गस्यापि यागजनकत्वे स्वर्गस्य यागात् प्राक् सत्त्वापत्त्या स्वर्गकामनैव न स्यात् यागात् प्राक् स्वर्गस्य सिद्धत्वे सिद्धे इच्छाविरहात् स्वर्गस्य यागजनकत्वे सर्वत्र यागस्य असिद्धिप्रसङ्गो बाधकः। सप्तमे इति। अतीतस्य अतीतादिवस्तुस्मरणस्य दुःखजनकत्वम्, अतीतादेरपि दुःखजनकत्वे स्मरणाव्यवहितप्राक्काले अतीतादेः सत्त्वापत्तिः स्यात्। अव्यवहितपूर्ववर्तिन एव कारणत्वं तच्च साक्षादिव परम्परयाऽपि संभवति। कार्याव्यवहितप्राक्काले स्वस्य स्वव्याप्यव्यापारस्य वा असत्त्वे स्वस्य कारणत्वमेव न स्यात्। अतः अतीतादेः दुःखादिकारणत्वसम्पादनाय दुःखाव्यवहितप्राक्कालसत्त्वं वाच्यम् अतीतादेः स्वरूपेण व्यापारद्वारा वा असत्त्वे अतीतादेः कारणत्वमेव न स्यात्। अतीतादेः विद्यमानदुःखाव्यवहितप्राक्कालसत्त्वे अतीतादेरतीतत्वव्याहतिः स्यात्। अष्टमे इति। असत्परोक्षज्ञानस्येव असतोऽपि व्यवहारजनकत्वे असतो निःस्वरूपत्वव्याघातः स्यात्। जनकत्वे सस्वरूपत्वापत्तिः स्यात्। वस्तुतस्तु असद्विषयकपरोक्षज्ञानस्य असद्व्यवहारस्य च असम्भवात् आपत्तिरेव न स्यात्। सदसतोः सम्बन्धाभावात् ज्ञानेन व्यावहारेण च सता असतः सम्बन्धाभावात् सतोरेव सम्बन्ध इति नियमात्। असतोऽपि ज्ञानव्यवहारादिकं बौद्धच्छर्दितमेव पूर्वपक्षिणा लीढमिति मन्तव्यम्। प्रपञ्चितश्चैतत् दृश्यत्वनिरुक्तौ। बौद्धापराधादेव वैदिकेष्वपि दर्शनेषु असदाख्यायाः कोटेः प्रवेशः संजातः। उत्तानाशयास्तु सरलया बुद्ध्या प्रमाणबाधितमपि बौद्धसिद्धान्तं निःशंकमनुवर्तमानाः महान्तं निपातमपि न पश्यन्ति। **नवमे इति।** चिकीर्षितघटज्ञानस्य घटजनकत्वे यदि घटस्यापि घटजनकत्वं स्यात् तर्हि स्वस्य स्वजनकत्वमङ्गीकृतं स्यात् तथा च स्वस्य स्वाधिकरणक्षणपूर्ववर्तित्वे व्याघातः स्यात्। दशमे इति। उदासीनस्य ब्रह्मणो न अज्ञाननिवर्तकत्वं वस्तुतः शुद्धब्रह्मणो अविषयत्वात् वृत्त्युपहितस्यैव वृत्तिविषयत्वं वाच्यं वृत्त्युपहितस्य च निवर्तकत्वमस्त्येव। शुद्धस्य यथा वृत्त्यविषयत्वं तथा प्रपञ्चितं दृश्यत्वहेतु-

उत्कर्षाद्यनुविधानाच्च । तथा हि—स्वप्ने जागरे च उत्कृष्टकलधौतदर्शनात् उत्कृष्टं सुखमुत्कृष्टसर्पादिदर्शनाच्चोत्कृष्टं भयादि दृश्यते । विषयस्याकारणत्वे, तदुत्कर्षानुविधानं कार्ये न स्यात् । न हि अकारणोत्कर्षः कार्यमनुविधत्ते इति न्यायात् । न च ज्ञानप्रकर्षादेव तत्प्रकर्षः । ज्ञानेऽपि विषयगतप्रकर्षं विहायान्यस्य प्रकर्षस्याभावात् । अथ ज्ञानगता जातिरेव प्रकर्षः । न, चाक्षुषत्वादिना संकरप्रसंगात् । विषयप्रकर्षेणैवो-

---

निर्वचने । एकादशे इति ब्रह्मज्ञानस्य जडतया त्रिगुणात्मकतया च जगतः परिणामिकारणत्वेऽपि ब्रह्मणो न जगत्परिणामिकारणत्वं ब्रह्मणश्चेतनत्वात् जगतो जडत्वात् प्रकृत्या विकाराणां सारूप्यनियमात् । ब्रह्मणो अपरिणामित्वात् कूटस्थत्वात् । पूर्वपक्षिप्रदर्शितेषु एकादशसु स्थलेषु प्रदर्शितबाधकसत्त्वात् विशेषणत्वत्यागात् उपलक्षणत्वस्वीकारः । किन्तु सिद्धान्तिप्रदर्शितेषु स्थलेषु बाधकं नास्ति इति कृत्वा विशेषणत्वमेव नोपलक्षणत्वम् । प्रातिभासिकस्यापि कारणत्वे बाधकाभावात् प्रातिभासिकज्ञानस्य कारणत्वे प्रातिभासिकविशेषणस्यापि कारणत्वमेव । कार्याव्यवहितदेशकालवृत्तित्वस्य कारणत्वघटकस्य प्रातिभासिकेऽपि सत्त्वात् प्रातिभासिकस्यापि कारणत्वम् । व्यावहारिकाणां यथा कार्याव्यवहितदेशकालवृत्तित्वमस्ति तथैव देशकालवृत्तित्वं प्रातिभासिकस्यापि अस्ति । प्रातिभासिकस्यापि देशकालसम्बन्धित्वे अनुभवं प्रमाणयन्नाह—इदानीमत्र सर्प इति । प्रातिभासिकरज्जुसर्पस्य इदानीमत्रेति देशकालसम्बन्धः प्रतीयते । न हि क्वचिद् बाधकबलेन मुख्यत्यागः इति सर्वत्रैव मुख्यत्यागे मुख्यताया उच्छेदः एव स्यात् ॥५॥

६—विषयस्य कारणत्वे न केवलं बाधकविरहः साधकमप्यस्ति इत्याह सिद्धान्ती—उत्कर्षाद्यनुविधानाच्च । तथाहि—स्वप्ने जागरे च उत्कृष्टकलधौतदर्शनात् उत्कृष्टं सुखमुत्कृष्टसर्पादिदर्शनाच्चोत्कृष्टं भयादि दृश्यते । विषयस्याकारणत्वे तदुत्कर्षानुविधानं कार्ये न स्यात् । न हि अकारणोत्कर्षं कार्यमनुविधत्ते इति न्यायात् । न च ज्ञानप्रकर्षादेव तत्प्रकर्षः । ज्ञानेऽपि विषयगतप्रकर्षं विहायान्यस्य प्रकर्षस्याभावात् । अथ ज्ञानगता जातिरेव प्रकर्षः । न, चाक्षुषत्वादिना संकर-

पपत्तौ चाक्षुषत्वादिव्याप्यनानाजात्यङ्गीकारे गौरवान्मानाभावाच्च ॥६॥

किञ्च ज्ञानस्य भयादिजनकत्वे सर्पाद्यवच्छिन्नत्वमेव कारणतावच्छेदकमास्थेयम्। ज्ञानत्वेन जनकत्वेऽतिप्रसंगात्। तथा च मिथ्या

---

प्रसंगात्। विषयप्रकर्षेणैवोपपत्तौ चाक्षुषत्वादिव्याप्यनानाजात्यङ्गीकारे गौरवान्मानाभावाच्च। विषयज्ञानस्य सुखादिजनकत्वे विषयस्यापि जनकत्वमुत्कर्षाद्यनुविधानात् सिद्धम्। कारणोत्कर्षं विना कार्योत्कर्षो न भवति। यस्योत्कर्षापकर्षौ यदुत्कर्षापकर्षमनुविधत्तः, तत् तत् कारणम्। अकारणोत्कर्षे अकार्यस्योत्कर्षो न भवति, अपकर्षे च नापकृष्यते। उत्कर्षाद्यनुविधानादिति संग्रहवाक्यम्। तद्विभजते तथाहीति। स्वप्ने जागरे च उत्कृष्टकलधौतदर्शनादुत्कृष्टं सुखम्, उत्कृष्टसर्पादिदर्शनाच्च उत्कृष्टं भयादि। ज्ञानविषये कलधौते सर्पे चोत्कर्षो वर्तते। विषयगतोत्कर्षे तद्विषयज्ञानस्यापि सुखभयादेः कार्यस्य उत्कर्षो दृश्यते। यदि विषयस्य ज्ञानसुखादेः कारणत्वं न स्यात् तर्हि अकारणोत्कर्षात् भयसुखादेरुत्कर्षो न स्यात्। एतदेव उक्तम्—विषयस्याकारणत्वे तदुत्कर्षानुविधानं कार्ये न स्यादिति पूर्वपक्षी शंकते—विषयस्योत्कर्षाभावेऽपि ज्ञानप्रकर्षादेव सुखभयादिकार्यस्योत्कर्षः, सुखभयादौ ज्ञानं कारणमेव। तथा च कारणोत्कर्षादेव कार्योत्कर्षः, न ज्ञानविषयस्य उत्कर्षात् इति पूर्वपक्षिणो भावः। समाधत्ते—ज्ञाने विषयगतप्रकर्षं विना प्रकर्षान्तरस्याविद्यमानत्वात्। पूर्वपक्षी शंकते—ज्ञानगताज्ञानत्वव्याप्या जातिरेव प्रकर्षः। तथा च विषयगतप्रकर्षं विनापि ज्ञानस्योत्कर्षसम्भवात् तत एव सुखभयादेः कार्यस्योत्कर्षः। समाधत्ते—उत्कर्षापकर्षत्वे ज्ञानगते जाती न संभवतः। चाक्षुषत्वादिना संकरप्रसंगात्। चाक्षुषत्वाभाववति उत्कृष्टश्रवणज्ञाने उत्कर्षत्वम्। उत्कर्षत्वाभाववति चाक्षुषज्ञाने चाक्षुषत्वम्। उत्कर्षचाक्षुषज्ञाने चाक्षुषत्वमुत्कर्षत्वञ्च द्वयम्। अतः संकरः। परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशो हि संकरः। परस्परपरिहारवत्योर्जात्योर्नैकत्र समावेशः इति उदयनोक्तेः। किञ्च, विषयगतप्रकर्षेणैव कार्यप्रकर्षोपपत्तौ सांकर्यभयात् चाक्षुषत्वादिव्याप्य-नानोत्कर्षजात्यङ्गीकारे गौरवान्मानाभावाच्च ॥६॥

७—किञ्च, ज्ञानस्य भयादिजनकत्वे सर्पाद्यवच्छिन्नत्वमेव

त्वावच्छिन्नत्वाकारेण ज्ञानस्य मिथ्यात्वात्। भ्रमस्थले ज्ञानमात्रस्य जनकत्वेऽपि मिथ्याभूतस्य जनकत्वमागतमेव। जनकतावच्छेदकरूपेण च मिथ्यात्वे रूपान्तरेण सत्त्वमपि असत्त्वान्नातिरिच्यते, अनुपयोगात्। तदुक्तं खण्डनकृद्भिः—"अन्यदासत्त्वं तु पाटच्चरलुण्ठितवेश्मनि यामिकजागरणवृत्तान्तमनुसरती"ति। स्वरूपेणापि तु भ्रमज्ञानस्य मिथ्यात्वमस्त्येव। स्वरूपतो बाधाभावे विषयतोऽप्यबाधप्रसंगात्।

---

कारणतावच्छेदकमास्थेयम्। ज्ञानत्वेन जनकत्वेऽतिप्रसंगात्। तथा च मिथ्यात्वावच्छिन्नत्वाकारेण ज्ञानस्य मिथ्यात्वात्। भ्रमस्थले ज्ञानमात्रस्य जनकत्वेऽपि मिथ्याभूतस्य जनकत्वमागतमेव। जनकतावच्छेदकरूपेण च मिथ्यात्वे रूपान्तरेण सत्त्वमपि असत्त्वान्नातिरिच्यतेऽनुपयोगात्। तदुक्तं खण्डनकृद्भिः—"अन्यदा सत्त्वं तु पाटच्चरलुण्ठितवेश्मनि यामिकजागरणवृत्तान्तमनुसरती" ति। स्वरूपेणापि भ्रमज्ञानस्य मिथ्यात्वमस्त्येव। स्वरूपतो बाधाभावे विषयतोऽस्य बाधप्रसंगात्। भयादिजनकसर्पादिज्ञाने रूपद्वयमस्ति। सर्पाद्यवच्छिन्नत्वं ज्ञानत्वं च। तत्र ज्ञानस्य भयजनकतायां ज्ञानत्वं न कारणतावच्छेदकम्। ज्ञानत्वेन ज्ञानस्य भयजनकत्वे घटादिज्ञानादपि भयापत्तेः। अतः सर्पाद्यवच्छिन्नत्वेनैव ज्ञानस्य भयकारणत्वं वक्तव्यम्। तथा च सर्पाद्यवच्छिन्नत्वमेव ज्ञानगतं रूपं भयादिकारणतावच्छेदकमास्थेयम्। तथा च सर्पाद्यवच्छिन्नत्वस्य कारणतावच्छेदकस्य प्रयोजकत्वरूपं साधकत्वमस्त्येवेति भावः। एवं च ज्ञानं स्वरूपेण सदपि मिथ्यात्वावच्छिन्नत्वाकारेण तस्य मिथ्यात्वात्। उक्तं च वाचस्पत्ये [ब्र०सू०२।१।१४]—'यद्यपि परीक्षकाः अनिर्वाच्यरूपितामवगतिमनिर्वाच्यां निश्चिन्वन्ती'ति, अनिर्वाच्यविषयिणी प्रतीतिरपि अनिर्वाच्यैव। भ्रमस्थले मिथ्याविषयकज्ञानस्य जनकत्वेऽपि ज्ञानविषयीभूतमिथ्यावस्तुनोऽपि जनकत्वमागतमेवं। स्वरूपेण सतोऽपि ज्ञानस्य जनकतावच्छेदकरूपेण मिथ्यात्वे अजनकस्य सत्यत्वम्, जनकस्य मिथ्यात्वमित्येवायातम्। अजनकस्य सत्यत्वं कार्यजनने अनुपयोगात्, अनुपयोगिनः सत्यत्वमसत्त्वान्नातिरिच्यते। खण्डनेऽप्युक्तम्—यामिकजागरणं गृहे पाटच्चरलुण्ठननिवारणायापेक्षितम्। यदा पाटच्चरलुण्ठनं तदा यामिकजाग-

न च गुणजन्यत्वमुपाधिः; तस्याप्याप्याद्यत्वेन वह्न्यनुमाने वह्नि-सामग्र्या इव साधनव्यापकत्वेनानुपाधित्वात्, विषय इव मिथ्यात्व-प्रयोजकदोषादिसमवहितसामग्र्या अज्ञानेऽपि अविशेषाच्च। तुच्छ-ज्ञानतद्द्वेष्यादौ च तुच्छत्वादर्शनमबाधकम् अवच्छेद्यावच्छेदकयोः सर्वत्र सारूप्यनियमानभ्युपगमात् प्रकृते चावच्छेदक इवानवच्छेद्येऽपि मिथ्यात्व-प्रयोजकरूपतुल्यत्वेन सारूप्योपपत्तेः। सर्वसाधारणं चैकं कारणत्वम-भ्युपगम्यैतदवोचाम। वस्तु तस्तु दण्डतन्त्वादिसाधारणमेकं कारणत्वं

---

रणं नासीत्, यदा लुण्ठनं वृत्तं तदा यामिकजागरणमकिंचित्करम् असत्कल्पमेव। तथैव प्रकृतेऽपि ज्ञानेन कार्ये जननीये मिथ्यैव कार्याजननकाले ज्ञानं सत्यम्। अजनकं ज्ञानं सत्यम् एतावता जनकस्य मिथ्यात्वे किमायातम्। मिथ्याविषयकत्वेन ज्ञानस्य मिथ्यात्वं प्रदर्श्य मिथ्याविषयकज्ञानस्य स्वरूपतोऽपि मिथ्यात्वमाह—मिथ्याविषयकज्ञानस्य ज्ञानाभासत्वात् अविद्यावृत्तिरूपत्वम्। ततस्तस्य स्वरूपतो-ऽपि मिथ्यात्वम्। विषयसहितज्ञानस्यैव अध्यासरूपत्वात् इति विवेचितं स्मृति-रूप इत्यध्यासनिरूपणावसरे विवरणे। अत एवोक्तं मूले—ज्ञानस्य स्वरूपतो बाधाभावे विषयतोऽप्यबाधप्रसङ्गात्। अयमभिप्रायः—स्वरूपतः सत्यज्ञानस्य विषयो मिथ्या न भवति। एवं मिथ्याविषयस्य ज्ञानमपि सत्यं न भवति। यज्ज्ञानं स्वरूपतो मिथ्या तद्विषयतोऽपि मिथ्या। यत् विषयतो मिथ्या तत् स्वरूपतोऽपि मिथ्या। अध्यासस्थले ज्ञानविषययोर्द्वयोरविद्यापरिणामत्वात् द्वयोरेव मिथ्यात्वम्। तथा च भ्रमो यदि स्वरूपतोऽबाधितः स्यात्तदा अबाधितविषयकः स्यात् इति तर्कप्रदर्शनाय विषयतोऽप्यबाधप्रसङ्गादित्युक्तं मूले। शङ्कते पूर्वपक्षी—न च गुणजन्यत्वमुपाधिः तस्याप्याप्याद्यत्वेन वह्न्यनुमाने वह्निसाम्ग्र्या इव साधनव्यापकत्वेन अनुपाधित्वात्। विषये एव मिथ्यात्वप्रयोजक-दोषादिसमवहितसामग्र्या ज्ञानेऽपि अविशेषाच्च। तुच्छज्ञानतद्द्वेष्यादौ तुच्छत्वादर्शनमबाधकम्। अवच्छेद्यावच्छेदकयोः सर्वत्र सारूप्यनियमान-भ्युपगमात्। प्रकृते चावच्छेदक इवावच्छेद्येऽपि मिथ्यात्वप्रयोजक-रूपतुल्यत्वेन सारूप्योपपत्तेः। सर्वसाधारणं च एकं कारणत्वमभ्युप-गम्यैतदवोचामः। वस्तुतस्तु दण्डतन्त्वादिसाधारणमेकं कारणत्वं

नास्त्येव यत्र तत्र सत्त्वमवच्छेदकं, तत्र न मम तुच्छविलक्षणत्वादिकम् किंतु कार्यतावच्छेदकं घटत्वपटत्वादि-कारणतावच्छेदकं, च दण्ड-तन्तुत्वादि। तद्भेदाच्च कारणत्वं भिन्नम्। यथा गोगवयसादृश्यमन्यत् भ्रातृभगिन्यादिसादृश्यमन्यत् तत्र नैकमवच्छेदकम् किन्तु गवयत्वभगि-नीत्वादिकमेव तद्वदत्रापि दण्डत्वादिकमेव सत्त्वासत्त्वोदासीनमवच्छेदकं वाच्यम्। तथा च जनकत्वानुसारेण न सत्त्वासत्त्वसिद्धिः।

---

नास्त्येव। यत्र तव सत्त्वं अवच्छेदकं तत्र न मम तुच्छविलक्षणत्वादि-कम्। किन्तु कार्यतावच्छेदकं घटत्वपटत्वादि। कारणतावच्छेदकं च दण्डत्वतन्तुत्वादि। तदभेदाच्च कारणत्वं भिन्नम्। यथा गोगवयसादृश्य-मन्यत् भ्रातृभगिन्यादिसादृश्यमन्यत् तत्र नैकमवच्छेदकम्। किन्तु गव-यत्वभगिनीत्वादिकमेव। तद्वदत्रापि दण्डत्वादिकमेव सत्त्वासत्त्वोदासी-नम् अवच्छेदकं वाच्यम्। तथा जनकत्वानुसारेण न सत्त्वासत्त्वसिद्धिः।

यदुक्तं ज्ञानस्य स्वरूपतो बाधाभावे विषयतोऽपि अबाधप्रसङ्गादिति। अत्रायमाशयः शुक्तिरजतादिज्ञानं स्वरूपतो बाध्यं विषयतो बाध्यत्वात् यद्यज्ज्ञानं विषयतो बाध्यं तत् स्वरूपतो बाध्यम् इत्यन्वयव्याप्तेरवधारणाय व्यतिरेकव्याप्तिं दर्शयति—यत् स्वरूपतोऽबाध्यं तद्विषयतोऽबाध्यम् यथा समीचीनरजतादिज्ञानमस्यां व्यतिरेकव्याप्तौ गुणजन्यत्वमुपाधिं शङ्कते अथ वा 'यदि ज्ञानं स्वरूपतोऽबाधितं स्यात् अबाधितविषयकं स्यात् इति प्रदर्शिततर्कमूलीभूतायां व्याप्तौ गुणजन्यत्वमु-पाधिं शङ्कते उपाधिसद्भावेन व्याप्तेरसिद्ध्या तर्कस्य मूलशैथिल्यं स्यात् समीचीनर-जतादिज्ञाने एव तर्कमूलीभूतव्याप्तेर्ग्रहो वाच्यः। तत्र च गुणजन्यत्वोपाधिवर्तते। भ्रमज्ञानं स्वरूपतोऽबाध्यं पूर्वपक्षिमते। स्वरूपतोऽबाध्ये भ्रमज्ञाने गुणजन्यत्वं न वर्तते। अतो गुणजन्यत्वं व्यापकाव्यापकं व्याप्याव्यापकं च अतस्तदेवो-पाधिरिति पूर्वपक्षिणोऽभिप्रायः। साधनव्यापकत्वप्रदर्शनेन उपाधिमुद्धरति—तस्यापि आपाद्यत्वेन इति। यज्ज्ञानं स्वरूपतोऽबाध्यं तद्गुणजन्यमतो गुणजन्यत्वस्य स्वरूपतोऽबाध्यत्वव्यापकत्वात् आपादकव्यापकत्वमुपाधेरिति-भावः। यथा वह्न्यनुमाने बह्निसामग्र्या वह्निसाधनधूमस्यापि व्यापकत्वम् एवमेव गुणजन्यत्वं स्वरूपतोऽबाध्यत्वस्यापि व्यापकं अतो नायमुपाधिः। भ्रमज्ञाने ज्ञानीय-

विषयमिथ्यात्वप्रयोजिका सामग्री दोषसमवहिता अविद्यासमवाहिता च वक्तव्या। सैव सामग्री भ्रमज्ञानेऽपि अवशिष्टा वर्तते तेन विषयस्येव ज्ञानस्यापि मिथ्यात्वमवर्जनीयम्। यच्चोक्तं पूर्वपक्षिणा तुच्छस्य ज्ञाने तुच्छाद् वैलक्षण्ये च, तुच्छत्वस्य अदर्शनात् एवमेव प्रातिभासिकादवैलक्षण्ये च प्रातिभासिकत्वस्य पञ्चमप्रकारायामात्मस्वरूपभूतायां वा अनिर्वचनीयाज्ञाननिवृत्तौ चतुर्थप्रकारानिर्वचनीयत्वस्य, अनृतद्वैताभावे पारमार्थिकात्मस्वरूपे तद्भिन्ने वा अनृतत्वस्यादर्शनात् अवच्छेदकस्य यद्भवति तत् अवच्छिन्नस्यापि इति नियमो न सिध्येत् प्रदर्शितस्थलेषु व्यभिचारात् तदनूद्य दूषयति तुच्छज्ञानतद्द्वैपम्यादौ चेति। न वयं सर्वत्र अवच्छेद्यावच्छेदकयोः सारूप्यमभ्युपगच्छामः येन क्वचिद् व्यभिचारदर्शनेन, अवच्छेद्यावच्छेदकयोः कुत्रापि सारूप्यं न स्यात्। प्रकृते च मिथ्याविषयकज्ञाने अवच्छेदकस्य विषयस्य अवच्छेद्यस्य ज्ञानस्य च मिथ्यात्वप्रयोजकरूपतुल्यत्वेन अवच्छेद्यावच्छेदकयोर्मिथ्यात्वेन सारूप्योपपत्तेः। मिथ्यात्वप्रयोजकरूपं च दोषाविद्यासमवहिता सामग्री इति प्रागेवोक्तम्। तुल्यसामग्रीकत्वेन द्वयोस्तुल्यत्वमिति भावः। पूर्वपक्षिमते सर्वत्र सत्त्वावच्छिन्ना एका कारणता सिद्धान्तिमते तुच्छविलक्षणत्वावच्छिन्ना एका कारणता इत्यभ्युपगम्यैव सत्त्वावच्छिन्नां कारणता न भवितुमर्हति सर्वदा सर्वत्र सर्वैरबाध्यत्वरूपसत्त्वस्य दुरवधारणत्वात् किन्तु तुच्छविलक्षणत्वस्य स्ववधारणत्वात् तदवच्छिन्ना एका कारणता इत्युक्तम्। वस्तुतस्तु दण्डतन्त्वादिसाधारणमेकं कारणत्वं नास्त्येव। पूर्वपक्षिमते सर्वत्र सत्त्वं कारणतावच्छेदकं, सिद्धान्तिमते तुच्छविलक्षणत्वं सर्वत्र कारणतावच्छेदकं यदुक्तम् तदेकं कारणत्वमभ्युपगम्यैव। वस्तुतः सर्वत्र कारणत्वमेकं नास्त्येव इति इदानीमुपपादयामः। दण्डतन्त्वादिसाधारणमेकं कारणत्वं नास्त्येव यदि स्यात्तर्हि सत्त्वं वा तुच्छविलक्षणत्वं वा कारणतावच्छेदकं भवेत्। कार्यतावच्छेदकं घटत्वपटत्वादिकं कारणतावच्छेदकं च दण्डत्वतन्तुत्वादिकं कारणतावच्छेदकभेदात् कारणत्वमपि भिन्नमेव। अवच्छेदकभेदात् अवच्छेद्यभेदो नियत एव। यथा गोः गवयसदृशता अन्या भ्रातृभगिन्यादिसदृशता च अन्या सदृशतावच्छेदकभेदात् सदृशता भिद्यते। गोप्रतियोगिकगवयानुयोगिकसादृश्यस्य अवच्छेदकं गवयत्वं भ्रातृप्रतियोगिकभगिन्यनुयोगिकसादृश्यस्य अवच्छेदकं भगिनीत्वं तद्वत् कारणतावच्छेदकभेदात् कारणताऽपि भिन्नैव। सत्त्वासत्त्वोदा-

तदुक्तं खण्डनकृद्भिः—

'पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ ।
हेतुसत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥' इति ।
'अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः ।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः ।' इति च ।

---

सीनं दण्डत्वादिकमेव कारणतावच्छेदकम् । सत्त्वासत्त्वयोरवधारणं विनैव दण्डत्वादीनां कारणतावच्छेदकत्वावधारणात् । तथा च न कारणत्वानुसारेण सत्त्वासत्त्वसिद्धिः । सदेव कारणमसदेव वा कारणमिति न सिध्येत् । किन्तु कारणं सद्वा असद्वा भवतु यत्र दण्डत्वादिकं तत्रैव घटादिकारणत्वं सत्त्वासत्त्वावधारणं विनैव कारणत्वावधारणादिति न कारणत्वसिद्धये सत्त्वासत्त्वसिद्धिरिति एतदेव खण्डनोक्त्या द्रढयन्नाह—

तदुक्तम् खण्डनकृद्भिः—

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥

इति—

अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः ।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः ॥

इति च—

पूर्वसम्बन्धनियमे इति अनन्यथा सिद्धत्वे सति कार्याव्यवहितप्राक्क्षणावच्छिन्नकार्यसामानाधिकरण्याश्रयस्य अन्योन्याभावस्य प्रतियोगितानवच्छेदकत्वे इत्यर्थः । सिद्धान्ते दण्डादिमत्यपि दण्डादेरत्यन्ताभावस्वीकारात् अत्यन्ताभावाप्रतियोगित्वं त्यक्त्वा अन्योऽन्याभावादिकमुक्तं[१] हेतुतत्त्वं—हेतुता । हेतुतत्त्वबहिर्भूतं—हेतुत्वाघटकम् । हेतुत्वाघटके ये सत्त्वासत्त्वे तत्कथा वृथा इत्यर्थः । कारणस्य

---

१. घटकार्ये घटकार्यसामानाधिकरण्याश्रयस्य दण्डादिमान्नेत्याद्यन्योन्याभावस्य अलाभात् दण्डादौ तादृशान्योन्याभावप्रतियोगितानवच्छेदकत्वं वर्तते । तादृशसामानाधिकरण्याश्रयस्य रासभादिमान्नेत्यादन्योन्याभावस्य विद्यमानत्वात् तादृशान्योन्याभावीयप्रतियोगितावच्छेदकत्वं रासभादौ वर्तते अनवच्छेदकत्वं दण्डादौ इति ग्रन्थसमन्वयः ।

न चैवम्—

'अन्तर्भावितसत्त्वं चेदधिष्ठानमसत्ततः ।
नान्तर्भावितसत्त्वं चेदधिष्ठानमसत्ततः ॥'

---

सत्तानियमे आद्येन पद्येन साधकाभावमुक्त्वा द्वितीयेन पद्येन बाधकमाह—अन्तरित्यादि अन्तर्भावितसत्त्वं सत्ताविशिष्टं सत्ता तदाश्रयश्च इत्युभयं यदि कारणं तदा सत्तानाश्रयः कारणमिति सिद्धम् । नहि सत्तायां सत्तान्तरमस्ति, न वा सत्तायां सैव सत्ता अस्ति । सत्तायां सत्तान्तरस्वीकारे द्वितीयसत्ताया अपि स्वप्रत्यक्षादिकारणत्वसिद्धये सत्तान्तरस्वीकारादनवस्था । नाना सत्तास्वीकारेण सदाकारानुगतधीलङ्घने जातिमात्रोच्छेदापत्तिश्च । यदि च अन्तर्भावितसत्त्वं न कारणम् अर्थात् सत्त्वं न कारणं किन्तु सत्त्वोपलक्षितं कारणं तथापि सत्ताया अभावकाले तादृशरूपे दण्डादेः कारणत्वात् सत्कारणमिति सिद्धम् । अथ सत्ता कारणाश्रये न विशेषणं नाप्युपलक्षणं किन्तु उपाधिः, यदा यदा यत्र कारणत्वं तदा तदा अवश्यं तत्र सत्ता इति यावत् । तथापि सत्य [सद्] रूपादन्यत् कारणमित्यागतमेव । नहि सत्तासम्बन्धिदण्डादिकं सद्रूपं ब्रह्मणः सद्रूपताया आवश्यकत्वेन तत्तादात्म्यादेव सद्रूपताप्रत्ययसम्भवात् । दण्डादेः सत्यत्वस्य श्रुत्यादिबाध्यत्वाच्च । खण्डनपद्यद्वयं विद्यासागरेण एवं व्याख्यातम्—नौ—आवयोः सदसद्वादिनोः पूर्वकालसम्बन्धनियमहेतुत्वे तुल्ये सति सद्वादे कारणत्वं घटते नासद्वादे इति हेतुत्वानुपयोगिनी सत्त्वासत्त्वचिन्ता वृथा इत्यर्थः । द्वितीयपद्यस्य अयमर्थः—बीजमित्येव नाङ्कुरस्य कारणं किन्तु सद्बीजं इति तद्वादिना विशेष्यते तत्र वक्तव्यं सत्ताविशिष्टं कारणं किं वा सत्तोपलक्षितम् । विशिष्टं चेत् तत्राह अन्तर्भावितेति । अन्तर्भाविता अन्तःप्रवेशिता सत्ता यस्मिन् तदन्तर्भावितसत्त्वं तच्चेद् कारणं उच्यते सत्त्वविशिष्टे सत्ताऽसम्भवात् कारणमसदेव स्यात् । सत्तासमवायात् सद्व्यवहारोपगमात् । सत्तोपलक्षितं बीजस्वरूपं कारणमिति द्वितीयं शङ्कते नान्तर्भावितेति । अन्तर्भावितं सत्त्वं न कारणं किन्तु उपलक्षितम् इति चेदिति सम्बन्धः । तदा कारणकोटौ सत्त्वाप्रवेशात् उपलक्षणतया तस्य बहिर्भावात् केवलं बीजस्वरूपमसदेव कारणमित्यसत्कारणत्वं स्फुटितं स्यादित्यर्थः । पूर्वपक्षी खण्डनरीतिमनुसृत्यैव खण्डनोक्तमेवान्यथा कुर्वन् सिद्धान्तिनः अनिष्टमापादयन् आह—न चैवम्—

इति तवापि समानमिति वाच्यम्। ममाधिष्ठाने स्वरूपत एव सत्ताङ्गीकारः, तव तु कारणे स्वरूपातिरिक्तसत्ताङ्गीकार इति विशेषात्। यत्तु अर्थो न ज्ञानस्य जनकतायामवच्छेदकोऽपि मानाभावात्। न चातिप्रसङ्गः विषयावच्छेदकमनपेक्ष्यैव सर्पज्ञानस्यासर्पज्ञानात् व्यावृत्तिसिद्धेः। तथा हि—सर्पज्ञानस्यासर्पज्ञानाद्व्यावृत्तिर्व्या-

---

अन्तर्भावितसत्त्वं चेदधिष्ठानमसत्ततः।
नान्तर्भावितसत्त्वं चेदधिष्ठानमसत्ततः॥

इति तवाऽपि समानमिति वाच्यम्। उक्तं च न्यायामृते—अस्यैव खण्डनश्लोकस्य अकारप्रश्लेषेण पठितुं शक्यत्वात्—

तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा।
त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि॥

इति एतमेव खण्डनकारोक्तं न्यायं हृदि निधायाह पूर्वपक्षी एवं तवापि समानमिति। अयमिह कारिकार्थः—अन्तर्भावितसत्त्वं चेदधिष्ठानं सत्ताविशिष्टमधिष्ठानमिति यावत्। तर्हि अधिष्ठानमसदेवेति प्राप्तम्। सत्ताविशिष्टेऽधिष्ठाने आत्माश्रयप्रसङ्गेन सत्ताया अभावात्। नान्तर्भावितसत्त्वं चेदधिष्ठानं सत्तोपलक्षितं सत्ताविरहं चेदधिष्ठानमिति यावत्। तर्हि अधिष्ठानमसदेवेति प्राप्तमिति त्वदुक्तन्यायेन अधिष्ठानस्यापि असत्तापत्तिः स्यात्। समाधत्ते सिद्धान्ती—**मम अधिष्ठाने स्वरूपत एव सत्ताङ्गीकारात् तव तु कारणे स्वरूपातिरिक्तसत्ताङ्गीकार इति विशेषात्।** कारणत्वस्थलेऽधिष्ठानत्वमादाय पूर्वोक्तो दोष इत्यभिमानः पूर्वपक्षिणः। मम अधिष्ठाने स्वरूपत एव सत्ताङ्गीकार इति। सद्रूपमेव अवच्छिन्नानवच्छिन्नरूपेण प्रातीतिकव्यवहारिकाध्यासाधिष्ठानमिति भावः। तव तु कारणे स्वरूपातिरिक्तसत्ताङ्गीकारात् न परिहारसाम्यम्। स्वरूपातिरिक्तसत्ताङ्गीकारपक्षे एव खण्डनकारोक्तदोषः प्रसज्यते। स्वरूपसत्ताङ्गीकारपक्षे स न संगच्छते। अतः खण्डनकाररीतिमादायाधिष्ठानस्यासत्तापादनमयुक्तमेव। विषयविशेषितज्ञानस्य जनकत्वे विषयस्यापि जनकतावच्छेदकत्वम्, अतः प्रयोजकस्वरूपं साधकत्वं विषयस्यापीत्युक्तम्। तन्निरासाय पूर्वपक्षी शङ्कते—**यत्तु अर्थो न ज्ञानस्य जनकतायामवच्छेदकोऽपि मानाभावात्। न**

वर्तकाधीना। न च विषयस्तत्सम्बन्धो वा व्यावर्तकः। स्वरूपातिरिक्तद्विनिष्ठसंबन्धस्याभावात्। असंबन्धस्य चाव्यावर्तकत्वात्। अथ सम्बन्धान्तरमन्तरेण विशिष्टव्यवहारजननयोग्यं ज्ञानस्वरूपमेव वा ज्ञानमात्रनिष्ठः कश्चिद्धर्मो वा संबन्धः तर्हि विषयमनन्तर्भाव्यैव ज्ञानात्तद्गतधर्माद्वा विशेषसिद्धिरित्यायातम्। किं च सर्पज्ञानमसर्पज्ञानाद्धर्म्यन्तरसम्बन्धमनपेक्ष्य विलक्षणम्। तज्जनकविलक्षणजन्यत्वात्।

यवाङ्कुरात् कलमाङ्कुरवत्। तज्जन्यविलक्षणजनकत्वाद्वा, यवबीजात्कलमबीजवत्। न च विलक्षणविषयसम्बन्धेनैव हेत्वोरुपपत्तावप्रयोजकत्वम्। तथात्वे हि यवबीजतदङ्कुरविलक्षणजन्यजनके कलमाङ्कुरतद्बीजेऽपि यवाङ्कुरतद्बीजाङ्कुराभ्यां कलमाङ्कुरतद्बीजत्वरूपस्वाभाविकवैलक्षण्यं विना कदाचिदुपलक्षणीभूतचैत्रादिसंबन्धित्वमात्रेण विलक्षणे स्याताम्। साक्षात्कारोऽपि परोक्षज्ञानादन्यसंबन्धितामात्रेण विलक्षणः स्यात्। एवं च यथा प्रतियोगिनमनन्तर्भाव्यैव घटस्या-

---

चातिप्रसङ्गः, विषयावच्छेदकमनपेक्ष्यैव सर्पज्ञानस्यासर्पज्ञानाद् व्यावृत्तिसिद्धेः। तथा हि—सर्पज्ञानस्यासर्पज्ञानाद् व्यावृत्तिः व्यावर्तकाधीना। न च विषयस्तत्सम्बन्धो वा व्यावर्तकः। स्वरूपातिरिक्तद्विनिष्ठसम्बन्धस्याभावात्। असम्बद्धस्य चाव्यावर्तकत्वात्। अथ सम्बन्धान्तरमन्तरेण विशिष्टव्यवहारजननयोग्यं ज्ञानस्वरूपमेव वा ज्ञानमात्रनिष्ठः कश्चिद्धर्मो वा सम्बन्धस्तर्हि विषयमनन्तर्भाव्यैव ज्ञानात् तद्गतधर्माद् वा विशेषसिद्धिरित्यायातम्। किञ्च, सर्पज्ञानमसर्पज्ञानाद् धर्म्यन्तरसम्बन्धमनपेक्ष्य विलक्षणम्, तज्जनकविलक्षणजन्यत्वात्। यवाङ्कुरात् कलमाङ्कुरवत्। तज्जन्यविलक्षणजनकत्वाद् वा, यवबीजात् कलमबीजवत्। न च विलक्षणविषयसम्बन्धेनैव हेत्वोरुपपत्तौ प्रयोजकत्वम्। तथात्वे हि यवबीजतदङ्कुरविलक्षणजन्यजनके कलमाङ्कुरतद्बीजेऽपि यवाङ्कुरतद्बीजाभ्यां कलमाङ्कुरतद्बीजत्वरूपस्वाभाविकवैलक्षण्यं विना कदाचिदुपलक्षणीभूतचैत्रादिसम्बन्धित्वमात्रेण विलक्षणे स्याताम्। साक्षात्कारोऽपि परोक्षज्ञानात् अन्यसम्बन्धितामात्रेण

भावोऽभावान्तरात् , यथा च विषयमनन्तर्भाव्यैव शिलोद्धरणकृतिर्माषोद्धरणकृतितः, यथा चातीतादिज्ञानमसद्विषयकपरोक्षज्ञानव्यवहारी च ज्ञानान्तरादितः । अन्यथा तत्कार्यसङ्करः स्यात् । एवं सर्पज्ञानमपि रज्जौ सर्पज्ञानस्य भ्रमत्वेनाधिकजन्यत्वेन सर्पज्ञानत्वेन तद्धेतुजन्यत्वात् । स्वत एव वा असर्पज्ञानाद्विलक्षणमिति न कोऽपि दोषः । न चाभाववादावपि प्रतियोग्यादेरवच्छेदकत्वम् । ध्वंसादेः कृतेरतीतादिज्ञानस्य च सत्तासमये प्रतियोगिविषययोरसत्त्वादिति ॥७॥

---

विलक्षणः स्यात् । एवञ्च यथा प्रतियोगिनमनन्तर्भाव्यैव घटस्याभावोऽभावान्तरात्, यथा च विषयमनन्तर्भाव्यैव शीलोद्धरणकृतिर्मासोद्धरणकृतितः, यथा अतीतादिज्ञानमसद्विषयकपरोक्षज्ञानव्यवहारौ च ज्ञानान्तरादितः । अन्यथा तत्कार्यसंकरः स्यात् । एवं सर्पज्ञानमपि रज्जौ सर्पज्ञानस्य भ्रमत्वेन अधिकजन्यत्वेऽपि सर्पज्ञानत्वेन तद्धेतुजन्यत्वात् । स्वत एव वा असर्पज्ञानाद् विलक्षणमिति न कोऽपि दोषः । न चाभावादावपि प्रतियोग्यादेरवच्छेदकत्वम् । ध्वंसादेः कृतेरतीतादिज्ञानस्य च सत्तासमये प्रतियोगिविषययोरसत्त्वादिति । तुच्छविषयज्ञाने विषयतयाऽवच्छेदकीभूतस्य तुच्छस्य तुच्छत्वेऽपि तदवच्छिन्नज्ञाने तुच्छत्वस्यादर्शनात् । तत्र अवच्छेदकस्यासतः ताटस्थ्ये प्रातिभासिकादिज्ञानेऽपि प्रातिभासिकादिविषयोऽपि तथाऽस्तु इत्युक्तं प्राक् पूर्वपक्षिणा । सम्प्रति ज्ञानस्य जनकत्वे विषयस्यावच्छेदकत्वमेव नास्ति इत्याह पूर्वपक्षी—वस्तुतस्तु अर्थानवच्छिन्नं ज्ञानं हेतुः इति न्यायामृते । एतदेव मूले उक्तम्—यत्तु अर्थो न ज्ञानस्य जनकतायामवच्छेदकोऽपि मानाभावात् । न चातिप्रसंग इति । ज्ञाने विषयातिरिक्तस्य व्यावर्तकस्याभावात् । विषयस्य च व्यावर्तकत्वानङ्गीकारे ज्ञानमात्रस्यैव भयादिहेतुत्वाङ्गीकारापातेन घटादिज्ञानमपि भयादिहेतुः स्यादित्यतिप्रसङ्ग इत्यर्थः । स च प्रकृते न सम्भवति इत्याह—विषयावच्छेदकमनपेक्ष्यैवेति । सर्पज्ञानं यदसर्पज्ञानाद् व्यावर्तते तत्र न विषयोऽवच्छेदकतयाऽपेक्षते । विषयमवच्छेदकमनपेक्ष्यैव स्वत एव सर्पज्ञानमसर्पज्ञानाद् व्यावर्तते । स्वत एव सर्पज्ञानस्यासर्पज्ञानाद् व्यावृत्तिमुपपादयति, तथा हीति । सर्पज्ञाने असर्पज्ञानाद् व्यावृत्तिस्तावदस्ति । व्यावृत्तिश्च व्यावर्तकाधीना ।

न च विषयस्तत्सम्बन्धो वा व्यावर्तकः। विषयस्य तत्सम्बन्धस्य च ज्ञानेनासम्बद्धस्य ज्ञानं प्रति अव्यावर्तकत्वात्। असम्बद्धस्य व्यावर्तकत्वेऽति-प्रसङ्गात्। विषयस्य ज्ञानेन सह स्वरूपातिरिक्तद्विष्ठसम्बन्धाभावात् स्वरूपमेव सम्बन्धः। स च सम्बन्धान्तरमन्तरेण विशिष्टव्यवहारजननयोग्यं, ज्ञानस्वरूपमेव सम्बन्धः, ज्ञानमात्रनिष्ठधर्मो वा सम्बन्धः। ज्ञानस्वरूपस्य ज्ञानमात्रनिष्ठधर्मस्य वा सम्बन्धत्वे विषयमनन्तर्भाव्य ज्ञाने एव विशेषः सिद्धः। तथा च सर्प-ज्ञानं स्वरूपतः एवासर्पज्ञानाद् व्यावर्तते। अथ वा सर्पज्ञानमात्रनिष्ठ-धर्माद् व्यावर्तते। ज्ञानमात्रनिष्ठधर्मश्च प्रकृते सर्पज्ञानमात्रनिष्ठो धर्मः। स च क्षीरमाधुर्यादिवत् आख्यातुमशक्यो वा तद्व्यवहारजननशक्तस्वरूपो वा द्रष्टव्यः। प्रथमपक्षे तु ज्ञानमेव विशेष इति बोध्यम्। ज्ञानं विषयमनन्तर्भाव्य स्वत एव ज्ञानान्तराद् व्यावृत्तमित्यत्रानुमानं प्रमाणयति पूर्वपक्षी—किञ्चेति। सर्पज्ञानमसर्पज्ञानात् धर्म्यन्तरसम्बन्धमनपेक्ष्य विलक्षणं, तज्जनकविलक्षण-जन्यत्वात्, यवाङ्कुरात् कलमाङ्कुरवत्। अत्र सर्पज्ञानं पक्षः, असर्पज्ञानाद् धर्म्यन्तर-मनपेक्ष्य विलक्षणमिति साध्यम्। तज्जनकविलक्षणजन्यत्वादिति हेतुः। यवाङ्कुरात् कलमाङ्कुरवदिति दृष्टान्तः। तज्जनकविलक्षणजन्यत्वञ्च असर्पज्ञान-जनकसामग्रीविलक्षणसामग्रीजन्यत्वं पक्षे सर्पज्ञाने वर्तते। दृष्टान्ते तु यवाङ्कुर-जनकसामग्रीविलक्षणसामग्रीजन्यत्वं कलमाङ्कुरेऽस्ति। अतः तज्जनकविलक्षण-सामग्रीजन्यत्वं हेतुः दृष्टान्ते पक्षे च अस्ति। कलमाङ्कुरं यद् यवाङ्कुराद् विलक्षणं तद्धर्म्यन्तरसम्बन्धमनपेक्ष्यैव स्वतो विलक्षणम्। एवमेव सर्पज्ञानमपि धर्म्यन्तर-सम्बन्धमनपेक्ष्यैवासर्पज्ञानाद् विलक्षणं भविष्यति। अतः सर्पज्ञानस्य वैलक्षण्यं स्वत एव सेत्स्यति इति पूर्वपक्षिणोऽभिप्रायः। **तज्जन्यविलक्षणजनकाद्वेति।** अत्र पूर्वोक्त एव पक्षसाध्ये ग्राह्ये। केवलं हेतुदृष्टान्तौ भिन्नौ। हेतुवाक्यस्याय-मर्थः—तज्जन्येति। असर्पज्ञानजन्यं यत् सन्तोषादिकार्यं तद्विलक्षणं यद्भयादि-कार्यं तज्जनकत्वं पक्षेऽस्ति। दृष्टान्ते तु यवबीजजन्यं यद् यवाङ्कुररूपं कार्यं तद्विलक्षणं यत् कलमाङ्कुररूपं कार्यं तज्जनकत्वं कलमबीजेऽस्तीति हेतोः पक्षदृष्टान्तसाधारण्यम्। प्रदर्शितसाध्यं विनापि हेत्वोरुपपत्तौ अप्रयोजकत्वं शङ्कते—न च विलक्षणविषयसम्बन्धेनैव हेत्वोरुपपत्तौ अप्रयोजकत्वमिति। निरस्यति पूर्वपक्षी—तथात्वे हीत्यादि। यवबीजविलक्षणजन्यं कलमाङ्कुरम्।

यवाङ्कुरविलक्षणजनकं कलमबीजं ते ऽपि कलमाङ्कुरकलमबीजे यवाङ्कुरयव-बीजाभ्यां स्वाभाविकवैलक्षण्येनैव विलक्षणे कलमाङ्कुरात् यवाङ्कुरस्य यवाङ्कुरत्व-मेव स्वाभाविकवैलक्षण्यमेवं यवबीजात् कलमबीजस्य कलमबीजत्वमेव स्वाभाविक-वैलक्षण्यं ताभ्यामेव कलमाङ्कुरकलमबीजे यवाङ्कुरयवबीजाभ्यां भिन्ने। यदि च स्वाभाविकवैलक्षण्यं विनैव धर्म्यन्तरसम्बन्धेन विलक्षणे भवतः तर्हि यवाङ्कुरजनक-यवबीजविलक्षणबीजजन्यमपि कलमाङ्कुरं कदाचित् कलमाङ्कुरत्वरूपस्वाभाविक-विशेषं विनैव उपलक्षणीभूतचैत्रादिधर्म्यन्तरसम्बन्धित्वमात्रेण यवाङ्कुराद् विलक्षणं स्यात्। तथा स्वाभाविकवैलक्षण्यं विनैव धर्म्यन्तरसम्बन्धमात्रेणैव तज्जन्यविलक्षणजनकत्वं चेत् तर्हि यवबीजजन्ययवाङ्कुरविलक्षणजनकमपि कलमबीजं कदाचित् कलमबीजत्वरूपस्वाभाविकवैलक्षण्यं विनापि उपलक्षणी-भूतचैत्रादिसम्बन्धित्वमात्रेण यवबीजात् विलक्षणं स्यात्। न च उभयत्रापि इष्टापत्तिरिति वाच्यं, चैत्रादिसम्बन्धित्वाज्ञाने ऽपि कलमाङ्कुरत्वतद्बीजत्वदर्शन-मात्रेणाङ्कुरान्तरात् बीजान्तराच्च वैलक्षण्यानुभवस्य सर्वजनसिद्धत्वादित्यर्थः। कादाचित्कविषयसम्बन्धमात्रेण हेत्वोरुपपत्तौ उच्यमानायामतिप्रसंगान्तरमाह— साक्षात्कारेति। साक्षात्कारो यत् परोक्षज्ञानाद् विलक्षणः तत्स्वाभाविक-वैलक्षण्यमात्रेणैव। साक्षात्कारो हि स्वगतसाक्षात्कारत्वरूपस्वाभाविकवैलक्षण्यादेव परोक्षज्ञानाद् विलक्षणः। यदि स्वाभाविकवैलक्षण्यमात्रं भेदकं न भवेत्तदा साक्षात्कारोऽपि चैत्रादिसम्बन्धितामात्रेणैव परोक्षज्ञानाद् विलक्षणः स्यात्। न चैवमनुभवसिद्धमिति भावः। एवञ्च यथा प्रतियोगिनमनन्तर्भाव्येति। घटस्याभावः अभावान्तराद् यद् भिद्यते तन्न प्रतियोगिसम्बन्धाद् भिद्यते। प्रतियोगिन उपलक्ष-णत्वेनाभावस्य स्वरूपानन्तर्गतत्वात्। प्रतियोगिनोऽभावस्वरूपानन्तर्गतत्वेन न प्रतियोगिनमनन्तर्भाव्यैव घटाभावोऽभावान्तराद् भिद्यते। एवमेव शिलोद्धरणकृतिः माषोद्धरणकृतितः यद्विलक्षणा भवति तदपि उपलक्षणं विषयमनन्तर्भाव्यैव। यथा वा अतीतादिविषयकं ज्ञानं ज्ञानान्तराद् भिद्यते तदपि स्वभाववैलक्षण्येनैव, न अतीतादिविषयमन्तर्भाव्य। अतीतादिविषयाणां ज्ञाने उपलक्षणत्वात्। एवमेव असद्विषयकज्ञानव्यवहारौ सद्विषयकज्ञानव्यवहाराभ्यां यद् व्यावर्तेते तदपि ज्ञानव्यवहारगतस्वभाववैलक्षण्येनैव, न तु असद्विषयमन्तर्भाव्य। असतस्तुच्छत्वेन व्यावर्तकत्वासम्भवात्। पूर्वपक्षिणा असद्विषयकपरोक्षज्ञानव्यवहारौ अङ्गीकृतौ

तन्न, सर्पज्ञानत्वावच्छिन्नस्यासर्पज्ञानाद् व्यावृत्तौ प्रयोजकं न

बौद्धवदेव। बौद्धैः खलु सत्त्वक्षणिकत्वयोर्व्यतिरेकव्याप्तिप्रदर्शनाय असद्रूपायामेव भूमौ व्यतिरेकव्याप्तिर्गृह्यते इत्युक्तम्। एवमेव असद्व्यवहारमपि तेऽङ्गीकुर्वन्ति। यथा वन्ध्यापुत्रो न वक्ता, अचेतनत्वात्, काष्ठादिवत्, इति दर्शयन्ति। एतत्सर्वं सर्वथैवाप्रामाणिकं, कदापि असद्विषयकज्ञानव्यवहारौ न सम्भवतः। केवलं बौद्धशिष्यत्वख्यापनाय पूर्वपक्षिणा पुनः पुनरेतदुपात्तम्। एतत्सर्वं दृश्यत्व-हेतुनिरूपणे अस्माभिरुक्तम्। आचार्येण पुनः "निन्दामि च पिबामि च" इति न्यायमनुसृत्य कथञ्चित् पूर्वपक्षिमतानुवर्तनं कृतं तन्मतानुवर्तनं विना तन्मतनिरसनं न भवतीत्यभिप्रेत्य। अन्यथा तत्कार्यसंकरः स्यादिति। परोक्षापरोक्षज्ञान-स्मृत्यनुभवादीनां स्वतो वैलक्षण्यानङ्गीकारे परोक्षापरोक्षज्ञानस्मृत्यनुभवकार्याणां संकरापत्त्या असंकीर्णव्यवहारादिकं न स्यात्। तथा अभावस्याभावान्तराद् वैल-क्षण्यानङ्गीकारे तयोः सांकर्यापत्त्या दोषाभावगुणाभावकार्याणां प्रमाभ्रमादीना-मपि सांकर्यं स्यात्। एवं सर्पज्ञानमपीति। तथा सर्पज्ञानमपि विषयमनन्त-र्भाव्यैव असर्पज्ञानाद् विलक्षणं तत् स्वत एव विलक्षणं विशेषयुक्तमित्यर्थः। रज्जौ सर्पज्ञानस्य भ्रमत्वेन यथार्थसर्पज्ञानात् अधिकजन्यत्वेन दोषजन्यत्वेन भ्रमत्वेऽपि सर्पज्ञानस्य तस्य सर्पज्ञानत्वात् सर्पज्ञानहेतुजन्यत्वमस्ति। भ्रम-प्रमारूपसर्पज्ञानस्य सर्पज्ञानत्वेन सर्पज्ञानहेतुजन्यत्वात्। स्वत एव वा सर्पज्ञान-मसर्पज्ञानाद्विलक्षणम्। उक्तप्रमाणैरनुभवेन च सिद्धस्य तस्य जातिरूपविशेष-स्याख्यातुमशक्यत्वात्। स्वतो वैलक्षण्यमेव वाच्यम्। ननु अभावकृत्यतीतादि-ज्ञानेषु प्रतियोगिविषयाभ्यामसंकरसम्भवात् तत्कार्येषु असंकरोपपत्तिरित्याशंक्य निराकरोति न च अभावादावपीति। अभावादावपि प्रतियोग्यादेर्नावच्छेद-कत्वम्। कुतो नावच्छेदकत्वमित्यत आह—ध्वंसादेरिति। आदिपदेन प्रागभावस्य ग्रहणम्। प्रागभावप्रध्वंसाभावकाले प्रतियोगिनोरसत्त्वात्। कृतिकाले च विषयस्य असत्त्वात् कृत्यपरपर्याययत्नस्य सिद्धवस्तुकर्मत्वाभावेन कृतेः कालेऽपि विषयाभावात्। अतीतादिज्ञानकाले च विषयस्यासत्त्वात् इति भावः ॥६॥

७—समाधत्ते सिद्धान्ती—तन्न, सर्पज्ञानत्वावच्छिन्नस्य असर्पज्ञाना-

तत्तत्स्वरूपमेव सर्पज्ञानसाधारण्याभावात्। किन्त्वनुगतो धर्मः कश्चित्। सोऽपि सर्पज्ञानमात्रे न जातिरूपः प्रत्यक्षत्वानुमानत्वादिना सङ्कर-प्रसङ्गात्। किं तूपाधिरूपः स च स्वरूपसम्बन्धेनाध्यासिकसम्बन्धेन वा संबन्धिभूतविषयादन्यो न भवति मानाभावात्। अत एव धर्म्यन्तर-सम्बन्धमनपेक्ष्य विलक्षणमित्युक्तानुमानं बाधितं द्रष्टव्यं व्यभिचारि च। तथा हि—घटसंयोगः, पटसंयोगान्न जात्या भिद्यते तदवृत्तिजात्य-नधिकरणत्वात् किन्तु घटरूपोपाधिनैवेति धर्म्यन्तरसम्बन्धमपेक्ष्यैव विलक्षणे घटसंयोगत्वावच्छिन्ने साध्याभाववति उक्तहेतुसत्त्वाद् व्यभिचारः अप्रयोजकं च। न च—उपलक्षणीभूतचैत्रसम्बन्धेनापि कलमाङ्कुरादेर्व्यावृत्ततापत्तिः विपक्षबाधायामिष्टापत्तेः। न हि जाते-र्व्यावर्तकत्वे उपाधिरव्यावर्तको भवति। एवं शिलोद्धरणमाषोद्धरणकृत्योः परस्परं जात्या व्यावृत्तावपि विषयरूपोपाधिनापि व्यावृत्तिरविरुद्धा।

शिलोद्धरणे च जातिविशेषविशिष्टायाः कृतेर्जनकत्वेन तद्रहिताया माषोद्धरणकृतेस्तदनिष्पत्तिरविरुद्धा व्यावृत्तेरन्यतोऽपि सिद्धिसम्भवे

---

द्व्यावृत्तौ अप्रयोजकं न तत्तत्स्वरूपमेव सर्वज्ञानसाधारण्याभावात्। किन्तु अनुगतो धर्मः कश्चित्। सोऽपि सर्पज्ञानमात्रेण जातिरूपः प्रत्यक्षत्वानुमानत्वादिना सङ्करप्रसंगात्। किन्तु उपाधिरूपः, स च स्वरूपसम्बन्धेन आध्यासिकसम्बन्धेन वा सम्बन्धिभूतविषयादन्यो न भवति मानाभावात्। अत एव धर्म्यन्तरसम्बन्धमनपेक्ष्य विलक्षण-मित्युक्तानुमानं बाधितं द्रष्टव्यं व्यभिचारि च। तथा हि—घटसंयोगः पटसंयोगान्न जात्या भिद्यते तदवृत्तिजात्यनधिकरणत्वात् किन्तु घटरूपो-पाधिनैवेति धर्म्यन्तरसम्बन्धमपेक्ष्यैव विलक्षणे घटसंयोगत्वावच्छिन्ने साध्याभाववति उक्तहेतुसत्त्वाद् व्यभिचारः अप्रयोजकं च। न च उपलक्षणीभूतचैत्रसम्बन्धेनापि कलमाङ्कुरादेर्व्यावृत्ततापत्तिः विपक्ष-बाधायामिष्टापत्तेः। नहि जातेर्व्यावर्तकत्वे उपाधिरव्यावर्तको भवति। एवं शिलोद्धरणमाषोद्धरणकृत्योः जात्या व्यावृत्तावपि विषयरूपोपाधिनापि व्यावृत्तिरविरुद्धा। व्यावृत्तेरन्यतोऽपि सिद्धि-

कार्यकारणभावादिनिर्वाहाय जातिविशेषस्यापि कल्पनात्। अतीतासद्विषयकज्ञानव्यवहारादौ चातीतासतोरेव व्यावर्तकत्वम्। न हि व्यावृत्तिधीजनकत्वं तत्, येन सत्त्वाभावे प्राक्सत्त्वशरीरतया न स्यात्, किं तु व्यावृत्तिधीजनकधीविषयत्वमित्युक्तम्। तच्चातीतादौ सुलभमेव। अत एवाभावादिनिदर्शनमपि निरस्तम्। उक्तरूपव्यावर्तकत्वस्यात्यन्तासत्यपि सम्भवेन कदाचित् सति सम्भवस्य कैमुतिकन्यायसिद्धत्वात् ॥७॥

---

सम्भवे कार्यकारणभावनिर्वाहाय जातिविशेषस्यापि कल्पनात्। अतीतासद्विषयज्ञानव्यवहारादौ अतीतासतोरेव व्यावर्तकत्वम्। न हि व्यावृत्तिधीजनकत्वं तत् येन सत्त्वाभावे प्राक्सत्त्वशरीरतया न स्यात्, किन्तु व्यावृत्तिधीजनकधीविषयत्वम्। तच्च अतीतादौ सुलभमेव अत एव अभावादिनिदर्शनमपि निरस्तम्। उक्तरूपव्यावर्तकत्वस्य अत्यन्तासत्यपि सम्भवेन कदाचित् सति सम्भवस्य कैमुतिकन्यायसिद्धत्वात्। सर्पज्ञानसामान्यं यदसर्पज्ञानाद्व्यावर्तते तद्व्यावृत्तौ प्रयोजकं न तत्तत्सर्पज्ञानस्वरूपं, सर्पज्ञानसामान्यस्य असर्पज्ञानाद्व्यावृत्तौ प्रयोजकं यदि तत्तत्सर्पज्ञानस्वरूपं स्यात् तर्हि तत्तत्सर्पज्ञानस्वरूपस्य तत्तत्सर्पज्ञानमात्रविश्रान्तत्वात्, तादृशमसाधारणं स्वरूपं न सर्वसर्पज्ञानसाधारणम् असाधारणधर्मेण न यावत्सर्पज्ञाने व्यावृत्तिरुपपद्यते। अतः सर्पज्ञानसामान्ये या असर्पज्ञानाद्व्यावृत्तिस्तस्याः प्रयोजकं न तत्तत्सर्पज्ञानव्यक्तिस्वरूपं, तस्य सर्वसर्पज्ञानानुगतत्वाभावात्। किन्तु सर्वसर्पज्ञानानुगतः कश्चिद्धर्म एव प्रयोजकः वाच्यः। स च प्रयोजको धर्मः सकलसर्पज्ञानमात्रवृत्तिः जातिरूपो न भवितुमर्हति। सर्पज्ञानत्वं न जातिः। प्रत्यक्षानुमानत्वादिना संकरप्रसंगात्। तथा हि—प्रत्यक्षत्वाभाववति सर्पानुमितौ सर्पज्ञानत्वं, सर्पज्ञानत्वाभाववति घटादिप्रत्यक्षे प्रत्यक्षत्वम्। प्रत्यक्षसर्पज्ञाने च प्रत्यक्षत्वं सर्पज्ञानत्वञ्च द्वयम्। एवमनुमानत्वमादायापि सांकर्यं बोध्यम्। प्रदर्शितसांकर्यभयात् सर्पज्ञानत्वं न जातिरूपम्। व्यावृत्तिप्रयोजकधर्मस्तु यद्यपि न जातिरूपः, किन्तूपाधिरूप एव भवितुमर्हति। स च उपाधेः विषयादन्यो न भवितुमर्हति। ज्ञानविषययोः स्वरूपसम्बन्धवादिमते स्वरूपसम्बन्धेन सम्बन्धिभूतविषय एवोपाधिः। ज्ञानविषययोराध्यासिकतादात्म्य-

सम्बन्धवादिमते आध्यासिकतादात्म्यसम्बन्धेन विषय एव उपाधिः। तथा चासर्पज्ञानात् सर्पज्ञाने या व्यावृत्तिस्तस्याः प्रयोजकरूपो य उपाधिः स स्वरूपसम्बन्धेन सर्प एव वा, आध्यासिकतादात्म्यसम्बन्धेन सर्प एव वा स्यात्। तथा च विषयस्यैव ज्ञाननिष्ठव्यावृत्तौ प्रयोजकत्वमक्षतम्। तादृशसम्बन्धेन विषयादन्यस्य व्यावृत्तिप्रयोजकत्वे मानाभावाद्। विषयस्यैव व्यावृत्तिप्रयोजकत्वे सिद्धे यदुक्तं पूर्वपक्षिणा धर्म्यन्तरसम्बन्धमनपेक्ष्य विलक्षणमित्यनुमानं तद्बाधितं द्रष्टव्यम्। विषयस्यैव धर्म्यन्तरस्य सम्बन्धादेव ज्ञानस्य व्यावृत्तिः, न तु धर्म्यन्तरमनपेक्ष्य। तज्जनकविलक्षणजन्यत्वादिति हेतुरपि व्यभिचारी इत्याह—तथा हीति। घटसंयोगपटसंयोगान्न जात्या भिद्यते तदवृत्तिजात्यनधिकरणत्वात् इत्यनुमाने घटसंयोगः पक्षः, जात्या पटसंयोगान्न भिद्यते इति, साध्यम्। तदवृत्तिजात्यनधिकरणत्वादिति हेतुः। पटसंयोगावृत्तिजात्यनधिकरणत्वं घटसंयोगे वर्तते इत्यर्थः। पटसंयोगे सत्तागुणत्वसंयोगत्वाख्या जातयो वर्तन्ते। ताः सर्वाः घटसंयोगेऽपि वर्तन्ते। पटसंयोगावृत्तिः काचिज्जातिर्न घटसंयोगे वर्तते। तथा च हेतोः पक्षसत्त्वम्। घटसंयोगः पटसंयोगात् यद्यपि जात्या न भिद्यते तथापि भिन्नप्रतियोगिकयोर्द्वयोः संयोगयोर्भेदस्तु वर्तत एव। अत्र भेदकः कः ? इति निरूपणायां घटरूपोपाधिनैव घटसंयोगः पटसंयोगात् भिद्यत इति वक्तव्यम्। तथा च धर्म्यन्तरसम्बन्धमपेक्ष्यैव विलक्षणे घटसंयोगे साध्याभाववति तज्जनकविलक्षणजन्यत्वरूपहेतोः सत्त्वात् तज्जन्यविलक्षणजनकत्वरूपहेतोश्च सत्त्वात् द्वयोर्हेत्वोः प्रदर्शितस्थले सुदृढो व्यभिचार एवं पूर्वपक्षिप्रदर्शितानुमाने हेतोर्विपक्षवृत्तित्वबाधकतर्काभावात् हेतुरप्रयोजक एव इत्यत आह मूलकारः—अप्रयोजकश्चेति। ननु च यदि धर्म्यन्तरसम्बन्धमपेक्ष्यैव सर्पज्ञानमसर्पज्ञानाद् विलक्षणं स्यात्, कलमाङ्कुरश्च यदि धर्म्यन्तरसम्बन्धमपेक्ष्यैव यवाङ्कुराद्विलक्षणं स्यात्, तर्हि उपलक्षणीभूतचैत्रादिसम्बन्धेनापि व्यावृत्तिः स्यादिति वाच्यम्। अस्यामापत्तौ इष्टापत्तिरेव। विपक्षबाधकप्रमाणे विद्यमाने उपलक्षणस्यापि व्यावर्तकत्वे इष्टापत्तिरेव। यत्रोपलक्षणस्य व्यावर्तकत्वेऽतिप्रसङ्गः स्यात्तत्रैव उपलक्षणं न व्यावर्तकम्। विरुद्धधर्मसम्बन्धमात्रस्यैव व्यावर्तकत्वाद्। व्यावर्तकञ्च कुत्रचिद्विशेषणं कुत्रचिदुपाधिः, कुत्रचिदुपलक्षणम्। तथा चोपलक्षणमपि व्यावर्तकमेव।

उपलक्षणस्य व्यावर्तकत्वं नानिष्टम् । एतच्च बाध्यैः—अयमेव भेदो भेदहेतुर्वा योऽयं विरुद्धधर्माध्यासः कारणभेदश्च विरुद्धधर्मश्च जातिरुपाधिर्वा उपलक्षणं वा ? तत्र नाग्रहः । यस्तु जात्या भिद्यते तत्रोपाधिसत्त्वे उपाधिनापि भिद्यते । जात्या भेदसिद्धौ तत्र स्थितोऽप्युपाधिर्नोदास्ते, किन्तु भेदं ज्ञापयत्येव । एतदेवोक्तं मूले—नहि जातेर्व्यावर्तकत्वे उपाधिरव्यावर्तको भवति । एवञ्च जात्योपाध्योर्द्वयोर्व्यावर्तकत्वे शिलोद्धरणमाषोद्धरणकृत्योः परस्परं जात्या व्यावृत्तावपि विषयरूपोपाधिनापि व्यावृत्तिरविरुद्धा । शिलोद्धरणजनकतावच्छेदिका काचित् जातिः कृतित्वव्याप्या शिलोद्धरणकृतौ वर्तते, माषोद्धरणजनकतावच्छेदिका च अपरा काचिज्जातिः कृतित्वव्याप्या माषोद्धरणकृतौ वर्तते । अतः शिलोद्धरणमाषोद्धरणकृत्योः परस्परं जात्या व्यावृत्तावपि शिलामाषरूपविषयरूपोपाधिभ्यामपि कृत्योर्व्यावृत्तिरविरुद्धा । यादृशजातिविशेषविशिष्टा कृतिः शिलोद्धरणजनिका तज्जातिरहितायाः माषोद्धरणकृतेः शिलोद्धरणनिष्पत्तिरविरुद्धा । विषयरूपोपाधितोऽपि कृत्योर्व्यावृत्तिसिद्धिसम्भवे कार्यकारणभावनिर्वाहाय कृतित्वव्याप्यजातिविशेषस्यापि कल्पनात् । अतीतासद्विषयज्ञानव्यवहारादौ तु अतीतासद्विषययोरेव व्यावर्तकत्वम् । व्यावर्तकत्वञ्च व्यावृत्तिधीजनकत्वम् । तत् अतीतासतोः कथं स्यात् ? तयोरसत्त्वात् । तत्राह—नहि व्यावर्तकत्वं व्यावृत्तिधीजनकत्वं न ये अतीतासतोः सत्त्वाभावे प्राक्सत्त्वघटितजनकता अतीतासतोर्न स्यात् । किन्तु व्यावर्तकत्वं व्यावृत्तिधीजनकधीविषयत्वम् । यद्रूपयिणी धीः व्यावृत्तिधियो जनिका तद्धीविषयत्वमेव व्यावर्तकत्वम् । अतोऽतीतादेर्व्यावर्तकत्वम् अतीतविषयिण्या धिय एव जनकत्वम् , अतीतादेस्तु तद्धीविषयत्वमात्रं, न तु जनकत्वम् । धीविषयत्वन्तु अतीतादौ सुलभम् । अतीतासतोरपि धीविषयत्वात् । यच्चोक्तं पूर्वपक्षिणा न च अभावादावपि प्रतियोग्यादेरवच्छेदकत्वं ध्वंसादेः कृतेरतीतादिज्ञानस्य च सत्तासमये प्रतियोगिविषययोरसत्त्वादिति तदनुभाष्य दूषयति—अत एव अभावादिनिदर्शनमपि निरस्तमिति । ध्वंसस्य कृतेः अतीतादिज्ञानस्य निदर्शनं निरस्तम् । अत एव इति । यतः एव व्यावर्तकत्वं न व्यावृत्तिधीजनकत्वं किन्तु व्यावृत्तिधीजनकधीविषयत्वं तादृशव्यावर्तकत्वस्य अत्यन्तासति शशविषाणाद्यावपि संभवात् ध्वंसप्रतियोगिनः

ननु—विषयस्य व्यावर्तकत्वेऽपि सर्वत्र विशेषणत्वासम्भवात् उपलक्षणत्वमेव वाच्यम्, उपलक्षणेन चोपलक्ष्यगतस्वसम्बन्धव्यतिरिक्तः कश्चिद्धर्म एवोपस्थाप्यते, काकेनेव गृहसम्बन्धिना तद्गतसंस्थानविशेषः तथा च स एव व्यावर्तक इति विषयसम्बन्धमनपेक्ष्य स्वगतेनैव धर्मेण ज्ञानस्य व्यावृत्तिरिति—चेन्न; विषयस्य विशेषणत्ववदुपलक्षणत्वस्याप्यनभ्युपगमात्। येन हि स्वोपरागाद्विशेष्ये व्यावृत्तिबुद्धि-

---

अतीतस्य अतीतादिविषयकज्ञानविषयस्य च कदाचित् सतः व्यावर्तकत्वं कैमुतिकन्यायसिद्धं सर्वदा असतोऽपि यदि व्यावर्तकत्वं तदा किम् वक्तव्यं कदाचित् सतोर्व्यावर्तकत्वे इति भावः ॥७॥

८—ज्ञाने विषयस्य उपलक्षणत्वेन उपलक्ष्यतावच्छेदकधर्मस्यैव व्यावर्तकत्वात् उपलक्षकविषयो न व्यावर्तक इति शङ्कते पूर्वपक्षी—ननु विषयस्य व्यावर्तकत्वेऽपि सर्वत्र विशेषणत्वासम्भवात् उपलक्षणत्वमेव वाच्यम् उपलक्षणेन च उपलक्ष्यगतस्वसम्बन्धव्यतिरिक्तः कश्चित् धर्म एव उपस्थाप्यते काकेनेव गृहसम्बन्धिना तद्गतसंस्थानविशेषः। तथा च स एव व्यावर्तक इति विषयसम्बन्धमनपेक्ष्य स्वगतेनैव धर्मेण ज्ञानस्य व्यावृत्तिरिति चेत्। ज्ञाने विषयस्य सर्वत्र विशेषणत्वं न सम्भवति अतीतादिविषयकज्ञाने विषयाभावेऽपि ज्ञानदर्शनात् विषयस्य न ज्ञाने विशेषणत्वं यथा वा घटादेः स्वप्रागभावं प्रति उपलक्षणत्वमेव न विशेषणत्वं प्रतियोगिप्रागभावयोरेककालत्वाभावात्। उपलक्षणेन च अन्यो व्यावर्तक उपस्थाप्यः काकेन गृहसंस्थानविशेषः उत्तृणत्वादिः तथा च उपलक्ष्यगतः यो विशेषः उपलक्षणेन उपस्थाप्यते स एव व्यावर्तकः न उपलक्षणम् एवञ्च उपलक्षणीभूतसर्पादिविषयोपस्थाप्यः ज्ञाने कश्चन विशेषः अवश्यमेव स्वीकार्यः स एव व्यावर्तकः तथा च सर्पादिज्ञानं विषयसम्बन्धमनपेक्ष्य उपलक्षणोपस्थाप्यस्वगतधर्मेणैव ज्ञानस्य व्यावृत्तिः तथा च विषयो न व्यावर्तकः किन्तु ज्ञानगतविशेषधर्म एव स च सन्नेव न असतो विषयस्य व्यावर्तकत्वमिति भावः। ज्ञाने विषयस्य न विशेषणत्वं न वा उपलक्षणत्वं किन्तु उपाधित्वमेव इति समाधत्ते सिद्धान्ती—न, विषयस्य विशेषणत्ववदुपलक्षणत्वस्याप्यनभ्युपगमात्। येन हि स्वस्वोपरागाद्

जन्यते तद्विशेषणं व्यावृत्तिबुद्धिकाले विशेष्योपरञ्जकमित्यर्थः। यथा गोत्वादि। येन च स्वोपरागमुदासीनं कुर्वता विशेष्यगतव्यावर्तक-धर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदुपलक्षणं यथा काकादि। यत्तु—विशेष्ये नोपरञ्जकम, न वा धर्मान्तरोपस्थापकम् अथ च व्यावर्तकं तदुपाधिः, यथा पङ्कजशब्दप्रयोगे पद्मत्वं, यथा वोद्भि-दादिशब्दप्रयोगे यागत्वावान्तरजातिविशेषः। अत्र हि पद्मत्वयागत्वा-वान्तरधर्मौ पङ्कजनिकर्तरि फलोद्भेदनकर्तरि च न धर्मान्तरमुपस्था-पयतः, अप्रतीतेः न वा स्वोपरक्तां बुद्धि जनयतः समुदाये शक्त्यन्त-रानभ्युपगमात् अथ च कुमुदज्योतिष्टोमादिभ्यो व्यावर्तकावित्युपाधी एव। इदं च प्राभाकराणां भाट्टानां च सम्मतमुदाहरणयुगलम्; तार्किकाणां त्वाकाशशब्दप्रयोगे शब्दाश्रयत्वमुदाहरणम्। अत एवा-विद्यादिकं साक्षित्वादावुपाधिरिति सिद्धान्तो वेदान्तिनाम्।

अतो यत्र विषयस्य विशेषणत्वं न सम्भवति, तत्कालासत्त्वात् तत्रोपाधित्वाभ्युपगमान्नोपलक्षणत्वनिबन्धनदोषावकाशः। सन्देहे तु

---

विशेष्ये व्यावृत्तिबुद्धिर्जन्यते तद्विशेषणं, व्यावृत्तिबुद्धिकाले विशेष्योप-रञ्जकमित्यर्थः। यथा गोत्वादि। येन च स्वोपरागमुदासीनं कुर्वता विशेष्यगतव्यावर्तकधर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदुपलक्षणं यथा काकादि। यत्तु विशेष्ये नोपरञ्जकं न वा धर्मान्तरोपस्थापकम् अथ च व्यावर्तकं तदुपाधिः यथा पङ्कजशब्दप्रयोगे पद्मत्वं यथा वा उद्भिदादिशब्दप्रयोगे यागत्वावान्तरजातिविशेषः। अत्र हि पद्मत्वयागत्वावान्तरधर्मौ पङ्कजनिकर्तरि फलोद्भेदनकर्तरि च न धर्मान्तरमुपस्थापयतः अप्रतीतेः। न वा स्वोपरक्तां बुद्धिं जनयतः समुदाये शक्त्यन्तरानभ्युपगमात्। अथ च कुमुदज्योतिष्टोमादिभ्यो व्यावर्तकावित्युपाधी एव। इदं च प्राभाकराणां भाट्टानां च सम्मत-मुदाहरणयुगलम्। तार्किकाणां तु आकाशशब्दप्रयोगे शब्दाश्रयत्व-मुदाहरणम्। अत एव अविद्यादिकं साक्षित्वादौ उपाधिरिति सिद्धान्तो वेदान्तिनाम्। अतो यत्र विषयस्य विशेषणत्वं न सम्भवति तत्काला-

विशेषणत्वमेवाभ्यर्हितत्वादुपेयते । तस्माद्विषय एव सर्वत्र ज्ञाने व्यावर्तकः, एकविषयकस्मृत्यनुभवयोः परोक्षापरोक्षयोश्च विषयमनपेक्ष्य जात्या परस्परव्यावृत्तिदर्शनात् । सर्वत्र विषयनिरपेक्षा जातिरेव व्यावर्तिकेति न युक्तम्, भिन्नविषयके समानजातीये तदसम्भवात् ।

---

सत्त्वात् तत्रोपाधित्वाभ्युपगमात् न उपलक्षणत्वनिबन्धनदोषावकाशः । सन्देहे तु विशेषणत्वमेवाभ्यर्हितत्वादुपेयते । तस्माद् विषय एव सर्वत्र ज्ञाने व्यावर्तकः एक विषयकस्मृत्यनुभवयोः परोक्षापरोक्षयोश्च विषयमनपेक्ष्य जात्या परस्परव्यावृत्तिदर्शनात् । सर्वत्र विषय-निरपेक्षा जातिरेव व्यावर्तिकेति न युक्तं, भिन्नविषयके समानजातीये तदसम्भवात् । ज्ञाने विषयस्य सर्वदा विशेषणत्वं न सम्भवति अतीतादि-विषयकज्ञानकाले विषयस्यासत्त्वादिति यदुक्तं पूर्वपक्षिणा तदिष्टापत्त्या परिहरन्नाह ज्ञाने विषयस्य विशेषणत्ववत् उपलक्षणस्याप्यनभ्युपगमादिति । विषयो ज्ञाने न विशेषणं नाप्युपलक्षणं किन्तूपाधिरिति प्रतिपादयितुं विशेषणोपाध्युप-लक्षणानां लक्षणान्याह—येन हि स्वोपरागादिति । स्वोपरागात् स्वोपराग-मादाय इत्यर्थः । विशेष्योपरञ्जकमिति व्यावृत्तिधीविशेष्ये व्यावृत्तिधीकाले विशेषतया भासमानं सद्व्यावृत्तिधीकाले विद्यमानं विशेषणम् । उपलक्षणे विशेषणलक्षणस्यातिव्याप्तिवारणाय सदित्यन्तं विशेषणम् । काकवन्तो देवदत्तस्य गृहाः इत्यादौ उपलक्षणकाकस्य अकाकगृहव्यावृत्तिधीविशेष्ये देवदत्तगृहे अकाक-गृहव्यावृत्तिधीकाले विशेषणतया भासमानत्वं नास्ति गृहे काकस्यासत्त्वदशायामपि काकवन्तो गृहा इत्येवं प्रयोगदर्शनात् । गृहे काकस्य यदा कदाचित् सत्त्वमात्रेणैव तादृशप्रयोगसम्भवात् । ध्वंसादेरितरस्मात् व्यावर्तके प्रतियोग्यादौ उपाधिरूपे विशेषणलक्षणस्यातिव्याप्तिवारणाय विशेष्यदलं व्यावृत्तिधीकाले विद्यमानं विशेषणं भवति । ध्वंसादौ इतरव्यावृत्तिधीकाले प्रतियोग्यादेर्वर्तमानत्वाभावात् प्रति-योग्यादेर्न विशेषणत्वं किन्तु उपाधित्वमेव । व्यावृत्तिधीविशेष्ये व्यावृत्तिधीकाले विशेषणतया भासमानोऽपि उपाधिः व्यावृत्तिधीकाले अविद्यमानत्वात् न विशेषणत्वं किन्तुपाधित्वमेव । ध्वंसादेर्व्यावर्तके प्रतियोग्यादौ न विशेषणत्वं किन्तु उपाधि-त्वमेव ।

विशेषणोदाहरणमाह—यथा गोत्वादीति। गवि गवितरव्यावृत्तिधीकाले व्यावृत्तिविशेष्ये गवि गोत्वस्य विशेषणतया भासमानत्वात् व्यावृत्तिधीकाले व्यावृत्तिविशेष्ये विद्यमानत्वाच्च गोत्वस्य विशेषणत्वम्। उपलक्षणमाह—येन च स्वोपरागमुदासीनं कुर्वतेति। उपलक्षणं स्वयमव्यावर्तकं सत् विशेष्यगतव्यावर्तकधर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदुपलक्षणं यथा काकादि। काकाद्युपलक्षणं न स्वोपरागात् गृहादिविशेष्ये व्यावृत्तिबुद्धिं जनयति किन्तु गृहादिविशेष्यगतोत्तृणत्वादिधर्मान्तरमुपस्थापयति। काकाद्युपलक्षणेन उपस्थापितं धर्मान्तरमेव व्यावर्तकं व्यावर्तकधर्मोपस्थापनद्वारा यत् व्यावृत्तिबुद्धेः प्रयोजकं तदुपलक्षणम्, अतस्तद्व्यावृत्तिधीविशेष्ये व्यावृत्तिधीकाले विशेषणतया न भासते। अत उक्तं मूले स्वोपरागमुदासीनं कुर्वतेति। व्यावृत्तिव्याप्यो धर्मः व्यावर्तकः व्यावृत्तेर्ज्ञापक इत्यर्थः। तथा च विशेषणोपलक्षणयोर्वैलक्षण्यम्। उपाधिलक्षणमाह—यत्तु इति। यद्विशेष्येनोपरञ्जकं न विशेषणमित्यर्थः। न वा धर्मान्तरोपस्थापकमित्यनेन नोपलक्षणमथ च व्यावर्तकं व्यावृत्तेर्ज्ञापकं तदुपाधिः विशेषणादीनां त्रयाणां व्यावर्तकत्वे सामानेऽपि अवान्तरवैलक्षण्यमादाय त्रयाणां भेदः। विशेषणोपलक्षणाभ्यां भिन्नत्वे सति यद्व्यावर्तकं तदुपाधिरिति फलितम्। यथा पङ्कजादिशब्दप्रयोगे इति। यत्र वस्तुगत्या पद्मत्वं वर्तते तत्रैव पङ्कजपदं प्रयुज्यते। पङ्कजशब्दजन्यानुभवे वा पद्मत्वमुपाधिः यत्र वस्तुगत्या पद्मत्वं वर्तते तदेव पङ्कजशब्दजन्यानुभवे भासते। पङ्कजपदधर्मिकवृत्तिज्ञानजन्यपदार्थोपस्थितौ पद्मत्वं नोपस्थितेर्विषयो भवति। पद्मत्वविशिष्टे पङ्कजपदस्य शक्त्यभावात् यथा वा उद्भिदादिशब्दप्रयोगे इति। उद्भित्पदस्य यागविशेषनामधेयत्वात् उद्भिद्यते पशुफलमनयेति व्युत्पत्तेः उद्भित्पदं यागविशेषनामधेयम् यस्मिन् यागविशेषे यागत्वव्याप्यजातिविशेषोऽस्ति तत्रैव उद्भिद्पदं प्रयुज्यते। पङ्कजपदप्रयोगोपाधिः पद्मत्वमुद्भित्पदप्रयोगोपाधिः यागत्वव्याप्यजातिविशेषः पङ्कजपदयोगलभ्यार्थमात्रे पङ्कजनिकर्तरि पद्मत्वं न व्यावर्तकधर्मान्तरमुपस्थापयति तादृशधर्मान्तरस्याप्रतीतेः। एवमेव उद्भित्पदमपि योगलभ्यार्थमात्रे पशुफलोद्भेदनकर्तरि यागत्वावान्तरजातिविशेषे वर्तमानोऽपि न व्यावर्तकधर्मान्तरमुपस्थापयति। तादृशधर्मान्तरस्याप्रतीतेः।

अतः पद्मत्वं यागत्वव्याप्यजातिविशेषो वा न उपलक्षणं न वा पङ्कजपदं पद्मत्वोपरक्तां बुद्धिं जनयति न वा उद्भित्पदं यागत्वावान्तरजातिविशेषोपरक्तां बुद्धिं जनयति अतो न पद्मत्वं यागत्वावान्तरजातिविशेषो वा विशेषणं यौगिकपङ्कजपदस्य उद्भित्पदस्य च स्वावयवलभ्यार्थातिरिक्ते पद्मत्वादिविशिष्टे शक्त्यन्तराभावात् ? अत एव प्रभाकरैर्योगरूढं नाम प्रत्याख्यातम् । अत एव पद्मत्वं कुमुदादिभ्यो व्यावर्तकत्वात् उपाधिरेव । एवमेवं यागत्वावान्तरधर्मज्योतिष्टोमादियागेभ्यो व्यावर्तकः । उद्भिद्यागनिष्ठधर्मं उपाधिरेव, न विशेषणं नाप्युपलक्षणम् । आद्यमुदाहरणं प्राभाकराणां सम्मतं द्वितीयं भाट्टानाम् । तार्किकसम्मतमुपाधिं दर्शयति—आकाशशब्दप्रयोगे शब्दाश्रयत्वमुपाधिः । शब्दाश्रयत्वविशिष्टे आकाशपदस्य न शक्तिर्भवितुमर्हति । शब्दाश्रयत्वस्य आकाशशब्दवाच्यत्वे शब्दगुणकमाकाशमिति सहप्रयोगो न स्यात् । आकाशशब्दप्रयोगे शब्दाश्रयत्वस्य तटस्थत्वात् इत्युक्तं किरणावल्याम् उदयनेन । वेदान्तसिद्धान्तेऽपि उपाधिस्वरूपं दर्शयन्नाह—अविद्योपहितं चैतन्यं साक्षि इति । साक्षिनिरूपणे अविद्यादेरुपाधित्वमुक्तम् । अविद्योपहितचैतन्यस्य साक्षित्वेऽपि अविद्या साक्षिकोटौ न प्रविशति तस्याः जडत्वात्, किन्तु साक्षित्वमविद्यया व्यावृत्ते चैतन्ये एव वर्तते, अत एव अविद्याया न विशेषणत्वं, नाप्युपलक्षणत्वं, किन्तु चैतन्यव्यावर्तकत्वादुपाधित्वमेव । विशेषणोपलक्षणयोरेव व्यावर्तकत्वं नान्यस्य इति पश्यन्तः भास्करमतानुसारिणः केशवाचार्याः—

"यद्युपाधिविशिष्टस्य संसारो नास्ति चात्मनः ।
तल्लक्षितस्य चेद् ब्रह्म मुक्त्वा तद्रूपमुच्यताम् ॥" इत्याहुः—

तन्मतनिरसनायोक्तं कल्पतरौ—तन्न, यतो न विशेषणमविद्या, नापि उपलक्षणम्, किन्तूपाधिः । कः पुनरेषां भेदः ? उच्यते—कार्यान्वयित्वेन भेदकं हि विशेषणं, नैल्यमिवोत्पलस्य, अनन्वयित्वेन तु भेदकानामुपाधिता उपलक्षणता च सिद्धा ।

तत्र च—

"यावत् कार्यमवस्थाय भेदहेतोरुपाधिता ।
कादाचित्कतया भेदधीहेतुरुपलक्षणम् ॥

न च तत्रापि जातिरस्ति, क्षीरादिमाधुर्यवदिति—वाच्यम्, चाक्षुषत्वादिना सङ्करस्योक्तत्वात्। न च तव मते तत्तद्वृत्तेस्तत्तदाकारत्वेन चैतन्यस्य तत्प्रतिबिम्बितत्वेन वा, मम तु तत्तज्ज्ञानस्य तत्तदीयस्वभावत्वेन तत्तद्व्यवहारजननशक्तत्वेन वा स्वत एव वैलक्षण्यमिति—वाच्यम्, विषयस्यैवाकारसमर्पकत्वेन स्वभावव्यवहारयोः

---

इत्युक्तं कल्पतरौ वाक्यान्वयाधिकरणे। कल्पतरुकृतापि विशेषणोपलक्षणाभ्यां तृतीयं व्यावर्तकमुपाधिरूपमङ्गीकृत्यैव केशवीयापत्तिर्निरस्ता। अतो यत्रातीतादिविषयकज्ञानेऽतीतस्य विषयस्य विशेषणत्वं न सम्भवति, ज्ञानकाले विषयस्यासत्त्वात्, अत्रातीतविषयस्य ज्ञाने विशेषणत्वासम्भवेऽपि उपाधित्वाभ्युपगमात्। अतीतादिविषयकज्ञानव्यावर्तकतया अतीतादिविषय उपाधिरेव, नोपलक्षणं, व्यावर्तकधर्मानुपस्थापनात्। अतो न विषयस्य उपलक्षत्वनिबन्धनो दोषावकाशः। यत्र विशेषणत्वोपाधित्वयोः सन्देहस्तत्रासति बाधके विशेषणत्वमेवाभ्यर्हितत्वात्। स्वानुरक्तबुद्धिजनकत्वात्। विधेयान्वयित्वाच्च। विचारस्य फलितमाह—तस्मात् सर्वत्र ज्ञाने विषय एव व्यावर्तकः, न ज्ञानस्य रूपं व्यावर्तकम्। यत्र विषयस्य विशेषणत्वं न सम्भवति, तत्र उपाधित्वमेव, किन्तु विषयस्य कदापि उपलक्षणत्वं न सम्भवति। ज्ञाने व्यावर्तकधर्मान्तरानुपस्थापकत्वात्। व्यावर्तकधर्मान्तरस्याननुभवाच्च। यत्र ज्ञानयोः परस्परव्यावृत्तिः विषयेण न सम्भवति, यथा एकविषयकयोः प्रत्यक्षपरोक्षज्ञानयोः परस्परव्यावृत्तिर्विषयतो न भवितुमर्हति विषयस्य एकत्वात् तत्र प्रत्यक्षत्वानुमितित्वादिजात्यैव परस्परव्यावृत्तिः स्वीक्रियते इति कृत्वा सर्वत्रैव विषयनिरपेक्षा ज्ञानगता जातिरेव ज्ञानव्यावर्तिका भविष्यति इति पूर्वपक्षिणा न वक्तुं शक्यते। यतः विभिन्नविषययोः स्मरणयोः, विभिन्नविषयकयोः प्रत्यक्षयोः परस्परव्यावृत्तिः जात्या न सम्भवति एकजातीयकत्वात्तयोः। अतस्तत्र विषय एव ज्ञानयोर्व्यावर्तकः, जात्या व्यावृत्तेरसम्भवात्। विभिन्नविषयके समानजातीयेऽपि ज्ञाने ज्ञानत्वावान्तरजात्यैव भेद इति पूर्वपक्षी शङ्कते—न च तत्रापि जातिरस्ति, क्षीरादिमाधुर्यवदिति वाच्यं, चक्षुषत्वादिना संकरस्य उक्तत्वात्। न च तव मते तत्तद्वृत्तेः तत्तदाकारत्वेन चैतन्यस्य तत्प्रतिबिम्बितत्वेन वा, मम तु तत्तज्ज्ञानस्य तत्तदीय

परिचायकत्वेन च तन्नैरपेक्ष्येण व्यावर्तकताया वक्तुमशक्यत्वात्, अस्माभिश्च तुच्छे जनकत्वस्यानुक्तत्वात्। विशेषणत्वोपाधित्वयोः सम्भवे च, नोपलक्षणत्वमित्युक्तम्। न च 'कथमसतः सज्जायेते' ति श्रुत्या 'नासतोऽदृष्टत्वादि'ति सूत्रेण शशविषाणादिभ्यः सदुत्पत्त्यदर्शनादित्यादि-भाष्येण च विरोधः; तेषां तुच्छे जनकत्वनिषेधपरत्वात्। अस्माभिश्च तुच्छे जनकत्वस्यानुक्तत्वात्। तस्मात् सद्विविक्तत्वं साधनमिति सिद्धम् ॥८॥

इत्यद्वैतसिद्धौ असतः साधकत्वाभावे बाधकम्।

---

स्वभावत्वेन तत्तद्व्यवहारजननशक्तत्वेन वा स्वत एव वैलक्षण्यमिति वाच्यम्, विषयस्यैवाकारसमर्पकत्वेन स्वभावव्यवहारयोः परिचायकत्वेन च तन्नैरपेक्ष्येण व्यावर्तकताया वक्तुमशक्यत्वात्। अस्माभिश्च तुच्छे जनकत्वस्यानुक्तत्वात्। विशेषणत्वोपाधित्वयोः सम्भवे, नोपलक्षणत्वमित्युक्तम्। न च कथमसतः सज्जायेतेति श्रुत्या "नासतोऽदृष्टत्वादि"ति सूत्रेण शशविषाणादिभ्यः सदुत्पत्त्यदर्शनादित्यादिभाष्येण च विरोधः, तेषां तुच्छे जनकत्वनिषेधपरत्वात्। अस्माभिश्च तुच्छे जनकत्वस्यानुक्तत्वात्, तस्मात् सद्विविक्तत्वं साधनमिति सिद्धम्।

विभिन्नविषयकयोः स्मरणयोः विभिन्नविषयकयोः प्रत्यक्षयोरपि जातिभेदस्य व्यावर्तकत्वे स्मरणत्वप्रत्यक्षत्वव्याप्यजात्यङ्गीकारे चाक्षुषत्वादिना संकरप्रसङ्गस्य उक्तत्वात्। अस्मिन्नेव प्रकरणे अथ ज्ञानगता जातिरेव प्रकर्षः न चाक्षुषत्वादिना सङ्करप्रसङ्गात् इत्यादिना इतः प्रागेव उक्तत्वात् यथा इक्षुक्षीरगुडादीनां मधुरत्वेऽपि इक्षुमाधुर्यात् क्षीरमाधुर्यस्य वैलक्षण्यात् मधुरत्वव्याप्या जातयो इक्षुमाधुर्ये गुडमाधुर्ये क्षीरमाधुर्ये च अनुभवसिद्धा वर्तन्ते एवमेव विभिन्नविषयस्मरणयोः प्रत्यक्षयोर्वा अनुभवसिद्धस्य जातिविशेषस्य सत्त्वात् तत एव स्मरणयोः प्रत्यक्षयोर्वा व्यावृत्तिः सिध्यतीति विषयमनन्तर्भाव्यैव स्मरणादीनां परस्परं व्यावृत्तिः। ननु ज्ञाने विशेषो न युक्तः घटज्ञानमित्यादिविषयविशेषनिरूपितत्वेनैव व्यवहारात् तत्र जातिविशेषसत्त्वे कदाचित् विषयसम्बन्धं विना व्यवहारः स्यात्। तेन ज्ञायते ज्ञाने

सविशेषोऽप्रामाणिकः' तत्राह—क्षीरमाधुर्यवद्युक्त इति। अयम्भावः—यथा माधुर्यादेः स्वतो 'विलक्षणत्वेऽपि क्षीरादिसम्बन्धं विना प्रकारान्तरेण प्रतिपादयितुमशक्यत्वात् क्षीरादिनैव निरूपणं तथा ज्ञानस्य सतो विलक्षणस्यापि घटादिसम्बन्धं विना प्रकारान्तरेण निरूपयितुमशक्यत्वात् घटादिना निरूपणं युक्तं तावता न अनुभवसिद्धस्य ज्ञानगतविशेषस्य अपलापः कार्यः। उक्तञ्च न्यायामृते—उक्तप्रमाणैरनुभवेन च सिद्धस्य तस्य जातिरूपस्य विशेषस्य आख्यातुमशक्यत्वादिति। 'सिद्धान्ती समाधत्ते—चाक्षुषत्वादिना सङ्करप्रसंगस्योक्तत्वादिति। ज्ञानत्वव्याप्यतादृशजातिस्वीकारे चाक्षुषत्वादिना सङ्करप्रसङ्गः स च प्रागेव व्याख्यातः। इदानीं पूर्वपक्षी ज्ञाने सविशेषः आख्यातुं शक्यते इत्याशयेन आह—न च तव मते तत्तद्वृत्तेरित्यादि। तत्तद्वृत्तेस्तत्तद्विषयाकारत्वेन, चैतन्यस्य तत्तद्वृत्तिप्रतिबिम्बितत्वेन वृत्तिरूपज्ञाने चैतन्यरूपज्ञाने वा स्वत एव वैलक्षण्यं यथा सिद्धान्तिना अङ्गीक्रियते तद्वद् पूर्वपक्षिणाऽपि ज्ञानस्य तत्तदीयस्वभावत्वेन घटपटीयस्वभावत्वादिना घटपटादिव्यवहारजनमशक्तत्वेन वा ज्ञानस्य स्वत एव वैलक्षण्यं नहि गवयाकाररेखायाः घटीयस्वभावस्य घटाभावस्य च यत्कार्यं तद्धेतुकोटौ गवयादेर्निवेशः। सिद्धान्ती समाधत्ते—वृत्तिगतविषयाकारस्य व्यावर्तकत्वेऽपि वृत्तिगताकारसमर्पकतया विषयस्य तत्तद्विषयितारूपाकारापेक्षणीयत्वेन विषयस्य व्यावर्तकत्वम् अवर्जनीयम्। ज्ञानस्वभावज्ञानव्यवहारयोरितरस्माद् व्यावर्तकत्वरूपपरिचायकतया विषयस्य अपेक्षितत्वेन विषयनैरपेक्ष्येण ज्ञानस्य व्यावर्तकतायाः वक्तुमशक्यत्वात्। तुच्छविषयकज्ञानस्य व्यवहारजनकत्वं नास्माभिरङ्गीकृतं येन तुच्छविषयस्यापि जनकत्वमापतेत्। वर्तमानविषयकज्ञाने विषयस्य विशेषणत्वमतीतादिज्ञाने विषयस्य उपाधित्वं प्रागेवोक्तम्। विशेषणत्वोपाधित्वयोरन्यतरयोः संभवे विषयस्य नोपलक्षणत्वमित्यप्युक्तम्। सिद्धान्तिना या असत्कारणता समर्थ्यते सा श्रुत्यादिविरुद्धा इत्याह पूर्वपक्षी—न च कथमसतः सज्जायेत इति। श्रुत्या असतः कारणत्वं न सिद्धम्। सूत्रेणापि असतः कारणत्वं निषिद्धमित्याह—नासतोऽदृष्टत्वात् [ब्र० सू० २।२।२६] असतः कारणत्वं न युज्यते अदृष्टत्वादिति सूत्रार्थः। असद्भ्यः शशविषाणादिभ्यः इत्यादिशाङ्करभाष्यविरुद्धञ्च असतः कारणत्वसमर्थनम्।

समाधत्ते सिद्धान्ती—उदाहृतश्रुतिसूत्रभाष्याणां तुच्छे शशविषाणादौ

जनकत्वनिषेधपरत्वात् । अस्माभिस्तु तुच्छस्य जनकत्वासमर्थनात् न कोऽपि दोषः । पूर्वपक्षिणा बाध्यत्वमेवासत्त्वं व्यावहारिकप्रातिभासिकतुच्छसाधारणं पारिभासिकमसत्त्वमङ्गीकृत्य दूषणजातं प्रदर्शितं व्यावहारिकादीनां तुच्छवैलक्षण्यं, मिथ्यात्वनिरुक्तौ द्वितीयमिथ्यात्वलक्षणे एव निरूपितम् । व्यावहारिकप्रातिभासिकयोरेव सद्विविक्तत्वरूपमसत्त्वं तच्च साधकमेव । तुच्छस्य तु सर्वप्रमाणातिपातित्वात् यथा न सत्त्वं तथा सद्विविक्तत्वमपि न अतः सद्विविक्तयोः व्यावहारिकप्रातिभासिकयोः साधकत्वं निर्बाधमिति ॥८॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्याम्
असतः साधकत्वाभावे बाधकनिरूपणविवरणम् ।

## अथ दृग्दृश्यसम्बन्धभङ्गः ।

ननु—मिथ्यात्वानुमानमप्रयोजकं सत्यत्वेऽपि दृश्यत्वोपपत्ते-रिति—चेत्, न, दृग्दृश्यसम्बन्धानुपपत्तेः । न हि ज्ञानं ज्ञेया-सम्बद्धमेव प्रकाशकम्; अतिप्रसङ्गात् । नापि सम्बद्धम् आत्मस्व-रूपस्य तद्गुणस्य वा ज्ञानस्य ज्ञेयेन संयोगसमवाययोरभावात् अन्यस्य चानाध्यासिकस्य सम्बन्धस्याभावात् ॥१॥

---

१—ननु मिथ्यात्वानुमानमप्रयोजकं सत्यत्वेऽपि दृश्यत्वोपपत्तेः इति चेत् । प्रपञ्चमिथ्यात्वसाधकदृश्यत्वादिहेतवः विपक्षवृत्तित्वबाधकतर्करहितत्वात् सध्यस्यासाधकाः । प्रपञ्चस्य मिथ्यात्वं विना यदि दृश्यत्वमनुपपन्नं स्यात् तदैव दृश्यत्वं मिथ्यात्वसाधकं भवेदित्यभिप्रेत्य पूर्वपक्षी शङ्कते ननु मिथ्यात्वानु-मानमित्यादि । दृश्यत्वहेतोर्मिथ्यात्वागमकत्वं दर्शयति सत्यत्वेऽपीति । प्रपञ्चस्य सत्यत्वेऽपि मिथ्यात्वरहितत्वेऽपि सत्यप्रपञ्चे दृश्यत्वस्य हेतोर्विद्यमानत्वात् मिथ्यात्वाभाववति हेतोर्वृत्तेर्व्यभिचारादिति सत्यत्वे दृश्यत्वमनुपपन्नमित्याह सिद्धान्ती—न दृग्दृश्यसम्बन्धानुपपत्तेः । न हि ज्ञानं ज्ञेयासम्बद्धमेव प्रकाशकमतिप्रसङ्गात् । नापि सम्बद्धमात्मरूपस्य तद्गुणस्य वा ज्ञानस्य ज्ञेयेन संयोगसमवाययोरभावात्, अन्यस्य च अनाध्यासि-कस्य सम्बन्धस्याभावात् । दृक्सम्बन्धित्वं दृग्भास्यत्वं वा दृश्यत्वं, विवेचित-ञ्चैतद् दृश्यत्वनिरुक्तौ । दृग्सम्बन्धिनो न दृश्यत्वं सम्भवति दृग्सम्बन्धिनोऽपि दृश्यत्वेऽतिप्रसंगात् । अतो दृश्यत्वसमर्थनाय दृग्दृश्यसम्बन्धोऽवश्यमेव निरूपणीयः स च निरूपयितुं न शक्यते इत्याह दृग्दृश्यसम्बन्धानुपपत्तेरि-ति । ज्ञेयेनासम्बद्धं ज्ञानं यदि ज्ञेयप्रकाशकं स्यात्तर्हि असम्बद्धत्वाविशेषात् सर्वं ज्ञेयमेकेनैव ज्ञानेन प्रकाशेत अतः ज्ञेयसम्बद्धमेव ज्ञानं ज्ञेयप्रकाशकं वाच्यं तज्ज्ञानं यदि सिद्धान्तिमते आत्मस्वरूपं स्यात् यदि वा वैशेषिकमते आत्मनो विशेषगुणरूपं स्यात् उभयथाऽपि ज्ञानेन ज्ञेयस्य संयोगसमवाययोरसम्भवात् । ज्ञानस्य आत्मस्वरूपत्वे तस्य निर्गुणत्वात् असंगत्वात् असंगत्वाच्च ज्ञेयेन संयोगा-सम्भवात् । ज्ञानस्य आत्मगुणत्वेऽपि तेन सह ज्ञेयस्य संयोगासंभवात् द्रव्य-

योरेव संयोग इति नियमात्। समवायस्य च पञ्चस्वेव स्थानेषु संभवात् आत्मना ज्ञानगुणेन वा तदसम्भवान्न समवायः सम्बन्धः सम्भवति। एवमन्योऽपि अनाध्यासिकः सम्बन्धो ज्ञानज्ञेययोर्न सम्भवतीत्याह—अन्यस्य चेति अधिष्ठानारोप्ययोः कल्पितं तादात्म्यमाध्यासिकः सम्बन्धः तदन्यः अनाध्यासिकः सम्बन्धस्तस्य। अत्र केचित् अल्पभाग्या भेदिनः सर्वश्रुतिनिःस्यन्दरूपेऽपि अद्वैतसिद्धान्ते बौद्धसिद्धान्तगन्धं जिघ्रन्तः सुगतविज्ञानवादसमानोऽयं वेदान्तवाद इति भास्करगोत्रात् भिक्षित्वा स्वयं च बौद्धच्छर्दितामसत्ख्यातिमालिहन्तः स्वकीयासामर्थ्यं सिद्धान्तिशिरसि निवेशयन्तः दुर्जनरमणीयाम् वाच जल्पन्ति। अत्र केचिन्मायिभिक्षवः—

"अन्यच्चेत् संविदो नीलं न तद्भासेत संविदि।
भासते चेत् कुतः सर्वो न भासेतैकसंविदि॥
नियामकं न सम्बन्धं पश्यामो नीलतद्धियोः।"

इत्यादिवदद्भिरात्मख्यातिवादिभिरुक्तं ग्राह्यलक्षणाभावाख्यं तर्कं भिक्षित्वाऽऽहुः। दृश्यस्य सत्यत्वे न तावज्ज्ञानं तदसम्बद्धप्रकाशकमतिप्रसङ्गाद् इत्यादि। अत्रेदं वक्तव्यम्—आत्मख्यातिमते दृश्यस्य द्वयी गतिः। विज्ञानस्थितया असत्प्रकाशनशक्त्याऽविद्यया विज्ञानमसतः प्रकाशनमथ वा सहोपलम्भनियमेन ज्ञानज्ञेययोरभेद एव सम्बन्धः। द्वितीयपक्षे आत्मख्यातिः सत्ख्यातिरेव। उक्तञ्च परिमले—तथा च अख्यात्यन्यथाख्यातिमतयोः देशान्तरस्थमधिष्ठानमात्मख्यातिमते ज्ञानं, सत्ख्यातिमते पुरोवर्तिशुक्त्यादिकम्। अस्मिन् मतचतुष्टयेऽपि सदेव रजतादिकं तत्तदधिष्ठानसमसत्ताकमिति असन्निधानविशेषेण चतुर्विधाऽप्येषा सत्ख्यातिर्वर्ण्यते इति। [परिमल पृ० १९–२० निर्णयसागर सं०]। आद्ये पक्षे बौद्धमते असत्ख्यातिरेव। सिद्धान्ते पुनः परमार्थभूते ज्ञाने दृश्यमनिर्वचनीयं कल्पितम्। अतः सत्ख्यातिविशेषात्माख्यातितोऽनिर्वचनीयख्यातेर्महद् वैलक्षण्यम्। अनिर्वचनीयख्यातिर्यथा न सत्ख्यातिर्नाप्यसत्ख्यातिस्तथा विवेचितं कल्पतरौ। भेदिनस्तु असत्ख्यातिमभ्युपगच्छन्तः बौद्धच्छर्दितावलेहिन एव। यदपि विज्ञानवादसाम्यापादनं तदपि भास्करगृहात् चौर्येणासाद्यैव। उक्तञ्च विवरणे [पृ० ४०० वि० कलिकाता सं०] यत्तु कश्चित् क्षपणकपादावनतशिरो

न च विषयविषयिभावः सः; तस्य विषयित्वविषयत्वरूपस्य एकैकमात्रनिष्ठत्वेन द्विनिष्ठसम्बन्धात्मकत्वासम्भवात्, दुर्निरूपत्वाच्च। तथा हि—[१] विषयत्वं किं ज्ञानजन्यफलाधारत्वं, [२] किं वा ज्ञानजन्य-

---

बिम्बस्तत्त्वदर्शनतन्निष्ठपरमहंसप्रदेशतीव्रवायुविक्षिप्तविवेकविज्ञानलवः स्वपरपक्षगुण-दोषविभागदूरीकृतविज्ञानो भेदाभेदाभ्यां बन्धमोक्षादिसङ्करमिव कुर्वन् दुर्जन-रमणीयाम् वाचं जल्पति सुगतविज्ञानवादसमानोऽयं वेदान्तवाद इति स सम्प्रदायश्रवणपरिचयशून्यतया दर्शनविवेकमनवबुद्ध्यमानो नापवाद्यः किन्तु शोच-नीय इत्युपेक्षणीयो विद्वद्भिरिति। तत्रैव विवरणेऽन्यदप्युक्तम्—ननु विज्ञाने प्रपञ्चस्य कल्पितत्वं तव तस्य च तुल्यम्? सत्यं, विज्ञाने प्रतिभास्यमानत्वं च तुल्यमिति विज्ञानवादस्त्वदीयं दर्शनं किं न स्यात्? सत्यपि प्रतिभास्यत्वे सत्यमिथ्याप्रविभागोऽस्तीति चेत्, इहापि सत्यपि मिथ्यात्वे अर्थक्रियासमर्थसत्त्वा-सत्त्वविभागोऽस्त्येव, कल्पितत्वेनेयं विभागसिद्धिरिति चेत्, प्रतिभास्यत्वेऽपि न सत्यमिथ्याविभागसिद्धिः। दृश्यतेऽयं विभाग इति चेत्, तदेव विभागदर्शनं मम किं न स्यात्? घटादेर्मिथ्यात्वमप्रसिद्धमिति चेत्? न, प्रतिभास्यस्य सत्यत्वस्याप्यसिद्धत्वात्। शुक्तिरजतघटयोः अर्थक्रियाभावाभावसत्त्वासत्त्व-विभागदर्शनाच्च। किञ्च, यत्किञ्चित्साम्येन च सिद्धान्तसाङ्कर्ये मन्त्रार्थवादेति-हासपुराणप्रामाण्यानभ्युपगमात् देवतास्वर्गेश्वरमोक्षानभ्युपगमात्। क्षणिकप्रमाण-सम्बन्धस्य क्षणिकस्यैव सत्त्वाभ्युपगमात् लोकायतबौद्धांशद्वयपरिणतः प्राभाकरः, भेदाभेदाभ्युपगमात् मन्त्राद्यप्रामाण्याच्च लोकायतक्षपणकांशद्वयपरिणतो वार्तिक-कारः। किञ्च, उपेक्षणीयतृणातितुल्यसत्यतां परमात्मनो वर्णयन्तः अल्पभाग्या भेदिनः शोच्या एव॥१॥

२—पूर्वपक्षी शङ्कते—न च विषयविषयिभावः सः, तस्य विषयि-त्वविषयत्वरूपस्य एकैकमात्रनिष्ठत्वेन द्विनिष्ठसम्बन्धात्मकत्वासम्भवात्,

---

१.— बौद्धा अपि स्वसिद्धान्तं श्रुतिवाक्येभ्य एव संगृह्णन्तोऽपि तमस्वितया श्रुतिरहस्यमनवेगच्छन्तः श्रुतिविरुद्धमेव प्रलपन्ति। श्रुतिमर्मविदस्तु सिद्धान्तिनः युक्त्यापि श्रुतिरहस्यं समर्थयन्तः लेशेनापि यदि तत्र बौद्धसिद्धान्तसंस्पर्शः स्यान्न तद्विस्मयस्थानं यतो द्वावेव श्रुतित एव स्वसिद्धान्तं संगृह्णीतः।

हानादिबुद्धिगोचरत्वं, [३] उत ज्ञानकर्मत्वं, [४] ज्ञानाकारार्पकत्वं वा [५] दृश्यमानत्वे सति तत्त्वं वा; [६] ज्ञानजन्यव्यवहारयोग्यत्वं वा, [७] सन्निकृष्टकरणेन यज्ज्ञानमुत्पाद्यते तत्त्वं वा, [८] यस्यां संविदि योऽर्थोऽवभासते स तस्या विषयः, तथा च संविदि भासमानत्वमिति वा, [९] सम्बन्धान्तरमन्तराज्ञानावच्छेदकत्वं वा? आद्ये, फलं न तावत् ज्ञातता, अनङ्गीकारात्, अतीतादावभावाच्च। नापि हानादिः, गगनादौ तदभावात्। कलधौतमलादेरपि तज्ज्ञानविषयत्वप्रसङ्गाच्च। नाप्यभिज्ञाभिलपने, तयोर्ज्ञेयावृत्तित्वात्। न च विषयविषयिभावेन ते तत्र स्त इति—वाच्यम्। तस्यैव विचार्यमाणत्वात्। अत एव न द्वितीयोऽपि। न तृतीयः, ईश्वरज्ञानस्यातीतादिज्ञानस्य च कर्मकारकाजन्यत्वेन निर्विषयत्वप्रसङ्गात्। न चतुर्थः, ज्ञानतदाकारयोरभेदेन सर्वेषां ज्ञानहेतूनां विषयत्वापातात्। अनुमित्यादिविषये तदभावाच्च। न पञ्चमः, दृश्यमानत्वस्य विषयत्वघटितत्वेनात्माश्रयात्। न षष्ठः; योग्यतायां योग्यतान्तराभावात्।

---

दुर्निरूपत्वाच्च। तथा हि—विषयत्वं किं [१] ज्ञानजन्यफलाधारत्वं, किं वा [२] ज्ञानजन्यहानादिबुद्धिगोचरत्वम्, [३] उत ज्ञानकर्मत्वम्, [४] ज्ञानाकारार्पकत्वं वा, [५] दृश्यमानत्वे सति तत्त्वं वा, [६] ज्ञानजन्यव्यवहारयोग्यत्वं वा, [७] यत् सन्निकृष्टकरणेन यज्ज्ञानमुत्पाद्यते तत्त्वं वा, [८] यस्यां संविदि योऽर्थोऽवभासते स तस्या विषयः, तथा च संविदि भासमानत्वमिति वा, [९] सम्बन्धान्तरमन्तरा ज्ञानावच्छेदकत्वं वा? आद्ये, फलं न तावज्ज्ञातता, अनङ्गीकारात्, अतीतादौ अभावाच्च। नापि हानादिः, गगनादौ तदभावात्। कलधौतमलादेरपि तज्ज्ञानविषयत्वप्रसंगाच्च। नापि अभिज्ञाभिलपने, तयोर्ज्ञेयावृत्तित्वात्। न च विषयविषयिभावेन ते तत्र स्त इति वाच्यम्। तस्यैव विचार्यमाणत्वात्। अत एव न द्वितीयोऽपि। न तृतीयः, ईश्वरज्ञानस्यातीतादिज्ञानस्य च कर्मकारकाजन्यत्वेन निर्विषयत्वप्रसंगात्। न चतुर्थः, ज्ञानतदाकारयोरभेदेन सर्वेषां ज्ञानहेतूनां

न च–योग्यता योग्यतां विनैव योग्या, यथा दृश्यत्वं दृश्यत्वान्तरं विनैव दृश्यमिति–वाच्यम्। अवच्छेदकरूपापरिचये योग्यताया एव ग्रहीतुमशक्यत्वात्। न च ज्ञानविषयत्वं तदवच्छेदकम्। आत्माश्रयात्। न सप्तमः, नित्येश्वरज्ञानस्य निर्विषयत्वप्रसङ्गात्। नाष्टमः, संविदीति न तावदधिकरणसप्तमी, ज्ञानस्य ज्ञेयानधिकरणत्वात्। नापि विषयसप्तमी, तस्यैव निरूप्यमाणत्वात्। संविदो विषयत्वं संवेद्यस्य च विषयित्वमिति वैपरीत्यापाताच्च। नापि सतिसप्तमी; भासमानत्वस्य विषयताघटितत्वेनात्माश्रयात्। नापि नवमः मत्समवेतं रूपज्ञानमित्यत्र रूपज्ञानसमवायस्य सम्बन्धान्तरं विनैव रूपज्ञानावच्छेदकस्य 'इदं रूप' मिति ज्ञानेऽपि विषयत्वापातात्। ननु—ज्ञानविषय इत्यभियुक्तप्रयोग एव

---

विषयत्वापातात्। अनुमित्यादिविषये तदभावाच्च। न पञ्चमः, दृश्यमानत्वस्य विषयत्वघटितत्वेन आत्माश्रयात्। न षष्ठः, योग्यतायां योग्यतान्तराभावात्। न च योग्यता योग्यतां विनैव योग्या, यथा दृश्यत्वं दृश्यत्वान्तरं विनैव दृश्यमिति वाच्यम्, अवच्छेदकरूपापरिचये योग्यताया एव ग्रहीतुमशक्यत्वात्। न च ज्ञानविषयत्वं तदवच्छेदकम्। आत्माश्रयात्। न सप्तमः, नित्येश्वरज्ञानस्य निर्विषयत्वप्रसंगात्। नाष्टमः संविदि इति न तावदधिकरणसप्तमी ज्ञानस्य ज्ञेयानधिकरणत्वात्। नापि विषयसप्तमी, तस्यैव निरूप्यमाणत्वात्। संविदो विषयत्वं संवेद्यस्य च विषयित्वमिति वैपरीत्यापाताच्च। नापि सतिसप्तमी, भासमानत्वस्य विषयताघटितत्वेनात्माश्रयात्। नापि नवमः, यत्समवेतं रूपज्ञानमित्यत्र रूपज्ञानसमवायस्य सम्बन्धान्तरं विनैव रूपज्ञानावच्छेदकस्य इदं रूपमिति ज्ञानेऽपि विषयत्वापातात्। ज्ञानविषययोः अनाध्यासिकं सम्बन्धं दर्शयितुं प्रथमतो विषयविषयिभावं सम्बन्धमाह पूर्वपक्षी न च विषयविषयिभावः स इति। विषयत्वविषयित्वरूपः अनाध्यासिकः ज्ञानविषययोः सम्बन्ध इत्यर्थः। अस्य सम्बन्धत्वमेवासिद्धमित्याह सिद्धान्ती—विषयित्वविषयत्वयोरेकैकमात्रनिष्ठयोर्द्विष्ठत्वरूपसम्बन्धत्वासम्भवात्। एकस्य संयोगस्य द्विष्ठत्वेन यथा सम्बन्धत्वं नैवं विषयित्व-

विषयत्वयोः, विषयित्वं ज्ञाने एव विषयत्वञ्च विषये एव एकैकस्य द्विष्ठत्वा-भावात् न सम्बन्धत्वमिति भावः। विषयत्वस्य दुर्निरूपत्वात् अपि नो विषयत्वं सम्बन्धः।—नवधा विकल्प्य विषयत्वस्य दुर्निरूपणीयत्वं दर्शयन्नाह—तथा हीति। ज्ञानेन जन्यं यत्फलं तत् प्रत्याधारत्वं विषयत्वं तादृशफलजनकत्वञ्च विषयित्वम्। अथ वा ज्ञानजन्यं फलं न ज्ञाता किन्तु यज्ज्ञानं यद्विषयक-हानादिबुद्धिं जनयति तत् तज्ज्ञानस्य विषयः। ज्ञानजन्यहानादिबुद्धिविषय-त्वमेव जनकज्ञानस्य विषयत्वमथ वा ज्ञानकर्मत्वं ज्ञानक्रियायाः कारकविशेषः विषयस्य ज्ञानक्रियां प्रति कर्मकारकत्वादिति भावः। अथ वा ज्ञानाकारार्पकत्वमेव विषयत्वं ज्ञाने विषयस्य स्वाकारार्पकत्वम्। ज्ञेयस्य घटादेर्यः पृथुबुध्नोदराकारः स एव ज्ञाने भासते इति स्वाकारार्पकत्ववादिनां सिद्धान्तः आकाराकारिणोरभेदात् ज्ञानार्पकत्वमेव उक्तं स्यात् तच्च ज्ञानजनकत्वं तथा च इन्द्रियादिषु ज्ञानहेतुषु विषयत्वलक्षणमतिव्याप्तं स्यादत उक्तं दृश्यमानत्वे सति तत्त्वं—ज्ञानाकारापर्कत्वं ज्ञानेन दृश्यमानत्वे सति इत्यर्थः। इन्द्रियादेः स्वजन्यज्ञानेन दृश्यमानत्वाभावान् नातिव्याप्तिरित्यर्थः। अथ वा ज्ञानजन्यव्यवहारयोग्यत्वं वा विषयत्वमिति व्यवहारः कराकर्षणादिः इच्छादिर्वा। ज्ञानजन्यकराकर्षणादीनां कर्म एव जनकज्ञानस्य विषयः। ज्ञानजन्यव्यवहारयोग्यत्वं वेति। ज्ञानजन्यव्यवहार इच्छादिः ज्ञानजन्येच्छा विषयत्वमेव ज्ञानविषयत्वमिति भावः। **यत्सन्निकृष्टकरणेनेति**। येन सन्निकृष्टं करणादियज्ज्ञानं जनयति तत् सन्निकृष्टं वस्तु तस्य ज्ञानस्य विषय इत्यर्थः। शालिकनाथोक्तं लक्षणमवतारयति यस्यां संविदीति। उक्तञ्च प्रकरण-पञ्चिकायाम्—

'अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते।
वेद्यः स एव नान्यद्धि वेद्यावेद्यस्य लक्षणम्'॥ इति।

तथा च संविदि भासमानत्वमेव विषयत्वमिति शालिकनाथमतम्। **सम्बन्धान्तरमन्तरेति**—यो यज्ज्ञानावच्छेदकः स तस्य विषय इत्येवोक्ते ज्ञातरि अतिव्याप्तिः। ज्ञानावच्छेदको हि ज्ञेयः ज्ञाता च भवति, यज्ज्ञदत्तीयं ज्ञानं

घटीयं ज्ञानमिति व्यवहारात् । अतो ज्ञातर्यतिव्याप्तिवारणाय सम्बन्धान्तरमन्तरेण इत्युक्तम् । ज्ञाता तु विषयविषयिभावातिरिक्तद्विष्ठसमवायरूपसम्बन्धान्तरेणैव ज्ञानावच्छेदको न तमन्तरेणेति तद्व्यवच्छेदः ।

नवधाविकल्पितं विषयत्वं निरस्यन्नाह सिद्धान्ती—आद्ये इति । ज्ञानजन्यफलाधारत्वं विषयत्वं न भवितुमर्हति ज्ञाततायाः ज्ञानजन्यफलत्वानङ्गीकारात् अज्ञानस्य प्रामाणिकत्वेन तन्निवृत्तेरेव ज्ञानफलत्वसम्भवेन ज्ञातता न स्वीक्रियते, न च अज्ञाननिवृत्तिरेव विषयतेति वाच्यं, प्रातीतिकेऽनुवाद्ये च विषये अज्ञाननिवृत्तेरसम्भवात् । साक्षिभास्येऽज्ञानावरणाभावात् प्राप्तस्य ज्ञातत्वेन तद्विषयकज्ञानस्य अज्ञानानिवर्तकत्वात् । अतीतादौ असम्भवाच्चेति अतीते भाविनि च ज्ञानेन ज्ञातता नोत्पादयितुं शक्यते । ज्ञाततायाः उत्पत्तेः पूर्वम् उपादानस्य विषयस्य सत्त्वाभावात् । उक्तञ्च न्यायकुसुमाञ्जलौ चतुर्थस्तवके "सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा" इति [का० २] नहि तत्र ज्ञानेन किञ्चित् क्रियते इति शक्यमवगन्तुमसत्त्वात् । यत् ज्ञानजन्यफलं प्रति आधारत्वं विषयस्य उच्यते तत्तत्रैव फलं जनयति— नान्यत्र जनयति, ज्ञानमित्यत्र किंचिन्नियामकमस्ति न वा ? यदि नास्ति तर्हि नियतकार्ययोगः द्वितीये यदि यत्किञ्चिन्नियामकं स्वभावोऽन्यद् वा समाश्रियते तर्हि तदेव विषयत्वनियामकमस्तु कृतं तदुपजीविना प्राक्तनेन । नापि हानादिरिति । गगनादीनां सर्वव्यापित्वेन हानादेरभावात् अव्याप्तिरिति । कलधौतमलादेरिति । कलधौतं रजतं रजतादिज्ञानविषयस्य रजतमलादेः । रजतेन सह उपादीयमानत्वात् । रजतज्ञानविषयत्वापातात् अभिज्ञेति—प्रत्यभिज्ञेत्यर्थः । तस्या अपि ज्ञानजन्यत्वादित्यर्थः । प्रत्यभिज्ञाव्यवहारयोः ज्ञातृनिष्ठत्वेन ज्ञेये तदाश्रयत्वाभावात् असम्भव इत्यर्थः । न च विषयविषयिभावेनेति । अभिज्ञाभिलपने ज्ञातृनिष्ठेऽपि विषयतासम्बन्धेन विषयनिष्ठे एव इति न वाच्यं विषयताया एव निरूप्यमाणत्वात् तस्या अद्याप्यसिद्धत्वात् । अत एव न द्वितीयोऽपीति । ज्ञानजन्यहानादिबुद्धिगोचरवत्त्वमिति द्वितीयकल्पोऽपि न संगतः—कुत इति चेत् ? शृणु, कण्टकादिप्रत्यक्षं कण्टकादिस्वरूपमेव प्रकाशयति ततः कण्टकान्तरेऽनिष्टसाधनत्वं ज्ञानतः पुरुषस्य तद्दृष्टान्तेन पुरोवर्तिप्रत्यक्षकण्टकेऽपि तदनुमानं भवति. तदनन्तरं हेयबुद्धिर्भवति इत्यस्ति क्रमः ।

ततश्च हानादिबुद्धीनामनिष्टसाधनतानुमितिजन्यत्वेन कण्टकादिप्रत्यक्षाजन्यत्वात् । असम्भव इत्यर्थः । गोचरत्वस्यैव निरूप्यमाणत्वात् तद्घटितविषयत्वनिरूपणं न सम्भवतीति भावः । न तृतीय इति । ज्ञानकर्मत्वमिति । तृतीयकल्पोऽपि न सङ्गतः । ईश्वरज्ञानविषये घटे ज्ञानविषये च अतीतादिघटे ज्ञानं प्रति कर्मकारकत्वं नास्तीत्यव्याप्तिः क्रियां कुर्वद्धि कारकं कर्म च कारकविशेषः, एवञ्च ईश्वरज्ञानस्य नित्यस्य कर्मजन्यत्वाभावेन विषयस्यैवाभावेऽतीतादिविषयकज्ञानस्य तदजन्यत्वात् तद्विषये ज्ञानकर्मकारकत्वाभावेनाव्याप्तिरित्यर्थः । कर्मकारकस्यैव विषयत्वे ईश्वरज्ञानस्य अतीतादिज्ञानस्य च निर्विषयत्वप्रसङ्गात् . तयोर्विषयस्य-कारकत्वाभावात् । न चतुर्थ इति । ज्ञानाकारार्पकत्वमिति चतुर्थकल्पोऽपि न संगतः । ज्ञाने साकारार्पकत्वम् । ज्ञेयस्य घटादेर्यः पृथुबुध्नोदराकारः स एव ज्ञाने भासते इति ज्ञाने विषयस्याकारार्पकत्ववादिनां बौद्धानां सिद्धान्तः । तन्मते आकाराकारिणोरभेदेन ज्ञानार्पकत्वमेवोक्तं स्यात् तच्च ज्ञानजनकत्वमेवञ्च इन्द्रियादिषु ज्ञानजनकेषु अतिव्याप्तं ज्ञानहेतूनां स्वजन्यज्ञानेविषयत्वा-पातात् । अनुमित्यादिपरोक्षज्ञाने विषयस्य स्वकारानर्पकत्वेनानुमेये विषयत्वा-भावापातात् । न पञ्चम इति । दृश्यमानत्वे सति तत्त्वं वा इति पञ्चमपक्षोऽपि न सङ्गतः । दृश्यमानत्वस्य दृग्विषयत्वरूपतया विषयत्वघटिततया आत्माश्रयात् । न षष्ठ इति । ज्ञानजन्यव्यवहारयोग्यत्वमिति षष्ठपक्षोऽपि न सङ्गतः । स्वज्ञानविषयीभूतायां योग्यतायां योग्यतान्तराभावात् । अव्याप्तिरि-त्यर्थः । शङ्कते यथा दृश्यत्वं दृश्यत्वान्तरं विनैव दृश्यं तद्वत् योग्यतापीति दृक्तादात्म्यं दृश्यत्वमनवस्थाभयात् दृक्तादात्म्ये दृक्तादात्म्यान्तरं न स्वीक्रियते, अतः स्वरूपसम्बन्धेन स्वस्मिन् स्वसत्त्वात् । यथा दृश्यत्वव्यवहारः तथा योग्य-तायां स्वरूपसम्बन्धेन स्वसत्त्वात् योग्यतायां योग्यताव्यवहार इति चेन्न खलु योग्यता विग्रहवती येन योग्यतावच्छेदकरूपापरिचयेऽपि योग्यता गृह्येत अतो योग्यताग्रहे योग्यतावच्छेदकरूपस्यापि ग्रहोऽपेक्षितः तच्च रूपं यदि ज्ञानविष-यत्वं तदाऽऽत्माश्रयः स्यात् । न सप्तम इति । यत् सन्निकृष्टकरणेन यद्ज्ञान-मुत्पद्यते तत्त्वं वा इति सप्तमपक्षोऽपि न सङ्गतः । येन सह सन्निकृष्टेन करणेन यज्ज्ञानं जन्यते सं तस्य ज्ञानस्य विषय इति सप्तमपक्षो न संगतः । नित्यस्य

ज्ञानविषययोः सम्बन्धः, यथा अभियुक्तस्य मन्त्र इति प्रयोगविषयत्व-मेव मन्त्रलक्षणम्, न चान्योन्याश्रयः पूर्वपूर्वप्रयोगमपेक्ष्योत्तरोत्तर-प्रयोगादिति चेत्।

---

ईश्वरज्ञानस्य निर्विषयत्वप्रसङ्गात्। नित्यस्य करणजन्यत्वाभावात् इति यद्विषय-सन्निकृष्टं करणं यज्ज्ञानं जनयति स तस्य ज्ञानस्य विषय इत्युक्ते ईश्वरज्ञानस्य नित्यस्य निर्विषयत्वप्रसङ्गः स्यात्। विषयसन्निकृष्टकरणेन नेश्वरज्ञानं जन्यते इत्यर्थः। नाष्टम इति। यस्यां संविदि योऽर्थोऽवभासते स तस्या विषयः। तथा च संविदि भासमानत्वं विषयत्वमिति पक्षोऽपि न सङ्गतः इत्याह संविदीति न तावदधिकरणे सप्तमी ज्ञानस्य ज्ञेयं प्रत्यनधिकरणत्वात्। नापि विषयसप्त-मीति। विषयत्वस्यैव निरुच्यमानत्वात् निर्वचनात् प्राक् विषयत्वघटितलक्षण-निरूपणासंभवात्। संविदो विषयत्वमिति सप्तम्या विषयार्थत्वात् यस्यां संविदि विषयभूतायामित्यर्थप्राप्त्या संविदो विषयत्वमापन्नमिति वैपरीत्यापाताच्च संविदीति सप्तम्या संविदो विषयत्वाभिधाने वैपरीत्यं स्यात्। नापि सति सप्तमीति यस्यां संविदि सत्यां योऽर्थो अवभासते इति कथनं न युज्यते भासमानताया एव अद्याप्यनिरूपणात् भासमानत्वस्य विषयताश्रयत्वरूपत्वेन आत्माश्रयात्। नापि नवम इति। सम्बन्धान्तरमन्तरा ज्ञानावच्छेदकत्वं वा इति नवमः पक्षोऽपि न संगतः सम्बन्धान्तरमन्तरेण ज्ञानस्य यद्विशेषणं स तद्वि-षयः।एवं निरूपणे मत्समवेतं रूपज्ञानमित्यत्र व्यभिचारात्। सम्बन्धान्तरमन्तरेणैव मत्समवायस्य रूपज्ञानस्य च विशेषणविशेष्यभावेऽपि मत्समवायरूपज्ञानयोर्विषय-विषयिभावाभावात् तत्र समवायास्यानुव्यवसायज्ञानविषयत्वेऽपि रूपज्ञानविषय-त्वात्। मत्समवेतमित्यत्र हि समवायो ज्ञानं प्रति विशेषणं न च अनयोः संयोग-समवायादिसम्बन्धान्तरमस्ति इत्यतिव्याप्तिरित्यर्थः। एतदेवोक्तं इदं रूपमिति ज्ञानेऽपि मत्समवायस्य विषयत्वापातात् तस्मात् सत्यत्वे दृश्यत्वानुपपत्तेर्दृग्दृश्य-योराध्यासिक एव सम्बन्ध इति।

दृग्दृश्ययोरनाध्यासिकसम्बन्धं निर्वक्तुं पूर्वपक्षी शङ्कते—ननु ज्ञान-विषय इत्यभियुक्तप्रयोग एव ज्ञानविषययोः सम्बन्धः यथाऽभि-युक्तस्य मन्त्रेति प्रयोगविषयत्वमेव मन्त्रलक्षणं न च अन्योन्याश्रयः

न, एतावता हि ज्ञेयत्वमात्रं सामान्यतः स्यात्, न त्वेतद्-ज्ञानविषयत्वम्। न चास्मिन् सादौ पूर्वप्रयोगमपेक्ष्य उत्तरोत्तर-प्रयोगो वक्तुं शक्यते; तस्यानादिमात्रविश्रान्तत्वात्। किञ्च प्रयोगोऽपि स्वविषये सम्बन्ध इत्यात्माश्रयोऽपि ॥२॥

---

पूर्वपूर्वप्रयोगमपेक्ष्योत्तरोत्तरप्रयोगादिति चेत् पूर्वमीमांसाया द्वितीयाध्याये प्रथमपादे मन्त्रलक्षणमेवं निरूपितम्—याज्ञिकसमाख्याया एव मन्त्रस्य निर्दोष-लक्षणत्वात् उक्तञ्चाधिकरणमालायाम्—

याज्ञिकानां समाख्याया लक्षणं दोषवर्जितम्।
तेनानुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥

इति अभियुक्तप्रयोग एव यथा मन्त्रस्य निर्दुष्टं लक्षणमेवं "ज्ञानविषय" इत्यभियुक्तप्रयोग एव ज्ञानविषयस्य लक्षणं ज्ञानविषयपदप्रयोगविषयत्वमित्यर्थः। प्रयोगापरपर्याये व्यवहारे प्रवृत्तिनिमित्तज्ञानस्य कारणत्वात् लक्षणस्यैव च प्रवृत्तिनिमित्तत्वात् मन्त्रपदप्रयोगविषयत्वरूपप्रवृत्तिनिमित्तज्ञाने मन्त्रपदप्रयोगः मन्त्रपदप्रयोगसिद्धौ च तद्घटितप्रवृत्तिनिमित्तज्ञानमित्यन्योन्याश्रयः। स च प्रकृते नास्तीत्याह पूर्वपूर्वप्रयोगेति—स्यादयमन्योन्याश्रयः यदि मन्त्र-पदप्रयोगविषयत्वरूपलक्षणान्तर्गतः प्रयोगः लक्षणसाध्यप्रयोग इव स्यात्। नचैवं किन्तु लक्षणसाध्यप्रयोगो अस्मदीयो भिन्न एव। लक्षणान्तर्गतो यः प्रयोगः स पूर्वतनानामेव विवक्षितः स च भिन्न एव। पूर्वतनानामपि यः प्रयोगः सोऽपि तत्पूर्वतनप्रयोगज्ञानेन इति व्यक्तिभेदात् न अन्योन्याश्रय इति भावः। दूषयति सिद्धान्ती—न एतावता हि ज्ञेयत्वमात्रं सामान्यतः स्यात् न त्वेतद्ज्ञानविषयत्वं न च अस्मिन् सादौ पूर्वप्रयोगमपेक्ष्य उत्तरो-त्तरप्रयोगो वक्तुं शक्यते तस्यानादिमात्रविश्रान्तत्वात्। किञ्च प्रयोगोऽपि स्वविषये सम्बन्ध इत्यात्माश्रयोऽपि। पूर्वपक्षिणा यदुक्तं तेन ज्ञेयत्वमात्रं सामान्यतो निरुक्तं स्यात् किन्तु एतज्ज्ञानविषयत्वं निर्वक्तव्यं एवं तन्न पारितम्। यच्च पूर्वपूर्वप्रयोगमपेक्ष्य उत्तरोत्तरप्रयोग इति, तत्तुच्छमेवं कथने प्रथमं सादिपदार्थे ज्ञानविषयोऽयमिति प्रयोगो न स्यात् पूर्वप्रयोगाभावात्। न च ज्ञानस्यैव पूर्वप्रयोगस्यापि पूर्वमुत्पन्नस्य इदानीमुत्पन्नविषये सम्बन्धात्-

ननु—यद् ज्ञानं यदभिलपनरूपव्यवहारकारणं स तस्य विषयः। करणपाटवाद्यभावेन व्यवहारानुदयेऽपि सहकारिविरहप्रयुक्तकार्याभाववत्त्वरूपं कारणत्वमस्त्येव। न च निर्विकल्पकविषये अव्याप्तिः, तस्याङ्गीकारात्। न च यत्तद्भ्यामननुगमो दोषः कस्य को विषय इति अननुगतस्यैव प्रश्नविषयत्वेन तस्यादोषत्वात्। न च घटज्ञानानन्तरं प्रमादाद्यत्र पट इति व्यवहारस्तत्र घटज्ञानस्य पटाभिलपनरूपव्यवहारजनकत्वेन पटविषयत्वापत्तिः, समानविषयाभिलापं प्रत्येव ज्ञानस्य जनकतया भिन्नविषयतया तत्राजनकत्वादिति—चेत्॥३॥

---

ज्ज्ञानादेवेदानीं प्रयोग इति वाच्यम्, तद्विषयव्यक्तिमात्रप्रयोगस्य पूर्वसत्त्वे मानाभावात्। अनादिमात्र एव पूर्वपूर्वप्रयोगमपेक्ष्य उत्तरोत्तरप्रयोगात् सादिविषये तदसम्भवात्। प्रयोगोऽपीति स्वजन्यप्रतिपत्तिविषये स्वस्य सम्बन्धः स च विषयत्वघटितत्वादात्माश्रयः। अत एतद् बहुदोषदुष्टं समाधानमिति ॥२॥

३—पूर्वोक्तलक्षणान्येव दूषणपरिहारेण समर्थयन्नाह पूर्वपक्षी—ननु यद्ज्ञानं यदभिलपनरूपव्यवहारकारणं स तस्य विषयः। करणपाटवाद्यभावेन। व्यवहारानुदयेऽपि सहकारिविरहप्रयुक्तकार्याभाववत्त्वरूपं कारणत्वमस्त्येव। न च निर्विकल्पकविषयेऽव्याप्तिस्तस्यानङ्गीकारात्। न च यत्तद्भ्यामननुगमो दोषः कस्य को विषयः इति अननुगतस्यैव प्रश्नविषत्वेन तस्यादोषत्वात्। न च घटज्ञानानतरं प्रमादाद् यत्र पट इति व्यवहारः तत्र घटज्ञानस्य पटाभिलपनरूपव्यवहारजनकत्वेन पटविषयकत्वापत्तिः समानविषयाभिलापं प्रत्येव ज्ञानस्य जनकतया भिन्नविषयतया तत्राजनकत्वादिति चेत्। चक्षुरादिना ज्ञानानन्तरं वागिन्द्रियपाटवाभावेनाभिलपनरूपव्यवहारः एडमूकानां न भवति इति तज्ज्ञानविषयेऽव्याप्तिरित्यत आह—करणपाटवाद्यभावेनेति। यज्ज्ञानजन्यो यस्याभिलापरूपो व्यवहारः स तस्य ज्ञानस्य विषय इत्युक्ते एडमूकानामभिलापरूपव्यवहाराभावात् एडमूकज्ञानविषये अव्याप्तिः स्यात्। अत आह—करणपाटवाद्यभावेनेति। तत्राप्येडमूकादिज्ञाने व्यवहारकारणत्वस्य फलोपधानस्याभावेऽपि व्यवहारजननयोग्यतारूपकारणत्वमस्त्येव। ननु योग्यत्वं नामतदवच्छेदकावच्छिन्नत्वं तत्र च ज्ञाने

न, अभिलपनरूपव्यवहारजननयोग्यत्वं न प्रातिस्विकरूपेण निर्णेयम्, अवच्छेदकत्वस्य फलनिर्णेयत्वात्, प्रतिस्वं च फलादर्शनात्, अजनितफले प्रातिस्विकयोग्यतायां मानाभावात्। किंतु तत्र तत्रानुगततत्तद्वृत्तिविषयत्वेन। तथा च आत्माश्रयः। अत एव ज्ञानकर्मत्वं

---

व्यवहारजननयोग्यत्वं 'नामव्यवहारजनकतावच्छेदकावच्छिन्नत्वं वाच्यम्, तद्व्यवहारजनकतावच्छेदकं तद्विषयकत्वमेव वाच्यं। तन्न वक्तुं शक्यं विषयत्वस्यैवेदानीं निरुच्यमानतया तस्याज्ञानादिति चेत्? अत्रेदं वक्तव्यं योग्यत्वं द्विविधं तदवच्छेदकावच्छिन्नत्वरूपमेकं सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वरूपमपरम्। एतदुभयमपि वनस्थदण्डेऽस्ति। प्रथमस्यायोगेऽपि एडमूकादिज्ञाने व्यवहाराभावेऽपि वाग्रूपसहकार्यभावेन सहकार्यभावप्रयुक्तकार्याभाववत्त्वापरपर्याययोग्यतारूपकारणतायाः सत्त्वान्नाव्याप्तिरित्यर्थः। तार्किकाणां मते निर्विकल्पकज्ञानस्य कदापि व्यवहारजनकत्वानङ्गीकारात् निर्विकल्पकविषयेऽव्याप्तिरित्याह—न च निर्विकल्पकविषये इति। कदापि व्यवहाराजनकं निर्विकल्पकमस्माभिर्नोपेयते इत्याह—तस्यानङ्गीकारात्। न च यत्त्वतत्त्वजात्योरभावेन यज्ज्ञानं पदभिलपनरूपव्यवहारकारणं स तस्य विषय इति लक्षणस्याननुगमो दोषः, कस्य को विषय इत्यननुगतप्रश्नेऽस्यायं विषय इति अननुगतस्यैव वक्तव्यत्वात् न लक्षणस्याननुगमो दोषः लक्ष्यस्यापि अननुगतत्वादिति भावः। ननु यत्र घटज्ञानानन्तरं प्रमादात् पट इति व्यवहारो भवति तत्र घटज्ञानं पटाभिलनरूपव्यवहारकारणम् अतो घटज्ञानस्य पटोऽपि विषयः स्यात् इत्यत आह—न च घटज्ञानान्तरं प्रमादात् यत्र पट इति व्यवहार इति घटज्ञानानन्तरं प्रमादिके पट इति व्यवहारे न घटज्ञानं हेतुरिति नातिव्याप्तिरिति भावः। समानविषयाभिलापं प्रत्येव ज्ञानस्य जनकतया भिन्नविषयज्ञानस्य व्यवहाराजनकत्वात् ॥३॥

४—समाधते सिद्धान्ती—न अभिलपनरूपव्यवहारजननयोग्यत्वं न प्रातिस्विकरूपेण निर्णेयम् अवच्छेदकत्वस्य फलनिर्णेयत्वात् प्रतिस्वं च फलादर्शनात् अजनितफले प्रातिस्विकयोग्यतायां मानाभावात् किन्तु तत्र तत्र अनुगततत्तद्वृत्तिविषयत्वेन तथा च आत्माश्रयः। ज्ञानेऽभिलपनरूपव्यवहारजननयोग्यत्वं कुतो निर्णेयम्? व्यवहारजनकतावच्छेदकरूपा-

विषयत्वं कर्मत्वं च न कारकविशेषः येनातीतादौ तदभावो भवेत् किन्तु क्रियाधीनव्यवहारयोग्यत्वरूपातिशयवत्त्वम्, अन्यथा घटं करोतीत्यादावसिद्ध घटादिनजनकं सिद्धं च न कृतिकर्मेति द्वितीया विभक्तिरनर्थिका स्यादिति निरस्तम्। व्यवहारयोग्यत्वं न व्यवहाररूपफलोपहितत्वम्, कुत्रचित् प्रतिरुद्धे व्यवहारे अव्याप्तेः।

---

परिचये योग्यताया निर्णेतुमशक्यत्वात् अवच्छेदकरूपापरिचये योग्यताया ग्रहीतुमशक्यत्वात् योग्यताया अवच्छेदकरूपञ्च तद्विषयकत्वमेव वाच्यम्, तथा च आत्माश्रयः। पूर्वपक्षिमते यज्ज्ञानं यदभिलपनव्यवहारजनकं भवति तज्ज्ञानं तद्विषयकमिति वाच्यम्, अभिलपनरूपव्यवहारात्मकफलाजनके ज्ञाने तद्विषयकत्वं निर्णेतुमशक्यम् अवच्छेदकत्वस्य फलनिर्णेयत्वात्। प्रतिज्ञानं फलादर्शनात् ज्ञाने च अजनितफले व्यवहाराजनके इत्यर्थः। योग्यताया मानाभावात्। यज्ज्ञानमभिलपनरूपव्यवहाराख्यं फलं न जनयति तत्र व्यवहारजननयोग्यता केन निर्णीयेत निर्णायकमानाभावात् योग्यता न सिद्ध्यतीति भावः। यदुक्तं सहकारिविरहप्रयुक्तकार्याभाववत्त्वं योग्यत्वमिति तदपि न सम्भवति कारणतावच्छेदकवत्त्वेन यन्निर्णीतं तस्यैव कार्याभाववत्त्वं सहकार्यभावप्रयुक्ततया ज्ञातुं शक्यते शिलादौ अङ्कुराद्यभाववत्त्वस्य जलाद्यभावप्रयुक्तत्वे नाज्ञानात् तथा च सहकार्यभावप्रयुक्तकार्याभाववत्त्वज्ञानाय कारणतावच्छेदकवत्त्वज्ञानपेक्षितं कारणतावच्छेदकवत्तया ज्ञाते च सहकार्यभावप्रयुक्तकार्याभाववत्त्वज्ञानमित्यन्योन्याश्रयः। तथा च ज्ञानस्य तद्विषयकत्वाधारणं विना तदभिलपनरूपव्यवहारजननयोग्यत्वं नावधारयितुं शक्यते ज्ञानस्य तद्विषयकत्वं ज्ञानविषयसम्बन्धसिद्धिं विना न भावितुमर्हतीति ज्ञानविषयोः सम्बन्ध एषितव्यः स च दुरवधारणः इति दृग्दृश्यसम्बन्धस्य भङ्ग एव। ज्ञानकर्मत्वमेव ज्ञानविषयत्वं पूर्वं दूषितमपि तत् समर्थनाय पूर्वपक्षिणा यदुक्तं तन्निराकरोति सिद्धान्ती "अत एव ज्ञानकर्मत्वं विषयत्वं कर्मत्वञ्च न कारकविशेषः येन अतीतादौ तदभावो भवेत् किन्तु क्रियाधीनव्यवहारयोग्यत्वरूपातिशयवत्त्वमन्यथा घटं करोतीत्यादौ असिद्धं घटादि न जनकं, सिद्धं च न कृतिकर्मेति द्वितीया विभक्तिरनर्थिका स्यादिति निरस्तम्। व्यवहारयोग्यत्वं न व्यवहाररूपफलोपहितत्वं

नापि तत्स्वरूपयोग्यत्वं विषयत्वादन्यस्य तस्यासम्भवादिति पूर्वोक्त-

---

कुत्रचित् प्रतिरुद्धव्यवहारेऽव्याप्तेः। नापि तत्स्वरूपयोग्यत्वं विषय-त्वादन्यस्य तस्यासम्भवात् इति पूर्वोक्तदोषात्। क्रियाजनकत्वाख्य-कारकविशेषः कर्मत्वं तच्चातीतविषये नित्येश्वरज्ञानविषये चाव्याप्तमत आह—कर्मत्वञ्च न कारकविशेष इति। किन्तु ज्ञानकर्मशब्देन ज्ञानाधीनव्यव-हारयोग्यत्वरूपातिशयवत्त्वं विवक्षितम्। तच्च अतीतादिविषयेऽस्त्येवेति न दोषः। करणपाटवाभावेन यत्र ज्ञाने व्यवहारो नोत्पन्नस्तद्विषयेऽव्याप्तिरित्यत उक्तं—व्यवहारयोग्यत्वरूपातिशयवत्त्वम्। नन्वत्र विषयनिष्ठं योग्यत्वं ज्ञानाधीनव्यवहार-जनकतवाच्छेदकयुक्तत्वं तच्च तद्विषयकत्वमेव वाच्यं तच्च न सम्भवति विषयत्व-स्यैवेदानीं निरुच्यमानत्वेन तस्याज्ञानादिति चेन्न। पूर्वोक्तरीत्या ज्ञानाधीनव्यवहारे सहकारिवैकल्यप्रयुक्तकार्याभावरूपयोग्यतायास्तत्राप्यनपायादिति। न हि क्रिया-जनकत्वविशेषः कर्मत्वं घटं करोतीत्यादावभावात्। घटं करोतीत्यस्य घटजनना-नुकूलकृतिमान् भवतीत्यर्थः तथा च घटकृतिकाले घटो नास्तीति तत्कर्मणि घटे-ऽव्याप्तिः। यदि कृतिरूपक्रियाजनकत्वं घटेऽस्तीति ब्रूयात् तत्र पृच्छामः किमसिद्धस्य घटस्य कृतिजनकत्वमुत सिद्धस्य? नाद्यः, असिद्धस्य जनकत्वाभावात् जनकत्वस्य पूर्ववृत्तित्वघटितत्वात्। न द्वितीयः सिद्धे इच्छाया इव कृतेरप्य-भावात् अतोऽव्याप्तेर्न कर्मत्वलक्षणं त्वदुक्तं न युक्तं किन्तु अस्मदुक्तमेव युक्तं तच्च तत्राप्यस्ति यदा तज्ज्ञानं भविष्यति तदा तदधीनव्यवहारयोग्यतारूपकर्म-त्वस्यानपायात्। अत एव इत्यस्य निरस्तमित्यनेनान्वयः। सिद्धान्ती एतत्-पूर्वपक्षिमतं निरस्यति—व्यवहारयोग्यत्वमिति। व्यवहारयोग्यत्वं व्यवहाररूप-फलोपहितत्वं व्यवहारस्वरूपयोग्यत्वं वा विवक्षितं? नाद्यः कुत्रचित् ज्ञानक्रियायां जातायां प्रतिबन्धकात् प्रतिरुद्धव्यवहारे ज्ञानात् व्यवहाररूपफलाजननेन विषयत्व-लक्षणस्याव्याप्तेः अव्यवहितपूर्वत्वसम्बन्धेन फलवत्त्वमेव कारणस्य फलोपहितत्वमव्यव-हितोत्तरक्षणे फलानुत्पादे फलोपहितत्वं तस्य न स्यात्। ज्ञानं सर्वत्र व्यावहाररूपं फलं जनयत्येवेति नियमाभावात्। स्वरूपयोग्यत्वं तु कालतावच्छेदकरूपवत्त्वं तद्वि-षयकत्वेनैव ज्ञानस्य तद्व्यवहारजनकत्वात् तद्विषयकत्वमेव ज्ञाने तद्व्यवहारजनक-तावच्छेदकं वाच्यं विषयत्वस्यैव निरुच्यमानत्वात् निर्वचनात् प्राक् विषयत्वस्या-

दोषात्। न च—अवच्छेदकात् भिन्नं सहकारिविरहप्रयुक्तकार्याभाववत्त्वं तदिति—वाच्यम्। अनुगतावच्छेदकधर्मं विना तस्यापि ग्रहीतुमशक्यत्वात्। घटं करोतीत्यत्र सिद्धस्यैव कपालादेः कृतिकर्मता व्यापारकार्यतया सिद्धस्यैव कृतिकर्मताङ्गीकारात्। अत एव निष्पादनावाचिधातुसमभिव्याहृतकर्मपदे शक्यावयवे निरूढलक्षणामाहुरसत्कार्यवादिनः। सत्कार्यवादिनां तु पूर्वसतोऽप्यभिव्यञ्जनीयतया न कारकत्वकृतिकर्मत्वयोरनुपपत्तिः।

---

ज्ञानात् जनकतावच्छेदकरूपापरिचये स्वरूपयोग्यत्वस्य वक्तुमशक्यत्वात् इति भावः। अत एवोक्तं मूले विषयत्वादन्यस्य तस्य स्वरूपयोग्यत्वस्यासम्भवात् पूर्वोक्तदोषात्। इतः प्रागेवायं दोष उक्तः। "किन्तु तत्र तत्रानुगततत्तद्वृत्तिविषयत्वेन तथा च आत्माश्रयः" इत्यत्र पूर्वपक्षिमतमाशंक्य निषेधति न च अवच्छेदकात् भिन्नं सहकारिविरहप्रयुक्तकार्याभाववत्त्वं तदिति वाच्यम्, अनुगतावच्छेदकधर्मं विना तस्यापि ग्रहीतुमशक्यत्वात्। घटं करोति इत्यत्र सिद्धस्यैव कपालादेः कृति कर्मताव्यापारकार्यतया सिद्धस्यैव कृतिकर्मताङ्गीकारात्। अत एव निष्पादनावाचि धातुसमभिव्याहृतकर्मपदे शक्यावयवे निरूढलक्षणामाहुरसत्कार्यवादिनः। सत्कार्यवादिनां तु पूर्वसतोऽप्येभिर्व्यंजनीयतया न कारकत्वकृतिकर्मत्वयोरनुपपत्तिः। कारणतावच्छेदकरूपवत्त्वं न स्वरूपयोग्यत्वं किन्तु ततोऽन्यदेव सहकारिविरहप्रयुक्तकार्याभाववत्त्वं स्वरूपयोग्यत्वं ज्ञानस्य व्यवहारस्वरूपयोग्यत्वे विवक्षिते न तद्विषयकत्वरूपकारणावच्छेदकग्रहापेक्षा यतः आत्माश्रयः स्यात् इति पूर्वपक्षिणा न वाच्यम्, अनुगतावच्छेदकधर्मं तद्विषयकत्वरूपं विना रूपज्ञानं विनेत्यर्थः। तस्यापि सहकारिविरहप्रयुक्तकार्याभाववत्त्वस्यापि ग्रहीतुमशक्यत्वात्। उक्तमेव प्राक्—कारणतावच्छेदकवत्त्वेन यन्निर्णीतं तस्यैव कार्याभाववत्त्वं सहकार्यभावप्रयुक्ततया ज्ञातुं शक्यते शिलाशकलादौ अङ्कुराद्यभाववत्त्वस्य जलाद्यभावप्रयुक्तत्वेनाज्ञानात् तथा च पूर्वोक्त एवात्माश्रयः। कारणतावच्छेदकरूपं फलोपधायकानुपधायकवृत्तिः अतस्तदनुगतं रूपमित्याह—अनुगतावच्छेदकधर्मं विनेति। कारणतावच्छेदकरूपमज्ञात्वा स्वरूपयोग्यता ग्रहीतुं न

एतेन यस्यां संविदी'त्यादिपूर्वोक्तेऽपि न दोषः। संविदीति सतिसप्तमी, भासमानत्वं च व्यवहारयोग्यत्वं, तच्च सति कारणान्तरे व्यवहारावश्यम्भाव इत्येतदपि—निरस्तम्।

---

शक्यते इत्यैव फलितोऽर्थः। पूर्वपक्षी तु कारणतावच्छेदकरूपम् अज्ञात्वैव स्वरूपयोग्यता ग्रहीतुं शक्येति वदति 'प्रदर्शितरीत्या तन्मतं निरस्तम्। यदुक्तं पूर्वपक्षिणाऽन्यथा घटं करोतीत्यादौ असिद्धं घटादि न जनकं सिद्धं च न कृतिकर्मेति तदनुभाष्य दूषयति घटं करोतीत्यत्र सिद्धस्यैव कपालादेरिति कर्मत्वं कारकविशेष एव नासिद्धस्य घटादेः कारकत्वं किन्तु सिद्धस्यैव कपालादेः कृतिकारकत्वं कृतिरूपव्यापारजनकतया सिद्धकपालादेरेव कृतिकर्मकारकताङ्गीकारात्। घटं करोतीत्यत्र घटस्यैव कर्मत्वं प्रतीयते कथं कपालस्य कर्मत्वमुच्यते इत्यत आह निष्पादनावाचीति। घटं करोति इत्यस्य असिद्धं घटं निष्पादयति इत्यर्थः। तथा च असिद्धविषयिणी कृतिर्निष्पादनैव। निष्पादनावाचिधातुः कृञ् धातुः तत्समभिव्याहृतकर्मपदे घटादिपदे इत्यर्थः। शक्यावयवे स्वशक्यसम्बन्धिविशेषे निरूढलक्षणां शक्तितुल्यामाजानिकीं लक्षणामाहुरसत्कार्यवादिनः नैयायिकवैशेषिकादयः। तथा च घटं करोतीत्यादौ घटपदं निरूढलक्षणया स्वशक्यसम्बन्धिनं कपालं लक्षयति, कपालं च घटकरणात् प्राक् सिद्धमेव, तदेव कृतेः कर्मकारकमित्यर्थः। शक्यावयवे इत्यस्य स्वशक्यसम्बन्धिनीत्यर्थः तेन रूपं करोति सुखं करोति इत्यादौ रूपादिसमवायिनि नाशं करोतीत्यादौ नाशप्रतियोग्यादौ लक्षणा लभ्यते। सत्कार्यवादिनान्त्विति। सत्कार्यवादिनां सांख्यानामभिव्यक्तेः पूर्वं सतो घटस्य कृतिकर्मकारकता अनभिव्यक्ततया पूर्वं सतोऽपि घटस्य अभिव्यञ्जनीयतया कृतिकर्मत्वं कृतिनिर्वर्त्यत्वञ्च संगच्छते इति नानुपपत्तिः। पूर्वपक्षिणः शालिकनाथीयविषयत्वलक्षणोपपादनं निरस्यन् आह सिद्धान्ती—एतेन यस्यां संविदीत्यादिपूर्वोक्तेऽपि न दोषः। संविदीति सतिसप्तमी, भासमानत्वञ्च व्यवहारयोग्यत्वं तच्च सति कारणान्तरे व्यवहारावश्यंभाव इत्येतदपि निरस्तम्। यस्यां संविदि योऽर्थोऽवभासते इत्यत्र भासमानत्वं न विषयत्वं येनात्माश्रयः स्यात्। किन्तु व्यवहारयोग्यत्वमतो नोक्तदोषः। तथाऽपि योग्यत्वं नाम व्यवहारजनकतावच्छेदकयुक्तत्वं, व्यवहारजनकतावच्छेदकञ्च तद्भि-

ननु—यः सम्बन्धान्तरमनपेक्ष्य यज्ज्ञानावच्छेदको यज्ज्ञानानवच्छिन्नस्वभावश्च स तस्य विषयः। यद्यप्यात्मा स्वविषयज्ञानसमवायवान्, तथापि न तस्य ज्ञानावच्छेदे समवायापेक्षा, ज्ञानासमवायिनोऽपि घटादेस्तदवच्छेदकत्वदर्शनात्। यद्यपि च रूपज्ञानं मत्समवेतं ध्वस्तमिष्टमित्यादौ रूपज्ञानाविषया अप्यात्मसमवायेच्छाध्वंसादयः सम्बन्धान्तरमनपेक्ष्य ज्ञानावच्छेदकाः तथापि समवेतेष्यमाणप्रतियोग्यात्मकरूपज्ञानावच्छिन्नस्वभावा एव सम्बन्धेच्छादीनां सम्बन्धीष्यमाणाद्यवच्छिन्नस्वभावत्वादिति नातिव्याप्तिः। ज्ञानविषयस्तु न ज्ञानावच्छिन्नस्वभावः;

---

पयत्वमेव वाच्यं तन्न ज्ञातुं शक्यं तस्यैवेदानीं निरुच्यमानत्वात्। अत आह तच्चेति। योग्यत्वं चेति, सति कारणान्तरे व्यवहारावश्यम्भावः, सहकारिवैकल्यप्रयुक्तकार्याभाव इति यावत्। न च योग्यत्वस्यापि विषयत्वात् तत्रापि योग्यत्वान्तरकल्पने आत्माश्रयादिकं स्यादिति वाच्यम्: यथा सिद्धान्तिमते दृश्यत्वे दृश्यत्ववदाध्यासिकसम्बन्धे आध्यासिकसम्बन्धवच्च तदेव योग्यत्वमन्यद्वा योग्यत्वमस्ति आत्माश्रयादिकं तु तद्वदेव उत्पत्त्याद्यप्रतिबन्धकत्वात् अदोष इति नाव्याप्तिः। एतेन इत्यस्य इत्येतदपि निरस्तमित्यनेनान्वयः। विषयत्वादन्यस्य तस्यासम्भवादिति पूर्वोक्तदोषात्। न च अवच्छेदकात् भिन्नं सहकारिविरहप्रयुक्तकार्याभाववत्त्वं तदिति वाच्यम्, अनुगतावच्छेदकधर्मं विना तस्यापि ग्रहीतुमशक्यत्वात् इति पूर्वोक्तयुक्त्या एतत् पूर्वपक्षिसमाधानमपि निरस्तम्। भासमानत्वमेव विषयत्वं ततोऽन्यस्य निर्वक्तुमशक्यत्वादिति भावः। तथा च पूर्वोक्त एव आत्माश्रयदोषः। पूर्वोक्तं नवमं पक्षं परिष्कुर्वन् विषयत्वनिर्वचनं शंकते—ननु यः सम्बन्धान्तरमनपेक्ष्य यज्ज्ञानावच्छेदको यज्ज्ञानानवच्छिन्नस्वभावश्च स तस्य विषयः। यद्यप्यात्मा ज्ञानसमवायवान् तथापि न तस्य ज्ञानावच्छेदे समवायापेक्षा ज्ञानासमवायिनोऽपि घटादेस्तदवच्छेदकत्वदर्शनात्। यद्यपि च रूपज्ञानं मत्समवेतं ध्वस्तमिष्टम् इत्यादौ रूपज्ञानाविषया अपि आत्मसमवायेच्छाध्वंसादयः सम्बन्धान्तरमनपेक्ष्य ज्ञानावच्छेदकाः, तथापि समवेतेष्यमाणप्रतियोग्यात्मकरूपज्ञानावच्छिन्नस्वभावा एव सम्बन्धेच्छादीनां सम्बन्धीष्यमाणाद्यवच्छिन्नस्व-

ज्ञानस्य घटाद्यवच्छिन्नस्वभावत्ववत् घटादेर्ज्ञानावच्छिन्नस्वभावत्वादर्श-
नात्। यद्यपि स्वग्राहकज्ञानविषयीभूतं ज्ञानविषयिकानुमित्यनुव्यवसा-
यादिकं ज्ञानं ज्ञानावच्छिन्नस्वभावं। तथापि स्वयं यत् ज्ञानं प्रति
विषयस्तदवच्छिन्नस्वभावं नेति नाव्याप्तिरिति—चेत्, न, मत्समवेतं

---

भावत्वादिति नातिव्याप्तिः। ज्ञानविषयस्तु न ज्ञानावच्छिन्नस्वभावः।
ज्ञानस्य घटाद्यवच्छिन्नस्वभावत्ववत् घटादेर्ज्ञानावच्छिन्नस्वभावत्वा-
दर्शनात्। यद्यपि स्वग्राहकज्ञानविषयीभूतं ज्ञानविषयिकानुमित्यनु-
व्यवसायादिकं ज्ञानं ज्ञानावच्छिन्नस्वभावं तथापि स्वयं यज्ज्ञानं प्रति
विषयस्तदवच्छिन्नस्वभावं नेति नाव्याप्तिरिति चेत्। सम्बन्धान्तर-
मिति। ज्ञातरि अतिव्याप्तिवारणाय सम्बन्धान्तरमिति सम्बन्धान्तराभावे सतीत्यर्थः।
ज्ञातरि च समवाय एवास्तीति नातिव्याप्तिः। एवञ्चेत्. अहमित्यात्मविषयके
ज्ञाने आत्मा ज्ञानावच्छेदको भवति। तत्र आत्मनि अवच्छेदके सम्बन्धान्तराभावो
नास्ति स्वज्ञानेन आत्मनः समवायसम्बन्धस्यैव सत्त्वात्। अतः स्वज्ञानविषये
आत्मनि अव्याप्तिरित्यत उक्तम् सम्बन्धान्तरमनपेक्ष्येति। सम्बन्धान्तरं तत्र
तिष्ठतु परन्तु ज्ञानावच्छेदकत्वे तदपेक्षया न भवितव्यमित्यर्थः। एवञ्च नाव्याप्तिः।
आत्मनः स्वविषयकज्ञानावच्छेदकत्वे स्वविषयत्वस्यैवापेक्षा न विद्यमानस्यापि
समवायस्य तस्य अवर्जनीयसन्निधित्वात्। यदि च ज्ञानावच्छेदकत्वे विषयत्वं
विहाय समवायस्यैवापेक्षा तर्हि घटस्य ज्ञानमित्यादौ घटस्यापि ज्ञानावच्छेदकत्वं
न स्यात् ज्ञाननिरूपितसमवायस्य घटे अभावात्। अतो विषयत्वमेव तत्रावच्छेदक-
तया अपेक्षितं न समवायः। अतः आत्मनि सम्बन्धान्तरमनपेक्ष्य स्वज्ञानावच्छेदकत्वं
वर्तते एवेति नाव्याप्तिः इत्याह—यद्यपि आत्मा स्वविषयज्ञानसमवायवानि-
त्यादि। ननु अहमित्यत्र आत्मविषयकज्ञाने आत्मनो ज्ञाननिरूपितसमवायविषयत्वयोः
सत्त्वेऽपि ज्ञानावच्छेदकत्वे विषयत्वस्यैवापेक्षा न समवायस्य इत्येतत् कुत इत्या-
शंकायामुभयोः सत्त्वेऽपि एकमवर्जनीयसन्निधीत्यत्र उदाहरणं—यथा आत्मनः
स्वानुमितिविषयत्वेऽपि न विषयत्वेन तत्र हेतुत्वं तद्वत्। यथा आत्मविषयिणी
अनुमितिर्भवति तत्रात्मा विषयो जनकश्च भवति अनुमितेर्ज्ञानरूपत्वेन तां प्रति
आत्मनः समवायिकारणत्वात् एवञ्च आत्मनोऽनुमितिनिरूपितसमवायविषयत्वयोः

सत्त्वेऽपि अनुमितिं प्रति आत्मनो जनकता समवायेनैव समवायिकारणत्वेनैव कारणतायाः क्लृप्तत्वेन विषयत्वस्य अवर्जनीयसन्निधितया अनपेक्षाया तार्किकैरुक्तत्वात्। विषयस्य परोक्षज्ञाने अकारणत्वात् एवं प्रकृतेऽपीत्यर्थः। नन्वेवं रूपज्ञानं प्रति समवायादेर्विषयत्वं स्यात् रूपज्ञानं मत्समवेतं रूपज्ञानमिष्टं रूपज्ञानं ध्वस्तमित्यादौ सम्बन्धान्तरमनपेक्ष्य समवायादीनां रूपज्ञानावच्छेदकत्वात्। अत उक्तं मूले—**यज्ज्ञानानवच्छिन्नस्वभावश्च** इति। तथा च रूपज्ञानवत्समवेतमित्यत्र रूपज्ञानावच्छेदके आत्मनिरूपितसमवाये रूपज्ञानानवच्छिन्नस्वभावत्वं नास्ति समवायस्य स्वसम्बन्धिकपदार्थत्वेन रूपज्ञानरूपसम्बन्ध्यवच्छिन्नस्वभावत्वात्। तथा रूपज्ञानमिष्टमित्यत्रापि सम्बन्धान्तरमनपेक्ष्य रूपज्ञानावच्छेदिकाया अपीच्छाया न रूपज्ञानविषयत्वं तस्याः ज्ञानावच्छिन्नस्वभावत्वात्। इच्छाया अपि सम्बन्धिकपदार्थत्वात् इष्यमाणं यद्रूपज्ञानं तदवच्छिन्नस्वभावत्वान्न तत्राप्यतिव्याप्तिः। तथा रूपज्ञानं ध्वस्तमित्यत्रापि सम्बन्धान्तरमन्तरेण रूपज्ञानावच्छेदकस्यापि ध्वंसस्य न रूपज्ञानविषयत्वं तज्ज्ञानानवच्छिन्नस्वभावत्वाभावात् ध्वंसस्याभावरूपतया स्वसम्बन्धिकपदार्थत्वेन प्रतियोगिभूतरूपज्ञानावच्छिन्नस्वभावत्वेन न तत्रापि अतिव्याप्तिः। अस्ति चैतत् पटादिज्ञाने सम्बन्धान्तरमनपेक्ष्य ज्ञानावच्छेदकस्य पटस्य ज्ञानानवच्छिन्नस्वभावत्वात्, यथा स्वसम्बन्धिकपदार्थत्वात् पटज्ञानं पटावच्छिन्नस्वभावं तथा पटो न ज्ञानावच्छिन्नस्वभावः पटस्य स्वसम्बन्धिकपदार्थत्वाभावात् इत्याह—**यद्यपि च रूपज्ञानं मत्समवेतं ध्वस्तमिष्टमित्यादौ** इति। आत्मसमवायेच्छाध्वंसादयः रूपज्ञानाविषया अपि सम्बन्धान्तरमनपेक्ष्य ज्ञानावच्छेदकाः तथा च तत्र विषयत्वलक्षणमतिव्याप्तम्। तथापि नातिव्याप्तिरित्याह—**तथापीति**। सम्बन्धेच्छाध्वंसादीनां सम्बन्धीष्यमाणाद्यवच्छिन्नस्वभावत्वात् समवेतेष्यमाणप्रतियोग्यात्मकरूपज्ञानावच्छिन्नस्वभाव एवेति नातिव्याप्तिः सम्बन्धेछादीनां ससम्बन्धिकपदार्थस्वभावत्वादेव रूपज्ञानावच्छिन्नस्वभावत्वम्। अतः न तेषां रूपज्ञानविषयत्वम्। यत उक्तं प्राक् यः सम्बन्धान्तरमनपेक्ष्य यज्ज्ञानावच्छेदको यज्ज्ञानानवच्छिन्नस्वभावश्च। सम्बन्धेच्छाध्वंसानां स्वसम्बन्धिकपदार्थतया ज्ञानावच्छिन्नस्वभावत्वं, न ज्ञानानवच्छिन्नस्वभावत्वम्। अतः सम्बन्धेच्छादौ विषयत्वलक्षणस्य नातिव्याप्तिः इत्याह मूले—**नातिव्याप्तिः**।

समवायस्य सम्बन्ध्यवच्छिन्नस्वभावत्वात्, इच्छायाः इष्यमाणावच्छिन्नस्वभावत्वात्, ध्वंसस्य प्रतियोग्यवच्छिन्नस्वभावत्वात् इति विवेकः। लक्ष्ये लक्षणं संगमयति—**ज्ञानविषयस्त्विति**। ज्ञानविषयस्तु घटादिः न ज्ञानावच्छिन्नस्वभावः। घटादेः स्वसम्बन्धिकपदार्थत्वाभावात्। ज्ञानस्य तु स्वसम्बन्धिकपदार्थत्वात् घटाद्यवच्छिन्नस्वभावत्वात् घटादेर्ज्ञानावच्छिन्नस्वभावत्वदर्शनात्। अतो घटादिसम्बन्धान्तरमनपेक्ष्य ज्ञानावच्छेदको ज्ञानानवच्छिन्नस्वभावश्च। अतो घटादेर्ज्ञानविषयत्वमक्षतम्। नन्वेवं चेत् पुनरपि विषयत्वलक्षणस्याव्याप्तिरेव। तथा हि—यत्रादौ व्यवसायो जातः, तदनन्तरं तद्विषयिणी अनुमितिर्जाता, भाट्टमते ज्ञानस्य ज्ञातताlिङ्गकानुमितिवेद्यत्वात्, अन्यथा नैयायिकरीत्या अनुव्यवसायो जातः, अनुमितिविषयकमनुव्यवसायविषयकं वा पुनर्ज्ञानान्तरं जातमेवञ्च व्यवसायविषयके मध्यस्थेऽनुमितिरूपेऽनुव्यवसायरूपे वा ज्ञाने स्वग्राहकज्ञानविषयीभूतेऽव्याप्तिः। यद्यपि सम्बन्धान्तरमनपेक्ष्यानुमितिरूपमनुव्यवसायरूपं वा ज्ञानं स्वग्राहकतृतीयज्ञानावच्छेदकं तथापि तन्न ज्ञानानवच्छिन्नस्वभावमनुमितिरनुव्यवसायस्य वा स्वसम्बन्धिकपदार्थत्वेन पूर्वव्यवसायरूपज्ञानानवच्छिन्नस्वभावत्वात् इति चेन्न, स्वयं यज्ज्ञानावच्छेदकः तदनवच्छिन्नस्वभावत्वस्य सत्त्वात्। ज्ञानग्राहकानुमितेरनुव्यवसायस्य वा स्वसम्बन्धिकपदार्थत्वेन पूर्वज्ञानावच्छिन्नस्वभावत्वेऽपि स्वयं यज्ज्ञानावच्छेदकः स्वग्राहकज्ञानावच्छेदको भवति तदवच्छिन्नस्वभावो न भवति। न हि अनुमित्यादिग्राहकं तृतीयं ज्ञानं व्यवसायज्ञानग्राहकानुमित्यनुव्यवसाये वा प्रतीयते येनानुमितेरनुव्यवसायस्य वा तदवच्छिन्नस्वभावत्वं स्यात्। ततो नाव्याप्तिरित्याह मूले **यद्यपि स्वग्राहकज्ञानविषयीभूतमिति**। स्वपदमनुमित्यनुव्यवसायरूपज्ञानपरम्। तद्ग्राहकज्ञानं तृतीयज्ञानम्। तद्विषयीभूतं ज्ञानविषयकानुमित्यनुव्यवसायादिकं ज्ञानम्। तच्च प्राथमिकव्यवसायरूपज्ञानावच्छिन्नस्वभावं यद्यपि भवति, तथापि ज्ञानविषयकानुमित्यनुव्यवसायादिकं स्वयं यज्ज्ञानं प्रति विषयः तृतीयज्ञानं प्रति विषय इत्यर्थः। तदवच्छिन्नस्वभावं न अर्थात् तृतीयज्ञानानवच्छिन्नस्वभावं मध्यवर्त्ति द्वितीयं ज्ञानमनुमित्यनुव्यवसायरूपं न तृतीयज्ञानावच्छिन्नस्वभावम्, अर्थात् तृतीयं ज्ञानं मध्यवर्तिनः द्वितीयज्ञानस्यानुमितेरनुव्यवसायस्य वा विषयो न भवति इत्यर्थः।

रूपज्ञानमित्याकारकज्ञानस्यात्मसमवायविषयकत्वाभावप्रसङ्गात् आत्मसमवायस्य सम्बन्धत्वेन सम्बन्धिभूतस्वज्ञानावच्छिन्नत्वात् घटस्य ज्ञानमिति प्रतीत्या घटावच्छिन्नस्वभावत्वं यथा ज्ञानस्य, तथा ज्ञातो घट इति प्रतीत्या घटस्यापि ज्ञानावच्छिन्नस्वभावत्वेनासम्भवाच्च ॥४॥

---

तथा च, यः सम्बन्धान्तरमनपेक्ष्य यज्ज्ञानावच्छेदको यज्ज्ञानानवच्छिन्नस्वभावश्च स तस्य विषय इति विषयत्वस्य निर्दोषं लक्षणम्। एवञ्च, अनाध्यासिकसम्बन्धरूपस्य विषयत्वस्य निर्वचनात् यदुक्तं सिद्धान्तिना "अनाध्यासिकसम्बन्धस्याभावादिति" तन्निरस्तं वेदितव्यम्। पूर्वपक्ष्युक्तं दूषयन्नाह सिद्धान्ती—न मत्समवेतं रूपज्ञानमित्याकारकज्ञानस्यात्मसवायविषयकत्वाभावप्रसंगात्, आत्मसमवायस्य सम्बन्धत्वेन सम्बन्धिभूतस्वज्ञानावच्छिन्नत्वात्, घटस्य ज्ञानमिति प्रतीत्या घटावच्छिन्नस्वभावत्वं यथा ज्ञानस्य तथा ज्ञातो घट इति प्रतीत्या घटस्यापि ज्ञानावच्छिन्नस्वभावत्वेन असंभवाच्च। मत्समवेतं रूपज्ञानमित्यादौ मत्समवायादेः सम्बन्धान्तरमनपेक्ष्य ज्ञानावच्छेदकत्वेऽपि समवायादेः स्वसम्बन्धिकतया विषयिणा ज्ञानेनापि अवच्छिन्नस्वभावत्वात् मत्समवायादेर्न रूपज्ञानविषयता इत्युक्तं पूर्वपक्षिणा, मत्समवायस्य रूपज्ञानाविषयत्वेऽपि मन्निष्ठसमवायप्रतियोगिरूपज्ञानमित्याकारकज्ञाने मन्निष्ठसमवायस्यापि विषयत्वं वर्तते तच्च पूर्वपक्षिमते न स्यात्। विषयस्य तज्ज्ञानानवच्छिन्नस्वभावत्वं पूर्वपक्षिमतेऽपेक्षितमथ च प्रकृते मत्समवायस्य सम्बन्धत्वेन सम्बन्धिभूतसमवायविषयकज्ञानावच्छिन्नस्वभावत्वात् स्वविषयकज्ञानावच्छिन्नस्वभावस्य मत्समवायस्य "मत्समवेतं रूपज्ञानमित्याकारकज्ञानस्य विषयत्वं न स्यात् मत्समवायस्य स्वज्ञानावच्छिन्नस्वभावत्वात् अनवच्छिन्नस्वभावत्वाभावात्। विषये स्वज्ञानानवच्छिन्नस्वभावत्वविवक्षणेन विषयत्वलक्षणस्य असंभवदोषोऽपीत्याह सिद्धान्ती—घटस्य ज्ञानमिति। घटस्य ज्ञानमित्यत्र यथा घटस्य ज्ञानावच्छेदकतया भानं तथा ज्ञातो घट इत्यत्र ज्ञानस्यापि घटावच्छेदकतया भानात् विषयस्य ज्ञानानवच्छिन्नस्वभावत्वाभावात् समुदितलक्षणस्य प्रागुक्तस्य असम्भव एव। विशेष्यं विशेषणभावस्य विनिगमनाविरहेण घटस्य ज्ञानमितिवत् ज्ञातो घट इत्यपि स्यात्। तथा च सर्वत्र विषयत्वलक्षणागमनात् असम्भव एव ॥४॥

अथ—यज्ज्ञानं यदीयस्वभावं स तस्य विषयः मत्समवेतं रूपज्ञान-मित्यत्र तु समवाय एव रूपज्ञानावच्छिन्नस्वभावो न तु रूपज्ञानं तदवच्छिन्नस्वभावम्। इदं च ज्ञानस्यैव विषयत्वमुक्तं नं त्विच्छादिसाधारण-मिति नाव्याप्तिरिति—चेत्; न, यदीयस्वभावमिति तद्धि तस्य यद्विषय-कत्वार्थकत्वे आत्माश्रयात्, अर्थान्तरस्य निरूपयितुमशक्यत्वात्। रूप-ज्ञानाभावाभावस्य रूपज्ञानरूपत्वेन रूपज्ञानस्याप्यभावीयतया तद्वि-षयत्वापत्तेः ॥५॥

---

५—उदयनीयंविषयत्वलक्षणं शंकते पूर्वपक्षी—अथ यज्ज्ञानं यदीयस्वभावं स तस्य विषयः मत्समवेतं रूपज्ञानमित्यत्र तु समवाय एव रूपज्ञाना-वच्छिन्नस्वभावो न तु रूपज्ञानं तदवच्छिन्नस्वभावम्। इदं च ज्ञानस्यैव विषयत्वं न तु इच्छादिसाधारणमिति नाव्याप्तिरिति चेत्। 'यदीयस्व-भावमिति—यदवच्छिन्नस्वभावमित्यर्थः। मत्समवेतं रूपज्ञानमित्यत्रापि रूपज्ञानं समवायीयस्वभावमितिरूपज्ञानं प्रति समवायो विषयः स्यात् इति चेन्न। मत्समवेतं रूपज्ञानमित्यस्य आत्मनिरूपितसमवायवद् रूपज्ञानमित्यर्थो न विवक्षितः, किन्तु रूपज्ञाननिरूपितः समवायो मय्यस्तीत्येवञ्च समवाय एव रूपज्ञानावच्छिन्न-स्वभावः न रूपज्ञानं समवायावच्छिन्नस्वभावं तत्र स्वभावावच्छेदकस्य रूपस्यैव सत्त्वेन रूपावच्छिन्नस्वभावतया समवायावच्छिन्नस्वभावत्वाभावात् अतो नातिव्याप्तिरित्याह मत्समवेतमिति। रूपज्ञानस्य रूपावच्छिन्न-स्वभावत्वेन समवायावच्छिन्नस्वभावत्वाभावात् इत्यर्थः। दृश्यत्वरूपहेत्वर्थतया प्रकृतस्य ज्ञानविषयत्वस्यैवेयं निरुक्तिः नेच्छादिविषयत्वस्यापि। यज्ज्ञानं यदभि-लपनरूपव्यवहारकारणं ज्ञानकर्मत्वं यस्यां संविदि सम्बन्धान्तरमनपेक्ष्य यज्ज्ञा-नावच्छेदकेत्यादिपूर्वोक्तानां ज्ञानघटितलक्षणानामिच्छादिविषयेऽयोगादिच्छादिविष-यत्वे ज्ञानविषयत्वलक्षणानामभावात् न ज्ञानविषयत्वलक्षणानामव्याप्तिः। इच्छा-दिविषयत्वस्य अलक्ष्यत्वात्। ज्ञानविषयस्वरूपसत्त्वस्यैव प्रकृतत्वादिति भावः।

आत्माश्रयादिदोषदुष्टत्वेन लक्षणं निरस्यन्नाह सिद्धान्ती—न, यदीयस्व-भावमिति तद्धि तस्य यद्विषयत्वार्थकत्वे आत्माश्रयात्, अर्थान्तरस्य निरूपयितुमशक्यत्वात्। रूपज्ञानाभावाभावस्य रूपज्ञानरूपत्वेन रूप-

ननु ज्ञानजनककरणसन्निकर्षाश्रयत्वं तद्विषयत्वम्। न च रूपज्ञानकरणमनस्सन्निकर्षाश्रयस्यात्मनस्तद्विषयत्वापत्तिः, करणपदेनासाधारणज्ञानकरणस्यैव विवक्षितत्वात्।

न च असाधारणज्ञानकरणचक्षुस्सन्निकर्षाश्रयस्य मनसोऽपि रूपज्ञानविषयत्वापत्तिः सन्निकर्षपदेनाप्यासाधारणज्ञानजनकसन्निकर्षस्यैवोक्तत्वादिति—चेत्। न; चक्षुर्मनस्संयोगस्यापि चाक्षुषज्ञानासाधारण-

---

ज्ञानस्यापि अभावीयतया तद्विषयत्वापत्तेः। उक्तं हि आत्मतत्त्वविवेके बाह्यार्थभङ्गवादेः [पृ०५०८]—"स च प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेषः।" विवृतं च कल्पलतायां शंकरमिश्रेण प्रकाशस्येति वदता ज्ञायतेऽनेनेति वा ज्ञानं जानातीति वा ज्ञानं ज्ञप्तिर्वा ज्ञानमित्यादि ज्ञानश्रिया ज्ञानपदे कृतं विकल्पजातं निरस्तम्। सत इत्यनेन शून्यतानिरासः। तदीयेति। घटज्ञानं पटज्ञानमित्यत्र षष्ठ्यर्थोऽनुभूयमान उपपादितः। मात्रपदेन घटज्ञानस्य पटविषयताप्रसङ्गो निरस्तः। स्वभावपदेन च उपकाराद्यधीनत्वं विषयित्वं निरस्तम्। विशेषपदेन च ज्ञानाभावज्ञानसमवाययोः स्वरूपसम्बन्धेऽपि विषयत्वं निरस्तम्। तदीयेति छप्रत्ययस्य तस्येदमित्यर्थेऽनुशासनात् विषयसम्बन्धित्वमर्थः प्रतीयते। ज्ञाने विषयसम्बन्धो हि [छ] तद्धितप्रत्ययस्यार्थः। ज्ञाने विषयसम्बन्धो हि विषयत्वं तदेव च विचारास्पदं नाद्यापि सिद्धं स्वेनैव स्वस्य निरूपणे आत्माश्रय एव। आत्माश्रयादिदोषशून्यस्य अर्थान्तरस्य विषयत्वस्य निरूपयितुमशक्यत्वात्। किञ्च यदीयस्वभावं ज्ञानं स एव यदि ज्ञानस्य विषयः तर्हि अतिप्रसङ्ग इत्याह रूपज्ञानस्यापि अभावीयतया अभावस्य रूपज्ञानविषयत्वप्रसङ्गः। तद्विषयत्वापत्तेः—अभावस्य रूपज्ञानविषयत्वापत्तेः तथा च विषयत्वस्य उदयनीयलक्षणमपि निरस्तम्।

६—प्रकारान्तरेण विषयत्वलक्षणं शङ्कते—ननु ज्ञानजनककरणसन्निकर्षाश्रयत्वं तद्विषयत्वम्। न च रूपज्ञानकरणमनःसन्निकर्षाश्रयस्य आत्मनस्तद्विषयत्वापत्तिः, करणपदेन असाधारणज्ञानकरणस्यैव विवक्षितत्वात्। न च असाधारणज्ञानकरणचक्षुःसन्निकर्षाश्रयस्य मनसोऽपि रूपज्ञानविषयत्वापत्तिः सन्निकर्षपदेनाप्यसाधारणज्ञानजनकसन्निकर्ष-

कारणत्वेन मनसोऽपि चाक्षुषज्ञानविषयत्वापत्तेः, परोक्षविषये अव्याप्तेश्च। न च—तत्र लिङ्गज्ञानं करणम् तत्र च लिङ्गिनः तद्व्याप्तत्वं सम्बन्धोऽस्तीति—वाच्यं, लिङ्गस्यापि स्वज्ञानसम्बन्धित्वेनानुमितिविषयत्वापत्तेः। न चानुमितौ तद्व्याप्ततारूपसम्बन्ध एव विषयतानियामकः, व्यापकतावच्छेदकव्यापकसम्बन्धादीनामविषयत्वापत्तेः।

---

स्यैवोक्तत्वात् इति चेत्। यत् सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषयः न चैवमाकाशसन्निकृष्टेन चक्षुरादिना शब्देन च जन्यं रूपादिज्ञानं प्रति आकाशस्य विषयत्वापत्तिः सन्निकर्षस्यापि हेतुत्वेन विवक्षितत्वात्। न च चक्षुरादिना आकाशस्य सन्निकर्षो रूपादिज्ञानहेतुः। ननु तथापि पक्षसन्निकृष्टलिङ्गजानुमितिं प्रति पक्षो विषयः स्यात्। श्रोत्रसन्निकृष्टवाक्यजशाब्दज्ञानं च प्रतिश्रोत्रं विषयः स्यात् इति चेन्न। अतीतादिलिङ्गादेर्ज्ञानेनानुमित्यादिदर्शनेन लिङ्गज्ञानवाक्यज्ञानयोरेव करणत्वात्। लिङ्गादिज्ञानस्य चात्मसन्निकर्षो नानुमित्यादिहेतुः लिङ्गादिज्ञानेन आत्मनः समवायस्य सत्त्वेऽपि लिङ्गादिज्ञानेनात्मसन्निकर्षस्यानुमित्याद्यहेतुत्वात् किन्तु तादृशसन्निकर्षस्यावर्जनीयसान्निध्यमात्रम्। ननु तथापि रूपादिज्ञानस्य आत्मा विषयः स्यात्, आत्मनिरूपितकारणीभूतसन्निकर्षवता मनसा रूपादिज्ञानस्य जायमानत्वेन रूपादिज्ञानस्यापि आत्मा विषयः स्यात्, तत्र मनसः करणत्वात् आत्ममनःसन्निकर्षस्य च रूपादिज्ञानहेतुत्वात् इति चेत्। न, असाधारणकरणत्वस्य विवक्षितत्वात् मनसश्च साधारण्यात्, तर्हि मनःसन्निकृष्टचक्षुर्जन्यं रूपज्ञानमनुविषयं स्यादिति चेन्न, सन्निकर्षस्यापि असाधारणहेतुत्वेन विवक्षितत्वात् चक्षुर्मनःसन्निकर्षस्य च द्रव्यादिज्ञानसाधारणत्वात्। चक्षुर्मनःसन्निकर्षस्य चाक्षुषज्ञानेऽसाधारणकारणत्वेन रूपज्ञानं मनोविषयं स्यादेवेति सिद्धान्ती दूषयति—न, चक्षुर्मनःसंयोगस्यापि चाक्षुषज्ञानासाधारणकारणत्वेन मनसोऽपि चाक्षुषज्ञानविषयत्वापत्तेः। परोक्षविषयेऽव्याप्तेश्च। न च तत्र लिङ्गज्ञानं करणं तत्र च लिङ्गिनः तद्व्याप्तत्वं सम्बन्धोऽस्तीति वाच्यं लिङ्गस्यापि स्वज्ञानसम्बन्धित्वेनानुमितिविषयत्वापत्तेः। न चानुमितौ तद्व्याप्ततारूपसम्बन्ध एव विषयतानियामकः व्यापकतावच्छेदकव्यापकसम्बन्धादीनामविषयत्वापत्तेः। प्रत्यक्षं प्रतीन्द्रियमनोयोगत्वेनेव चाक्षुषं प्रति चक्षुर्मनोयोगत्वेन हेतुत्वात् चक्षुर्मनोयोगस्यापि चाक्षुषज्ञाना-

न च—ज्ञानकरणसन्निकर्षसमानाधिकरणो ज्ञानावच्छेदकत्व-साक्षाद्व्याप्यधर्मो विषयत्वम्, इदं च नित्यपरोक्षसाधारणमिति—वाच्यम्। वस्तुत्वादिकमेव विषयत्वमित्यापत्तेः। ज्ञानावच्छेदकत्वस्य रूपज्ञानाविषये समवायेऽपि सत्त्वेनातिव्याप्तेश्च ॥६॥

---

साधारणकारणत्वात् इति भावः। जन्यमात्रवृत्तितया चाक्षुषत्वेन कार्यत्व-मवश्यं वाच्यं, चाक्षुषत्वस्य कार्यतावच्छेदकत्वं विना चाक्षुषत्वावच्छिन्नस्याकस्मिक-त्वापत्तेः। तत्र च कारणत्वं चक्षुष्ट्वेन संयोगत्वेन वा इत्यस्याविनिगम्यत्वात् चक्षुर्मनोयोगस्यापि चाक्षुषमात्रे हेतुत्वम्। वस्तुतो रसनादीन्द्रियसंयुक्ते मनसि चक्षुर्विषयसंयोगे सत्यपि चाक्षुपानुत्पत्तेश्चाक्षुषं प्रति चक्षुर्मनोयोगस्य हेतुत्व-मावश्यकमिति भावः। तथा च पूर्वपक्षिप्रदर्शितविपयत्वलक्षणेऽभ्युपगम्यमाने मनसोऽपि चाक्षुषज्ञानविषयत्वापत्तेः। ज्ञानजनककरणसन्निकर्षाश्रयत्वस्य विषयत्वे परोक्षज्ञानविषयेऽव्याप्तिः स्यात्, परोक्षज्ञानविषये ज्ञानजनककरणसन्निकर्षाश्रयत्वा-भावात्। सन्निकर्षजन्यप्रत्यक्षज्ञानविषयस्यैव तथात्वात् परोक्षज्ञानविषये ज्ञान-जनककरणसन्निकर्षाश्रयत्वमुपादयितुमाह पूर्वपक्षी—न च तत्र लिङ्गज्ञानं करणमि ति। अनुमितिरूपपरोक्षज्ञानविषयेऽनुमेयेऽनुमितिजनककरणसन्निकर्षाश्रयत्वं वर्तत एव लिङ्गज्ञानमनुमितेः करणं तत्र च लिङ्गिनस्तद्व्याप्तत्व लिङ्गज्ञानविषय-लिङ्गव्यापकत्वं लिङ्गिनि सम्बन्धोऽस्त्येवेति न वाच्यं, ज्ञानजनककरणसन्निकर्षस्य करणसम्बन्धमात्रविवक्षणे लिङ्गज्ञानरूपकरणस्य सम्बन्धः स्वविपये लिङ्गेऽप्य-स्तीति लिङ्गस्यापि अनुमितिविषयत्वापत्तिः स्यात्। न चानुमितौ तद्विषयतानि-यामकः लिङ्गज्ञानसन्निकर्षः न तत् सम्बन्धमात्रं किन्तु तद्व्याप्ततारूप एव सम्बन्धो-विपयतानियामकः स्वविपयलिङ्गव्यापकत्वं तद्व्याप्तत्वं स च न लिङ्गज्ञानस्य स्व-विपयेऽस्तीति वाच्यम्, अनुमितौ लिङ्गव्यापकमात्रस्यैव न विषयत्वं किन्तु व्यापक-तावच्छेदकधर्मस्य व्यापकसम्बन्धस्यापि विषयत्वात् तयोश्च लिङ्गव्यापकत्वाभावात् अनुमितिविपये निरुक्तविपयत्वलक्षणाभावात् अव्याप्तिर्लक्षणस्येति भावः। प्रकारा-न्तरेण विषयत्वलक्षणमाशंक्य निरस्यति—न च ज्ञानकरणसन्निकर्षसमानाधि-करणो ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मो विपयत्वमिदं च नित्य-परोक्षसाधारणमिति वाच्यम्। वस्तुत्वादिकमेव विषयत्वमित्यापत्तेः,

**ज्ञानावच्छेदकत्वस्य रूपज्ञानाविषये समवायेऽपि सत्त्वेनातिव्याप्तेश्च ।** यथा पाकजरूपवती पृथिवीत्यत्र वज्रादौ पाकेन रूपपरिवर्तनाभावात् पाकजरूपवत्त्वं पृथिवीप्रभेदे वज्रादौ अव्याप्तमित्याशंक्य यथा नाव्याप्तिस्तथा पृथिवीलक्षणमुक्तम्— पाकजरूपसमानाधिकरणा या द्रव्यत्वसाक्षाद्व्याप्यजातिस्तद्वती पृथिवी तत्त्वं पृथिवीत्वम् । तथा ज्ञानकरणसन्निकर्षसमानाधिकरणः ज्ञानावच्छेदकत्वसाक्षाद्व्याप्य-धर्मो विषयत्वमिति नाव्याप्तिः । ज्ञानकरणीभूतो यः सन्निकर्षः इन्द्रियार्थसन्निकर्षः तत्समानाधिकरणो यो ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यो धर्मः घटत्वादि स एव विषयत्वम् । घटज्ञाने घटस्य विषयत्वं नाम घटत्वमेव इत्युक्तं भवति । घटीयं ज्ञानमित्यादिव्यवहाराद् घटादिर्ज्ञेयतया ज्ञानावच्छेदको भवति । तथा च घटादौ ज्ञानावच्छेदकत्वमस्ति एवञ्च ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मो भवति घटत्वादिः । यत्र घटत्वं तत्र ज्ञानावच्छेदकत्वमिति नियमात् । तथा च ज्ञानकरणीभूतो यः सन्निकर्षः इन्द्रियार्थसन्निकर्षस्तस्य द्विष्ठत्वेन घटेऽपि सत्त्वात् तत्समानाधिकरणो भवति घटत्वादिः । एवञ्च न नित्येश्वरज्ञानविषये घटेऽव्याप्तिः न वा परोक्षज्ञान-विषये घटेऽव्याप्तिः । ईश्वरज्ञानविषयघटादिनिष्ठो ज्ञानावच्छेदकत्वसाक्षाद्व्याप्य-धर्मो घटत्वादिः जन्यज्ञानविषये घटे वस्तुगत्या ज्ञानकरणसन्निकर्षसमानाधि-करण इति नाव्याप्तिः एवमेव परोक्षज्ञानविषयेऽपि विषयत्वं बोध्यम् । परोक्षज्ञान-विषयघटादिनिष्ठो ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मो घटत्वादिः, प्रत्यक्षज्ञानविषये घटादौ वस्तुगत्या ज्ञानकरणसन्निकर्षसमानाधिकरणः इति परोक्षज्ञानविषये न व्याप्तिः ।

दूषयति सिद्धान्ती—**वस्तुत्वादिकमेव विषयत्वमित्यापत्तेः । ज्ञाना-वच्छेदकत्वस्य रूपज्ञानाविषये समवायेऽपि सत्त्वेनातिव्याप्तेश्च ।** ज्ञानकरणसन्निकर्षसमानाधिकरणो ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मो यदि विषयत्वं तर्हि वस्तुत्वादिकमेव लाघवात् विषयत्वमित्यापत्तेः । यत्र यत्र वस्तुत्वादिकं तत्र ज्ञानविषयत्वमिति वस्तुत्वादिकं ज्ञानविषयत्वसाक्षाद्व्याप्यं भवत्येव । ज्ञानकरण-सन्निकर्षसमानाधिकरणोऽपि वस्तुत्वादिः अतः विषयत्वं लाघवात् वस्तुत्वादिक-मित्यापत्तेः । मत्समवेतं रूपज्ञानमित्यत्रापि मत्समवायस्य रूपज्ञानाविषयस्य रूप-ज्ञानावच्छेदकत्वेन ज्ञानकरणसन्निकर्षसमानाधिकरणत्वेन च मत्समवाये रूपज्ञाना-

न च ज्ञानज्ञेययोः स्वरूपसम्बन्ध एव विषयत्वमिति—वाच्यम् असिद्धेः। तथा हि स्वरूपसम्बन्ध इत्यस्य स्वरूपं संबन्ध इत्यर्थत्वे संयोगादावतिव्याप्तिः न च तदुभयान्यत्वं विशेषणम् हिमवद्विन्ध्ययोरपि स्वरूपसम्बन्धापत्तेः। सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वं स्वरूपसम्बन्ध इति चेन्न; आत्मानं जानामीत्यत्राव्याप्तेः। तत्र सम्बन्धान्तरस्य समवायस्यैव सत्त्वात्। अतीन्द्रियाभावादावव्याप्तेश्च न हि तस्य विशिष्टप्रतीतिजननयोग्यत्वे मानमस्ति। अन्यथा तेन विशिष्टप्रत्ययजननापत्तेः। किञ्च विशिष्टप्रतीतिजननयोग्यत्वं धर्मो वा सम्बन्धः तादृशस्वरूपद्वयमेव वा, आद्ये स्वरूपस्य सम्बन्धत्वव्याघातः। प्रतीतिघटितस्यापि अचाक्षुषादिज्ञानागोचरत्वप्रसङ्गश्च। न द्वितीयः, अननुगमात्। किं चैवमभावभ्रमानुपपत्तिः, तत्रापि विशिष्टप्रतीतिसम्भवे स्वरूपसम्बन्धस्य सत्त्वात्। न च प्रमात्वघटितं तल्लक्षणं वास्तवसम्बन्धसत्त्वे प्रमात्वस्याप्यापाद्यत्वात्।

---

विषये रूपज्ञानविषयत्वलक्षणस्यातिव्याप्तिः तदवस्थैवेति न विषयत्वलक्षणं निर्वक्तुं पारितं पूर्वपक्षिणा ॥६॥

७—इदानीं ज्ञानज्ञेययोः स्वरूपसम्बन्ध एव विषयत्वमिति निरसितुमाह—

**न च ज्ञानज्ञेययोः स्वरूपसम्बन्ध एव विषयत्वमिति वाच्यम्, असिद्धेः। तथा हि स्वरूपसम्बन्ध इत्यस्य स्वरूपं सम्बन्ध इत्यर्थत्वे संयोगादावतिव्याप्तिः, न च तदुभयान्यत्वं विशेषणं हिमवद्विन्ध्ययोरपि स्वरूपसम्बन्धापत्तेः। सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वं स्वरूपसम्बन्ध इति चेन्न, आत्मानं जानामीत्यत्राव्याप्तेः। तत्र सम्बन्धान्तरस्य समवायस्यैव सत्त्वात् अतीन्द्रियाभावादौ अव्याप्तेश्च न हि तस्य विशिष्टप्रतीतिजननयोग्यत्वे प्रमाणमस्ति। अन्यथा तेन विशिष्टप्रत्ययजननापत्तेः। किञ्च विशिष्टप्रतीतिजननयोग्यत्वं धर्मो वा सम्बन्धः तादृशरूपद्वयमेव वा ? आद्ये, स्वरूपस्य सम्बन्धत्वव्याघातः। प्रतीतिघटितस्यापि चाक्षुषादिज्ञानागोचरत्वप्रसङ्गश्च। न द्वितीयः अननुगमात्। किञ्चैवमभावभ्रमानुपपत्तिः। तत्रापि विशिष्टप्रतीतिसम्भवे**

अन्यथा तत्र तस्याप्रमात्वे सम्बन्धाभावः तस्मिंश्च तस्याप्रमात्व-मित्यन्योन्याश्रयात्।

---

स्वरूपसम्बन्धस्य सत्त्वात्। न च प्रमात्वघटितं तल्लक्षणं वास्तव-सम्बन्धसत्त्वे प्रमात्वस्यापि आपाद्यत्वात्। अन्यथा तत्र तस्याप्रमात्वे सम्बन्धाभावः तस्मिंश्च तस्याप्रमात्वमिति अन्योन्याश्रयात्। ज्ञान-ज्ञेययोः स्वरूपसम्बन्ध एव विषयत्वमिति पक्षो न्यायामृते नोक्तः। किन्तु नैयायिकसम्मतोऽयं पक्षः प्रसंगान्निरसितुं तन्मतमुत्थापयति—न च ज्ञानज्ञेययोरिति। प्रकाशस्य सतः इत्याचार्यीयवाक्यविवरणावसरे आत्म-तत्त्वविवेकभावप्रकाशे शिरोमणिभट्टाचार्यैरुक्तं "त्वदीयतामात्ररूपः स्वभाव-विशेषः" त्वदीयता—तत्सम्बन्धित्वम्। स्वभावः—स्वरूपम्। तथा च ज्ञान-स्वरूपमेव ज्ञानस्यार्थेन सम्बन्धः। सम्बन्धसम्बन्धिनोश्चाभेदो न दोषाय सर्वत्र स्वरूपसम्बन्धे तथैव कल्पनात्। [आत्मतत्त्वविवेकः, पृ० ५१४] ज्ञान-ज्ञेययोः स्वरूपस्य सम्बन्धत्वमसिद्धमित्याह असिद्धेः स्वरूपस्य सम्बन्धत्वं खण्डयन्नाह—तथाहीति। स्वरूपस्य सम्बन्धत्वे सर्वस्यैव सम्बन्धत्वं स्यात् केवलं निःस्वरूपाणां शशविषाणादीनामेव सम्बन्धत्वं न स्यात् इत्याह—**संयोगादौ अतिव्याप्तिः**। संयोगसमवाययोरपि सस्वरूपयोः स्वरूपसम्बन्धत्वं स्यात्, अतः स्वरूपसम्बन्धलक्षणस्य संयोगादौ अतिव्याप्तिः। प्रदर्शितातिव्याप्तिपरिहाराय तदुभयान्यत्वं—संयोगसमवायान्यत्वं विशेषणं संयोगसमवायान्यत्वे सति स्वरूपं सम्बन्ध इति विवक्षायामतिप्रसंगमाह—**हिमवद्विन्ध्ययोरपीति** हिमवद्विन्ध्ययो-रपि सस्वरूपयोः स्वरूपसम्बन्धत्वापत्तेः हिमवद्विन्ध्यौ सम्बद्धौ इति प्रतीतेः प्रमात्वापत्तेः। स्वस्यैव स्वस्मिन् सम्बन्धत्वे हिमवति विन्ध्यस्य स्वरूपसम्बन्धेन धीरपि प्रमा स्यात्। अथ तत्र सम्बद्धप्रतीतेर्बाधात् तत्स्वरूपं न सम्बन्धः तर्हि ज्ञानेऽपि ज्ञेयस्य बाधात् प्रकृतेऽपि स्वरूपं न सम्बन्धः स्यात् तस्मात्, स्वं न स्वस्मिन्, स्वं न स्वीयमित्यबाधितानुभवबलेन स्वस्य स्वप्रतियोगिकत्वस्वानु-योगिकत्वयोर्बाधात् स्वरूपं न सम्बन्ध इति भावः। एतेन शिरोमण्युक्तमपि निरस्तं वेदितव्यम्। स्वरूपसम्बन्धस्य लक्षणान्तरमाशङ्क्य निराचष्टे—**सम्बन्धान्तरमन्त-रेणेति**। सम्बन्धान्तरं विनैव विशिष्टप्रतीतिजननयोग्यत्वं न स्वरूपसम्बन्धः आत्मान्त-

ननु सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यतावच्छेदका

---

जानामीत्यत्र ज्ञानात्मनोः समवायसम्बन्धस्य सत्त्वात् अव्याप्तिः स्यात्। आत्मविषयकज्ञानवानहमित्यत्र आत्मविशिष्टज्ञानविषयकप्रतीतौ विषयविषयिणोः समवायसम्बन्धसत्त्वात् निरुक्तस्वरूपसम्बन्धाभावात् अव्याप्तिः। किञ्च अतीन्द्रियाभावादौ अव्याप्तेश्च। सम्बन्धान्तरं विना विशिष्टप्रतीतिजननयोग्यत्वं हि स्वरूपसम्बन्धः अतीन्द्रियाभावादेर्विशिष्टप्रतीतिजननयोग्यत्वं नास्ति तत्र प्रमाणाभावात्। अतीन्द्रियाभावादेर्विशिष्टप्रतीतिजननयोग्यत्वे कदाचित् विशिष्टप्रत्ययजननापत्तेः। विशिष्टप्रतीतिजननयोग्यत्वस्य स्वरूपसम्बन्धत्वे दूषणान्तरमप्यस्ति इत्याह किञ्चेति। विशिष्टप्रतीतिजननयोग्यत्वधर्मो वा स्वरूपसम्बन्धः? तादृशस्वरूपद्वयं वा स्वरूपसम्बन्धः। आद्ये, धर्मस्य स्वरूपसम्बन्धत्वेऽभ्युपगम्यमाने स्वरूपस्य सम्बन्धत्वं न सिद्ध्यतीति व्याघातः। प्रतीतिघटितस्य स्वरूपसम्बन्धस्य चाक्षुषादिज्ञानाविषयत्वप्रसङ्गश्च प्रतीतेरचाक्षुषत्वात्। तादृशस्वरूपद्वयं स्वरूपसम्बन्धः इति द्वितीयपक्षेऽननुगमो दोषः तत्तत्स्वरूपस्य सम्बन्धत्वे स्वरूपसम्बन्धेन विशिष्टप्रत्ययस्यानियतहेतुकत्वापत्तेरिति भावः। दूषणान्तरमाह किञ्चैवमिति। अभावभ्रमानुपपत्तिः अभावभ्रमोऽपि विशिष्टप्रतीतिरेव अभावभ्रमे भासमानाभावस्य विशिष्टप्रतीतिजननयोग्यत्वात् स्वरूपसम्बन्धस्य सत्त्वात् आरोप्यस्य अभावस्य सम्बन्धसत्त्वे कथमारोपः। आरोप्यसम्बन्धशून्ये एव आरोपः स्यात्। तथा च अभावारोपाभावात् न अभावभ्रान्तिः स्यात्। न च विशिष्टप्रतीतिजननयोग्यत्वमित्यस्य विशिष्टप्रमाप्रतीतिजननयोग्यत्वं विवक्षितम् अभावस्य भ्रमप्रतीतिजननयोग्यत्वेऽपि प्रमाप्रतीतिजननयोग्यत्वाभावात् स्वरूपसम्बन्धाभावात् अभावभ्रमोपपत्तिरिति वाच्यम्। अभावभ्रमेऽपि स्वरूपसम्बन्धत्वात् अभावभ्रमस्यापि विशिष्टप्रतीतित्वात्, स्वरूपसम्बन्धसत्त्वेन प्रतीतेः प्रमात्वाच्च सम्बन्धत्वेन तत्र प्रमात्वस्यापि आपाद्यत्वात्। तथा च विमतं ज्ञानं यदि विशेष्यविशेषणसम्बन्धविषयकं स्यात् प्रमा स्यात् इत्यापत्तिसम्भवात्। अन्यथा विमतज्ञानस्य अप्रमात्वेन सम्बन्धाभावोऽनुमेयः सम्बन्धाभावसिद्धौ च ज्ञानस्याप्रमात्वमिति अन्योन्याश्रयः स्यात्। स्वरूपसम्बन्धस्य प्रतीतिघटितत्वेनाचाक्षुषत्वप्रसङ्गवारणाय निरुक्तस्वरूपसम्बन्धलक्षणं परिष्कुर्वन् पूर्वपक्षी शङ्कते। ननु सम्बन्धान्तरमन्तरेण विशिष्ट-

वच्छिन्नस्वरूपस्य सम्बन्धत्वं संयोगत्वावच्छिन्नस्य दण्डीत्यादौ सम्बन्धत्ववत्, विशिष्टबुद्धिश्चापच्छेदिका विषयिण्येवावच्छेद्यविषया, अतो न स्वरूपसम्बन्धगोचरविशिष्टबुद्धेश्चाक्षुषत्वविरोधः, न च—तर्ह्यभावप्रमाभ्रमयोः स्वरूपद्वयमात्रविषयत्वाविशेषात् प्रमाभ्रमव्यवस्थानुपपत्तिरिति—वाच्यम्, घटाभाववति घटाभावज्ञानत्वेन तद्भिन्नज्ञानत्वेन च

---

प्रतीतिजननयोग्यतावच्छेदकावच्छिन्नस्वरूपस्य सम्बन्धत्वं संयोगत्वावच्छिन्नस्य दण्डीत्यादौ सम्बन्धत्ववत्। विशिष्टबुद्धिश्च अवच्छेदकाविषयिण्येव अवच्छेद्यविषया। अतो न स्वरूपसंबन्धगोचरविशिष्टबुद्धेश्चाक्षुषत्वविरोधः। दण्डीति विशिष्टबुद्धौ विशिष्टप्रतीतिजननयोग्यतावच्छेदकसंयोगत्वावच्छिन्नसंयोगस्य सम्बन्धत्ववत्, स्वरूपसम्बन्धस्यापि संयोगसम्बन्धवत् विशिष्टप्रतीतिजननयोग्यतावच्छेदकाविषयिण्या अवच्छेद्यविषयिण्याः प्रतीतेर्विषयत्वात् स्वरूपसम्बन्धस्य न चाक्षुषत्वानुपपत्तिः प्रतीतेरवच्छेदककोटौ प्रवेशात् अवच्छेदकाविषयिणी अवच्छेद्यविषयिणी प्रतीतिः सम्भवत्येव इति भावः। सम्बन्धतावच्छेदकं यत् संयोगत्वादिकमुक्तयोग्यतावच्छेदकं वा तदविषयिणी प्रतीतिः संयोगादिस्वरूपमात्रनिष्ठसांसर्गिकविषयताका प्रतीतिः संभवत्येव। सांसर्गिकविषयतया संसर्गभाने संसर्गतावच्छेदकरूपस्य अभानात्। इदमेव सांसर्गिकविषयतया भानस्य वैलक्षण्यम्। प्रकारतया भाने यथा प्रकारतावच्छेदकस्यापि भानं नैवं सांसर्गिकविषयतया संसर्गभाने इति भावः।

पूर्वपक्षी समाधानमेव द्रढयितुं तटस्थतया शङ्कते—न च तर्हि अभावप्रमाभ्रमयोः स्वरूपद्वयमात्रविषयत्वाविशेषात् प्रमाभ्रमव्यवस्थानुपपत्तिरिति वाच्यम्। सांसर्गिकविषयतया स्वरूपमात्रस्य भानाभ्युपगमेऽभावभ्रमप्रमाव्यवस्था न स्यात् "विशेषणतया तद्वद्भावानां ग्रहो भवेदिति [६१ का०] इति नियमात् स्वरूपसम्बन्धेनैव अभावविषयिणी विशिष्टप्रतीतिः। अभावतदधिकरणस्वरूपद्वयमात्रविषयत्वात् अभावविषयकविशिष्टप्रतीतेः अभावभ्रमे प्रमायां च स्वरूपमात्रसम्बन्धविषयकत्वाविशेषात् तयोर्वैलक्षण्यं न स्यात्।

समाधत्ते पूर्वपक्षी—घटाभाववति घटाभावज्ञानत्वेन, तद्भिन्न

व्यवस्थोपपत्तेः। ननु—अतिरिक्ताविषयत्वे तस्यैवानुपपत्तिः, न हि भवद्रीत्या तस्योभयात्मकत्वेन तदुभयसत्त्वेन व्यधिकरणप्रकारकत्वरूपभ्रमत्वस्यैवाभावे भ्रमतदन्यत्वाभ्यां व्यवस्था सम्भवतीति—चेत्, न; घटाभावाभावस्य घटत्वेन तद्वति घटाभावज्ञानस्य व्यधिकरणप्रकारकत्वसम्भवात्। किञ्च भ्रमस्य वस्तुगत्या यत् घटवत् स विषयः न तु प्रमाया इत्यतिरिक्ताविषयत्वमस्त्येव। नचातीन्द्रियाभावे अव्याप्तिः, अत्यन्ताभावे प्रतियोगिदेशान्यदेशत्वं प्रागभावादौ प्रतियोगिदेशत्वे सति प्रतियोगिकालान्यकालत्वमन्योऽन्याभावे प्रतियोगितावच्छेदकदेशान्यदेशत्वं विशिष्टप्रत्ययजननयोग्यतावच्छेदकम्। तदवच्छिन्नत्वं च विशिष्टप्रतीत्यजन-

---

ज्ञानत्वेन च व्यवस्थोपपत्तेः। घटाभाववति घटाभावज्ञानं प्रमा, घटवति घटाभावज्ञानं भ्रम इति अभावभ्रमप्रमयोः वैलक्षण्यस्य सत्त्वात् भ्रमप्रमाव्यवस्थोपपत्तिरिति।

तटस्थतया पुनः शङ्कते—ननु अतिरिक्ताविषयत्वे तस्यैवानुपपत्तिः नहि भवद्रीत्या तस्य उभयात्मकत्वेन तदुभयसत्त्वेन व्यधिकरणप्रकारकत्वरूपभ्रमत्वस्यैवाभावे भ्रमतदन्यत्वाभ्यां व्यवस्था संभवतीति चेत्। सम्बन्ध्यनतिरिक्तस्वरूपसम्बन्धविषयकत्वे प्रदर्शितव्यवस्थैवानुपपन्ना—सम्बन्धिद्वयात्मकस्वरूपसम्बन्धस्य सम्बन्धिद्वयसत्त्वे स्वरूपसम्बन्धस्यापि सत्त्वात् सम्बन्धसत्त्वे च व्यधिकरणप्रकारकत्वरूपभ्रमत्वस्यैवासम्भवात्, भ्रमतदन्यत्वाभ्यां व्यवस्थाया असम्भवात्।

व्यधिकरणप्रकारकत्वमुपपादयन्नाह—न, घटाभावाभावस्य घटत्वेन तद्वति घटाभावज्ञानस्य व्यधिकरणप्रकारकत्वसम्भवात्। किञ्च भ्रमस्य वस्तुगत्या यद्घटवत् स विषयः न तु प्रमाया इत्यतिरिक्ताविषयत्वमस्त्येव। न च अतीन्द्रियाभावेऽव्याप्तिः, अत्यन्ताभावे प्रतियोगिदेशान्यदेशत्वं प्रागभावादौ प्रतियोगिदेशत्वे सति प्रतियोगिकालान्यकालत्वम् अन्योऽन्याभावे प्रतियोगितावच्छेदकदेशान्यदेशत्वं विशिष्टप्रत्ययजननयोग्यतावच्छेदकं तदवच्छिन्नत्वञ्च

केऽप्यतीन्द्रियाभावे सुलभम् नह्यरण्यस्थो दण्डो न घटजननयोग्यता-वच्छेदकावच्छिन्नो इति—चेत् ॥७॥

मैवम्; नित्यस्यतीन्द्रियस्याकाशात्यन्ताभावादेर्विशिष्टप्रतीति-

---

विशिष्टप्रतीत्यजनकेऽप्यतीन्द्रियाभावे सुलभं, नहि अरण्यस्थो दण्डो न घटजननयोग्यतावच्छेदकावच्छिन्न इति चेत्? अभावविरहात्मत्वं वस्तुनः प्रतियोगितेति रीत्या घटाभावाभावो घट एव घटवति घटाभावज्ञानं भ्रमः स च घटाभावाभाववति घटाभावज्ञानं तथा च घटाभावभ्रमस्य व्यधिकरणप्रकारकत्वं—सुलभमेव। विशेष्यावृत्तिप्रकारकत्वस्यैव व्यधिकरणप्रकारकत्वात्। घटाभावाभाववति विशेष्ये घटाभावरूपप्रकारस्य अविद्यमानत्वादिति। अभावप्रमाभ्रमयोः विषयवैलक्षण्यं दर्शयति—घटाभावभ्रमे यत् वस्तुगत्या घटवत् स विषयः—विशेष्यः। घटवद्विशेष्यकघटाभावप्रकारकज्ञानं घटाभावभ्रमः। घटाभावप्रमायाः न वस्तुगत्या घटवत् विशेष्यम्, किन्तु घटाभाववद् विशेष्यम् इति अभावभ्रमप्रमयोर्भिन्नविषयत्वमस्त्येव इति न भ्रमप्रमाव्यवस्थानुपपत्तिरिति। यच्चोक्तम् अतीन्द्रियाभावादौ अव्याप्तेश्चेति, तामव्याप्तिमुद्धरति—न च अतीन्द्रियाभाव इति। अभावविशिष्टप्रत्ययजननयोग्यतावच्छेदकम्. अत्यन्ताभावाद्भिभेदेन भिन्नं दर्शयति—अत्यन्ताभावविशिष्टप्रत्ययजननयोग्यतावच्छेदकं प्रतियोगिदेशान्यदेशत्वं प्रतियोगिदेशान्यदेश एव अत्यन्ताभावविशिष्टप्रत्ययजननयोग्यः। प्रागभावविशिष्टप्रत्ययजननयोग्यः ध्वंसविशिष्टप्रत्ययजननयोग्यश्च प्रतियोगिदेशत्वे सति प्रतियोगिकालान्यकालः। प्रतियोगिकालान्यकालीनः प्रतियोगिदेश एव प्रागभावादिविशिष्टप्रत्ययजननयोग्यः। एवम् अन्योन्याभावविशिष्टप्रत्ययजनन-योग्यः प्रतियोगितावच्छेदकदेशान्यदेशः। प्रतियोगितावच्छेदकेन सह अन्योऽन्या-भावस्य विरोधात्। तादृशदेशत्वकालत्वयोर्योग्यतावच्छेदकयोर्विशिष्टप्रत्यया-जनकेऽपि सत्त्वात् नाव्याप्तिः फलानुपधायकोऽपि. स्वरूपयोग्यस्यानपाया-दिति भावः ॥७॥

तदेव दर्शयति—नहि अरण्यस्थो दण्डो न घटजननयोग्यतावच्छे-दकावच्छिन्न इति। अरण्यस्थदण्डस्य फलानुपधायकत्वेऽपि घटकार्यं प्रति स्वरूपयोग्यत्वात्। कारणतावच्छेदकधर्मवत्त्वस्यैव स्वरूपयोग्यत्वात्। ॥७॥

जननयोग्यतावच्छेदकावच्छिन्नत्वे अवश्यं विशिष्टप्रत्ययजनकत्व-प्रसङ्गात् । नित्यस्य स्वरूपयोग्यस्य सहकारिसमवधाननियमात् । किञ्च विशिष्टस्य प्रत्यय इत्यत्र स्वरूपसम्बन्धस्य षष्ठ्यर्थत्वे आत्माश्रयः । सम्बन्धमात्रस्य तदर्थत्वे आत्मत्वादिविशिष्टात्मसम्बन्धिसमूहालम्बनविषये घटपटादावतिव्याप्तिः । तयोरपि विशिष्टसम्बन्ध्यविशिष्टविषयज्ञानजनकत्वात् । ज्ञानस्याभावः ज्ञातोऽभाव इति प्रतीत्योर्वैलक्षण्यं न स्यात्, ज्ञानाभावयोरुभयोरेवोभयत्र स्वरूपसम्बन्धत्वे विषयकृतविशेषाभावात् । अत एव—विशिष्टप्रतीतिजननयोग्यत्वं ज्ञानज्ञेयादिस्थले अतिरिक्तमेव सम्बन्ध इति—निरस्तम् । अतीन्द्रिये नित्याभावेऽव्याप्तेः । न हि तत्र विशिष्टप्रतीतिजननयोग्यता फलोपधानापत्तेः । प्रतीतिघटितस्य चाक्षुषादिप्रतीतावविषयत्वप्रसङ्गात् । तस्मात्सत्यत्वे सम्बन्धानुपपत्तेराध्यासिक एव दृग्दृश्ययोः सम्बन्ध इति ॥८॥

इत्यद्वैतसिद्धौ प्रपञ्चसत्यत्वे दृग्दृश्यसम्बन्धभङ्गः ।

---

८.—पूर्वपक्षिसमाधानं निरस्यति सिद्धान्ती—मैवं, नित्यातीन्द्रियस्य आकाशात्यन्ताभावादेर्विशिष्टप्रतीतिजननयोग्यतावच्छेदकावच्छिन्नत्वे अवश्यं विशिष्टप्रत्ययजनकत्वप्रसङ्गात् । नित्यस्य स्वरूपयोग्यस्य सहकारिसमवधाननियमात् । किञ्च विशिष्टस्य प्रत्यय इत्यत्र स्वरूपसम्बन्धस्य षष्ठ्यर्थत्वे आत्माश्रयः । सम्बन्धमात्रस्य तदर्थत्वे आत्मत्वादिविशिष्टात्मसम्बन्धिसमूहालम्बनविषये घटपटादौ अतिव्याप्तिः । तयोरपि विशिष्टसम्बन्ध्यविशिष्टविषयज्ञानजनकत्वात् । ज्ञानस्याभावः ज्ञातोऽभाव इति प्रतीत्योर्वैलक्षण्यं न स्यात् । ज्ञानाभावयोरुभयोरेव उभयत्र स्वरूपसम्बन्धत्वे विषयकृतविशेषाभावात् । अत एव विशिष्टप्रतीतिजननयोग्यत्वं ज्ञानज्ञेयादिस्थलेऽतिरिक्तमेव सम्बन्ध इति निरस्तम् । अतीन्द्रिये नित्याभावेऽव्याप्तेः । नहि तत्र विशिष्टप्रतीतिजननयोग्यता फलोपधानापत्तेः । प्रतीतिघटितस्य चाक्षुषादिप्रतीतौ अविषयत्वप्रसङ्गात् । तस्मात् सत्यत्वे सम्बन्धानुपपत्तेराध्यासिक एव दृग्दृश्ययोः सम्बन्ध इति ।

नित्यातीन्द्रियस्य आकाशात्यन्ताभावादेर्विशिष्टप्रतीतिजननयोग्यतावच्छेदका-वच्छिन्नस्वरूपत्वे अवश्यं विशिष्टप्रत्ययजनकत्वप्रसंगः। नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमात्। स्वरूपयोग्यस्य सहकारिसमवधानादेव फलम्। कदाचि-दिन्द्रियमतिक्रान्तं घटादिकं नित्यं तदतिक्रान्तं च आकाशात्यन्ताभावगुरुत्वादिकं तथा च आकाशात्यन्ताभावादेर्विशिष्टप्रतीतिजनकत्वं नास्त्येव इति भावः। नित्यं यत् स्वरूपयोग्यं तत् कदापि सहकारिसमवहितं न भविष्यतीति शपथमात्र-निर्णेयं स्यात्। अत उक्तं नित्यस्य स्वरूपयोग्यस्य सहकारिसमवधाननियमा-दिति। किञ्चैवं स्वरूपसम्बन्धनिर्वचने आत्माश्रयः—विशिष्टप्रत्ययजननयोग्यत्व-मित्यत्र विशिष्टस्य प्रत्यय इत्यत्र विशिष्टस्य विषयस्य प्रत्ययेन स्वरूपसम्बन्धस्यैवं षष्ठ्यर्थत्वे स्वसापेक्षस्वरूपसम्बन्धनिरूपणे आत्माश्रयः। यद्यत्र षष्ठ्यर्थो न स्वरूपसम्बन्धः किन्तु सम्बन्धमात्रमित्युच्यते तदा आत्मत्वादिविशिष्टात्मसम्बन्धि-समूहालम्बनज्ञानविषये घटपटादौ अतिव्याप्ति घटपटाद्योर्मिथो वैशिष्ट्यशून्ययोः स्वरूपसम्बन्धो न युक्त इति भावः। आत्मत्वादिविशिष्टविषयकज्ञानं तत्सम्बन्धि अविशिष्टज्ञानं मिथः सम्बन्धशून्ययोः घटपटाद्योः अत एव अविशिष्ट-योर्ज्ञानं तद् जनकत्वं घटपटाद्योर्विद्यते। तथा च विशिष्टसम्बन्धिप्रत्यय-जनकत्वं स्वरूपसम्बन्ध इति फलितं प्रकृते विशिष्टसम्बन्धिप्रत्यय उक्तसमूहा-लम्बनज्ञानं तज्जनकत्वं घटपटाद्योर्विद्यते तयोः मिथो वैशिष्ट्यशून्ययोः स्वरूप-सम्बन्धः स्यादिति अतिव्याप्तिः। ज्ञानस्याभावः ज्ञातोऽभाव इति प्रतीत्योर्वैलक्षण्यं न स्यात्। ज्ञानप्रतियोगिकोऽभावः ज्ञानविषयोऽभावः इत्युभयत्र ज्ञानाभावयोः स्वरूपसम्बन्धत्वे समाने उभयोर्विषयवैलक्षण्यं न स्यात् अथ च प्रतीत्योर्वैलक्षण्यात् अवश्यमेव विषयवैलक्षण्येन भवितव्यम् "अर्थेनैव विशेषो हि निराकारतया धियामिति नियमात्। अथ च पूर्वपक्षिमते तन्न स्यात्। न च ज्ञानस्याभाव इत्यत्र या ज्ञानव्यक्तिर्विषयः ज्ञातोऽभाव इत्यत्र न सा ज्ञानव्यक्तिर्विषय इति विषयकृतभेदो वर्तते इति वाच्यं, विषयतावच्छेदकरूपेण विषयस्य भेदः प्रकृते अवश्यं वाच्यः। अन्यथा स्वभावविषयकज्ञानविषययोरुक्ताकारज्ञानयोः विषय-व्यक्तिभेदस्य वक्तुमशक्यत्वात्। ज्ञानज्ञेयादिस्थले ज्ञानज्ञेयादिस्वरूपान्यो धर्म-

विशेष एव सम्बन्धः, स एव विशिष्टप्रतीतिजननयोग्यत्वम् इत्यपि अव्याप्त्या निरस्तम्। अतीन्द्रिये नित्याभावे आकाशाद्यत्यन्ताभावे इत्यर्थः। तत्र न विशिष्टप्रतीतिजननयोग्यता फलोपधानापत्तेः इति प्रागेव विवृतम्। प्रतीतिघटित-स्वरूपस्य ज्ञानज्ञेयसम्बन्धत्वे तादृशसम्बन्धस्य चाक्षुषादिप्रतीतौ अविषयत्व-प्रसंगाच्च। एतदपि प्रागेवोक्तम्। तस्माद् विषयस्य सत्यत्वे ज्ञानज्ञेययोरना-ध्यासिकसम्बन्धाभावात् विषयस्य मिथ्यात्वेनैव आध्यासिकः दृग्दृश्ययोः सम्बन्धः सिध्यतीति भावः। ज्ञानज्ञेययोः स्वरूपमेव सम्बन्ध इति न्यायमतम् अन्यत्रापि आचार्येण खण्डितं तदत्र लिख्यते—"प्रपञ्चस्यापि ज्ञानेन सह सम्बन्धानिरूपणात् प्रपञ्चसिद्ध्यनुपपत्तेः स्वरूपमेव सम्बन्ध इति चेन्न, तस्य घटज्ञानपटयोरपि सत्त्वात्। स्वरूपविशेष इति चेन्न, तदनिर्वचनात्। सम्बन्धान्तर-मन्तरेण विशिष्टप्रत्ययजननयोग्यत्वमिति चेत्, न, योग्यतावच्छेदकरूपापरिचये योग्यत्वस्यैव, दुर्निरूप्यत्वात्। तद् यदि घटत्वादिकं ज्ञानत्वं तदा अतिप्रसक्तं, यतः पटज्ञानस्यापि ज्ञानत्वं वर्तते घटस्य च घटत्वम्। तयोरपि स्वरूपसम्बापत्तिः [सम्बन्धापत्तिः]। नापि घटज्ञानत्वादिकं ज्ञानस्य घटीयत्वस्यैव विचार्यमाणत्वात्। तथा च अन्योन्याश्रयः। तत्तत् स्वरूपमेव तथा इति चेन्न, विशिष्टप्रत्ययस्य अनियतहेतुकत्वापत्तेः। किञ्च प्रत्ययशब्देन ज्ञानमात्रं वा प्रमा वा विवक्षितम्, नाद्यः, भ्रमजनकत्वस्य सर्वत्र सम्भवेन अतिप्रसङ्गापत्तेः। न द्वितीयः, अन्योन्या-श्रयापत्तेः। तथा हि यत्र यदस्ति तत्र तस्यानुभवः प्रमा तथा च अस्तीति यदि विद्यमानता तदा पाकरक्ते श्यामोऽयम् इति धीः प्रमा न स्यात्। इदानीं तत्र तस्याविद्यमानत्वात्। स एवायमिति तत्तांशे अप्रामाण्यापत्तेः। तस्मादस्तीति वृत्तिमात्रं वक्तव्यम्। वृत्तिश्च सम्बन्धः स च संयोगः समवायः स्वरूपलक्षणो वा तथा च अन्योन्याश्रयः। अथ सम्बन्धमात्रं तत्र ज्ञायते न तु विशेष इति चेत्, तदपि अविशिष्टप्रत्ययव्यावृत्तविशिष्टधीनियामकत्वमेव, तथा च धीपदेन ज्ञानमात्र-विवक्षायाम् अतिप्रसक्तिः, प्रमाविवक्षायाम् आत्माश्रयादिः। विशिष्टशब्दस्य सम्बन्धघटितत्वेन आत्माश्रयादिः नियामकत्वं यदि जनकत्वं तदा सम्बन्धेषु अननु-गतेषु तदशक्यग्रहणम्, अनुगतस्य तु विचार्यमाणत्वमेव। किञ्च अतीतानागत-

विषयस्थले विशिष्टप्रत्ययं प्रति अजनकत्वात् तद्योग्यत्वस्य तत्र वक्तुमशक्यत्वात् अव्याप्तिः। असदेव तज्जनकमिति चेत्, यागस्यापि तथैव जनकत्वोपपत्तौ अदृष्ट-कल्पनानुपपत्तिप्रसङ्गात्। दण्डादेरप्यसत एव जनकत्वोपपत्तौ जितमसद्वादिना। अथ तत्र ज्ञानमेव विशिष्टप्रत्ययजनकम् इति चेन्न। तस्य केवलस्य असम्बन्धत्वात्। द्वयं हि सम्बन्धः अन्यां तत्र एकमपि सम्बन्ध इति चेत्, तर्हि अगत्या सम्बन्धाभावेऽपि सम्बद्धबुद्धिरस्तु। तथा सति बुद्धिर्भ्रान्ता स्यादिति चेन्न, इष्टापत्तेः। किञ्च यद्येकमपि सम्बन्धः स्यात् घटस्यापि कथं घटः सम्बन्धो न भवति? तथा प्रतीत्यभावादिति चेत्? यदि वस्त्वस्ति प्रतीतिरपि स्यादेव। अथ ज्ञानमतीतविषयेण सह स्वस्य सम्बन्धः न तु स्वस्य स्वयं सम्बन्ध इति चेत्? तर्हि अतीतस्य असत्त्वादेव तेन सहेत्यनुपपत्तेः। किञ्च घटीयं ज्ञानम् इति या विशिष्ट-बुद्धिर्जायते तां प्रति घटो न जनकः किं तर्हि ज्ञानमात्रम् अनुव्यवसायस्य ज्ञानातिरिक्तविषयाजन्यत्वात्। तदुक्तं मणिकृता—अनुव्यवसायस्यानुमितेर्वा विषया-जन्यत्वात् इति। किञ्च स्वरूपद्वयस्य सम्बन्धत्वे घटीयं ज्ञानमिति न स्यात्, घटीयत्वं हि घटसम्बन्धाधारत्वं ज्ञानमपि घटसम्बन्धमध्ये प्रविष्टं तथा च स्वस्मिन् स्ववृत्तिर्न सम्भवतीति। किञ्च परकीयं ज्ञानं ज्ञानत्वेन गृहीतं घटोऽपि घटत्वेन गृहीतः तथापि संशयो भवति परो घटो [वा] जानाति न वेति परज्ञानस्य घटो विषयो नवेति [वा] सोऽयं न स्यात् ज्ञानघटस्वरूपद्वयस्य सम्बन्धत्वात् तस्य च निश्चितत्वात्। स्वरूपविशेषो न गृहीत इति चेत्, नूनं शिष्यधन्धकोऽसि यतो अतिरिक्तं न स्वीकरोषि तद्द्वयं च गृहीत्वा अगृहीतं वदसि। विशेषणताविशेषो न गृहीत इति चेत्, सोऽपि अतिरिक्तानतिरिक्तविकल्पेन खण्डनीयः। अथ विषयविषयिभावः ज्ञानार्थयोः सम्बन्ध इति चेन्न, तस्य अतिरिक्तत्वे कृतान्तविरोधः अनतिरिक्तत्वे च उक्त एव दोषः, संयोगसमवायौ असम्भावितावेव। ज्ञानस्य गुणत्वाभ्युपगमात्। आत्मनि समवायाभ्युपगमाच्च। न हि ज्ञानघटयोः ज्ञाततालक्षण-सम्बन्धः तत्सत्त्वे प्रमाणाभावात्। अतीतानागतयोः तदसम्भवाच्च। ज्ञाततायाः सम्बन्धान्तराभ्युपगमे अनवस्थानात्, तदभावे च तयोरेव ज्ञातता न स्यात्। स्वरूपसम्बन्धस्य च निराकृतत्वात्। नापि ज्ञानार्थयोस्तादात्म्यसम्बन्धः

विरुद्धधर्मयोस्तादात्म्यानुपपत्तेः, प्रकाशतमसोरिव । नापि ज्ञानविष्ठाकारार्पकत्वं विषयत्वं तद्वत्त्वं च विषयित्वम् अर्थस्य आकारार्पकत्वे प्रमाणाभावात् । सम्बन्धं विना तदसम्भवाच्च । तस्मात् ज्ञानार्थयोः सम्बन्धाभावेन ज्ञानस्य तत्सिद्धिरूपत्वानुपपत्तेः । सेयं जगत्कवलनयुक्तिः । [अ० र० र०, पृ० २२-२३] ॥८॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासि-
श्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां
बालबोधिन्यां दृग्दृश्यसम्बन्धभङ्गविवरणम् ।

## अथानुकूलतर्कनिरूपणम् ।

स्यादेतत्—सर्वस्यापि दृश्यस्य ब्रह्मात्मकदृगध्यस्तत्वेऽपि कस्यचित् कदाचित् कञ्चित् प्रति प्रकाशाय त्वयाऽपि तत्तत्सन्निकृष्टेन्द्रियजन्यतत्तदाकारवृत्तिद्वारक एवानावृतदृक्दृश्यसम्बन्धः स्वीकृतः, तथा च सत्यत्वेऽपि तद्वारक एव सम्बन्धोऽस्तु किमाध्यासिकसम्बन्धदुर्व्यसनेन, नहि भवतां विज्ञानवादिनामिव तत्तज्ज्ञाने तत्तदर्थाध्यासस्वीकारः शुद्धदृशः स्वतो भेदाभावात् । उपाधिविशिष्टाया भेदेऽपि घटादिवत्तस्या अपि मिथ्यात्वेनाधिष्ठानत्वायोगादिति चेत् ॥१॥

---

१—प्रपञ्चमिथ्यात्वसाधनायां दृश्यत्वादयो हेतव उपन्यस्तास्ते च हेतवः प्रपञ्चस्य सत्यत्वे अनुपपन्नाः । प्रपञ्चस्य मिथ्यात्वं साधयन्तीति हेतूच्छित्तिरेव विपक्षबाधकस्तर्क इति प्रतिपादयितुं हेतूनाम् अनुग्राहकास्तर्काः प्रदर्श्यन्ते—

**स्यादेतत् सर्वस्यापि दृश्यस्य ब्रह्मात्मकदृगध्यस्तत्वेऽपि कस्यचित् कदाचित् कंचित् प्रति प्रकाशाय त्वयापि तत्तत्सन्निकृष्टेन्द्रियजन्यतत्तदाकारवृत्तिद्वारक एवानावृतदृग्दृश्यसम्बंधः स्वीकृतः तथा च सत्यत्वेऽपि तद्द्वारक एव सम्बन्धोऽस्तु, किमाध्यासिकसम्बन्धदुर्व्यसनेन न हि भवतां विज्ञानवादिनामिव तत्तज्ज्ञाने तत्तदर्थाध्यासः स्वीकारः शुद्धदृशः सतो भेदाभावात् । उपाधिविशिष्टाया भेदेऽपि घटादिवत्तस्या अपि मिथ्यात्वेनाधिष्ठानत्वायोगादिति चेत् ।**

दृश्यस्य सत्यत्वे दृश्यत्वानुपपत्तेर्दृग्दृश्ययोराध्यासिक एव सम्बन्धः इति सिद्धान्तिना व्यवस्थापिते दृश्यस्य सत्यत्वेऽपि दृग्दृश्यसम्बन्धमुपपादयितुं पूर्वपक्षी शंकते—तथा च सत्यत्वेऽपि तद्द्वारक एव सम्बन्धोऽस्तीति प्रथमतः सिद्धान्तिमतानुवादे पूर्वपक्षिणोऽयमाशयः दृग्दृश्ययोराध्यासिकसम्बन्धः सिद्धान्तिना कथं स्वीकृत इति प्रष्टव्यं सम्बन्धान्तरानिरूपणादिति चेत्, न, इन्द्रियसन्निकर्षजन्यवृत्तिज्ञानद्वारक एव सम्बन्धोऽस्तु किमाध्यासिकसम्बन्धदुर्व्यसनेन । ननु इन्द्रियसन्निकर्षजन्यवृत्तिद्वारकः सम्बन्धोऽप्रामाणिक इति चेन्न ।

अस्य संम्बन्धस्य सिद्धान्तिनोऽपि आवश्यकत्वात्। तथा हि सिद्धान्तिमते सर्वमपि दृश्यं घटादिकं सर्वगते अज्ञानानावृते ब्रह्मचैतन्ये अध्यस्तम्, एवञ्च अनावृतब्रह्मचैतन्यस्य सर्वान् प्रत्यविशिष्टत्वात् तत्रारोपितं घटादिकं सर्वं सर्वेषां सर्वदा प्राकाशेत न तु कश्चित् पदार्थः कदाचित् कंचित् प्रत्येव प्रकाशेत इत्यतिप्रसंगे अभिहिते यत् सन्निकृष्टेन्द्रियजन्यवृत्तिर्यदाकारा यदा [illegible] भवति स एव तं प्रत्येव तदैव प्रकाशते न सर्वदा इत्यतिप्रसंगः परिहर्तव्यः, तथा च इन्द्रियसन्निकर्षजन्यवृत्तिस्तवाप्यावश्यकी। एवञ्च दृश्यत्वेऽपि सत्यत्वमेवास्तु न मिथ्यात्वं सम्बन्धानुपपत्तिस्तु नास्ति इन्द्रियसन्निकर्षजन्यवृत्तिद्वारकसम्बन्धसम्भवात्। एवञ्च सिद्धान्तिनोऽपि आवश्यंकेनानेन सम्बन्धेनोपपत्त्या आध्यासिकसम्बन्धदुर्व्यसनेन प्रयोजनाभावात्। यदि तु घटाद्यधिष्ठानभूतचैतन्यानां भेदाङ्गीकारेण तत्तदर्थाः तत्तदधिष्ठानभूतेषु चैतन्येषु अध्यस्ता इत्युच्यन्ते। एवञ्च वृत्तिं विनैव अधिष्ठानचैतन्येन घटादेः साक्षादेव सम्बन्धात् अधिष्ठानचैतन्येनैव घटादेः प्रकाशो घटते अतो अतिप्रसंगाभावात् न वृत्तिद्वारकसम्बन्धानुसरणमिति चेन्न। यथा विज्ञानवादिना तत्तदर्था तत्तज्ज्ञाने अध्यस्ता इत्युच्यन्ते, यथा दुर्विज्ञानवादिनः "तत्तज्ज्ञानेषु ते ते अर्थाः अध्यस्ता इति नो मतम्" इति तथा सिद्धान्तिना ते ते अर्थाः तेषु तेषु अनेकेषु चैतन्येषु अध्यस्ता इति नोच्यते, किन्तु ब्रह्मात्मकानावृतैकदृगध्यस्तत्वमेव तत्रातिप्रसंगपरिहाराय वृत्तिरनुसरणीयैव। ननु विज्ञानवादिमते इव अस्माकमपि तत्तदधिष्ठानचैतन्येषु अनेकेषु तत्तद्विषयाध्यासोऽस्तु अतो न वृत्तिरपेक्षितेति चेन्न। अनेकेषु अधिष्ठानेषु सिद्धान्तिमते अध्यासायोगात्। तथा हि अध्यासाधिष्ठानीभूता अनेका ब्रह्मदृशः किं सत्यब्रह्मरूपा? अथ वा घटाद्युपाधिविशिष्टाः मिथ्याभूताः? किं वा घटाद्युपाध्युपलक्षिताः? नाद्यः, एकमेवाद्वितीयमिति श्रुतिविरोधेन तत्र भेदाभावात्। न द्वितीयः, उपहितस्य मिथ्यात्वेन अधिष्ठानत्वायोगात्। अध्यस्तापेक्षया अधिकसत्ताकस्यैव अधिष्ठानत्वात्। न तृतीयः घटाद्युपलक्षितस्य सत्यत्वेऽपि तस्य अनेकत्वासिद्धेः, तथा च अनावृतदृगध्यस्तत्वे वाच्ये तत्र उक्तातिप्रसंगवारणाय वृत्तिरपेक्षणीयैव। प्रपञ्चस्य सत्यत्वेऽपि इन्द्रियसन्निकर्षजन्यवृत्तिद्वारकसम्बन्धेनैव दृश्यत्वोपपत्तेराध्यासिकसम्बन्धाङ्गीकारो व्यर्थ एव ॥१॥

न, प्रकाशस्य साक्षात् स्वसंसृष्टप्रकाशकत्वनियमेन चैतन्यस्य परम्परासम्बन्धेन विषयप्रकाशकत्वायोगात्। न हि प्रदीपः परम्परासम्बद्धं प्रकाशयति। अतो विषयाधिष्ठानचैतन्यमनावृतमेव प्रकाशकम्। आवरणभङ्गश्च वृत्त्या, अतो वृत्तेः पूर्वमाध्यासिकसम्बन्धे विद्यमानेऽपि दृश्याऽप्रतीतिरुपपन्ना। अत एव—वृत्तिप्रतिबिम्बितचैतन्यस्य घटप्रकाशकत्वे आध्यासिकसम्बन्धस्यातन्त्रत्वापातः। घटाभिव्यक्तचैतन्यस्य घटप्रकाशकत्वे आवश्यकेन वृत्तिप्रतिबिम्बितचैतन्येनैव घटप्रकाशकत्वोपपत्तौ तदधिष्ठानचिदभिव्यक्तिकल्पनायोग इति—निरस्तम्। परोक्षविलक्षणस्फुटतरव्यवहारार्थं विषयाधिष्ठानचैतन्याभिव्यक्तिकल्पनाया युक्तत्वात् ॥२॥

---

२—व्यापहारिकप्रपञ्चमात्रं न अनावृते चैतन्ये अध्यस्तं किन्तु अज्ञानावृते एव अज्ञानानावृते चैतन्ये अध्यासासम्भवात् सादध्यस्तमात्रस्य अज्ञानमेव परिणाम्युपादानम् अज्ञानं विना अध्यास एव न स्यात् अतो अज्ञानावरणभङ्गाय वृत्तिरपेक्षितेति परिहरति सिद्धान्ती—न प्रकाशस्य साक्षात् स्वसृष्टप्रकाशत्वनियमेन चैतन्यस्य परम्परासम्बन्धेन विषयप्रकाशकत्वायोगात्। न हि प्रदीपः परम्परासम्बद्धं प्रकाशयति। अतो विषयाधिष्ठानचैतन्यमनावृतमेव प्रकाशकम्। आवरणभंगश्च वृत्त्या, अतो वृत्तेः पूर्वमाध्यासिकसम्बन्धे विद्यमानेऽपि दृश्याप्रतीतिरुपपन्ना। अत एव वृत्तिप्रतिबिम्बितचैतन्यस्य घटप्रकाशकत्वे आध्यासिकसम्बन्धस्यातन्त्रत्वापातः घटाभिव्यक्तचैतन्यस्य घटप्रकाशकत्वे आवश्यकेन वृत्तिप्रतिबिम्बितचैतन्येनैव घटप्रकाशकत्वोपपत्तौ तदधिष्ठानचिदभिव्यक्तिकल्पनायोग इति निरस्तम्। परोक्षविलक्षणस्फुटव्यवहारार्थं विषयाधिष्ठानचैतन्याभिव्यक्तिकल्पनाया युक्तत्वात्। अनावृतचित्तादात्म्यादेव विषयप्रकाश अनावृतचिदपि साक्षात् स्वसंसृष्टं प्रकाशयति न परम्परासंसृष्टं प्रदीपादीनां तथैवप्रकाशकत्वावधारणात्, दृष्टानुसारिणी चेयं कल्पना, अतो अनावृतं विषयाधिष्ठानचैतन्यं स्वाध्यस्तविषयप्रकाशकम्। अज्ञानावृते चैतन्ये एव विषयाध्यासात् विषयाकारवृत्त्या अज्ञानावरणभङ्गं विना आवृतचैतन्येन विषयस्फुरणा-

न च शुद्धचैतन्यस्य चरमसाक्षात्कारात्पूर्वं नाभिव्यक्तिः, अभिव्यक्तस्य च घटाद्यवच्छिन्नचैतन्यस्य न तदधिष्ठानत्वम् आत्माश्रयादिति—वाच्यम्। चरमसाक्षात्कारात पूर्वमपि शुद्धचैतन्यस्याविद्याव-

---

भावात्। विषयकारवृत्त्यैव अज्ञानावरणभङ्गः, अतः वृत्तेरुदयात् प्राक्विषयस्य अधिष्ठानचैतन्येन आध्यासिकसम्बन्धे विद्यमानेऽपि विषयस्य अप्रतीतिरुपपन्ना। तदा अधिष्ठानचैतन्यस्य अज्ञानावृतत्वात्। अत एव वृत्तिप्रतिबिम्बितेन चैतन्येनैव घटप्रकाशोपपत्तौ अतिप्रसङ्गाभावेन घटादेश्चैतन्याध्यासकल्पनायां व्यर्थत्वेन आध्यासिकसम्बन्धस्य व्यर्थतापातात् न हि वृत्तिप्रतिबिम्बितचैतन्ये घटादिरध्यस्त इति भावः। घटाधिष्ठानचैतन्यं घटप्रकाशकमिति मतेऽपि तदभिव्यक्त्यर्थं घटाकारवृत्तिप्रतिबिम्बितचैतन्यस्य अनुसरणीयत्वात्, तेनैव वृत्तिप्रतिबिम्बितचैतन्येन सत्यस्य घटस्य प्रकाशोपपत्तौ अधिष्ठानचैतन्याभिव्यक्तिकल्पनायोगात् इति पूर्वपक्षिशंकितं निरस्तम्। विषयाधिष्ठानचैतन्याभिव्यक्तिं विना वृत्तिप्रतिबिम्बितं चैतन्यमेव न स्यात्। किं तत् चैतन्यं यद्वृत्तौ प्रतिबिम्बते। अधिष्ठानचैतन्यमेव अभिव्यक्तं वृत्तौ प्रतिबिम्बितुमर्हति। अन्यचैतन्ये वृत्तिर्नोपाधिः अनुपाधौ प्रतिबिम्बनमेव न स्यात। किञ्च प्रत्यक्षपरोक्षज्ञानयोर्व्यवहारजनकत्वेऽपि महद्वैलक्षण्यं वर्तते, विषयस्य स्फुटतरव्यवहारः प्रत्यक्षज्ञानादेव न परोक्षज्ञानात् एतद्वैलक्षण्ये निदानम्, अधिष्ठानचैतन्याभिव्यक्त्यनभिव्यक्तिपरोक्षवृत्त्या अधिष्ठानचैतन्यं नाभिव्यज्यते, अतो विषयस्य स्फुटतरव्यवहारो न भवति अपरोक्षवृत्त्या अधिष्ठानचैतन्यं व्यज्यते, अतो विषयस्य स्फुटतरव्यवहारो जायते अतो अधिष्ठानचैतन्याभिव्यक्तिर्नानर्थिका इति भावः ॥२॥

३—अभिव्यक्ताधिष्ठानचैतन्येन अध्यस्तविषयस्य प्रकाशो नोपपद्यते अधिष्ठानशुद्धचैतन्यस्य चरमसाक्षात्कारात् पूर्वम् अभिव्यक्तेरभावात् इत्यभिप्रायेण पूर्वपक्षी शंकते—**न चशुद्धचैतन्यस्य चरमसाक्षात्कारात् पूर्वं नाभिव्यक्तिः अभिव्यक्तस्य च घटाद्यवच्छिन्नचैतन्यस्य न तदधिष्ठानत्वम्, आत्माश्रयादिति वाच्यम्।** अभिव्यक्ताधिष्ठानचैतन्येन अध्यस्तस्य प्रकाशो नोपपद्यते। अधिष्ठानं हि शुद्धचैतन्यं तस्य चरमसाक्षात्कारात् पूर्वम् अभिव्यक्तिर्न सम्भवति घटाद्याकारवृत्त्या यत् चैतन्यमभिव्यज्यते तद्घटाद्यवच्छिन्नं चैतन्यं तन्न घटाद्यधिष्ठानं, घटाद्यवच्छिन्नचैतन्यस्य घटाद्यधिष्ठानत्वे आत्माश्रयः स्यात्। चैतन्ये

शादधिष्ठानभूतस्य मूलाज्ञाननिवृत्तिलक्षणाभिव्यक्त्यभावेऽपि तदवस्थाविशेषादिनिवृत्तिलक्षणाभिव्यक्त्या विषयप्रकाशकत्वोपपत्तेः। न च—घटप्रकाशिकायाः दृशोर्मिथ्यात्वेनाधिष्ठानत्वं सत्यत्वे दोषाजन्यत्वेन प्रमात्वात्; सत्यं स्वविषयं प्रति नाधिष्ठानत्वमित्युभयतः पाशा रज्जुरिति—वाच्यम्; यतो दोषाजन्यत्वं न प्रमात्वप्रयोजकम्; चैतन्यस्य

---

घटाद्यध्यासे चैतन्यस्य घटाद्यवच्छिन्नत्वं घटाद्यवच्छिन्नत्वे च घटाद्यवच्छिन्नचैतन्ये घटाद्यध्यासः इति आत्माश्रयः।

समाधत्ते सिद्धान्ती—चरमसाक्षात्कारात् पूर्वमपि शुद्धचैतन्यस्य अविद्यावशात् अधिष्ठानभूतस्य मूलाज्ञाननिवृत्तिलक्षणाभिव्यक्त्यभावेऽपि तदवस्थाविशेषादिनिवृत्तिलक्षणाभिव्यक्त्या विषयप्रकाशकत्वोपपत्तेः। शुद्धचैतन्यस्याधिष्ठानत्वाभावेऽपि अविद्याविशिष्टतया अविद्योपहिततया ब्रह्मणोऽधिष्ठानत्वात् घटाद्याकारवृत्त्या मूलाज्ञाननिवृत्तिलक्षणाभिव्यक्त्यभावेऽपि मूलाज्ञानावस्थाविशेषस्य पल्लवाज्ञानस्य आदिपदात् एकाज्ञानपक्षे मनोऽवच्छेदप्रयुक्तस्य विषयचैतन्यस्य प्रमातृचैतन्ययोर्भेदस्य च घटाद्याकारवृत्त्या निवृत्तौ विषयप्रकाशकत्वोपपत्तेः पल्लवाज्ञानस्य विषयचैतन्यप्रमातृचैतन्ययोर्भेदस्य वा निवृत्तिरेव चैतन्याभिव्यक्तिः तया विषयप्रकाशः। चरमसाक्षात्कारादेव मूलाज्ञाननिवृत्तिः घटाद्याकारवृत्त्या तु पल्लवाज्ञाननिवृत्तिर्भवति, सैव चैतन्याभिव्यक्तिः घटादिविषयप्रकाशौपयिकी। मूलाविद्या घटाद्यवच्छिन्नचितं नावृणोति, किन्तु पल्लवाविद्या तन्निवृत्त्यैव घटादिप्रकाशः इति भावः।

घटप्रकाशिकाया दृशः सत्यत्वमिथ्यात्वाभ्यां दोषं शंकते पूर्वपक्षी—न च घटप्रकाशिकाया दृशो मिथ्यात्वे नाधिष्ठानत्वं सत्यत्वे दोषाजन्यत्वेन प्रमात्वात् सत्यं स्वविषयं प्रति नाधिष्ठानत्वमित्युभयतः पाशा रज्जुरिति वाच्यम्। घटादिप्रकाशिकायां दृशि घटादीनामध्यस्तत्वं सिद्धान्तिसम्मतं सा दृक् मिथ्या सत्या वा उभयतो दोषानुषंगात् उभयतः पाशा रज्जुरिति दर्शयति। तस्याः दृशो मिथ्यात्वे न तस्याः घटाद्यधिष्ठानत्वं सत्यस्यैवाधिष्ठानत्वात्, अन्यथा शून्यवाद प्रसंगात्। तस्याः सत्यत्वे सत्यदृग्विषयस्यापि सत्यत्वात् नाध्यस्तत्वम् अनध्यस्ते

सर्वत्र दोषाजन्यत्वात् किन्तु दोषाजन्यवृत्त्यवच्छिन्नत्वं, प्रकृते च तदभावात् न विषयस्य सत्यत्वम्। अतो मिथ्याभूतविषयं प्रत्यधिष्ठानत्वं सत्याया दृशो युक्तम्।

ननु—तात्त्विकसम्बन्धासम्भवे आध्यासिकसम्बन्धकल्पनम्, स एव तु कुतः ? क्लृप्तसंयोगबाधे गुणगुणिनोः समवायवदुभयबाधे तृतीयस्य संभवात्। न च तत्र मानाभावः समवायवदनुमाध्यक्षयोः सत्त्वात्। तथा हि—[१] परस्परासंयुक्तासमवेतविशेषणविशेष्यकविशिष्टधीर्विशेषणविशेष्यसम्बन्धविशिष्टविषया, विशिष्टधीत्वात् दण्डीति विशिष्टधीवत्। [२] उक्ता जन्यप्रमा, विशेषणविशेष्यसम्बन्धनिमित्तका, अबाधितजन्यविशिष्टधीत्वात्, सम्मतवत्। [३] विमता धीः, अबाधितविशेषण-

---

प्रति अधिष्ठानापेक्षैव नास्ति। सत्याया दृशो दोषाजन्यत्वेन प्रमात्वात् भ्रमविषयस्य मिथ्यात्ववत् प्रमाविषयस्य सत्यत्वनियमात् इति भावः।

नियमोऽसिद्ध इति समाधत्ते सिद्धान्ती—यतो दोषाजन्यत्वं न प्रमात्वप्रयोजकं चैतन्यस्य सर्वत्र दोषाजन्यत्वात् किन्तु दोषाजन्यवृत्त्यवच्छिन्नत्वं प्रकृते च तदभावात् न विषयस्य सत्यत्वम्। अतः मिथ्याभूतविषयं प्रति अधिष्ठानत्वं सत्याया दृशो युक्तम्। दोषाजन्यत्वं न प्रमात्वव्याप्यं नित्यस्य चैतन्यस्य सर्वत्र दोषाजन्यत्वात् ज्ञानमात्रस्य प्रमात्वापातात्। किं तर्हि प्रमात्वव्याप्यमित्यत आह—दोषाजन्यवृत्त्यवच्छिन्नत्वं, सैव दृक् प्रमा या दोषाजन्यवृत्त्यवच्छिन्ना। दोषजन्यवृत्त्यवच्छिन्ना दृक् भ्रम एव। घटाद्याकारावृत्तिस्तु अविद्यादोषजन्या अतो भ्रमविषयस्य अध्यस्तत्वनियमात् "अध्यस्तमेव हि परिस्फुरति भ्रमेषु" इति सिद्धान्तात्। अतो भ्रमविषयीभूतस्य अध्यस्तस्य घटादेः अधिष्ठानत्वं सत्यायाः दृशो युक्तमेवेति भावः। दृग्दृश्ययोस्तात्त्विकः सम्बन्धोऽस्तु इति शङ्कते—ननु तात्त्विकसम्बन्धासम्भवे आध्यासिकसम्बन्धकल्पनं, स एव तु कुतः ? क्लृप्तसंयोगबाधे गुणगुणिनोः समवायवदुभयबाधे तृतीयस्य सम्भवात्। न च तत्र मानाभावः समवायवदनुमानाध्यक्षयोः सत्त्वात्। तथा हि [१] परस्परासंयुक्तासमवेतविशेषण

विशेष्यसम्बन्धविषया, अबाधितविशिष्टधीत्वाद्दण्डीति विशिष्टधीवत्। गोमांश्चैत्र इत्यादेरपि पक्षकुक्षिनिक्षेप 'एवेति' न तत्र व्यभिचारशङ्का। तथा च संयोगसमवायातिरिक्तसम्बन्धसिद्धिरिति चेत् ?॥३॥

---

विशेष्यकविशिष्टधीर्विशेषणविशेष्यसम्बन्धविषया, विशिष्टधीत्वात्, दण्डीति विशिष्टधीवत्। [२] उक्ता जन्यप्रमा, विशेषणविशेष्यसम्बन्ध-निमित्तका, अबाधितजन्यविशिष्टधीत्वात्, सम्मतवत्। [३] विमता धीः अबाधितविशेषणविशेष्यसम्बन्धविषया अबाधितविशिष्टधीत्वात्, दण्डीति विशिष्टधीवत्। गोमाँश्चैत्र इत्यादेरपि पक्षकुक्षिनिक्षेप एवेति न तत्र व्यभिचारशंका। तथा च संयोगसमवायातिरिक्तसम्बन्ध-सिद्धिरिति चेत्। दृग्दृश्ययोः तात्त्विकसम्बन्धासम्भवे एव आध्यासिक-सम्बन्धकल्पनं तात्त्विकसम्बन्धासम्भव एव कुतः गुणविशिष्टगुणिबुद्धौ संयोग-सम्बन्धबाधात् यथा समवायसम्बन्धसिद्धिः एवं दृग्दृश्ययोः संयोगसमवाययो-र्बाधात् तृतीयस्य सम्बन्धस्य सिद्धिर्भविष्यति तत्रापि समवायवदनुमानाध्यक्षयोः सम्भवात्। तृतीये सम्बन्धे अनुमानं प्रमाणं दर्शयति—तथा हीति। अभाववद् भूतलं ज्ञातो घट घटस्याभाव इत्यादिका परस्परासंयुक्ता समवेतविशेषणविशेष्यक-विशिष्टधीः पक्षः संयोगसमवायाभ्यामर्थान्तरतावारणाय पक्षे परस्परासंयुक्तेत्यादि-विशेषणं दृष्टान्ते संयोगमादायसाध्यपर्यवसानम्। पक्षे तु संयोगसमवायातिरिक्त-मादाय साध्यपर्यवसानम्। द्वितीयानुमाने उक्तेति। अभाववद्भूतलमित्याद्या परस्परासंयुक्ता समवेतविशेषणविशेष्यविषयकविशिष्टधीरित्यर्थः। ईश्वर-प्रमामादाय बाधवारणाय जन्येत्युक्तम्। सम्बन्धनिमित्तकेति सम्बन्धजन्येत्यर्थः। द्वितीयानुमाने हेतौ अबाधितपदाभावे• अत्र रजतत्वमिति भ्रमे व्यभिचारः तत्र साध्याभावात्। ईश्वरज्ञाने व्यभिचारवारणाय हेतौ जन्यपदम्। तृतीये विमता धीरिति अभाववद्भूतलमित्यादिका परस्परासंयुक्तेत्यादिरूपा जन्यप्रमाधीरित्यर्थः। ननु पल्लीस्थितगोमति चैत्रे गोमाँश्चैत्र इति यदा विशिष्टधीर्भवति तदा विप्रकृष्ट-गतां तद्गतश्चैत्रस्य च संयोगसमवायाभावात् अन्यस्य सम्बन्धस्य तत्राक्लृप्तत्वात् विशिष्टधीत्वं तत्र व्यभिचारीत्यत आह—गोमाँश्चैत्र इति। गोमाँश्चैत्र इत्यादावपि तेनैव हेतुना संयोगाद्यतिरिक्तसम्बन्धसाधनान्न व्यभिचारः। ज्ञानज्ञेययोः संयोग-समवायातिरिक्तद्विष्ठसम्बन्धसिद्धिरित्यर्थः॥३॥

न, प्रथमे द्वितीये चार्थान्तरम्, आध्यासिकसम्बन्धस्यैव विषयत्वेन निमित्तत्वेन चोपपत्तेः। द्वितीये परोक्षधीषु व्यभिचारश्च। तृतीये ब्रह्मज्ञानपर्यन्ताबाधितत्वेन सिद्धसाधनमेव। सर्वथा अबाधितधीविषयत्वे साध्ये साध्यवैकल्यम्।

---

४—पूर्वपक्षिप्रदर्शितमनुमानत्रयं दूषयन्नाह सिद्धान्ती—न प्रथमे द्वितीये चार्थान्तरम् आध्यासिकसम्बन्धस्यैव विषयत्वेन निमितत्वेन चोपपत्तेः। द्वितीये परोक्षधीषु व्यभिचारश्च। तृतीये ब्रह्मज्ञानपर्यन्ताबाधितत्वेन सिद्धसाधनमेव। सर्वथा अबाधितधीविषयत्वे साध्ये साध्यवैकल्यम्। दृग्दृश्ययोः तात्त्विकसम्बन्धसाधनाय प्रवृत्तमनुमानम् अतात्त्विकसम्बन्धमादाय पर्यवस्यत् अर्थान्तरत्वग्रस्तमेव। प्रकृतादर्थादन्योऽर्थः अर्थान्तरम्। दृग्दृश्ययोः सम्बन्धमात्रमुपस्थाप्य प्रथमानुमानं पर्यवसितं तयोराध्यासिकः सम्बन्धः सिद्धान्तिनापि अङ्गीक्रियते एव तथा च सिद्धसाधनमपि प्रथमानुमाने दूषणं बोध्यम्। एवमेव द्वितीयानुमानेऽपि तुल्यं दूषणम्। द्वितीयानुमाने दूषणान्तरमप्याह—द्वितीये परोक्षधीषु व्यभिचारश्चेति। विशिष्टविषयकप्रत्यक्षज्ञानमेव विशेष्यविशेषणसम्बन्धजन्यं भवति प्रत्यक्षज्ञानस्यैव विषयजन्यत्वात् ततोऽर्थाद् विज्ञानं प्रत्यक्षमित्यनुशासनात् [न्या० वा०]। परोक्षज्ञानस्य विषयजन्यत्वाभावात्, विशेष्यविशेषणसम्बन्धजन्यत्वमपि नास्ति। परोक्षज्ञानेऽबाधितजन्यविशिष्टधीत्वरूपो हेतुर्वर्तते अथ च विशेष्यविशेषणसम्बन्धनिमित्तकत्वरूपं साध्यं नास्ति अतः परोक्षज्ञाने व्यभिचार एव। तृतीये दूषणमाह—तृतीये इति। जन्यप्रमारूपा[प] धीरूपे पक्षे अबाधितविशेषणविशेष्यसम्बन्धविषयकत्वे साध्ये ब्रह्मज्ञानपर्यन्ताबाधितत्वस्य सिद्ध्या सिद्धसाधनम्, अबाधितपदेन ब्रह्मज्ञानपर्यन्ताबाधितत्वमेव वक्तव्यं, तच्च सिद्धान्तिमते सिद्धमेव। अबाधितपदेन सर्वथा अबाधितत्वविवक्षायां दृष्टान्तस्य साध्यवैकल्यं स्यात्। दण्डीतिविशिष्टबुद्धौ विषयीभूतस्य विशेष्यविशेषणसम्बन्धस्य ब्रह्मज्ञानपर्यान्ताबाधितत्वमेव सर्वथा अबाधितविषयकत्वाभावात् दृष्टान्तस्य साध्यवैकल्यं सर्वथा अबाधितविषयकत्वं चरमतत्त्वसाक्षात्कारस्यैव। एवं हेतावपि अबाधितपदस्य ब्रह्मज्ञानपर्यन्ताबाधितत्वमेवार्थः। सर्वथा अबाधितत्वे दृष्टान्तस्य साधनवैकल्यमपि। पक्षेऽपि हेतोरसत्त्वात् स्वरूपासिद्धिरपि। अतो मूले साध्यवैकल्यमित्युपलक्षणं, दूषणान्तरमपि सूचयति।

न च—तात्त्विकसम्बन्धबाधे आध्यासिकसम्बन्धसिद्धिः। तथा च संयोगसमवायातिरिक्ततात्त्विकसम्बन्धबाधपर्यन्तं नाध्यासिकसम्बन्धसम्भावना। तथा च—कथमर्थान्तरसिद्धसाधनसाध्यवैकल्यानीति—वाच्यम्।

तात्त्विकसम्बन्धस्य व्यापकानुपलब्ध्या बाधात्। तथा हि—तात्त्विकसम्बन्धस्य व्यापको देशकालविप्रकर्षाभावः। स चातीतादिविषयकज्ञानादीनां नास्त्येवेति कथं तात्त्विकस्तेषां सम्बन्धः। न च समवायवत् सम्बन्ध्यभावविप्रकर्षाद्यविरुद्धत्वेनैव तत्सिद्धिरिति—वाच्यम्, समवायस्यापि देशकालविप्रकृष्टयोः सम्बन्धव्यवहाराप्रयोजकत्वात्। न हि सम्बन्ध्यभावेऽपि सन् समवायोऽद्य नष्टं घटं श्वस्तनेन रूपेण विशिनष्टि। नचाध्यासिकत्वे सम्बन्धस्य साध्ये धर्मिग्राहक-

---

दृग्दृश्ययोस्तात्त्विकसम्बन्धबाधे एव आध्यासिकसम्बन्धस्य सिद्धिर्भवितुमर्हति तात्त्विकसम्बन्धस्य बाध एव अनुपपन्न इति पूर्वपक्षी शंकते—न च तात्त्विकसम्बन्धबाधे आध्यासिकसम्बन्धसिद्धिः तथा च संयोगसमवायातिरिक्ततात्त्विकसम्बन्धबाधपर्यन्तं नाध्यासिकसम्बन्धसम्भावना तथा च कथमर्थान्तरसिद्धसाधनसाध्यवैकल्यानीति वाच्यम्। तात्त्विकसम्बन्धस्य बाधे सिद्धे हि आध्यासिकसम्बन्धकल्पना, बाधात् प्रागेव आध्यासिकसम्बन्धकल्पनाया असंभवात् आध्यासिकसम्बन्धमादाय अर्थान्तरसिद्धिसाधनादीनाम् अनुद्भावनीयत्वात् अनुमानानां दूषणमसङ्गतमेव। तात्त्विकसम्बन्धस्य व्यापकानुलब्ध्या बाधात् आध्यासिकसम्बन्धमादायानुमानदूषणोद्भावनं सङ्गतमेव इत्याह सिद्धान्ती—तात्त्विकसम्बन्धस्य व्यापकानुपलब्ध्या बाधात्। तथा हि तात्त्विकसम्बन्धस्य व्यापकदेशकालविप्रकर्षाभावः स च अतीतादिविषयकज्ञानादीनां नास्त्येव इति कथं तात्त्विकस्तेषां सम्बन्धः। न च समवायवत् सम्बन्ध्यभावविप्रकर्षाद्यविरुद्धत्वेनैव तत्सिद्धिरिति वाच्यं। समवायस्यापि देशकालविप्रकृष्टयोः सम्बन्धव्यवहाराप्रयोजकत्वात्। न हि सम्बन्ध्यभावेऽपि सन् समवायः अद्य नष्टं घटं श्वस्तनेन रूपेण विशिनष्टि। न च अध्यासिकत्वे सम्बन्धस्य साध्ये धर्मिग्राहक-

मानबाधः, विशिष्टबुद्धित्वेन प्रथमतात्त्विकातात्त्विकसाधारणसम्बन्धत्वस्यैव सिद्धेः। किञ्च सम्बन्धग्राहक एव तात्त्विकसम्बन्धव्यापकानुपलब्धिरूपबाधसहकृताध्यासिकसम्बन्धे पर्यवस्यति। अतो न धर्मिग्राहकबाधशङ्कापि ॥४॥

---

मानबाधः विशिष्टबुद्धित्वेन प्रथमतात्त्विकसाधारणसम्बन्धत्वस्यैव सिद्धे। किंच सम्बन्धग्राहक एव तात्त्विकसम्बन्धव्यापकानुपलब्धिरूपबाधसहकृताध्यासिकसम्बन्धे पर्यवस्यति। अतो न धर्मिग्राहकबाधशंकापि। ययोः तात्त्विकः सम्बन्धः तयोः देशकालविप्रकर्षाभावः इत्येव नियमः। ययोः देशकालविप्रकर्षः न तयोस्तात्त्विकः सम्बन्धः यथा हिमवद्विन्ध्ययोः। यथा वा भाविरूपविनष्टघटयोः। अतीतादिविषयकज्ञानादीनां विषयज्ञानयोः सम्बन्धिनोः कालविप्रकर्षात् न तात्त्विकः सम्बन्धो भवितुमर्हति। ज्ञानस्यात्मनिष्ठत्वेनान्तरत्वात् ज्ञेयस्य च बाह्यपदार्थत्वेन तयोर्विप्रकृष्टत्वात् पारमार्थिकः सम्बन्धो न युक्तः। संयोगसमवायातिरिक्तोऽयं सम्बन्धोऽनुमानेन सिध्यन् सम्बन्ध्यभावसम्बन्धिविप्रकर्षौ यथा स्वस्य बाधकौ न स्याताम्, तथैव स्वापेक्षिताशेषनिर्वाहकतयैव सिध्यति, यथा समवायोऽबाधितेऽप्रत्ययत्वाद्यनुमानेन सिध्यन् स्वापेक्षितैकत्वादियुततयैव सिध्यति तद्वत् उक्तानुमानसिद्धसंयोगाद्यतिरिक्तसम्बन्धस्य सम्बन्ध्यभावो सम्बन्धिविप्रकर्षो वा बाधक इति यद्यङ्गीक्रियते तर्हि अबाधिते अप्रत्ययत्वाद्यनुमानेन समवायोऽपि न सिध्येत् पृथक्सिद्धयोः युतसिद्धयोरेव संयोगसम्बन्धदर्शनात् अपृथक्सिद्धयोस्तददर्शनात् अपृथक्सिद्धिरयुतसिद्धिर्वा समवायसम्बन्धस्य बाधिका स्यात् इति शङ्किते तत्र त्वया, समवायः सिध्यन् धर्मिग्राहकप्रमाणेन अपृथक्सिद्धसम्बन्धत्वेनैव सिध्यतीति वाच्यं, तत् समं ममापीत्यत्राह—समवायस्यापीति। देशकालविप्रकृष्टयोः सम्बन्धिनोः सम्बन्धव्यवहारप्रयोजकत्वं समवायस्यापि नास्तीति दृष्टान्तद्वारेण स्पष्टयति—अविद्यमानयोः सम्बन्धिनोऽद्य नष्टघटश्वस्तनरूपयोः विशिष्टव्यवहारं सन् समवायो न जनयति। सम्बन्धिनोरविद्यमानत्वात् तयोः कालविप्रकर्षाच्च। न च सम्बन्धस्य आध्यासिकसाधनाय प्रवृत्तं मानं सम्बन्धस्य धर्मिणोर्ग्राहकेण मानेनैव बाध्यते। धर्मिग्राहकमानमेव सम्बन्धस्य पारमार्थिकत्वं साधयति, अन्यथा धर्मिणोर्मानात् सिद्धिरेव न स्यादिति

न चैवं—युतसिद्धयोरेव संयोगरूपसम्बन्धदर्शनादयुतसिद्धिरपि संयोगस्य बाधिका स्यादिति—वाच्यम्; अयुतसिद्धयोरपि क्वचित्संबन्धादर्शनेन युतसिद्धत्वस्य सम्बन्धाप्रयोजकत्वात्, यस्मिन् सत्यवश्यं सम्बन्धः स एव सम्बन्धस्य प्रयोजक इति समव्याप्तत्वाभावेन युतसिद्ध्यनुपलब्धेरबाधकत्वात्, यत्र सम्बन्धस्तत्रावश्यं युतसिद्धिरिति विषमव्याप्तिकल्पनेऽपि मानाभावात्, अनुकूलतर्कादर्शनात्। देशकालविप्रकर्षाभाववतां तु सर्वेषां सम्बन्धदर्शनेन विप्रकर्षे तददर्शनेन च समव्याप्ततया प्रयोजकस्य देशकालविप्रकर्षाभावस्यानुपलब्धेः सम्बन्धबाधकत्वस्यावश्यमङ्गीकरणीयत्वात्। न हि प्रयोजकाभावे प्रयोज्यसम्भवः ॥५॥

---

वाच्यं, विशिष्टबुद्धित्वेन हेतुना तात्त्विकातात्त्विकसाधारणसम्बन्धत्वेनैव सम्बन्धसिद्धेर्न धर्मिग्राहकमानबाधशंकापीति। किञ्च प्रकृते सम्बन्धग्राहकमानमेव तात्त्विकसम्बन्धव्यापकानुपलब्धिरूपबाधसहकृतमाध्यासिकसम्बन्धत्वं तस्य सम्बन्धस्य साधयति अतो न धर्मिग्राहकमानं पारमार्थिकत्वेन सम्बन्धं साधयतीति न धर्मिग्राहकमानबाधशंकापीति ॥४॥

५—प्रदर्शितरीत्या आध्यासिकसम्बन्धे सिद्धे समवायसम्बन्धस्यापि सिद्धिर्न स्यादिति पूर्वपक्षी शंकते—न चैवं युतसिद्धयोरेव संयोगरूपसम्बन्धदर्शनात् अयुतसिद्धिरपि संयोगस्य बाधिका स्यात् इति वाच्यम्। पृथक्सिद्धयोर्युतसिद्धयोरेव संयोगसम्बन्धदर्शनात् अपृथक्सिद्धयोः सम्बन्धादर्शनात् अपृथक्सिद्धिरयुतसिद्धिर्वा समवायसम्बन्धस्य बाधिका स्यात् मूले संयोगस्य इत्यस्य सम्बन्धस्येत्यर्थः अन्यथा असंगतिः स्यात्।

समाधत्ते सिद्धान्ती—अयुतसिद्धयोरपि क्वचित् सम्बन्धदर्शनेन युतसिद्धत्वस्य सम्बन्धाप्रयोजकत्वात् यस्मिन् सत्यवश्यं सम्बन्धः स एव सम्बन्धस्य प्रयोजक इति समव्याप्तत्वाभावेन युतसिद्ध्यनुपलब्धेरबाधकत्वात्। यत्र सम्बन्धः तत्रावश्यं युतसिद्धिरिति विषमव्याप्तिकल्पनेऽपि मानाभावात् अनुकूलतर्कादर्शनात्। देशकालविप्रकर्षाभाववतां तु सर्वेषां सम्बन्धदर्शनेन विप्रकर्षे तददर्शनेन च समव्याप्ततया

नन्वेवं— ध्वंसादेरतीतादिना, मिथ्यात्वलक्षणान्तर्गतस्यात्यन्ताभावस्य प्रतियोगिना, शक्तेः शक्येन, अज्ञानस्याज्ञेयेन, इच्छाया इष्यमाणेन, व्यवहारस्य व्यवहर्तव्येन, वाक्यस्यार्थेन, वृत्तिरूपज्ञानस्य ज्ञेयेन, सम्बन्धो नेति त्वद्वाक्योक्तसम्बन्धाभावस्य ज्ञानेनासम्बन्धात्

---

प्रयोजकस्य देशकालविप्रकर्षाभावस्य अनुपलब्धेः सम्बन्धबाधकत्वस्य अवश्यमङ्गीकरणीयत्वात् । नहि प्रयोजकाभावे प्रयोज्यसम्भवः । अयुतसिद्धयोः गुणगुणिनोरपि सम्बन्धदर्शनेन युतसिद्धत्वस्य सम्बन्धाव्यापकत्वात् यत्र यत्र सम्बन्धस्तत्र युतसिद्धत्वमिति व्याप्तेरसम्भवात् । युतसिद्धत्वस्य यथा न सम्बन्धव्यापकत्वम् एवं व्याप्यत्वमपि नास्तीत्याह—यस्मिन् सति अवश्यं सम्बन्ध इति । युतसिद्धत्वस्य संयोगसम्बन्धव्याप्यत्वेऽपि सम्बन्धविशेषव्याप्यस्य सम्बन्धसामान्यव्याप्यत्वाभावात् तथा च व्याप्यत्वे सति व्यापकत्वं समव्याप्तत्वयुतसिद्धत्वस्य सम्बन्धव्यापकत्वव्याप्यत्वयोरभावात् न युतसिद्धत्वं सम्बन्धसमव्याप्तम् । सम्बन्धसमव्याप्तत्वाभावेन युतसिद्ध्यनुपलब्धिर्न सम्बन्धबाधिकेति । युतसिद्धेः सम्बन्धव्यापकत्वमपि नास्तीत्याह—यत्र सम्बन्ध इति। मूले विषमव्याप्तिपदं व्यापकत्वपरं बोध्यम् । सम्बन्धे युतसिद्धत्वव्याप्तिग्राहकानुकूलतर्काभावात् व्याप्त्यसिद्धेः । देशकालविप्रकर्षाभावस्य सम्बन्धसमव्याप्ततया सम्बन्धप्रयोजकस्य देशकालविप्रकर्षाभावस्यानुपलब्धिः सम्बन्धबाधिका भवत्येव । समव्याप्तप्रयोजकाभावे प्रयोज्यासम्भवात् इति भावः । देशकालविप्रकर्षाभावस्य सम्बन्धसमव्याप्तत्वं दर्शयति देशकालविप्रकर्षाभाववतामिति । सम्बन्धदर्शनेन इत्यन्तेन देशकालविप्रकर्षाभावे सम्बन्धव्याप्यत्वं दर्शितं विप्रकर्षे तददर्शनेन च इत्यनेन सम्बन्धव्यापकत्वं दर्शितम् । व्याप्यत्वे सति व्यापकत्वात् समव्याप्तत्वम् अत्र समव्याप्तस्य प्रयोजकत्वनिर्देशात् देशकालविप्रकर्षाभावे सम्बन्धसमव्याप्तत्वं प्रदर्शितम ॥५॥

६—देशकालविप्रकर्षाभावस्य सम्बन्धप्रयोजकत्वे स्वन्यायविरोधादयः प्रसज्यन्ते इति शंकते पूर्वपक्षी—नन्वेवं ध्वंसादेरतीतादिना मिथ्यात्वलक्षणान्तर्गतस्य अत्यन्ताभावस्य प्रतियोगिना, शक्तेः शक्येन, अज्ञानस्य अज्ञेयेन, इच्छाया इष्यमाणेन व्यवहारस्य व्यवहर्तव्येन, वाक्यस्यार्थेन, वृत्तिरूपज्ञानस्य ज्ञेयेन, सम्बन्धो नेति त्वद्वाक्योक्तसम्बन्धा-

स्वन्यायस्वक्रियास्ववचनविरोधाः स्युः, न हि ज्ञाने ज्ञेयमिव प्रतियोग्यादिकमभावादावध्यस्तमिति—चेत् ॥६॥

न, यद्यप्युक्तन्यायसाम्येन ध्वंसादीनां स्वप्रतियोग्यादिभिस्तात्त्विकः सम्बन्धो नास्त्येव, अध्यासोऽपि न ज्ञानज्ञेयन्यायेन, उभयोरपि मिथ्यात्वात्, तथापि प्रतीयमानं प्रतियोग्यनुयोगिभावादिकं सर्वथा न

---

भावस्य ज्ञानेन असम्बन्धात् स्वन्यायस्वक्रियास्ववचनविरोधाः स्युः नहि ज्ञाने ज्ञेयमिव प्रतियोग्यादिकमभावादौ अध्यस्तमिति चेत्। ज्ञानज्ञेययोः प्रसिद्धसम्बन्धातिरिक्तसम्बन्धानङ्गीकारे स्वन्यायविरोधादिदर्शयन्नाह पूर्वपक्षी—ध्वंसादेश्चेति। ध्वंसस्य विद्यमानस्य अतीतेन प्रतियोगिना एवमेव प्रागभावस्य प्रतियोगिना असंबन्धात् स्वन्यायविरोधस्वक्रियाविरोधस्ववचनविरोधाः स्युः। वाक्यस्यार्थेन इत्यन्तं स्वन्यायविरोधोदाहरणम्। वृत्तिरूपज्ञानस्य ज्ञेयेनेत्यादिकं स्वक्रियास्ववचनविरोधयोरुदाहरणम्। तत्र ज्ञानस्य ज्ञेयेन सम्बन्धानिरूपणन्यायेन ध्वंसप्रागभावादेः प्रतियोगिना सम्बन्धो दुर्निरूपणीयः स्यादिति स्वन्यायविरोधः ज्ञानज्ञेययोः सम्बन्धाभावं प्रतिपादयितुं ज्ञानस्य ज्ञेयेन सम्बन्धो नास्तीति प्रागुक्तं यद्वाक्यं तत्प्रयोगरूपा या क्रिया तत्प्रतिपाद्यस्य सम्बन्धाभावरूपार्थस्य एतद्वाक्यजन्यज्ञानस्य च सम्बन्धान्मूकोऽहमिति स्वक्रियाविरोधः। ज्ञानज्ञेययोः सम्बन्धाभावरूपार्थस्य ज्ञानज्ञेययोः सम्बन्धो नास्त्येतद् वाक्यजन्यज्ञानेन सम्बन्धं बोधयितुम् एतद्वाक्यं प्रयुङ्क्ते ज्ञानज्ञेययोः सम्बन्धो नास्तीति वदति च इति मम माता वन्ध्या इति वत् स्ववचनविरोधः। तथा च यथा ध्वंसप्रतियोग्यादिषु नाध्यासिकः सम्बन्धः किन्तु अन्य एव तथा ज्ञानज्ञेययोरपीत्यर्थः। ननु उक्तेषु ध्वंसादिषु आध्यासिकः सम्बन्धो भविष्यतीति सम्बन्धाभावप्रयुक्ताः स्वन्यायविरोधादयो न स्युरत आह—नहि ज्ञेयं ज्ञाने इव प्रतियोगिशक्या ज्ञेयेष्यमाणव्यवहर्तव्यादयः अभावशक्त्यज्ञानेच्छाव्यवहारादौ अध्यस्ताः इति ॥६॥

७—समाधत्ते सिद्धान्ती—न, यद्यप्युक्तन्यायसाम्येन ध्वंसादीनां स्वप्रतियोग्यादिभिः तात्त्विकः सम्बन्धो नास्त्येव। अध्यासोऽपि न ज्ञानज्ञेयन्यायेन, उभयोरपि मिथ्यात्वात्, तथापि प्रतीयमानं प्रतियोग्य-

निराकुर्मः, किन्तु तात्त्विकाध्यासाभ्यां भिन्नमेव ज्ञेयकुक्षिनिक्षिप्तत्वात् मिथ्याभूतमङ्गीकुर्मः। स च संयोगादिवदतिरिक्तो वा स्वरूपं वा पराङ्गीकृतपदार्थान्तर्गतो वा तदतिरिक्तो वेत्यस्यां काकदन्तपरीक्षायां न नो निर्बन्धः। न च मिथ्यात्वसिद्धेः प्राक् तदसिद्ध्या अन्योन्याश्रयः, दृग्दृश्यसम्बन्धानुपपत्त्या ज्ञेयमात्रस्याध्यासिकत्वे सिद्धे तन्मध्यपतितस्य प्रतियोग्यभावादिसम्बन्धस्यापि मिथ्यात्वं, न तु प्रतियोग्यभावादि-सम्बन्धमिथ्यात्वसिद्ध्यनन्तरं दृश्यमिथ्यात्वसिद्धिरिति व्यवहारोपयुक्त-सम्बन्धसामान्यस्याप्रतिक्षेपात् न स्ववचनादिविरोधः। तदुक्तं खण्डनकृद्भिः—

बाधेऽदृढेऽन्यसाम्यात् किं दृढे तदपि बाध्यताम्।
क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम्॥ इति।

न चादृढत्वं बाधस्य व्यापकानुपलब्धिरूपतर्कस्योक्तत्वात्। स्वक्रियादिविरोधरूपप्रतिकूलतर्कस्य परिहृतत्वाच्च। अत एव न जाति-वादिसाम्यम्। तेन हि नियमसापेक्षानित्यत्वसाधककृतकत्वादौ निय-

---

नुयोगिभावादिकं सर्वथा न निराकुर्मः, किन्तु तात्त्विकाध्यासाभ्यां भिन्नमेव ज्ञेयकुक्षिनिक्षिप्तत्वात् मिथ्याभूतमङ्गीकुर्मः। स च संयोगा-दिवदतिरिक्तो वा स्वरूपं वा पराङ्गीकृतपदार्थान्तर्गतो वा तदतिरिक्तो वा इत्यस्यां काकदन्तपरीक्षायां न नो निर्बन्धः। न च मिथ्यात्वसिद्धेः प्राक् तदसिद्ध्या अन्योन्याश्रयः दृग्दृश्यसम्बन्धानुपपत्त्या ज्ञेयमात्रस्य आध्यासिकत्वे सिद्धे तन्मध्यपतितस्य प्रतियोग्यभावादिसम्बन्धस्यापि मिथ्यात्वं न तु प्रतियोग्यभावादिसम्बन्धमिथ्यात्वसिद्ध्यनन्तरं दृश्यमिथ्यात्वसिद्धिरिति व्यवहारोपयुक्तसम्बन्धसामान्यस्य अप्रति-क्षेपात् न स्ववचनादिविरोधः। तदुक्तं खण्डनकृद्भिः—

बाधेऽदृढेऽन्यसाम्यात् किं दृढे तदपि बाध्यताम्।
क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम्॥ इति

न च अदृढत्वं बाधस्य व्यापकानुपलब्धिरूपतर्कस्योक्तत्वात्। स्वक्रियाविरोधरूपप्रतिकूलतर्कस्य परिहृतत्वाच्च। अत एव न

मानपेक्षण दर्शनमात्रेण रूपवत्त्वादिकमापाद्यते न त्वस्माभिस्तथा नियमनिरपेक्षेण साहचर्यमात्रेण किञ्चिदापाद्यते ॥७॥'

---

जातिवादिसाम्यम् । तेन हि नियमसापेक्षानित्यत्वसाधककृतकत्वादो नियमानपेक्षदर्शनमात्रेण रूपवत्त्वादिकमापाद्यते नत्वस्माभिः तथा नियमनिरपेक्षेण साहचर्यमात्रेण किंचिदापाद्यते । तात्त्विकसम्बन्धप्रयोजकस्य देशकालविप्रकर्षाभावस्य अनुपलब्ध्या यथा ज्ञानज्ञेययोर्न तात्त्विकः सम्बन्धः तथा ध्वंसादीनां स्वप्रतियोग्यादिभिरपि तात्त्विकसम्बन्धो नास्त्येव । सम्बन्धस्याताात्त्विकत्वेऽपि न ध्वंसादौ प्रतियोग्यादीनाम् आध्यासिकः सम्बन्धो द्वयोर्ध्वंसप्रतियोगिनोर्मिथ्यात्वात् ज्ञानस्य च सत्यत्वात् ज्ञेयस्य च मिथ्यात्वात् ज्ञाने ज्ञेयस्याध्यासिकः सम्बन्धो युज्यते । यद्यपि ज्ञानज्ञेयन्यायेन ध्वंसप्रतियोगिनोर्नाध्यासिकः सम्बन्धः तथापि ध्वंसप्रतियोगिनोऽनुभूयमानः प्रतियोग्यनुयोगिभावः सम्बन्धः सर्वथा न निराक्रियते । किन्तु स्वसम्बन्धः तात्त्विकाध्यासिकाभ्यां भिन्नः दृश्यत्वात् मिथ्याभूतः यावद्व्यवहारमबाधितः अङ्गीक्रियत एव । स च ध्वंसप्रतियोगिनोः सम्बन्धोऽतिरिक्तोऽनतिरिक्तो वा इत्यत्र नास्माकं निर्बन्धः । उक्तञ्च खण्डने— वस्तुतस्तु वयं प्रपञ्चसत्त्वव्यवस्थापनविनिवृत्ताः स्वतः सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे [पृ० १३१] यथा द्रव्ययोरेव संयोग इति नियमात् सम्बन्धिद्रव्याभ्यां भिन्नः संयोगो गुणः सिद्ध्यति, यथा वा समवायः सम्बन्धिभ्यां भिन्नः सिद्ध्यति, तथैव किं ध्वंसप्रतियोगिनोः सम्बन्धो सम्बन्धिभ्यां भिन्नः, किं वा सम्बन्धिद्वयस्वरूपः वैशेषिकाङ्गीकृतसप्तपदार्थान्तर्गतो उच्छृङ्खलरीत्या सप्तपदार्थातिरिक्तो वा इत्यस्यां निष्प्रयोजनचिन्तायां नास्माकं निर्बन्धः । उक्तं चात्मतत्त्वविवेके—मन्दप्रयोजनत्वात्तु सत्त्वैर्मुमुक्षुभिरुपेक्षितमिति युक्तमुत्पत्यामः [पृ० ७०८] विवृतं च शङ्करमिश्रैः—उपनिषदभ्यासजनितात्मसाक्षात्कारतः वेदान्तिनो मोक्षाय त्वरमाणाः प्रपञ्चविचारे प्रयोजनाभावम् आकलयन्तः तत्र उदासते इत्यर्थः । शङ्कते मिथ्यात्वसिद्धेः प्रागिति—प्रपञ्चमिथ्यात्वसिद्ध्या ध्वंसप्रतियोगिनोः सम्बन्धस्य मिथ्यात्वसिद्धिः सम्बन्धमिथ्यात्वसिद्ध्या प्रपञ्चमिथ्यात्वसिद्धिरित्यन्योन्याश्रयता । निराचष्टे न प्रदर्शितान्योन्याश्रयता दृग्दृश्यसम्बन्धानुपपत्त्या ज्ञेयमात्रस्य आध्यासिकत्वे सिद्धे । अयमाशयः

दृग्दृश्यसम्बन्धभङ्गे प्रदर्शिता जगत्कवलनयुक्तिः तथा युक्त्या ज्ञानस्य ज्ञेयसिद्धि-रूपत्वाभावात् ज्ञेयमात्रमसिद्धमेव । ज्ञानार्थयोः सम्बन्धाभावादिति भावः । ज्ञेयमध्य-पतितस्य प्रतियोग्यभावादिसम्बन्धस्यापि मिथ्यात्वं न तु प्रतियोग्यभावादिसम्बन्ध-मिथ्यात्वसिद्ध्यनन्तरं दृश्यमिथ्यात्वसिद्धिर्येन अन्योन्याश्रयता स्यात् । दृग्दृश्य-सम्बन्धानुपपत्त्या सम्बन्धस्य पारमार्थिकत्वापहारेऽपि व्यवहारिकत्वानपहारात् न स्ववचनादिविरोधः । सिद्धान्तरहस्यमजानता पूर्वपक्षिणा केवलमकाण्डताण्डवः कृतः । उक्तञ्च—

"आत्माश्रयादयो दोषाः सत्तां निघ्नन्ति वस्तुनः ।
अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः ॥

इति सत्तां निघ्नन्ति—पारमार्थिकसत्त्वस्याभावं ज्ञापयन्ति । प्रपञ्चे तत्प्रसञ्जका इति प्रपञ्चे पारमार्थिकसत्वस्याभावज्ञापका इति । यच्च न्याया-मृते उक्तम्—

एतेन
"न्यायेऽदृढे अन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम् ।
न ममत्वं मुमुक्षूणामनिर्वचनवादिनाम् ॥ इति निरस्तम् ॥

स्वव्याहतस्य न्यायाभासतया दार्ढ्याभावादिति तदनूद्य दूषयति—बाधेऽदृढे इति । न्यायामृतकृता वृथा खण्डनपद्यस्य पाठपरिवर्तनं कृतं तदसंगतमिति सूचयन् बाधेऽदृढे इति खण्डनपाठे दर्शयन् पूर्वपक्षिणोऽज्ञानमाविष्करोति । देशकाल-विप्रकर्षाभावो हि सम्बन्धप्रयोजकः, ज्ञानज्ञेययोरपि सम्बन्धप्रयोजकानुपलब्ध्या सम्बन्धाभावः सिद्ध्यति । व्यापकानुपलब्धिरूपतर्केण ज्ञानज्ञेयसम्बन्धबाधस्य आपाद्यत्वात् ज्ञानज्ञेयसम्बन्धबाधो दृढ एव । खण्डनपद्यस्यायमर्थः—ज्ञानज्ञेययोः सम्बन्धबाधः यदुक्तः दृढोऽदृढो वा यद्यदृढस्तत्राह अदृढे मदुक्तबाधे तर्कमूली-भूतव्याप्त्याद्यभावे प्रशिथिलमूलत्वादिदोषे सति अन्यसाम्यात् किं न किञ्चिदपि तदेवादार्ढ्यकारणं प्रशिथिलमूलत्वाद्युद्भाव्यताम् अन्यसाम्यो-द्भावनेन प्रतिबन्दिग्रहणं व्यर्थम् । प्रशिथिलमूलत्वाद्युपजीव्यैव अन्यसाम्योद्भावनादित्यर्थः । यदि दृढस्तत्राह—दृढे इति । प्रदर्शिततर्कस्य प्रशिथिलमूलत्वादिहीनतया अपरिहार्ये सति अन्यत् प्रतिबन्दिस्थानमपि बाध्यताम् । तर्हि स्वपक्षोऽपि तव न सिद्ध्येत्, एवञ्च स्वविघातकत्वेन तव

न चैवं ज्ञानज्ञेययोरपि प्रतियोग्यभावादिसमकक्ष्य एव सम्बन्धोऽस्त्विति—वाच्यम् ; परस्पराध्यासात्मकसम्बन्धासम्भवेनैव सम्बन्धान्तरकल्पनात् तत्सम्भवे तस्यैव सम्बन्धत्वात् ।

---

जात्युत्तरता कथं न स्यादित्यत आह—कचेति । अहं ममाभिमानहीनत्वात् मुमुक्षूणां कोऽपि स्वीयतया स्वीकृतपक्षो नास्ति यद्बाधया जात्युत्तरता स्यादित्यर्थः । खण्डनपद्येषु इदं त्रयस्त्रिंशत् पद्यम् [पृ० ५००] बाधेन सम्बन्धस्य पारमार्थिकत्वापहारेऽपि व्यावहारिकत्वानपहारात् न स्वक्रियाविरोधादयः प्रसरन्तीत्यत आह---स्वक्रियाविरोधरूपप्रतिकूलतर्कस्य परिहृतत्वात् च । उक्तञ्च भामत्यां प्रमितावनपेक्षत्वेऽपि उत्पत्तौ प्रत्यक्षापेक्षत्वादनुत्पत्तिलक्षणमप्रामाण्यमिति चेन्न, उत्पादकाप्रतिद्वन्द्वित्वात्, न हि आगमज्ञानं सांव्यवहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति येन कारणाभावान्न भवेत्, अपि तु तात्त्विकं न च तत् तस्योत्पादकम् अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात् इति [पृ.९ ] । अत एव न जातिवादिसाम्यमिति—उक्तञ्च न्यायामृते अन्यथा जातिवाद्यपि इत्थं वदेत् इति । अयं भावः शब्दोऽनित्यः कृतकत्वात् घटवदिति स्थापनानुमाने प्रयुक्ते जात्युत्तरवादी यदि एवं वदेत् शब्दो यदि घटसाधर्म्येण कृतकत्वेन अनित्यः स्यात् तर्हि घटवदेव शब्दोऽपि रूपादिमान् स्यात् । अत्र स्थापनानुमानवादिना अनित्यत्वव्याप्य कृतकत्वेन हेतुना शब्देऽनित्यत्वं साध्यते जातिवादिना रूपादिमत्त्वाव्याप्येन कृतकत्वेन शब्दे रूपादिमत्त्वं साधयितुमिष्यते, यद्यपि घटे कृतकत्वं रूपादिमत्त्वञ्च विद्येते तथापि कृतकत्वं यथा अनित्यत्वव्याप्यं न तथा रूपादिमत्त्वव्याप्यम् अव्याप्येन अव्यापकानुमानासम्भवात् । रूपादिमत्त्वेन सह नियमरहितेन कृतकत्वेन शब्दे रूपादिमत्त्वमापादयितुमिष्यते जातिवादिना नैवमस्माभिर्नियमनिरपेक्षेण व्याप्तिशून्येन साहचर्यमात्रेण ज्ञानज्ञेययोः सम्बन्धाभाव आपाद्यते । तात्त्विकसम्बन्धप्रयोजकस्य देशकालविप्रकर्षाभावस्य अनुपलब्ध्या, तयोः तात्त्विकसम्बन्धाभाव आपाद्यते इति न जातिवादिसमता अस्माकमिति भावः ॥७॥

८ — प्रतियोग्यभावयोरिव ज्ञानज्ञेययोः अनाध्यासिक एव सम्बन्धः स्यादिति पूर्वपक्षी शंकते—न चैवं ज्ञानज्ञेययोरपि प्रतियोग्यभावादिसमकक्ष्य एव

न च—अज्ञानविषयस्य ब्रह्मणो विषयिण्यज्ञानेऽनध्यासेन विषयस्य विषयिण्यध्यासनियमो न सिद्ध इति—वाच्यम्; एवं नियमानभ्युपगमात्। किन्तु ज्ञानाज्ञानयोरध्यास एव विषयेण सम्बन्धः। स च ज्ञाने

---

सम्बन्धोऽस्त्विति वाच्यम्। सम्बद्धयोः सर्वत्र एक सम्बन्धिनि अपरसम्बन्धिनः अध्यास एव—सम्बन्धो न स्वीकृतः यथा अभावप्रतियोगिनोः एवमेव ज्ञानज्ञेययोरपि सम्बन्धोऽस्तु इति पूर्ववादिना न च वाच्यम्। कुतः एवं न वाच्यमित्यत आह सिद्धान्ती—**परस्पराध्यासात्मकसम्बन्धासम्भवेनैव सम्बन्धान्तरकल्पनात् तत्सम्भवे तस्यैव सम्बन्धत्वात्।** सम्बन्धिनोः परस्परावच्छेदेन अध्यस्तं यत् परस्परतादात्म्यं तत्स्वरूप इत्यर्थः परस्पराध्यासात्मकसम्बन्धशब्दस्य। सम्बन्धासम्भवेनेति। सम्बन्धिनोर्विप्रकर्षात् सम्बन्धस्य मिथ्यात्वे सिद्धे मिथ्यासम्बन्धोपहितरूपेण सम्बन्धिनोरपि मिथ्यात्वं सिद्ध्यति। तथा च उक्तरूपेण ज्ञानज्ञेययोर्मिथ्यात्वेऽपि शुद्धरूपस्य ज्ञानस्य अमिथ्यात्वेन अधिष्ठानत्वसम्भवात् तयोः सम्बन्धः अधिष्ठानारोप्ययोः पर्यवस्यति। प्रतियोग्यभावयोस्तु नाधिष्ठानारोप्यतासम्भवः। द्वयोरपि तयोः शुद्धरूपेणापि ज्ञेयत्वेन मिथ्यात्वात्। तस्मात् शुद्धरूपेण सम्बन्धिनोर्मिथ्यात्वसाधकाभावे अधिष्ठानत्वमेवेति भावः। इदं रजतयोरिव सत्यमिथ्यावस्तुनोः परस्पराध्यासवत् ज्ञानज्ञेययोः सत्यमिथ्यारूपयोः परस्पराध्यासात्मकसम्बन्धसम्भवात्, न सम्बन्धान्तरकल्पनम्। प्रतियोग्यभावयोर्द्वयोरपि दृश्यत्वेन मिथ्यात्वात् सत्यानृतमिथुनीकरणरूपाध्यासासम्भवात् सम्बन्धान्तरकल्पनम्। सत्यानृतरूपयोः सम्बन्धिनोः सम्भवे परस्पराध्यासात्मकसम्बन्धस्यैव कल्पनादिति भावः। विषयिणि विषयस्याध्यासनियमोऽसिद्ध इत्याह पूर्वपक्षी—**न च अज्ञानविषयस्य ब्रह्मणो विषयिण्यज्ञानेऽनध्यासेन विषयस्य विषयिण्यध्यासनियमो न सिद्ध इति वाच्यम्।** ज्ञाने यथा विषयस्याध्यासः अङ्गीक्रियते एवमेव अज्ञाने अज्ञानविषयस्यानध्यासात् विषयिणि विषयाध्यासनियमो न सिद्ध्यति सर्वत्रैव ब्रह्मण एव अज्ञानविषयत्वात्—आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवलेति संक्षेपशारीरकवचनात् ब्रह्मणः पारमार्थिकत्वेन स्वविषयाज्ञाने ब्रह्मणोऽनध्यासात् प्रदर्शितनियमो न सिद्ध्यतीति ज्ञानेऽपि विषयाध्यासो न सिद्ध्येत्।

ज्ञेयस्याज्ञेये चाज्ञानस्याध्यासात् उपपद्यते। अत एवाध्यासिकसम्बन्ध-व्यतिरेकप्रदर्शने अज्ञानस्याज्ञेयेनेत्यनुदाहरणम्।

ननु—श्रवणादीनां चरमसाक्षात्कारान्तानां स्वविषयेण ब्रह्मणा सम्बन्धानुपपत्तिः; न हि श्रवणादौ साक्षात्कारे वा ब्रह्माऽध्यस्त-मिति—चेत्।

न, साक्षात्कारो हि वृत्तिर्वा तदभिव्यक्तचैतन्यं वा। आद्ये तस्याः ब्रह्मण्यध्यस्तत्वेनाज्ञानाज्ञेययोरिव सम्बन्धोपपत्तेः। अत एव श्रवणादि-नापि मानसक्रियारूपेण न सम्बन्धानुपपत्तिः। द्वितीये तु अभेदेन

---

प्रदर्शितनियमोऽसिद्ध एव इत्याह सिद्धान्ती—एवं नियमानभ्युप-गमात् किन्तु ज्ञानाज्ञानयोरध्यास एव विषयेण सम्बन्धः स च ज्ञाने ज्ञेयस्य अज्ञेये चाज्ञानस्य आध्यासादुपपद्यते। अत एव आध्या-सिकसम्बन्धव्यतिरेकप्रदर्शने अज्ञानस्याज्ञेयेन इत्यनुदाहरणम्। विषयिणि विषयाध्यासनियमानभ्युपगमात् अज्ञानेऽज्ञेयस्य ब्रह्मणोऽनध्यासात् न आध्यासिकसम्बन्धव्यतिरेकप्रदर्शने उदाहरणं युक्तम्। किन्तु विषयेण ज्ञानाज्ञानयोरध्यास एव सम्बन्ध इत्येव नियमः स च ज्ञाने ज्ञेयस्याध्यासात् अज्ञेये ब्रह्मणि अज्ञानस्य अनाद्यध्यासादुपपद्यते। ज्ञाने ज्ञेयस्याध्यासनियमोऽपि नास्ति व्यभिचारादित्याह पूर्वपक्षी ननु श्रवणादीनां चरमसाक्षात्कारान्तानां स्व-विषयेण ब्रह्मणा सम्बन्धानुपपत्तिः। न हि श्रवणादौ साक्षात्कारे वा ब्रह्माध्यस्तमिति चेत्। ज्ञाने विषयस्याध्यास एव सम्बन्धः सिद्धान्त्यभिप्रेतः कस्मिंश्चिज्ज्ञाने यदि विषयो नाध्यस्तः स्यात् तर्हि विषयेण सह ज्ञानस्य सम्बन्ध एव न स्यात् यथा ब्रह्मविषयकश्रवणमनननिदि-ध्यासनसाक्षात्कारेषु ब्रह्म नाध्यास्तम् अध्यासान्यः सम्बन्धः ज्ञानज्ञेय-योस्त्वया नाङ्गीक्रियते अतः ब्रह्मतज्ज्ञानयोः सम्बन्ध एव न स्यात् सम्बन्धाभावे ब्रह्मणा ज्ञानं कथं विशिष्येत सम्बन्धाभावे विशेषणविशेष्यभावो न स्यादिति। ज्ञानज्ञेययोरिव ब्रह्मतज्ज्ञानयोरपि आध्यासिकसम्बन्धसत्त्वात् सम्बन्धा-भावो असिद्ध इत्याह सिद्धान्ती—न साक्षात्कारो हि वृत्तिर्वा तदभिव्यक्त-चैतन्यं वा? आद्ये तस्याब्रह्मण्यध्यस्तत्वेन अज्ञानाज्ञेययोरिव सम्बन्धो-

सम्बन्धानुपयोगात्तत्सम्बन्धानुपपत्तिर्न दोषाय। अत एव—चरमसाक्षात्कारस्य ब्रह्मण्यध्यस्तत्वात् यदि तद्विषयत्वं, तदा घटसाक्षात्कारस्यापि ब्रह्मण्यध्यस्तत्वात् तद्विषयत्वापत्तिरिति—निरस्तम्। घटसाक्षात्कारस्य घटाभिव्यक्तचैतन्यरूपत्वे ब्रह्मण्यनध्यासात्। वृत्तिरूपत्वे तस्याः ब्रह्मण्यध्यासेऽपि नाधिष्ठानभूतब्रह्मणो विषयत्वम्। ब्रह्मविषयताप्रयोजकस्याध्यासविशेषस्य तत्राभावात्। तस्य च फलबलकल्प्यत्वात्। न हि चरमवृत्तौ ब्रह्माकारतावदत्राऽपि साऽनुभूयते, इच्छेष्यमाणयोस्तु ज्ञानद्वारक एव सम्बन्ध इति न पृथक्सम्बन्धापेक्षा।

---

पपत्तेः। अत एव श्रवणादिनापि मानसक्रियारूपेण न सम्बन्धानुपपत्तिः। द्वितीये तु अभेदेन सम्बन्धानुपयोगात् तत्सम्बन्धानुपपत्तिर्न दोषाय। अत एव चरमसाक्षात्कारस्य ब्रह्मण्यध्यस्तत्वात् यदि तद्विषयत्वं तदा घटसाक्षात्कारस्यापि ब्रह्मण्यध्यस्तत्वात् तद्विषयत्वापत्तिरिति निरस्तम्। घटसाक्षात्कारस्य घटाभिव्यक्तचैतन्यरूपत्वे ब्रह्मण्यनध्यासात्। वृत्तिरूपत्वे तस्याब्रह्मण्यध्यासेऽपि नाधिष्ठानभूतब्रह्मणो विषयत्वम्। ब्रह्मविषयताप्रयोजकस्य अध्यासविशेषस्य तत्र अभावात्। तस्य च फलबलकल्प्यत्वात्। न हि चरमवृत्तौ ब्रह्माकारतावदत्रापि साऽनुभूयते। इच्छेष्यमाणयोस्तु ज्ञानद्वारक एव सम्बन्ध इति न पृथक्सम्बन्धापेक्षा। श्रवणादीनां चरमसाक्षात्कारपर्यन्तानां स्वविषयेन ब्रह्मणा सम्बन्धानुपपत्तिरित्युक्तं पूर्वपक्षिणा तत्समाधानाय प्रथमतः चरमसाक्षात्कारस्य ज्ञानरूपस्य ज्ञेयेन ब्रह्मणा आध्यासिकसम्बन्धमुपपादयति—साक्षात्कारो हीति। चरमसाक्षात्कारः अन्तःकरणवृत्तिर्वा वृत्त्यभिव्यक्तचैतन्यं वा? आद्ये, अन्तःकरणवृत्तिरूपत्वे तस्या वृत्तेः ब्रह्मण्यध्यस्तत्वेन ब्रह्मविषयकमज्ञानं यथा ब्रह्मण्यध्यस्तं तथैव ब्रह्मविषयिणी अन्तःकरणवृत्तिरपि ब्रह्मण्यध्यस्तैवेति ब्रह्मतद्विषयकवृत्तिज्ञानयोः आध्यासिकसम्बन्धोपपत्तेः न सम्बन्धाभाव इति। श्रवणादौ विध्यङ्गीकर्तॄणां विवरणाचार्याणां मते श्रवणादीनि मानसक्रियारूपाण्येव ताश्च क्रियाः ब्रह्मण्यध्यस्ताः एव। अत एव क्रियाभिः सह ब्रह्मण आध्यासिकसम्बन्ध एव न असम्बन्धः। साक्षात्कारो यदि वृत्त्यभिव्यक्तं चैतन्यमिति द्वितीयः पक्षः

न च—ज्ञाने सन्निकर्षाधीनस्येव स्मृतावनुभवाधीनस्येवेच्छायां

तर्हि वृत्त्यभिव्यक्तचैतन्येन ब्रह्मणो अभेदात् अभेदे सम्बन्धाभावाद् सम्बन्धानुपपत्तिर्न दोषः। पूर्वपक्षिशंकितं दोषं निरस्यन् आह—अत एवेति निरस्तमित्यन्तेन। उक्तञ्च न्यायामृते—ब्रह्मणि अध्यस्तस्य तत्साक्षात्कारत्वे घटसाक्षात्कारस्यापि तथात्वापातात् इति। अयं भावः सर्वस्यापि ब्रह्मण्यध्यस्तत्वेन घटसाक्षात्कारस्यापि ब्रह्मण्यध्यस्तत्वात् घटसाक्षात्कारस्यापि ब्रह्मीयत्वापातात् ब्रह्मविषयकत्वापातादित्यर्थः। पूर्वपक्षिणा शङ्कितमेतदपि निरस्तम्। कुत इत्यत आह—घटसाक्षात्कारस्य घटाभिव्यक्तचैतन्यरूपत्वे ब्रह्मणि अनाध्यासात् सावच्छिन्ने अध्यस्तस्य निरवच्छिन्ने अनध्यस्तत्वात्। घटसाक्षात्कारस्य अन्तःकरणवृत्तिरूपत्वे तस्यान्तःकरणवृत्तेः सर्वाधिष्ठाने ब्रह्मणि अध्यस्तत्वेऽपि अधिष्ठानभूतस्य ब्रह्मणो न वृत्तिविषयत्वम्। वृत्तिनिष्ठायां शुद्धब्रह्माकारतायामध्यासविशेषस्य प्रयोजकत्वात् घटाकारान्तःकरणवृत्तौ अध्यासविशेषस्याभावात्। अहं ब्रह्मेत्यादिवाक्यघटितसामग्रीजन्यवृत्तिनिष्ठस्य ब्रह्मतादात्म्यस्य अध्यासविशेषस्य वृत्तिनिष्ठायां शुद्धब्रह्माकारतायां प्रयोजकत्वात्, तदभावात् न घटाकारवृत्तेः ब्रह्मविषयकत्वम्। यादृशसामग्रीजन्यज्ञाने ब्रह्माज्ञाननिवृत्तिफलकत्वं तस्यैव ज्ञानस्य ब्रह्माकारत्वं कल्प्यते, ब्रह्माज्ञाननिवृत्तिरूपफलेन वृत्तेर्ब्रह्माकारत्वं कल्प्यते। अनुभवबलादपि न घटाकारवृत्तेर्ब्रह्माकारत्वमित्याह—न हि चरमवृत्तौ इति। चरमवृत्तौ ब्रह्माकारतातत्त्वज्ञानानुभवसिद्धा सा न घटाकारवृत्तौ अनुभूयते। पूर्वपक्षिणा इच्छेष्यमाणयोर्विषयविषयिभावः सम्बन्धः क्लृप्तः इत्युक्तं तन्निराचष्टे इच्छेष्यमाणयोस्तु इति। ज्ञानद्वारक एव सम्बन्धः—इच्छोपधायकज्ञानविषयत्वरूपः सम्बन्धः इच्छेष्यमाणयोः ज्ञानसम्बन्धस्यैव इच्छासम्बन्धत्वादिति भावः। उक्तञ्च कल्पलतायां शङ्करमिश्रैः—एतादृशी च सविषयता इच्छाकृत्योरपि, परन्तु न सा स्वाभाविकी किन्तु ज्ञानोपाधिकी ज्ञानस्य तु स्वाभाविकीति विशेषः। अत एव विषयप्रवणत्वं ज्ञानस्यैव न तु इच्छाकृत्योः इति [आत्मतत्त्वविवेकः, पृ० ५०९] सम्बन्ध्यविप्रकर्षस्य सम्बन्धप्रयोजकत्वे इच्छाया भाविविषयकत्वं न स्यात् तस्मात् इच्छाया इव ज्ञानस्यापि विप्रकृष्टे सम्बन्धोऽस्तु इति पूर्वपक्षिशंकां प्रकारान्तरेण निरस्यति—इच्छेष्यमाणयोस्तु इति। ज्ञानद्वारक एव सम्बन्धो न पृथक् सम्बन्धापेक्षा इति। ज्ञानज्ञेययोर्विषय-

ज्ञानाधीनस्य विषयसम्बन्धस्यानुभवात् सन्निकर्षादिभ्यो भिन्न इव ज्ञानाद्भिन्न एव सम्बन्धो वक्तव्य इति—वाच्यम्।

सम्बन्धानुभवस्य ज्ञानद्वारकसम्बन्धेनाप्युपपत्तेरतिरिक्तसम्बन्धकल्पने मानाभावात्। ज्ञानाधीनसम्बन्धान्तरस्याननुभवात्। ज्ञाने त्विन्द्रियसन्निकर्षादिना न सम्बन्धानुभवोपपत्तिः, इन्द्रियसन्निकर्षादीनामतीन्द्रियत्वेन तेषामनुमित्यादिनोपस्थितिं विनैव घटज्ञानमित्यादिसम्बन्धानुभवात्। स्मृतौ तु अनुभवाधीनसम्बन्धस्य शङ्कैव नास्ति,

---

विषयिभावः पारमार्थिकः सम्बन्धो वक्तव्य इत्याह पूर्वपक्षी—न च ज्ञाने सन्निकर्षाधीनस्येव स्मृतौ अनुभवाधीनस्येव इच्छायां ज्ञानाधीनस्य विषयसम्बन्धस्यानुभवात् सन्निकर्षादिभ्यो भिन्न इव ज्ञानात् भिन्न एव सम्बन्धो वक्तव्य इति वाच्यम्। ज्ञाने इन्द्रियसन्निकर्षाधीनं सविषयकत्वं वास्तवमस्ति तदपि न स्यात् तत्र घटसन्निकृष्टेन्द्रियजन्यत्वमेव घटविषयकत्वमिति वक्तुं शक्यत्वात् स्मृतावपि घटविषयकानुभवजन्यत्वमेव सविषयकत्वमस्तु न वास्तवविषयविषयिभावः ज्ञानाधीनं ज्ञायमानं वास्तवं सविषयकत्वं न स्यात् तथेच्छायामपि स्वजनकंज्ञानाधीनं सविषयकत्वमस्ति स एव विषयेच्छयोः सम्बन्धः पारमार्थिकविषयविषयिभावः वक्तव्यः तादृशविषयविषयिभावसम्बन्धस्यैवानुभूयमानत्वात्। ज्ञाने यथा इन्द्रियसन्निकर्षादिभ्यो भिन्नः विषयविषयिभावः विषयसम्बन्धोऽनुभवसिद्धोऽङ्गीक्रियते तथा इच्छेष्यमाणयोरपि अङ्गीकर्तव्यः। ज्ञाने इन्द्रियसन्निकर्षादिभ्यो भिन्नः विषयविषयिभावः यथा स्वीक्रियते तथा इच्छेष्यमाणयोरपि ज्ञानात् भिन्नः—ज्ञानाघटितः घटविषयकज्ञानजन्यत्वेनैव इच्छाया घटीयत्वं न वक्तव्यं किन्तु ज्ञानाघटितः वास्तवविषयविषयिभावः सम्बन्धो अङ्गीकर्त्तव्यः। इति पूर्वपक्षिण आशयः। इच्छेष्यमाणयोः विषयविषयिभावः सम्बन्धो नाङ्गीकर्तव्य इत्याह सिद्धान्ती—सम्बन्धानुभवस्य ज्ञानद्वारकसम्बन्धेनाप्युपपत्तेरतिरिक्तसम्बन्धकल्पने मानाभावात्। ज्ञानाधीनसम्बन्धान्तरस्याननुभवात्। ज्ञाने तु इन्द्रियसन्निकर्षादिना न सम्बन्धानुभवोपपत्तिः, इन्द्रियसन्निकर्षादीनामतीन्द्रियत्वेन तेषामनुमित्यादिना उपस्थितिं विनैव घटज्ञानमित्यादिसम्बन्धानुभवात्। स्मृतौ तु अनुभवाधीनसम्बन्धस्य

अनुभवस्य तदानीमसत्त्वात्। उभयोरपि ज्ञानत्वेन तुल्यवदेव सम्बन्धसम्भवाच्च ॥८॥

न च—समूहालम्बनजन्यैकविषयेच्छायामुभयविषयत्वापत्तिः, जनकज्ञानस्योभयविषयत्वादिति—वाच्यम्।

अतिरिक्तसम्बन्धपक्षेऽपि तुल्यत्वात्। अथैकविषयावच्छेदेनैवं

---

शंकैव नास्ति अनुभवस्य तदानीम् असत्त्वात्। उभयोरपि ज्ञानत्वेन तुल्यवदेव सम्बन्धानुभवाच्च। इच्छेष्यमाणयोः सम्बन्धानुभवस्य ज्ञानद्वारकसम्बन्धेन—घटविषयकज्ञानजन्यत्वरूपज्ञानद्वारकसम्बन्धेन उपपत्तेः विषयविषयिभावाख्यातिरिक्तसम्बन्धकल्पने मानाभावात्। इच्छेष्यमाणयोः ज्ञानजन्यत्वव्यतिरिक्तज्ञानाधीनसम्बन्धान्तरस्य अननुभवात्। न तयोः विषयविषयिभावाख्यः अन्यः सम्बन्धः कल्पयितव्यः। ज्ञानविषययोस्तु सम्बन्धानुभवः घटसन्निकृष्टेन्द्रियजन्यत्वादिरूपो न भवितुमर्हति। इन्द्रियसन्निकर्षादीनामतीन्द्रियत्वात् ज्ञानविषययोः सम्बन्धानुभवेऽतीन्द्रियसन्निकर्षादिर्भानाय तेषामनुमित्यादिना उपस्थितिर्वक्तव्या सा च न सम्भवति अनुमित्यादिना तेषाम् उपस्थितिं विनैव घटीयं ज्ञानमिति घटज्ञानयोः सम्बन्धानुभवात्। स्मृतावपि घटविषयकानुभवजन्यत्वमेव स्वविषयकत्वं स्यादिति यत् पूर्वपक्षिणा शंकितं तदसङ्गतमेव इत्याह—स्मृतौ तु इति। स्मृतिकाले जनकानुभवस्य असत्त्वात् असतोऽनुभवस्य स्मृतिस्मर्यमाणयोः सम्बन्धत्वेन मानासम्भवात्। स्मृत्यनुभवयोरुभयोरपि ज्ञानत्वेन तुल्यत्वात् अनुभवेन अनुभूयमानस्य यथा सम्बन्धो भासते तथा स्मृत्या स्मर्यमाणस्यापि सम्बन्धो भासते। अनुभवानुभूयमानयोः यथा विषयविषयिभावः सम्बन्धः तथा स्मृतिस्मर्यमाणयोरपीति भावः ॥८॥

९—घटविषयकज्ञानजन्यत्वेनैव इच्छायाः घटीयत्वं न वास्तवं घटविषयकत्वमिच्छायामस्ति इति यद्युच्यते तर्हि अतिप्रसंग इति पूर्वपक्षी शंकते—न च समूहालम्बनजन्यैकविषयेच्छायाम् उभयविषयत्वापत्तिः जनकज्ञानस्योभयविषयत्वादिति वाच्यम्। अतिप्रसङ्गमेवाह—समूहालम्बनेति। घटपटौ समूहालम्बनज्ञानानन्तरं पटो मे भूयादितीच्छाया अपि घटीयत्वं स्यात्। इच्छायाः घटविषयसमूहालम्बनज्ञानजन्यत्वात् इति भावः। इच्छीयविषयतायाः

ज्ञानस्य जनकत्वात् नोभयविषयत्वं, समं ममाऽपि जनकज्ञाने जनकतावच्छेदकविषयत्वस्यैव सम्बन्धत्वात् ।

न नित्येश्वरेच्छायाः विषयत्वसम्बन्धानुपपत्तिः तस्यः अस्माभिरनङ्गीकारात् । तार्किकाणामपि तत्साधकमानबलेन विलक्षणसम्बन्धकल्पनेऽपि जन्यज्ञानजन्येच्छयोरुक्तप्रकारेणैव विषयताभ्युपगमात् ।

---

अतिरिक्तत्वमतेऽपि अयं दोषः स्यादित्याह सिद्धान्ती—**अतिरिक्तसम्बन्धपक्षेऽपि तुल्यत्वात्** । इच्छाविषयत्वस्य अतिरिक्तत्वपक्षेऽपि ज्ञानविषयत्वमात्रस्य इच्छीयविषयत्वप्रयोजकत्वस्वीकारे तवापि उक्तदोषापत्तेरित्यर्थः । तुल्यदोषापत्तिपरिहाराय पूर्वपक्षिणो यत् समाधानं ममापि तत् सममित्याह सिद्धान्ती—[पृ० २०७] **अथ एकविषयावच्छेदेनैव ज्ञानस्य जनकत्वात् नोभयविषयत्वं समं ममापि जनकज्ञाने जनकतावच्छेदकविषयत्वस्यैव सम्बन्धत्वात्** घटपटौ इति समूहालम्बनज्ञानानन्तरं पटो मे भूयादिति इच्छाया अपि पटविषयकत्वेनैव ज्ञानस्य जनकत्वान्न तु घटविषयकत्वेनापि समूहालम्बनज्ञानस्य यत् पटेच्छाजनकत्वं तत् पटविषयकत्वेनैवावच्छिद्यते न तु घटविषयकत्वेनापीति भावः । इष्टसाधनत्वप्रकारतानिरूपिता विशेष्यता यत्र तदवच्छेदेनैव ज्ञानस्य इच्छाजनकत्वात् । विशेष्यतासम्बन्धेन इच्छोत्पादकत्वात् । पटेच्छाजनकसमूहालम्बनज्ञाने इष्टसाधनत्वप्रकारतानिरूपिता विशेष्यता पटे एव वर्तते न घटे तथा च नातिप्रसङ्गः । नित्येश्वरेच्छाया अजन्यत्वात् जनकज्ञानीयविषयत्वेन इच्छीयविषयत्वस्य निर्वाहो न स्यादिति पूर्वपक्षी शंकते—**न नित्येश्वरेच्छाया विषयत्वसम्बन्धानुपपत्तिः** । नित्याया ईश्वरेच्छायाः घटादिविषयसम्बन्धो न स्यात् तद्विषयकज्ञानजन्यत्वाभावात् इति भावः । अनभ्युपगमेन परिहरति सिद्धान्ती—**तस्या अस्माभिरनङ्गीकारात् । तार्किकानामपि तत्साधकमानबलेन विलक्षणसम्बन्धकल्पनेऽपि जन्यज्ञानजन्येच्छयोरुक्तप्रकारेणैव विषयताभ्युपगमात्** । ईश्वरीयज्ञानेच्छादीनामद्वैतसिद्धान्ते नित्यत्वानभ्युपगमात् प्रामाणिकवशेन जायमानायामीश्वरोपाधिमायावृत्तेरेव ज्ञानेच्छादिरूपत्वस्वीकारात् । उक्तं च—विवरणे पञ्चमवर्णके—

न च पुत्रादिधीजन्यसुखादेः पुत्रादिविषयत्वापत्तिः, इच्छान्यायादिति—वाच्यम्। वैषम्यात् ज्ञानस्य समानत्वेऽपि इच्छादावेव

---

सर्वस्य कर्तृत्वादेव वर्तमानस्वकार्यसर्वविषयज्ञता तावत् सिद्धा एवं तत्तत्-कालेऽतीतसर्वविषयावगमात् अनुभूतविषयासम्प्रमोषा स्मृतिः स्वमायापरिणामो-पाधिरनावरणा सर्वविषया कल्प्यते। [ पृ० २१० काशीसंस्करणम् ] लघु-चन्द्रिकायां स्वप्रकाशत्ववादे—ईश्वरस्य नैका वृत्तिः सर्वविषयिका किन्तु भविष्येषु अनुमितिः भूतेषु स्मृतिः विद्यमानेषु प्रत्यक्षरूपा इति [पृ० ७८२ ]। एतदेवोक्तं मूले तस्या अस्माभिरनङ्गीकारात्। ईश्वरीयनित्येच्छाया अस्माभिरनङ्गीकारात्। विवरणाचार्यैरीश्वरीयज्ञानस्यैव अनित्यत्वप्रतिपादनात् इच्छादीनामपि तेनैवा-नित्यत्वं बोध्यम्। तार्किकाणामपि ईश्वरसाधकं मानं त्वदीय-ज्ञानेच्छादीनामपि नित्यत्वं साधयति तेषामपि मते ज्ञानीयविषयस्यैव इच्छीयविषयत्वात्। तन्मते ईश्वरीय-ज्ञानेच्छयोर्जन्यजनकभावाभावेऽपि विलक्षणसम्बन्धकल्पनात् ज्ञानेच्छयोः सामानाधिकरण्यात् स्वसमानाधिकरणज्ञानीया या इष्टसाधनत्वप्रकारतानिरूपिता विशेष्यता तदवच्छेदकघटत्वाद्यवच्छिन्नोक्तविशेष्यता इच्छादेः सम्बन्धः। उक्तं च कल्पलतायां शंकरमिश्रैः—परन्तु इच्छाकृत्योः स्वविषयता न स्वाभाविकी किन्तु ज्ञानौपाधिकी। ज्ञानस्य तु स्वाभाविकीति विशेषः। अत एव विषयप्रवणत्वं ज्ञानस्यैव न तु इच्छाकृत्योः। लक्षणमपि तदेव ज्ञानस्य। यदीच्छाधिकरणक्षणाव्य-वहितपूर्वक्षणस्थितिकसमानाधिकरणज्ञानस्येव इच्छाया विषयं [प्रति] निबन्धन-प्रयोजकत्वात् एवञ्च ईश्वरेच्छाया अपि स्वविषयतां नित्यज्ञानस्यैवानियामक-त्वमिति भावः [आत्म० त० वि० पृ० ५०९] उक्तञ्च आत्मतत्त्वविवेकप्रकाशे वर्धमानोपाध्यायैः—इच्छादेर्हि विषयता याचितमण्डनन्यायेन न स्वाभाविकीति। जन्यज्ञानजन्यायाम् इच्छायां ज्ञानद्वारक एव इच्छेष्यमाणयोः सम्बन्धः नित्ये-च्छायामपि इष्यमाणेन विषयेण सम्बन्धो ज्ञानद्वारको यथा सम्भवति तथा प्रागेव निरूपितः। यद्विषयकज्ञानजन्या या इच्छा सा तद्विषयिणीत्यभ्युपगमे अनिष्ट-प्रसंगमाह पूर्वपक्षी—न च पुत्रादिधीजन्यसुखादेः पुत्रादिविषयत्वापत्तिः इच्छान्यायादिति वाच्यम्। घटविषयकज्ञानजन्यत्वमेव इच्छायास्तद्विषयकत्व-मिति यदुच्यते तर्हि पुत्रादिविषयकज्ञानजन्यत्वान्निर्विषयस्य सुखादेरपि पुत्रादि-

सविषयत्वप्रतीतिः, न तु सुखादौ । वस्तुस्वाभाव्यात् त्वयाप्यस्यैवार्थस्य वक्तव्यत्वात् । अन्यथा स्फटिके जपाकुसुमसन्निधानाल्लौहित्यवल्लोष्टे-ऽप्यापद्येत । अथ धर्मे तात्पर्यस्यानध्यासात्तात्पर्यसम्बन्धो न स्यात् । न; तात्पर्यं हि तत्प्रतीत्युद्देश्यकत्वम्, प्रतीतेश्च ज्ञेयान्तरेणेव धर्मेणाऽपि सम्बन्धोऽध्यस्य एव । प्रतीतिद्वारा च धर्मतात्पर्ययोः सम्बन्ध इत्यनुपपत्त्यभावात् ।

---

विषयकत्वव्यवहारः स्यात् इत्यर्थः । वस्तुस्वाभाव्यादेव सुखादेर्निर्विषयत्वं ज्ञाने-च्छादेः सविषयत्वमिति परिहरति सिद्धान्ती—वैषम्यात् ज्ञानस्य समानत्वेऽपि इच्छादावेव स्वसविषयत्वप्रतीतिः न सुखादौ । वस्तुस्वाभाव्यात् त्वयापि अस्यैवार्थस्य वक्तव्यत्वात् । अन्यथा स्फटिके जपाकुसुमसन्नि-धानाल्लौहित्यवल्लोष्टेऽप्यापद्येत । इच्छायां सुखे च ज्ञानजन्यत्वस्य समान-त्वेऽपि इच्छायामेव सविषयत्वप्रतीतिः न सुखादेः सविषयत्वप्रतीतिः वस्तु-स्वाभाव्यात् त्वयापि पूर्वपक्षिणा वस्तुस्वाभाव्यस्यैव शरणीकरणीयत्वात् । अन्यथा वस्तुस्वाभाव्यस्य अनादरे जपाकुसुमसान्निध्यात् स्फटिके लौहित्यवत् जपाकुसुम-सान्निध्यात् लोष्टे मृत्पिण्डेऽपि लौहित्यं स्यात् जपाकुसुमसान्निध्यस्य उभयत्र तुल्य-त्वादिति भावः । ब्रह्मविषयकसाक्षात्कारस्थले यदि साक्षात्कारस्य ब्रह्मण्यध्यासो-ऽङ्गीक्रियते तर्हि न्यायसाम्यात् वेदतात्पर्यादेरपि धर्मादौ अध्यासः स्यात् इति पूर्वपक्षी शंकते—अथ धर्मे तात्पर्यस्यानध्यासात् तात्पर्यसम्बन्धो न स्यात् । धर्मेऽनध्यस्ततात्पर्येण धर्मस्य सम्बन्धो न स्यात् अनाध्यासिकसम्बन्धस्य त्वया अनङ्गीकारात् । समाधत्ते सिद्धान्ती—न, तात्पर्यं हि तत्प्रतीत्यु-द्देश्यकत्वं प्रतीतेश्च ज्ञेयान्तरेणेव धर्मेणापि सम्बन्धोऽध्यस्त एव । प्रतीति-द्वारा च धर्मतात्पर्ययोः सम्बन्ध इत्यनुपपत्त्यभावात् । धर्मतात्पर्यको वेदः वेदस्य तात्पर्यं धर्मे इत्यत्र तात्पर्यं नाम वेदस्य धर्मप्रतीत्युद्देश्यकत्वं तच्च धर्मविषयकप्रतीतिजनकत्वं वेदस्य घटप्रतीतौ यथा घटस्य आध्यासिकः सम्बन्धः तथा धर्मप्रतीतावपि धर्मस्याध्यासिकः सम्बन्धः । वेदतात्पर्येण सह धर्मस्य प्रतीतिद्वारैव सम्बन्धः प्रतीतौ धर्मस्य अध्यासात् आध्यासिक एव सम्बन्धः तथा च न काप्यनुपपत्तिरिति भावः । ननु ज्ञानज्ञेययोः आध्यासिकसम्बन्धादन्यः सम्बन्ध

न च—ज्ञानस्य प्रकाशत्वेन प्रदीपसाम्येऽपि आन्तरत्वेन तद्वैलक्षण्यमङ्गीकर्तव्यम्। अत इच्छादिवद्विप्रकृष्टेनापि सम्बन्धः स्यात्, अन्यथा प्रदीपवदेवाध्यासिकसम्बन्धोऽपि न स्यात्। परोक्षवृत्तौ विप्रकृष्टसम्बन्धदर्शनाच्चेति—वाच्यम्।

देशकालविप्रकर्षाभावस्य सम्बन्धसामान्यप्रयोजकत्वे सम्भवत्यान्तरप्रतियोगिकसम्बन्धभिन्नसम्बन्ध एवास्य प्रयोजकत्वमिति कल्पनाबीजाभावात्। इच्छायास्तु नेष्यमाणेन साक्षात्सम्बन्धः, किन्तु ज्ञानद्वारकः परम्परासम्बन्ध एवेत्युक्तम्। परोक्षस्थले तु यद्यप्यधिष्ठान-

---

एव न सम्भवति तथा हि ज्ञानं प्रकाशः प्रकाशस्य च विप्रकृष्टेन प्रकाश्येन सम्बन्धाभावस्य प्रदीपादौ दृष्टत्वात् अत्रापि विप्रकृष्टेन प्रकाश्येन—ज्ञेयेन ज्ञानस्य विषयविषयिभावसम्बन्धो न युक्तः तथा च ज्ञानं विप्रकृष्टेन विषयेण सम्बद्धयते; प्रकाशत्वात् प्रदीपवत् इत्याशंक्य आह पूर्वपक्षी—न च ज्ञानस्य प्रकाशत्वेन प्रदीपसाम्येऽपि आन्तरत्वेन तद्वैलक्षण्यमङ्गीकर्तव्यम्। अत इच्छादिवत् विप्रकृष्टेनापि सम्बन्धः स्यात् अन्यथा प्रदीपवदेव आध्यासिकसम्बन्धोऽपि न स्यात्। परोक्षवृत्तौ विप्रकृष्टसम्बन्धदर्शनाच्चेति वाच्यम्। यथा इच्छाया आन्तरायाः बहिष्ठविषयविषयकत्वमेवं प्रकाशरूपज्ञानस्यापि आन्तरत्वेन प्रदीपवैलक्षण्यात् इच्छादिवत् विप्रकृष्टेनापि सम्बन्धः स्यात्। तथा परोक्षस्थलेऽन्तःकरणवृत्तेर्बहिर्निःसरणाभावेन तद्विषयिणी वृत्तिरन्तरेव भवति इति त्वन्मते स्वीक्रियते एवञ्च आन्तरायां परोक्षवृत्तौ विप्रकृष्टेनापि विषयेण सम्बन्धस्य त्वन्मते दर्शनाच्च विप्रकृष्टेन प्रकाश्येन आध्यासिकसम्बन्धातिरिक्तो विषयविषयिभावसम्बन्धो युक्त एव इत्यर्थः। तथा च तदीयानुमाने आन्तरत्वाभाव उपाधिरित्युक्तं भवति। यदि प्रदीपदृष्टान्तेन प्रकाशरूपज्ञानस्य विषयेण सम्बन्धाभावः कथ्यते तर्हि प्रदीपे प्रकाश्यस्य घटादेरध्यासाभावात् तद्दृष्टान्तेन प्रकाशरूपे ज्ञानेऽपि ज्ञेयस्य अध्यासो न युक्तः इत्याह अन्यथा प्रदीपवदेव आध्यासिकसम्बन्धोऽपि न स्यादिति। समाधत्ते सिद्धान्ती—देशकालविप्रकर्षाभावस्य सम्बन्धसामान्यप्रयोजकत्वे सम्भवति आन्तरप्रतियोगिकसम्बन्धे एव अस्य प्रयोजकत्वमिति कल्पनाबीजा-

चैतन्येन साक्षादेव सम्बन्धः; तथापि विषयाकारवृत्त्या साक्षात्सम्बन्धाभावात् वृत्त्यवच्छिन्नचैतन्येन विषयस्य परम्परासम्बन्धं एव।

ननु—तवापि मते ज्ञेयस्य न स्वज्ञानेऽध्यस्तत्वनियमः; अनध्यस्तस्य तुच्छस्य पञ्चमप्रकारत्वपक्षे अविद्यानिवृत्तेः भावाद्वैतपक्षे अभावस्य दृग्रूपत्वेऽपि स्वज्ञानेऽनध्यासात्। अपरोक्षैकरसे ब्रह्मण्यध्यस्तस्य व्यावहारिकस्यातीतादेर्नित्यातीन्द्रियस्य च परोक्षानुभवरूपे स्वज्ञानेऽनध्यासात्। स्मर्यमाणस्य च स्मृतिरूपे स्वज्ञानेऽनध्यासात्।

---

भावात्। इच्छायास्तु नेष्यमाणेन साक्षात्सम्बन्धः किन्तु ज्ञानद्वारकः परम्परासम्बन्ध एव इत्युक्तम्। परोक्षस्थले तु यद्यप्यधिष्ठानचैतन्येन साक्षादेव सम्बन्धः, तथापि विषयाकारवृत्त्या साक्षात् सम्बन्धाभावात् वृत्त्यवच्छिन्नचैतन्येन विषयस्य परम्परासम्बन्ध एव। सम्बन्धसामान्यं प्रति देशकालविप्रकर्षाभावस्य प्रयोजकत्वात् प्रयोजकाभावे प्रयोज्यस्यासम्भवात् बाह्यान्तरसम्बन्धभेदेन प्रयोजकभेदकल्पने गौरवात् मानाभावाच्च। यदपि इच्छाया इष्यमाणेन देशविप्रकर्षेऽपि सम्बन्धः इत्युक्तं तन्न, तयोः साक्षात्सम्बन्धाभावात् किन्तु ज्ञानद्वारक परम्परासम्बन्ध एव तयोरित्युक्तमधस्तात्। परोक्षज्ञानस्थलेऽपि परोक्षज्ञातविषयस्य स्वाधिष्ठानचैतन्येन साक्षादेवाध्यासिकः सम्बन्धः वर्तते विषयाकारपरोक्षवृत्त्या परोक्षवृत्तेर्बहिर्निर्गमनाभावेन परोक्षवृत्त्या विषयस्य साक्षात्सम्बन्धाभावेऽपि परोक्षवृत्त्यवच्छिन्नचैतन्येन विषयस्य परम्परासम्बन्धो विद्यत एव। अयं भावः चैतन्यावच्छेदकवृत्तिविषयत्वरूपपरंपरासम्बन्धः परोक्षवृत्त्यवच्छिन्नचैतन्येन विषयस्य वर्तत एव। शुद्धचितो ज्ञानरूपत्वेऽपि जानातिपदानुपस्थाप्यत्वात् जानातिपदेन सविषयकत्वरूपेणैव ज्ञानस्योपस्थापनात् चितः सविषयकत्वाय विषयाकारवृत्तिविशिष्टचिद्वाचित्वं जानातेर्वक्तव्यम्। अन्यथा जानातेः सकर्मकत्वानुपपत्तेः। अतः परोक्षवृत्त्यवच्छिन्नचिता विषयस्य परम्परासम्बन्ध एव। ज्ञानेन स्वविषयस्य आध्यासिक एव सम्बन्ध इति सिद्धान्तं पराकर्तुं व्यभिचारमुद्भावयन् पूर्वपक्षी शंकते—ननु तवापि मते ज्ञेयस्य न स्वज्ञानेऽध्यस्तत्वनियमः अनध्यस्तस्य तुच्छस्य पञ्चमप्रकारत्वपक्षेऽविद्यानिवृत्तेः, भावाद्वैतपक्षे अभावस्य अदृग्रूपत्वेऽपि स्वज्ञानेऽनध्यासात्। अपरोक्षैकरसे ब्रह्मणि

प्रातिभासिकस्य च प्रातिभासिके स्वज्ञानेऽनध्यासात् । त्वन्मते भ्रमरूप-ज्ञानस्यापि कल्पितत्वादिति—चेत् ॥६॥

अध्यस्तस्य व्यावहारिकस्य अतीतादेर्नित्यातीन्द्रियस्य च परोक्षानुभवरूपे स्वज्ञानेऽनध्यासात् । स्मर्यमाणस्य च स्मृतिरूपे स्वज्ञानेऽनध्यासाद् । प्रातिभासिकस्य च प्रातिभासिके स्वज्ञानेऽनध्यासात् । त्वन्मते भ्रमरूपज्ञानस्यापि कल्पितत्वादिति चेत् । ज्ञानविशेषे ज्ञेयेन सह अध्यासातिरिक्तसम्बन्धस्त्वयाऽपि अभ्युपगतः इति सर्वत्रापि ज्ञाने अध्यासातिरिक्त एव सम्बन्धोऽस्तु इत्याह—नन्विति । अध्यस्तत्वनियम इति । नियमाभावे दृश्यप्रपञ्चस्य दृशि अध्यासो न सिध्येत् । यज्ज्ञेयं तज्ज्ञाने अध्यस्तमिति नियमः कुतो नास्ति इत्यतः व्यभिचारान् दर्शयति—अनध्यस्तस्येति । तुच्छस्य स्वज्ञाने शब्दजन्ये अनध्यासात् तद् उपपादनाय उक्तम्—अनध्यस्तस्येति । सिद्धान्ते तुच्छस्य अनध्यस्तत्वाङ्गीकारात् अध्यस्ते प्रातिभासिकत्वमङ्गीकृत्य असद्वैलक्षण्याङ्गीकारात् । तुच्छस्य च अध्यासाङ्गीकारे प्रातिभासिकत्वापत्तेरिति भावः । पञ्चमप्रकारेति—

> "न सन्नासन्न सदसन्नानिर्वाच्योऽपि तत्क्षयः ।
> यक्षानुरूपो हि बलिरित्याचार्या व्यचीचरन् ॥१॥"

इति आनन्दबोधैर्मकरन्दे उक्तत्वात् । आचार्याः इष्टसिद्धिकाराः विमुक्तात्मभगवत्पादाः । अविद्यायाः अनिर्वाच्यत्वेन सदसद्वैलक्षण्यात् प्रतियोगितदभावयोर्वैलक्षण्यस्य आवश्यकतया अविद्यानुवृत्तेः पञ्चमप्रकारत्वमङ्गीकृतम् अनिर्वाच्यत्वस्य चतुर्थप्रकारत्वात् अनिर्वाच्यनिवृत्तिः पञ्चमप्रकारेति भावः । अविद्यानिवृत्तेरध्यस्तत्वे प्रातिभासिकत्वापत्त्या पञ्चमप्रकारत्वभङ्ग इति भावः । भावाद्वैतपक्षे इति । अभावरूपाधर्मा नाद्वैतं घ्नन्तीति ब्रह्मसिद्धौ मण्डनेन प्रदर्शितं मतान्तरमनुसृत्य इदमुक्तमिति बोध्यम् । ननु अभावस्य प्रपञ्चान्तर्गतस्य स्वज्ञाने अध्यास एव इति चेन्न, तस्य पारमार्थिकत्वाङ्गीकारात् । ननु कथं पारमार्थिकत्वमभावस्य तथात्वे दृग्रूपत्वापत्तेः । न च इष्टापत्तिः भावासावयोः तदयोगात् इत्यत उक्तम्—अदृग्रूपत्वेऽपीति । अब्रह्मरूपत्वेऽपीत्यर्थः । ननु तर्हि अद्वैतहानिः अत उक्तं भावाद्वैतमते इति । अभावरूपं द्वितीयं पारमार्थिकमस्ति । अद्वितीयमित्यादिश्रुतिस्तु द्वितीयाभावनिषेधपरेति मते इति भावः । तथा च उक्तनियमस्य

मैवम्, तुच्छस्याज्ञेयत्वेन ज्ञाने अध्यासाभावाद्। ज्ञेयस्य हि ज्ञानेऽध्यासः तुच्छस्य तु न ज्ञेयतेत्यग्रे वक्ष्यते। पञ्चमप्रकाराविद्यानिवृत्तेरपि प्रतियोग्यधिकरणे ध्वंसस्यापि तत्र वृत्तेरवश्यंभावात् अध्यास एव सम्बन्धः। वस्तुतस्त्वविद्यानिवृत्तेः पञ्चमप्रकारत्वं च भावाद्वैतं चाऽनभ्युपगमपराहतम्। यथा चाविद्यानिवृत्तेर्ब्रह्मरूपत्वं सर्वाद्वैतं च तथोपरिष्टाद्वक्ष्यते। अपरोक्षैकरसे ब्रह्मण्यध्यस्तस्यातीतादेरनुमित्यादिरूपज्ञाने अनध्यासेऽपि यस्मिंश्चैतन्ये तदध्यस्तं तदेव चैतन्यमनुमित्यादिरूपवृत्त्यवच्छिन्नमिति नाध्यासानुपपत्तिः।

---

तुच्छे अविद्यानिवृत्तौ च व्यभिचार इति भावः। पुनरपि उक्तनियमस्य स्थलान्तरे व्यभिचारमाह—अपरोक्षेति। अतीतादेर्व्यावहारिकस्य परोक्षानुभवे अनुमित्यादिरूपस्वज्ञाने अनध्यासादित्यन्वयः। नन्वतीतादेरपि व्यावहारिकस्य अनुमित्यादिरूपपरोक्षज्ञाने एवाध्यासोऽस्तु इत्यत आह अपरोक्षेति। अपरोक्षानुभवैकरसे ब्रह्मणि सर्वप्रपञ्चस्य अध्यस्तत्वात् अतीतादेरपि तत्रैवाध्यासः न तु परोक्षानुभवरूपस्वज्ञाने अतः अतीतादेः स्वज्ञाने अनध्यस्तत्वात् यज्ज्ञेयं तज्ज्ञाने अध्यस्तमिति नियमस्य अत्रापि व्यभिचारः। एवमेव नित्यातीन्द्रियधर्मादेः ब्रह्मणि अध्यस्तत्वात् नित्यातीन्द्रियविषयकपरोक्षज्ञाने अनध्यासात् नियमस्य व्यभिचारः। स्थलान्तरेऽपि व्यभिचारमाह—स्मर्यमाणस्येति। स्मर्यमाणस्य स्वज्ञाने स्मृतिरूपवृत्तौ अनध्यासादिति भावः। स्थलान्तरे व्यभिचारमाह—प्रातिभासिकस्येति। प्रातिभासिकशुक्तिरूप्यादेः स्वज्ञाने अध्यासो न भवितुमर्हति भ्रमरूपज्ञानस्यापि अविद्यावृत्तिरूपत्वेन कल्पितत्वात् कल्पितस्य अधिष्ठानत्वासंभवात् ॥९॥

१०—आह सिद्धान्ती—मैवं, तुच्छस्याज्ञेयत्वेन ज्ञाने अध्यासाभावात्। ज्ञेयस्य हि ज्ञाने अध्यासः तुच्छस्य तु न ज्ञेयता इत्यग्रे वक्ष्यते। पञ्चमप्रकाराविद्यानिवृत्तेरपि प्रतियोग्यधिकरणे ध्वंसस्यापि तत्र वृत्ते रवश्यम्भावात् अध्यास एव सम्बन्धः। वस्तुतस्तु अविद्यानिवृत्तेः पञ्चमप्रकारत्वञ्च भावाद्वैतञ्चानभ्युपगमपराहतम्। यथा च अविद्यानिवृत्तेर्ब्रह्मरूपत्वं सर्वाद्वैतं च तथोपरिष्टात् वक्ष्यते, अपरोक्षैकरसे ब्रह्मणि अध्यस्तस्य अतीतादेरनुमित्यादिरूपज्ञाने अनध्यासेऽपि यस्मिंश्चैतन्ये तदध्यस्तं तदेव चैत-

अतिप्रसङ्गपरिहारार्थं चैतन्यस्य विषयसम्बन्धे वृत्त्युपरागापेक्षायामपि नाधिष्ठानत्वेन तदपेक्षा। एवमेव नित्यपरोक्षस्थले स्मृतिस्थलेऽपि प्रातिभासिकस्य प्रातिभासिक्यां वृत्तावनध्यासेऽप्यधिष्ठानविषयकवृत्त्यभिव्यक्तचैतन्य एवाध्यास इति न काप्यनुपपत्तिः।

---

न्यमनुमित्यादिरूपवृत्त्यवच्छिन्नमिति नाध्यासानुपपत्तिः। अतिप्रसङ्गपरिहारार्थं चैतन्यस्य विषयसम्बन्धे वृत्त्युपरागापेक्षायामपि नाधिष्ठानत्वेन तदपेक्षा एवमेव नित्यपरोक्षस्थले स्मृत्यादिस्थलेऽपि, प्रातिभासिकस्य प्रातिभासिक्यां वृत्तौ अनध्यासेऽपि अधिष्ठानविषयकवृत्त्यभिव्यक्तचैतन्ये एव अध्यास इति न काप्यनुपपत्तिः। तुच्छविषयिण्याः वृत्तेर्विकल्पवृत्तित्वेन तस्या ज्ञानरूपत्वाभावात् विकल्पवृत्तिविषयस्य तुच्छस्य ज्ञेयत्वायोगात् ज्ञेयस्यैव ज्ञाने अध्यासः तुच्छस्य तु न ज्ञेयता इत्यग्रे वक्ष्यते ख्यातिबाधान्यथानुपपत्तिप्रकरणे [ पृ० ६३२ ] तुच्छस्य यथा न ज्ञेयत्वं तथा स्पष्टं विचारितमस्माभिः दृश्यत्वहेतुविवरणे अग्रे च वक्ष्यते। इष्टसिद्धिकृन्मते अविद्यानिवृत्तेः पञ्चमप्रकारत्वं यद्यपि नाचार्यसम्मतं तथापि तन्मते पूर्वपक्ष्युत्थापितं दोषं परिहरन्—आह सिद्धान्ती—पञ्चमप्रकाराविद्यानिवृत्तेरपीति। आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवलेति संक्षेपशारीरकरीत्या विशुद्धा चिदेव अविद्याया आश्रयत्वभागिनी अविद्यानिवृत्तेः प्रतियोगिनी अविद्यातदधिकरणं, विशुद्धा चित् ध्वंसस्यापि प्रतियोग्यधिकरणवृत्तित्वनियमात् अविद्यानिवृत्तेरपि तत्रैव वृत्तेरवश्यम्भावात् विशुद्धचिता सह अविद्यानिवृत्तेरपि अध्यास एव सम्बन्धः। चैतन्यस्य असङ्गत्वात् तेन सह न कस्यापि पारमार्थिकः सम्बन्धो भवितुमर्हतीति भावः। वस्तुतस्तु अविद्यानिवृत्तेः पञ्चमप्रकारत्वं भावाद्वैतञ्च अनभ्युपगमपराहतम्। चतुर्थपरिच्छेदप्रारम्भे अविद्यानिवृत्तेः सा तत्त्वोपलक्षितात्मस्वरूपत्वं निरूपितमाचार्येण। अतः पञ्चमप्रकारत्वमनभ्युपगमपराहतं उक्तं च तत्रैव—ये तु पञ्चमप्रकारादिपक्षाः ते तु मन्दबुद्धिव्युत्पादनार्थाः इति न तत्समर्थनमर्थयामः। [ पृ० ८८५ ] मण्डनमिश्रेणापि ब्रह्मसिद्धौ एकीयमतत्वेन भावाद्वैतमुक्तं नं स्वसिद्धान्तत्वेन तत्रैवैतन्मतं निरस्तमिति तदपि अनभ्युपगमपराहतम्। यथा च अविद्यानिवृत्तेर्ब्रह्मरूपत्वं सर्वाद्वैतञ्च तथा उपरिष्टात् चतुर्थपरिच्छेदे उपपादयिष्यते। ब्रह्मचैतन्ये

न च—रूप्यादिकमिदमंशावच्छिन्नचैतन्येऽध्यस्तं, भासते च अविद्यावृत्तिप्रतिबिम्बितचैतन्येनेति विषयिणि ज्ञाने विषयस्याध्यासः कथमिति—वाच्यम्। एकावच्छिन्ने एवापरावच्छेदेन निरपेक्षोपाधे-

---

अध्यस्तस्य अतीतादेस्तदविषयकानुमित्यादिरूपवृत्तिज्ञाने अनध्यासेऽपि यस्मिन् ब्रह्मचैतन्ये अतीताद्यध्यस्तं तदेव अधिष्ठानचैतन्यानुमित्यादिरूपवृत्त्या अवच्छिन्नमतः अनुमित्यादिवृत्त्यवच्छिन्ने चैतन्ये अतीतादेरध्यासात् अतीतादेरपि ज्ञानेन अध्यासिक एव सम्बन्धो नोक्तनियमस्य व्यभिचारः। विषयस्य चैतन्ये अध्यासमात्रेण प्रकाशापत्तौ सर्वस्य सर्वदा सर्वो विषयो भासेत् इत्यतिप्रसङ्गपरिहारार्थं कस्यचित् पुंसः कदाचिदेव कश्चिदेव विषयो ज्ञानकर्म इति व्यवस्थासिद्ध्यर्थं च चैतन्यस्य विषयसम्बन्धे वृत्त्युपरागापेक्षा। विषयाकारवृत्त्या विषयाधिष्ठानचैतन्ये उपरज्यमाने तेन चैतन्येन विषयस्य स्फुरणं ज्ञायते वृत्त्यनुपरागदशायामधिष्ठानचैतन्येन विषयस्फुरणौपयिकविषयसम्बन्धाभावात् न विषयस्फुरणं चैतन्यस्य विषयाधिष्ठानत्वाय न वृत्त्युपरागापेक्षा वृत्तेः पूर्वमेव विषयस्य चैतन्ये अध्यासात्। एवमेव नित्यपरोक्षस्थलेऽपि नित्यपरोक्षविषयकानुमित्यादिज्ञाने विषयस्यानध्यासेऽपि यस्मिंश्चैतन्ये नित्यपरोक्षविषयः अध्यस्तः तदेव चैतन्यमनुमित्यादिरूपवृत्त्यवच्छिन्नमिति पूर्वमेव निरूपितमेवं स्मृतिस्थलेऽपि स्मर्यमाणस्य स्मृतौ अनध्यासेऽपि यस्मिंश्चैतन्ये स्मर्यमाणमध्यस्तं तदेव चैतन्यं स्मृतिरूपवृत्त्यवच्छिन्नम् इति न अध्यासानुपपत्तिः प्रातिभासिकस्य शुक्तिरजतादेः प्रातिभासिक्यां रजताद्याकाराविद्यावृत्तौ अनध्यासेऽपि इदमाकाराधिष्ठानगोचरान्तःकरणवृत्त्यभिव्यक्तेदमंशावच्छिन्नचैतन्ये एव रजतादीनामध्यास इति न प्रदर्शितनियमस्य व्यभिचार इति भावः। न प्रातिभासिकरजतादेर्ज्ञाने अध्यासः संभवति तथात्वे सिद्धान्तिसिद्धान्तविरोधः स्यात् इत्याह पूर्वपक्षी—न च रूप्यादिकं इदमंशावच्छिन्नचैतन्ये अध्यस्तं भासते च अविद्यावृत्तिप्रतिबिम्बितचैतन्येन इति विषयिणि ज्ञाने विषयस्याध्यासः कथमिति वाच्यम्। शुक्तेरिदमंशेन अवच्छिन्नं यच्चैतन्यं तत्र रजतादिकमध्यस्तम्। अध्यस्तरजतादिकं रजताकाराविद्यावृत्तिप्रतिबिम्बितचैतन्ये न भासते, तथा च रजताकाराविद्यावृत्तिप्रतिबिम्बितचैतन्यमेव रजतज्ञानम् एवं च रजतज्ञानं रजताधिष्ठानश्चाभिन्नम् अतः रजतादेर्न

रिवात्र भेदकत्वाभावात्, अत एव अभियुक्तैः फलैक्यादैक्यं ज्ञानस्योच्यते। न च रूप्यादेः स्वज्ञानेऽध्यस्तत्वे रूप्यज्ञानस्य ज्ञाने भ्रमोत्पत्तिस्तज्ज्ञानेन। तन्निवृत्तिरिति च स्यात्, अधिष्ठानज्ञानज्ञानाभ्यामध्यासस्य जन्मनिवृत्त्योर्नियतत्वात्, ज्ञानं रजतमिति प्रतीतिप्रसङ्गाच्चेति—वाच्यम्।

---

स्वज्ञाने अध्यासः। अतः उक्तनियमस्य व्यभिचार एव। समाधत्ते सिद्धान्ती—

**एकावच्छिन्ने एवापरावच्छेदेन निरपेक्षोपाधेरिव अत्र भेदकत्वाभावात् अत एव अभियुक्तैः फलैक्यादैक्यं ज्ञानस्योच्यते।** निरपेक्षोपाधिद्वयोपहितयोर्भेदः न सापेक्षोपाधिद्वयोपहितयोः उपाधेर्भेदमात्रेण उपहितस्य भेदो न भवति किन्तु निरपेक्षोपाधिद्वयोपहितयोः। तावेव उपाधी स्वोपहितयोर्भेदकौ यौ अन्योऽन्यनैरपेक्ष्येण स्वोपहितस्य उपघायकौ यथा भिन्नदेशस्थौ घटौ स्वोपहितस्याकाशस्य भेदकौ एकदेशस्थितयोस्तु न भेदकता उक्तं च परिभाषायां [पृ० ६०] अत एव मठान्तर्वर्तिघटावच्छिन्नाकाशो न मठावच्छिन्नाकाशाव भिद्यते। न हि विशेषणयोरिव उपाध्योः स्वरूपेण भेदकत्वं किन्तु भिन्न देशस्थत्वेनैवेत्याह मूलकारः एकावच्छिन्नेति। एकेन उपाधिना उपहिते एव अपरेण उपाधिना उपहिते सापेक्षयोरुपाध्योः भेदकत्वाभावात्। अत्र 'अवच्छिन्नावच्छेदपदाभ्यामुपहितोपाधी बोध्यौ। सापेक्षोपाध्योर्भेदकत्वाभावे पञ्चपादिकाकृताम् [पृ० ९] वचनं प्रमाणयति अत एव अभियुक्तैरिति। उक्तञ्च पञ्चपादिकायां सा च एकमेव ज्ञानमेकफलं जनयति। विवृतं चैतत् विवरणे—एकफलमिति विषयावच्छिन्नं हि फलमवभासते न ज्ञानावच्छिन्नम्। विषयश्च सत्यमिथ्यावस्तुनोरन्योन्यात्मकतया एकतामापन्नस्तेन एकविषयावच्छिन्नफलैकत्वोपाधौ सत्यमिथ्याज्ञानद्वयमपि एकमित्युपचर्यते इति भावः फलञ्चभग्नावरणा चित्। स्वप्रकाशत्वलक्षणे आवरणभङ्गे चित एव फलत्वादित्युक्तम्। [पृ० २९] रजतज्ञाने रजतस्य अध्यस्तत्वे दोषान्तरं शङ्कते पूर्वपक्षी—**न च रूप्यादेः स्वज्ञाने अध्यस्तत्वे रूप्यज्ञानस्य अज्ञाने भ्रमोत्पत्तिस्तज्ज्ञानेन तन्निवृत्तिरिति च स्यात्। अधिष्ठानज्ञानाज्ञानाभ्याम् अध्यस्तस्य जन्मनिवृत्त्योर्नियतत्वात् ज्ञानं रजतमिति प्रतीतिप्रसङ्गाच्च इति वाच्यम्।** अधिष्ठानाज्ञानेन अध्यासजन्यतज्ज्ञानेन अध्यास-

रजताकारवृत्त्यवच्छिन्नचैतन्यस्य रजतभ्रमाधिष्ठानत्वानभ्युपगमात्। इदमंशावच्छिन्नचैतन्यमेव तु रजतभ्रमाधिष्ठानम् तच्च दैवाद्रजताकारवृत्त्यवच्छिन्नचैतन्यमपि नैतावता भ्रमाधिष्ठानत्वे तदपेक्षा। तस्य च भ्रमविरोधिशुक्तित्वाद्याकारेणाज्ञानं भ्रमकारणम्। तेनाकारेण ज्ञानं भ्रमनिवर्तकम्। अत एव न ज्ञानं रजतमिति भ्रमाकारापत्तिः। वृत्त्यवच्छिन्नस्यैव ज्ञानत्वात्तस्य चाधिष्ठानत्वाभावात्। अधिष्ठानतादात्म्येन चारोप्यप्रतीतिरिति इदं रजतमित्येव भ्रमाकारः।

---

निवृत्तिरितिसिद्धान्तः। रजतज्ञानस्य अधिष्ठानत्वात् रजतज्ञानाज्ञानेन रजतभ्रमजननप्रसङ्गः। रजतज्ञानज्ञानेन रजतभ्रमनिवृत्तिप्रसङ्गः। न च इष्टापत्तिः ज्ञानस्य ज्ञातैकसत्त्वेन तदज्ञानायोगात्। अधिष्ठानसामानाधिकरण्येन अध्यस्तप्रतीतेर्दर्शनात् ज्ञानं रजतमिति धीः स्यात्। समाधत्ते सिद्धान्ती—रजताकारवृत्त्यवच्छिन्नचैतन्यस्य रजतभ्रमाधिष्ठानत्वानभ्युपगमात्। इदमंशावच्छिन्नचैतन्यमेव तु रजतभ्रमाधिष्ठानं तच्च दैवात् रजताकारवृत्त्यवच्छिन्नचैतन्यमपि नैतावता भ्रमाधिष्ठानत्वे तदपेक्षा। तस्य च भ्रमविरोधिशुक्तित्वाद्याकारेणाज्ञानं भ्रमकारणं तेन आकारेण ज्ञानं भ्रमनिवर्तकम्। अत एव न ज्ञानं रजतमिति भ्रमाकारापत्तिः। वृत्त्यवच्छिन्नस्यैव ज्ञानत्वात् तस्य च अधिष्ठानत्वाभावात्। अधिष्ठानतादात्म्येन च आरोप्य प्रतीतिरिति इदं रजतमित्येव भ्रमाकारः। इदमाकारान्तःकरणवृत्त्या अभिव्यक्तं इदमंशावच्छिन्नचैतन्यमेव रजतभ्रमाधिष्ठानं तच्च चैतन्यं दैवात् रजताकाराविद्यावृत्त्यवच्छिन्नमपि जातम्। इदमंशरजतयोसत्यमिथ्यावस्तुनो अन्योन्याध्यासेन ऐक्यापन्नयोः तदवच्छिन्नचैतन्यमपि फलम् एकमेव फलैक्यात् ज्ञानयोरन्योन्याध्यासेन तयोरैक्यमुपचरितम्। सत्यमिथ्याज्ञानद्वयमैक्यमापन्नम्। इदमाकारान्तःकरणवृत्त्या साक्ष्यभेदेन इदमंशावच्छिन्नं चैतन्यमभिव्यक्तं तदेव अध्यस्तरजताधिष्ठानं तदेव अध्यस्तरजतस्फुरणरूपत्वात् रजतज्ञानं रजताकाराविद्यावृत्त्यापि तदेव चैतन्यमुपहितं तस्य रजताध्यासात् प्राक् सिद्धत्वाभावात् न रजताधिष्ठानत्वं किन्तु रजताध्यासात् प्राक् सिद्धत्वात् अभिव्यक्तेदमंशावच्छिन्नचैतन्यमेव अधिष्ठानम्। इदमंशावच्छिन्नचैतन्यनिष्ठायाः शुक्तित्वप्रकारकाविद्यायाः

ननु—घटादेः स्वसन्निकृष्टेन्द्रियजन्यस्वज्ञानात् पूर्वं सत्त्वेन तत्राध्यासो न युक्तः। न च—या घटेन्द्रियसन्निकर्षजा वृत्तिस्तया घटो न प्रकाश्यः। येन च प्रकाश्यो घटाधिष्ठानचैतन्येन न तत्सन्निकर्षजमिति—वाच्यम्। वृत्त्यतिरिक्तज्ञाने मानाभावात्। अज्ञाननिवृत्तेरपि तत एव भावादिति—चेत् ॥१०॥

---

दोषविक्षुब्धायाः रजतरूपेण रजतज्ञानाभासरूपेण च परिणामः अविद्याक्षोभे दोषस्येव अदृष्टस्यापि कारणत्वादाह—दैवादिति। अविद्यायाः क्षोभाभावे इदमित्येव ज्ञानं स्यात् न पुनरिदं रजतमिति। भ्रमात् प्राक्सिद्धस्यैव अधिष्ठानत्वात्। रजताकारवृत्त्यवच्छिन्नचैतन्यस्य भ्रमसमकालत्वात् नाधिष्ठानत्वेन तदपेक्ष्यते इति भावः। तस्य च रजतभ्रमाधिष्ठानस्य अभिव्यक्तेदमंशावच्छिन्नचैतन्यस्य शुक्तित्वाद्याकारेण अज्ञानं रजतादिभ्रमकारणम् तेन शुक्तित्वाद्याकारेण ज्ञानं रजतादिभ्रमनिवर्तकम्। यतो रजताकाराविद्यावृत्त्यवच्छिन्नं चैतन्यं न रजतभ्रमाधिष्ठानमत एव न ज्ञानं रजतमितिभ्रमाकारापत्तिः। अधिष्ठानाभेदेन अध्यस्तस्य स्फुरणात् रजताकाराविद्यावृत्तेर्भ्रमाधिष्ठानत्वाभावात्। आरोप्यमधिष्ठानतादात्म्येनैव स्फुरति अत्र अधिष्ठानपदम् आधारपरम् अधिष्ठानस्य अज्ञानावृतत्वात् न भ्रमे भासते। अधिष्ठानसामान्यांशं विहायैव अज्ञानमधिष्ठानमावृणोति अतः अधिष्ठानस्य भासमानसामान्यांशः आधारः अभासमानविशेषांशः अधिष्ठानमित्याधाराधिष्ठानयोर्विवेकः संक्षेपशारीरकादौ स्पष्टः। शुक्तिगतेदमंशस्य भासमानस्य आधारत्वात् तत्तादात्म्येनैव आरोप्यरजतादेः प्रतीतिः रजताकाराविद्यावृत्त्यवच्छिन्नचैतन्यस्य तद्भावात् न ज्ञानं रजतमिति भ्रमाकारः। स्वज्ञाने विषयस्य नाध्यास इति प्रतिपादयितुं पूर्वपक्षी शङ्कते—ननु घटादेः स्वसन्निकृष्टेन्द्रियजन्यस्वज्ञानात् पूर्वं सत्त्वेन तत्राध्यासो न युक्तः। न च या घटेन्द्रियसन्निकर्षया वृत्तिस्तया घटो न प्रकाश्यः येन च प्रकाश्यः घटाधिष्ठानचैतन्येन न तत्सन्निकर्षजन्यमिति वाच्यं वृत्त्यतिरिक्तज्ञाने मानाभावात् अज्ञाननिवृत्तेरपि तत एव भावात् इति चेत्। घटादेः स्वज्ञानेऽध्यासो न भवितुमर्हति घटसन्निकृष्टेन्द्रियजन्यज्ञानात् पूर्वमेव घटादेः सत्त्वात् अधिष्ठानस्य प्राक्सिद्धत्वनियमात् पूर्वसिद्धस्याधि-

न वृत्त्युदयात् प्रागज्ञातार्थसिद्ध्यर्थं वृत्त्यतिरिक्तज्ञानस्यावश्यमभ्युपेयत्वात्। अन्यथा तस्य साधकाभावेन शशशृङ्गतुल्यतया सन्निकर्षतज्जन्यज्ञानहेतुत्वेन प्राक् सत्त्वकल्पना निष्प्रामाणिकी स्यात्। तस्माद्यादृशस्य घटादेरिन्द्रियसन्निकर्षाश्रयत्वेन ज्ञानकारणत्वं तादृशस्य साधकं किञ्चिन्मानमवश्यमभ्युपेयम्। अन्यथाऽन्वयव्यतिरेकयोरग्रहेण कार्यकारणभावाग्रहात् सर्वमानमेयादिव्यवस्थोच्छिद्येत। तच्च मानं न वृत्तिरूपं तदानीं वृत्तिकारणाप्रवृत्तेरिति तद्विलक्षणं नित्यं स्वप्रकाशमेकमेव लाघवात्। वृत्तिगतोत्पत्तिविनाशजडत्वादिभिस्तद-

---

ज्ञानं पश्चात् सिद्धं न भवितुमर्हति, अतः कथं घटादेः पूर्वसिद्धस्य पश्चात् सिद्धे स्वज्ञानेऽध्यासः स्यात्। यदि सिद्धान्तिना एवमुच्येत घटेन्द्रियसन्निकर्षजन्यया वृत्त्या ज्ञानाख्यया घटो न प्रकाश्यः येन च घटाधिष्ठानचैतन्येन घटः प्रकाश्ये [श्यो] न तच्चैतन्यं सन्निकर्षजन्यमतः चैतन्यस्य प्राक्सिद्धत्वात् घटाधिष्ठातत्वं युज्यत एव न पूर्वोक्तो दोषः। सिद्धान्ती समाधानं न युक्तमित्याह पूर्वपक्षी चित्तवृत्तेरेव ज्ञानपदेन व्यवहारात् वृत्त्यतिरिक्तज्ञाने मानाभावात् अज्ञाननिवर्तकस्यैव ज्ञानत्वात् अन्तःकरणवृत्तेः प्रमाणजन्याया अज्ञाननिवर्तकत्वात् अज्ञानविरोधिनी वृत्तिरेव ज्ञानपदवाच्या अज्ञानानिवर्तके ज्ञाने प्रमाणाभावात्। चैतन्यस्य अज्ञानानिवर्तकत्वात् घटाधिष्ठानीभूतं चैतन्यं न घटज्ञानं किन्तु घटाकारान्तःकरणवृत्तिरेव घटज्ञानं तत्र च घटस्यानध्यासात् पूर्वोक्तदोषस्तदवस्थ एव ॥१०॥

११—वृत्त्यतिरिक्तचैतन्यस्य ज्ञानत्वं साधयन् प्रदर्शितदोषमुद्धरति सिद्धान्ती—न वृत्त्युदयात् प्रागज्ञातार्थसिद्ध्यर्थं वृत्त्यतिरिक्तज्ञानस्यावश्यमभ्युपेयत्वात्। अन्यथा तस्य साधकाभावेन शशशृङ्गतुल्यतया सन्निकर्षतज्जन्यज्ञानहेतुत्वेन प्राक् सत्त्वकल्पना निष्प्रामाणिकी स्यात्। तस्माद् यादृशस्य घटादेरिन्द्रियसन्निकर्षाश्रयत्वेन ज्ञानकारणत्वं तादृशस्य साधकं किञ्चिन्मानमवश्यमभ्युपगन्तव्यम्। अन्यथा अन्वयव्यतिरेकयोरग्रहेण कार्यकारणभावाग्रहात् सर्वमानमेयादिव्यवस्था उच्छिद्येत। तच्च मानं न वृत्तिरूपं तदानीं वृत्तिकारणाप्रवृत्तेः इति तद्विलक्षणं नित्यं स्वप्रकाशमेकमेव लाघवात्। वृत्तिगतोत्पत्तिविनाश-

संस्पर्शात्। तदेव च नानाविधोपाधिसम्बन्धान्नानाविधव्यवहारभाक् भवति नभ इव घटमणिमल्लिकाद्युपाधिभेदेन। तच्चाज्ञानसाधकत्वात्स्वरूपतो नाज्ञाननिवर्तकं वृत्त्युपरक्तं त्वज्ञाननिवर्तकमिति न वृत्तेरनुपयोगः। तथा च सर्वाज्ञानसाधके साक्षिचैतन्ये तस्मिन् घटादेरध्यास इति काऽनुपपत्तिः।

---

जडत्वादिधीस्तदसंस्पर्शात्। तदेव च नानाविधोपाधिसम्बन्धान्नानाविधव्यवहारभाक् भवति नभ इव घटमणिकमल्लिकाद्युपाधिभेदेन। तच्च अज्ञानसाधकत्वात् स्वरूपतो नाज्ञाननिवर्तकं वृत्त्युपरक्तं तु अज्ञाननिवर्तकमिति न वृत्तेरनुपयोगः। तथा च सर्वाज्ञानसाधके साक्षिचैतन्ये तस्मिन् घटादेरध्यास इति काऽनुपपत्तिः। विषयविषयकवृत्त्याख्यज्ञानोदयात् प्राक् विषयस्य अज्ञातत्वसिद्ध्यर्थं वृत्त्यतिरिक्तसाक्षिरूपज्ञानस्य अवश्याभ्युपेयत्वात्। उक्तञ्च विवरणे—सर्वं वस्तु ज्ञाततया वा अज्ञाततया वा साक्षिचैतन्यस्य विषय एव [पृ० १३] अज्ञाततया विषयस्य सिद्ध्यर्थं वृत्तिव्यतिरिक्तं साक्षिज्ञानमवश्यमङ्गीकरणीयम्। अज्ञाततया विषयस्य सिद्धिः प्रमाणेन न भवितुमर्हति इति प्रपञ्चितं विवरणेन तावदवगते नीलार्थे तत्रावरणकृत्यमवगन्तुं शक्यते अनवगते तु न त्वराम् इत्यादिना [पृ० १३-१४] वृत्त्यतिरिक्तसाक्षिज्ञानानङ्गीकारेऽज्ञातविषयस्य साधकाभावेन तस्य शशशृङ्गादितुल्यता स्यात्। अज्ञातो विषयः असन् स्यादित्यर्थः। अज्ञातार्थेन सह इन्द्रियसन्निकर्षस्य अज्ञातोऽर्थोऽजनको भवति इन्द्रियसन्निकर्षजन्यप्रत्यक्षज्ञानस्य च अज्ञातो विषयो जनको भवति। अज्ञातार्थस्य सन्निकर्षप्रत्यक्षज्ञानयोर्जनकत्वेन तस्य सन्निकर्षप्रत्यक्षज्ञानाभ्यां प्राक्सत्त्वमावश्यकम्। अज्ञातविषयस्य सर्वथा असिद्धत्वेऽसद्रूपतया कारणत्वाय प्राक्सत्त्वकल्पना निष्प्रामाणिकी स्यात्। अज्ञातस्य कारणत्वं न स्यादित्यर्थः। अज्ञातविषयस्य सन्निकर्षाश्रयत्वं तेन च प्रत्यक्षज्ञानकारणत्वं स्वीकार्यम् अतस्तस्य साधकमपि किंचित् अवश्यं स्वीकार्यम्। अज्ञातत्वविरोधिना प्रमाणेन अज्ञातो विषयो न सिद्ध्यतीत्युक्तं प्रागेव। अतः प्रमाणातिरिक्तं साधकं किञ्चित् अवश्यं स्वीकार्यम्। अज्ञातविषयस्य साधकः साक्षीति सिद्धान्तः। अज्ञातविषयस्य सर्वथा साधकाभावेऽज्ञातविषयेण सह कस्यचिदन्वयव्यतिरेकयोर-

ग्रहणे कार्यकारणभावाग्रहात् मानमेयव्यवस्था उच्छिद्येत । प्रत्यक्षज्ञानेऽज्ञातविषयस्य जनकत्वात् । अज्ञातज्ञापकत्वं हि प्रामाण्यम् तदुक्तम्—अर्थेऽनुपलब्धे इति । अज्ञात-विषयस्य साधकाभावे प्रमाणव्यवस्था न स्यात् तदभावे प्रमेयव्यवस्थापि न स्यात्, अतोऽज्ञातत्वेन विषयस्य सिद्धिः सर्वैरङ्गीकरणीयेति भावः । तच्च अज्ञातविषय-साधकं मानं न वृत्तिरूपं वृत्त्युदयात् प्रागेव विषयस्य अज्ञातत्वं प्रमाणवृत्तिमात्रस्य अज्ञातत्वविरोधित्वात् । न प्रमाणवृत्त्या अज्ञातविषयः सेद्धुमर्हति । अतः अज्ञात-विषयसिद्ध्यर्थं प्रमाणवृत्तिविलक्षणं किञ्चित् स्यात्, तच्च लाघवात् नित्यं स्वप्रकाशमेकमेव स्यात् । वृत्तेरुत्पादविनाशाभ्यां स्वप्रकाशं साक्षिचैतन्यं न संस्पृश्यते । अन्तःकरणपरिणामरूपाया वृत्तेर्जाड्येनापि न संस्पृश्यते । तदेव च साक्षिचैतन्यं नानाविधान्तःकरणवृत्तिरूपोपाधिसम्बन्धात् अविद्यावृत्तिरूपोपाधि-सम्बन्धाच्च नानाविधव्यवहारभाक् घटज्ञानं पटज्ञानं रजतज्ञानं सर्पज्ञानमित्यादि-व्यवहारभाक् भवति । घटाद्याकारवृत्त्यवच्छिन्नं चैतन्यमेव घटादिज्ञानमिति व्यवह्रियते । उक्तञ्चात्मतत्त्वविवेके—तत्तन्मायोपनीतोपधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभिरिति [पृ० ५०४] विवृतं चैतत् कल्पलतायां शंकरमिश्रैः—एक एवानुभवो ब्रह्मात्मकः कथम-विद्यावशादपि भेदेन भासतामित्यनुपपत्तिं दृष्टान्तेन निरस्यति—गगमिवेति । तच्च साक्षिचैतन्यम् अहमज्ञः त्वदुक्तमर्थं न जानामीत्यादिप्रतीत्या अज्ञानसाधकम् अज्ञानसाधकत्वरूपेण स्वरूपतः नाज्ञाननिवर्तकं साधकस्य स्वरूपेण बाधकत्वा-योगात्, ज्ञानस्य स्वविषयानिवर्तकत्वाच्च । यद्यपि साक्षिचैतन्यं स्वरूपतो नाज्ञान-निवर्तकं तथापि तत्तद्विषयाकारान्तःकरणवृत्त्युपरक्तं सत् विषयावच्छिन्नचैतन्यावर-काज्ञाननिवर्तकं भवति । उक्तं च सुरेश्वरवार्तिके—

तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत् ।
सूर्यकान्तमुपारुह्य न्यायोऽयं योज्यतां धिया ॥ इति ।

यदेव साधकं तदेवावस्थान्तरगतं बाधकं भवति । अवस्थाभेदेन एकस्यैव साधकबाधकत्वेऽविरुद्धे इति भावः । साक्षिचैतन्यस्य एकस्यैव नानाविधव्यवहाराय अज्ञाननिवर्तनाय च साक्षिज्ञानातिरिक्तवृत्तिज्ञानस्योपयोगः । एवञ्च सर्वाज्ञानसाधके

तदुक्तं सुरेश्वराचार्यैः—

[१] सर्वतीर्थदृशां सिद्धिः स्वाभिप्रेतस्य वस्तुनः ।
यदभ्युपगमादेव तत्सिद्धिर्वार्यते कुतः ॥ इति
[वृह० वार्त्ति० ४ अ० ३ ब्रा० १५६ श्लो०]

[२] सर्वतीर्थदृशां तावत्सामान्यं मानलक्षणम् ।
अज्ञातार्थावगमनं त्वदुक्ते तन्न युज्यते ॥
[वृह० वार्ति० ४।३ ब्रा० १५८ श्लो०]

[३] स्वतः सिद्धोऽथ वासिद्धो देहादिस्ते भवन् भवेत् ।
प्रमाणानां प्रमाणत्वं नौभयत्रापि लभ्यते ॥
[वृह० वार्ति० ४।३० ब्रा० १६० श्लो०]

[४] प्रमाणान्यन्तरेणापि देहादिश्चेत् प्रसिध्यति ।
वद प्रमाणैः कोऽन्वर्थो न हि सिद्धस्य साधनम् ॥
[वृह० वार्ति० ४।३ ब्रा० १६१ श्लो०]

---

साक्षिचैतन्ये तत्तद्विषयाकारवृत्त्युपरक्ते तत्तद्विषयस्याध्यास इति तत्तद्विषयज्ञाने विषयस्य अध्यासे न काप्यनुपपत्तिः ।

वृत्त्यतिरिक्तज्ञाने मानाभावादिति यदुक्तं पूर्वपक्षिणा तत् वृत्त्यतिरिक्त-साक्षिज्ञाने मानादर्शनेन निरस्य अभियुक्तपूर्वाचार्यवचनकदम्बेन वृत्त्यतिरिक्त-साक्षिणं द्रढयन्नाह—तदुक्तं सुरेश्वराचार्यैः—

(१) सर्वतीर्थदृशां सिद्धिः स्वाभिप्रेतस्य वस्तु नः ।
यदभ्युपगमादेव तत् सिद्धिर्वार्यते कुतः ॥
[वृहादारण्यकवार्तिकम् ४ अ० तृ० ब्रा०१५६ श्लो०] ।

(२) सर्वतीर्थदृशान्तावत् सामान्यं मानलक्षणम् ।
अज्ञातार्थावगमनं त्वदुक्ते तन्न युज्यते ॥
[वृह० वार्ति० ४।३ ब्रा० १५८ श्लो०] ।

(३) स्वतः सिद्धोऽथ वासिद्धो देहादिस्ते भवन्भवेत् ।
प्रमाणानां प्रमाणत्वं नोभयथापि लभ्यते ॥
वृह० वार्ति० ४।३ ब्रा० १६० श्लो०]

[५] स्वतोऽसिद्धे प्रमेये तु नासतो व्यञ्जिका प्रमा ।
नाभिव्यनक्ति सविता शशशृङ्गं स्फुरन्नपि ॥ इति ।
[बृह० वार्ति० ४।३ ब्रा० १६२ श्लो०]

(४) प्रमाणान्यन्तरेणापि देहादिश्चेत् प्रसिध्यति ।
वद प्रमाणैः कोऽन्वर्थो नहि सिद्धस्य साधनम् ॥
[बृह० वार्ति० ४।३ ब्रा० १६१ श्लो०] ।

(५) स्वतोऽसिद्धे प्रमेये तु नासतो व्यञ्जिका प्रमा ।
नाभिव्यनक्ति सविता शशशृङ्गं स्फुरन्नपि ॥
[बृह० वार्ति० ४।३ ब्रा० १६२ श्लो०] इति

स्वान्यभानानपेक्ष्य भातीति व्यवहारविषये स्वप्रकाशे साक्षिणि स्वतः सिद्धे केषामपि तीर्थङ्कराणां विवादो न भवितुमर्हतीति वार्तिकवाक्येन स्पष्टयन्नाह—सर्वतीर्थदृशामिति । प्रथमश्लोकस्यायमार्थः—यदभ्युपगमादेव यस्य स्वतः सिद्धसाक्षिणोऽभ्युपगमादेव सर्वेषां तीर्थदृशां तीर्थङ्कराणां स्वाभिप्रेतस्य वस्तुनःस्वसिद्धान्यसिद्धस्य वस्तुनः सिद्धिः स्यात, तदनभ्युपगमे कस्यापि सिद्धान्तस्य सिद्धिर्न स्यात्, तस्य साक्षिणः सिद्धिः कुतो वार्यते न कुतोऽपि इति भावः । साक्षिणः प्रत्याख्याने जगदान्ध्यप्रसङ्ग इति । एतादृशस्य साक्षिणः प्रत्याख्याने सर्वसिद्धान्तासिद्धिः, कुतः इत्यत आह—सर्वतीर्थदृशां तावदिति । द्वितीयश्लोकस्यायमर्थः—सर्वेषां तीर्थङ्कराणां मते मीमांसकानामन्येषामपि मते इदमेव प्रमाणसामान्यलक्षणमज्ञातार्थावगमकत्वम् । अर्थेऽनुपलब्धेरिति जैमिनिसूत्रात् । उक्तं च अद्वैतरत्नरक्षणे अज्ञातार्थनिश्चयात्मकत्वमेव प्रामाण्यमस्मत्पक्षे इति [पृ० ३२] नैयायिकादीनामपि अयं पक्षो नातीव प्रतिकूलः तथा हि—यावन्ति ज्ञानानि तावन्त्यज्ञानानीतीष्टसिद्धिकारवचनात् घटादेरपि धाराज्ञानेन निवर्त्यमज्ञानं स्वीक्रियते । किञ्च प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन स्वाश्रयक्षणविशिष्टस्तम्भादिग्राहकत्वात् अगृहीतग्राहित्वमस्त्येव । अन्यथा अपेक्षणीयान्तराभावेन एकस्मिन् समयेऽनेकज्ञानोत्पत्तिप्रसंगः । न च क्षणानामतीन्द्रियत्वं स्थूलोपाधिरपि न्यायमतेऽतीन्द्रिय एव, तथा च सोऽपि कथं भासते इति पश्य । यदि च ज्ञानान्तरोपनीतस्थूलोपाधिर्भासते इति स्वीकुरुषे, तदा क्षणोऽपि तथैव भासते इति त्यज वृथा आग्रहम् । न वेदात् क्रमोत्पन्नवेदार्थगोचरधारा-

वाहिकबुद्ध्यव्याप्तिः, तत्र क्षणस्यापि मानाभावात् इति साम्प्रतं शब्दबुद्धिकर्मणां विरम्य व्यापाराभावेन वेदात् क्रमिकधारावाहिकबुद्ध्यसिद्धेः। सिद्धौ वा द्वितीयादिज्ञानस्य अनुवादकत्वलक्षणमप्रामाण्यमेव। न च अनादौ संसारे वेदार्थस्य पूर्वं ज्ञातत्वादस्मिन् जन्मनि अनुवादकत्वापत्तिरिति वाच्यं, तस्मिन् जन्मनि अज्ञातत्वस्य विद्यमानत्वात्। एतेन यदुक्तं तात्पर्यपरिशुद्धौ उदयनेन नित्यपदार्थेषु अनधिगतत्वं नाम नास्त्येव। यदि नेह जन्मनि जन्मान्तरेऽप्यधिगमात् यदि न प्रत्यक्षेण अनुमानोपदेशाभ्यामपि। अनित्येष्वपि प्रायश उपलब्धानामेवोपलम्भाच्च इति निरस्तम्। अस्मिन् जन्मनि अज्ञातत्वमेव प्रामाण्ये अपेक्षितम्; कथं च ज्ञानमज्ञानमनिवर्तयत ज्ञानत्वं प्राप्नुयात्। अज्ञानाविरोधिप्रमाज्ञानं नास्त्येव। अत एव यावन्ति ज्ञानानि तावन्त्यज्ञानानीति सिद्धान्तोऽपि संगच्छते। अतः सुष्ठूक्तं सर्वतोर्थदृशामज्ञातावगमनं सामान्यं मानलक्षणम्। त्वदुक्ते तन्न युज्यते इति प्रमाणवृत्त्यतिरिक्तनित्यसाक्षिणोऽभावे उक्ते अज्ञातार्थावगमनं न युज्यते। अज्ञातार्थस्य साधकाभावेन शशशृङ्गतुल्यत्वादिति भावः। तृतीयश्लोकस्यायमर्थः—देहादयो जडाः पदार्थाः स्वतः सिद्धाः सर्वथा असिद्धा वा, उभयथापि जडग्राहकाणां प्रमाणानां प्रमाणत्वं न स्यात् स्वतः सिद्धे प्रमाणवैयर्थ्यं सर्वथा असिद्धेऽपि शशशृङ्गतुल्यत्वमेव। त्वन्मते अज्ञातवस्तुनः साधकाभावात् स्वतः सिद्धस्याग्राहकत्वात् सर्वथासिद्धस्य च शशशृङ्गतुल्यस्य अग्राहकत्वात्, उभयथापि प्रमाणानां प्रमाणत्वं न लभ्यते। उभयत्रापि प्रमाणनैष्फल्यं स्पष्टयन्नाह **प्रमाणान्तरेणापीति**। चतुर्थश्लोकस्यायमर्थः—देहादीनां स्वतः सिद्धत्वे प्रमाणान्यन्तरेणापि देहादयः सिद्धाः अतः सिद्धस्य साधनं पिष्टपेषणायितवत् निष्फलमेव। यदि देहादयो जडाः पदार्थाः स्वतोऽसिद्धाः तथापि प्रमाणनैष्फल्यमेव इत्याह **स्वतोऽसिद्धे प्रमेये तु** इति। पञ्चमश्लोकस्यायमर्थः—साक्षिणोऽनभ्युपगमे अज्ञातवस्तुनः सिद्धिर्न स्यात्, अतः पूर्वपक्षिमते स्वतोऽसिद्धस्य सर्वथा असत्त्वमेव, तथा च अस्य प्रकाशनाय प्रमाणानां प्रवृत्तिर्न स्यात् इत्यत्र दृष्टान्तमाह **नाभिव्यनक्तीति**। सविता अप्रकाशितं प्रकाशयन्नपि असत् शशशृङ्गं न प्रकाशयति तस्य अप्रकाशितत्वाभावात् एवमेव प्रणाणमज्ञातं वस्तु ज्ञापयन्नपि असत् न ज्ञापयति। असतोऽज्ञातत्वाभावात्। वस्तु अज्ञाततया साक्षिचैतन्येनैव

न च घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः ।
विज्ञातो घट इत्युक्तिर्ब्रह्मानुभवतो भवेत् ॥

इति वदता वृत्तिप्रतिबिम्बितस्य घटानधिष्ठानचैतन्यस्य घटानुभवत्वोक्तिविरोध इति—वाच्यम् ।

वृत्तिप्रतिबिम्बितचैतन्यस्य घटाधिष्ठानचैतन्येन सह भेदाभावात् चैतन्यस्यैकत्वात् । यथा चैकस्यैव चैतन्यस्य सर्वावभासकत्वं तथा विस्तरेणोपपादितं नाभाव उपलब्धेरित्यस्मिन्नधिकरणे भाष्यकृद्भिः ॥११॥

---

भासते असता सह सद्रूपस्य साक्षिणोऽसम्भवात् असत् न साक्षिवेद्यं सदसतोः सम्बन्धाभावात्, अतः साक्षिप्रकाशितं वस्तु असद्विलक्षणमेव भवति । सिद्धान्तिनः स्वाचार्योक्तिविरोधमुपन्यस्य विषयप्रकाशकं चैतन्यं न विषयाधिष्ठानं यदधिष्ठानचैतन्यं न तत् विषयप्रकाशकमिति शङ्कते पूर्वपक्षी—

न च घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः ।
विज्ञातो घट इत्युक्तिर्ब्रह्मानुभवतो भवेत् ॥ इति

वदता वृत्तिप्रतिबिम्बितस्य घटानधिष्ठानचैतन्यस्य घटानुभवत्वोक्तिविरोध इति वाच्यम् । घटाधिष्ठानस्य वृत्तिप्रतिबिम्बितचैतन्यस्य सिद्धान्तिमते आभाससंज्ञा तथा चोक्तम्—

चैतन्यं द्विविधं प्रोक्तं वृत्तौ यत् प्रतिबिम्बितम् ।
अभास उच्यतेऽन्यच्चानाभास इति शब्दितम् ॥

घटोऽयमित्यसावुक्तिः—व्यवहार इत्यर्थः । वृत्तिप्रतिबिम्बितचैतन्येन भवति । घटोऽयमिति व्यवहारजनकं घटोऽयमिति ज्ञानाभासरूपमेव इति यावत् । विज्ञातो घट इति व्यवहारजनकम् अनुव्यवसायरूपं ज्ञानं साक्ष्येवेति यावत् । तथा च घटानधिष्ठानस्य वृत्तिप्रतिबिम्बितचैतन्यस्य घटज्ञानत्वावगमात् घटाधिष्ठानचैतन्यस्य घटज्ञानत्वाङ्गीकारे पूर्वाचार्यविरोधः स्यादिति भावः । चैतन्यस्य भेदाभावेन समाधत्ते सिद्धान्ती—वृत्तिप्रतिबिम्बितचैतन्यस्य घटाधिष्ठानचैतन्येन सह भेदाभावात् चैतन्यस्य एकत्वात् यथा च एकस्यैव चैतन्यस्य सर्वावभासकत्वं तथा विस्तरेणोपपादितं नाभाव

ननु दृश्यत्वान्यथानुपपत्त्या मिथ्यात्वमित्यर्थापत्तिर्विवक्षिता, किं वा सत्यत्वे दृश्यत्वं न स्यादित्यनुकूलतर्कमात्रम्। नाद्यः; तत्साम-ग्र्यभावात् तथा हि—आक्षेप्यस्योपपादकत्वं; प्रमाणाविरुद्धत्वम्, आक्षेप-कस्यानुपपद्यमानत्वं प्रमितत्वं चेत्यर्थापत्तिसामग्री। प्रकृते चाक्षेप्य-सम्बन्धिनो मिथ्यात्वं नाक्षेपकस्य सम्बन्धस्योपपादकम् प्रत्युत प्रति-कूलमेव। न चाध्यस्तत्वरूपसम्बन्धस्य न तत्प्रतिकूलत्वम्, तस्याद्याप्य-सिद्धेरनाक्षेपकत्वात्। प्रत्यक्षादिविरुद्धं चेदमाक्षेप्यम्। नाप्येकस्य दृश्यत्वस्योपपत्तये प्रमितानेकस्य त्यागो युक्तः। आक्षेपकं च न दृगध्य-स्तत्वम्। तस्यैव फलत आक्षेप्यत्वात्। नापि दृग्विषयत्वरूपो दृक्सम्बन्धः तवासिद्धेः। दृगधीनसिद्धिकत्वम् दृग्विषयत्वातिरिक्तस्य

---

उपलब्धेरित्यस्मिन्नधिकरणे भाष्यकृद्भिः। घटाधिष्ठानचैतन्यस्य शुद्धस्य घटाकारवृत्तौ प्रतिबिम्बनात् तदेव शुद्धं वृत्तौ उपहितं भवति, शुद्धचिदुपहित-चितोः एकत्वात् चैतन्यभेदप्रयुक्तदोषाभावः। एकस्यैव चैतन्यस्य सर्वावभासकत्वं ब्रह्मसूत्रस्य द्वितीयाध्यायद्वितीयपादेऽभावाधिकरणनाम्नि पञ्चमाधिकरणे भाष्यकारैः उपपादितम्। सर्वंदृश्यानुस्यूतत्वात् स्वप्रकाशचिद्रूपत्वाच्च आत्मा स्वेतरसर्वावभासक इत्यादि तत्रोक्तं भाष्यकृता ॥११॥

१२—सिद्धान्तिना अर्थापत्तिर्विवक्षिता अनुकूलतर्को वा विवक्षितः इति विकल्प्य उभयथापि दृग्दृश्ययोः पारमार्थिक एव सम्बन्ध इत्याह पूर्वपक्षी—ननु दृश्यत्वान्यथानुपपत्त्या मिथ्यात्वमित्यर्थापत्तिर्विवक्षिता, किं वा सत्यत्वे दृश्यत्वं न स्यादित्यनुकूलतर्कमात्रं, नाद्यः, तत्सामग्र्यभावात्, तथा हि आक्षेपस्य उपपादकत्वं, प्रमाणाविरुद्धत्वम्, आक्षेपकस्य अनुपपद्य-मानत्वं प्रमितत्वं च इत्यर्थापत्तिसामग्री। प्रकृते च आक्षेप्यं सम्बन्धि-नोर्मिथ्यात्वं नाक्षेपकस्य सम्बन्धस्य उपपादकं प्रत्युत प्रतिकूलमेव। न च अध्यस्तत्वरूपसम्बन्धस्य न प्रतिकूलत्वं तस्य अद्याप्यसिद्धेरनाक्षेप-कत्वात्। प्रत्यक्षादिविरुद्धं च इदमाक्षेप्यम्। नाप्येकस्य दृश्यत्वस्य उपपत्तये प्रमितानेकस्य त्यागो युक्तः। आक्षेपकं च न दृगध्यस्तत्वं तस्यैव फलत आक्षेप्यत्वात्। नापि दृग्विषयत्वरूपो दृक्सम्बन्धः

तस्यासिद्धेः। नान्त्यः, सत्त्वेऽप्युक्तरीत्या सम्बन्धान्तरेणैव दृश्यत्वस्योपपन्नतया अनुपपत्तेरेवाभावादिति चेत् ॥१२॥

---

तत्रासिद्धेः। न दृगधीनसिद्धिकत्वं दृग्विषयत्वातिरिक्तस्य तस्यासिद्धेः। नान्त्यः, सत्त्वेऽप्युक्तरीत्या सम्बन्धान्तरेणैव दृश्यत्वस्योपपन्नतयाऽनुपपत्तेरेवाभावात् इति चेत्। दृश्यत्वस्य अन्यथा दृश्यस्य सत्यत्वे अनुपपत्त्या। दृश्यस्य सत्यत्वे दृश्यत्वानुपपत्त्या दृश्यस्य मिथ्यात्वमित्यर्थापत्तिर्विवक्षिता, किं वा दृश्यस्य सत्यत्वे तस्य दृश्यत्वं न स्यादिति दृश्यत्वहेतोरनुकूलतर्कमात्रं वा विवक्षितम्। विकल्प्य आद्यं सामग्र्यभावेन दूषयति। अर्थापत्तेः सामग्रीं निरूप्य प्रकृते तदभावं दर्शयति—तथा हीति। पीनोऽयं दिवा न भुङ्क्ते अर्थात् रात्राविति गम्यते इत्यर्थापत्तेः प्रसिद्धमुदाहरणं तत्राक्षेप्यं रात्रिभोजनं तदाक्षेपस्य पीनत्वस्योपपादकम्। आक्षेपकस्य अनुपपद्यमानत्वमाक्षेप्यं रात्रिभोजनं विनाऽनुपपद्यमानत्वम्। आक्षेप्यस्य तथा आक्षेपकोपपादकत्वमपेक्षितम् एवमेव आक्षेप्यस्य प्रमाणाविरुद्धत्वमपि अपेक्षितं प्रमाणविरुद्धमाक्षेप्यं स्वयमनुपपन्नं कथम् आक्षेपकमुपपादयेत्। तथा च आक्षेप्यस्य रूपद्वयमपेक्षितम् आक्षेपकोपपादकत्वं प्रमाणाविरुद्धत्वञ्च। एवमाक्षेपकस्यापि रूपद्वयमपेक्षितम्। आक्षेप्यं विनाऽनुपपद्यमानत्वं प्रमितत्वञ्च। आक्षेपकं यदि प्रमितं न स्यात् तर्हि स्वयमसिद्धं कथमाक्षेप्यमाक्षिपेत्। आक्षेप्याक्षेपकयोरेतद्रूपचतुष्टयमपेक्षितम् एष एवार्थापत्तिसामग्री। प्रकृते च सम्बन्धिनोर्दृश्यस्य मिथ्यात्वमाक्षेप्यम् आक्षेपकस्य दृग्दृश्यसम्बन्धस्य दृश्यत्वस्य नोपपादकं दृश्यस्य मिथ्यात्वं न दृग्दृश्यसम्बन्धरूपदृश्यत्वस्य उपपादकम्। दृश्यं यदि मिथ्या न स्यात् दृग्दृश्यसम्बन्धो न स्यात् इत्यापत्त्यसम्भवात् दृश्यस्य सत्यत्वेऽपि दृग्दृश्यसम्बन्धस्य सत्यस्य सम्भवात्। मिथ्यासम्बन्धी न सत्यसम्बन्धस्योपपादकः। अतः सम्बन्धिनोर्मिथ्यात्वं न सत्यसम्बन्धस्योपपादकं प्रत्युत सम्बन्धिनोर्मिथ्यात्वं सत्यसम्बन्धस्य अनुपपादकमेव। इत्याह—प्रत्युत प्रतिकूलमेवेति। न च दृग्दृश्ययोराध्यासिकसम्बन्धस्य उपपादकमेव सम्बन्धिनोर्दृश्यस्य मिथ्यात्वमिति सिद्धान्तिना न वाच्यं, दृग्दृश्ययोराध्यासिकसम्बन्धस्य अद्याप्यसिद्धत्वात्, आक्षेपकस्य प्रमितत्वमपेक्षितम्, असिद्धमाक्षेपकं नाक्षेप्यमाक्षिपेदिति भावः। अस्यामर्थापत्तौ दृश्यस्य मिथ्यात्वमाक्षेप्यं तच्च प्रत्यक्षादि-

न अनुकूलतर्कस्यैव प्रक्रान्तत्वेनार्थापत्तिर्वेत्यादिविकल्पानवकाशात्। उभयथाप्यदोषाच्च। तथा हि—सत्यत्वे दृग्दृश्यसम्बन्धानुपपत्तिः। मिथ्यात्वं च तदुपपादकम्। न तत्सम्बन्धप्रतिकूलम्।

सकलप्रमाणविरुद्धम्। प्रत्यक्षादिप्रमाणैर्दृश्यस्य सत्यत्वावधारणात्। त्यजेदेकं कुलस्यार्थे इति न्यायेनापि एकस्य दृश्यत्वस्य दृग्दृश्ययोराध्यासिकसम्बन्धरूपस्य उपपत्तये प्रत्यक्षादिना सत्यत्वेन प्रमितानेकप्रपञ्चाख्यवस्तुनः त्यागो मिथ्यात्वकल्पनरूपो न युक्तः, प्रदर्शितन्यायेन एकस्य दृश्यत्वस्यैव त्यागोऽस्तु बहुबाधस्य अन्याय्यत्वादिति भावः। आक्षेपकं विकल्प्य दूषयति—आक्षेपकम् चेति। दृश्यमिथ्यात्वाक्षेपकमित्यर्थः। दृगध्यस्तत्वरूपं दृश्यत्वं न दृश्यमिथ्यात्वस्य आक्षेपकम्, आक्षेप्याक्षेपकयोर्भेदसापेक्षत्वात्, अभेदे आक्षेप्याक्षेपकभावस्यैवासम्भवात्। दृगध्यस्तत्वरूपदृश्यत्वस्य आक्षेपकस्य फलतः आक्षेप्यत्वात्। दृश्यमिथ्यात्वं हि आक्षेप्यम्, आक्षेपकमपि दृगध्यस्तत्वरूपं दृश्यत्वं मिथ्यात्वमपि अध्यस्तत्वं न हि अध्यस्तत्वेनैव अध्यस्तत्वमाक्षिप्यते भेदाभावात् इत्यर्थः। अत उक्तम्—तस्यैव फलतः आक्षेप्यत्वादिति। पूर्वपक्षिणा मया दृगध्यस्तत्वं दृश्यत्वमनङ्गीकृत्य दृग्विषयत्वमेव दृश्यत्वं स्वीक्रियते तच्च विषयत्वं पारमार्थिकमेव। त्वया सिद्धान्तिना विषयत्वरूपपारमार्थिकसम्बन्धो न स्वीक्रियते अतः तवमते दृग्विषयत्वरूपं दृश्यत्वमसिद्धम् सिद्धं वा तेनैव पारमार्थिकविषयत्वसम्बन्धेन दृश्यप्रकाशोपपत्त्या दृश्यस्य अध्यस्तत्वं विनाऽनुपपत्त्यभावात् नार्थापत्त्या दृश्यस्य मिथ्यात्वसिद्धिरिति भावः। नापि दृगधीनसिद्धिकत्वं दृश्यत्वं दृशः पारमार्थिकविषयत्वातिरिक्तायाः सिद्धेर्ममासम्प्रतिपत्तेः इत्याह—तस्यासिद्धेरिति। एवमाक्षेपकं दृश्यत्वं विकल्प्यदूषणानि उक्तानि। सत्त्वे दृश्यत्वं न स्यादित्यनुकूलतर्कमात्रमिति द्वितीयं निराकरोति—नान्त्य इति। दृश्यस्य सत्यत्वेऽपि आध्याक्षिकसम्बन्धातिरिक्तेन सम्बन्धेन दृश्यत्वस्योपपन्नतया दृश्यत्वानुपपत्तेरेवाभावात् तर्कोऽप्रयोजक इति भावः॥१२।

१३—अर्थापत्तेरनुकूलतर्कस्य च प्रदर्शितदूषणान्युद्धरन्नाह सिद्धान्ती—

न अनुकूलतर्कस्यैव प्रक्रान्तत्वेनार्थापत्तिर्वेत्यादिविकल्पानवकाशात्। उभयथाप्यदोषाच्च। तथा हि—सत्यत्वे दृग्दृश्यसम्बन्धानुपपत्तिः।

मिथ्यात्वेऽपि शुक्तिरूप्यस्येदमंशेऽध्यस्तत्वरूपसम्बन्धदर्शनेन सम्बन्धसामान्ये प्रतिकूलत्वाभावात्। आक्षेपकोऽपि दृग्विषयत्वरूपो दृक्सम्बन्ध एव। अध्यासरूपस्य दृग्विषयत्वस्य ममाऽपि संप्रतिपत्तेः। तात्त्विकस्यैव तस्य निषेधात्। न च अध्यस्तत्त्वस्याद्याप्यसिद्धिः; दृक्सम्बन्धसामान्यस्याक्षेपकस्य प्रसक्तविशेषनिषेधेऽप्यध्यस्तत्वरूपविशेषपर्यवसानेनासिद्ध्यभावात्। न हि अध्यस्तसम्बन्धत्वेनाक्षेपकता, किन्तु सम्बन्धत्वेन। स चाध्यस्तत्वसम्बन्धसम्भावनयाप्यबाधित एवेति।

---

मिथ्यात्वं च उपपादकम्। न तत्सम्बन्धप्रतिकूलम्। मिथ्यात्वेऽपि शुक्तिरूप्यस्येदमंशेऽध्यस्तत्वरूपसम्बन्धदर्शनेन सम्बन्धसामान्ये प्रतिकूलत्वाभावात्। आक्षेपकोऽपि दृग्विषयत्वरूपो दृक्सम्बन्ध एव। अध्यासरूपस्य दृग्विषयत्वस्य ममाऽपि असंप्रतिपत्तेः, तात्त्विकस्यैव तस्य निषेधात्। न अध्यस्तत्वस्याद्याप्यसिद्धिः, दृक्सम्बन्धसामान्यस्याक्षेपकस्य प्रसक्तविशेषनिषेधेऽप्यध्यस्तत्वरूपविशेषपर्यवसानेनासिद्ध्यभावात्। न हि अध्यस्तसम्बन्धत्वेनाक्षेपकता, किन्तु सम्बन्धत्वेन। स चाध्यस्तत्वसम्बन्धसंभावनयाप्यबाधित एवेति। प्रपञ्चमिथ्यात्वानुमानेऽनुकूलतर्कप्रदर्शनं प्रक्रान्तं तत्रार्थापत्तिर्वेति विकल्प्य अर्थापत्तौ दूषणाभिधानं पूर्वपक्षिणः अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगनामकं निग्रहस्थानमित्याह—**विकल्पानवकाशादिति**। प्रौढिवादेनाह उभयथापि दोषाभावाच्च। अर्थापत्तौ दूषणाभावमाह—**तथा हीति**। दृग्दृश्यसम्बन्धरूपदृश्यत्वस्य सर्वानुभवसिद्धस्य दृश्यसत्यत्वेऽनुपपत्तिः दृश्यमिथ्यात्वं च सम्बन्धोपपादकम् अतः दृश्यस्य मिथ्यात्वं न दृग्दृश्यसम्बन्धप्रतिकूलम्। यद्यस्य उपपादकं न तत् तस्य प्रतिकूलं भवितुमर्हतीति भावः। सम्बन्धिनोर्मिथ्यात्वस्य सम्बन्धोपपादकत्वं कुत्राप्यदृष्टमिति चेन्न, शुक्तिरूप्यस्य सम्बन्धिनो मिथ्यात्वेऽपि तस्य इदमंशेऽध्यस्तत्वरूपसम्बन्धस्य दृष्टत्वात् सम्बन्धिनोर्मिथ्यात्वस्य सम्बन्धसामान्यप्रतिकूलत्वाभावात्। यच्चोक्तमाक्षेप्याक्षेपकयोरभेदात् नाक्षेपसम्भव इति तदुद्धरति **अक्षेपकोऽपीति**। दृश्यत्वमेवाक्षेपकं तच्च दृग्विषयत्वरूपमेव। तच्च दृक्सम्बन्ध एव तस्य सम्बन्धस्य अध्यासरूपत्वेनैव आक्षेपकत्वमिति यद्युच्येत

न च—घटस्य ज्ञानमिति धीसिद्धसम्बन्धसामान्यस्याध्यस्तत्वं न विशेषः, न हि रूप्यस्य शुक्तिरिति प्रतीतिरस्तीति—वाच्यम्।

रूप्यस्य शुक्तिरिति प्रतीत्यभावेऽपि रूप्यस्य शुक्तिरधिष्ठान-

---

तर्हि स्यादपि प्रदर्शितो दोषः तच्च नोच्यते इत्याह—अध्यासरूपस्येति। दृग्-विषयत्वस्य अध्यासरूपस्याक्षेपकत्वे ममापि असम्प्रतिपत्तेः दृग्दृश्यसम्बन्धस्यैवाक्षेपकत्वात् स च सम्बन्धस्तात्त्विको न भवितुमर्हति इत्येव उच्यते। न च दृग्दृश्य-सम्बन्धस्य अध्यस्तत्वमसिद्धमिति वाच्यम्, दृग्दृश्यसम्बन्धसामान्यस्य अध्यस्त-त्वानध्यस्तत्वसाधारणस्याक्षेपकस्यानध्यस्तत्वरूपविशेषनिषेधे प्रसक्ते सम्बन्धस्या-ध्यस्तत्वरूपविशेषपर्यवसानात् अध्यस्तत्वं सम्बन्धस्य नासिद्धम्। दृग्दृश्य-सम्बन्धस्याध्यस्तत्वेन नाक्षेपकता किन्तु सम्बन्धत्वेनैव। सम्बन्धत्वस्य अध्यस्ता-नध्यस्तसम्बन्धसाधारणस्य अध्यस्तत्वसम्भावनयापि सम्बन्धत्वस्योपपत्तेः आक्षेपको दृग्दृश्यसम्बन्धोऽबाधित एव। अतो नाक्षेपकत्वानुपपत्तिरिति। यच्चोक्तं सिद्धान्तिना दृक्सम्बन्धसामान्यमिव दृश्यत्वं तच्च प्रसक्तसंयोगादिसम्बन्धविशेष-निषेधसहकृतम् अध्यस्तत्वरूपे सम्बन्धविशेषे पर्यवस्यत् सम्बन्धिनोर्दृश्यस्य मिथ्यात्वम् आक्षेप्स्यतीति तन्न युक्तम्, अध्यस्तत्वस्य सम्बन्धविशेषरूपत्वाभावात् इत्याह पूर्वपक्षी—न च घटस्य ज्ञानमिति धीसिद्धसम्बन्धसामान्यस्या-ध्यस्तत्वं न विशेषः न हि रूप्यस्य शुक्तिरिति प्रतीतिरस्ति इति वाच्यम्। घटस्य ज्ञानमित्यादिप्रतीतिसिद्धो यो ज्ञानज्ञेययोः सम्बन्धस्तं प्रति अध्यस्तत्वरूपसम्बन्धस्य विशेषरूपत्वाभावात्। अध्यस्तत्वस्य सम्बन्धत्वमेवाक्लृप्तं दूरे ज्ञानज्ञेयसम्बन्धसामान्यं प्रति विशेषसम्बन्धत्वं तथा च परिशेषेण अध्यस्तत्वे न पर्यवसानमित्यर्थः। ज्ञानज्ञेयसम्बन्धसामान्यं प्रति अध्यस्तत्वरूपसम्बन्धस्य विशेषत्वे घटस्य ज्ञानमित्यादौ यथा ज्ञानज्ञेयसम्बन्धसामान्यव्यवहारे ज्ञेयस्य षष्ठ्यन्तेन निर्देशः। ज्ञानस्य प्रथमान्तेन तथा तद्विशेषभूताध्यस्तत्वरूपसम्बन्ध-व्यवहारेऽप्यध्यस्तस्य षष्ठ्यन्तेन अधिष्ठानस्य प्रथमान्तेन निर्देशः स्यात् न हि तथा अस्ति इत्याह—न हि रूप्यस्य शुक्तिरिति प्रतीतिरस्तीति। शुक्तौ रूप्यस्य अध्यस्तत्वात् अध्यस्तस्य रूप[प्य]स्य षष्ठ्यन्तेन अधिष्ठानस्य प्रथमान्तेन निर्देशो न भवति तथा प्रतीतेरभावादिति भावः। समाधत्ते सिद्धान्ती—रूपस्य

मिति प्रतीत्या अध्यस्तत्वस्य सम्बन्धविशेषत्वसिद्धेः। चैत्रस्य मैत्र इति प्रतीत्यभावेऽपि चैत्रस्य पिता मैत्र इति प्रतीतिवत्। आक्षेप्यमत्र प्रमाणाविरुद्धमेव। अध्यक्षादिविरोधस्य प्रागेव परिहृतत्वात्। आक्षेपके च प्रमितत्वमनपेक्षितमेव। अप्रमितेनापि प्रतिबिम्बेन बिम्बाक्षेपदर्शनात् ॥१३॥

तर्कपरतायामपि नाप्रयोजकता। सत्यत्वे सम्बन्धानुपपत्तेर्भवदुक्तन्यायखण्डनेन प्रथमत एवोपपादितत्वात्।

---

[रूप्यस्य] शुक्तिरिति प्रतीत्यभावेऽपि रूप्यस्य शुक्तिरधिष्ठानमिति प्रतीत्या अध्यस्तत्वस्य सम्बन्धविशेषत्वसिद्धेः। चैत्रस्य मैत्र इति प्रतीत्यभावेऽपि चैत्रस्य पिता मैत्र इति प्रतीतिवत्। आक्षेप्यमत्रप्रमाणाविरुद्धमेव। अध्यक्षादिविरोधस्य प्रागेव परिहृतत्वात्। आक्षेपके च प्रमितत्वमनपेक्षितमेव अप्रमितेनापि प्रतिबिम्बेन बिम्बाक्षेपदर्शनात्। षष्ठ्यर्थस्य सम्बन्धस्य अभिप्रेतानभिप्रेतसम्बन्धमात्रत्वे रूप्यस्य शुक्तिरित्यपि प्रतीतिः स्यात् यत्किंचनसम्बन्धस्य विद्यमानत्वात् अभिप्रेतस्य आध्यासिकसम्बन्धस्य विवक्षायां तस्य अधिष्ठानापेक्षत्वात् रूप्यस्य शुक्तिरधिष्ठानमित्येव प्रतीतिः तत्र अध्यस्तस्य षष्ठ्यन्तेन अधिष्ठानस्य प्रथमान्तेन निर्देशात् न पूर्वपक्षिसम्मतरीतेः वैपरीत्यम्। यथा चैत्रमैत्रयोः यत्किंचित् सम्बन्धविवक्षायां चैत्रस्य मैत्रः इति प्रतीतिसम्भवेऽपि पुत्रपितृत्वसम्बन्धविवक्षायां पितृपदसापेक्षत्वात् चैत्रस्य पिता मैत्र इत्येव प्रयोगः प्रतीतिरपि तथैव। तथा प्रकृतेऽपि। अर्थापत्तिसामग्रीनिरूपणे यदुक्तं पूर्वपक्षिणा आक्षेप्यस्य प्रमाणाविरूद्धत्वमपेक्षितमिति तदपि प्रकृतेऽस्तीत्याह—अध्यक्षादिविरोधस्येति। आक्षेप्ये मिथ्यात्वे प्रत्यक्षादिविरोधस्य प्रत्यक्षबाधोद्धारादिप्रकरणे प्रागेव परिहृतत्वात्। यच्चोक्तम् आक्षेपकस्य प्रमितत्वमर्थापत्तौ अपेक्षितमिति, तन्न, अप्रमितेनापि आक्षेपकेण आक्षेपदर्शनात् यथा अप्रमितेन प्रतिबिम्बेन बिम्बाक्षेपदर्शनात् आक्षेपकस्य प्रमितत्वमनपेक्षितमेव ॥१३॥

१४—यच्चोक्तं तर्कपरतायाम् अप्रयोजकत्वमिति तदुद्धरन्नाह सिद्धान्ती—

तर्कपरयामपि नाप्रयोजकता। सत्यत्वे सम्बन्धानुपपत्तेर्भवदुक्तन्याय-

दृश्यत्वाभावस्यापादकमत्र सत्त्वमनिर्वाच्यत्वाभावो वा त्रिकालाबाध्यत्वं वा ? उभयथाऽपि न दोषः। नचानिर्वाच्यत्वाभावस्य तुच्छे परोक्षधीवेद्यतया दृश्येऽपि सत्त्वेन व्यभिचारः कारणासामर्थ्येन तत्र तदाकारवृत्तिसमुल्लासेऽपि दृक्सम्बन्धरूपस्य दृश्यत्वस्य तुच्छविरोधिनस्तत्राभावात्। तुच्छाकारताया वृत्तिगतत्वेऽपि वृत्तिसम्बन्धस्य तुच्छगतत्वाभावोपपत्तेः। नापि—यथा सतो ब्रह्मणः स्वव्यवहृतया सम्बन्धः तथा घटादेरपि सत एव स्वज्ञानेन सम्बन्धोऽस्त्विति—वाच्यम्; दृष्टान्ते ब्रह्मण्यध्यासस्यैव व्यवहृतिसम्बन्धत्वात्। तथा च उभयसम्बन्धिसत्त्वे विषयविषयिभावानुपपत्तिः नाप्रयोजकत्वादिना परिभूयते।

---

खण्डनेन प्रथमत एव उपपादितत्वात्। दृश्यस्य सत्यत्वे दृग्दृश्यसम्बन्धानुपपत्तेः प्रागेव दृग्दृश्यसम्बन्धभंगप्रकरणे उपपादितत्वात् न अप्रयोजकत्वमिति भावः। दृश्यं यदि सत् स्यात् तत्र दृश्यत्वं न स्यादितिसिद्धान्तिप्रदर्शिततर्के दृश्यत्वाभावस्य आपादकं सत्त्वम् अनिर्वाच्यत्वाभावो वा पारमार्थिकत्वं वा उभयथापि तर्कमूलीभूतव्याप्तेर्भङ्गात् तर्कस्य प्रशिथिलमूलत्वमितिपूर्वपक्ष्युक्तमनूद्य समाधत्ते-सिद्धान्ती—दृश्यत्वाभावस्यापादकमत्र सत्त्वमनिर्वाच्यत्वाभावो वा त्रिकालाबाध्यत्वं वा ? अन्यथाऽपि न दोषः। न चानिर्वाच्यत्वाभावस्य तुच्छे परोक्षधीविषयतया दृश्येऽपि सत्त्वेन व्यभिचारः, कारणसामर्थ्येन तत्र तदाकारवृत्तिसमुल्लासेऽपि दृक्संबन्धरूपस्य दृश्यत्वस्य तुच्छविरोधिनस्तत्राभावात्। तुच्छाकारताया वृत्तिगतत्वेऽपि वृत्तिसम्बन्धस्य तुच्छगतत्वाभावोपपत्तेः। नापि—यथा सतो ब्रह्मणः स्वव्यवहृतया सम्बन्धः तथा घटादेरपि सत एव स्वज्ञानेन सम्बन्धोऽस्त्विति—वाच्यम्, दृष्टान्ते ब्रह्मण्यध्यासस्यैव व्यवहृतिसंबन्धत्वात्। तथा च उभयसम्बन्धिसत्त्वे विषयविषयिभावानुपपत्तिः नाप्रयोजकत्वादिना परिभूयते। प्रपञ्चो यदि अनिर्वाच्यत्वाभाववान् स्यात् दृश्यो न स्यात् इति तर्को न भवितुमर्हति तमूलीभूतव्याप्तेर्व्यभिचारादित्याह पूर्वपक्षी तुच्छे शशविषाणादौ अनिर्वाच्यत्वाभावेऽपि परोक्षधीविषयत्वरूपदृश्यत्वस्य सत्त्वात् दृश्येऽपि अलीके अनिर्वाच्यत्वाभावस्य सत्त्वात् व्यभिचारात्। तुच्छे दृश्यत्वाभावेन न व्यभिचार इत्याह सिद्धान्ती शशविषाणादि-

एतेन—आध्यासिकः सम्बन्धो नाम अध्यस्तसम्बन्धो वा, अध्यस्तत्वमेव वा, आद्ये सम्बन्धस्य मिथ्यात्वेऽपि सम्बन्धिनो दृश्यस्य दृश इव मिथ्यात्वानुपपत्तिः। द्वितीये ज्ञानस्याप्यध्यस्तत्वेन तत्र अध्यासानुपपत्तिः। स्वज्ञानपरम्परायामध्यासस्वीकारे अनवस्था चेति निरस्तम्। ज्ञानं हि वृत्त्यवच्छिन्नं चैतन्यम्, तत्रावच्छेदिकाया

---

शब्दरूपकारणसामर्थ्येन शशविषाणाकारचित्तवृत्तिसमुल्लासेऽपि दृक्सम्बन्धरूप-दृश्यत्वस्य तुच्छेऽभावात् दृक्सम्बन्धस्य तुच्छत्वविरोधित्वात्। अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हीति न्यायेन शब्दात् असदाकारवृत्तिसमुल्लासेऽपि सताद्दग्रूपेण सह असतः सम्बन्धानुपपत्तेः सतोरेव सम्बन्धः नासतोः सदसतोर्वा इति सिद्धान्तात्। सति दृक्सम्बन्धे तुच्छत्वानुपपत्तेः। शब्दमहिम्ना वृत्तेः तुच्छाकारत्वेऽपि वृत्तिसम्बन्धाभावात्। वृत्तिसम्बन्धित्वे तुच्छत्वं न स्यात् मिथ्यावस्तुन एव सम्बन्धित्वनियमात्। अनिर्वाच्यत्वाभावसत्त्वमिति पक्षे दोष-मुद्धृत्य त्रिकालाबाध्यत्वं सत्त्वमिति पक्षेऽपि दोषमुद्धरति—नापि यथा सतो ब्रह्मण इति। यथा ब्रह्मणः सत्यत्वेऽपि तद्व्यवहारेण सम्बन्धोऽस्ति ब्रह्मणोऽपि व्यवह्रियमाणत्वात् तद्वत् सत्यस्यापि घटस्य ज्ञानेन सम्बन्धोऽस्त्वित्यर्थः। नापि पूर्वपक्षिणा एतद्वाच्यं, कुत इति चेत्? दृष्टान्तस्यैवासिद्धेरित्याह— दृष्टान्ते ब्रह्मणि अध्यासस्यैवेति। ब्रह्मणि व्यावहारस्य अध्यस्तत्वात् ब्रह्मव्यवहार-योराध्यासिक एव सम्बन्धः। असंगे ब्रह्मणि अनाध्यासिकसम्बन्धस्यैवाभावात्। तथा च उभयसम्बन्धिनोः विषयज्ञानयोः सत्यत्वे विषयविषयिभावानुपपत्तेः आध्यासिक एव सम्बन्धः। सम्बन्धिनोः सत्यत्वे विषयविषयिभावानुपपत्तिः या सिद्धान्तिना प्रदर्शिता सा न अप्रयोजकत्वादिना परिभूयते। समाधानरीतिं पूर्वपक्ष्याशंकितस्थलान्तरेऽतिदिशन्नाह सिद्धान्ती—एतेन—आध्यासिकः सम्बन्धो नाम अध्यस्तसम्बन्धो वा, अध्यस्तत्वमेव वा, आद्ये सम्बन्धस्य मिथ्यात्वेऽपि सम्बन्धिनो दृश्यस्य दृश इव मिथ्यात्वानुपपत्तिः। द्वितीये ज्ञानस्याप्यध्यस्तत्वेन तत्र अध्यासानुपपत्तिः। स्वज्ञानपर-म्परायामध्यासस्वीकारे अनवस्थेति—निरस्तम्। ज्ञानं हि वृत्त्यवच्छिन्नं चैतन्यम् तत्रावच्छेदिकाया वृत्तेर्जडाया अध्यस्तत्वेऽप्यवच्छेद्यस्य

वृत्तेर्जडाया अध्यस्तत्वेऽप्यवच्छेद्यस्य चैतन्यस्य प्रकाशरूपस्य अनध्यस्तत्वेन तत्र दृश्यस्याध्यासाद् दृश्यमिथ्यात्वेऽप्यनवस्थाविरहस्योपपत्तेः ॥१४॥

---

चैतन्यस्य प्रकाशरूपस्य अनध्यस्तत्वेन तत्र दृश्याध्यासाद् दृश्यमिथ्यात्वेऽप्यनवस्थाविरहस्योपपत्तेः। आध्यासिकसम्बन्धः इति कोऽर्थः किं यः कश्चित् सम्बन्ध एव अध्यस्त इति किं वा तदध्यस्तमेव सम्बन्ध इति तदध्यस्तं भावे क्त्वा। तस्मिन्नध्यास एव सम्बन्ध इति द्वितीयविकल्पार्थः। आद्ये सम्बन्धस्य अध्यस्तत्वेऽपि सम्बन्धिनः पारमार्थिकत्वं संभवति घटस्य ज्ञानेन अध्यस्तसम्बन्धवत्त्वेऽपि न सम्बन्धिनोर्मिथ्यात्वम्। विभक्तयोर्घटपटयोरारोपितसंयोगस्य मिथ्यात्वेऽपि सम्बन्धिनोः सत्यत्ववत्। यथा वा तार्किकैकदेशिमते अजसंयोगाभावात् विभुद्वयसंयोगस्य आरोपितत्वेन मिथ्यात्वेऽपि सम्बन्धिनोः सत्यत्वाद्व्यभिचारः इत्याह मूले सम्बन्धस्य मिथ्यात्वेऽपि एकसम्बन्धिनः दृशः सत्यत्ववत् अपरसम्बन्धिनः दृश्यस्य सत्यत्वोपपत्तेः। द्वितीये सिद्धान्तिमते ज्ञेयवत् ज्ञानस्यापि अध्यस्तत्वेन तत्राध्यस्तज्ञाने ज्ञेयस्य अध्यासानुपपत्तिः। अधिष्ठानस्य सत्यत्वनियमात्। अध्यासस्य सम्बन्धत्वपक्षे एकस्य अपरत्राध्यासो वक्तव्यः तत्र न तावज्ज्ञानं ज्ञेयेऽध्यस्तं ज्ञेयस्य मिथ्यात्वेन ज्ञानं प्रति अधिष्ठानत्वाभावात्। तथा च ज्ञेयस्य ज्ञाने एव अध्यासो वाच्यः स न युक्तः व्यावहारिकस्य घटादेर्व्यावहारिके ज्ञानेऽनध्यासात्। प्रातिभासिकस्य रूप्यादेः प्रातिभासिके तज्ज्ञानेऽनध्यासात। अर्थज्ञानात्मकोभयविधभ्रमाङ्गीकारेण ज्ञेयवज्ज्ञानस्यापि अध्यस्तत्वेन तत्र तस्यानध्यासात्। पूर्वपक्षं संगृह्णाति एवञ्च—

> शाब्दवृत्तेर्हि विषयो ब्रह्म तत्र न कल्पितम्।
> यथा तथा दृग्विषयो दृश्यं न दृशि कल्पितम्॥

ज्ञाने ज्ञेयस्याध्यासपक्षं दूषणाय आद्यः श्लोकः।

> अविद्याविषयो ब्रह्म ह्यविद्यायां न कल्पितम्।
> यथा तथा दृशा ग्राह्यं न विश्वं दृशि कल्पितम्॥

विषयो विषयिण्यध्यस्त इति सामान्यनियमखण्डनाभिप्रायेण द्वितीयः श्लोकः। स्वज्ञानपरम्परायामध्यासस्वीकारे अनवस्थेति दूषणग्रन्थो न्यायामृते नास्ति। ग्रन्थोऽपि असंगत एव प्रतिभाति तस्मात् प्रक्षिप्तोऽयमिति मन्ये।

अत एव—शाब्दवृत्तिविषयो ब्रह्म न वृत्तौ कल्पितमविद्याविषयो ब्रह्माविद्यायां न कल्पितं यथा तथा दृश्यं न दृशि कल्पितम् तथा च दृक्दृश्यादेस्तात्त्विक एव सम्बन्धः। सामान्यसम्बन्धेनैवातिप्रसङ्गे निरस्ते विशेषजिज्ञासा विशेषोक्तिश्च विशेषजिज्ञासादिवदनर्थिकैवेति—निरस्तम्। वृत्त्यविद्ययोः ब्रह्मणोऽनध्यासेऽपि तयोरेव ब्रह्मण्यध्यासात् सम्बन्धोपपत्तेः। अतस्तत्र तात्त्विकसम्बन्धाभावात्, कथं तद्दृष्टान्तेन दृग्दृश्ययोरपि तात्त्विकसम्बन्ध इत्युच्यते। तथा च प्रसिद्धविशेषे बाधिते सामान्यस्यैव बाधकशङ्कया अतिप्रसङ्गे प्राप्ते विशेषजिज्ञासाया विशेषोक्तेश्च साफल्यात् न ते निरर्थके ॥१५॥

---

पाठस्याप्रक्षिप्तत्वे तस्यायमर्थः—विषयस्य विषयिण्यामध्यासे विषयस्य ज्ञाने ज्ञानस्यापि स्वविषयकज्ञाने एवं कल्पनेऽनवस्थेति भावः। समाधत्ते सिद्धान्ती—यद्यपि चैतन्यमेव मुख्यं ज्ञानं तथापि व्यवहारदशायां ज्ञानस्य सविषयकत्वानुभवाय अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यमेव ज्ञानं तत्रावच्छेदिकाया वृत्तेर्जडतया अध्यस्तत्वेऽपि अवच्छिन्नस्य चैतन्यस्य प्रकाशरूपस्य अनध्यस्तत्वेन तत्र दृश्यस्य अध्यासात् दृश्यस्य मिथ्यात्वेऽपि दृशः सत्यत्वेन नानवस्थेति भावः ॥१४॥

१५—प्रदर्शितां युक्तिं स्थलान्तरेऽपि अतिदिशन् पूर्वपक्ष्युत्प्रेक्षितं दूषणं पराकरोति—अत एव शाब्दवृत्तिविषयो ब्रह्म न वृत्तौ कल्पितमविद्याविषयो ब्रह्माविद्यायां न कल्पितं यथा तथा दृश्यं न दृशि कल्पितम्, तथा च दृक्दृश्यादेस्तात्विक एव सम्बन्धः सामान्यसम्बन्धेनैवातिप्रसङ्गे निरस्ते विशेषजिज्ञासा विशेषोक्तिश्च विशेषजिज्ञासादिवदनर्थिकैवेति—निरस्तम्। वृत्त्यविद्ययोः ब्रह्मणोऽनध्यासेऽपि तयोरेव ब्रह्मण्यध्यासात् सम्बन्धोपपत्तेः। अतस्तत्र तात्त्विकसम्बन्धाभावात्, कथं तद्दृष्टान्तेन दृग्दृश्ययोरपि तात्त्विकसम्बन्ध इत्युच्यते। तथा च प्रसिद्धविशेषे बाधिते सामान्यस्यैव बाधकशङ्कया अतिप्रसङ्गे प्राप्ते विशेषजिज्ञासाया विशेषोक्तेश्च साफल्यात्, न ते निरर्थिके। पूर्वपक्ष्युक्तकारिकाभ्याम् उक्तं दूषणजातमनूद्य परिहरति सिद्धान्ती—यथा तत्त्वमसि इत्यादिमहावाक्यजन्यशाब्दवृत्तेर्विषयोऽपि ब्रह्म न शाब्दवृत्तौ कल्पित-

एतेन—सम्बन्धस्य प्रामाणिकत्वे यथा कथंचन लक्षणं भविष्यति। तथा हि—संयोगसमवायान्तर्भावे तल्लक्षणमेव लक्षणं भविष्यति तदनन्तर्भावे तु तदुभयभिन्नसम्बन्धत्वमेव लक्षणमस्त्विति

---

मेवं शुद्धब्रह्मविषयिण्यामविद्यायां यथा ब्रह्म न कल्पितं तथा दृश्यविषयिण्यां दृश्यमपि न कल्पितं स्यात्। तथा च दृग्दृश्ययोः विषयविषयिणोः सम्बन्धोऽपि नाध्यासिकः किन्तु अन्य एव कोऽसौ अनाध्यासिकः सम्बन्धः इति विशेषजिज्ञासा विशेषोक्तिश्च अनर्थिका। दृग्दृश्ययोरनाध्यासिक-सम्बन्ध-सामान्येनैव सर्वं सर्वेण दृश्येत इत्यतिप्रसङ्गस्य निरस्तत्वात्। यथा विशेषगतविशेष-जिज्ञासा अनर्थिका इति। अयम्भावः पार्थिवपरमाणुषु समानगुणकर्मसामान्य-वत्सु व्यावर्तकधर्माभावेन व्यावृत्तिबुद्धयसम्भवेन परम्परासंकीर्णव्यवहारोच्छेद-रूपातिप्रसङ्गपरिहाराय विशेषो नाम पदार्थो व्यावृत्तिबुद्धिहेतुतया कल्पितः तेन च उक्तातिप्रसङ्गे निरस्ते विशेषेष्वपि व्यावृत्तिबुद्धिजनकः कः स निरूप्यतामिति जिज्ञासा वृथा इदानीं तत्प्रयोजनाभावात् इति यथा वैशेषिकैः समाधीयते तद्वदि-त्यर्थः। उक्तञ्च वैशेषिकैः—

"असंकीर्णव्यवहृतेर्योगिनां परमाणुषु।
विशेषकल्पने तत्र विशेषेच्छा वृथा तव॥ इति।

पूर्वपक्ष्युक्तं दूषणमनूद्य प्रत्याचष्टे सिद्धान्ती—शाब्दवृत्तौ अविद्यायाञ्च ब्रह्मणोऽनध्यासेऽपि तयोरेव शाब्दवृत्त्यविद्ययोः जडयोर्ब्रह्मण्यध्यासात् अध्यासिक-सम्बन्धोपपत्तेः। पूर्वपक्ष्युदाहृते दृष्टान्तद्वयेऽपि तात्त्विकसम्बन्धाभावात् कथम् अतात्त्विकसम्बन्धदृष्टान्तेन दृष्टान्तविरुद्धः तात्त्विकसम्बन्धः दृग्दृश्ययोः सिद्धेः। तथा च देशकालविप्रकर्षादिना दृग्दृश्ययोः संयोगसमवायादियावत्सम्बन्धविशेषे बाधिते यावत् विशेषाभावात् सम्बन्धसामान्यस्यैव बाधशंकायां सर्वं सर्वेण दृश्येत इति अतिप्रसङ्गे प्राप्ते बाधितसम्बन्धविशेषातिरिक्तसम्बन्धविशेषजिज्ञासाया आध्यासिकसम्बन्धविशेषोक्तेश्च सार्थक्यं न विशेषजिज्ञासोक्तिर्निरर्थिकेति॥१५॥

१६—दृग्दृश्ययोः सम्बन्धस्य प्रामाणिकत्वे सिद्धे तस्य सम्बन्धस्य लक्षणमपि किञ्चित् भविष्यतीति पूर्वपक्ष्युक्तमनूद्य निरस्यति सिद्धान्ती—एतेन सम्बन्धस्य प्रामाणिकत्वे यथा कथञ्चन लक्षणं भविष्यति। तथा हि संयोगस-

निरस्तम्, उक्तयुक्त्या प्रामाणिकसम्बन्धस्य संयोगसमवायान्तर्भावस्य च दूषितत्वात्। तदुभयबहिर्भूतसम्बन्धत्वं तु वयमपि न निराकुर्मः। किन्तु तस्य प्रामाणिकत्वम्। किञ्च दृग्दृश्ययोः न तात्त्विकसम्बन्धः सम्बन्धिभिन्नत्वे अनवस्थानात्। न च दृश्यत्वान्तरहीनस्य दृश्यत्वादेरिव सम्बन्धस्यापि स्वनिर्वाहकत्वं क्वचित् भविष्यतीति—वाच्यम्; दृश्यत्वमपि दृक्सम्बन्ध एव। तस्य च स्वनिर्वाहकत्वं न मायिकत्वं विनेति नास्माकं प्रतिकूलमभ्यधायि देवानां प्रियेण। अभिन्नत्वे सम्ब-

---

मवायान्तर्भावे तल्लक्षणमेव लक्षणं भविष्यति तदनन्तर्भावे तु तदुभयभिन्नसम्बन्धत्वमेव लक्षणमस्तु इति निरस्तम्, उक्तयुक्त्या प्रामाणिकसम्बन्धस्य संयोगसमवायान्तर्भावस्य च दूषितत्वात्। तदुभयबहिर्भूतसम्बन्धत्वं तु वयमपि न निराकुर्मः। किन्तु तस्य प्रामाणिकत्वम्। दृग्दृश्ययोः यः सम्बन्धः कल्प्यते स संयोगसमवायान्तर्भूतश्चेत् तल्लक्षणमेव तस्यापि लक्षणं भविष्यति न पृथग्वक्तव्यं बहिर्भावे तु संयोगसमवायान्यत्वे सति सम्बन्धत्वमेव तल्लक्षणमस्तु इत्याह—संयोगसमवायान्तर्भाव इति। एतेन निरस्तमित्यन्वयः। उक्तयुक्त्येति—तात्त्विकसम्बन्धस्य व्यापको देशकालविप्रकर्षाभावः स च अतीतादिविषयकज्ञानादीनां नास्त्येव इति कथं तात्त्विकस्तेषां सम्बन्धः इत्यादियुक्त्या दृग्दृश्ययोः प्रामाणिकसम्बन्धस्य दूषितत्वात्। न हि ज्ञानं ज्ञेयासम्बद्धमेव प्रकाशकम् अतिप्रसङ्गात् नापि सम्बद्धम् आत्मस्वरूपस्य तद्गुणस्य वा ज्ञानस्य ज्ञेयेन संयोगसमवाययोरभावादित्यादिना [ पृ० ४५२ ] संयोगसमवायान्तर्भावस्य दूषितत्वात्। तदुभयबहिर्भूतेति संयोगसमवायबहिर्भूतसम्बन्धत्वं दृग्दृश्यसम्बन्धे न निराक्रियते, किन्तु तस्य सम्बन्धस्य प्रामाणिकत्वमुक्तयुक्त्या निराक्रियते इति भावः।

दृग्दृश्ययोस्तात्त्विकसम्बन्धे अभ्युपगम्यमानेऽनवस्थापि स्यादित्युक्त्वा सम्बन्धस्य मायिकत्वमेव सिद्ध्यतीत्याह सिद्धान्ती—किञ्च दृक्दृश्ययोर्न तात्त्विकसम्बन्धः सम्बन्धिभिन्नत्वे अनवस्थानात्। न च दृश्यत्वान्तरहीनस्य दृश्यत्वादेरिव सम्बन्धस्यापि स्वनिर्वाहकत्वं क्वचित् भविष्यतीति—वाच्यम्, दृश्यत्वमपि दृक्सम्बन्ध एव तस्य च स्वनिर्वाहकत्वं न मायि-

न्धत्वायोगात् । न चैवमाध्यासिकसम्बन्धत्वेऽप्येतद्दोषप्रसङ्गः तस्य मायिकत्वेन मायायाश्चाघटितघटनापटीयस्त्वेनसर्वानुपपत्तेर्भूषणत्वात् ॥१६॥

---

कत्वं विनेति नास्माकं प्रतिकूलमभ्यधायि देवानां प्रियेण, अभिन्नत्वे सम्बन्धत्वायोगात् । न चैवमाध्यासिकसम्बन्धत्वेऽप्येतद्दोषप्रसङ्गः, तस्य मायिकत्वेन मायायाश्चाघटितघटनापटीयस्त्वेन सर्वानुपपत्तेर्भूषणत्वात् । संयोगसमवाययोः सम्बन्धिभिन्नयोः सम्बन्धत्वदर्शनात् दृग्दृश्ययोः सम्बन्धिभिन्नसम्बन्धासम्भवात् न तस्य तात्त्विकसम्बन्धत्वं दृग्दृश्यसम्बन्धस्य सम्बन्धिभिन्नत्वे समवायाभ्युपगमाच्च साम्यादनवस्थितेरिति न्यायेन अनवस्थाप्रसङ्गाच्च न दृग्दृश्ययोस्तात्त्विकः सम्बन्धः । मिथ्यात्वसाधकदृश्यत्वादिहेतूनामपि मिथ्यात्वेन तत्साधकदृश्यत्वादिकं दृश्यत्वादावपि सिद्धान्तिना स्वीकरणीयम्, अन्यथा दृश्यत्वादीनां मिथ्यात्वं न सिद्ध्येत् अथ च अनवस्थाभयात् दृश्यत्वादौ दृश्यत्वाद्यन्तरं न स्वीकर्तुं शक्यते । अतो दृश्यत्वादिरेव सनिर्वाहकत्वं स्वस्य स्वं प्रति सम्बन्धत्वं स्वीकरणीयं यथा वा प्रमेयत्वे प्रमेयत्वान्तराभावेऽपि प्रमेयत्वे प्रमेयत्वं प्रमेयत्वस्य स्वनिर्वाहकत्वाङ्गीकारात् एवमेव दृग्दृश्यसम्बन्धस्यापि स्वनिर्वाहकत्वं स्वीकरणीयं सम्बन्धे सम्बन्धान्तराभावेऽपि तस्य सम्बद्धत्वं युक्तं स्वनिर्वाहकत्वाङ्गीकारात् इति पूर्वपक्षिणा न वाच्यं कुत इति चेत् ? स्वं न स्वीयं न वा स्वस्मिन् इति प्रतीतेः स्वस्य स्वप्रतियोगिकत्वस्वानुयोगिकत्वयोः कुत्राप्यभावात् । स्वं प्रति कस्यापि स्वस्य न सम्बन्धत्वम् । न चैवं घटादाविव दृश्यत्वेऽपि दृशस्तादात्म्यं मिथ्याभूतं स्वीक्रियताम्, एवं तत्रापि इत्यनवस्था एव तवापि मते दुर्वारा इति वाच्यं, घटादाविव दृश्यत्वादौ तदननुभवात् । यावदनुभवमेव मिथ्याभूतस्य तत्स्वीकारात् । स्वस्य स्वनिर्वाहकत्वे आत्माश्रयः स्वान्यनिर्वाहकत्वेऽनवस्था तथा च स्वस्य मायिकत्वं विना न स्वनिर्वाहकत्वम् उक्तञ्च—

> आत्माश्रयादयो दोषाः सत्तां निघ्नन्ति वस्तुनः ।
> अद्वैतिनां ते सुहृदः प्रपञ्चे तत् प्रसञ्जकाः ॥

सत्तां निघ्नन्ति सत्ताभावं ज्ञापयन्ति तत्प्रसञ्जकाः सत्ताभावज्ञापका इति । तथा च दृग्दृश्यसम्बन्धस्य स्वनिर्वाहकस्य मायिकत्वम् अस्मदनुकूलमेव सम्बन्धस्य सम्बन्धभिन्नत्वे सम्बन्धायोगात् । दृग्दृश्यसम्बन्धस्य आध्यासिकत्वेऽपि सम्बन्धिभिन्न-

न च—अतिप्रसङ्गनिराकरणार्थं दृग्दृश्ययोः सम्बन्धनिर्वचनं प्रकृतम्, न तु विषयत्वनिर्वचनम्। अतो विषयत्वखण्डनमनुक्तोपालम्भनमिति—वाच्यम्। विषयत्वखण्डनेन निरुच्यमानप्रकृतसम्बन्धस्यैव खण्डनात्। न च—विषयित्वानिरुक्तावपि विषयिणः सत्यत्ववत् विषयतानिरुक्तावपि विषयः सत्यः स्यादिति—वाच्यम्। विषयित्वानिरुक्तावपि विषयाध्यासेनैव तदुपपत्त्या विषयिणः सत्यत्वं युक्तम्, विषयत्वानिरुक्तौ

---

सम्बन्धस्य सम्बन्धान्तरापेक्षायामनवस्था स्वनिर्वाहकत्वे आत्माश्रयः इत्यत आह—तस्य सम्बन्धस्य मायिकत्वेन मायायाश्च अघटितघटनापटीयस्त्वेन सर्वानुपपत्तेर्भूषणत्वात्। सुघनीयत्वे तु मायिकत्वमेव न स्यात्। अनुपपत्तिर्भूषणं मायाया इति भावः ॥१६॥

१७—अनुकूलतर्कनिरूपणप्रस्तावे विषयत्वनिरुक्तिखण्डनस्य अनुपयोगादित्याह पूर्वपक्षी—न च अतिप्रसंगनिराकरणार्थं दृग्दृश्ययोः सम्बन्धनिर्वचनं प्रकृतं, न तु विषयत्वनिर्वचनम् अतो विषयत्वखण्डनमनुक्तोपालम्भनमिति-वाच्यम्। घटदृशि पटस्य विषयत्वपरिहाराय करणसन्निकर्षादिद्वारको दृग्दृश्ययोः सम्बन्धो वाच्यः न तु विषयत्वमपि निर्वाच्यमित्यर्थः। उक्तविकल्पखण्डनाभ्यां विषयस्य मिथ्यात्ववर्णनमनुक्तोपालम्भनमात्रमिति। प्रकृतोपयोगितया विषयत्वखण्डनं न अनुक्तोपालम्भनमात्रमित्याह सिद्धान्ती—विषयत्वखण्डनेन निरुच्यमानप्रकृतसम्बन्धस्यैव खण्डनात्। विषयविषयिसम्बन्धः तदैव पारमार्थिको भवितुमर्हति यदि विषयः पारमार्थिकः स्यात् विषयस्य सम्बन्धिनोऽपारमार्थिकत्वे सम्बन्धस्य सुतरामपारमार्थिकत्वमेवेति भावः। दृशो विषयवत्त्वं हि विषयित्वं ततश्च विषयत्वानिमुक्तौ तद्घटितविषयित्वस्यापि अनिरुक्तावपि न विषयिण्याः दृशो मिथ्यात्वं किन्तु सत्यत्वमेव एवं विषयत्वानिरुक्तावपि विषयस्य सत्यत्वं स्यात् इति पूर्वपक्षी शंकते—न च विषयित्वानिरुक्तावपि विषयिणः सत्यत्ववत् विषयतानिरुक्तावपि विषयः सत्यः स्यात् इति वाच्यम्। कृतविवरणोऽयं ग्रन्थः। समाधत्ते—विषयित्वानिरुक्तावपि विषयाध्यासेनैव तदुपपत्त्या विषयिणः सत्यत्वं युक्तं विषयत्वानिरुक्तौ

तु विषयस्य सत्यत्वं न युक्तम्, विषयिणोऽनध्यस्तत्वे विषयाध्यासमन्तरेणान्यस्योपपादकस्याभावात्। यत्र तु विषयिण एवाध्यासः, तत्र विषयः सत्य एव, यथा अज्ञानविषयो ब्रह्म। नचोभयाध्यासः; शून्यवादप्रसङ्गात्। अन्यतराध्यासे च विनिगमकमनुवृत्तत्वव्यावृत्तत्वप्रकाशजडत्वादिकमेव। तस्माद्विषयिणो नित्यदृशोऽनध्यासात् विषयस्यैवात्राध्यासः ॥१७॥

---

तु विषयस्य सत्यत्वं न युक्तं विषयिणोऽनध्यस्तत्वे विषयाध्यासमन्तरेणान्यस्य उपपादकस्याभावात्। यत्र तु विषयिण एव अध्यासः तत्र विषयः सत्य एव यथा अज्ञानविषयो ब्रह्म। न च उभयाध्यासः शून्यवादप्रसंगात्। अन्यतराध्यासे च विनिगमकम् अनुवृतत्वव्यावृतत्वप्रकाशजडत्वादिकमेव। तस्मात् विषयिणो नित्यदृशोऽनध्यासात् विषयस्यैवाध्यासः। विषयत्वनिर्वचनमनपेक्ष्य विषयित्वानिरुक्तावपि विषयिणि विषयाध्यासेनैव विषयित्वनिर्वचनोपपत्त्या विषयाध्यासाधिष्ठानत्वेन विषयिणः सत्यत्वम्। विषयस्य सत्यत्वं तु तस्य निर्वाच्यत्वेनैव वक्तव्यं तदनिर्वाच्यत्वे तस्य सत्यत्वं न युज्यते। विषयिणोऽनध्यस्तत्वे तत्र विषयस्याध्यासमन्तरेण अन्यस्य दृग्दृश्यसम्बन्धोपपादकस्य अभावात्। यत्र तु अज्ञानविषये ब्रह्मणि विषयिणोऽज्ञानस्यैवाध्यासः तत्र विषयस्य ब्रह्मणः सत्यत्वम्। विषयविषयिणोरुभयोरध्यासे शून्यवादप्रसंगात् बाध्यबाधकभावव्यवस्था न स्यात्, प्रमाभ्रमव्यवस्था न स्यात्। सत्यानृतमिथुनीकरणमध्यासः अतः अध्यासे एकतरस्य सत्यत्वमितरस्य मिथ्यात्वम् अवश्यं वाच्यं, कस्य वा सत्यत्वं कस्य वा मिथ्यात्वमित्यत्र विनिगमकजिज्ञासायां यदनुवृत्तं तत्सत्यं तद्व्यावृत्तं तन्मिथ्या यत् प्रकाशरूपं तत्सत्यं यज्जडं तन्मिथ्या इत्यादिकमेव विनिगमकम्। उक्तं च वाक्यप्रदीपे—

> सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ।
> सत्यं यत् तत्र सा जातिरसत्या व्यक्तयो मताः॥ इति

एतेन अनुवृत्तं सत्यं व्यावृत्तं मिथ्या इत्युक्तम्। उक्तविनिगमकानुसारेण प्रकाशरूपस्य नित्यदृशोऽधिष्ठानत्वात् सत्यत्वं जडस्य च विषयस्य तत्राध्यस्तत्वात् मिथ्यात्वमिति विवेकः ॥१७॥

न च—प्रमाणजातं स्वविषयावरणेत्यादियुक्त्या दृग्विषयत्व-रूपदृश्यत्वस्य हेतूकरणेन च त्वयाऽपि विषयत्वं निर्वाच्यमेवेति—वाच्यम् ॥१८॥

तत्त्वतोऽनिर्वाच्यत्वेऽप्यध्यस्तत्वेन घटादिसमकक्षनिर्वाच्यत्वस्य सम्भवात्।

ननु—कथं प्रमाणज्ञानविषयोऽध्यस्त इति—चेन्न—प्रपञ्चविषय-कज्ञाने तत्त्वावेदकत्वलक्षणप्रामाण्याभावादिति गृहाण। अत एव—

यादृशं विषयत्वं ते वृत्तिं प्रति चिदात्मनः।
तादृशं विषयत्वं मे दृश्यस्यापि दृशं प्रति॥

---

१८—विषयत्वस्य सिद्धान्तिनापि निर्वक्तव्यत्वात् न केवलं मयैव विषयत्वं निर्वक्तव्यमित्याह पूर्वपक्षी—न च प्रमाणज्ञानं स्वविषयावरणेत्याद्युक्त्या दृग्विषयत्वरूपदृश्यत्वस्य हेतूकरणेन च त्वयापि विषयत्वं निर्वाच्यमेव इति वाच्यम्। विवरणाचार्येण अविद्यानुमाने एवमुक्तम्—विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वक-मिति तत्र स्वविषयावरणेत्युक्त्या विवरणमतेऽपि विषयत्वं निर्वाच्यम् एवं त्वयापि दृग्विषयत्वरूपदृश्यत्वस्य प्रपञ्चमिथ्यात्वसाधकत्वेन उपादानात् त्वयापि विषयत्वं निर्वाच्यं विषयत्वानिर्वचने तवापि अगतिरेव इति भावः ॥१८॥

१९—समाधत्ते—तत्त्वतोऽनिर्वाच्यत्वेऽपि अध्यस्तत्वेन घटादिसमकक्ष-निर्वाच्यत्वस्य सम्भवात्। 'त्रिकालाबाध्यत्वेन विषयत्वस्य अनिर्वाच्यत्वेऽपि यावद्व्यवहारमबाध्यत्वेन घटादिव्यावहारिकप्रपञ्चवत् निर्वचनसम्भवात्'। निर्वचने आत्माश्रयादयो दोषा अवर्जनीयाः ते च निर्वाच्यस्य वस्तुनः पारमार्थिकसत्त्वाभावं ज्ञापयन्तीति भावः। प्रमाणज्ञानविषयस्य घटादेरध्यस्तत्वं न सम्भवतीति पूर्व-पक्षिशंकामनूद्य प्रत्याचष्टे—ननु कथं प्रमाणज्ञानविषयोऽध्यस्त इति—चेन्न, प्रपञ्चविषयकज्ञाने तत्त्वावेदकत्वलक्षणप्रामाण्याभावादिति गृहाण। अत एव—

यादृशं विषयत्वं ते वृत्तिं प्रति चिदात्मनः।
तादृशं विषयत्वं मे दृश्यस्यापि दृशं प्रति॥

इति—निरस्तम्। चिदात्मनोऽनध्यासेऽपि वृत्तेस्तत्राध्यस्तत्वेन तद्दृष्टान्तेन प्रकृतेऽप्यनध्यासस्य वक्तुमशक्यत्वात् ॥१९॥

स्यादेतत्—मिथ्यात्वनिर्वचनात्तत्साधनं दृश्यत्वादिकं निर्वक्तव्यमेव। न हि घटाद्यसङ्कीर्णाकारज्ञानं विना तद्विलक्षणव्यवहारः, अथ निरुक्तासङ्कीर्णाकारज्ञानमात्रेण तदुपपत्तिः, तर्हि तुल्यं ममापि। इयांस्तु विशेषः; यत्तव स आकारः सद्विलक्षणः मम तु त्वन्मतसिद्धप्रातिभासिक-

---

इति—निरस्तम्; चिदात्मनोऽनध्यासेऽपि वृत्तेस्तत्राध्यस्तत्वेन तद्दृष्टान्तेन प्रकृतेऽप्यनध्यासस्य वक्तुमशक्यत्वात्। ननु प्रमाणज्ञानं स्वविषयावरणेत्यत्र विषयत्वं नाम न वास्तवं किन्तु अध्यस्तत्वमेव, तथा च स्वविषयावरणेत्यत्र स्वाध्यस्तावरणेत्यर्थो विवक्षित इति चेन्न, एवं वदता प्रमाणज्ञाने एव विषयोऽध्यस्त इति वाच्यम्, ओमिति चेत् तत्राह—**ननु कथमिति**। प्रमाणज्ञाने तद्विषयाध्यासे तुच्छादिज्ञाने तुच्छादेरध्यासप्रसङ्गः। प्रमाणज्ञाने स्वविषयस्य अध्यस्तत्वं न युक्तम् अध्यासो हि लोके अधिष्ठानाज्ञानजन्यो अधिष्ठानज्ञाननिवर्त्यश्च दृष्टः एवञ्च प्रमाणज्ञाने विषयस्य नाध्यासः तस्य प्रमाणज्ञानाज्ञानजन्यत्वाभावात् ज्ञानस्य ज्ञातैकसत्त्वेन प्रमाणज्ञानाज्ञानस्यैवाभावात्। ततश्च अध्यासविषयत्वरूपमध्यस्तत्वं न युक्तमिति पूर्वपक्षिशंकाया समाधानमाह इति चेन्न इति सिद्धान्ते प्रपञ्चविषयकज्ञाने तत्त्वावेदकत्वलक्षणप्रामाण्याभावात् प्रत्यक्षबाधोद्धारादिप्रकरणे एतस्य प्रपञ्चितत्वात्। अत एव यदुक्तं पूर्वपक्षिणा यादृशं विषयत्वं ते वृत्तिं प्रति चिदात्मनः इत्यादि तदपि निरस्तम्। अध्यासे सत्यानृतमिथुनीकरणमपेक्षितं न तु विषयिणः सत्यत्वं विषयस्यानृतत्वञ्च। ब्रह्मणो वृत्तौ अनध्यासेऽपि ब्रह्मविषयिण्याः वृत्तेर्ब्रह्मणि अध्यासात् ज्ञानज्ञेययोराध्यासिकः सम्बन्ध इति सिद्धान्तस्याक्षतत्वात्। घटादिप्रमायामपि आध्यासिक एव ज्ञानज्ञेयसम्बन्धः सिद्ध्यति। घटाद्याकारवृत्त्यवच्छेदेन चैतन्ये परमार्थसति घटादेरध्यासात् इति ॥१९॥

२०—मिथ्यात्वनिर्वचनवत् विषयत्वादीनामपि निर्वचनं सिद्धान्तिनोऽपि आवश्यकं निर्वचनाभावमात्रेण न कस्यापि मिथ्यात्वं सिद्ध्यतीति पूर्वपक्षी शङ्कते—**स्यादेतत्। मिथ्यात्वनिर्वचनात्तत्साधनं दृश्यत्वादिकं निर्वक्तव्यमेव। नहि घटाद्यसङ्कीर्णाकारज्ञानं विना तद्विलक्षणव्यवहारः, अथ निरुक्ता-**

वैलक्षण्यसाधकमानसिद्धमसत्ताकः। न हि लक्षणोक्त्यनुक्तिभ्यां सदसद्वैलक्षण्यरूपानिर्वचनीयत्वहानिलाभौ ब्रह्मण्यपि श्रौतस्यापि जगत्कारणत्वादिलक्षणस्य खण्डनरीत्या असम्भवात्। त्वयैव कीदृक्तत्प्रत्यगिति-चेत्तादृगीदृगिति द्वयम्। यत्र न प्रसरत्येतत्प्रत्यगित्यवधारयेति ब्रह्मणोऽपि दुर्निरूपत्वोक्तेश्च। प्रपञ्चेऽपि त्वदुक्तानिर्वाच्यत्वसमकक्षलक्षणसम्भवाच्च। यत्कठिनं सा पृथिवीत्यादिश्रुत्या पृथिव्यादीनामपि लक्षणत्वोक्तेश्च। तस्मादनिर्वाच्यत्वं न सत्त्वविरोधि। सत्त्वेऽप्यनुद्भूतत्वादेवानिर्वाच्यत्वोपपत्तेः। न च निर्वाच्यत्वमपि सत्त्वप्रयोजकम्, न हि शुक्तिरूप्यस्यापीतरभेदसाधकं रूप्यत्वं प्रातीतिकजातिरूपतया सुवचमपि तत्यम्। किञ्च ब्रह्मण आनन्दत्वज्ञानत्वसत्यत्वस्वप्रकाशत्वादिखण्डनोक्तरीत्या दुर्वचमिति ब्रह्मतत्त्वतोऽनानन्दाद्यात्मकं स्यात्। तस्मादिक्षुक्षीरादिमाधुर्यवदनिर्वाच्यमपि विषयत्वं सदेवेति ॥२०॥

---

सङ्कीर्णाकारज्ञानमात्रेण तदुपपत्तिः तर्हि तुल्यं ममाऽपि। इयांस्तु विशेषः, यत्तव स आकारः सद्विलक्षणः, मम तु त्वन्मतसिद्धप्रातिभासिकवैलक्षण्यसाधकमानसिद्धसत्ताकः। न हि लक्षणोक्त्यनुक्तिभ्यां सदसद्वैलक्षण्यरूपानिर्वचनीयत्वहानिलाभौ, ब्रह्मण्यपि श्रौतस्यापि जगत्कारणत्वादिलक्षणस्य खण्डनरीत्या असंभवात्। त्वयैव—

> कीदृक्तत्प्रत्यगिति चेत्तादृगीदृगिति द्वयम्।
> यत्र न प्रसरत्येतत्प्रत्यगित्यवधारये'ति ॥

ब्रह्मणोऽपि दुर्निरूपत्वोक्तेश्च। प्रपञ्चेऽपि त्वदुक्तानिर्वाच्यत्वसमकक्षलक्षणसंभवाच्च। 'यत् कठिनं सा पृथिवी'त्यादिश्रुत्या पृथिव्यादीनामपि लक्षणत्वोक्तेश्च। तस्मादनिर्वाच्यत्वं न सत्त्वविरोधि। सत्त्वेऽप्यनुद्भूतत्वादेवानिर्वाच्यत्वोपपत्तेः। न च निर्वाच्यत्वमपि सत्त्वप्रयोजकम्, न हि शुक्तिरूप्यस्यापीतरभेदसाधकं रूप्यत्वं प्रातीतिकजातिरूपतया सुवचमपि सत्यम्। किं च ब्रह्मण आनन्दत्वज्ञानत्वसत्यत्वप्रकाशत्वादिखण्डनोक्तरीत्या दुर्वचमिति ब्रह्मतत्त्वतोऽनानन्दाद्यात्मकं स्यात्। तस्मादिक्षुक्षीरादिमाधुर्यवदनिर्वाच्यमपि विषयत्वं

सदेवेति। मिथ्यात्वस्य सदसद्वैलक्षण्यमित्यादिनिर्वचनं कुर्वता सिद्धान्तिना मिथ्यात्वसाधनं दृश्यत्वमपि निर्वक्तव्यं विषयत्वस्य 'त्वदीयहेत्वन्तर्गतत्वात्' तद्धेतुज्ञानाय विषयत्वमवश्यं लक्षणीयम्। न हि घटाद्यसङ्कीर्णेति घटादौ पटाद्यसङ्कीर्णव्यवहाराय तद्धेतुभूतं पटाद्यसङ्कीर्णपृथुबुध्नोदरादेर्ज्ञानं तादृशासङ्कीर्णव्यवहारश्च तवाऽप्यस्ति। तथा च असङ्कीर्णतादृशाकार एव घटादेर्लक्षणमिति एवमसङ्कीर्णव्यवहारहेतुतया ज्ञातस्य विषयत्वस्य लक्षणं त्वयापि वक्तव्यमिति विषयत्वलक्षणखण्डनम् अयुक्तमित्यर्थः। ननु तादृशाकारलक्षणज्ञानमपि न तादृशव्यवहारहेतुरिति शङ्कते अथ निरुक्तेति। तदुपपत्तिरिति असङ्कीर्णव्यवहारोपपत्तिः। असङ्कीर्णाकारज्ञानमात्रेण असङ्कीर्णव्यवहारोपपत्तौ किं तन्निर्वचनेनेति चेत् तर्हि तुल्यं ममापि। तादृशव्यवहारोपपत्तौ तन्निर्वचनं मयाऽपि न कर्तव्यमित्यर्थः। इयांस्त्विति अयमान्तरालिको विशेषः ज्ञाने स असङ्कीर्ण आकारः सिद्धान्तिनः सद्विलक्षणः। मम तु स आकारः सन्निति अनिरुच्यमानोऽपि स तव येन मानेन अप्रातिभासिकः तेनैव मम तात्त्विकोऽस्तु। प्रातिभासिकवैलक्षण्यसाधकमानेन मम तात्त्विकत्वसिद्धिरिति भावः। पूर्वपक्षिमते तात्त्विकव्यावहारिकसत्त्वयोर्भेदाभावात्। न हि लक्षणोक्त्यनुक्तिभ्यामिति लक्षणोक्तौ अनिर्वाच्यत्वभङ्गः अनुक्तौ तल्लाभ इति न युक्तम्। न हि अनिरुच्यमानलक्षणवत्त्वमनिर्वाच्यत्वं किन्तु सदसद्वैलक्षण्यं तच्च लक्षणोक्त्यनुक्त्योः सममेवेत्यर्थः। ननु दुर्निरूपलक्षणकत्वं सदसद्वैलक्षण्यरूपानिर्वाच्यत्वे प्रयोजकं भविष्यतीति चेत् तत्राह—ब्रह्मण्यपीति। खण्डनकारोक्तरीत्या कारणत्वलक्षणं दुर्निरूपमिति ब्रह्मणि जगत्कारणत्वस्य असम्भवापातात्। इष्टापत्तिं परिहर्तुं श्रौतस्येत्युक्तं "यतो वा इमानि भूतानी"ति श्रुत्युक्तस्य जगत्कारणत्वस्य अनिर्वचनीयत्वे श्रुतेरतत्त्वावेदकत्वं स्यादित्यर्थः। असम्भवात् इत्यस्य असंभवप्रसंगाद्धित्यर्थः। ब्रह्मणोऽपि दुर्निरूपलक्षणकत्वस्य सिद्धान्तिना उक्तत्वात् ब्रह्मणोऽपि अनिर्वाच्यत्वं स्यात् इत्याह—त्वयैवेति। तत्प्रत्यगात्मस्वरूपं कीदृक् कीदृशमिति चेत् पृच्छसि? तर्हि तादृक् तादृशमीदृगीदृशमितिनिरूपणं यत्र न प्रसरति तद्वस्तुप्रत्यगित्यवधार्यताम् इत्यनेन ब्रह्मणोऽपि दुर्निरूपत्वस्य उक्तत्वात् ब्रह्मणोऽपि अनिर्वाच्यत्वं स्यादित्यर्थः। दुर्निरूपलक्षणवत्त्वे सत्यत्वमित्यनेन सुनिरूपलक्षणवत्त्वे सत्यत्वमिति प्राप्तं

अत्रोच्यते—दृश्यत्वादेरनिर्वचनीयत्वं किं सत्त्वेन, उत स्वरूपेण। नाद्यः; सत्त्वेनानिर्वचनीयत्वेऽपि तत्तदाभासलक्षणानालिङ्गितत्वमात्रेण हेतुत्वोपपत्तेः। तन्निर्वचनानपेक्षणात्। न द्वितीयः; तात्त्विकातात्त्विक-

---

तच्च त्वन्मते अयुक्तमित्याह—प्रपञ्चेऽपीति। त्वदुक्तसदसद्वैलक्षण्यरूपा-निर्वाच्यत्वलक्षणस्य प्रपञ्चेऽपि सुनिरूपणत्वात् सत्यत्वापत्तिः। "प्रपञ्चादावपि त्वदुक्तानिर्वाच्यत्वादिलक्षणसम्भवाच्चेति" न्यायामृते पाठः। अत्र पुनः अनि-र्वाच्यत्वसमकक्षलक्षणसम्भवाच्चेति पाठो दृश्यते उभयपाठेऽपि तुल्य एवार्थः। प्रपञ्चे अनिर्वचनीयत्वाख्यान्यलक्षणमाधुनिकपुरुषोत्प्रेक्षितत्वात् सम्भावितदोषं न तत् सत्यत्वमापादयतीत्यत आह—यत्कठिनमिति। आदिपदेन यद्द्रवं तदापो यदुष्णं तत्तेज इत्यादिश्रुतिग्रहणम्। तथा च निर्दोषश्रुतिसिद्ध-लक्षणस्य सत्त्वात् पृथिव्यादीनामपि सत्यत्वापत्त्या अनिर्वचनीयत्वं न स्यादिति। इत्थमिति वक्तुमशक्यत्वमद्भूतत्वादेव युक्तम्। अद्भूतत्वादेव अनिर्वाच्यत्वं न तु मिथ्यात्वात्। उक्तञ्च न्यायामृते—तस्मात् प्रमितस्य इत्थमिति निर्वक्तुमशक्यत्वं प्रतिपुरुषमुखं स्पष्टाबाधितदृष्टिदृष्टविलक्षणसंस्थानविशेषस्येव सत्यत्वेऽपि अद्भूत-त्वादेव युक्तम्। उक्तं हि उद्भूतत्वादनिर्वाच्यमिति। निर्वाच्यत्वमपि न सत्त्वप्रयोजक-मित्याह—न हि शुक्तिरूप्यस्य इतरभेदकं रूप्यत्वं प्रातीतिकजातिरूपतया सुवचमिति तद्व्यावहारिकम्। न वा मुखसंस्थानविशेषो दुर्वच इति प्रातिभासिकः। किञ्च ब्रह्मण आनन्दत्वज्ञानत्वसत्यत्वस्वप्रकाशत्वादिकं खण्डनोक्तरीत्या दुर्वचमिति न ब्रह्मतत्त्वोऽनानन्दाद्यात्मकम्। खण्डनरीत्या धर्मधर्मिभावमात्रस्य निरस्तत्वादिति भावः। तस्मान्निर्वचनायोग्यस्यापि विश्वस्य इक्षुक्षीरमाधुर्यवत् प्रामाणिकत्वादेव सत्त्वसिद्धेः निरुक्तौ खण्डितायां निर्वचनाभावरूपमनिर्वाच्यत्वं यद्यपि सिद्ध्यति तथापि सदसद्वैलक्षण्यरूपं तन्न सिद्ध्यति निरुक्तिविरहेऽपि प्रतिपुरुषमुखवत् इक्षुक्षीरादिमाधुर्यवच्च सत्त्वसिद्धेः। एवञ्च सदसद्वैलक्षण्यरूपानिर्वचनीयत्वसिद्ध्यर्थं यत् निरुक्तिखण्डनं तद्भ्रान्तिमूलकं भ्रान्तौ कारणमनिर्वाच्यानिरुक्तिशब्दयोरेकार्थ-त्वरूपं शब्दसाध्यमेव इत्यर्थः ॥२०॥

२१—समाधत्ते सिद्धान्ती—अत्रोच्यते दृश्यत्वादेरनिर्वचनीयत्वं किं सत्त्वेन उत स्वरूपेण नाद्यः, सत्त्वेनानिर्वचनीयत्वेऽपि तत्तदाभास-

साधारणेन दृक्सम्बन्धित्वादिना रूपेण दृग्विषयत्वस्य निर्वक्तुमशक्य-
त्वात्। लक्षणोक्त्यनुक्त्योर्न सदसद्वैलक्षण्यरूपानिर्वाच्यत्वहानिलाभकर-
त्वमिति यदवोचः, तदपि न; पूर्वोक्तव्यापकानुपलब्धिसहितायाः लक्षणा-
निरुक्तेः उक्तरूपानिर्वचनीयत्वप्रयोजकत्वात्। यत्त्वानन्दत्वादिना धर्मेण
कीदृगित्यादिना स्वरूपेण च दुर्निरूपत्वात् ब्रह्मणोऽप्यनिर्वचनीयत्व-
प्रसङ्ग इति तन्न; आनन्दत्वादिधर्मवत्तया दुर्निरूपत्वेऽपि दुःखप्रत्यनी-
कत्वाद्युपलक्षितस्वरूपस्य सत्त्वेन निर्वक्तुं शक्यत्वात्। न चैवं प्रपञ्चे
सत्त्वं शक्यनिर्वचनम्। बाधकसद्भावात्। अत एव—कठिनस्पर्शवत्त्वा-
दिना पृथिवीत्वादीनां निर्वचनमस्त्येव, सत्त्वेऽप्युद्भूतत्वादिना निर्वाच्य-
त्वोपपत्तिरिति—निरस्तम्; न हि निरुक्तिविरहमात्रेणानिर्वाच्यत्वं
ब्रूमः, किन्तु सत्त्वादिना निरुक्तिविरहेण, स च प्रपञ्चे बाधकादस्त्येव।
न च—ज्ञाने विषयस्याध्यस्तत्वे तदज्ञानाजन्यं तज्ज्ञाननिवर्त्यं चाध्यासं
प्रति विषयत्वं तदनुविद्धतया प्रतीत्यभावश्च न सम्भवतीति—वाच्यम्;

---

लक्षणानालिङ्गितत्वमात्रेण हेतुत्वोपपत्तेः तन्निर्वचनानपेक्षणात्। न
द्वितीयः, तात्त्विकसाधारणेन दृक्सम्बन्धित्वादिना रूपेण दृग्विषयत्वस्य
निर्वक्तुमशक्यत्वात्। लक्षणोक्त्यनुक्त्योर्न सदसद्वैलक्षण्यरूपानिर्वाच्य-
त्वहानिलाभकरत्वमिति यदवोचः तदपि न, पूर्वोक्तव्यापकानुपलब्धि-
सहितायाः लक्षणानिरुक्तेः उक्तरूपानिर्वाच्यत्वप्रयोजकत्वात्। यत्त्वा-
नन्दत्वादिना धर्मेण कीदृगित्यादिना स्वरूपेण च दुर्निरूपत्वात्
ब्रह्मणोऽप्यनिर्वचनीयत्वप्रसङ्ग इति तन्न, आनन्दत्वादिधर्मवत्तया
दुर्निरूपत्वेऽपि दुःखप्रत्यनीकत्वाद्युपलक्षितस्वरूपस्य सत्त्वेन निर्वक्तुं
शक्यत्वात्। न चैवं प्रपञ्चे सत्त्वं शक्यनिर्वचनम्। बाधकसद्भावात्।
अत एव—कठिनस्पर्शवत्त्वादिना पृथिवीत्वादीनां निर्वचनमस्त्येव,
सत्त्वेऽप्युद्भूतत्वादिना निर्वाच्यत्वोपपत्तिरिति—निरस्तम्, न हि
निरुक्तिविरहमात्रेणानिर्वाच्यत्वं ब्रूमः, किन्तु सत्त्वादिना निरुक्तिविरहेण
स च प्रपञ्चे बाधकादस्त्येव। न च ज्ञाने विषयस्याध्यस्तत्वे तदज्ञान-
जन्यं तज्ज्ञाननिवर्त्यं चाध्यासं प्रति विषयत्वं तदनुविद्धतया प्रतीत्य-

चैतन्यमात्राज्ञानजन्यत्वात् तज्ज्ञाननिवर्त्यत्वाच्च घटादिप्रपञ्चस्येत्युक्तत्वात्। सदिति प्रतीयमानाधिष्ठानचैतन्यानुविद्धतया प्रतीयमानत्वमप्यस्त्येव। तस्मात्सत्यत्वे दृग्दृश्यसम्बन्धत्वानुपपत्तिर्दृढैव ॥२१॥

इत्यद्वैतसिद्धौ प्रपञ्चमिथ्यात्वानुकूलतर्कनिरूपणम् ॥

---

भावश्च न सम्भवतीति—वाच्यम्, चैतन्यमात्राज्ञानजन्यत्वात्। तज्ज्ञाननिवर्त्यत्वाच्च घटादिप्रपञ्चस्येत्युक्तत्वात्। सदितिप्रतीयमानाधिष्ठानचैतन्यानुविद्धतया प्रतीयमानत्वमप्यस्त्येव। तस्मात् सत्यत्वेदृग्दृश्यसम्बन्धत्वानुपपत्तिर्दृढैव।

यच्चोक्तं पूर्वपक्षिणा मिथ्यात्वानुमापकं दृश्यत्वादिकं सिद्धान्तिनापि निर्वक्तव्यमेव तदनुभाष्य दूषयति—दृश्यत्वादेः सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वेऽपि मिथ्यात्वानुमापकत्वोपपत्तेः। दृश्यत्वादिलिङ्गस्य लिङ्गाभासलक्षणेन अनालिङ्गितत्वमात्रेण लिङ्गत्वोपपत्तेः। तदुक्तं खण्डने—प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं त्वदीयसाधनबाधनक्षमतायां न नियामकं किन्तु सद्वचनाभासलक्षणयोगित्वमित्यवश्यमभ्युपेयं भवता। यदि तु अस्मद्वचसि सद्वचनाभासलक्षणं न भवान् दर्शयितुमीष्टे तदा अनभ्युपगम्य प्रमाणादीनि भवता प्रवर्तितोऽयं व्यवहार इति शतकृत्वस्त्वयोच्यमानेऽपि नास्माकमादरः। [पृ० १७-१९] व्याख्यातं च विद्यासागरेण—साधनस्य साधनबाधनाक्षमतायां नियामकं सद्वचनाभासलक्षणयोगित्वं सद्वचनाभासलक्षणानि असिद्ध्यादिहेत्वाभासलक्षणानि। तेषामन्यतमयोगित्वमेव साधनबाधनाक्षमतायां नियामकं न साधनस्य अनिर्वाच्यत्वम्। अनिर्वाच्यमपि साधनहेत्वाभासलक्षणानालिङ्गितं चेत् किमबाधात् असाधकं भवेत्। प्रपञ्चसत्यत्ववादिनोऽपि परस्परं परसाधनानामसाधकत्वं ते अङ्गीकुर्वन्ति। एतत् कुतः न हि साधनानां निर्वाच्यत्वमात्रेण साधकत्वं तथात्वे प्रपञ्चसत्यत्ववादिनां परस्परं विरोधो न भवेत्। किन्तु हेत्वाभासलक्षणयोगिनां साधनानामसाधकत्वं तदयोगिनां साधनानां साधकत्वमित्येव नियामकं सर्वैरङ्गीकरणीयम्। तथा प्रकृतेऽपि मिथ्यात्व-

साधकानां दृश्यत्वादिसाधनानां हेत्वाभासलक्षणरहितानां साधकत्वं निर्बाधमेव। मिथ्यात्वसाधकदृश्यत्वादीनां साधकत्वाय दृश्यत्वादीनां निर्वचनमनपेक्ष्य नियमेन केवलमाभासलक्षणराहित्यमेव अपेक्षणीयम् आभासलक्षणराहित्यञ्च प्रतिपादितमेव इति भावः। **न द्वितीय** इति। दृक्सम्बन्धित्वादिरूपेण दृश्यत्वस्य निर्वक्तुमशक्यत्वात् स्वतो दुर्निरूपस्य किमपि रूपं सुनिरूपं न भवितुमर्हति दृशि अध्यस्तत्वरूपस्य दृश्यत्वस्य अनिर्वाच्यत्वात्। यच्चोक्तं पूर्वपक्षिणा लक्षणोक्त्यनुक्त्योर्न हानिलाभकरत्वमिति तदपि न तात्त्विकसम्बन्धस्य व्यापकः देशकालविप्रकर्षाभावः दृग्दृश्ययोः सम्बन्धे व्यापकानुपलब्ध्या व्यापकाभावे सिद्धे तद्व्याप्यतात्त्विकसम्बन्धस्यापि अभावः सिद्ध्यति। तथा च व्यापकानुपलब्धिसहितायाः लक्षणानिरुक्तेः दृग्दृश्यसम्बन्धानिर्वाच्यत्वे प्रयोजकत्वात् लक्षणानुक्तिः अस्माकं लाभकरी न निष्फला इति भावः। यदप्युक्तं खण्डनरीत्या ब्रह्मणोऽपि जगत्कारणत्वानान्दत्वादिधर्माणामसिद्ध्यापत्तिः कीदृगित्यादिना ब्रह्मणः स्वरूपतोऽपि अनिर्वचनीयत्वप्रसङ्ग इत्यादि तदपि न धर्मवत्तया ब्रह्मणो दुर्निरूपत्वमस्माकमिष्टमेव। तदुक्तं खण्डने "तत्त्वानि कस्मान्न यथावदेव सैद्धान्तिकेऽप्यध्वनि योजयध्वम्"। तस्मात् यथावत् परप्रक्रियायामिव स्वप्रक्रियामपि तानि खण्डनानि कस्मान्न योजयध्वं यूयं द्वैतवादिनः। धर्मवत्तया ब्रह्मणो दुर्निरूपत्वेऽपि दुःखप्रत्यनीकत्वाद्युपलक्षितस्वरूपस्य सद्रूपत्वेन निर्वक्तुं शक्यत्वात् निर्धर्मकस्य ब्रह्मणो यथा सदात्मकतया निरूपणीयत्वं तथा ब्रह्मनिर्गुणत्वे प्रमानुपपत्त्यादिप्रकरणे उपपादयिष्यते। तादृगीदृगित्यादिवचनं तु तादृक् परोक्षधर्मवत् ईदृगपरोक्षधर्मवत् ब्रह्म न भवति। किन्तु ब्रह्मणः स्वप्रकाशत्वप्रतिपादनपरम्। न चैवं ब्रह्मवत्प्रपञ्चेऽपि सत्त्वं शक्यनिर्वचनं श्रुत्या युक्त्या च प्रपञ्चस्य बाध्यत्वात् सर्वबाधसाक्षित्वेन ब्रह्मणोऽबाध्यत्वात् अत एव कठिनस्पर्शवत्त्वादिनेति पृथिव्यादीनां यथा कथंचित् निर्वचनमात्रेण न सत्त्वसिद्धिः। नापि निर्वचनविरहमात्रेण अनिर्वाच्यत्वं ततोऽसत्त्वमिति न ब्रूमः किन्तु त्रिकालाबाध्यत्वरूपसत्त्वेन निर्वचनासम्भवात् पृथिव्यादीनां न सत्त्वसिद्धिः श्रुत्या युक्त्या च प्रपञ्चस्य बाध्यत्वात् सर्वथा अबाध्यत्वरूपसत्त्वस्य प्रपञ्चे असिद्धेः। यदपि

पूर्वपक्षिणा ज्ञाने विषयस्य अध्यस्तत्वे दूषणमभिहितं तदनूद्य समाधत्ते—न च ज्ञाने विषयस्याध्यस्तत्वे इति। चैतन्यरूपज्ञानस्य आवरकाज्ञानजन्यत्वात् विषयाध्यासस्य सर्वो विषयः स्वाधिष्ठानचैतन्येऽज्ञातेऽध्यस्तः तज्ज्ञानेन च निवर्तनीयः। अधिष्ठानानुविद्धतया प्रतीयमानत्वञ्च अध्यस्ते प्रपञ्चेऽस्त्येव। अत्राधिष्ठानपदमाधारपरम्। अखण्डानन्दरूपेण आधिष्ठानस्य मूलाज्ञानावृतत्वेऽपि अनाद्यविद्याकल्पितभेदसामान्यांशस्य सद्रूपस्य आधारस्य अध्यस्तसर्वप्रपञ्चानुस्यूततया प्रतीयमानत्वमस्त्येव अतो अध्यस्तत्वेऽपि ब्रह्मणि सर्वप्रपञ्चस्य नानुभवविरोधः। तस्मात् दृग्दृश्यसम्बन्धानुपपत्तिः प्रपञ्चस्य सत्यत्वे सुदृढैवेति भावः ॥२१॥

इतिश्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथ-
देवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्या-
मनुकूलतर्कनिरूपणविवरणम्।

## अथ प्रतिकर्मव्यवस्थोपपत्तिः ।

ननु—"विश्वस्याध्यासिकत्वे प्रातिभासिकस्थल इव विषयेन्द्रियसन्निकर्षाधीनायाः प्रतिकर्मव्यवस्थाया अनुपपत्तिरिति"—चेत् ॥१॥

न, वृत्तेः पूर्वमेव घटादीनां चैतन्येऽध्यासेन प्रातिभासिकस्थलापेक्षया

---

१—मिथ्यात्वानुमानस्यानुकूलतर्करूपेण साक्षादुपकारकमिदं प्रकरणं स्वप्रकाशायां दृशि अध्यस्तस्य दृश्यस्य प्रातिभासिकतया नित्यवत् प्रकाशापत्तौ प्रतिकर्मव्यवस्थाप्रदर्शनेन विवरणाचार्यैः प्रागेवापत्तेः समाधानं कृतं तदनूद्य पूर्वपक्षिणा दूषितमाचार्येण तन्निरस्य विवरणीयप्रकरणं निर्मलीकृतमिति बोध्यम् । प्रतिकर्मव्यवस्थोपपादनेनानुकूलतर्कतया मिथ्यात्वानुमानमनुगृहीतं प्रतिकर्मव्यवस्थाया अनुपपत्तौ दृश्यत्वादयो हेतव अनुकूलतर्करहिताः मिथ्यात्वासाधकाः स्युरिति प्रकरणस्योत्थानबीजम् । अत एव पूर्वपक्षिणाऽस्य प्रकरणस्यावसाने उपसंहरिष्यते—"तस्मात् अनुकूलतर्कहीना मिथ्यात्वहेतव इति । अतः प्रतिकर्मव्यवस्थोपपत्तिप्रकरणमपि अनुकूलतर्कनिरूपणप्रकरणान्तर्गतमेव । प्रकरणद्वयेन अनुकूलतर्कनिरूपणमेव कृतमिति ।

दृश्यस्य दृगध्यस्तत्वे प्रातिभासिकस्थले इव इन्द्रियसन्निकर्षायोगेन त्वदुक्तप्रतिकर्मव्यवस्थाया अयोग इति वक्तुं सिद्धान्तिप्रक्रियामनुवदति पूर्वपक्षी—**ननु विश्वस्याध्यासिकत्वे प्रातिभासिकस्थले इव विषयेन्द्रियसन्निकर्षाधीनायाः प्रतिकर्मव्यवस्थाया अनुपपत्तिरिति चेत्** । ज्ञाधातोः सकर्मकत्वेन ज्ञाधातोः कर्मैव ज्ञानस्य विषयः तथा च प्रतिकर्मव्यवस्था इत्यस्य प्रतिज्ञानं विषयव्यवस्था इत्यर्थः । विषयस्य अध्यस्तत्वे प्रातिभासिकत्वात् प्रातिभासिकशुक्तिरजतादीनां स्वज्ञानकालमात्रस्थायित्वेन ज्ञानजनकविषयेन्द्रियसन्निकर्षस्य प्रातिभासिकविषयेण सह असम्भवात् यथा इन्द्रियसन्निकर्षाधीना विषयव्यवस्था प्रातिभासिकज्ञानस्य न सम्भवति एवं व्यावहारिकविषयकज्ञानस्यापि इन्द्रियसन्निकर्षाधीना विषयव्यवस्था सिद्धान्तिमते न स्यात् व्यावहारिकप्रपञ्चस्य दृशि अध्यस्तत्वात् प्रातिभासिकशुक्तिरजततुल्यत्वात् इति पूर्वपक्षिण आशयः ॥१॥

वैलक्षण्यात्। तथा हि—अन्तःकरणं चक्षुर्वत्तेजोवयवि। तच्चेन्द्रियद्वारेण तत्संयुक्तं विषयं व्याप्य तदाकारं भवति। यथा नद्याद्युदकं प्रणाड्या निःसृत्य-केदाराद्याकारं भवति, सैव वृत्तिरित्युच्यते। तत्र जीवचैतन्यमविद्यो-पाधिकं सत् सर्वगतमन्तःकरणोपाधिकं सत् परिच्छिन्नमिति मतद्वयम्। तत्राद्ये विषयप्रकाशकं जीवचैतन्यम्। द्वितीये ब्रह्मचैतन्यम्। आद्ये पक्षेऽपि जीवचैतन्यमविद्यानावृतम् आवृतं च। तत्राद्ये वृत्तिर्जीवचैत-न्यस्य विषयोपरागार्था। द्वितीये त्वावरणाभिभवार्था। परिच्छिन्नत्व-पक्षे तु जीवचैतन्यस्य विषयप्रकाशकतदधिष्ठानचैतन्याभेदाभिव्य-क्त्यर्था। अनावृतत्वपक्षे ह्यनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकार-वृत्त्यैवोपरज्यते न तु विषयैः, असङ्गत्वात्। यथा गोत्वं सर्वगतमपि सास्नादिमद्व्यक्त्याऽभिव्यज्यते, न तु केसरादिमद्व्यक्त्या। यथा वा प्रदीपप्रभा आकाशगन्धरसादिव्यापिन्यपि तान्न प्रकाशयन्ति रूपसंसर्गि-

---

२—व्यवहारिकविषयस्य अज्ञातसत्ताभ्युपगमात् न प्रातिभासिकत्वमिति समाधत्ते सिद्धान्ती—न वृत्तेः पूर्वमेव घटादीनां चैतन्येऽध्यासेन प्राति-भासिकस्थलापेक्षया वैलक्षण्यात्। तथा हि—अन्तःकरणं चक्षुर्वत् तेजो-ऽवयवि। तच्चेन्द्रियद्वारेण तत्संयुक्तं विषयं व्याप्य तदाकारं भवति। यथा नद्याद्युदकं प्रणाड्या निःसृत्य केदाराद्याकारं भवति सैव वृत्तिरि-त्युच्यते। तत्र जीवचैतन्यमविद्योपाधिकं सत् सर्वगतमन्तःकरणोपाधिकं सत् परिच्छिन्नमिति मतद्वयम्। तत्राद्ये विषयप्रकाशकं जीवचैतन्यम्। द्वितीये ब्रह्मचैतन्यम्। आद्ये पक्षेऽपि जीवचैतन्यमविद्यानावृतम् आवृतं च। तत्राद्ये वृत्तिर्जीवचैतन्यस्य विषयोपरागार्था। द्वितीये तु आव-रणाभिभवार्था। परिच्छिन्नत्वपक्षे तु जीवचैतन्यस्य विषयप्रकाशक-तदधिष्ठानचैतन्याभेदाभिव्यक्त्यर्था। अनावृतत्वपक्षे हि अनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकारवृत्त्यैवोपरज्यते न तु विषयैः असंगत्वात् यथा गोत्वं सर्वगतमपि सास्नादिमद्व्यक्त्याऽभिव्यज्यते न तु केसरादिमद्व्यक्त्या यथा वा प्रदीपप्रभा आकाशगन्धरसादि-व्यापिन्यपि तान् न प्रकाशयन्ति रूपसंसर्गितया रूपमेव प्रकाशयति

तया रूपमेव प्रकाशयति तद्वत्। केवलाग्न्यदाह्यस्यापि अयःपिण्डादिसमारूढाग्निदाह्यत्ववच्च केवलचैतन्याप्रकाश्यस्यापि घटादेस्तत्तदाकारवृत्त्युपारूढचैतन्यप्रकाश्यत्वं युक्तम्। एवञ्चानावृतत्वपक्षे तत्तदाकारवृत्तिद्वारा चैतन्यस्य तत्तदुपरागे तत्तदर्थप्रकाशः। आवृतत्वपक्षे तत्तदाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्यावरणाभिभवेन तत्तदर्थप्रकाशः। अन्तःकरणावच्छिन्नचैतन्यरूपत्वे जीवस्यावच्छेदकान्तःकरणतत्तद्विषयाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्याभिव्यक्तौ तत्तत्प्रकाशः। यद्यपि प्रकाशमधिष्ठानचैतन्यं सर्वगतं जीवचैतन्यं चान्तःकरणावच्छिन्नम्; तथापि चैतन्याभेदेनाभिव्यक्तत्वात् व्यवस्थोपपत्तिः ॥२॥

---

तद्वत्। केवलाग्न्यदाह्यस्यापि अयःपिण्डादिसमारूढाग्निदाह्यत्ववच्च केवलचैतन्याप्रकाश्यस्यापि घटादेस्तत्तदाकारवृत्त्युपारूढचैतन्यप्रकाश्यत्वं युक्तम्। एवञ्चानावृतत्वपक्षे तत्तदाकारवृत्तिद्वारा चैतन्यस्य तत्तदुपरागे तत्तदर्थप्रकाशः। आवृतत्वपक्षे तत्तदाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्यावरणाभिभवेन तत्तदर्थप्रकाशः। अन्तःकरणावच्छिन्नचैतन्यरूपत्वे जीवस्य अवच्छेदकान्तःकरणतत्तद्विषयाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्याभिव्यक्तौ तत्तत्प्रकाशः। यद्यपि प्रकाशकमधिष्ठानचैतन्यं सर्वगतं जीवचैतन्यं च अन्तःकरणावच्छिन्नं तथापि चैतन्याभेदेनाभिव्यक्तत्वात् व्यवस्थोपपत्तिः।

कस्यचित् पुंसः कदाचिदेव कश्चिदेव विषयो ज्ञानकर्म न सर्वस्य सर्वदा सर्व इति प्रतिनियतकर्मव्यवस्थायाः अनुपपत्तिः पूर्वपक्षिणा प्रदर्शिता तत्समाधानायाह सिद्धान्ती—वृत्तेः पूर्वमेव घटादीनामिति। घटादीनां कल्पितत्वेऽपि न प्रातिभासिकत्वं येन विषयेन्द्रियसन्निकर्षाधीना प्रतिकर्मव्यवस्था न स्यात् कल्पितस्य प्रतिभासमात्रशरीरत्वाभावेऽपि ज्ञाननिवर्त्यत्वेन कल्पितत्वोपपत्तेरित्यभिप्रेत्य विषयेन्द्रियसन्निकर्षजन्यान्तःकरणवृत्त्या प्रतिकर्मव्यवस्थामुपपादयितुं पूर्वाचार्याणां मतमनुवदति तथाहीति। विवरणप्रथमवर्णके एषा प्रक्रिया प्रतिपादिता [वि० पृ० ७२-७३] तेजोऽवयवि चक्षुर्वत् अन्तःकरणस्य परिणामो वृत्तिरूपो नयनादिद्वारेण निर्गत्य नयनादिसन्निकृष्टविषयपर्यन्तं चक्षुरश्मिवत्

झटिति दीर्घप्रभाकारेण परिणम्य विषयान् व्याप्नोति विषयं व्याप्य तद्विषयाकारो भवति। यथा नद्या उदकं प्रणाल्या निःसृत्य केदारान् प्रविश्य केदाराकारं भवति यथा नदीजलं नद्या अविभक्तमेव केदारादिना संयुज्यते तथा देहादविभक्तमन्तः-करणं विषयेण संयुज्यते। यदा देहादविभक्तम् अन्तःकरणं दीर्घप्रकारेण परिणम्य इन्द्रियसन्निकृष्टविषयपर्यन्तं प्रसृतं भवति तदा स एव परिणामो वृत्तिरित्युच्यते। जीवचैतन्यस्य सर्वगतत्वपरिच्छिन्नत्वाभ्यामाचार्याणां मतभेदो वर्तते तत्र जीव-चैतन्यस्य सर्वगतत्वे जीवचैतन्यमेव विषयप्रकाशकं परिच्छन्नत्वे ब्रह्मचैतन्यमेव विषयप्रकाशकं जीवचैतन्यस्य अविद्योपाधिकत्वेन सर्वगतत्वेऽपि अविद्यानावृतम् अविद्यावृतं चेति मतद्वयं वर्तते। एवञ्च आचार्याणां मतभेदेन त्रयः पक्षाः विवरणाचार्यैः प्रदर्शिताः। तान् पक्षान् उपपादयितुमविद्यानावृतं जीवचैतन्यं विषय-प्रकाशकमिति प्रथमपक्षेऽन्तःकरणवृत्तिर्जीवचैतन्यस्य विषयोपरागार्था अविद्यावृतं जीवचैतन्यं विषयप्रकाशकमिति द्वितीये पक्षे अन्तःकरणवृत्तिर्विषयचैतन्यावरणा-भिभवार्था। अन्तःकरणावच्छिन्नं जीवचैतन्यं परिच्छिन्नमिति तृतीयपक्षे विषय-प्रकाशकविषयाधिष्ठानब्रह्मचैतन्येन जीवचैतन्यस्य अभेदाभिव्यक्त्यर्थान्तःकरणवृत्ति-रिति विवेकः। एतत् पक्षत्रयं सिद्धान्तलेशादिग्रन्थेषु उपपादितम्। वेदान्त-परिभाषायां पुनः विषयाधिष्ठानब्रह्मचैतन्येन परिच्छिन्नजीवचैतन्याभेदाभिव्यक्त्यर्था वृत्तिरिति तृतीयपक्ष एव उपपादितः। उक्तञ्च सिद्धान्तविन्दौ आचार्येण—जीवेश्वर-विभागादिकल्पनास्तु पुरुषबुद्धिप्रभवा अपि शास्त्रेणानूद्यन्ते तत्त्वज्ञानोपयोगित्वात्। फलवत् सन्निधौ अफलं तदङ्गमिति न्यायात् भ्रमसिद्धस्यापि श्रुत्या अनुवाद-संभवात्—तदाहुः वार्तिककारपादाः—

यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता॥ इति।

[सिद्धान्तविन्दुः, पृ० ४७७] उक्तञ्च विवरणप्रमेयसंग्रहे—सर्वगतं चिदात्मान-मावृत्य स्थिताभावरूपा अविद्या विविधजगदाकारेण विवर्तते। तत्र शरीरमध्ये स्थितोऽन्तःकरणाख्योऽविद्याविवर्तो धर्माधर्मप्रेरितो नेत्रादिद्वारा निर्गत्य यथोचितं घटादिविषयान् व्याप्य तत्तदाकारो भवति। यथा लोके पूर्णतडागस्थमुदकं सेतुगतछिद्रान्निर्गत्य कुल्या प्रवाहरूपेण केदारान् प्रविश्य चतुष्कोणत्वेन त्रिकोण-

त्वेन वर्तुलत्वेन वा तत्तत्केदारानुसारि अवतिष्ठते तद्वत्। न हि उदकवत् अन्तःकरणं परिस्यन्दते येन अतिदूरवर्तिचन्द्रनक्षत्रध्रुवादिप्राप्तिर्झटिति न सिद्ध्येत्, किं तर्हि सूर्यरश्मिवत् तेजस्त्वात् दीर्घप्रभाकारेण परिणमते अत एव रश्मिवत् सहसा संकोचोऽपि उपपन्नः। उपपन्नश्च अन्तःकरणस्य क्षीरादिवत् सावयवत्वात् परिणामः। तत्तत्परिणतमन्तःकरणं देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्यदेशेऽपि दण्डायमानमविच्छिन्नं व्यवतिष्ठते। तत्र देहावच्छिन्नान्तःकरणभावोऽहंकाराख्यः कर्तेत्युच्यते। देहविषयमध्यवर्तिदण्डायमानस्तद्भागो वृत्तिज्ञानाभिधा क्रियेत्युच्यते। विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसम्पादकमभिव्यक्तियोग्यमित्युच्यते। तस्य त्रिभागस्यान्तःकरणस्यातिस्वच्छत्वात् चैतन्यं तत्राभिव्यज्यते। तस्याभिव्यक्तस्य चैतन्यस्य एकत्वेऽपि अभिव्यञ्जकान्तःकरणभागभेदात् त्रिधा व्यपदेशो भवति कर्तृभागावच्छिन्नश्चिदंशः प्रमाता, क्रियाभागावच्छिन्नश्चिदंशः प्रमाणं विषयगतयोग्यत्वभागावच्छिन्नश्चिदंशः प्रमितिरिति प्रमातृप्रमाणप्रमितीनामसाङ्कर्यम्। भागत्रयेऽपि अनुगतस्यैव अन्तःकरणाकारस्य प्रमातृप्रमेयसम्बन्धरूपत्वात् मयेदमवगतमिति विशिष्टव्यवहारोऽप्युपपद्यते [प्रमेयसं० पृ० ७१-७२] प्रथमपक्षे वृत्तिर्जीवचैतन्यस्य विषयोपरागार्थेत्युक्तं तदर्थस्तु जीवचैतन्यप्रतिबिम्बाश्रयवृत्तिसंश्लेषार्थेति। वृत्तेः संश्लेषस्तु संयोगादिराकाराख्यविषयता च इत्युभयरूपो बोध्यः। रूपाकारवृत्तेः संयुक्तसमवायस्य रसादावपि सत्त्वात् आकाराख्यविषयतानिवेशः। वृत्तेश्चिदुपरागार्थत्वपक्षेऽपि अज्ञाननिवृत्त्यर्थत्वमस्त्येव। उपरागादनुपरागस्य निवृत्तिः। अनुपरागस्य अनभिव्यक्तित्वात् तेन वृत्तेश्चिदुपरागार्थत्वपक्षेऽपि ज्ञानस्य अनधिगतार्थकत्वेन प्रमात्वनिर्वाहः। अन्यथा एतन्मते ज्ञानस्य प्रमात्वं न स्यात् अज्ञानानिवर्तकत्वात्। ज्ञानमज्ञानस्यैव निवर्तकमिति पञ्चपादिकावचनविरोधश्च स्यात्। [पञ्चपादिका, पृ० १०२] अनावृतत्वपक्षे इति प्रथमपक्षे इत्यर्थः। अनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकारवृत्त्यैव उपरज्यते न तु विषयैरसत्त्वात् इति। उक्तञ्च विवरणे—"सर्वगतस्यापि जीवस्य असंगतया सर्वेणासंयोगात् प्रकाशस्य च संयुक्तवस्त्ववभासित्ववत्। ब्रह्म तु सर्वोपादानतया स्वात्माभिन्नं जगत् आत्मानमिवावभासयति न तु जीवोऽनुपादानत्वात्। कथं पुनः सर्ववस्तु देशाव्यवहिततया सर्वगतस्य विषयान्तरेषु असङ्गितया असंसृष्टस्य

अन्तःकरणसंसर्गिता संभवेत्। उच्यते—यथा गोत्वादयो जातिविशेषाः केसरादिमत्व्यक्त्यन्तरप्रदेशसन्निहिता अपि स्वभावविशेषात् अश्वादिव्यक्त्यसङ्गितया तैरनभिव्यक्ता अपि सास्नादिमत्पिण्डसंसर्गितया अभिव्यज्यन्ते। यथा वा प्रदीपप्रभा बाह्याकाशरसगन्धादिप्रदेशव्यापिन्यपि स्वभावविशेषात् तानि न प्रकाशयन्ती रूपसंसर्गितया तदेव प्रकाशयति एवञ्चैतन्यमपि स्वभावविशेषात् अन्तःकरणे संसृज्यते नान्यत्रेति युक्तम्। यथा केवलेन वह्निना न दाह्यमपि तृणादि अयःपिण्डसमारूढेन दह्यते तथा अहंकारसमारूढेनात्मना केवलेनाप्रकाश्या अपि विषयाः प्रकाश्यन्ते इति [वि० पृ० ७२] व्याख्यातं चैतत् तत्त्वदीपने—सर्वगता जातिरिति मतमाश्रित्य दृष्टान्तमाह—यथा गोत्वादयो जातिविशेषा इति। व्यक्तिः सर्वगता जातिर्न सर्वगतेति पक्षे दृष्टान्तमाह—यथा वा प्रदीपप्रभेति। स्वरूपेण असमर्थस्यापि उपाधिसम्बन्धात् सामर्थ्ये दृष्टान्तमाह—यथा च केवलेन वह्निनेति। [तत्त्वदीप० पृ० ३६६] जातेः सर्वगतत्वमित्थमुपपादितं तात्पर्यटीकायाम्—सन्ति हि केचित् भावाः ये सहावस्थानेऽपि परस्परमसम्बद्धाः, यथा समानकाला गन्धरसरूपस्पर्शाः, विज्ञानानि च बहूनि परेषां समानकालान्यप्यसंसर्गीणि, दिक्कालाकाशात्मानश्च सहावस्थाना अपि परस्परासंसर्गिणो वैशेषिकाणां; तथा सामान्यमपि सर्वासम्बद्धमपि सर्वैः सहावतिष्ठते, यास्त्वस्य व्यक्तयस्ताभिः परं सम्बद्ध्यन्ते इति [न्यायवार्तिकतात्पर्यटीका, पृ० ५१२] एतच्च सर्वमुक्तं सिद्धान्तलेशे [पृ० १४३-१४४ अच्युतग्रन्थमाला सं० ]। एवञ्च अविद्योपाधिकस्य जीवचैतन्यसर्वगत्वेऽपि अस्मिन् पक्षेऽविद्यया अनावृतत्वात् सर्वाधिष्ठानभूतं ब्रह्मचैतन्यमेव अविद्यया आवृतं वाच्यं निर्विषयिण्या अविद्याया असंभवात्। वृत्तेश्चिदुपरागार्थत्वपक्षेऽपि अधिष्ठानचैतन्यावरकस्य अज्ञानस्य वृत्तिविषयावच्छेदेन निवृत्तिरप्यङ्गीकरणीया। एवञ्च एतन्मते वृत्तेः प्रमात्वमपि सूपपादम्। द्वितीये आवृतत्वपक्षे तत्तदाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्यावरणाभिभवात् तत्तदर्थप्रकाशः। मूले आवरणाभिभवार्था इत्यस्य आवरणाभिभवार्थैव इति सावधारणनिर्देशः। तेन चिदुपरागार्थत्वपक्षेऽपि आवरणाभिभवार्थत्वलाभः इत्युक्तं चन्द्रिकायाम्। तृतीयेऽन्तःकारणावच्छिन्नचैतन्यस्य परिच्छिन्नस्य जीवस्य अवच्छेदकान्तःकरणस्य तत्तद्विषयाकार-

ननु इयं प्रतिकर्मव्यवस्था, नोपपद्यते। तथा हि—स्वसन्निकृष्टेन्द्रियजन्यस्वज्ञानात् पूर्वं घटादेः सत्त्वे प्रतीतिमात्रशरीरत्वव्याप्तकाल्पनिकत्वायोगः। न च काल्पनिकत्वविशेषः प्रातिभासिकत्वादिरेव तद्व्याप्तः गौरवात्। न च प्रतीतिमात्रशरीरत्वाभावेऽपि ज्ञाननिवर्त्यत्वादिनैव कल्पितत्वं भविष्यति, प्रतीतिमात्रशरीरत्वाभावेन ज्ञाननिवर्त्यत्वाभावस्याप्यापाद्यत्वात्, प्रतीतेर्विश्वसत्यत्वेन वा मिथ्यात्वेऽपि स्वप्नादिवदिन्द्रियसन्निकर्षनिरपेक्षतया वोपपत्तेः व्यावहारिकत्वस्यापि भ्रान्तिदैर्ध्यमात्रेणोपपत्तेश्चेति—चेत्।

---

वृत्त्या तत्तद्विषयावच्छिन्नाधिष्ठानचैतन्याभेदाभिव्यक्तौ तत्तद्विषयप्रकाशः। चैतन्यस्य वस्तुगत्या एकत्वेऽपि अविद्याकृतोपाधिभेदात् भेदः, वृत्त्या अविद्याया निवृत्तौ अभिभवे वा भेदस्यापि निवृत्तिरभिभवो वा जायते। तेन अस्मिन्नपि पक्षे वृत्तेरविद्यानिवर्तकत्वात् प्रमात्वनिर्वाहः। परिभाषायां तृतीयपक्षोपपादनप्रसङ्गे वृत्तेरविद्यानिवर्तकत्वमनुक्त्वैव कथंकारं वृत्तेः प्रमात्वं समर्थितमिति स एव जानाति। पक्षत्रयेऽपि वृत्तेरज्ञाननिवर्तकत्वमवश्यमङ्गीकरणीयमन्यथा तस्याः प्रमात्वायोगादिति बोध्यम्, परिच्छिन्नं प्रमातृचैतन्यं यद्विषयावच्छिन्नचैतन्याभेदेनाभिव्यक्तं स विषयस्तस्यापरोक्ष इति न व्यवस्थानुपपत्तिः। प्रतिकर्मव्यवस्थोपपादनाय विवरणाचार्यैरेव प्रदर्शितं पक्षत्रयमत्रोक्तम्। तस्यैव शंकासमाधानाभ्याम् आचार्येण निर्मलीकृतम्॥२॥

३—विवरणीया एषा प्रतिकर्मव्यवस्थानुपपद्यते दृश्यस्य अध्यस्तत्वेन प्रातिभासिकत्वात् तस्य अज्ञातसत्त्वानुपपत्तेरिति पूर्वपक्षी शंकते—ननु इयं प्रतिकर्मव्यवस्था नोपपद्यते। तथा हि—स्वसन्निकृष्टेन्द्रियजन्यस्वज्ञानात् पूर्वं घटादेः सत्त्वे प्रतीतिमात्रशरीरत्वव्याप्तकाल्पनिकत्वायोगः। न च काल्पनिकत्वविशेषः प्रातिभासिकत्वदिरेव तद्व्याप्तः गौरवात्। न च प्रतीतिमात्रशरीरत्वाभावेऽपि ज्ञाननिवर्त्यत्वादिनैव कल्पितत्वं भविष्यति, प्रतीतिमात्रशरीरत्वाभावेन ज्ञाननिवर्त्यत्वाभावस्याप्यापाद्यत्वात्। प्रतीतेर्विश्वसत्यत्वेन वा मिथ्यात्वेऽपि स्वप्नादिवदिन्द्रियसन्निकर्षनिरपेक्षतया वोपपत्तेः, व्यावहारिकत्वस्यापि

मैवम् ; प्रतीतिमात्रशरीरत्वस्य कल्पितत्वं न व्याप्यम् । दृग्दृश्य-

---

भ्रान्तिदैर्घ्यमात्रेणोपपत्तेश्चेति चेत् । विषयेन्द्रियसन्निकर्षं प्रथमतः खण्डयन्नाह—स्वसन्निकृष्टेति । चैतन्यस्य विषयप्रकाशकत्वसिद्ध्यर्थं सन्निकर्षकथनं न युक्तं तथात्वे सन्निकर्षात् पूर्वं घटादेः सत्त्वं स्यात् । अन्यथा सन्निकर्षस्यैवायोगात् । न च सन्निकर्षात् पूर्वं घटादिकमस्त्येवेति वाच्यं, तथात्वे सिद्धान्त्यङ्गीकृतकल्पितत्वायोगात् । कुत इति चेत् ? कल्पितत्वे प्रतीतिमात्रशरीरत्वस्य व्यापकत्वेन कल्पितत्वाङ्गीकारे प्रतीतिमात्रशरीरत्वापत्त्या सन्निकर्षजन्यज्ञानात् पूर्वं घटादेरसत्त्वेन सन्निकर्षस्यैवायोगात् एवमापादयतः प्रातिभासिकत्वातिरिक्तं व्यावहारिकत्वं नास्तीति हृदयम् । ननु न कल्पितत्वं प्रतीतिमात्रशरीरत्वव्याप्यं किन्तु कल्पितत्वविशेषः प्रातिभासिकत्वमेव । एवञ्च प्रकृते कल्पितत्वाङ्गीकारे न प्रतीतिमात्रशरीरत्वप्राप्तिः । तथा च सन्निकर्षात् पूर्वं घटादेः स्वत्वोपपत्त्या युक्तः सन्निकर्ष इत्याशङ्क्य निराकरोति—न च काल्पनिकत्वविशेष इति । गौरवादिति कल्पितत्वं सामान्यरूपत्वेन सर्वसंग्राहकत्वात् लघुभूतम् । प्रातिभासिकत्वं तु कल्पितत्वविशेषरूपत्वात् गुरुभूतम् । प्रतिभासमात्रशरीरत्वाभावेऽपि ज्ञाननिवर्त्यत्वेन कल्पितत्वोपपत्तेरिति तर्केण कल्पितत्वस्य न प्रतीतिमात्रशरीरत्वव्याप्यत्वसिद्धिरित्याशङ्क्य निराकरोति—न च प्रतीतिमात्रशरीरत्वाभावेऽपीति । प्रतीतिमात्रशरीरत्वाभावमङ्गीकृत्य कल्पितत्वस्य ज्ञाननिवर्त्यत्वेन उपपत्तिर्वक्तुं न युज्यते । प्रतीतिमात्रशरीरत्वाभावेनैव ज्ञाननिवर्त्यत्वाभावस्यापाद्यत्वात् इत्याह—प्रतितिमात्रशरीरत्वाभावेनेति । ननु कल्पितस्यापि दृश्यस्य प्रतीतिस्तावत् सर्वसिद्धा सा च इन्द्रियसन्निकर्षं विना अनुपपन्ना इति इन्द्रियसन्निकार्षार्थं स्वज्ञानात् पूर्वं दृश्यस्य सत्त्वमङ्गीकार्यमित्यत आह—प्रतीतेर्विभ्रसत्यत्वेन वेति स्वप्नादिवदिति । यथा स्वाप्नप्रतीत्यन्यथानुपपत्त्या सन्निकर्षो वा प्रतीतेः पूर्वं विषयसत्त्वं वा नाङ्गीक्रियते तद्वदिति भावः । ननु स्वप्नादिवदिति दृष्टान्तो न युक्तः तस्य प्रातिभासिकत्वेन तत्र सन्निकर्षापेक्षाभावात् प्रपञ्चस्य तु व्यावहारिकत्वात् सन्निकर्षार्थं विषयसत्त्वमपेक्षितमिति चेत्तत्राह—व्यावहारिकत्वस्यापि इति । इदानीं बाधाभावमात्रेण भ्रान्तेर्दीर्घत्वमिति भावः । कल्पितत्वं न प्रतीतिमात्रशरीरत्वव्याप्यं व्यभिचारादित्याह सिद्धान्ती—मैवं; प्रतीतिमात्रशरीरत्वस्य कल्पि-

सम्बन्धानुपपत्त्यादिसहकृतोक्तानुमानात् प्रपञ्चे कल्पितत्वे सिद्धे प्रत्यभिज्ञाबलाच्च स्थायित्वे तत्रैव व्यभिचारात् ॥३॥

न च—शुक्तिरूप्यादिप्रत्यभिज्ञासाम्यं प्रकृतप्रत्यभिज्ञाया इति वाच्यम्; प्रतीत्यविशेषेऽपि वणिग्वीथीस्थशुक्तिरूप्ययोः परीक्षितत्वापरीक्षितत्वाभ्यां स्थायित्वास्थायित्वरूपविशेषसम्भवात् ॥४॥

---

त्वं न व्याप्यम्। दृग्दृश्यसम्बन्धानुपपत्त्यादिसहकृतोक्तानुमानात् प्रपञ्चे कल्पितत्वे सिद्धे प्रत्यभिज्ञाबलाच्च स्थायित्वे तत्रैव व्यभिचारात्। यच्चोक्तं पूर्वपक्षिणा कल्पितत्वापेक्षया कल्पितविशेषप्रातिभासिकत्वस्य गुरुत्वात् लघुशरीरकल्पितत्वस्यैव व्याप्यत्वं न गुरुशरीरप्रातिभासिकत्वस्य इति, तन्न, कल्पितत्वं मिथ्यात्वं तच्च स्वान्यूनसत्ताकाभावप्रतियोगित्वादिघटितत्वात् प्रातीतिकत्वात् गुरु। प्रातीतिकत्वं तु यदा यदा स्वयं तिष्ठति तदा तदा अनावृतं यत्त्वम्। तथा च प्रातीतिकत्वे कल्पितत्वरूपमिथ्यात्वात् न गौरवम्। तस्माद् गौरवोक्तिः परस्य भ्रान्त्येति बोध्यम्। यद्यत् कल्पितं तत् प्रतीतिमात्रशरीरमितिव्याप्तिरेवासिद्धा व्यभिचारात्। व्यभिचारमेवाह—दृग्दृश्यसम्बन्धानुपपत्त्यादिसहकृतोक्तानुमानादिति। दृश्यस्य सत्यत्वे दृग्दृश्यसम्बन्धानुपपत्तिरिति प्रागेव दर्शिता तथा च सत्यत्वे दृग्दृश्यसम्बन्धानुपपत्तिरूपविपक्षबाधकतर्कानुगृहीतं दृश्यत्वादिरूपसाधनं प्रपञ्चस्य कल्पितत्वरूपं मिथ्यात्वं साधयति। सत्यं स्यात् दृश्यं न स्यात् सत्ये ब्रह्मणि तुच्छे च शशविषाणादौ दृश्यत्वाभावात्। अमिथ्याभूते दृश्यत्वाभावात् व्यावहारिकप्रपञ्चे दृश्यत्वस्य सत्त्वात् मिथ्यात्वं सिद्ध्यति मिथ्यात्वेऽपि प्रपञ्चस्य प्रत्यभिज्ञायमानत्वात्स्थायित्वं न प्रतीतिमात्रशरीरत्वं तथा च विपक्षबाधकतर्कानुगृहीतेनानुमानेन प्रपञ्चस्य मिथ्यात्वे सिद्धे प्रत्यभिज्ञया च स्थायित्वे सिद्धे कल्पिते प्रपञ्चे स्थायिनि प्रतीतिमात्रशरीरत्वाभावात् न प्रतीतिमात्रशरीरत्वं कल्पितत्वव्यापकं कल्पितस्थायिप्रपञ्चे व्यभिचारात् ॥३॥

४—प्रत्यभिज्ञायाः भ्रान्तित्वमाशङ्क्य निषेधति—न च शुक्तिरूप्यादिप्रत्यभिज्ञासाम्यं प्रकृतप्रत्यभिज्ञाया इति वाच्यम्, प्रतीत्यविशेषेऽपि वणिग्वीथीस्थशुक्तिरूप्ययोः परीक्षितत्वापरीक्षितत्वाभ्यां स्थायित्वा-

तथापि वा परोक्षवृत्तेरिवापरोक्षवृत्तेरपि प्रकाशकत्वमस्तु, किं तदुपरक्तचैतन्येनेति चेन्न; परोक्षस्थलेऽपि परोक्षवृत्त्युपरक्तचैतन्यस्यैव प्रकाशकत्वात्। अथ तत्राप्यपरोक्षैकरसचैतन्योपरागे विषयापरोक्ष्य-प्रसङ्गः। न, विषयचैतन्याभिव्यक्तावेव विषयस्यापरोक्षम्। न च परोक्षस्थले तदस्ति, विषयेन्द्रियसन्निकर्षाभावेन विषयपर्यन्तं वृत्तेरगम-नात्, अन्तरेव तत्र धीसमुल्लासात्। अपरोक्षस्थले तु प्रमातृचैतन्या-भेदाभिव्यक्ताधिष्ठानचैतन्योपरागो विषयेऽस्ति; तत्र विषयस्य कर्मकारकत्वात् ॥५॥

---

स्थायित्वरूपविशेषसम्भवात्। प्रतिभासकालमात्रस्थायिन्यपि शुक्तिरजतादौ सादृश्यात् तदेवेदं रजतमिति यथा प्रत्यभिज्ञा तथा कल्पितप्रपञ्चेऽपि प्रतीतिकाल-मात्रस्थायिनि सादृश्यात् प्रत्यभिज्ञा तथा च प्रत्यभिज्ञया न प्रपञ्चस्य स्थैर्यसिद्धि-रिति न वाच्यम्, व्यावहारिकप्रातिभासिकरजतयोः प्रतीत्यविशेषेऽपि व्यावहारिकस्य परीक्षितत्वमपरीक्षितत्वन्तु प्रातिभासिकस्य वणिग्वीथीस्थरजतप्रतीतिः प्रमाणान्तर-संवादिनी प्रमाणान्तराविसंवादिनी च। प्रमाणान्तरेणापि वणिग्वीथीस्थरजतं निश्चीयते न केनापि प्रमाणेन निषिध्यते। अतस्तस्य स्थायित्वसिद्धिः। प्रातीतिकस्य तु न प्रमाणान्तरेण संवादः नात्र रूप्यमित्यादिमानेन विसंवादः अतस्तस्य न स्थायित्वमिति भावः। अतः प्रपञ्चस्य कल्पितत्वेऽपि स्थायित्वात् प्रदर्शितप्रति-कर्मव्यवस्था उपपद्यत इति ॥४॥

५—ज्ञानाख्यान्तःकरणवृत्तेरेव विषयप्रकाशकत्वमस्तु किमधिष्ठानचैतन्य-स्याभिव्यक्तस्य विषयप्रकाशकत्वकल्पनया इति पूर्वपक्षिमतमाशङ्क्य निराचष्टे—

तथापि वा परोक्षवृत्तेरिवापरोक्षवृत्तेरपि प्रकाशकत्वमस्तु, किं तदु-परक्तचैतन्येनेति चेन्न, परोक्षस्थलेऽपि परोक्षवृत्त्युपरक्तचैतन्यस्यैव प्रकाशकत्वात्। अथ तत्राप्यपरोक्षैकरसचैतन्योपरागे विषयापरोक्ष्य-प्रसङ्गः, न, विषयचैतन्याभिव्यक्तावेव विषयचैतन्यस्यापरोक्ष्यम्। न च परोक्षस्थले तदस्ति विषयेन्द्रियसन्निकर्षाभावेन विषयपर्यन्तं वृत्तेर-गमनात् अन्तरेव तत्र धीसमुल्लासात्। अपरोक्षस्थले तु प्रमातृचैतन्या-भेदाभिव्यक्ताधिष्ठानचैतन्योपरागो विषयेऽस्ति, तत्र विषयस्य कर्मकार-

न च वृत्तिगतविशेषादापरोक्ष्यम्, तत्र हि विशेषो विषयकृतश्चेदो-मिति ब्रूमः। जातिकृतस्तु विशेषो न सम्भवति; सोऽयमिति प्रत्यभिज्ञायां परोक्षत्वापरोक्षत्वयोः सङ्करप्रसङ्गात्, अव्याप्यवृत्तित्वात्, प्रमात्वादिना सङ्करप्रसङ्गाच्च। किञ्च वृत्तेर्जडत्वादेव न प्रकाशकत्वम्।

---

कत्वात्। प्रदर्शितरीत्या प्रतिकर्मव्यवस्थाया उपपत्तावपि वृत्तेरेव विषयप्रकाश-कत्वमस्तु चैतन्यस्य विषयप्रकाशकत्वकल्पना वृथा यतः परोक्षवृत्तेर्बहिर्निगमना-भावेऽपि परोक्षवृत्तेरेव विषयप्रकाशकत्वं सिद्धान्तिना अपि वाच्यम्, एवमेव अपरोक्षवृत्तेरेव विषयप्रकाशकत्वमस्तु, किम् अपरोक्षवृत्त्युपरक्तचैतन्यस्य विषय-प्रकाशकत्वकल्पनया इति पूर्वपक्षिणा न वाच्यम्, अतो जडाया अन्तःकरणवृत्तेर-प्रकाशरूपत्वात् न कस्यापि प्रकाशकत्वं सम्भवति परोक्षवृत्तिमात्रस्य न विषयप्रकाशकत्वं, किन्तु वृत्त्युपरक्तचैतन्यमेव विषयप्रकाशकम्। ननु परोक्षस्थलेऽपि चैतन्यस्य विषयप्रकाशकत्वे विषयस्य अपरोक्षत्वप्रसङ्गः। चैतन्यस्य अपरोक्षैक-स्वभावत्वात् अपरोक्षैकस्वभावचैतन्यस्य उपरागात् विषयस्य अपरोक्षत्वं स्यादिति चेत्, न चैतन्यस्य विषयप्रकाशकत्वमात्रेण विषयस्य अपरोक्षत्वं किन्तु वृत्त्या विषयाधिष्ठानचैतन्याभिव्यक्तौ अभिव्यक्तचैतन्याध्यासात् विषयस्य अपरोक्षत्वम्। परोक्षस्थले विषयाधिष्ठानचैतन्यं नाभिव्यज्यते तत्र विषयेन्द्रियसन्निकर्षाभावेन विषयपर्यन्तम् अन्तःकरणवृत्तेरगमनात् केवलं देहाभ्यन्तरे एव अन्तःकरणवृत्तेरुदयात् न परोक्षवृत्त्या विषयस्य अपरोक्षत्वम्। प्रतिकर्मव्यवस्थोक्ततृतीयपक्षमादाय अपरोक्षवृत्त्या विषयस्य अपरोक्षत्वं दर्शयति—अपरोक्षस्थले तु इति। प्रमातृ-चैतन्याभेदेन अभिव्यक्तं यद्विषयाधिष्ठानचैतन्यं तत्तादात्म्याध्यासात् विषयस्य अपरोक्षत्वमिति। अपरोक्षवृत्तौ विषयस्य कर्मकारकत्वात् विषयजन्यत्वाद-परोक्षवृत्तेः परोक्षवृत्तेर्विषयजन्यत्वाभावात्। विषयस्य जनकत्वेन कारकत्वमिति भावः ॥५॥

६—अपरोक्षविषयकत्वेन न वृत्तेरपरोक्षत्वं किन्तु वृत्तिगतविशेषादेव वृत्तेर-परोक्षत्वमितिपूर्वपक्षिमतमाशङ्क्य निषेधति—न च वृत्तिगतविशेषादापरोक्ष्यं तत्र हि विशेषो विषयकृतश्चेदोमिति ब्रूमः। जातिकृतस्तु विशेषो न सम्भवति सोऽयमिति प्रत्यभिज्ञायां प्रत्यक्षत्वपरोक्षत्वयोः सङ्करप्रस-

ङ्गात् । अव्याप्यवृत्तित्वात् । प्रमात्वादिना सङ्करप्रसङ्गाच्च । किं च वृत्तेर्जडत्वादेव न प्रकाशकत्वम् । प्रत्यक्षत्वपरोक्षत्वजातिभ्यामेव वृत्तीनां परोक्षापरोक्षरूपता यस्यां वृत्तौ प्रत्यक्षजातिर्वर्तते सा वृत्तिः प्रत्यक्षा एवमेव परोक्षा वृत्तिः न तु अपरोक्षविषयकत्वेन वृत्तेरपरोक्षत्वं विषयमहिम्ना ज्ञानस्य न प्रत्यक्षत्व-परोक्षत्वविभागः किन्तु प्रत्यक्षत्वपरोक्षत्वजात्या इति पूर्वपक्षिणां नैयायिकाना-मपि अभिमानः । जातिरेव वृत्तिगतो विशेषः । अत्राह सिद्धान्ती—वृत्तिगतो विशेषः विषयकृतश्चेदोमिति ब्रूमः । 'अनावृतचित्तादात्म्यविशिष्टविषयकत्वेन वृत्तेः प्रत्यक्षत्वमिति चेत्, तदङ्गीकुर्मः । अयमेवास्माकं सिद्धान्तः । विवरणीय-सिद्धान्तप्रदर्शनाय उक्तं परिमले [ पृ० ५५ ] अभिव्यक्तचैतन्याभिन्नत्वमर्थ-स्यापरोक्ष्यम् । तत्तु नित्याभिव्यक्तजीवचैतन्याभिन्ने ब्रह्मणि स्वाभाविकम् । अत एव यत्साक्षादपरोक्षाद् ब्रह्म इति श्रुतिः घटादीनामपरोक्षचैतन्याभेदाध्यासोपाधिकं तदेव प्रत्यक्षोऽयं घटः प्रत्यक्षं घटं पश्यामि इत्यादिव्यवहारालम्बनम् । ज्ञानस्या-पारोक्ष्यमपरोक्षार्थव्यवहारानुकूलज्ञानत्वं तत्स्वस्य सुखादेश्च प्रकाशरूपे नित्याभिव्य-क्तसाक्षिचैतन्ये चानुगतं स्वाभाविकं चाक्षुषादिवृत्तिषु तत्तदभिव्यक्तचैतन्याभेदा-ध्यासोपाधिकं न तु जातिरूपम् इन्द्रियजन्यत्वाद्युपाधिरूपं वा ज्ञानानामपारोक्ष्यम् । विवरणमते ज्ञानार्थयोरपरोक्षत्वनिरूपणेऽयमेव निर्यासः । रहस्यमबुद्ध्वा परि-भाषायां यदुक्तं तेन विद्यार्थिनः सदा भ्राम्यन्त्येव । अत्रापि आचार्येण विषयकृतमेव ज्ञानस्यापरोक्षत्वमुक्तम् । एतद्धि विवरणरहस्यम् । विवरणमनधीत्य अद्वैतवेदान्त-सिद्धान्तालोचनं विडम्बनामात्रमेव । प्रत्यक्षत्वपरोक्षत्वजातिकृतस्तु विशेषो न भवितुमर्हति । सोऽयमिति प्रत्यभिज्ञायामेकस्यां तत्त्वांशे ज्ञानस्य परोक्षत्वम् इद-न्त्वांशे ज्ञानस्य प्रत्यक्षत्वमिति परस्परपरिहारवत्योर्जात्योरेकत्र समावेशात् साङ्कर्य-प्रसङ्गात् । जातेर्व्याप्यवृत्तित्वनियमात् अव्याप्यवृत्तेर्जातित्वाभावात् । प्रमात्व-जात्या प्रत्यक्षत्वादेः सङ्करप्रसङ्गाच्च । प्रमात्वाभाववति आभासप्रत्यक्षे प्रत्यक्षत्वं प्रत्यक्षत्वाभाववति परोक्षप्रमायां प्रमात्वं प्रत्यक्षप्रमायां प्रमात्वं प्रत्यक्षत्वञ्च द्वय-मिति भावः । किञ्च प्रत्यक्षत्वपरोक्षत्वयोर्जातित्वे प्रमात्वजात्या सङ्करप्रसङ्गाच्च । प्रमात्वस्य जातित्वं समर्थितं तत्त्वप्रदीपिकायाम् [ पृ० १२६ ] ननु कथं प्रमात्वं जातिः साक्षात्कारित्वेन तस्य परापरभावासंभवादित्यादिना । यच्चोक्तं वृत्तेरेव

न च—वृत्तावन्तःकरणवृत्त्यापि स्वप्रकाशत्वं ज्ञानत्ववदिति—वाच्यम्। स्वप्रकाशात्मसम्बन्धेनैव तस्याः प्रकाशत्वोपपत्तौ तत्स्वप्रकाशत्वे मानाभावात्। किञ्च घटं जानामीत्यनुभूयमानसकर्मकवृत्त्यन्या संवित् घटप्रकाशरूपा घटः प्रकाशत इत्याकारकानुभवसिद्धैव।

न च—करोति, यतते, चलति, गच्छतीत्यादावेकार्थत्वेऽपि सकर्मकाकर्मकस्वभावत्वदर्शनात् अत्राप्येकार्थत्वेऽपि तथा स्यादिति वाच्यम्। तत्राप्येकार्थत्वाभावात्। अनुकूलयत्नो हि कृञ्धात्वर्थः, यत्यर्थस्तु

---

विषयप्रकाशकत्वमस्तु इति, तन्न, वृत्तेर्जडाया विषयप्रकाशकत्वायोगादिति। अन्तःकरणवृत्तौ यथा ज्ञानत्वं तथा स्वप्रकाशत्वमप्यस्तु तथा चान्तःकरणवृत्तिरेव विषयप्रकाशिका भविष्यतीति शंकते—न च वृत्तौ अन्तःकरणवृत्त्यापि स्वप्रकाशत्वं ज्ञानत्ववदिति वाच्यम्। यथा ज्ञानत्वमन्तःकरणवृत्त्यापि अन्तःकरणवृत्तौ वर्तते तथा स्वप्रकाशत्वमपि अन्तःकरणवृत्त्यपि अन्तःकरणवृत्तौ वर्तताम्। तथा च अन्तःकरणवृत्तिरेव विषयप्रकाशिका न चैतन्यम्। वृत्तेः स्वप्रकाशत्वे मानाभावादित्याह सिद्धान्ती—स्वप्रकाशात्मसम्बन्धेनैव तस्याः प्रकाशत्वोपपत्तौ तत्स्वप्रकाशत्वे मानाभावात्। स्वप्रकाशे आत्मनि अन्तःकरणस्य तादात्म्येन अध्यासात् अन्तःकरणवृत्तेः प्रकाशरूपज्ञानत्वोपपत्तौ वृत्तेः स्वप्रकाशत्वे मानाभावात् वृत्तेर्वेद्यत्वेन स्वप्रकाशत्वानुपपत्तेश्च। किञ्च अन्तःकरणवृत्तेर्ज्ञानाख्यायाः सकर्मकत्वेन ततोऽन्या अकर्मिका संविदुपेतव्या इत्याह सिद्धान्ती—किञ्च घटं जानामि इत्यनुभूयमानसकर्मकवृत्त्यन्या संवित् घटप्रकाशरूपा घटःप्रकाशते इत्याकारकानुभवसिद्ध एव। घटं जानामीत्यनुभूयमानसकर्मकवृत्तिः सकर्मकज्ञानरूपा घटः प्रकाशते इति क्रिया घटकर्तृकस्फुरणरूपा तथा च एकस्यां क्रियायामेकस्य कर्तृत्वकर्मत्वयोर्विरोधात् एकस्याः क्रियायाः सकर्मकत्वाकर्मकत्वयोर्विरोधात् अनावृतचिद्रूपस्फुरणक्रिया घटकर्तृका पूर्वोक्तजानात्यर्थरूपक्रिया घटकर्मिकेति वृत्तिसंविदोर्भेदात्। एकस्या अपि क्रियायाः सकर्मकत्वाकर्मकत्वदर्शनात् वृत्तिसंविदोर्न भेदसिद्धिरिति शंकते—न च करोति, यतते, चलति, गच्छति इत्यादौ एकार्थत्वेऽपि सकर्मकाकर्मकस्वभावत्वदर्शनात्, अत्रापि एकार्थत्वेऽपि तथा स्यात् इति

यत्नमात्रम् एवं गम्यर्थं उत्तरसंयोगफलकः स्पन्दः, चलत्यर्थस्तु स्पन्दमात्रम्, तथाचैकार्थकत्वे कुत्रापि न सकर्मकत्वाकर्मकत्वव्यवस्था। न च—त्वन्मते परिणतेरकर्मकत्वात् परिणतिविशेषभूताया वृत्तेः कथं सकर्मकत्वमिति—वाच्यम्।

एकस्य हि सकर्मकत्वाकर्मकत्वे एकरूपेण विरुद्धे न तु रूपान्त-

---

वाच्यम्। क्रियैक्येऽपि तत्प्रतिपादकशब्दस्वभावादेव कर्मसम्बन्धप्रतीत्यप्रतीतिः। यथा करोति, यतते, इत्यत्र करणस्य यत्नरूपत्वेन तेनैक्येऽपि करोतेः सकर्मकत्वं यततेस्तु अकर्मकत्वं दृष्टं यथा वा गच्छति चलतीत्यत्र गमनस्य चलनत्वेऽपि गच्छतेः सकर्मकत्वं चलतेस्तु अकर्मकत्वं दृष्टम्, एवमिहापि वृत्तेरेव प्रकाशत्वेन तयोरैक्येऽपि ज्ञानरूपतया वृत्तेः सकर्मकत्वं प्रकाशस्य तु अकर्मकत्वमुपपद्यत एव। सकर्मकत्वादेर्धातुस्वाभाव्यात्। एकार्थत्वे सकर्मकत्वाकर्मकत्वव्यवस्था न स्यात् अर्थभेदादेव इयं व्यवस्था न शब्दमात्रभेदादित्याह सिद्धान्ती—तत्राप्येकार्थत्वाभावात्। अनुकूलयत्नो हि कृञ्धात्वर्थः यत्यर्थस्तु यत्नमात्रम्। एवं गम्यर्थ उत्तरसंयोगफलकः स्पन्दः, चलत्यर्थस्तु स्पन्दमात्रं तथा च एकार्थकत्वे कुत्रापि न सकर्मकत्वाकर्मकत्वव्यवस्था। धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति शाब्दिकाः स्वार्थतावच्छेदकफलरहितस्य धातोरकर्मकत्वमित्यर्थानुसन्धानेनैव धातोः सकर्मकत्वाकर्मकत्वव्यवस्था शाब्दिकैरङ्गीकृता धातोरर्थानुसन्धानमकृत्वा व्यवस्थैव न भवितुमर्हति। अन्यथा यतेः सकर्मकत्वं करोतेरकर्मकत्वं कुतो न स्यात् इत्याह—एकार्थकत्वे सकर्मकत्वाकर्मकत्वव्यवस्था कुत्रापि न स्यात्। अत एव सकर्मकधातोरकर्मकधातोश्चार्थभेदं दर्शयति—अन्योत्पत्त्यनुकूलयत्नो हि कृञ्धात्वर्थः उत्पादना इत्यर्थः। धात्वर्थावच्छेदकफलरहितयत्नमात्रं यतेरर्थः। एवमेव गमेश्चलतेश्च अर्थभेदो वर्तते धात्वर्थभेदं विना व्यवस्थैव न स्यात्। परिणतेरकर्मकत्वात् अन्तःकरणपरिणामरूपायाः वृत्तेः कथं सकर्मकत्वमिति शंकते—न च त्वन्मते परिणतेरकर्मकत्वात् परिणतिविशेषभूताया वृत्तेः कथं सकर्मकत्वमिति—वाच्यम्। अस्याशयः स्पष्टः। समाधत्ते सिद्धान्ती—

रेणापि मानाभावात्। यथा स्थितेरकर्मिकाया अपि अगमनत्वेन रूपेण सकर्मकत्वम्; तथा परिणतित्वेन रूपेणाकर्मिकाया अपि वृत्तेः ज्ञानत्वेन सकर्मकत्वं भविष्यतीत्यदोषः ॥६॥

ननु—तर्ह्यतीतः प्रकाशते इति धीर्न स्यात्, न; इष्टापत्तेः तत्रापि वृत्तिप्रतिबिम्बितचैतन्यसत्त्वेन प्रकाशत इत्यादिप्रयोगसम्भवाच्च ॥७॥

ननु यथा ज्ञानविरोधिवृत्तावनुभवत्वं नास्ति किन्तु अन्यत्र, तथा

---

एकस्य हि सकर्मकत्वाकर्मकत्वे एकरूपेण विरुद्धे न तु रूपान्तरेणापि, मानाभावात्। यथा स्थितेरकर्मिकाया अपि अगमनत्वेन रूपेण सकर्मकत्वम्, तथा परिणतित्वेन रूपेणाकर्मिकाया अपि वृत्तेः ज्ञानत्वेन सकर्मकत्वं भविष्यतीत्यदोषः। उक्तञ्च विवरणे यथा स्थितिरगमनशब्देन अभिधीयमाना कस्य किं विषयमगमनमिति कर्मसापेक्षवद्भाति [पृ० ४३] यथा स्थितिः स्थितित्वेनाभिधीयमाना अकर्मिका सैव पुनरगमनशब्देनाभिधीयमाना सकर्मिकेव भाति, एवमेव चित्तपरिणतित्वेनाभिधीयमाना वृत्तिरकर्मिकापि अन्तःकरणवृत्तौ ज्ञानत्वोपचारे ज्ञानत्वेन सकर्मकत्वमविरुद्धमिति। उक्तञ्च विवरणेऽन्तःकरणपरिणामे ज्ञानत्वोपचारात्। [पृ० ४१] व्याख्यातञ्च तत्त्वदीपने—चैतन्यस्य ऐक्याध्यासात् वृत्तौ ज्ञानत्वमुपचर्यते दग्धृत्वमिवायःपिण्डे इति ॥६॥

७—वृत्त्यतिरिक्तचैतन्यरूपज्ञानस्यैव विषयप्रकाशकत्वेऽतीते चैतन्यरूपज्ञानाभावेन प्रकाशाभावादतीतं प्रकाशते इति धीर्न स्यादिति शंकां निरस्यति—ननु तर्हि अतीतः प्रकाशते इति धीर्न स्यात्। न इष्टापत्तेः। तत्रापि वृत्तिप्रतिबिम्बितचैतन्यसत्त्वेन प्रकाशते इत्यादिप्रयोगसम्भवाच्च। अतीतेन सह वृत्तिद्वारकचैतन्यसम्बन्धाभावेन अतीतः प्रकाशते इति धीर्न स्यात् इष्टापत्तेः अतीतः प्रकाशते इति धीर्न स्यादेव वर्तमानः प्रकाशते इत्येव धीः प्रसिद्धा। कथंचित् तत्रापि प्रकाशव्यवहारे अतीतगोचरपरोक्षवृत्तौ चैतन्यप्रतिबिम्बनात् परम्परया चैतन्यसम्बन्धात् प्रकाशते इति व्यवहारः उपपादनीयः। वस्तुतस्तु चैतन्यसाक्षात्सम्बन्धादेव प्रकाशते इति धीः न परम्परासम्बन्धादिति भावः ॥७॥

८—वृत्तेरेवानुभवत्वमिति पूर्वपक्षी शङ्कते—ननु यथा अज्ञानविरोधिवृत्तौ

द्वेषविरोधिवृत्तेरन्यत्रेच्छात्वमित्यपि स्यादिति—चेत्। न; बाधकसत्त्वासत्त्वाभ्यां विशेषात्, अत्रेव तत्र सकर्मकाकर्मकविलक्षणक्रियाननुभवाच्च। यथा च वृत्त्यतिरिक्तभानसिद्धिस्तथा स्वयं ज्योतिष्ट्वप्रस्तावे विस्तरेण वक्ष्यामः ॥८॥

---

अनुभवत्वं नास्ति किन्तु अन्यत्र, तथा द्वेषविरोधिवृत्तेरन्यत्र इच्छात्वमित्यपि स्यादिति चेत्। प्रमाणजन्यान्तःकरणवृत्तिरेवाज्ञानविरोधिनी अथ च तत्र अनुभवत्वं सिद्धान्तिना नाङ्गीक्रियते अङ्गीक्रियते च अन्यत्र अज्ञानाविरोधिनि चैतन्ये एवमङ्गीकारे सिद्धान्तिनोऽनिष्टापत्तिः स्यात् इत्याह—द्वेषविरोधिवृत्तेरिति। द्वेषविरोधिवृत्तिरिच्छैव। तत्रापि इच्छात्वं न स्यात् द्वेषाविरोधिवृत्तौ एव इच्छात्वं स्यात् तच्च तवापि अनिष्टमिति अनिष्टप्रसंगभयेनाज्ञानविरोधिवृत्तावेवानुभवत्वं स्वीकुरु इति भावः।

समाधत्ते सिद्धान्ती—न बाधकसत्त्वासत्त्वाभ्यां विशेषात्। अत्रेव तत्र सकर्मकाकर्मकविलक्षणक्रियाननुभवाच्च। यथा च वृत्त्यतिरिक्तभानसिद्धिस्तथा स्वयं ज्योतिष्ट्वप्रस्तावे विस्तरेण वक्ष्यामः। वृत्तेर्जडायाः प्रकाशकत्वं बाधितं सर्वप्रकाशरूपचैतन्यस्य प्रकाशकत्वमबाधितम्। वृत्तेः प्रकाशकत्वे बाधकसत्त्वात् चैतन्यस्य प्रकाशकत्वे तदभावाद् विशेषात्। यच्चोक्तं वृत्तेरज्ञानविरोधित्वं न चैतन्यस्य, तन्न युक्तं, समानविषयत्वेनैव ज्ञानाज्ञानयोर्विरोधित्वात्। निर्विषयचैतन्यस्य अज्ञानसमानविषयत्वलाभायैव अज्ञानसमानविषयाकारवृत्तिप्रतिबिम्बितं सत् चैतन्यमेव अज्ञानं निवर्तयति न वृत्तिमात्रस्य अज्ञानविरोधित्वं—तृणादेर्भासिकाप्येषा सूर्यदीप्तिरित्यादिवार्तिके स्पष्टमभिहितम्। अतो विषयाकारवृत्तिप्रतिबिम्बितं सत् चैतन्यं जानातिशब्दाभिधेयं सकर्मकं भवति स्वतस्तु चैतन्यं प्रकाशते भातीत्यादिपदाभिधेयं सत् अकर्मकमेव। अकर्मिका चिति अज्ञानसमानविषयत्वाभावात् नाज्ञाननिवर्तिका प्रत्युताज्ञानसाधिकैव। वृत्त्युपारूढा सकर्मिका सति समानविषयाज्ञाननिवर्तिका। तथा च जानातेः सकर्मकत्वेऽपि प्रकाशतेरकर्मकत्वं यथा अनुभवसिद्धं नैव इच्छतेरकर्मकत्वानुभवः। येन सकर्मकत्वाय द्वेषविरोधिवृत्तेरन्यत्र इच्छात्वम् अङ्गीक्रियेत। प्रकाशतेरकर्मकत्ववत् इच्छतेरकर्मकत्वाननुभवात्। स्वयं ज्योतिष्ट्वप्रस्तावे इति अनुभूतेः स्वयं

ननु—अस्तु चैतन्यस्य, विषयप्रकाशकत्वं, तथाप्यन्तःकरणस्य देहान्निर्गतिः न कल्प्या, परोक्षवैलक्षण्याय विषयस्याभिव्यक्तापरोक्ष-चिदुपराग एव वक्तव्यः चिदुपरागादौ चापरोक्षवृत्तेस्तदाकारत्वमेव तन्त्रम्; तस्य च तत्संश्लेषं विनापि परोक्षवृत्तेरिव तत्सन्निकृष्टकरण-जन्यत्वेनैवोपपत्तिः। न तु प्रभाया इव वृत्तेस्तदावरणनिवर्तकत्वादौ तत्संश्लेषस्तन्त्रम् नेत्रान्निर्गच्छद्भ्रुवाद्याकारवृत्त्यैव स्वसंश्लिष्टनेत्रस्थकज्ज-लादेर्भ्रूवनेत्रमध्यवर्तिनः परमाण्वादेश्चापरोक्षत्वापातादिति—चेत् ॥९॥

---

प्रकाशत्वोपपत्तिप्रकरणे—अनुभूतिपदेन वृत्तेः पक्षत्वे बाधः तदन्यस्याश्रयासिद्धि-रित्यादिना ग्रन्थेन वक्ष्यामः ॥८॥

९—अन्तःकरणवृत्तेर्बहिर्निर्गमनं न कल्प्यमित्याह पूर्वपक्षी—ननु अस्तु चैतन्यस्य विषयप्रकाशकत्वं तथाप्यन्तःकरणस्य देहान्निर्गतिः न कल्प्या, परोक्षवैलक्षण्याय विषयस्याभिव्यक्तापरोक्षचिदुपराग एव वक्तव्यः, चिदुपरागादौ चापरोक्षवृत्तेस्तदाकारत्वमेव तन्त्रम् तस्य च तत्संश्लेषं विनापि परोक्षवृत्तेरिव तत्सन्निकृष्टकरणजन्यत्वेनैवोपपत्तिः। न तु प्रभाया इव वृत्तेस्तदावरणनिवर्तकत्वादौ तत्संश्लेषस्तन्त्रम् नेत्रान्निर्गच्छद्भ्रुवाद्याकारवृत्त्यैव स्वसंश्लिष्टनेत्रस्थकज्जलादेर्भ्रुवनेत्र-मध्यवर्तिनः परमाण्वादेश्चापरोक्षत्वापत्तिरिति चेत्। परोक्षस्थले जाय-मानवृत्तितो वैलक्षण्याय अन्तःकरणस्य देहान्निर्गतिरपरोक्षस्थले कल्प्या इति चेत्तत्राह—तथापि अन्तःकरणस्य न देहान्निर्गतिः कल्प्या इति। ननु विषयस्य वृत्तिसम्बन्धं विना चिदुपराग एव न सम्भवति, चिदुपरागे वृत्तिसम्बन्धस्य तन्त्रत्वात्। वृत्त्यवच्छिन्नविषये एव चिदुपरागस्य सत्त्वात् तस्य वृत्तेर्बहिर्निर्गमनं विना अयोगात् वृत्तेर्बहिर्निर्गमनं कल्प्यमित्यत आह—चिदुपरागादौ इति। इन्द्रियसन्निकर्षद्वारा वृत्तेर्बहिर्निर्गमनाभावेऽपि विषयाकारेण वृत्तेरन्तरेव परिणाम-मात्रेण चैतन्यविषययोरुपरागसम्भवेन चिदुपरागे तदाकारत्वस्यैव प्रयोजकत्वात् वृत्त्यवच्छिन्ने एव चिदुपराग इति कल्पने मानाभावात्।

ननु प्रभाया आवरणनिवर्तकत्वे प्रकाशकत्वे च विषयसंश्लेषस्यैव प्रयोजक-ताया दृष्टत्वेन विषयसम्बन्धं विना वृत्तेरावरणनिवर्तकत्वासम्भवेन तदर्थं वृत्तेर्बहि-

न; विषयेष्वभिव्यक्तचिदुपरागे न तदाकारत्वमात्रं तन्त्रम् परोक्षस्थलेऽपि प्रसङ्गात्, किन्तु तत्संश्लेषः प्रभाया विषयसन्निकृष्टतेजस्त्वेनावरणाभिभावकत्वदर्शनात्। तैजसस्य मनसोऽप्यज्ञानरूपावरणाभिभवाय तत्संश्लेषः आवश्यकः। ध्रुवादिदेहमध्यवर्तिपरमाण्वादावतिप्रसङ्गस्तु तदाकारत्वप्रयोजकसामग्रीविरहादेव परिहरणीयः। अन्यथेन्द्रियसन्निकर्षादेर्विद्यमानत्वात् परमाण्वाद्याकारतया दुर्निवारत्वापत्तेः। तस्मात् प्रभाविशेषान्वयव्यतिरेकाभ्यां यत् क्लृप्तं सन्निकृष्टतेजस्त्वेनावरणाभिभावकत्वं, तस्य तदाकारत्वरूपविशेषापेक्षायामपि न त्यागः। न हि पृथिवीत्वगन्धत्वादिना कार्यकारणभावे आवश्यके अनित्यगुणत्वद्रव्यत्वादिना तत्त्यागः।

---

निर्गतिः कल्प्या चेत् तत्राह—न तु प्रभाया इव इति। वृत्तेरावरणनिवर्तकत्वादौ तदाकारत्वमेव तन्त्रं न तु संश्लेषः ज्ञानस्य आन्तरत्वेन प्रभापेक्षया वैषम्यादिति भावः।

वृत्तेर्देहात् बहिर्निर्गत्या विषयसंश्लेषावरणनिवर्तकत्वे बाधकमाह नेत्रान्निर्गच्छदिति। ध्रुवनक्षत्रज्ञानार्थं नेत्रान्निर्गच्छन्ती ध्रुवनक्षत्राकारा अन्तःकरणवृत्तिस्त्वया इत्यर्थः। स्वसंश्लिष्टेति। वृत्तिसंश्लिष्टनेत्रस्थकज्जलादेः देहध्रुवमध्यवर्तिनः परमाण्वाकाशादेश्च अपरोक्षत्वापातात्। संश्लेषावरणनिवृत्तिद्वारा अपरोक्षत्वापातादित्यर्थः ॥९॥

१०—वृत्तेर्विषयाकारत्वमात्रेण विषयस्य अपरोक्षत्वे परोक्षवृत्तेरपि विषयाकारत्वेन विषयस्य अपरोक्षत्वापातात् वृत्तेर्विषयसंश्लेष आवश्यक इत्याह सिद्धान्ती—न, विषयेष्वभिव्यक्तचिदुपरागे न तदाकारत्वमात्रं तन्त्रम्, परोक्षस्थलेऽपि प्रसङ्गात्, किन्तु तत्संश्लेषः। प्रभाया विषयसन्निकृष्टतेजस्त्वेनावरणाभिभावकत्वदर्शनात्। तैजसस्य मनसोऽप्यज्ञानरूपावरणाभिभवाय तत्संश्लेष आवश्यकः। ध्रुवादिदेहमध्यवर्तिपरमाण्वादावतिप्रसङ्गस्तु तदाकारत्वप्रयोजकसामग्रीविरहादेव परिहरणीयः। अन्यथेन्द्रियसन्निकर्षादेर्विद्यमानत्वात् परमाण्वाद्याकारतया दुर्निवारतापत्तेः। तस्मात् प्रभाविशेषान्वयव्यतिरेकाभ्यां यत् क्लृप्तं सन्निकृष्टतेजस्त्वेनावरणा-

भिभावकत्वं तस्य तदाकारस्वरूपविशेषापेक्षायामपि न त्यागः। न हि पृथिवीत्वगन्धत्वादिना कार्यकारणभावे आवश्यके अनित्यगुणत्व-द्रव्यत्वादिना त्यागः। प्रतिकर्मव्यवस्थायां प्राक् पक्षत्रयमुक्तं तेषु आद्यं पक्षमुपादाय जीवचैतन्यस्य विषयोपरागाय वृत्तेरपेक्षणे वृत्तेर्विषयाकारत्वमात्रेण विषयस्य चिदुपरागः न सम्भवति। किन्तु वृत्तेर्विषयसंश्लेषोऽपि आवश्यक इत्याह सिद्धान्ती—विषयेषु अभिव्यक्तचिदुपरागे इति। वृत्तेर्विषयाकारत्व-मात्रेण विषयेऽभिव्यक्तचिदुपरागे कल्प्यमाने परोक्षवृत्तिदशायामपि परोक्षवृत्तेर्विषये-ऽपि अभिव्यक्तचिदुपरागः स्यात्, तथा च परोक्षविषयोऽपि अपरोक्षः स्यात्। परोक्षवृत्तेरपि परोक्षविषयाकारत्वमस्त्येव। अन्यथा परोक्षवृत्तिः परोक्षविषयिणी न स्यात्, अतः वृत्तेर्विषयसंश्लेषौ विषयस्य प्रत्यक्षत्वपरोक्षत्वयोर्नियामकौ वाच्यौ। अन्यथा विषयस्य प्रत्यक्षत्वपरोक्षत्वव्यवस्था न स्यादिति भावः। वृत्तेरनिर्गमने वृत्त्या सह विषयस्य कः सम्बन्धः—स्वरूपसम्बन्ध इति चेत्? तस्य सम्बन्धिद्वयस्वरूपमात्रात्मकस्य घटवृत्तेरपि पटसाधारणत्वात् मुख्ये सम्बन्धे सम्भवति अमुख्यस्वरूपसम्बन्धस्य कल्पनायोगाच्च संयोगादिसिद्धौ वृत्तेर्निर्गमनं वाच्यम् अनुमित्यादेस्तु नैवं वृत्तेर्निर्गमनहेत्विन्द्रियसन्निकर्षाभावात्। कथं तर्हि परोक्षवृत्त्या व्यवहारनियमः? व्यवहारनियमस्य अनिर्वचनीयवादेऽविद्य-यैव उपपत्तेः। अविद्या वा कथम् असम्बद्धव्यवहारनिर्वाहिका? अतीतादेरपि अनिर्वचनीयसूक्ष्मरूपेण विद्यमानत्वात् परोक्षविषयमात्रस्य आविद्यकस्वरूपसम्बन्ध-विशेषादेव व्यवहारनियमः। एतेन वाचस्पतिमतेऽपि वृत्तेर्बहिर्निर्गमनं समर्थितं मुख्यसम्बन्धे सम्भवति अमुख्यसम्बन्धकल्पनायोगात् इत्यादिकं निरूपितमद्वैत-दीपिकायां नृसिंहाश्रमचरणैः [अद्वैतदीपिका, पृ० १५५-५६] प्रभाया विषय-सन्निकृष्टतेजस्त्वेन इति ज्ञानप्रमानुगतं प्रकाशकत्वरूपतेजस्त्वम् आवरणाभिभाव-कत्वम्। तच्च ज्ञानस्य चित्त्वेन अन्यत्र तेजोविशेषत्वादिना इत्यन्यदेतत्। आवरणत्वञ्च अज्ञानतमसोः अर्थव्यवहारप्रतिबन्धकत्वमनुगतमेव। तच्च अज्ञानस्य साक्षात् तमसो ज्ञानप्रतिबन्धद्वारेण इत्यन्यदेतदित्युक्तमाचार्येण आत्मस्वप्रकाशत्व-वादे [पृ० ७८१] प्रभामनसोः तैजसत्वं प्रकाशकत्वरूपं बोध्यम्। प्रभाया आवरणाभिभावकत्वे यथा विषयसन्निकृष्टतेजस्त्वमपेक्षितमेवं तैजसस्य मनसोऽपि अज्ञानावरणाभिभवाय मनसो विषयसंश्लेषः आवश्यकः। यच्चोक्तं पूर्वपक्षिणा

अत एव—तदितरहेतुसाकल्ये सति घटचक्षुःसन्निकर्षस्यैव घटानुभवजनकत्वम्, न तु घटमनःसन्निकर्षस्य, तद्विलम्बेन तद्विलम्बाभावादिति—निरस्तम्, आवरणभङ्गे सन्निकृष्टतेजःकारणत्वावधारणेन तस्याप्यावश्यकत्वात्।

---

ध्रुवादिदेहमध्यवर्तिपरमाण्वादौ अतिप्रसंगः स्यादिति तत्राह—चित्तवृत्तेः परमाण्वाद्याकारत्वप्रयोजकसामग्रीविरहादेव परिहरणीयः। नेत्रस्थकज्जलादौ संयोगादिरूपसंश्लेषाभावात् परमाण्वादौ महत्त्वाभावात् तदाकारत्वप्रयोजकसामग्रीविरह इति। सामग्रीविरहेऽपि यदि वृत्तेस्तदाकारता आपाद्येत तर्हि परमाण्वादिभिरिन्द्रियसन्निकर्षस्य विद्यमानत्वात् चाक्षुषज्ञानस्यापि परमाण्वाद्याकारतया दुर्निवारत्वापत्तेः। तस्मात् प्रभाविशेषेऽन्वयव्यतिरेकाभ्यां सन्निकृष्टतेजस्त्वेन आवरणाभिभावकत्वं यत् क्लृप्तं तत् वृत्तेर्विषयाकारत्वापेक्षायामपि न त्यक्तव्यम्। विशेषसामग्र्या सामान्यसामग्रीसाहित्येनैव कार्यजनकत्वात् अन्यथा सामान्यकार्यकारणभावमात्रमुच्छिद्येत। यद्विशेषयोरिति न्यायेन विशेषकार्यकारणभावस्य सामान्यकार्यकारणभावसाधकत्वमेव अत्र तस्येति पदं सामान्यकार्यकारणभावपरम्। तस्य सामान्यकार्यकारणभावस्य न त्यागः इति। न हि विशेषकार्यकारणभावेन सामान्यकार्यकारणभावो बाध्यते। तत्र निदर्शनमाह—न हि पृथिवीत्वगन्धत्वादिनेति। न हि विशेषकार्यकारणभावेन अनित्यगुणत्वद्रव्यत्वादिना सामान्यकार्यकारणभावः बाध्यते। विषयाकारायाः वृत्तेर्विषयसन्निकृष्टत्वेनैव विषयस्य आवरणाभिभावकत्वं सिद्धमिति। अत एव यदुक्तं पूर्वपक्षिणा घटचक्षुःसन्निकर्षस्यैव घटानुभवजनकत्वं न घटमनःसन्निकर्षस्येति निरस्तमित्याह—अत एव तदितरहेतुसाकल्ये सति घटचक्षुःसन्निकर्षस्यैव घटानुभवजनकत्वं न तु घटमनःसन्निकर्षस्य तद्विलम्बेन तद्विलम्बाभावात् इति निरस्तम्। आवरणभङ्गे सन्निकृष्टतेजःकारणत्वावधारणेन तस्याप्यावश्यकत्वात्। घटचक्षुःसन्निकर्षस्य घटानुभवजनकत्वं यथा अन्वयव्यतिरेकसिद्धं न तथा घटमनःसन्निकर्षस्य घटमनःसन्निकर्षव्यतिरेके घटानुभवव्यतिरेकाभावात् इत्याह—तद्विलम्बेन तद्विलम्बाभावात् घटमनःसन्निकर्षविलम्बेन घटानुभवविलम्बाभावात् इत्यर्थः। प्रदीपप्रभादौ तमोरूपावरणभङ्गे सन्निकृष्टस्य तेजसः कारणत्वावधारणेन अज्ञानरूपावरणभङ्गेऽपि

न च—स्पार्शनप्रत्यक्षे चक्षुरादिवन्नियतगोलकद्वाराभावेनान्तःकरणनिर्गत्य योगादावरणाभिभवानुपपत्तिरिति—वाच्यम्। सर्वत्र तत्तदिन्द्रियाधिष्ठानस्यैव द्वारत्वसम्भवात्।

न च अन्तःकरणवृत्तित्वाविशेषादिच्छाद्वेषादिरूपवृत्तयोऽपि देहान्निर्गत्य विषयसंसृष्टा भवन्तीति कथं न स्वीक्रियत इति—वाच्यम्; आवरणाभिभावकतेजस्त्वस्य तत्प्रमापकस्य ज्ञानवत् तत्राभावात्।

---

तैजसस्य मनसः सन्निकर्षस्यापि कारणत्वावधारणात् अज्ञानरूपावरणभङ्गे मनःसन्निकर्षस्यापि आवश्यकत्वात्। अवधृतकारणत्वस्य अभावे कार्याभावस्य आवश्यकत्वात्। मनः सन्निकर्षं विना घटानुभवाभावात् इति भावः। चाक्षुषज्ञाने मनसो बहिर्निर्गमने चक्षुःरूपनियतद्वारमिव स्पार्शनज्ञाने तन्नास्ति कुत इति चेत्? त्वगिन्द्रियं सर्वशरीरव्यापीत्यभियुक्तवचनेन त्वगिन्द्रियस्य सर्वशरीरव्यापीत्यावगमेन अन्तःकरणस्य बहिर्निर्गमने नियतद्वाराभावात् द्वारविशेषोक्तौ च विनिगमनाविरहप्रसङ्गात् इत्याह पूर्वपक्षी—न च स्पार्शनप्रत्यक्षे चक्षुरादिवन्नियतगोलकद्वाराभावेनान्तःकरणनिर्गत्य योगादावरणाभिभवानुपपत्तिरिति वाच्यम्। स्पार्शनप्रत्यक्षे नियतद्वाराभावेनान्तःकरणस्य बहिर्निर्गमनाभावेन आवरणाभिभवो न स्यात्। इन्द्रियाधिष्ठानस्यैवं द्वारत्वसम्भवान्नैवमित्याह सिद्धान्ती—सर्वत्र तत्तदिन्द्रियाधिष्ठानस्यैव द्वारत्वसम्भवात्। घ्राणकर्णादीन्द्रियेषु इन्द्रियाधिष्ठानमेव द्वारं तेन त्वगिन्द्रियाधिष्ठानं मनसो निर्गमने द्वारम्। शरीरस्य यस्मिन् प्रदेशे स्पर्शवद्द्रव्यसंयोगः तत्प्रदेशस्य त्वगिन्द्रियाधिष्ठानत्वात् तद्द्वारैवान्तःकरणस्य बहिर्निर्गमनं भवेदिति न विनिगमनाविरहः। ज्ञानाख्यान्तःकरणवृत्तेरिव इच्छादिवृत्तीनामपि अन्तःकरणवृत्तित्वात् बहिर्निर्गमनं कल्प्यतामित्याह पूर्वपक्षी—न च अन्तःकरणवृत्तित्वाविशेषात् इच्छाद्वेषादिवृत्तयोऽपि देहान्निर्गत्य विषयसंसृष्टा भवन्तीति कथं न स्वीक्रियत इति वाच्यम्। स्पष्टोऽर्थः।

ज्ञानाख्यान्तःकरणवृत्तेरावरणाभिभावकत्वमपेक्षितं न इच्छादिवृत्तेरिति परिहरति सिद्धान्ती—आवरणाभिभावकतेजस्त्वस्य तत्प्रमापकस्य ज्ञानवत् तत्राभावात्। अज्ञानावरणाभिभावकतेजस्त्वं ज्ञानाख्यवृत्तौ यथा प्रमितं न

ननु—घटप्रकाशकं चैतन्यमुपदेशसाहस्र्यनुसारेण घटाकारधीस्था चिद्वा परागर्थप्रमेयेष्वित्यादिवार्त्तिकोक्तरीत्या धीप्रतिबिम्बितचैतन्याभेदाभिव्यक्तविषयाधिष्ठानचैतन्यं वा, नाद्यः, आध्यासिकसम्बन्धस्यातन्त्रत्वापातात्। न द्वितीयः, आवश्यकेन विषयसंश्लिष्टवृत्तिप्रतिबिम्बितचैतन्येनैव तदज्ञाननिवृत्तिवत् तत्प्रकाशस्याप्युपपत्तौ किं विषयाधिष्ठानचैतन्याभिव्यक्तिकल्पनेनेति चेत् ॥१०॥

---

तथा इच्छादिवृत्तौ प्रमापकाभावात्। ज्ञानाख्यवृत्त्या विषयावरणे निवृत्तेः पश्चात् इच्छादयः प्रवर्तन्ते ज्ञानप्रकाशितार्थविषयकत्वादिच्छादीनां तथा च इच्छादीनामज्ञानाभिभावकत्वाभावात् न तेषां बहिर्निर्गमनमपेक्षितमिति भावः। घटाकारवृत्तिप्रतिबिम्बितं चैतन्यं वा घटः प्रकाशकम् अभिव्यक्तविषयाधिष्ठानचैतन्यं वा घटः प्रकाशकम् उभयथापि चैतन्यस्य घटः प्रकाशकत्वं न सम्भवतीत्याह पूर्वपक्षी—ननु घटः प्रकाशकं चैतन्यमुपदेशसाहस्र्यनुसारेण घटाकारधीस्था चिद् वा, परागर्थप्रमेयेषु इत्यादिवार्तिकोक्तरीत्या धीप्रतिबिम्बितचैतन्याभेदाभिव्यक्तविषयाधिष्ठानचैतन्यं वा, नाद्यः, आध्यासिकसम्बन्धस्य अतन्त्रत्वापातात्। न द्वितीयः, आवश्यकेन विषयसंश्लिष्टवृत्तिप्रतिबिम्बितचैतन्येनैव तदज्ञाननिवृत्तिवत् तत्प्रकाशस्यापि उपपत्तौ किं विषयाधिष्ठानचैतन्याभिव्यक्तिकल्पनेन इति चेत्। उपदेशसाहस्रीति शंकराचार्यप्रणीतो ग्रन्थविशेषः। तन्मतानुसारि भारतीतीर्थवचनं पञ्चदशीप्रकरणस्थं तद्वचनं तु—

घटैकाकारधीस्था चिद् घटमेवावभासयेत्।
घटस्य ज्ञातता ब्रह्मचैतन्येनावभासते ॥

[ पञ्चदशीकूटस्थदी० श्लो० ४ ]

अस्यार्थः घटैकाकारतया परिणता या धीर्वृत्तिः तत्स्था चिदेव तत्प्रतिबिम्बितं चैतन्यमेव घटमवभासयेत्। घटस्य ज्ञातता व्यवसायविषयता ब्रह्मचैतन्येन साक्षिरूपचैतन्येन अवभासते इत्यर्थः।

परमार्थप्रमेयेषु या फलत्वेन सम्मता।
संवित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥ इति

न; प्रकाशकं तावत् अधिष्ठानचैतन्यम्। तच्चाध्यासेन विषयैः सह साक्षात्सम्बद्धं प्रकाशस्य च स्वयं भासमानस्य स्वसम्बद्धसर्वभासकत्वमपि क्लृप्तमेव। एतदनभ्युपगमे कल्पनान्तरगौरवापत्तेः। तच्चानभिव्यक्तं निर्विकल्पकरूपमाच्छादितदीपवन्न प्रकाशकमिति तदभिव्यक्तिरपेक्षिता। तच्च परोक्षस्थले वृत्त्यवच्छेदेनैवाभिव्यज्यते। अपरोक्षस्थले तु वृत्तिसम्पर्कादावरणाज्ञानाभिभवे विषयोऽभिव्यज्यते वृत्तेर्विषयपर्यन्तत्वात्। न च परोक्षस्थलेऽप्येवं प्रसङ्गः द्वाराभावेनान्तःकरणनिर्गत्यभावात् ॥११॥

---

सुरेश्वरवार्तिकम् [पञ्चदशीकूटस्थद्वीपः, श्लो० ११] तस्यायमर्थः पराञ्चो येऽर्थास्तद्रूपाणि यानि प्रमेयाणि तेषु फलभूता या संवित् घटादिभासकं चैतन्यं स एव अधिकारिभिर्वेदान्तोक्तिरूपप्रमाणतो मेयोऽर्थ इत्यर्थः। वार्तिकमते वृत्तिप्रतिबिम्बितचैतन्याभेदेनाभिव्यक्तं घटाधिष्ठानचैतन्यमित्यर्थः। उपदेशसाहस्रीरीत्या प्रथमो विकल्पः वार्तिकरीत्या द्वितीयो विकल्पः। प्रथमं विकल्पं निरस्यति—नाद्य इति। वृत्तिप्रतिबिम्बितचैतन्यरूपज्ञानस्य सिद्धान्तिमते मिथ्यात्वेन तत्र घटादीनामध्यासाभावेन ज्ञाने आरोपितत्वरूपस्य आध्यासिकसम्बन्धस्य प्रतिकर्मव्यवस्थासिद्धौ अतन्त्रत्वापातात् इत्यर्थः। न द्वितीय इति। अधिष्ठानचैतन्यस्य विषयप्रकाशकत्वपक्षेऽपि अधिष्ठानचैतन्यावरणाज्ञाननिवृत्त्यर्थम् आवश्यकेन विषयसंश्लिष्टवृत्तौ अधिष्ठानचैतन्यस्य प्रतिबिम्बनादेव, तदज्ञाननिवृत्तिवत् तेनैव प्रतिबिम्बितचैतन्येन विषयप्रकाशस्यापि उपपत्तौ चैतन्यस्य वृत्तिप्रतिबिम्बितत्वातिरिक्ता चैतन्याभिव्यक्तिर्न कल्पनीया ॥१०॥

११—समाधत्ते सिद्धान्ती—न, प्रकाशकं तावत् अधिष्ठानचैतन्यम्। तच्चाध्यासेन विषयैः सह साक्षात्सम्बद्धम् प्रकाश्य च स्वयं भासमानस्य स्वसम्बद्धसर्वभासकत्वमपि क्लृप्तमेव। एतदनभ्युपगमे कल्पनागौरवापत्तेः। तच्चानभिव्यक्तं निर्विकल्पकरूपमाच्छादितदीपवन्न प्रकाशकमिति तदभिव्यक्तिरपेक्षिता। तच्च परोक्षस्थले वृत्त्यवच्छेदेनैवाभिव्यज्यते। अपरोक्षस्थले तु वृत्तिसंपर्कादावरणाज्ञानाभिभवे विषयोऽभिव्यजते वृत्तेर्विषयपर्यन्तत्वात्। न च परोक्षस्थलेऽप्येवं

ननु—वृत्तेस्तदाकारत्वं न तावत्तद्विषयत्वम् त्वयैव निरासात्। नापि तस्मिन् चैतन्योपरागयोग्यतापादकत्वं, तदज्ञानाभिभावकत्वं वा? उभयोरपि तदाकारत्वप्रयोज्यत्वेन तत्त्वायोगात्। नापि घटादिवत्

---

प्रसङ्गः द्वाराभावेनान्तःकरणनिर्गत्यभावात्। यदुक्तं वृत्तिप्रतिबिम्बित-चैतन्यमात्रं विषयप्रकाशकं तन्न, किन्तु अभिव्यक्तं विषयाधिष्ठानचैतन्यमेव। उपदेशसाहस्रीवाक्यार्थानवबोधविजृम्भितेयं तव भ्रान्तिरित्यर्थः। वृत्तिसम्बन्धात् अधिष्ठानचैतन्यमभिव्यक्तं वृत्तौ प्रतिबिम्बते इति तस्यार्थः। तथा च अधिष्ठान-चैतन्यमभिव्यक्तमेव विषयप्रकाशकम्। तथा च न आध्यासिकसम्बन्धस्य अतन्त्र-त्वापातः। तदेव दर्शयन्नाह—तच्च अध्यासेन विषयैः सह साक्षात् सम्बद्धम्। अनावृतप्रकाशस्य स्वयं भासमानस्य स्वसम्बद्धसर्वावभासकत्व-क्लृप्तमेव प्रदीपप्रभादौ अनावृता प्रदीपप्रभा यथा स्वसम्बद्धयोग्यावभासिका तथा चैतन्यमपि। अन्यथाभ्युपगमे कल्पनागौरवमेव बाधकमित्यर्थः। यच्चोक्तं द्वितीय-कल्पदूषणाय तन्निरस्यति तच्च अनभिव्यक्तमिति—तच्च अधिष्ठानचैतन्यं यद्यनभिव्यक्तं स्यात् तर्हि आच्छादितदीपवत् निर्विकल्पकरूपम् इपत्प्रकाशरूपम् अज्ञाततया विषयं भासयदपि न ज्ञाततया भासयेत्, अतोऽधिष्ठानचैतन्यस्य अध्यस्त-विषयप्रकाशनाय अभिव्यक्तिरपेक्षिता तेन यदुक्तं किं विषयाधिष्ठानचैतन्याभि-व्यक्तिकल्पनयेति तन्निरस्तमधिष्ठानचैतन्यस्याभिव्यक्तिं विना विषयस्य प्रकाशो न स्यादिति। तच्च चैतन्यं परोक्षवृत्तिस्थले वृत्तिमात्रावच्छेदेनैव अभिव्यज्यते यतः परोक्षवृत्तेः प्रकाशः स्यात् न तु परोक्षवृत्तिविषयस्य प्रकाशः वृत्तेर्विषयसम्बन्धा-भावात्। अपरोक्षवृत्तिस्थले तु वृत्तेर्विषयसम्पर्कात् विषयाधिष्ठानचैतन्यावरणाभिभवे विषयोऽभिव्यज्यते। अपरोक्षवृत्तेर्विषयपर्यन्तनिर्गमनात् न च परोक्षवृत्त्यापि विषयोऽभिव्यज्यतामिति वाच्यम्, अन्तःकरणवृत्तेर्बहिर्निर्गमने द्वाराभावेन वृत्ते-र्बहिर्निर्गमनाभावात् न परोक्षवृत्त्या विषयोऽभिव्यज्यते इति भावः ॥११॥

१२—सावयवं तैजसमन्तःकरणं विषयं व्याप्य तदाकारं भवति इत्युक्तप्रक्रियां दूषयन्नाह पूर्वपक्षी—ननु वृत्तेस्तदाकारत्वं न तावत् तद्विषयत्वं त्वयैव निरासात्। नापि तस्मिन् चैतन्योपरागयोग्यतापादकत्वं तदज्ञानाभि-भावकत्वं वा उभयोरपि तदाकारत्वप्रयोज्यत्वेन तत्त्वायोगात्। नापि

पृथुबुध्नोदराद्याकारत्वम् साकारवादापातात्। संस्थानहीनजातिगुणादिवृत्तेर्निराकारत्वप्रसङ्गाच्च। घटपटावितिसमूहालम्बने विरुद्धनानाकारत्वापत्तेश्चेति—चेत्।

न, अस्तीत्यादितद्विषयकव्यवहारप्रतिबन्धकाज्ञाननिवर्तनयोग्यत्वस्य। तत्सन्निकृष्टकरणजन्यत्वस्य वा तदाकारत्वरूपत्वात्। तदुभयं च स्वकारणाधीनस्वभावविशेषात्। न चात्माश्रयः निवृत्तिजननस्वरूपयोग्यतया फलोपधानस्य साध्यत्वेन स्वानपेक्षणात् ॥१३॥

---

घटादिवत् पृथुबुध्नोदराद्याकारत्वं साकारवादापातात्। संस्थानहीनजातिगुणादिवृत्तेः निराकारत्वप्रसंगाच्च। घटपटौ इति समूहालम्बने विरुद्धनानाकारत्वापत्तेश्च इति चेत्। वृत्तेर्विषयाकारत्वं तदाकारत्वम्। वृत्तेस्तद्विषयत्वमेव तदाकारत्वमिति सिद्धान्तिना वक्तुं न शक्यते, विषयत्वस्य सिद्धान्तिनैव निरासात्। वृत्तेः प्राक् चैतन्यं विषयासम्बद्धमेवावतिष्ठते वृत्त्या तूपरज्यते इति वृत्तेश्चिदुपरागार्थत्वाङ्गीकारात्। नापि तस्मिन्निति तस्मिन् विषये चैतन्योपरागयोग्यतापादकत्वं तदाकारत्वम्। तदज्ञानाभिभावकत्वं वेति विषयावरकाज्ञानाभिभावकत्वमित्यर्थः। निरुक्तपक्षद्वयं दूषयति—उभयोरपीति। अयमर्थः घटवृत्तेर्घटे एव चैतन्योपरागार्थकत्वं कुतः पटेऽपि तदर्पकत्वं किं न स्यात् तथा घटवृत्तेः घटाज्ञानाभिभावकत्वं कुतः पटाज्ञानाभिभावकत्वमपि किं न स्यात् इति शंकायां वृत्तेस्तदाकारत्वेन घटे एव चैतन्योपरागार्पकत्वं तदज्ञानाभिभावकत्वञ्च इत्येवं त्वयोश्चैतन्योपरागार्पकत्वतदज्ञानाभिभावकत्वयोस्तदाकारप्रयोज्यत्वेन तयोः तदाकारत्वायोगात् प्रयोज्यप्रयोजकयोर्भेदनियमात् इति भावः। नापि घटादिवदिति विज्ञानवादिबौद्धमतप्रवेशापत्तेरिति भावः। अर्थनिष्ठाकारवत्त्वमेव वृत्तेस्तदाकारत्वं चेत् दूषणान्तरमाह—संस्थानहीनेति। जातिगुणादयः संस्थानहीनाः आकारहीनाः इत्यर्थः। आकारहीनगुणादिवृत्तेर्निराकारत्वप्रसंगात्। दूषणान्तरमाह—घटपटौ इति। समूहालम्बनरूपाया एकस्या एव वृत्तेर्घटपटादेः पृथुबुध्नोदराकारादिनानाकारतया तद्विषयिण्याः समूहालम्बनवृत्तेः विरुद्धोभयाकारत्वापातः ॥१२॥

१३—पूर्वपक्षी प्रदर्शितेभ्यः प्रकारेभ्यः प्रकारान्तरं निर्ब्रुवन्, वृत्तेर्विषयाकारत्वं दर्शयति सिद्धान्ती—न अस्तीत्यादितद्विषयकव्यवहारप्रतिबन्धकाज्ञान-

निवर्तनयोग्यत्वस्य, तत्सन्निकृष्टकरणजन्यत्वस्य वा तदाकारत्वरूपत्वात्। तदुभयं च स्वकारणाधीनस्वभावविशेषात्। न चात्माश्रयः, निवृत्तिजननस्वरूपयोग्यतया फलोपधानस्य साध्यत्वेन स्वानपेक्षणात्। विषयाकारवृत्त्या अज्ञाननिवृत्तिर्भवतीति सिद्धान्तिमते वृत्तेर्विषयाकारत्वं नाम घटोऽस्ति घटः सन्नित्यादिघटविषयकव्यवहारः घटविषयकपरोक्षापरोक्षज्ञानाभ्यां भवति विषयस्य असत्त्वापादकाज्ञाननिवृत्तिः परोक्षवृत्त्या जायते, विषयस्य असत्वापादकाभानापादका द्विविधा ज्ञाननिवृत्तिरपरोक्षवृत्त्या जायते इति स्थितिः, तथा च परोक्षापरोक्षद्विविधवृत्त्या असत्त्वापादकाज्ञानस्य निवृत्तिः तेन अस्तीति सन्निति च व्यवहारो जायते, तथा च विषयविषयकास्तित्वादिव्यवहारप्रतिबन्धकमज्ञानमसत्त्वापादकमज्ञानं प्रमातृनिष्ठं परोक्षापरोक्षवृत्तिमात्रस्य तदज्ञाननिवर्तनयोग्यत्वमस्ति, तथा च तादृशनिवर्तनयोग्यत्वमेव वृत्तेर्विषयाकारत्वं या ज्ञानाख्या वृत्तिर्विषयस्य अस्तीत्यादिव्यवहारप्रतिबन्धकाज्ञाननिवर्तनयोग्या सा तद्विषयाकारा इति भावः[1]। तादृशविषयाकारता च परोक्षापरोक्षवृत्तिसाधारणीति सैव वृत्तेर्विषयाकारता अथ वा या वृत्तिः परोक्षरूपा अपरोक्षरूपा वा सा वृत्तिर्विषयसन्निकृष्टकरणजन्यैव भवति। प्रत्यक्षवृत्तौ विषयसन्निकृष्टचक्षुरादिकरणजन्यत्वस्य सत्त्वात् परोक्षवृत्तावपि विषयसन्निकृष्टं करणं व्याप्तिज्ञानादि, व्याप्तिज्ञानस्य परम्परया साध्यसन्निकर्षो वर्तते। अत्र सन्निकर्षपदं सम्बन्धपरम्। एवं पदज्ञानादिकरणस्यापि परम्परया विषयसन्निकृष्टत्वं बोध्यम्। प्रत्यक्षवृत्तेः परोक्षवृत्तेश्च विषयसन्निकृष्टकरणजन्यत्वं यदस्ति तदेव वृत्तेर्विषयाकारत्वम्। तदुभयमिति तदुभयात्मकः आकाराख्यः सम्बन्धः

---

१. यावृत्तिर्येन विषयेण सम्बद्ध्यमाना तस्मिन् विषये अस्ति सन्नित्यादिव्यवहारप्रतिबन्धकाज्ञाननिवर्तनस्वरूपयोग्या भवति सा वृत्तिस्तदाकारा इत्युच्यते। वस्तुतस्तु प्रमाणजन्यान्तःकरणवृत्तेरेवं विषयाकारता सम्भवति किन्तु अज्ञानानिवर्तिकाया अविद्यावृत्तेर्विषयाकारत्वे एवं निर्वचनं न सम्भवति, तत्रान्यैव विषयाकारता निर्वक्तव्या। अत्रेदं वक्तव्यं—नृसिंहाश्रमचरणानां मते प्रातिभासिकरजताद्याकाराया अविद्यावृत्तेरनङ्गीकारात् वक्तव्यमेव नास्ति। तत्त्वदीपनादिकृतां मते अविद्यावृत्तेः स्वीकारात् या वृत्तिर्यद्विषये जानामीत्यादिव्यवहारजनिका सा तदाकारा। या वा यद्विषये इच्छादिजनिका सा तदाकारा। या वा यद्विषये संस्कारद्वारा स्मृतिजनिका सा तदाकारा एवमेव सर्ववृत्तिसाधारणं विषयाकारत्वं निर्वाच्यम्।

ननु—दृशि विषयाध्यासस्वीकर्तुर्जीवचैतन्यं वा विषयदृग्ब्रह्म-चैतन्यं वा ? नाद्यः, जीवे अवच्छिन्नचित्स्वरूपे कल्पिते अध्यासायोगात्। न च—विषयदृक्जीवचैतन्यमेव अध्यासस्तु ब्रह्मचैतन्य इति—वाच्यम्, दृश्ययोरेवाध्यासिकसंबन्धापत्तेः अध्यस्ताधिष्ठानयोरुभयोरपि दृग्भिन्नत्वात्। अत एव न द्वितीयोऽपि ब्रह्मणोऽपि कल्पितत्वेन तत्राध्यासायोगाच्च। न च—शुद्धचैतन्यमेकमेव तदेवाधिष्ठानम् तत्रावच्छेदकमविद्यादिकं नाधिष्ठानकोटौ प्रविशति तदेव च जीवशब्देन ब्रह्मशब्देन च व्यपदिश्यते उपाधिविशेषात्। तथा च जीवचैतन्यस्य दृक्त्वेऽपि दृश्याध्यासो नानुपपन्न इति—वाच्यम्। शुद्धचैतन्यस्य आसंसारमावृतत्वेन जगदान्ध्यप्रसङ्गादिति—चेत्। न, मूलाविद्यानिवृत्त्य-

---

वृत्तिविषययोः वृत्तिकारणाधीनस्वभावविशेषात् भवति। वस्तुस्वभावस्य निरनुयोज्यत्वात् तदाकारत्वेन वृत्तेरज्ञाननिवर्तकत्वे आत्माश्रयः स्यात् अज्ञाननिवर्तनयोग्यत्वं हि तदाकारत्वं तेन वृत्तेरज्ञाननिवर्तकत्वे आत्माश्रयः स्यात् इत्यत आह—न च आत्माश्रयः इति। अज्ञाननिवर्तनस्वरूपयोग्यत्वं हि वृत्तेस्तदाकारत्वं तेन अज्ञाननिवृत्तिरूपफलोपधानं साध्यते अतो न स्वस्य स्वग्रहसापेक्षग्राहकत्वरूपात्माश्रयः। वृत्तेरज्ञाननिवर्तनस्वरूपयोग्यता विषयाकारतत्त्वेनैवावच्छिद्यते न तु अज्ञाननिवृत्तिजनकतावच्छेदकत्वेन येनात्माश्रयः स्यादिति भावः ॥१३॥

१४—दृशि विषयस्य अध्यासस्वीकारे जीवचैतन्यं वा विषयदृग्ब्रह्मचैतन्यं वा उभयथापि दोषानुसङ्गात् दृशि विषयस्याध्यास एव न सम्भवतीति पूर्वपक्षी शङ्कते—ननु दृशि विषयाध्यासस्वीकर्तुर्जीवचैतन्यं वा विषयदृग्ब्रह्मचैतन्यं वा ? नाद्यः, जीवे अवच्छिन्नचित्स्वरूपे कल्पिते अध्यासायोगात्। न च विषयदृक्जीवचैतन्यमेव अध्यासस्तु ब्रह्मचैतन्ये इति—वाच्यम्, दृश्ययोरेवाध्यासिकसम्बन्धापत्तेः। अध्यस्ताधिष्ठानयोरुभयोरपि दृग्भिन्नत्वात्। अत एव न द्वितीयोऽपि ब्रह्मणोऽपि कल्पितत्वेन तत्राध्यासायोगाच्च। न च शुद्धचैतन्यमेकमेव तदेवाधिष्ठानम् तत्रावच्छेदकमविद्यादिकं नाधिष्ठानकोटौ प्रविशति तदेव च जीवशब्देन ब्रह्मशब्देन च व्यपदिश्यते। उपाधिविशेषात्। तथा च जीवचैतन्यस्य

भावेन सर्वत आवरणाभिभवाभावेऽपि घटाद्यवच्छेदेनावरणाभिभवात् आन्ध्यविरहोपपत्तेः। ननु—तर्हीदानीमपि ब्रह्मस्फुरणे चरमवृत्तिवैयर्थ्यम् अधिकभागेऽपि तस्य स्फुरणात् न ह्याखण्डार्थवेदान्तजन्यायां वृत्तौ भावो वा अभावो विशेषणमुपलक्षणं वा प्रकारः प्रकाशत, इति—चेत्,'

---

दृक्त्वेऽपि दृश्याध्यासो नानुपपन्न इति वाच्यम्, शुद्धचैतन्यस्य आसंसारमावृतत्वेन जगदान्ध्यप्रसङ्गादिति चेत्। विषयदृशि विषयोऽध्यस्त इति वाच्यं, जीवचैतन्यस्य विषयदृक्त्वे जीवचैतन्ये एव विषयाध्यासो वक्तव्यः। स च न सम्भवति जीवचैतन्यस्य घटाद्यधिष्ठानत्वेन घटादिविशिष्टतया कल्पितत्वेन अध्यस्ताधिकसत्त्वाभावेन अधिष्ठानत्वायोगात् तस्य जीवचैतन्यस्य अवच्छिन्नस्य स्वयं कल्पितत्वात् इति यदि अधिष्ठानस्य अकल्पितत्वसिद्धये ब्रह्मचैतन्यमेव अधिष्ठानं स्वीकुरुषे जीवचैतन्यमेव विषयदृक् भविष्यति इति तदपि न संगच्छते, एवं कल्पने दृश्ययोरेवाध्यासिकसम्बन्धः स्यात्, न दृग्दृश्ययोः विषयदृग्जीवचैतन्यभिन्नत्वेन ब्रह्मणोऽपि दृश्यत्वात् दृग्भिन्नत्वमेव दृश्यत्वमिति। तथा च अध्यस्ताधिष्ठानयोरुभयोरपि दृग्भिन्नत्वेन दृश्यत्वात् ब्रह्मचैतन्यमेव विषयदृक् इति द्वितीयपक्षोऽपि न संगतः। विषयदृशः ब्रह्मणोऽपि कल्पितत्वात्। अयम्भावः विषयाध्यासाधिष्ठानतया विषयदृक्त्वेन अभिमतस्य सविशेषस्य ब्रह्मण एव कल्पिततया अधिष्ठानत्वायोगात्। न च घटाद्यधिष्ठानशुद्धचैतन्यमेव विषयप्रकाशकमिति वाच्यम्, शुद्धस्य आसंसारमज्ञानावृतत्वेन कदापि प्रकाशाभावेन घटादिपदार्थज्ञानमात्राभावापत्त्या सर्वप्रवृत्तिविलयापत्त्या जगदान्ध्यापातात् इत्यर्थः। न च शुद्धचैतन्यमेकमेवेति। शुद्धचैतन्यमेकमेव तदेवाविद्योपाधिवशेन जीवब्रह्मशब्दाभ्यामभिलप्यते। उपाधिभूताप्यविद्या नाधिष्ठानकोटौ प्रविशति अधिष्ठानत्वं शुद्धे ब्रह्मण्यमेव न उपाधिभूतायामविद्यायाम्। तथा च जीवचैतन्यस्य दृक्त्वेऽपि दृश्याध्यासो न अनुपपन्नः तत्राह—जगदान्ध्यप्रसङ्गादिति। घटाद्याकारवृत्त्या मूलाविद्यानिवृत्त्यभावेऽपि घटाद्यवच्छेदेन आवरणाभिभवाद् घटादिप्रकाशोपपत्तेर्न जगदान्ध्यप्रसंग इति परिहरति सिद्धान्ती—न मूलाविद्या निवृत्त्यभावेन सर्वत आवरणाभिभवाभावेऽपि घटाद्यवच्छेदेन आवरणाभिभवात् आन्ध्यविरहोपपत्तेः। कृतविवरणमेतत् पातनिकायामेव।

न, उपाध्यविषयकब्रह्मस्फुरणस्य चरमवृत्तिप्रयुक्तत्वेन तस्याः साफल्यात्, प्रकारास्फुरणं तु तस्याः भूषणमेव। इदानीन्तनस्फुरणस्य सप्रकारकत्वेनोपाधिविषयत्वात्, 'एकधैवानुद्रष्टव्यमित्यादिश्रुतिबलात् स्वसमानविषयज्ञानादेव चाज्ञानवृत्तेरखण्डचिन्मात्रज्ञानस्यैव मोक्षहेतुत्वावधारणात्। न च—अन्तःकरणावच्छिन्नचैतन्यस्य "जीवत्वे सुषुप्ति-

---

शुद्धमेव ब्रह्मणो घटाद्यवच्छिन्नं घटाद्याकारवृत्त्या प्रकाश्यते इति पक्षे दूषणमाह पूर्वपक्षी—ननु तर्हि इदानीमपि ब्रह्मस्फुरणे चरमवृत्तिवैयर्थ्यम् अधिकभागेऽपि तस्य स्फुरणात् नहि अखण्डार्थवेदान्तजन्यायां वृत्तौ भावो वा अभावो वा विशेषणमुपलक्षणं वा प्रकारः प्रकाशते इति चेत्। घटाद्याकारवृत्त्यापि घटादिविशिष्टब्रह्मस्फुरणे चरमवृत्तिवैयर्थ्यं घटाद्याकारवृत्त्या विशेषस्य ब्रह्मणः अधिकस्य प्रकारीभूतघटादेरपि भानात्। चरमवृत्तौ यद्ब्रह्मभासते तन्न घटाद्याकारवृत्तौ इति सिद्धान्तिना कथयितुं न युज्यते, अखण्डार्थकवेदान्तजन्यायां चरमवृत्तौ भावाभावादिप्रकारः कोऽपि न प्रकाशते, केवलं ब्रह्मैव प्रकाशते तच्च घटाद्याकारवृत्तावपीति भावः। उपाध्यविषयकब्रह्ममात्रस्फुरणस्य चरमवृत्तिप्रयुक्तत्वेन तदर्थं चरमवृत्तेः साफल्यादित्याह सिद्धान्ती—न उपाध्यविषयकब्रह्मस्फुरणस्य चरमवृत्तिप्रयुक्तत्वेन तस्याः साफल्यात्। प्रकारास्फुरणं तु तस्या भूषणमेव। इदानीन्तनस्फुरणस्य सप्रकारकत्वेन उपाधिविषयकत्वात्। एकधैवानुद्रष्टव्यमित्यादिश्रुतिबलात् स्वसमानविषयज्ञानादेव च अज्ञाननिवृत्तेरखण्डचिन्मात्रज्ञानस्यैव मोक्षहेतुत्वावधारणात्। इदानीन्तनघटाद्याकारवृत्त्या सप्रकारत्वेन ब्रह्मस्फुरणेऽपि निष्प्रकारब्रह्मस्फुरणस्य चरमवृत्तिप्रयुक्तत्वात्। चरमवृत्तौ प्रकारास्फुरणं चरमवृत्तेर्मूलाज्ञाननिवर्तकत्वे भूषणमेव। शुद्धचिन्मात्रविषयिणी अविद्या शुद्धचिन्मात्रविषयिण्या विद्ययैव निवर्तते ज्ञानज्ञानयोः समानविषयकत्वेनैव निवर्त्यनिवर्तकभावात्। एकधैवानुद्रष्टव्यमिति। ननु धाप्रत्ययस्य प्रकारोऽर्थः। स च विशेषणीभूतो विषय इति कथमुक्तश्रुतिबलात् निर्विकल्पकस्य ज्ञानस्य मोक्षहेतुतेति चेन्न। न हि धीविशेषणरूपप्रकारार्थक एव धाप्रत्यय इति

दशायां तदभावेन कृतहान्याद्यापत्तिरिति—वाच्यम्, तदाप्यस्य कारणात्मनाऽवस्थानात्, स्थूलसूक्ष्मसाधारणस्यान्तःकरणस्योपाधित्वात्। तदपीतेः संसारव्यपदेशादित्यस्मिन् सूत्रे चायमर्थः स्पष्टतरः।

न च—वृत्त्युपरक्तत्वं चैतन्यस्य न तत्प्रतिबिम्बितत्वम्, दर्पणे मुखस्येवानुद्भूतरूपेऽन्तःकरणे शब्दान्यप्रतिबिम्बनोपाधिताया अचाक्षुषचैतन्यस्य प्रतिबिम्बितायाश्चायोगादिति—वाच्यम्। उद्भूतरूपवत्त्वं

---

नियमः एकधा भुक्तमित्यादौ तदसम्भवात्। किन्तु क्वचित् कश्चन प्रकार इति प्रकृते विषयमात्ररूप एव प्रकारः आत्मदर्शने बुध्यते। इत्यादि पदात् अव्यवहार्यमलक्षणं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः इत्यादिमाण्डूक्यश्रुतिसंग्रह। [ सप्तमखण्डमाण्डूक्यम् ]अन्तःकरणावच्छिन्नचैतन्यस्य जीवत्वे सुषुप्तौ जीवाभावमाशङ्क्य समाधत्ते सिद्धान्ती—न च अन्तःकरणावच्छिन्नचैतन्यस्य जीवत्वे सुषुप्तिदशायां तदभावेन कृतहानाद्यापत्तिरिति वाच्यम्, तदा पश्य कारणात्मनावस्थानात् स्थूलसूक्ष्मसाधारणस्य अन्तःकरणस्य उपाधित्वात्। तदपीतेः संसारव्यपदेशात् इत्यस्मिन् सूत्रे चायमर्थः स्पष्टतरः। सुषुप्तौ अन्तःकरणस्य मूलाविद्यायां प्रलयात् अन्तःकरणावच्छिन्नचैतन्यरूपजीवस्यापि तदाप्रलयात् कृतविप्रणाशः पुनर्जागरणे अकृताभ्यागम प्रसङ्गश्च स्यातामिति पूर्वपक्षिणा न वाच्यं, यतः स्थूलसूक्ष्मसाधारणस्य अन्तःकरणस्य जीवचैतन्योपाधित्वात्। सुषुप्तौ स्थूलरूपेण अन्तःकरणस्याभावेऽपि सूक्ष्मरूपेण कारणात्मना अवस्थानात् न जीवनाशापत्तिः। तदापीतेः संसारव्यपदेशात् [ब्र० सू० ४।२।८] सूत्रे अयमर्थः स्पष्टतर इति। उक्तं च तत्र भाष्यकृता "तस्मात् तत्प्रकृतित्वेऽपि सुषुप्तप्रलयवत् बीजभावावशेषा एव एषा सत्सम्पत्तिरिति। मिथ्याज्ञाननिमित्तश्च बन्धः न "सम्यग्ज्ञानादृते विस्रंसितुमर्हतीति। अनुद्भूतरूपे अन्तःकरणे अचाक्षुषचैतन्यस्य प्रतिबिम्बनासम्भवात् चैतन्यस्य अन्तःकरणवृत्त्युपरक्तत्वं न सम्भवतीत्याह—पूर्वपक्षी—न च वृत्त्युपरक्तत्वं चैतन्यस्य न तत्प्रतिबिम्बितत्वं, दर्पणे मुखस्येव अनुद्भूतरूपे अन्तःकरणे शब्दान्यप्रतिबिम्बनोपाधितायाः अचाक्षुषचैतन्यस्य प्रतिबिम्बतायाश्च अयोगादिति वाच्यम्। वृत्तिप्रतिबिम्बितं चैतन्यमिति प्रक्रियां निराकरोति—वृत्त्युपरक्त-

न प्रतिबिम्बितोपाधिताप्रयोजकम्; अस्वच्छेऽपि लोष्ठादौ प्रतिबिम्बापत्तेः, किंतु स्वच्छत्वं तच्च प्रकाशस्वभावत्वेन मनसस्तत्परिणामभूतायावृत्तेश्चास्त्येव। त्रिगुणात्मकस्याप्यज्ञानस्य स्वच्छसत्त्वात्मकताया अपि सत्त्वेन तत्रापि प्रतिबिम्बितोपाधितायाः सत्त्वात्। नापि चाक्षुषत्वं प्रतिबिम्बितत्वप्रयोजकम्। अचाक्षुषस्याप्याकाशादेः प्रतिबिम्बितत्वदर्शनात् ॥१४॥

---

त्वमिति। वृत्तिश्चिदुपरागार्थेति पक्षः न सम्भवति इति भावः। अन्तःकरणस्य प्रतिबिम्बनोपाधित्वं न सम्भवति कुत इति चेत्? उद्भूतरूपवत्त्वस्यैव प्रतिबिम्बनोपाधित्वप्रयोजकत्वात् अन्तःकरणस्य अनुद्भूतरूपवत्त्वात् ननु अद्भुत॰ रूप न प्रतिबिम्बनोपाधित्वप्रयोजकं यदा गुहास्थिताकाशे प्रतिध्वनिर्भवति तदा शब्दस्तत्र प्रतिफलति तत्राकाशस्य कथं शब्दप्रतिबिम्बनोपाधित्वम् उद्भूतरूपवत्त्वाभावात् अत उक्तं—शब्दान्येति। शब्दान्यप्रतिबिम्बनोपाधित्वे उद्भूतरूपवत्त्वं प्रयोजकमित्यर्थः। एवञ्चैतन्यस्यापि प्रतिबिम्बनं न सम्भवति। प्रतिबिम्बने चाक्षुषत्वस्य प्रयोजकत्वात, चैतन्यस्य अचाक्षुषत्वात्। ननु जलाद्युपाधौ अचाक्षुषस्याकाशस्य प्रतिबिम्बनं दृष्टमिति चेन्न तत्र सौरप्रभामण्डलस्य चाक्षुषस्यैव प्रतिबिम्बनादिति भावः।

प्रतिबिम्बनोपाधित्वे उद्भूतरूपवत्त्वं न प्रयोजकं किन्तु स्वच्छत्वमेव प्रतिबिम्बितत्वेऽपि न चाक्षुषत्वं प्रयोजकमित्याह सिद्धान्ती—उद्भूतरूपवत्त्वं न प्रतिबिम्बितोपाधिताप्रयोजकमस्वच्छेऽपि लोष्टादौ प्रतिबिम्बापत्तेः किन्तु स्वच्छत्वं तच्च प्रकाशस्वभावत्वेन मनसः तत्परिणामभूतायाः वृत्तेश्च अस्त्येव। त्रिगुणात्मकस्यापि अज्ञानस्य स्वच्छसत्तात्मकताया अपि सत्त्वेन तत्रापि प्रतिबिम्बितोपाधितायाः सत्त्वात्। नापि चाक्षुषत्वं प्रतिबिम्बितत्वप्रयोजकम् अचाक्षुषस्यापि आकाशादेः प्रतिबिम्बितत्वदर्शनात्। उद्भूतरूपवत्त्वं न प्रतिबिम्बनोपाधित्वव्याप्यं तस्य व्याप्यत्वेऽस्वच्छे लोष्टादावपि उद्भूतरूपवत्त्वस्य सत्त्वात् लोष्टेऽपि किञ्चित् प्रतिबिम्बितं स्यात किन्तु स्वच्छत्वमेव प्रतिबिम्बनोपाधित्वव्याप्यं दर्पणादौ तथा दृष्टत्वात् अस्वच्छे लोष्टादौ अदर्शनाच्च। तच्च स्वच्छत्वं सत्त्वप्रधानस्य मनसः

ननु—चाक्षुषवृत्त्युपारूढचित्तः कथं रूपमात्रप्रकाशकत्वम्? न च प्रभावन्नियमः वैषम्यात् तथा हि—प्रभायां तमोविरोधित्वं रूपं प्रतीव गन्धादीन् प्रत्यपि समम्। नहि सा गन्धादिदेशस्थं तमो न निवर्तयति न च—अज्ञाननिरोधित्वलक्षणं प्रकाशकत्वं रूपं प्रत्येव न तु रसादीन्प्रतीति—वाच्यम्, अज्ञाननिवर्तकत्वस्य वृत्तिभिन्नेऽनङ्गीकारात्। प्रभाया रूपग्राहकचक्षुः सहकारित्ववत् गन्धादिग्राहिघ्राणादिसहकारि-

---

तद्वृत्तेश्च अस्त्येवेति तयोः प्रतिबिम्बनोपाधित्वं युक्तमिति। न केवलं मनसस्तद्-वृत्तेर्वा प्रतिबिम्बनोपाधित्वमज्ञानस्यापि त्रिगुणात्मकस्य स्वच्छसत्त्वगुणात्मकतया तत्रापि प्रतिबिम्बनोपाधितायाः सत्त्वात् अज्ञानेऽपि चैतन्यं प्रतिबिम्बते। प्रासङ्गिकतया आचार्येण एतदुक्तमिति मन्तव्यम्। यच्चोक्तम् अचाक्षुषचैतन्यस्य प्रतिबिम्बितत्वं न युक्तं तत्राह—नापि चाक्षुषत्वं प्रतिबिम्बितत्वप्रयोजकम् अचाक्षुषस्यापि आकाशस्य जले प्रतिबिम्बितत्वदर्शनात्। न च जले सौरालोक-मण्डलस्यैव प्रतिबिम्बितत्वं नाकाशस्येति वाच्यम्। उक्तञ्च सिद्धान्तबिन्दौ—ननु नीरूपस्य निरवयवस्य कथं प्रतिबिम्ब इति चेत् कात्र अनुपपत्तिः विभ्रमहेतूनां विचित्रत्वात्। जपाकुसुमरूपस्य नीरूपस्यापि स्फटिकादौ प्रतिबिम्बदर्शनात् शब्दस्यापि प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात्। तयोः सम्प्रतिपन्नप्रतिबिम्ब-वैलक्षण्यानिरूपणात्। तथापि इन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति चेन्न, व्यभिचारात् अनिन्द्रियग्राह्यस्य साक्षिप्रत्यक्षस्य आकाशस्यापि जलादौ प्रतिबिम्बोपलम्भात् अन्यथा जानुमात्रेऽपि उदके अतिगम्भीरप्रतीतिर्न स्यात्। तस्मात् चाक्षुषप्रतिबिम्ब-मेव रूपसापेक्षं नान्यत् इत्यवधेयम्। [सि० वि०, पृ० ३८८-३९३] ॥१४॥

१५—चितः सर्वगतत्वेन सर्वसम्बन्धात् सर्वप्रकाशो दुर्वार इति पूर्वपक्षी शङ्कते—ननु चाक्षुषवृत्त्युपारूढचितः कथं रूपमात्रप्रकाशकत्वं न च प्रभावन्नियमः वैषम्यात् तथा हि—प्रभायां तमोविरोधित्वं रूपं प्रतीव गन्धादीन् प्रत्यपि समम्। न हि सा गन्धादिदेशस्थं तमो न निवर्तयति। न च अज्ञाननिरोधित्वलक्षणं प्रकाशकत्वं रूपं प्रत्येव न तु रसादीन् प्रतीति वाच्यम्, अज्ञाननिवर्तकत्वस्य वृत्तिभिन्नेऽनङ्गी-कारात्। प्रभाया रूपग्राहकचक्षुसहकारित्ववत् गन्धादिग्राहिघ्राणादि-

त्वाभावेऽपि चितो ग्राहकान्तरासहकारित्वेन तद्वत्सहकारिविलम्बेन विलम्बस्य वक्तुमशक्यत्वात्। तथा च चितः सर्वंगतत्वेन सर्वसम्बन्धाद्रूपादिवत् गुरुत्वादेरप्याश्रयद्वारा साक्षाद्वा सम्बन्धित्वात् प्रकाशापत्तिः वृत्त्युपरक्तचित्सम्बन्धस्यैव प्रकाशकत्वात्। 'असङ्गो ह्ययं पुरुष' इति श्रुतिस्तु तत्कृतलेपाभावपरा न तु सम्बन्धनिषेधिका स यत्तत्र यत्किंचित्पश्यत्यनन्वागतस्तेन भवतीति पूर्ववाक्यात्। 'यथाकाशस्थितो नित्यो वायुः सर्वत्रगो महानि' त्यादिस्मृतेश्चेति—चेत् ॥१५॥

---

सहकारित्वाभावेऽपि चितो ग्राहकान्तरासहकारित्वेन तद्वत् सहकारिविलम्बेन विलम्बस्य वक्तुमशक्यत्वात्। तथा च चितः सर्वगतत्वेन सर्वसम्बन्धात् रूपादिवत् गुरुत्वादेरपि आश्रयद्वारा साक्षाद्वा सम्बन्धित्वात् प्रकाशापत्तिः वृत्त्युपरक्तचित्सम्बन्धस्यैव प्रकाशकत्वात्। असंगो ह्ययं पुरुष इति श्रुतिस्तु तत्कृतलेपाभावपरा, न तु सम्बन्धनिषेधिका स यत् तत्र यत्किंचित् पश्यति अनन्वागतस्तेन भवतीति पूर्व वाक्यात्। 'यथाकाशस्थितो नित्यो वायुः सर्वत्रगोमहान्' इत्यादिस्मृतेश्चेति चेत्। घटाकारचाक्षुषवृत्त्युपारूढा चित् घटरूपमात्रं प्रकाशयति न घटीयगन्धादीन् इति नोपपद्यते चाक्षुषवृत्त्युपारुढया चिता घटेन सम्बद्धत्वात् घटीयं सर्वमेव प्रकाश्येत अविशेषात्। न च प्रभावन्नियमः स्यात् यथा प्रभा घटेन सम्बद्धा घटीयं रूपमेव प्रकाशयति न घटीयगन्धादीन् तथा चाक्षुषवृत्त्युपारूढा चिदपीति चेन्न वैषम्यात्। प्रभातश्चितेर्वैषम्यात्। वैषम्यमेव दर्शयति— तमोविरोधीनि प्रभारूपं प्रतीव गन्धादीन् प्रत्यपि तमो निवारयत्येव। न हि प्रभा गन्धादिदेशस्थं तमो न निवारयति। न च प्रभाया अज्ञानविरोधित्वं रूपं प्रत्येव न रसादीन् प्रत्यपीति वाच्यम्, प्रभाया अज्ञानविरोधित्वाभावात् प्रमाणजन्यान्तःकरणवृत्तेरेव अज्ञानविरोधित्वं न प्रभादीनां सिद्धान्तिनाप्येवमेव वाच्यम्। प्रभाया यथा रूपग्राहकचक्षुःसहकारित्वं नैवं गन्धादिग्राहकघ्राणादिसहकारित्वं चित्पुनः ग्राहकान्तरासहकारिण्यपि स्वविषयग्राहिका तथा च प्रभाया यथा रूपग्राहकमानसहकारित्वमेवं न चितः चितो वृत्तिग्राहकत्वे ग्राहकान्तरापेक्षाभावात्। अतो निरपेक्षचितः रूपग्राहकत्वे गन्धादिग्राहकत्वमपि स्यादेव।

न प्रभाया रूपरसादिदेशगततमोनाशकत्वं तत्सम्बन्धाद्युज्यते, चैतन्यस्य तु स्वभावतोऽसम्बद्धत्वात् तदाकारवृत्त्या तदेकसम्बन्धस्योपादानात् कथमन्यावभासकत्वप्रसङ्गः? स्वभावतो ह्यसङ्गत्वे असङ्गो ह्ययं पुरुषः इति श्रुतिप्रमाणम्। न चैषा लेपाभावपरा, अकर्तृत्वप्रतिपादनाय सम्बन्धाभावपरत्वात्। यथा चैतत्तथा व्यक्तमाकरे। एवं

---

घटीयरूपादिनामेव घटीयगुरुत्वादीनामपि घटाद्याश्रयद्वारा चित्सम्बन्धित्वात् चितः सर्वगतत्वेन सर्वसम्बन्धित्वात् साक्षाद् वा गुरुत्वादिसम्बन्धित्वात् गुरुत्वादेः प्रकाशापत्तिः। वृत्त्युपरक्तचित्सम्बन्धस्यैव प्रकाशकत्वात् घटाकारचाक्षुषवृत्त्युपरक्तचित्सम्बन्धस्य घटीयरूपे इव गन्धादौ गुरुत्वे च अस्त्येव इति भावः।

ननु असङ्गो ह्ययं पुरुष इति श्रुतेर्जीवचितः सतो विषयासम्बन्धित्वात् विषयसम्बन्धाय वृत्तिरपेक्षिता अन्यथा श्रुतिविरोधः स्यात्। तथा च गन्धाद्याकारवृत्त्यभावदशायां गन्धादिभिः सह जीवचितः सम्बन्धो नास्ति इत्याशंक्याह—असङ्गो ह्ययं पुरुष इति श्रुतिस्तु इति। नेयं श्रुतिर्जीवचैतन्यपरा किन्तु ईश्वरपरा इत्याह—ईश्वरस्य तत्तत्कृतलेपाभावपरेति। इयं श्रुतिरीश्वरपरेति कुतः इत्याह पूर्ववाक्ये इति। हिरण्मयः पुरुष एक हंस स यत् तत्रेति पूर्ववाक्ये ईश्वरस्यैव प्रकृतत्त्वात् इति भावः। ननु इयं श्रुतिर्लेपाभावपरेति कुतः ईश्वरस्य सर्वपदार्थसम्बन्धिपरा किं न स्यात् अत आह—यथाकाशस्थितो नित्यमिति गीता स्मृत्या [९।६][1] सर्वसम्बन्धस्यैवोक्तत्वेनैव स्मृतिविरोधात् श्रुतिर्लेपाभावपरेति व्याख्येया इति भावः ॥१५॥

१६—सिद्धान्ती समाधत्ते—न प्रभाया रूपरसादिदेशगततमोनाशकत्वं तत्सम्बन्धात् युज्यते, चैतन्यस्य तु स्वभावतोऽसम्बद्धत्वात् तदाकारवृत्त्या तदेकसम्बन्धस्य उपादानात् कथमन्यावभासकत्वप्रसङ्गः? स्वभावतो हि असङ्गत्वेऽसङ्गो ह्ययं पुरुष इति श्रुतिः प्रमाणम्। न चैषा लेपाभावपरा अकर्तृत्वप्रतिपादनाय सम्बन्धाभाव-

---

१. यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।
यथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥
गीता, ६ श्लो० ९म अध्या०

स्मृतिरप्येतच्छ्रुत्यनुरोधेन नेया। अतः सर्वैः सह सम्बन्धाभावात् न सर्वावभासः किन्तु यदाकारावृत्तिस्तस्यैव। अत एव 'इदं रजतमि'ति भ्रमे इदमाकारवृत्त्यवच्छिन्नचैतन्येन रजतभानानुपपत्तेः रजताकाराप्यविद्यावृत्तिरभ्युपेयते। स्वतश्चिद्बिम्बाग्राहके चैतन्यस्य तदाकारत्वायोगात् स्वतश्चिद्बिम्बग्राहके त्वन्तःकरणवृत्त्यादौ च न वृत्त्यपेक्षेति नानवस्था ॥१६॥

---

परत्वात्। यथा चैतत्तथा व्यक्तमाकरे। एवं स्मृतिरपि एतच्छ्रुत्यनुरोधेन नेया। अतः सर्वैः सह सम्बन्धाभावात् न सर्वावभासः, किन्तु यदाकारावृत्तिस्तस्यैव। अत एव ॰इदं रजतमिति भ्रमे इदमाकारवृत्त्यवच्छिन्नचैतन्येन रजतभानानुपपत्तेः रजताकारापि अविद्यावृत्तिरभ्युपेयते। स्वतश्चिद् बिम्बाग्राहके चैतन्यस्य तदाकारत्वायोगात् स्वतश्चिद् बिम्बग्राहके त्वन्तःकरणवृत्त्यादौ च न वृत्त्यपेक्षा इति नानवस्था। यदुक्तं प्रभायां तमोविरोधित्वं रूपं प्रतीव गन्धादीन् प्रत्यपि समं तद्युज्यते एव प्रभाया रूपरसादिदेशसम्बन्धात न तु एवं चैतन्यस्य। स्वभावतोऽसम्बद्धत्वात् तदाकारवृत्त्यैव तेन सह चैतन्यस्य सम्बन्धोपपादनात्। अन्याकारवृत्तिदशायाम् अन्येन सह चैतन्यस्य कथं सम्बन्धः स्यात्। सम्बन्धाभावे कथमन्यावभासकत्वप्रसङ्गः स्यात्। जीवचैतन्यस्य स्वभावतोऽसंगत्वे असङ्गो ह्ययं पुरुष इति श्रुतिः प्रमाणम्। [बृह० उ० ४।३।१५] नैषा श्रुतिरीश्वरपरा लेपाभावपरा वा किन्तु जीवचैतन्यस्य अकर्तृत्वप्रतिपादनाय सम्बन्धाभावपरत्वात्। आकरे बृहदारण्यकभाष्ये व्यक्तम्। स्वप्नदृशो जीवस्य स्वप्नेऽकर्तृत्वप्रतिपादनाय एषा उपनिषत् प्रवृत्ता। तथा हि तत्रत्यं भाष्यम्—स आत्मा यत् किंचित् तत्र स्वप्ने पश्यति पुण्यपापफलम् अनन्वागतोऽनुबद्धस्तेन दृष्टेन भवति, नैवानुबद्धो भवति, यदि हि स्वप्ने कृतमेव तेन स्यात् तेन अनुबद्ध्येत स्वप्नाद्युत्थितोऽपि समन्वागतः स्यात् न च तल्लोके स्वप्नकृतकर्मणा अन्वागतत्वं प्रसिद्धिः। न हि अमूर्तः कश्चित् क्रियावान् दृश्यतेऽमूर्तश्च आत्मा अतोऽसङ्गः, यस्मात् चासङ्गोऽयं पुरुषस्तस्माद् अनन्वागतस्तेन स्वप्नदृष्टेन अत एव न क्रियाकर्तृत्वमस्य कथं चिदुपपद्यते। एषा श्रुतिर्जीवचैतन्यस्यैव स्वप्नसुषुप्त्याद्यवस्थावर्णनेन

न च—आश्रयसम्बन्धाविशेषेऽपि रूपाकारावृत्तिर्न गन्धाद्याकारेति

---

अकर्तृत्वम् असङ्गत्वं दर्शयति, ईश्वरपरत्वशंकायाः लेशोऽपि अत्र नास्ति। श्रुत्यर्थाननुसन्धानविजृम्भितेयं भ्रान्तिः पूर्वपक्षिणः। गीतायामपि शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते।

गीता १३ अ० ३२ श्लो०]

इति जीवचैतन्यस्य असङ्गत्वमुक्तम्। जीवचैतन्यवद् ब्रह्मचैतन्यस्यापि असङ्गत्वेऽपि उपादानत्वात् ब्रह्मप्रपञ्चाश्रयः। सोऽपि वस्तुतो न भवतीत्युक्तं गीतायाम्—न च मत्स्थानीभूतानि पश्य मे योगमैश्वरम् [अ० ९ श्लो० ५]। असङ्गत्वश्रुत्यनुरोधेन गीतास्मृतिरपि नेया नीता च गीता स्मृत्यैव। पूर्वपक्षिणा यदकाण्डे प्रलपितं तत्समाधाय प्रकृतमनुसरति अतः सर्वैः सह सम्बन्धाभावात् असङ्गजीवचैतन्यस्य न तेन सर्वदा सर्वावभासः। किन्तु यद्विषयाकारवृत्तिः तस्यैव विषयस्य अवभासः। विषयाकारवृत्तिं विना न विषयस्य चित्सम्बन्ध इत्यत्र निदर्शनमाह—इदमाकारवृत्त्यवच्छिन्नचैतन्येन रजतभानानुपपत्तेः रजतभानाय रजताकारा अविद्यावृत्तिरभ्युपेयते। उक्तं सिद्धान्तबिन्दुटीकायां न्यायरत्नावल्याम्—यद्यपि विवरणादौ शुक्तिरूप्याद्याकारा अविद्यावृत्तिरुक्ता तथापि न युक्ता प्रातीकर्तारूप्यादेः स्वच्छत्वसम्भवात् इति चेन्न, व्यावहारिकरजतादेः चित्प्रतिबिम्बयोग्यत्वरूपस्वच्छत्वादर्शनेन तज्जातीयप्रातीतिकरूप्यादेस्तदसम्भवात्। सत्त्वांशाधिकभूतपरिणामस्य मन आदेरेव स्वच्छत्वसम्भवेन तमोंऽशाधिकाविद्याया व्यावहारिकसाधारणरजतत्वविशिष्टहेतुतया क्लृप्तायाः परिणामस्य प्रातीतिकव्यावहारिकादेः स्वच्छत्वासम्भवात् सत्यंशाधिकाविद्यापरिणामस्य तदाकारवृत्तिज्ञानस्य चिन्निष्ठतदाकारतासम्पादकत्वेन आवश्यकत्वात् तमोंऽशाधिकाविद्या कार्यतावच्छेदके प्रातीतिकान्यत्वनिवेशे तु गौरवम्। आवश्यकी च प्रातीतिकाविद्यावृत्तिः। [सि० बि०, पृ० ५, १ श्लो०] रजताकाराविद्यावृत्तेरनङ्गीकर्तारः नृसिंहाश्रमादय एतेन निरस्ताः। विषयस्य स्वतः तदाकारवृत्तिं विना चिद्बिम्बाग्राहकत्वात् चैतन्यस्य विषयाकारत्वायोगात् न विषयस्य भानम्। अन्तःकरणे तद्वृत्त्यादौ च स्वतश्चिद्बिम्बग्राहकत्वात् न चिद्बिम्बग्रहणाय स्वविषयकवृत्त्यपेक्षा इति न अनवस्थेति भावः। वृत्तेश्चिद्बिम्बग्रहणाय स्वविषयकवृत्त्यन्तरापेक्षायां स्यादेवानवस्थेति बोध्यम् ॥१६॥

कुत इति—वाच्यम् । यथा तव चाक्षुषज्ञाने आश्रयसम्बन्धाविशेषेऽपि न गन्धो विषयः तथाऽस्माकमपि चक्षुर्द्वारकवृत्तौ न गन्धाद्याकारत्वम्, इन्द्रियविषयसम्बन्धानां स्वभावस्य नियामकस्य समानत्वात् ॥१७॥

ननु—आध्यासिकसम्बन्धो वृत्तेः पूर्वमप्यस्त्येव अन्यस्तूपरागो न दृश्यत्वे तन्त्रमिति किं तदर्थया वृत्त्येति—चेत् । न, जीवचैतन्यस्याधिष्ठानचैतन्यस्य च अभेदाभिव्यक्त्यर्थत्वाद्वृत्तेः । अन्यथा मयेदं विदितमिति सम्बन्धावभासो न स्यात् ।

---

१७—रूपाद्याश्रयघटाद्याकारा वृत्तिर्जायमानापि घटीयरूपाकारा न घटीयगन्धाद्यकारा इति कुतः इति पूर्वपक्षी शङ्कते—न च आश्रयसम्बन्धाविशेषेऽपि रूपाकारावृत्तिर्न गन्धाद्याकारेति कुतः इति वाच्यम् । कृतव्याख्यानमेतत् ।

समाधत्ते सिद्धान्ती—यथा तव चाक्षुषज्ञाने आश्रयसम्बन्धाविशेषेऽपि न गन्धो विषयः तथास्माकमपि, चक्षुर्द्वारकवृत्तौ न गन्धाद्याकारत्वम् , इन्द्रियविषयसम्बन्धानां स्वभावस्य नियामकस्य समानत्वात् । यथा पूर्वपक्षिमते घटादिचाक्षुषज्ञाने चक्षुःसंयुक्तसमवायः स च घटीयरूपे इव घटीयगन्धादावप्यस्ति, तथापि गन्धो न चाक्षुषज्ञानविषयः. तथा सिद्धान्तिमतेऽपि चक्षुर्द्वारकान्तःकरणवृत्तौ न गन्धाद्याकारत्वं कस्य इन्द्रियस्य को वा विषयो योग्यः कस्य वा अयोग्यः इत्यत्र इन्द्रियविषयस्वभाव एव आवयोः समानो नियामकः । एवमेव इन्द्रियविषयसम्बन्धस्यापि स्वाभावो नियामको बोध्यः ॥१७॥

१८—वृत्तिं विनापि दृग्दृश्ययोराध्यासिकसम्बन्धसत्त्वात् दृश्यत्वे वृत्तेरनुपकारकत्वात् दृश्यत्वाय वृत्तिर्नाङ्गीकरणीया इति पूर्वपक्षी शङ्कते—ननु आध्यासिकसम्बन्धो वृत्तेः पूर्वमप्यस्त्येव अन्यस्तूपरागो न दृश्यत्वे तन्त्रमिति किन्तदर्थया वृत्त्या इति चेत् । व्यावहारिको विषयः स्वगोचरवृत्तेः पूर्वमेव दृशि अध्यस्तः तेनैव च विषयस्य दृश्यत्वं सिद्धं वृत्तिकृतस्तु चिदुपरागो न दृश्यत्वे तन्त्रं न दृश्यत्वव्यापकः न दृश्यत्वसम्पादकः दृश्यत्वासम्पादकचिदुपरागाय वृत्तेः किं प्रयोजनमिति जीवचैतन्यं प्रति विषयस्फुरणाय वृत्तेरपेक्षा इति समाधत्ते—न जीवचैतन्यस्य अधिष्ठानचैतन्यस्य च अभेदाभिव्यक्त्यत्वर्थत्वात् वृत्तेः। अन्यथा मयेदं विदितमिति सम्बन्धावभासो न स्यात् । जीवचैतन्यस्य

ननु—जीवचैतन्यस्यासङ्गत्वे ब्रह्मचैतन्यं सुतरामसङ्गम्, तथा च मायोपाधिकविषयोपरागत्वात् स्वतः सार्वज्ञ्यं न स्यात्, न च—ब्रह्मसर्वोपादानत्वादुपाधिं विनैव स्वस्वरूपवत्स्वाभिन्नं जगदवभासयतीति—वाच्यम्; उपादानत्वं न तावद्विशिष्टनिष्ठं परिणामित्वम्; आध्यासिकसम्बन्धस्यातन्त्रतापत्तेः, अनाद्यविद्यादिकं प्रति तदभावाच्च, नापि शुद्धनिष्ठमधिष्ठानत्वम्; शुद्धस्य सर्वज्ञत्वसर्वशक्तित्वादेरभावादिति—चेत् ॥१८॥

---

परिच्छिन्नतया ब्रह्मचैतन्यतो भिन्नतया च विषयस्य ब्रह्मचैतन्ये अध्यस्तत्वेऽपि ब्रह्मचैतन्याध्यस्तो विषयः जीवचैतन्यं प्रति न स्फुरेत् जीवचैतन्यं प्रति विषयास्फुरणे मयेदं विदितमिति प्रमातृप्रमेयसम्बन्धावभासो न स्यात् असम्बद्धयोः प्रमातृप्रमेययोः अकस्मात् सम्बन्धावभासो न स्यात् वृत्त्यैव प्रमातृप्रमेयसम्बन्धे मयेदं विदितमिति प्रमेयं प्रति प्रमाता अप्रधानीभूततया प्रकाशते। अयमनुभवो भाट्टानां व्यवहारे भाट्टनय इति सिद्धान्तात्। भाट्टमते प्रमातृप्रमेयसम्बन्धावगमादेव सम्बन्धसम्पादिका ज्ञानक्रिया अनुमीयते। यथा द्रव्यदेवतासम्बन्धानुमितौ यजिः। तथा च वृत्तेरभेदाभिव्यक्त्यर्थत्वेन जीवचैतन्याधिष्ठानचैतन्ययोरभेदाभिव्यक्त्यर्थत्वात्। जीवचैतन्यं प्रति विषयस्फुरणं भवति अन्यथा न स्यात्। ब्रह्मचैतन्यस्यापि असङ्गत्वात् मायावृत्तिं विना ब्रह्मणः स्वतः सर्वज्ञत्वं न स्यादिति पूर्वपक्षी शंकते—ननु जीवचैतन्यस्यासङ्गत्वे ब्रह्मचैतन्यं सुतरामसङ्ग तथा च मानोपाधिकविषयोपरागत्वात् स्वतः सार्वज्ञ्यं न स्यात्। न च ब्रह्म सर्वोपादानत्वात् उपाधिं विनैव स्वस्वरूपवत् स्वाभिन्नं जगदवभासयतीति वाच्यम्। उपादानत्वं न तावत् विशिष्टनिष्ठं परिणामित्वमाध्यासिकसम्बन्धस्य अतन्त्रत्वापत्तेः। अनाद्यविद्यादिकं प्रति तदभावाच्च। नापि शुद्धनिष्ठमधिष्ठानत्वं शुद्धस्य सर्वज्ञत्वसर्वशक्तित्वादेरभावात् इति चेत्। जीवचैतन्यमसङ्गमिति वृत्त्यैव विषयैः सह सम्बद्धयते यदि तर्हि ब्रह्मचैतन्यस्य सुतरामसङ्गत्वेन स्वतो विषयैः सह सम्बन्धाभावात्, प्रमाणजन्यवृत्त्यैव विषयैः सम्बद्धयते प्रमाणैरेव सर्वं जानाति न स्वतः इत्यापत्त्या ब्रह्मणः स्वतः सार्वज्ञ्यं न स्यात्। किन्तु प्रमाणोपाधिकमेव स्यात्।

न, ब्रह्मणोऽसङ्गत्वेऽपि सर्वेषां तत्राध्यासेन मायोपाधिं विनैव तस्य सर्वप्रकाशकतया सार्वज्ञ्योपपत्तेः। न च—शुद्धनिष्ठमधिष्ठानत्वं नोपादानत्वम् सार्वज्ञ्याभावादित्युक्तमिति—वाच्यम्; अविद्याकल्पितानां सर्वज्ञत्वादीनां शुद्धे सत्त्वात्। अन्यथा तेषां तटस्थलक्षणत्वमपि न स्यात्।

---

ननु असङ्गस्यापि ब्रह्मणः साक्षाद् विषयैः सह सम्बन्धो घटते सर्वस्यापि विषयस्य ब्रह्मोपादानकत्वेन ब्रह्माभिन्नत्वात् मानोपाधिं विनैव स्वस्वरूपवद् स्वाभिन्नं जगदवभासयति इति स्वतः सर्वज्ञत्वमुपपद्यते इत्याशंक्य निरस्यति—अत्रोपादानत्वं नामपरिणामित्वं तच्च विशिष्टनिष्ठं ततश्च तत् सर्वज्ञमित्युच्यते, अथ वा उपादानत्वं नाम अधिष्ठानत्वं तच्च शुद्धनिष्ठं ततश्च सर्वज्ञ इत्युच्यते। नाद्य इत्याह उपादानत्वमिति। विशिष्टनिष्ठेन परिणामित्वरूपेण सर्वोपादानत्वेन विशिष्टब्रह्मणः सर्वज्ञत्वे तस्य कल्पितत्वेन अधिष्ठानत्वायोगेन तत्र जगदध्यासासम्भवात्। आध्यासिकसम्बन्धेन प्रकाशते इति सिद्धान्त्यभिमतनियमभङ्गप्रसङ्गः। आध्यासिकसम्बन्धभिन्नेन परिणामित्वरूपोपादानत्वाख्यसम्बन्धेनैव विशिष्टस्य जगत्प्रकाशाङ्गीकारात्। उपादानत्वेन जगत्प्रकाशे अविद्यां प्रति उपादानत्वाभावात् अविद्याप्रकाशो ब्रह्मणो न स्याद् इत्यर्थः। द्वितीयमाशंक्य निषेधति—नापीति। शुद्धनिष्ठेन जगदधिष्ठानत्वरूपेण ब्रह्मणो जगत्प्रकाशे शुद्धस्यैव सार्वज्ञ्यापत्तिः। न च सिद्धान्ते शुद्धस्य सर्वज्ञत्वसर्वशक्तित्वादिकमङ्गीक्रियते किन्तु विशिष्टस्यैव इति भावः ॥१८॥

१९—ब्रह्मणः स्वतः सार्वज्ञ्यमुपपादयन्नाह सिद्धान्ती—न, ब्रह्मणोऽसङ्गत्वेऽपि सर्वेषां तत्राध्यासेन मानोपाधिं विनैव तस्य सर्वप्रकाशकतया सार्वज्ञ्योपपत्तेः। न च शुद्धनिष्ठमधिष्ठानत्वं नोपादानत्वं सार्वज्ञ्याभावादिति उक्तमिति वाच्यम्, अविद्याकल्पितानां सर्वज्ञत्वादीनां शुद्धेऽसत्त्वात्। अन्यथा तेषां तटस्थलक्षणत्वमपि न स्यात्। असङ्गे ब्रह्मणि सर्वेषामध्यासेन प्रमाणवृत्तिं विनैव सर्वप्रकाशकतया सर्वज्ञत्वोपपत्तेः। शुद्धनिष्ठमधिष्ठानत्वं यदि उपादानत्वं स्यात्तर्हि शुद्धस्यैव सार्वज्ञ्यं स्यात्, किन्तु सिद्धान्ते शुद्धस्य सार्वज्ञ्यादिकं नास्तीति न वाच्यम्। सर्वज्ञत्वादिकमविद्याकल्पितं तच्च

ननु—आवरणाभिभवार्थत्वपक्षो न युक्तः विवर्ताधिष्ठानस्य चिन्मात्रस्याज्ञानादिसाक्षित्वेन सदा प्रकाशनात्। अन्यस्याज्ञानकल्पितस्यावरणस्याभावादिति—चेत्। न, अज्ञानादिसाक्षित्वेन स्वप्रकाशेऽप्यशनायाद्यतीतत्वादिना प्रकाशाभावादावरणस्यावश्यकत्वात्।

---

शुद्धे नास्त्येव, अत एव सर्वज्ञत्वादिकं शुद्धस्य ब्रह्मणः तटस्थलक्षणं न स्वरूपलक्षणम्। शुद्धे सर्वज्ञत्वादीनां सत्त्वे तत्स्वरूपलक्षणमेव स्यात् न तटस्थलक्षणमिति भावः। उक्तञ्च तत्त्वप्रदीपिकायाम्—

स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम्।
तच्चोभयं विनाविद्यासम्बन्धं नैव सिध्यति॥

[पृ० ६६]

स्वरूपप्रज्ञया चेत् सर्वज्ञत्वं ब्रह्मणोऽभ्युपगम्यते तदाऽसङ्गस्य ब्रह्मणो नाविद्यामन्तरेण अशेषार्थसङ्गतिरिति सर्वज्ञत्वोपपत्त्यर्थमेव सा अभ्युपगमनीया। प्रमाणतः सर्वज्ञत्वेऽपि प्रमातृत्वस्य प्रमाणप्रमेयसम्बन्धस्य च अविचारितरमणीयानाद्यविद्यासम्बन्धमन्तरेणासिद्धेः सर्वज्ञत्वमविद्यामाक्षिपति न तु प्रतिक्षिपतीति।

[पृ० ३६७]

वृत्तिश्चिदुपरागार्थेति पक्षे पूर्वपक्ष्युक्तदोषान् समाधाय आवरणाभिभवार्थत्व-[पक्षे] दोषान् समाधातुं पूर्वपक्षमुपन्यस्यति—ननु आवरणाभिभवार्थत्वपक्षो न युक्तः विवर्ताधिष्ठानस्य चिन्मात्रस्य अज्ञानादिसाक्षित्वेन सदा प्रकाशनात्। अन्यस्याज्ञानकल्पितस्यावरणस्याभावात् इति चेत्। आवरणं हि आव्रियमाणेन व्याप्तम्, तच्च आव्रियमाणं किञ्चिन्मात्रं, विशिष्टं वा? नाद्यः इत्याह—विवर्ताधिष्ठानस्येति। प्रकाशमाने च आवरणं न सम्भवति प्रकाशमानस्यैवाधिष्ठानत्वात् विवर्ताधिष्ठानस्य आवरणं न सम्भवतीत्यर्थः। न द्वितीयः इत्याह—अन्यस्य चेति। तथा च अज्ञानसिद्धौ तत्कल्पितविशिष्टसिद्धिः तत्सिद्धौ च तदावरकाज्ञानसिद्धिरित्यन्योन्याश्रयादित्यर्थः।

समाधत्ते—न अज्ञानादिसाक्षित्वेन स्वप्रकाशेऽपि अशनायाद्यतीतत्वादिना प्रकाशाभावादावरणस्यावश्यकत्वात्। अज्ञानं हि अज्ञानावृतचित्प्रकाशप्रकाश्यं यथा—भूच्छायावृतचन्द्रप्रकाशप्रकाश्या तथा च चिद्रूपेण प्रकाश-

ननु—अज्ञानस्य नयनपटलवत् पुंगतत्वे चैत्रस्याज्ञाननाशेऽपि मैत्रस्य तदनाशात् अप्रकाशो युक्तः, विषयगतत्वे तु चैत्रार्जितया वृत्त्या अज्ञाने दीपेन तमसीव नाशिते मैत्रस्यापि प्रकाशः स्यादिति—चेत् ।

न, चैत्रावरणशक्तेरेवाज्ञानगतायाश्चैत्रार्जितवृत्त्या नाशितत्वेन स पश्यति, न मैत्रः । तत्प्रतियोगिकावरणशक्तेरनाशात्, आवरणशक्तीनां द्रष्टृविषयभेदाभ्यां भिन्नत्वात् । तमस्तु, न तथेत्येकानीतप्रदीपेनाप्यन्यान्प्रति प्रकाशो युज्यते । एतेन—एकाज्ञानपक्षे शुक्तिज्ञानेन तदज्ञान-

---

मानेऽपि अशनायाद्यतीतत्वादिना अखण्डानन्दत्वादिना प्रकाशाभावात् तदर्थम् अज्ञानावरणमावश्यकमेव इति ।

विषयगताज्ञानस्य वृत्त्या नाशेऽविशेषेणसर्वान् प्रति प्रकाशमानत्वप्रसङ्ग इति पूर्वपक्षी शङ्कते—ननु अज्ञानस्य नयनपटलवत् पुंगतत्वे चैत्रस्याज्ञाननाशेऽपि मैत्रस्य तदनाशात् अप्रकाशो युक्तः । विषयगतत्वे तु चैत्रार्जितया वृत्त्या अज्ञाने दीपेन तमसीव नाशिते मैत्रस्यापि प्रकाशः स्यादिति चेत् । आवरणासम्भवमभिधाय आवरणाभिभवासम्भवमाह—ननु अज्ञानस्येति । नयनपटलं नयनगतकाचादि पुंगतत्वे प्रमातरि पुरुषे विद्यमानत्वे, मैत्रस्य अज्ञानानाशात् अप्रकाशः । अज्ञानस्य विषयगतत्वपक्षे तु सिद्धान्तिमतेऽज्ञानस्य विषयावरकतया विषयगतत्वाङ्गीकारात् इति भावः । दीपवद् गृहस्थितो घटो यथा निवृत्तावरणत्वात् सर्वैर्ज्ञायते तथा चैत्रगतया वृत्त्या निवृत्ताज्ञानावरणो घटादिसर्वान् प्रकाशेत इत्यर्थः । विषयगताज्ञाने या आवरणशक्तिः सा द्रष्टृभेदात् विषयभेदाच्च भिन्नैव इति न चैत्रीयवृत्त्या मैत्रं प्रति विषयप्रकाशप्रसङ्ग इति समाधत्ते—न चैत्रावरणशक्तेरेव अज्ञानगतायाश्चैत्रार्जितवृत्त्या नाशितत्वेन स पश्यति न मैत्रः । तत्प्रतियोगिकावरणशक्तेरनाशात् आवरणशक्तीनां द्रष्टृविषयभेदाभ्यां भिन्नत्वात् । तमस्तु न तथेति एकानीतप्रदीपेनाप्यन्यान् प्रति प्रकाशो योज्यते । अज्ञानतमसोरुभयोरावरकत्वेऽपि आवरणशक्तिवैचित्र्यात् प्रकाशाप्रकाशयोरुपपत्तिरित्याह—चैत्रार्जितवृत्त्या विषयगताज्ञाने चैत्रं प्रति आवरणशक्तेर्नाशात् चैत्रः पश्यति मैत्रं प्रति आवरणशक्तेरनाशात् मैत्रो न पश्यति अज्ञानगतावरणशक्तीनां द्रष्टृभेदेन

निवृत्तौ सद्य एव मोक्षापातः। अनिवृत्तौ रूप्यादेः सविलासाविद्यानिवृत्तिरूपबाधायोग इति निरस्तम्। आवरणशक्तिनाशेऽपि मूलाज्ञाननाशाभावेन सद्यो मोक्षाभावस्य रूप्यादौ सविलासशक्तिमदविद्यानिवृत्तिरूपबाधस्य चोपपत्तेः ॥१९॥

ननु—एकाज्ञानपक्षे रूप्यादेः शुक्तिज्ञानेन स्वकारणे प्रविलयमात्रं क्रियते, मुद्गरप्रहारेणेव घटस्य न त्वज्ञानं निवर्त्यत इति ते मतं न

---

भिन्नत्वात्। यथा अज्ञानगतावरणशक्तेर्द्रष्टृभेदेन भेदः नैवं तमस आवरणशक्तेर्द्रष्टृभेदेन भेदः, किन्तु तमसि सर्वद्रष्टृसाधारणी एका आवरणशक्तिः सा च प्रदीपेन नाशितेति सर्वान् प्रति प्रकाशोपपत्तिरिति भावः।

अज्ञानैकत्वानेकत्वविकल्पदूषणाभ्यामज्ञानस्य रूपं खण्डयितुं पूर्वपक्षिणा यदुक्तम् आत्माश्रयम् आत्मविषयञ्चाज्ञानमन्तरेण आत्मसु प्रतिविषयं भावरूपाज्ञानसद्भावे मानाभावादिति विवरणोक्तरीत्या अज्ञानमेकं किं वा अनन्तान्येव शुक्त्यज्ञानानि यदि अनन्तानि शुक्ति ज्ञानानीति इष्टसिद्धिरीत्या प्रतिविषयम् अनेकानि। नाद्यः, शुक्तिज्ञानेन अज्ञाननिवृत्तौ सद्य एव मोक्षापातात्। अनिवृत्तौ रूप्यादेः सविलासाविद्यानिवृत्तिरूपबाधायोगात् तदपि एतेन निरस्तमित्याह सिद्धान्ती—एतेन एकाज्ञानपक्षे शुक्त्यज्ञानेन तदज्ञाननिवृत्तौ सद्य एव मोक्षापातः। अनिवृत्तौ रूप्यादेः सविलासाविद्यानिवृत्तिरूपबाधायोग इति निरस्तम्। आवरणशक्तिनाशेऽपि मूलाज्ञाननाशाभावेन सद्यो मोक्षाभावस्य रूप्यादौ सविलासशक्तिमदविद्यानिवृत्तिरूपबाधस्य च उपपत्तेः। विवरणमते एकाज्ञानपक्षे पूर्वपक्ष्युत्प्रेक्षितं दोषद्वयं निरस्यति शुक्तिज्ञानेन मूलाज्ञानस्य शुक्त्यावरणशक्तिनाशेऽपि मूलाज्ञाननाशाभावात् न सद्यो मोक्षः। अनन्तावरणशक्तिविशिष्टं मूलाज्ञानमेकावरणशक्तेर्नाशेऽपि मूलाज्ञानमविनष्टमेव इति भावः। शक्तिशक्तिमतोरभेदेन शुक्तिज्ञानेन शुक्त्यावरणशक्तिमदज्ञानं नष्टमेवेति स्वकार्येण सह अज्ञानस्य नाशात् बाधस्यापि उपपत्तिः। शुक्त्यावरणशक्तिमति अज्ञाने नष्टेऽपि अनन्तावरणशक्तिमन्मूलाज्ञानमविनष्टमेव ॥१९॥

२०—एकाज्ञानपक्षे दोषान्तरमाह पूर्वपक्षी—ननु एकाज्ञानपक्षे रूप्यादेः शुक्तिज्ञानेन स्वकारणे प्रविलयमात्रं क्रियते मुद्गरप्रहारेणेव घटस्य न

युक्तम्—यतो ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिबलात् ज्ञानस्याज्ञाननिवृत्तिद्वारैवान्यविरोधित्वेनाज्ञानमनिवर्त्यरूप्यादिनिवर्तकत्वायोगात्। शुक्तिज्ञानेनाज्ञानानिवृत्तावभिव्यक्तचैतन्यसम्बन्धाभावेन भ्रान्ताविव बाधेऽपि शुक्तेरप्रकाशापत्तेश्चेति—चेत्।

न; यतो ज्ञानमज्ञाननिवर्तकमिति व्याप्तेरुच्छेदविषयत्वात् स्वकारणे सूक्ष्मरूपेणावस्थाने तदनङ्गीकारात्। शुक्तिज्ञानस्य चानवच्छिन्न-

---

तु अज्ञानं निवर्त्यते इति ते मतं न युक्तं यतो ज्ञानमज्ञानस्यैव निवर्तकमितिव्याप्तिबलात् ज्ञानस्य अज्ञाननिवृत्तिद्वारैव अन्यविरोधित्वेन अज्ञानमनिवर्त्यरूप्यादिनिवर्तकत्वायोगात्। शुक्तिज्ञानेन अज्ञानानिवृत्तौ अभिव्यक्तचैतन्यसम्बन्धाभावेन भ्रान्ताविव बाधेऽपि शुक्तेरप्रकाशापत्तेश्च इति चेत्? विवरणे उक्तम् अस्मिन् पक्षे शुक्तिकादिज्ञाने रजताद्यध्यासानां स्वकारणे प्रविलयमात्रं क्रियते मूशलप्रहारेणेव घटस्य अथ वा मूलाज्ञानस्यैवावस्थाभेदाः रजताद्युपादानानि शुक्तिकादिज्ञानैः सहाध्यासेन निवर्तन्ते इति कल्प्यताम् [पृ० १४–१५] इति विवरणग्रन्थव्याख्यायां भावप्रकाशिकायां नृसिंहाश्रमचरणैरुक्तम्—नन्वेवं शुक्तिकादिज्ञानात् अज्ञाननिवृत्त्यनुभवो निर्निमित्तं बाधितः स्यादित्यत्राह—अथ वेति। मूलाज्ञानस्यैव धर्मविशेषाः तत्कार्यावच्छिन्नचैतन्यनिष्ठा वा तथा विधानामपि मूलाज्ञानपरतन्त्रतया तदवस्थत्वोपपत्तेः। अवस्थाज्ञानाङ्गीकारपक्षे एव शुक्तिज्ञानेन अज्ञानं निवृत्तमित्यनुभवो न तु शुद्धचिन्मात्रावरकैकाज्ञानपक्षे। तदेवावश्यकम्। व्यवहारोपपादनाय मूलाज्ञानावस्थानामङ्गीकारः विवरणे एव वर्तते। तद्दृष्ट्वाऽपि केवलं परमतं यथा कथञ्चित् दूषणीयमिति दूषणैकदृष्ट्या पूर्वपक्षी शङ्कते प्रागुक्तं विवरणमतं न युक्तं यतो ज्ञानमज्ञानस्यैव निवर्तकमिति पञ्चपादिकाप्रदर्शितव्याप्त्या–[ पञ्चपादिका, पृ० १–२ ] शुक्तिकाज्ञानं शुक्त्यज्ञानमनिवर्त्यरूप्यादेर्निवर्तकं न भवितुमर्हति, शुक्तिज्ञानेन अज्ञाननिवृत्तौ बाधदशायामपि शुक्तेः प्रकाशो न स्यात्। अस्य पूर्वपक्षस्य विवरणाचार्यैरेव समाधानमभिहितं तद्दृष्ट्वा पूर्वः पक्षः कृत इति बोध्यम्। विवरणीयैकाज्ञानपक्षमेवानुसृत्य समाधत्ते—न यतो ज्ञानमज्ञाननिवर्तकमिति व्याप्तेरुच्छेदविषयत्वात् स्वकारणे सूक्ष्मरूपेणावस्थाने

चैतन्यावरण [रूप] मूलाज्ञानानिर्वर्तकत्वेऽपि अवच्छिन्नचैतन्यावरणरूप-तूलाज्ञाननिवर्तकत्वेनाभिव्यक्तचैतन्यसम्बन्धात् बाधदशायां रूप्यनिवृत्ति·शुक्तिप्रकाशयोरुप्युपपत्तेः ।

न च–उपादेयभूतया वृत्त्योपादानभूताविद्याभिभवो न घटते उपादेयेनोपादानाभिभवादर्शनादिति—वाच्यम् । वृश्चिकादिना गोमया-

---

तदनङ्गीकारात् । शुक्तिज्ञानस्य च अनवच्छिन्नचैतन्यावरणरूपमूला-ज्ञानानिवर्तकत्वेऽपि अवच्छिन्नचैतन्यावरणरूपतूलाज्ञाननिवर्तकत्वेन अभिव्यक्तचैतन्यसम्बन्धात् बाधदशायां रूप्यनुवृत्तिशुक्तिप्रकाशयो-रूपपत्तेः । ब्रह्मज्ञानेन मूलाज्ञाननिवृत्त्या प्रपञ्चोच्छेदे एव इयं पञ्चपादिकादर्शित-व्याप्तिराद्रियते । तेनैव सर्वभ्रान्तीनां समुच्छेदो जायते । भ्रान्तेरनुच्छेदे स्व-कारणे सूक्ष्मरूपेणावस्थाने नेयं व्याप्तिराद्रियते । शुक्तिज्ञानेन मूलाज्ञाननिवृत्त्य-सम्भवेऽपि तूलाज्ञाननिवर्तकत्वेन अभिव्यक्तचैतन्यसम्बन्धात् रूप्यादेर्निवृत्तिः शुक्तिप्रकाशस्य उपपत्तिर्भवतीति भावः । तूलाज्ञानसमर्थनमपि विवरणीयम् अथ वा पक्षमाश्रित्यैव आचार्येण कृतम् । मूलतूलशब्दौ ओषध्यवयववाचकौ तूलशब्दो-ऽग्रवाचकः इत्युक्तं तैत्तिरीयसंहितायाम् [७।३।१९] तदनुसृत्यैव वेदान्तिभिः मूलाज्ञानं तूलाज्ञानञ्चोक्तमिति बोध्यम् । इदमिहावधातव्यम्—शुक्तिसाक्षात्कारा-दपि रजतस्य बाधेऽपि नोच्छेदः उच्छेदस्तु दृश्यमात्रस्य ब्रह्मसाक्षात्कारादेव बाधेऽपि तूलाज्ञानस्य मूलाज्ञाने सूक्ष्मरूपेणावस्थानात् नोच्छेदः । केवलं व्यावहारिकानु-भयोपपादनाय विवरणे अथ वा पक्षस्य निरूपणं कृतमित्यर्थः । उपादेयेन उपादा-नाभिभवो न दृष्ट इति कथम् उपादेयवृत्त्या उपादानस्य अज्ञानस्य अभिभवः सिद्धान्तिना स्वीक्रियते इति शङ्कते—न च उपादेयभूतया वृत्त्या उपा-दानभूताविद्याभिभवो न घटते उपादेयेन उपादानाभिभवा दर्शनात् इति वाच्यम् । अस्याः शङ्कायाः विवरणाचार्येणैव प्रदर्शितत्वात् तेनैव समाहितत्वात् केवलं ग्रन्थगौरवापादनमेव पूर्वपक्षिणा कृतम् । तथा हि—कार्यभूतेन अन्तःकरणेन सोपादानाज्ञानाभिभवायोगादिति प्रदर्शितार्थाः शङ्काया समाधानमपि तेनैव कृतं तथा हि—दृष्टं च वृश्चिकवृक्षादिकार्यस्य गोमयमृदादिकारणस्वभावनिरोधाय-कत्वमिति [ पृ० ७२–७३ ] अद्वैतसिद्धिकारेणापि विवरणवाक्यमेव उद्धृत्य

देरुपादानस्याप्यभिभवदर्शनात्। आरम्भवादानभ्युपगमाच्च। न गोमयावयवानामुपादानत्वशङ्का ॥२०॥

ननु—चक्षुरादिजन्यशुक्त्यादिवृत्तेः सप्रकारिकायाः निष्प्रकारकशुद्धचैतन्याविषयतया तदावरणरूपमूलाज्ञानाभिभवाभावेऽप्यवच्छिन्नविषयया तया अवच्छिन्नचैतन्यावरणरूपतूलाज्ञानाभिभवो युज्यत इति ते मतमयुक्तम् अवच्छिन्ने अविद्याकल्पिते अप्रसक्तप्रकाशे मूलाविद्याया इव तदावरणशक्तेरयोगात्, त्वयानभ्युपगतत्वाच्च। जडविशिष्टात्मानं प्रति तदभ्युपगमे च विशेषणानावारकविशिष्टावारकशक्त्यभिभवस्य विशेष्यावरकशक्त्यभिभवं विनाऽयोगेन शुक्त्याकारवृत्त्यैव शुद्धात्मप्रकाशापातादिति—चेत। न अनवबोधात्। न ह्यविद्याकल्पितेऽवच्छिन्ने

---

शङ्कायाः समाधानं कृतम्। वृश्चिकादिना गोमयादेरुपादानस्याप्यभिभवदर्शनात्। आरम्भवादानभ्युपगमाच्च। उपादानं गोमयादिकं वृश्चिकशरीररूपेण परिणमते न तु गोमयावयवेभ्यः वृश्चिकशरीरमारभ्यते। न्यायामृते आरम्भवादमभ्युपगम्य विवरणीयदृष्टान्तविघटनं कृतम्, उक्तञ्च प्रच्युतगोमयत्वाद्यवस्था एव पार्थिवावयवा वृश्चिकाद्युपादानानीति न वृश्चिकादिना उपादानस्वभावाभिभवः। अत उक्तम् आरम्भवादानभ्युपगमात् परिणामवादाभ्युपगमेनैव विवरणीयदृष्टान्तः समर्थनीयः। आरम्भवादानभ्युपगमात् मिथः संयुक्तकपालद्वयादिकं घटादिरूपेण परिणमते इत्येव स्वीक्रियते इति भावः ॥२०॥

२१—आरम्भवादाभ्युपगमे विवरणीयदृष्टान्तोऽनुरूपो न स्यादिति सिद्धान्तिमतमनूद्य शुक्त्याकारवृत्त्यैव शुद्धात्मप्रकाशापत्तिरिति पूर्वपक्षी शङ्कते—ननु चक्षुरादिजन्यशुक्त्यादिवृत्तेः सप्रकारिकाया निष्प्रकारकशुद्धचैतन्याविषयतया तदावरणरूपमूलाज्ञानानभिभवाभावेऽपि अवच्छिन्नविषयया तया अवच्छिन्नचैतन्यावरणरूपतूलाज्ञानाभिभवो युज्यते इति ते मतम् अयुक्तम्। अवच्छिन्नेऽविद्याकल्पितेऽप्रसक्तप्रकाशे मूलाविद्याया इव तदावरणशक्तेरयोगात् त्वया अनभ्युपगमाच्च। जडविशिष्टात्मानं प्रति तदभ्युपगमे च विशेषणानावरकविशिष्टावरकशक्त्यभिभवस्य विशेष्यावरकशक्त्यभिभवं विना अयोगेन शुक्त्याकारवृत्त्यैव शुद्धात्म-

अस्माभिरविद्या वा तच्छक्तिर्वाऽभ्युपेयते किन्तु चैतन्यमात्र एव। तस्मिंस्तु सर्वं जडमध्यस्तमस्तीत्येकाश्रयाश्रिततत्वसम्बन्धात् जडावच्छिन्नचैतन्यमावृतमिति व्यपदेशः। घटाद्याकारवृत्त्या तु तदधिष्ठानचैतन्याभिव्यक्तौ तदवच्छेदेनैव तन्निष्ठावरणाभिभवो जायत इति न शुद्धात्मप्रकाशापत्तिः। तदुक्तं संक्षेपशारीरके—

---

प्रकाशापातादिति चेत्। चक्षुरादिजन्यशुक्तिवृत्तेः रूपादिहीनशब्दैकगम्यशुद्धात्माविषयतया . तदावरणमूलाज्ञानाभिभवाभावेऽपि शुक्त्यवच्छिन्नचैतन्यविषयया शुक्तिवृत्त्या शुक्त्यवच्छिन्नचैतन्यावरणतूलाज्ञानाभिभवो युज्यते इति सिद्धान्तिमतम् न युक्तम्; कुत इति चेत्? शुक्त्यवच्छिन्नचैतन्यमविद्याकल्पितम् अत एव अप्रसक्तप्रकाशं तत्र मूलाविद्याया इव तूलाविद्याया अपि आवरणशक्तेरयोगात् प्रसक्तप्रकाशे हि आवरणमर्थवत्। सिद्धान्तिनापि अप्रसक्तप्रकाशे अज्ञानावरणं न स्वीक्रियते। शुक्तिरूपजडविशिष्टचैतन्यं प्रति तूलाज्ञानावरणभ्युपगमे जडं शुक्तिरूपविशेषणं तूलाज्ञानं नावृणोत्येव। अथ च शुक्तिविशिष्टं चैतन्यं तूलाज्ञानमावृणोति। विशिष्टावरकतूलाज्ञानस्य आवरणशक्त्यभिभवस्तदैव भवितुमर्हति यदि तूलाज्ञानस्य विशेष्यावरकशक्तेरभिभवः स्यात्। विशेष्यावरकशक्तेरनभिभवे विशिष्टावरकतूलाज्ञानस्य आवरणशक्त्यभिभवो न स्यात्। अतः विशिष्टावरकशक्त्यभिभवाय विशेष्यावरकशक्तेरभिभवोऽवश्यं वाच्यः। तथा च शुक्त्याकारवृत्त्यैव विशेष्यस्य शुद्धचैतन्यस्य आवरणाभिभवात् प्रकाशापातः। तथा च तत एव मोक्षः स्यादिति।

अद्वैतसिद्धान्तानवबोधविजृम्भितोऽयं पूर्वपक्ष इति सिद्धान्तरहस्यं प्रकाशयन् परिहरति—न अनवबोधात् न हि अविद्याकल्पिते अवछिन्नेऽस्माभिः अविद्या वा तच्छक्तिर्वा अभ्युपेयते। किन्तु चैतन्यमात्रे एव। तस्मिंस्तु सर्वं जडमध्यस्तमस्ति इत्येकाश्रयाश्रिततत्वसम्बन्धात् जडावच्छिन्नचैतन्यमावृतमिति व्यपदेशः। घटाद्याकारवृत्त्या तु तदधिष्ठानचैतन्याभिव्यक्तौ तदवच्छेदेनैव तन्निष्ठावरणभिभवो जायत इति न शुद्धात्मप्रकाशापत्तिः तदुक्तं संक्षेपशारीरके—

'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥'
'बहु निगद्य किमत्र वदाम्यहं शृणुत संग्रहमद्वयशासने ।
सकलवाङ्मनसातिगना चितिः सकलवाङ्मनसव्यवहारभाक् ॥'

इति च । तस्मादविद्यायां सत्यामपि शक्त्यभिभवाद्वा, तूलाज्ञाननाशाद्वा, अवस्थाविशेषप्रच्यवाद्वा, एकदेशनाशाद्वा, भीरुभटवदपसरणाद्वा, कटवत्संवेष्टनाद्वा, आवरणभङ्गानिर्मोक्षबाधानामुपपत्तिः ॥२१॥

---

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥
बहु निगद्य किमत्र वदाम्यहं शृणुत संग्रहमद्वयशासने ।
सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसः व्यवहारभाक् ॥

इति च तस्मात् अविद्यायां सत्यामपि शक्त्यभिभवाद् वा ? तूलाज्ञाननाशाद् वा ? अवस्थाविशेषप्रच्यवाद् वा ? एकदेशनाशाद् वा ? भीरुभटवदपसरणाद् वा ? कटवत् संवेष्टनाद् वा ? आवरणभङ्गानिर्मोक्षबाधानामुपपत्तिः । अत्र अद्वैतसिद्धान्तरहस्यमुद्घाट्यते । न पूर्वपक्ष्युक्तं युक्तं सिद्धान्तानवबोधात् । न हि अविद्याकल्पिते जडे सादिवस्तुनि वा परिच्छिन्नेऽविद्या कल्प्यते, तादृशे वस्तुनि अविद्याया आश्रयत्वविषयत्वयोरभावात् । यथा अविद्या न कल्प्यते तथैव अविद्याया आवरणशक्तिरपि न कल्प्यते । तर्हि कुत्राविद्या इति चेत् ? शुद्धचैतन्ये एव तस्मिन् शुद्धे चैतन्ये सर्वं जडमध्यस्तम्, अतो यस्मिन् चैतन्ये अविद्या तस्मिन्नेव चैतन्ये सर्वं जडमध्यस्तम् । अतः चैतन्यान्तर्भावेऽविद्याजडयोः सामानाधिकरण्यं वर्तते स एव एकाश्रयाश्रितत्वसम्बन्धः । एकस्मिन् आश्रये शुद्धचैतन्येऽविद्याजडयोराश्रितत्वात् जडावच्छिन्नं चैतन्यमावृतमिति लोकानां व्यपदेशः । वस्तुगत्या न जडावच्छिन्ने चैतन्येऽविद्या किन्तु शुद्धचैतन्ये एव । घटाद्याकारया प्रमाणजन्यान्तःकरणवृत्त्या घटाद्यधिष्ठानचैतन्याभिव्यक्तौ घटाद्यवच्छेदेनैव तदधिष्ठानचैतन्यनिष्ठावरणाभिभवो जायते इति न घटाद्याकारवृत्त्या शुद्धचैतन्यप्रकाशापत्तिः । एतत् सर्वमुक्तं संक्षेपशारीरके—निर्विभागचितिरेव विशुद्धचैतन्यमेव अविद्याया आश्रयत्वविषयत्वभागिनी । अवि-

द्याया आश्रयत्वं विषयत्वञ्च शुद्धचैतन्ये एव। कुत एवमित्यत आह—पूर्वसिद्धेति। अनाद्यविद्या साश्रया सविषयैव निरूप्यते। निराश्रयनिर्विषयाविद्यायाः साधकाभावादसिद्धत्वात्। तथा च अनादेरविद्याया य आश्रयः यो वा विषयः स सर्वोऽनादिरेव सादिवस्तुनः तदसम्भवात्। न च अनादिघटत्वादिजातेस्तत्तत्सादिघटाद्याश्रयो दृष्ट इति वाच्यम्, तद्घटाद्याश्रितत्वेनैव न घटत्वादेः सिद्धिः किन्तु अनादिसिद्धस्य घटत्वादेरभिव्यञ्जका एव घटादयः घटादिषु उत्पन्नेषु तत्र अनादिसिद्धघटत्वादि अभिव्यज्यते। नेयं विधा सम्भवति अनाद्यविद्यायामाश्रयविषयौ अन्तरेण अविद्यैव न सिद्ध्यति—तत्तद्घटादिनाशे प्रलये च सर्वव्यक्तिनाशेऽनभिव्यक्त्वा घटत्वादिजातयः सन्त्येव। नैवमविद्या आश्रयविषयौ अन्तरेणैव कदाचित् सिद्ध्यति। अतोऽविद्याया अनुरूपं दृष्टान्तमाह—पूर्वसिद्धेति। तमः खलु किञ्चिदावृण्वत् तत्रैव स्थितं भासते। अनावृण्वत् तम एव सर्वथा अप्रसिद्धं तथा निराश्रयमपि। न च तमस उत्पत्तेरनन्तरं यदुत्पन्नं तत्तमस आश्रयो भवितुमर्हति नापि विषयः भवितुमर्हति आश्रयविषययोरुत्पत्तेः प्राक् कीदृगासीत् तमः। निराश्रयं निर्विषयञ्च सर्वथाऽसिद्धमेव तमः। अतस्तमसः प्राक्सिद्धमेव तमसो विषय आश्रयश्च। कदापि न पश्चिमसिद्धं तमस आश्रयः विषयो वा, एवमेव अविद्याया अनादिरूपाया अनाद्येव किञ्चित् आश्रयो विषयश्च। तच्च अनादिचैतन्यमेव अन्यस्यासम्भवात्। तमसो य एव आश्रयः स एव विषयः। नैवं सम्भवति अन्यत्र स्थितं तमः अन्यत्र स्थितं वस्तु आवृणोति यदावृणोति तदेव तमसो विषय एवमेवाविद्या यदाश्रिता तदेवावृणोति अविद्या यदावृणोति तदेव अविद्याया विषयः। अतः शुद्धचैतन्याश्रिता अविद्या शुद्धचैतन्यमेव आवृणोति तदेवाविद्याया विषय इति भावः। अन्यच्च संक्षेपशारीरके उक्तम्—बहुनिगद्येति। बहुकथनं व्यर्थम्। अयमेव अद्वैतसिद्धान्ते सारसंग्रहः अनुपहितं शुद्धचैतन्यं सकलवाक्यमनुविषयातीतं तदेव उपहितं सत् सर्ववाक्यप्रतिपाद्यं सर्वैर्मनोभिश्चिन्त्यम्। अनुपहितं सत् यदवाच्यमचिन्त्यञ्च उपहितं सत् तदेव वाच्यं चिन्त्यञ्च इति। तस्मात् मूलाविद्यायां सत्यामेव मूलाविद्यायास्तत्तदावरणशक्त्यभिभवात् आवरणभङ्गः अनिर्मोक्षश्च आवरणशक्तेर्नाशे विक्षेपबाधश्च उपपन्नः। एकाज्ञानपक्षे इदं समाधानं मन्तव्यम्। नानाज्ञानपक्षे आह—तूलाज्ञाननाशात् वा।

ननु अवस्थाविशेषाणामज्ञानाभिन्नत्वे एकाज्ञानपक्षक्षतिः अज्ञान-भिन्नत्वे च साक्षात् ज्ञानेन निवृत्तिः भ्रमाद्युपादानत्वं च न स्यात् तेषामिव रूप्यस्यैवोपादाननाशं विना नाशप्रसङ्गश्च, शुक्त्यज्ञानं नष्ट-मित्यनुभवविरोधश्चेति—चेत् ॥२२॥

---

आवरणभङ्गादिः तूलाज्ञानैमावरणविक्षेपशक्तियुक्तं ब्रह्मज्ञानान्यज्ञाननाश्यं मूलाज्ञान-तादात्म्यानापन्नं मूलाज्ञाननाशनाश्यञ्च। अवस्थाविशेषाज्ञानन्तु तूलाज्ञानवदेव मूलाज्ञानतादात्म्यापन्नमेतदेव तूलाज्ञानात् अवस्थाज्ञानस्य वैलक्षण्यम्। अवस्था-विशेषप्रच्यवात्—अवस्थाज्ञाननाशादित्यर्थः। एकदेशनाशादिति। निरवयवस्य अज्ञानस्य एकदेश एव नास्ति कथमेकदेशनाशः। तस्यायमभिप्रायः वृत्तौ सत्यामज्ञानं स्वकार्याक्षमम् आवरणासमर्थमित्यर्थः। भीरुभटवदिति। प्रतिभटागमनक्षणे एव भीरुभटापसरणं तथा वृत्त्युत्पत्तिक्षणे एव आवरणाभिभवः। वृत्तेर्नाशे पुनरावरणं भीरुभटवदेव तस्य यथा पुनरागमनम्। कटवत् संवेष्टनाद् वा इति। यथा हस्तक्रियया कटस्य संवेष्टनं तथा वृत्तिकालेऽज्ञानस्य आवरणाभिभवः। एकाज्ञान-पक्षे नानाज्ञानपक्षे च शुक्त्यादिज्ञानेन आवरणभङ्गः उपपादितः शुद्धचैतन्याप्रकाशात् अनिर्मोक्षश्चोपपन्नः। उपादानेन सह अध्यस्तनिवृत्त्या बाधोऽप्युपपन्नः ॥२१॥

२२—अवस्थाज्ञानानामज्ञानविशेषत्वे एकाज्ञानपक्षक्षतिः तेषामज्ञानभिन्नत्वे ज्ञानेन साक्षात् निवर्त्यत्वानुपपत्तिरिति शङ्कते—**ननु अवस्थाविशेषाणाम् अज्ञानविशेषत्वे एकाज्ञानपक्षक्षतिः अज्ञानभिन्नत्वे च साक्षाद् ज्ञानेन निवृत्तिः भ्रमाद्युपादानत्वञ्च न स्यात्। तेषामिव रुप्यस्यैव उपादान-नाशं विना नाशप्रसङ्गश्च शुक्त्यज्ञानं नष्टमित्यनुभवविरोधश्च इति चेत्।** मूलाज्ञानस्यैवावस्थाविशेषाणामज्ञानविशेषत्वे विवरणोक्तैकाज्ञानपक्षक्षतिः। तेषामज्ञानभिन्नत्वे च ज्ञानेन साक्षात् निवृत्तिर्न स्यात् ज्ञानमज्ञानस्यैव निवर्तकमिति पञ्चपादिकावचनात्। न स्याच्च अवस्थाविशेषाणां भ्रमोपादानत्वम् आदिपदात् सङ्गोपादानत्वञ्च न स्यात्। अज्ञानस्यैव भ्रमोपादानत्वाङ्गीकारादित्यर्थः। अध्यासभाष्ये मिथ्याज्ञाननिमित्तोऽध्यास इति प्रतिपादनात्। तेषामिवेति। यथा अज्ञानावस्थाविशेषाः स्वोपादानभूतमूलाज्ञानानिवृत्तावपि निवर्तन्ते इत्युच्यते एव-मेव अज्ञानावस्थाविशेषोपादानक रजताद्यपि स्वोपादानभूतावस्थाविशेषानाशेऽपि

न। यतोऽवस्था तावदवस्थावतोऽभिन्नैव। अज्ञानैक्यं तु सर्वावस्थानुस्यूतैकाकारमादाय। एवं 'चाज्ञानावस्थाया अज्ञानत्वेन न ज्ञानसाक्षान्निवर्त्यत्वाद्यनुपपत्तिः। यत्त्ववस्थाविशेषाणामिव रूप्यस्यैवोपादाननिवृत्तिं विना निवृत्त्यापादनं, तदयुक्तम्; अज्ञान एव ज्ञानस्य साक्षाद्विरोधावधारणेनाज्ञानावस्थायास्तदभिन्नायाः ज्ञानासाक्षान्निवर्त्यत्वार्हत्वात्। न तु रूप्यादीनाम् अनीदृक्त्वात्। अनेकाज्ञानपक्षे तु शङ्कापि नोदेति ॥२३॥

---

नश्यतु तथा च शुक्तिज्ञानेन साध्यासमज्ञानं निवर्तते इत्युक्तम् असङ्गतमेव स्यात् इति ॥२२॥

२३—अवस्थाविशेषाणामज्ञानभिन्नत्वे शुक्तिज्ञानेन शुक्त्यज्ञानं नष्टमित्यनुभवोऽपि न स्यात्। अवस्थाविशेषा मूलाज्ञानादभिन्ना एव इति न पूर्वोक्ताः दोषाः सम्भवन्तीत्याह—**न, यतो अवस्था तावदवस्थावतोऽभिन्नैव। अज्ञानैक्यं तु सर्वावस्थानुस्यूतैकाकारमादाय। एवञ्च अज्ञानावस्थाया अज्ञानत्वेन न ज्ञानसाक्षान्निवर्त्यत्वाद्यनुपपत्तिः। यत्तु अवस्थाविशेषाणामिव रूप्यस्यैव उपादाननिवृत्तिं विना निवृत्त्यापादनं तदयुक्तम्, अज्ञाने एव ज्ञानस्य साक्षाद् विरोधावधारणेन अज्ञानावस्थायास्तदभिन्नाया ज्ञानसाक्षान्निवर्त्यत्वादर्हत्वात्। न तु रूप्यादीनाम् अनीदृक्त्वात्। अनेकाज्ञानपक्षे तु शङ्कापि नोदेति।** तूलाज्ञानावस्थाज्ञानयोरयं भेदः नानाज्ञानपक्षे तूलाज्ञानाभ्युपगमः एकाज्ञानपक्षे अज्ञानावस्थाविशेषाभ्युपगमो बोध्यः। उक्तञ्चाचार्येण **अज्ञानावस्थायास्तदभिन्नाया** इति। तेन तूलाज्ञानं मूलाज्ञानात् भिन्नं सिद्धयतीति। अज्ञानमात्रमनादीति न प्र[वि]स्मर्तव्यम्। यथा अवस्थानाशेऽपि अवस्थावतो न नाश एवमवस्थाज्ञाननाशेऽपि अवस्थावतो मूलाज्ञानस्य न नाश इति बोधयितुमवस्थाशब्देन अज्ञानविशेषस्य निर्देशः कृतः। अज्ञानावस्था तु अवस्थानुगतमूलाज्ञानवदनादिः किन्तु मूलाज्ञानोच्छेदं विनाऽप्युच्छिद्यते। अत एवावस्थाज्ञानाभ्युपगमः। मूलाज्ञानावस्थाज्ञानयोरङ्गीकारे कथमज्ञानैक्यमित्यत आह—**सर्वावस्थानुस्यूतमेकमाकारमादाय** इति। सर्वेषु अवस्थाज्ञानेषु आवरणस्वभावमेकमज्ञानस्वरूपमनुविद्धं भासते। न जानामीत्येवं भासते। अतः सर्वा-

ननु—अस्मिन् पक्षे एकया वृत्त्या सर्वतदज्ञानस्य निवृत्तिः उत एकतदज्ञानस्य, आद्ये पुनः शुक्तेः कदाप्यप्रकाशो न स्यात्, अन्त्ये वृत्तिकालेऽपि प्रकाशो न स्यात्, एकस्यावरणस्य निवृत्तावप्यावरणान्तरानिवृत्तेरिति चेत् ॥२४॥

न एकया वृत्त्यां एकाज्ञाननाशेऽपि तथैवावरणान्तराणां प्रतिरु-

---

वस्थाज्ञानेषु अनुविद्धतया सामान्यात्मना एकमज्ञानस्वरूपं भासते इति कृत्वा एकमज्ञानमित्युच्यते । विशेषरूपमवस्थासामान्यरूपमवस्थावत् इति सांख्यसिद्धान्तानुसारेण बोध्यम् । अतः सामान्यविशेषयोस्तादात्म्यमुक्तम् । एवञ्च अज्ञानावस्थाया अज्ञानाभिन्नत्वेन भेदपक्षे उत्प्रेक्षिता दोषा न स्युरिति । उपादाननिवृत्तिद्वारा उपादेयनिवृत्तौ न साक्षाद्विरोधः । ज्ञानस्य अज्ञानेन साक्षाद्विरोधात् न उपादाननिवृत्तिमपेक्ष्य अज्ञानस्य निवृत्तिः ब्रह्मज्ञानेन मूलाज्ञानस्य अनिवृत्तिप्रसंगात् । ज्ञानाज्ञानयोः साक्षात् विरोधोऽनुभवसिद्ध एव । अज्ञानावस्थाया अप्यज्ञानत्वेन ज्ञानेन साक्षान्निवर्तनीयत्वात् । अज्ञानोपादानकं रूप्यादिकं तु न अज्ञानरूपमतो न ज्ञानेन साक्षान्निवर्त्यं किन्तूपादानाज्ञाननिवृत्तिद्वारैव । एवमेकाज्ञानपक्षे दोषाः निरस्ताः नानाज्ञानपक्षे दोषशंकैव नोदेति । नानाज्ञानपक्षोऽपि विवरणाचार्यैरेव प्रदर्शितः । अस्माभिरपि विवरणग्रन्थमुद्धृत्य प्रागेव प्रदर्शितः ॥२३॥

२४—नानाज्ञानपक्षं दोषयितुं पूर्वपक्षी शङ्कते—ननु अस्मिन्नपि पक्षे एकया वृत्त्या सर्वतदज्ञानस्य निवृत्तिः उत एकतदज्ञानस्य ? आद्ये, पुनः शुक्तेः कदाप्यप्रकाशो न स्यात् । अन्ते, वृत्तिकालेऽपि प्रकाशो न स्यात् एकस्य आवरणस्य निवृत्तावपि आवरणान्तरानिवृत्तेरिति चेत् । एकस्मिन् विषये नाना अज्ञानानीति पक्षेऽपि एकया घटाकारवृत्त्या घटावरकाणि सर्वाणि अज्ञानानि निवृत्तानि ? अथ वा एकया वृत्त्या घटावरकस्य एकस्यैवाज्ञानस्य निवृत्तिरिति पक्षद्वये प्रथमे पक्षे एकया वृत्त्या सर्वतदज्ञाननिवृत्तौ कदापि घटस्य अप्रकाशो न स्यात् घटावरकाज्ञानानामेकया वृत्त्यैव निवृत्तत्वात् । अन्ते पक्षे घटाकारवृत्तिकालेऽपि घटस्य प्रकाशो न स्यात् , एकया वृत्त्या एकस्य आवरकाज्ञानस्य निवृत्तावपि घटावरकाणामज्ञानान्तराणां सत्त्वादिति ॥२४॥

२५—सिद्धान्ती समाधत्ते—न एकया वृत्त्या एकाज्ञाननाशेऽपि तथैव

द्धत्वात् यावत् सा तिष्ठति तावत्प्रकाशः तस्यामपगतायां पुनरप्रकाश-श्चोपपद्यते अज्ञानस्य ज्ञानप्रागभावस्थानीयत्वात्। यथा तव एकं ज्ञानमेकमेव प्रागभावं नाशयति, तन्नाशरूपेणोदयात् प्रागभावान्तर-निबन्धनमज्ञातत्वादिव्यवहारं च प्रतिबध्नाति तथा ममाप्येकं ज्ञान-मेकमेवाज्ञानं निवर्तयति अज्ञानान्तरनिबन्धनं च प्रयोजनं प्रतिबध्ना-तीति किमनुपपन्नम्? अत्र च प्रतिबन्धपदेन कार्यानुत्पत्तिप्रयोजकत्वं कारणाभावप्रतिबन्धकसाधारणमभिहितम्। एवमवस्थाविशेषपक्षेऽपि प्रकाशाप्रकाशावुपपादनीयौ। एवममूर्तस्याज्ञानस्य यद्यपि दण्डादिना गवादीनामिवापसारणं करादिना कटादीनामिव संवेष्टनं च न संभवति तथापि कार्याक्षमत्वसाम्येनापसारणसंवेष्टनपक्षौ योजनीयौ। यथा हि उत्तेजकाभावसहकृतस्य मणेः प्रतिबन्धकतायामुत्तेजकसत्त्वे प्रतिबन्धक-कार्याक्षमत्वम् तथा वृत्त्यभावसहकृतस्याज्ञानस्य प्रतिबन्धकतायां वृत्तौ सत्यां तत्कार्यानुदय इति द्रष्टव्यम्।

---

आवरणान्तराणां प्रतिरुद्धत्वात् यावत् सा तिष्ठति तावत् प्रकाशः तस्यामपगतायां पुनरप्रकाशश्च उपपद्यते। अज्ञानस्य ज्ञानप्रागभाव-स्थानीयत्वात्। यथा तव एकं ज्ञानमेकमेव प्रागभावं नाशयति तन्नाशरूपेनोदयात् प्रागभावान्तरनिबन्धनमज्ञातत्वादिव्यवहारश्च प्रतिबध्नाति तथा ममाप्येकं ज्ञानमेकमेवाज्ञानं निवर्तयति आज्ञानान्तर-निबन्धनं च प्रयोजनं प्रतिबध्नातीति किमनुपपन्नम्। अत्र च प्रति-बन्धपदेन कार्यानुत्पत्तिप्रयोजकत्वं कारणाभावप्रतिबन्धकसाधारण-मभिहितम्। एवमवस्थाविशेषपक्षेऽपि प्रकाशाप्रकाशौ उपपादनीयौ। एवममूर्तस्य अज्ञानस्य यद्यपि दण्डादिना गवादीनामिव अपसारणं करादिना कटादीनामिव संवेष्टनं च न सम्भवति तथापि कार्याक्षमत्व-साम्येन अपसारणसंवेष्टनपक्षौ योजनीयौ। यथा हि उत्तेजकाभाव-सहकृतस्य मणेः प्रतिबन्धकतायामुत्तेजकसत्त्वे प्रतिबन्धककार्याक्षमत्वं तथा वृत्त्यभावसहकृतस्य अज्ञानस्य प्रतिबन्धकतायां वृत्तौ सत्यां तत्कार्यानुदय इति द्रष्टव्यम्। यदुक्तं वृत्तिकालेऽपि प्रकाशो न स्यात्

आवरणान्तराणां सत्त्वादिति तन्न, एकया घटाद्याकारवृत्त्या एकस्य तूलाज्ञानस्य नाशेऽपि तयैव घटाद्याकारवृत्त्या आवरणान्तराणां प्रतिरुद्धत्वात् आवरणकार्याक्षमत्वसम्पादनात् यावत् सा वृत्तिस्तिष्ठति तावद्घटादेः प्रकाश उपपद्यते। तस्यां घटाद्याकारवृत्तौ अपगतायां निवृत्तायामित्यर्थः पुनः आवरणान्तरेण घटादेरप्रकाशश्च उपपद्यते। तस्माद् पूर्वपक्षिशङ्का सर्वथा निरस्तेति भावः। सुहृद्भावेन सिद्धान्तरहस्यं ग्राहयन्नाह—अज्ञानस्य ज्ञानप्रागभावस्थानीयत्वात् यद्यपि प्रागभावो नाम न सिद्धान्ते अस्ति अज्ञाने प्रत्यक्षप्रमाणोपपादनप्रकरणे आचार्यैरेव प्रागभावस्य खण्डितत्वात्, तथापि पूर्वपक्षिमतमनुसृत्य उक्तं वेदितव्यम्। ज्ञानप्रागभाव एव अज्ञानमिति पूर्वपक्षिसम्मतम्। अत एव अज्ञानसाधकानुमाने विवरणे स्वप्रागभावव्यतिरिक्तेति साध्यविशेषणमुपात्तम्। तथा च पूर्वपक्षिमते अज्ञानं ज्ञानप्रागभावस्थानीयं भवत्येव। यथा एकं ज्ञानमेकमेव ज्ञानप्रागभावं नाशयति प्रतियोगिनः प्रागभावनाशकत्वमते इति बोध्यम्। प्रतियोगिनः प्रागभावनाशरूपत्वेऽप्याह—ज्ञानप्रागभावनाशरूपेण ज्ञानस्य उदयात्। एकस्य ज्ञानप्रागभावस्य एकेन ज्ञानेन नाशेऽपि ज्ञानप्रागभावान्तराणां विद्यमानत्वेन तन्निबन्धनमज्ञातत्वादिव्यवहारमेकमेव ज्ञानं प्रतिबध्नाति इति यथा पूर्वपक्षिणा कल्प्यते तथा सिद्धान्तेऽपि एकं ज्ञानमेकमेवाज्ञानं नाशयति अज्ञानान्तरनिबन्धनं च प्रयोजनमर्थादावरणं प्रतिबध्नाति किमनुपपन्नं भवद्दृष्ट्यैव समाधानस्याभिहितत्वादिति भावः। प्रतिरुद्धत्वात्; प्रतिबध्नाति इति पदाभ्यां प्रतिबन्धस्योक्तत्वात। कः प्रतिबन्ध इत्यपेक्षायामाह—अत्र च प्रतिबन्धपदेन इति। यत्—सत्त्वे कार्यानुत्पादः स एव कार्यानुत्पत्तिप्रयोजकः कार्यानुत्पादव्याप्य इत्यर्थः। कः कार्यानुत्पत्तिर्व्याप्य इत्यत आह—कारणाभावः सति पुष्कलकारणे प्रतिबन्धकः एतदुभयसाधारणं कार्यानुत्पत्तिप्रयोजकत्वमत्राभिहितम्। विद्यमानेऽपि अज्ञाने वृत्तिदशायामावरणकार्यानुत्पादात् वृत्तिरेव आवरणप्रतिबन्धिकेति भावः। तूलाज्ञानपक्षे समाधानमभिधाय तत्समाधानमवस्थाज्ञानपक्षेऽप्यतिदिशति—एवमवस्थाविशेषपक्षेऽपीति। तूलाज्ञानावस्थाज्ञानयोः स्वरूपं वैलक्षण्यञ्च प्रागेवोक्तम्। एकस्यैवाज्ञानस्य अवस्थारूपाण्यज्ञानानीति एकाज्ञानपक्षेऽपि दोषपरिहारो बोध्यः। ज्ञानेन अज्ञानकार्यप्रतिबन्धे पूर्वाचार्यैः यद्भीतभटवदपसरणं कटवत् संवेष्टनमित्यादिकं

ननु चैतन्यस्य निरवयवत्वात् तस्यैकदेशेन प्रकाशो न युज्यते। अथाकाश इव तत्तदर्थावच्छिन्नत्वमेकदेशशब्दार्थः, तर्हि नागन्तुकपदार्थावच्छिन्नचैतन्यमनाद्यज्ञानस्य विषयः निर्विषयस्यावरणस्यायोगात्, प्रागनवच्छिन्नावरणमिव इदानीमवच्छिन्नावरणं जातमित्यपि न, अवच्छिन्नचैतन्यज्ञानेनैवानवच्छिन्नावरणनाशापत्तेः।

एतेन व्यक्तितः पूर्वं जातेरिव विषयात्पूर्वमज्ञानमस्तीति निरस्तमिति—चेत्। न, अनाद्यज्ञानविषये अनादिचैतन्ये तत्त-

---

दृष्टान्ततया उपन्यस्तं तस्याभिप्रायं विशदयन्नाह—अमूर्तस्य अज्ञानस्य यद्यपि गजादेरिव दण्डादिना अपसरणम् [अपसारणम्] कटादेरिव हस्तादिना संवेष्टनं न सम्भवति, तथापि अपसृतसंवेष्टितयोर्यथा कार्याक्षमत्वं तथा स्थितस्यापि अज्ञानस्य आवरणकार्याक्षमत्वं कार्याक्षमत्वसाम्येन अपसरणसंवेष्टनादिकमुक्तम्। प्रदर्शितसिद्धान्तस्य पूर्वपक्षिबुद्ध्यारोहाय तन्मतमनुसृत्यैव दृष्टान्तान्तरमाह—यथा हि उत्तेजकाभावसहकृतस्येति। यथा उत्तेजकाभावसहकृतस्यैव मणेः दाहकार्यप्रतिबन्धकत्वं न तु उत्तेजकसहकृतस्य उत्तेजकसत्त्वे मणेः दाहकार्यप्रतिबन्धनाक्षमत्वमेव तथा वृत्त्यभावसहकृतस्यैवाज्ञानस्य प्रकाशप्रतिबन्धकत्वमावरकत्वमित्यर्थः। वृत्तौ सत्यामज्ञानस्य आवरकत्वादिकार्यानुदय एव। चैतन्यस्य निरवयवत्वात् वृत्त्या तस्यैकदेशेन प्रकाशो नोपपद्यते इति पूर्वपक्षी शंकते—ननु चैतन्यस्य निरवयवत्वात् तस्यैकदेशेन प्रकाशो न युज्यते। अथाकाश इव तत्तदर्थावच्छिन्नत्वमेकदेशशब्दार्थः तर्हि नागन्तुकपदार्थावच्छिन्नचैतन्यमनाद्यज्ञानस्य विषयः निर्विषयस्यावरणस्यायोगात्, प्रागनवच्छिन्नावरणमेव इदानीमवच्छिन्नावरणं जातमित्यपि न, अवच्छिन्नचैतन्यज्ञानेनैवानवच्छिन्नावरणनाशापत्तेः। एतेन व्यक्तितः पूर्वं जातेरिव विषयात् पूर्वमज्ञानमस्तीति निरस्तमिति चेत्। घटाद्याकारवृत्त्या निरवयवचैतन्यस्य एकदेशेन प्रकाशो न युज्यते यदि निरवयवस्य आकाशस्येव घटाद्यर्थावच्छिन्नत्वमेकदेशशब्दार्थः न तु तस्यां सत्त्वमिति। तर्हि सादिघटादिपदार्थैरवच्छिन्नं चैतन्यमपि सादि स्यात् तथा च तस्य सादिचैतन्यस्य कथमनाद्यज्ञानविषयत्वं स्यात् सादिचैतन्यस्य अनाद्यज्ञानविषयत्वाभावे घटादिवृत्ति-

दागन्तुकपदार्थावच्छेदाभ्युपगमात्। 'आश्रयत्वविषयत्वभागिनो निर्विभागचितिरेव केवले'त्युक्तत्वात्। यदवच्छिन्नगोचरा च वृत्तिस्तदवच्छेदेनैवावरणापसरणात् नानवच्छिन्नचैतन्यावरणभङ्गप्रसङ्गः। अत एव वृत्तिविषयावच्छिन्नचैतन्यात् 'प्रागज्ञानमस्ती'त्यभिप्रायेण विषयात्प्रागज्ञानमस्तीति साधूक्तम्। तस्मादधिष्ठानचैतन्यं स्वाध्यस्तं भासयतीति सिद्धम्। तदयमत्र निष्कर्षः—यद्यपि विषयप्रकाशकं

---

निवर्त्यमज्ञानं निर्विषयमेव स्यात् आश्रियमाणस्य आवरणव्यापकत्वात् आश्रियमाणाभावे निर्विषयावरणस्यापि अभावात्। यदि सादिघटाद्युत्पत्तेः प्राक् अनवच्छिन्नचैतन्यस्यैव अज्ञानमावरणमासीत् इदानीं घटाद्युत्पत्तेः तदेवाज्ञानं सावच्छिन्नावरणं जातमित्यपि न अवच्छिन्नचैतन्यज्ञानेनैव घटाद्यवच्छिन्नचैतन्यज्ञानेन घटादिवृत्त्या इत्यर्थः, निरवच्छिन्नचैतन्यावरणाज्ञाननाशात् सद्यो मोक्षापत्तिः स्यात्, निरवच्छिन्नचैतन्यावरणमज्ञानमेव सावच्छिन्नचैतन्यावरणं जातं तच्च घटादिवृत्त्या विनष्टमिति भावः। एतेन व्यक्तेरुत्पत्तेः प्रागेव जातिर्यथा वर्तते एवं घटादिविषयोत्पत्तेः प्रागेव अज्ञानं वर्तते इति निरस्तम्। यथा प्रलयदशायां सर्वव्यक्तीनां नाशेऽपि निराश्रयं सामान्यं वर्तते नैवं निर्विषयमज्ञानं वर्तितुमर्हति। आश्रयविषय विनाकृतमज्ञानमेवासिद्धमिति भावः। आश्रयविनाकृतं सामान्यं तु प्रमाणसिद्धमेव सामान्याश्रयव्यक्तीनां सामान्यव्यञ्जकत्वात् व्यञ्जकाभावेऽनभिव्यक्तमेव सामान्यं स्यात् नित्यस्य सामान्यस्य विनाशासम्भवात्। आश्रियमाणाभावे तु आवरणमेवासिद्धमिति तयोर्वैलक्षण्यात् इति भावः।

सिद्धान्ती समाधत्ते—न अनाद्यज्ञानविषयेऽनादिचैतन्ये तत्तदागन्तुकपदार्थावच्छेदाभ्युपगमात्। आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला इत्युक्तत्वात्। यदवच्छिन्नगोचरा च वृत्तिस्तदवच्छेदेनैव आवरणापसरणात् न अनवच्छिन्नचैतन्यावरणभङ्गप्रसङ्गः। अत एव वृत्तिविषयावच्छिन्नचैतन्यात् प्रागज्ञानमस्तीत्यभिप्रायेण विषयात् प्रागज्ञानमस्तीति साधूक्तम्। तस्मादधिष्ठानचैतन्यस्वाध्यस्तं भासयतीति सिद्धम्। इतः प्रागेवेदमुक्तं पुनरपि उच्यते—अनाद्यज्ञानस्य विषयोऽपि अनादिचैतन्यमेव! चैतन्यव्यतिरिक्तं जडमनादिव्यतिरिक्तं सादिवस्तु नाज्ञानस्य

विषयाधिष्ठानभूतं प्रमेयचैतन्यम् अन्तःकरणावच्छिन्नचैतन्यं तु तस्य प्रमातृ, अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं तु प्रमाणम्। तथापि यदीयान्तःकरणवृत्त्या विषयपर्यन्तं चक्षुरादिद्वारा निस्सृतया यत्प्रकाशकं चैतन्यं यत्प्रमातृचैतन्याभेदेनाभिव्यज्यते तमेव स एव जानाति नान्यं नान्यो वा। अत एवैकवृत्त्युपारूढलक्षणैकलोलीभावापन्नं प्रमातृप्रमाणप्रमेयचैतन्यं भवति। ततस्तदवच्छेदेनाज्ञाननिवृत्त्या

---

कदापि विषयो भवितुमर्हति। अनादिचैतन्ये अधिष्ठानेऽविद्यया आगन्तुकपदार्था अध्यस्ता अध्यासेन चैतन्ये आगन्तुकपदार्थावच्छेदाभ्युपगमात्। संक्षेपशारीरकपद्यमितः प्रागेवास्य मतस्य दार्ढ्याय उपन्यस्तम्—आश्रयत्वविषयत्वभागिनीति। पद्यमिदं तत्रैव विवृतम्। घटाद्यवच्छेदगोचरा घटादिवृत्तिः घटाद्यवच्छेदेनैव चैतन्ये अज्ञानावरणं विनाशयति इति न घटादिवृत्त्या अनवच्छिन्नचैतन्यावरणभङ्गप्रसङ्गः। यच्चैतन्यं घटादिवृत्त्या अवच्छिद्यते [घटादिवृत्तिविषयेण घटादिना अवच्छिन्नचैतन्यात् प्राक् इति वा वाच्यम्] घटादिविषयेण वा यच्चैतन्यमवच्छिद्यते तस्मात् अवच्छिन्नचैतन्यात् प्रागेव अनवच्छिन्नचैतन्यावरकमज्ञानमस्तीत्यभिप्रायेण विषयात् प्रागज्ञानमस्तीति पूर्वाचार्यैः साधूक्तम्। अज्ञानविषयात् अनवच्छिन्नचैतन्यात् प्राक् अज्ञानमस्तीति नार्थः। असम्भवात्। किन्तु चैतन्यावच्छेदकघटाद्युत्पत्तेः प्राक् इति तस्यार्थः। शुद्धचैतन्यनिष्ठाज्ञानविषयतायां घटादयोऽवच्छेदका एव नाज्ञानविषया इति भावः। तस्मात् अधिष्ठानचैतन्यं वृत्त्याभिव्यक्तं साध्यस्तं विषयं भासयतीति सिद्धम्। ज्ञानादज्ञानं नष्टमिति प्रत्ययस्य रजतादिबाधस्य च उपपादनाय नानाज्ञानशक्तिपक्षयोरपि युक्तत्वात्। अत एव एकाज्ञाननानाज्ञानपक्षयोरुपादानं विवरणादौ कृतमिति ध्येयम्।

पूर्वपक्ष्युत्प्रेक्षितदोषान् समाधाय एतत्प्रकरणार्थनिष्कर्षं दर्शयति—तदयमत्र निष्कर्षः यद्यपि विषयप्रकाशकं विषयाधिष्ठानभूतं प्रमेयचैतन्यमन्तःकरणावच्छिन्नचैतन्यं तु प्रमातृ, अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं तु प्रमाणम्, तथापि यदि अन्तःकरणवृत्त्या विषयपर्यन्तं [चक्षुरादिद्वारा] निःसृतया यत् प्रकाशकं चैतन्यं यत् प्रमातृचैतन्याभेदेन अभिव्यज्यते तमेव स एव जानाति नान्यं नान्यो वा। अत

निवृत्त्याभासमानं प्रमेयं चैतन्यमपरोक्षं फलमित्युच्यते । तत्स्वयं भासमानं सत् स्वाध्यस्तं घटाद्यपि भासयतीति तत् फलव्याप्यमित्युपेयते । यन्निष्ठा च यदाकारा वृत्तिर्भवति यन्निष्ठं तदाकारमज्ञानं सा नाशयतीति नियमात् प्रमातृप्रमेयोभयव्यापिन्यपरोक्षवृत्तिः स्वावच्छेदेनावरणमपसारयति प्रकाशस्य स्वावच्छेदेनावरणापसारकत्वदर्शनात् । अतः प्रमात्रवच्छिन्नस्यासत्त्वावरणस्य प्रमेयावच्छिन्नस्याभानावरणस्य चापसरणात् घटोऽयं मे स्फुरतीत्याद्यपरोक्षव्यवहारः । परोक्षस्थले तु इन्द्रियसन्निकर्षलक्षणद्वाराभावादन्तःकरणनिस्सरणाभावेन विषयपर्यन्तं वृत्तेरगमनाद्विषयावच्छिन्नप्रमेयचैतन्येन सह प्रमातृचैतन्यस्यैकवृत्त्युपारूढत्वाभावेनापरोक्षतयाऽभिव्यक्त्यभावेऽपि प्रमातृप्रमाणचैतन्ययोरेकलोलीभावापत्त्या प्रमात्रवच्छिन्नमसत्त्वावरणमात्रं निवर्तते; तावन्मात्रस्य वृत्त्यवच्छिन्नत्वात् । इदमेव सुषुप्तिव्यावृत्तिशब्देन विवरणाचार्यैर्व्याख्यातम् । विषयावच्छिन्नाभानावरणतत्कार्यसद्भावेऽपि

---

एव एकवृत्त्युपारूढलक्षणैकलोलीभावापन्नं प्रमातृप्रमाणप्रमेयचैतन्यं भवति । ततस्तदवच्छेदेन अज्ञाननिवृत्त्या भासमानं प्रमेयचैतन्यमपरोक्षं फलमित्युच्यते । तत् स्वयं भासमानं सत् साध्यस्तं घटादपि भासयतीति तत् फलव्याप्यमित्युपेयते । यन्निष्ठा च यदाकारा वृत्तिर्भवति तन्निष्ठं तदाकारमज्ञानं सा नाशयति इति नियमात् । प्रमातृप्रमेयोभयव्यापिनी अपरोक्षवृत्तिः स्वावच्छेदेन आवरणमपसारयति प्रकाशस्य स्वावच्छेदेन आवरणापसारकत्वदर्शनात् अतः प्रमात्रवच्छिन्नस्य असत्त्वावरणस्य प्रमेयावच्छिन्नस्याभानावरणस्य च अपसरणात् घटोऽयं मे स्फुरतीति इत्याद्यपरोक्षव्यवहारः । परोक्षस्थले तु इन्द्रियसन्निकर्षलक्षणद्वारा भावात् अन्तःकरणनिःसरणाभावेन विषयपर्यन्तं वृत्तेरगमनात् विषयावच्छिन्नप्रमेयचैतन्येन सह प्रमातृचैतन्यस्य एकवृत्त्युपारूढत्वाभावेन अपरोक्षतया अभिव्यक्त्यभावेऽपि प्रमातृप्रमाणचैतन्ययोरेकलोलीभावापत्त्या प्रमात्रवच्छिन्नमसत्त्वावरणमात्रं निवर्तते । तावन्मात्रस्य वृत्त्यवच्छिन्नत्वात् इदमेव सुषुप्तिव्यावृ-

प्रमात्रवच्छिन्नासत्त्वावरणनिवृत्त्या अनुमानादौ व्यवहारोपपत्तिः । अत एव जानाम्यहं पर्वते वह्निरस्तीति, स तु कीदृश इति मे न भातीत्यादिव्यवहारः । त्रयाणामेकलोलीभावे अपरोक्षत्वम्, द्वयोरेकलोलीभावे तु परोक्षत्वमिति न सङ्करः । वृत्तेश्च विषयेण समं साक्षादेवापरोक्षस्थले सम्बन्धः, परोक्षस्थले त्वनुमितेरनुमेयेन तद्व्याप्यज्ञानजन्यत्वम्, शाब्द्याः संसर्गेण सह तदाश्रयवाचकपदजन्यत्वम्, स्मृतेः स्मर्तव्येन सह तद्विषयानुभवजन्यत्वम् । एवमन्यत्रापि परम्परासम्बन्ध एवेति परोक्षापरोक्षविभागः । विस्तरेण व्युत्पादितास्माभिरियं प्रक्रिया सिद्धान्तबिन्दौ । तस्माद्विषयस्य मिथ्यात्वेऽपि प्रतिकर्मव्यवस्थोपपन्नेति दिक् ॥२५॥

इत्यद्वैतसिद्धौ प्रतिकर्मव्यवस्थोपपत्तिः ॥

---

त्तिशब्देन विवरणाचार्यैर्व्याख्यातम् । विषयावच्छिन्नाभानावरणतत्कार्यसद्भावेऽपि प्रमात्रवच्छिन्नासत्त्वावरणनिवृत्त्या अनुमानादौ व्यवहारोपपत्तिः । अत एव जानाम्यहं पर्वते वह्निरस्तीति स तु कीदृश इति मे न भातीत्यादिव्यवहारः । त्रयाणामेकलालोभावेऽपरोक्षत्वं द्वयोरेकलोलीभावे तु परोक्षत्वमिति न सङ्करः वृत्तेश्च विषयेण समं साक्षादेवापरोक्षस्थले सम्बन्धः परोक्षस्थले तु अनुमितेरनुमेयेन तद्व्याप्यज्ञानजन्यत्वं, शाब्द्याः संसर्गेण सह तदाश्रयवाचकपदजन्यत्वं, स्मृतेः स्मर्तव्येन सह तद्विषयानुभवजन्यत्वमेवमन्यत्रापि परम्परासम्बन्ध एवेति परोक्षापरोक्षविभागः ।

विस्तरेण व्युत्पादिता अस्माभिरियं प्रक्रिया सिद्धान्तबिन्दौ । तस्माद्विषयस्य मिथ्यात्वेऽपि प्रतिकर्मव्यवस्थोपपन्नेति दिक् ।

अथ प्रमाता प्रमाणं प्रमेयं प्रमितिरिति चतसृषु विधासु तत्त्वपरिसमाप्तिः आसामान्यतयाभावेऽपि तत्त्वस्याव्यवस्थापनात् । तस्मात् यथा विज्ञानस्कन्धमात्रं तत्त्वमिति व्यवस्थापयता योगाचारेण चतस्रो विधा एपितव्याः तथा ब्रह्मवादिनापि प्रदर्शिताश्चतस्रो विधा एपितव्याः ताश्च विधाः अत्र निष्कर्षे असङ्कीर्णतया

प्रदर्श्यन्ते—अत्रेयं प्रक्रिया सिद्धान्तविन्दौ प्रदर्शिता [पृ० ४८३]। शरीरमध्ये स्थितः सर्वशरीरव्यापकः सत्त्वप्राधान्येन सूक्ष्मपञ्चभूतारब्धः अन्तःकरणाख्यः अविद्याविवर्तो दर्पणादिवत् अतिस्वच्छः नेत्रादिद्वारा निर्गत्य योग्यान् घटादीन् विषयान् व्याप्य तत्तदाकारो भवति द्रुतताम्रादिवत्। तस्य च सौरालोकादिवत् झटित्येव संकोचविकाशौ उपपद्येते। स च सावयवत्वात् परिणममानो देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्येऽपि चक्षुर्वत् अविच्छिन्नोऽपि अवतिष्ठते। तत्र देहेऽन्तःकरणभागः अहंकाराख्यः कर्ता इत्युच्यते। देहविषयमध्यवर्ती दण्डायमानः तद्भागः वृत्तिज्ञानाख्यः क्रिया इत्युच्यते। विषयव्यापकस्तद्भागः विषयस्य ज्ञानकर्मत्वसम्पादकमभिव्यक्ति-योग्यत्वमित्युच्यते। तस्य च त्रिभागस्य अन्तःकरणस्य अतिस्वच्छत्वात् चैतन्यं तत्र अभिव्यज्यते। तस्य च अभिव्यक्तस्य चैतन्यस्य एकत्वेऽपि अभिव्यञ्जकान्तः-करणभागभेदात् त्रिधा व्यपदेशो भवति। कर्तृभागावच्छिन्नचिदंशः प्रमाता, क्रियाभागावच्छिन्नचिदंशः प्रमाणं, विषयगतः अभिव्यक्तियोग्यत्वभागावच्छिन्न-चिदंशः प्रमितिः प्रमेयं तु विषयगतं ब्रह्मचैतन्यमेवाज्ञातम्। तदेव च ज्ञातं सत् फलम्। एवमेव एकस्यैव चैतन्यस्य विधाचतुष्टयं बोध्यम्। यथा योगाचारमते विज्ञानस्कन्धमात्रस्य विधाचतुष्टयं तैरङ्गीक्रियते। यदीयया—यत् प्रमातृसम्बन्धिन्या अन्तःकरणवृत्त्या विषयपर्यन्तं निःसृतया विषयप्रकाशकं विषयाधिष्ठानीभूतं चैतन्यं यत्प्रमातृचैतन्याभेदेन अभिव्यज्यते स एव प्रमाता तमेव विषयं जानाति नान्यं प्रमेयं नान्यः प्रमाता जानातीत्यर्थः। अतः एकया प्रमाणाख्यया वृत्त्या त्रीणि चैतन्यानि संसृष्टानि भवन्ति—प्रमातृप्रमाणप्रमेयचैतन्यानि। प्रमाणाख्यवृत्ते र्भागद्वयेन प्रमातृप्रमेयचैतन्ये सम्बद्ध एव वृत्तिभागावच्छिन्नं चैतन्यमपि वृत्त्या संसृष्टमेव तथा च एकवृत्त्यु-पारूढानि त्रीणि चैतन्यानि प्रमातृप्रमेयप्रमाणचैतन्यानि अतस्त्रीणि चैतन्यानि एकलोलीभावापन्नानि इत्युच्यन्ते। ततः विषयभागावच्छेदेन चैतन्ये अभानापादका-ज्ञाननिवृत्त्या भासमानं प्रमेयचैतन्यमपरोक्षं फलं तच्चैतन्यमज्ञाननिवृत्त्या स्वयं भासमानं स्वाध्यस्तम्। घटादिविषयं भासयतीति तत्घटादिफलव्याप्यमित्युच्यते।

यत्प्रमातृनिष्ठा यद्विषयाकारा च या वृत्तिर्भवति । तत्प्रमातृनिष्ठं तदाकारविषयावच्छिन्नचैतन्यनिष्ठं च अज्ञानं सा वृत्तिर्नाशयति इति नियमात् प्रमातृप्रमेयोभयव्यापिनी अपरोक्षा वृत्तिः तद्वृत्त्यवच्छेदेन चैतन्येऽज्ञानावरणमपसारयति वृत्तिज्ञानाख्यप्रकाशस्य वृत्त्यवच्छेदेन चैतन्ये अज्ञानापसारकत्वस्य सर्वत्रानुभवात् । ज्ञानमात्रं स्वात्मनि अपरोक्षमेव । ज्ञानमुत्पन्नं च अभासमानं च कदापि न सम्भवति इति भावः । अतः अपरोक्षवृत्तौ जातायां प्रमात्रवच्छिन्नस्य असत्त्वापादकाज्ञानावरणस्य प्रमेयावच्छिन्नस्य च अभानापादकाज्ञानावरणस्य च अपसारणात् घटोऽयं मे स्फुरति भातीत्याद्यपरोक्षव्यवहारो जायते । परोक्षवृत्तिस्थले तु नायं व्यवहारो जायते तत्र हेतुमाह—**परोक्षस्थले तु** इति । परोक्षवृत्तेर्द्वाराभावेन विषयपर्यन्तागमनात् विषयावच्छिन्नप्रमेयचैतन्येन सह प्रमातृचैतन्यस्य एकवृत्त्युपारूढत्वाभावात् प्रमातृचैतन्याभेदेन प्रमेयचैतन्याभिव्यक्त्यभावात् विषयचैतन्यस्य परोक्षतया अभिव्यक्त्यभावेऽपि परोक्षवृत्त्या प्रमातृप्रमाणचैतन्ययोर्द्वयोरेकलोलीभावापत्त्या प्रमातृचैतन्यगतमसत्त्वावरणाज्ञानमात्रं निवर्तते । परोक्षवृत्त्यापि प्रमातृगतया प्रमातृचैतन्यमेव परोक्षवृत्त्यवच्छिन्नमतः प्रमातृगतमसत्त्वापादकाज्ञानमात्रं निवर्तते । प्रमातृगतमसत्त्वापादकाज्ञानमात्रनिवृत्तिरेव सुषुप्तिव्यावृत्तिशब्देन विवरणाचार्यैरुक्तेति बोध्यम्, [विवरणम् पृ० ८५] सुषुप्तौ जानामीति व्यवहारो न जायते परोक्षवृत्त्या तु जानामीति व्यवहारो जायते प्रमातृगतासत्त्वापादकाज्ञाननाशात् अतः परोक्षवृत्तिदशायां सुषुप्तिव्यावृत्तिर्भवति ।

इदमिहावधातव्यम्—अपरोक्षवृत्त्या अभानापादकमज्ञानमसत्त्वापादकाज्ञानञ्च द्वयं निवर्तते । परोक्षवृत्त्या तु असत्त्वापादकाज्ञानमेव केवलं निवर्तते । अनुमित्यादिपरोक्षवृत्त्या अभानापादकाज्ञानस्य अनिवृत्त्या अभानापादकाज्ञानकार्यं वर्तते तच्च विषयो न भाति न स्फुरतीति व्यवहारः विषयगतविशेषधर्मजिज्ञासा च विशेषधर्मसंशयश्च । अभानापादकाज्ञानानिवृत्तावपि असत्त्वापादकाज्ञानमात्रनिवृत्त्यैव विषये जानामीत्यादिव्यवहारः सम्पद्यते । अत एव परोक्षवृत्तिस्थले विषयो भातीति व्यवहाराभावेऽपि विषयं जानामीत्यादिव्यवहारात् पर्वते वह्न्यनुमितिस्थले जानाम्यहं पर्वते वह्निरस्तीति किन्तु स अनुमीयमानो वह्निः कीदृश इति न भातीत्यादिव्यवहारः । प्रागुक्तानां त्रयाणां चैतन्यानामेकलोलीभावे विषयस्य

अपरोक्षत्वं द्वयोश्चैतन्ययोरेकलोलीभावे विषयस्य परोक्षत्वम् इति न प्रत्यक्षत्व-परोक्षत्वयोः संकरः। अपरोक्षवृत्तेश्च विषयेण साक्षात्सम्बन्धः परोक्षवृत्तेश्च विषयेण परम्परासम्बन्धः। अनुमित्यादिरूपपरोक्षवृत्तेर्विषयेण कीदृशः परम्परा-सम्बन्ध इत्याह—अनुमेयस्य अनुमित्या परम्परासम्बन्धः तद्व्याप्यज्ञानजन्यत्व-लक्षणः सम्बन्धः। तत्पदं साध्यपरं साध्यव्याप्यज्ञानजन्यत्वमनुमितौ वर्तते। अयमेव साध्यानुमित्योः परम्परासम्बन्धः। शाब्द्या वृत्त्या सह शाब्दबोध्यस्य संसर्गस्य परम्परासम्बन्धमाह—तदाश्रयवाचकपदं जन्यत्वं सम्बन्धतत्पदं संसर्ग-परम्। संसर्गाश्रयपदार्थवाचकपदजन्यत्वं संसर्गेण सह शाब्द्या वृत्तेः परम्परा-सम्बन्धः। एवं स्मृतेः स्मर्तव्येन सह तद्विषयानुभवजन्यत्वं सम्बन्धः। तत्पदं स्मर्तव्यपरं स्मर्तव्यविषयानुभवजन्यत्वं संस्कारद्वारा स्मृतौ अस्ति एवमन्यत्रापि उपमित्यादौ उपमेयेन परम्परासम्बन्धो बोध्यः। एषा प्रक्रिया दशश्लोकीटीकायां सिद्धान्तबिन्दौ व्युत्पादिता सा प्रारम्भे एव अस्माभिः प्रदर्शिता। तस्मात् विषयस्य मिथ्यात्वेऽपि प्रतिकर्मव्यवस्थोपपन्ना इति दिक् ॥२५॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्र-नाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यां प्रतिकर्मव्यवस्थोपपत्तिविवरणम्।

## अथ प्रतिकूलतर्कनिराकरणम्

ननु—मिथ्यात्वानुमानं प्रतिकूलतर्कपराहतम्। तथा हि–विश्वं यदि कल्पितं स्यात्, साधिष्ठानं स्यात् न चैवम् सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषवत्त्वस्याधिष्ठानत्वप्रयोजकस्य निर्विशेषे निस्सामान्ये च ब्रह्मण्यसंभवादिति—चेत्।

न, स्वरूपेण ज्ञातत्वे सति विशेषेणाज्ञातत्वस्याधिष्ठानत्वप्रयोजक-

---

१—प्रपञ्चमिथ्यात्वसाधनाय उपन्यस्तानां दृश्यत्वादिहेतूनामनुग्राहका अनुकूलतर्काः उक्ता इदानीं तेषां प्रतिकूलतर्कपराघातनिरसनाय प्रकरणमिदमारभ्यते—उक्तं च पूर्वपक्षिणा प्रतिकूलतर्कहताश्चैते। दृश्यत्वादिहेतूनां प्रतिकूलतर्कपराहतत्वप्रदर्शनाय पूर्वपक्षी क्रमशः अष्टौ प्रतिकूलतर्कान् दर्शयन् एवं शंकते—ननु मिथ्यात्वानुमानं प्रतिकूलतर्कपराहतम्। तथा हि विश्वं यदि कल्पितं स्यात् साधिष्ठानं स्यात्। न चैवं सामान्यतो ज्ञातत्वे सति अज्ञातविशेषवत्त्वस्य अधिष्ठानत्वप्रयोजकस्य निर्विशेषे निःसामान्ये च ब्रह्मण्यसम्भवात् इति चेत्। विश्वमिथ्यात्वानुमाने यः पक्षः स एवात्र विश्वशब्देन प्रतिपत्तव्यः। तथा च [१] विश्वं यदि कल्पितं स्यात् तदा साधिष्ठानं स्यात्, [२] सत्यप्रधानं स्यात्, [३] सत्यसादृश्योपेतं स्यात्, [४] सत्यदोषोपेतं स्यात्, [५] बन्धनिवृत्त्यर्थो यत्नो न स्यात्, [६] तन्निदिध्यासनसाध्यसाक्षात्कारनिवर्त्यं न स्यात्, [७] श्रवणादिनियमादृष्टसापेक्षब्रह्मज्ञाननिवर्त्यं न स्यात्। [पृ० ४२२] इति तर्काः अभिमताः। तत्रादौ साधिष्ठानं स्यादिति तर्कस्तावदुपपाद्यते। ब्रह्मणोऽधिष्ठानस्य सत्यत्वाज्ञाकारादिष्टापत्तिरिति चेन्न। सिद्धान्तिमते ब्रह्मणोऽधिष्ठानत्वासम्भवात्। अधिष्ठानत्वे सामान्यतो ज्ञातत्वे सति अज्ञातविशेषवत्त्वस्य प्रयोजकत्वात् ब्रह्मणः निःसामान्यत्वात् निर्विशेषत्वाच्च। निःसामान्ये निर्विशेषे च ब्रह्मणि अधिष्ठानत्वासम्भवात् व्यापकाभावात् व्याप्याभाव इति भावः।

अधिष्ठानत्वप्रयोजकरूपस्य ब्रह्मणि सम्भवात् ब्रह्मणोऽधिष्ठानत्वमुपपन्नमित्याह सिद्धान्ती—न स्वरूपेण ज्ञातत्वे सति विशेषेणाज्ञातत्वस्य अधिष्ठान-

त्वेन ज्ञातविशेषवत्त्वस्याप्रयोजकत्वात्। 'पुरुषो न वे'ति संशयधर्मिणः स्थाणोरप्यन्यत्र ज्ञातस्थाणुत्वरूपविशेषवत्त्वात् तत्राज्ञातविशेषवत्त्वमपि न प्रयोजकम्, विशेषवत्त्वेनाज्ञातत्वस्यैव लघुत्वेन प्रयोजकत्वात्। तथा च निस्सामान्ये निर्विशेषे च ब्रह्मणि स्वप्रकाशत्वेन ज्ञानात् परिपूर्णत्वानन्दत्वादिना चाज्ञानादधिष्ठानत्वमुपपन्नम्।

वस्तुतस्तु—कल्पितसामान्यविशेषवत्त्वं ब्रह्मण्यपि सुलभमेव, अकल्पितसामान्यविशेषवत्त्वं चाप्रसिद्धम्। न च तत्कल्पने अन्योन्याश्रयः; कल्पितसामान्यविशेषाणां प्रवाहानादित्वात्। सत्यत्वानन्दत्वादीनामेव कल्पितव्यक्तिभेदेन सामान्यत्वात् परिपूर्णानन्दत्वादीनां च विशेषत्वात्। अत एव सामान्याकारज्ञानं विना संस्कारानुद्बोधात् कथमध्यास इति न वाच्यम्; सदात्मना स्वरूपज्ञानस्यैव सामान्यज्ञानत्वात्। न ह्यध्यसनीयं सदात्मना न भाति। एतावानेव विशेषः—यदधिष्ठानं स्वत एव सदात्मना भाति अध्यसनीयं तु तत्सम्बन्धात् ॥१॥

---

त्वप्रयोजकः तेन अज्ञातविशेषवत्त्वस्य अप्रयोजकत्वात् पुरुषो न वेति संशयधर्मिणः स्थाणोरप्यन्यत्र ज्ञातस्थाणुत्वरूपविशेषवत्त्वात्। तत्राज्ञातविशेषवत्त्वमपि न प्रयोजकं विशेषवत्त्वेन अज्ञातत्वस्यैव लघुत्वेन प्रयोजकत्वात् तथा च निःसामान्ये निर्विशेषे च ब्रह्मणि स्वप्रकाशत्वेन ज्ञानात् परिपूर्णत्वानन्दत्वादिना च अज्ञानादधिष्ठानत्वमुपपन्नम्। वस्तुतस्तु कल्पितसामान्यविशेषवत्त्वं ब्रह्मण्यपि सुलभमेव। अकल्पितसामान्यविशेषवत्त्वञ्च अप्रसिद्धम्। न च तत्कल्पनेऽन्योन्याश्रयः कल्पितसामान्यविशेषाणां प्रवाहानादित्वात्। सत्यत्वानन्दत्वादीनामेव कल्पितव्यक्तिभेदेन सामान्यत्वात् परिपूर्णानन्दत्वादीनाञ्च विशेषत्वात्। अत एव सामान्याकारज्ञानं विना संस्कारानुद्बोधात् कथमध्यास इति न वाच्यं, सदात्मना स्वरूपज्ञानस्यैव सामान्यज्ञानत्वात्। न हि अध्यसनीयं सदात्मना न भाति। एतावान् एव विशेषः यदधिष्ठानं स्वत एव सदात्मना भाति, अध्यसनीयं तु तत्सम्बन्धात्। सामान्यतो ज्ञातत्वे सति अज्ञातविशेषवत्त्वं नाधिष्ठानत्वव्यापकं येन ब्रह्मणि व्यापकाभावात् व्याप्यमधिष्ठान-

त्वमपि न स्यात् । किन्तु स्वरूपेण ज्ञातत्वे सति विशेषेणाज्ञातत्वमेवाधिष्ठानत्व-प्रयोजकं शुक्तिरजताध्यासे तथा दर्शनात् । अज्ञातविशेषवत्त्वं तु नाधिष्ठानत्व-प्रयोजकं कुतो न प्रयोजकमित्याह—पुरुषो न वेति । स्थाणौ पुरुषो न वेति संशये अधिष्ठानस्य स्थाणोरज्ञातविशेषवत्त्वाभावात् स्थाणोः स्थाणुत्वमेव विशेषः स च स्थाणोरज्ञात एव स्थाणुत्वस्य जातिरूपस्य सर्वत्र एकत्वात् स्थाणुत्वस्य तु अन्यस्थाणौ ज्ञातत्वेन संशयधर्मिणः स्थाणोरज्ञातविशेषवत्त्वं नास्तीति भावः । वस्तुतस्तु ज्ञातत्वे सति अज्ञातत्वमेव अधिष्ठानत्वप्रयोजकम् । ज्ञातस्य अज्ञातत्वञ्च न विरुध्यते स्वरूपविशेषरूपाभ्यां ज्ञातत्वाज्ञातत्वसम्भवात् । अज्ञातविशेषवत्त्वापेक्षया विशेषवत्त्वेऽज्ञातत्वस्य लघुत्वादपि गुरुभूतं न प्रयोजकम् । अन्यत्राज्ञातविशेषधर्मस्य भ्रमधर्मिणि ज्ञातत्वे भ्रमानुत्पत्त्या भ्रमधर्मिणि विशेषधर्मस्य अज्ञातत्वं वाच्यं तथा च तत्तद्धर्मिवृत्तित्वस्य प्रवेशात् गौरवम् । तथा च निःसामान्ये निर्विशेषे च ब्रह्मणि सप्रकाशत्वेन सदात्मना ज्ञानात् पूर्णानन्दत्वादिना अज्ञानात् तस्य अधिष्ठानत्वमुपपन्नं यद्यपि उक्तरूपद्वयमेकं तथापि तयोराविद्यकानादिभेदः वर्तते । पूर्णानन्दो नास्ति न भाति चिद्रूपमस्ति भाति इति व्यवहारात् अनयोः काल्पनिको भेदः स्वीकर्तव्य एव । प्रपञ्चभ्रमे भासमानत्वाभासमानत्वाभ्यां सद्रूपत्वानन्द-रूपत्वयोः सामान्यविशेषभावो बोध्यः । अधिष्ठानसामान्यरूपं भ्रमे भासते विशेषरूपं न भासते इति प्रतीत्या तयोः सामान्यविशेषभावः स्वीकर्तव्यः । अतो ब्रह्मण्यपि निःसामान्ये विशेषेऽधिष्ठानत्वमुपपन्नम् । वस्तुतस्त्विति विचारस्तु कल्पितसामान्यविशेषवत्त्वं ब्रह्मण्यपि सुलभम् । अज्ञातस्वरूपत्वमेव अधिष्ठानत्वे प्रयोजकं न तु अज्ञातविशेषवत्त्वं सोऽयमित्यादिभ्रमे तथा दर्शनात् तस्य स्वरूप-ज्ञानादेव भ्रमो निवर्तते । न तु कस्यापि विशेषधर्मस्य भ्रमेऽभासमानस्य ज्ञानात् अज्ञातस्वरूपत्वं ब्रह्मण्यपि सुलभमेव । अथापि यदि पूर्वपक्षिणः अज्ञातविशेषवत्त्व-मेव अपेक्ष्यते तदा तदस्त्येव कल्पितविशेषवत्त्वं प्रकृतेऽपि । यदि तु अकल्पित-विशेषवत्त्वमपेक्ष्यते इति ब्रूयात् तदसिद्धमित्याह—अकल्पितसामान्यविशेषवत्त्वं सर्वत्रैवाप्रसिद्धमस्माभिरकल्पितसामान्यविशेषवत्त्वस्यानङ्गीकारात् । न च अन्योन्या-श्रयः कल्पितसामान्यविशेषवत्त्वेन भ्रमः भ्रमाच्च सामान्यविशेषवत्त्वकल्पना इति वाच्यं, कल्पितसामान्यविशेषप्रवाहानामनादित्वात् पूर्वपूर्वभ्रमात् उत्तरोत्तरभ्रमजनना-

ननु—अधिष्ठानतिरोधानं विना भ्रमासंभवः; प्रकाशरूपतिरोधाने तु तदध्यस्ताविद्यादेः प्रकाशानुपपत्तिरिति—चेत् ॥ २॥

न; एकस्यैवानन्दाद्यात्मना तिरोहितस्य सदात्मना प्रकाशसंभवात् । तदुक्तं वार्त्तिककारपादैः—

---

दिति भावः । सत्यत्वानन्दत्वादीनामिति । सत्स्वरूपं ब्रह्मैव अधिष्ठानत्वेन मायाकार्यकुम्भादिकल्पितनानाव्यक्त्यनुगतं सत्त्वजातिरूपतया भासते । एवं चैतन्यमपि नानान्तःकरणवृत्तिषु प्रतिबिम्बिततया अनुगतरूपेण भासमानं सत् ज्ञानत्वजातिरूपेण भासते । एवमानन्दरूपं ब्रह्मैव नानान्तःकरणवृत्तिषु उपाधिभूतासु प्रतिबिम्बिततया तासु अनुगतरूपेण भासमानं सत् आनन्दत्वजातिरूपेण लक्ष्यते । अतः सत्त्वादीनां सामान्यरूपता सिद्धा । अनुगतरूपेण अप्रतीतत्वात् पूर्णानन्दत्वादीनां विशेषरूपत्वात् पूर्णानन्दस्य भिन्नानुगत्यभावात् । अधिष्ठानस्य सामान्याकारेण ज्ञानमारोप्य संस्कारमुद्बोध्याध्यासं जनयति । सामान्याकारज्ञानाभावे नाध्यास इति निःसामान्यब्रह्मणः सामान्याकारज्ञानं न सम्भवति अतो ब्रह्मणो नाधिष्ठानत्वमिति न वाच्यम् । अधिष्ठानं यद्रूपेण भ्रमे भासते तदेव अधिष्ठानस्य सामान्यरूपमध्यस्तं च सदात्मनैव भ्रमे भासते अतः सदात्मना ब्रह्मस्वरूपज्ञानस्यैव सामान्यज्ञानत्वात् । ब्रह्मणः निःसामान्यरूपत्वेऽपि कल्पितसामान्यस्य सम्भवात् । अधिष्ठानाध्यस्तयोः सदात्मना भासमानत्वेऽपि अधिष्ठानं स्वतः सदात्मना भाति अध्यस्तं तु सदधिष्ठानतादात्म्यात् सदात्मना भाति । सन् घटः इत्यादिप्रतीतौ घटः सदभिन्नतयैव भासते । सद्रूपे ब्रह्मणि तादात्म्येन घटादीनामध्यासात् इति भावः ॥१॥

२—ब्रह्मणोऽधिष्ठानत्वं न सम्भवतीति पूर्वपक्षी शङ्कते—**ननु अधिष्ठानतिरोधानं विना भ्रमासम्भवः। प्रकाशरूपतिरोधाने तु तदध्यस्ताविद्यादेः प्रकाशानुपपत्तिरित्ति चेत्** ? अविद्याद्यध्यासस्य प्रकाशस्वरूपं ब्रह्मैवाधिष्ठानं वाच्यं किन्तु अधिष्ठानावरणं विना भ्रमासम्भवात् । भ्रमोपादानाज्ञानविषयत्वमेवाधिष्ठानत्वं भ्रमोपादानज्ञानेनाधिष्ठानस्य ब्रह्मण आवृतत्वे तदध्यस्ताविद्यादेः प्रकाशानुपपत्तिः तथा च अधिष्ठानस्य ब्रह्मणः अनावृतत्वे वा उभयथा अविद्याद्यध्यासासम्भवात् अध्यासाधिष्ठानं ब्रह्म न सम्भवतीति भावः ॥२॥

'यत्प्रसादादविद्यादि सिध्यतीव दिवानिशम् ।
तमप्यपह्नुतेऽविद्या नाज्ञानस्यास्ति दुष्करम् ॥' इति ।

न च—बाधकालेऽपि सद्विशेषज्ञानमस्तीति—वाच्यम्; परिपूर्णानन्दत्वादेः सत एव विशेषत्वेन तदा तदज्ञानाभावात् धर्मत्वमात्रस्यैव कल्पितत्वात् ।

---

३—ब्रह्मण आवृतत्वमनावृतत्वञ्च प्रदर्शयन् ब्रह्मणः अधिष्ठानत्वं समर्थयति सिद्धान्ती—न, एकस्यैवानन्दाद्यात्मना तिरोहितस्य सदात्मना प्रकाशसम्भवात् । तदुक्तं वार्तिककारपादैः—

'यत् प्रसादादविद्यादि सिद्ध्यतीव दिवानिशम् ।
तमप्यपह्नुतेऽविद्या नाज्ञानस्यास्ति दुष्करम् ॥ इति ।

एकस्यैव ब्रह्मणः आनन्दाद्यात्मना अज्ञानतिरोहितस्य सदात्मना प्रकाशसम्भवात् ब्रह्मणोऽनावृतत्वमावृतत्वञ्च उपपद्यते । सदानन्दयोरभेदेऽपि आविद्यकभेदेन प्रकाशाप्रकाशयोरुपपत्तिरिति प्रागेवोक्तम् । उक्तञ्च वार्तिककृद्भिः सुरेश्वराचार्यैः बृहदारण्यकभाष्यवार्तिके—यस्य प्रकाशरूपस्य साक्षिणो ब्रह्मणः प्रसादात् प्रमाणव्यापारं विनैव साक्षिभास्यमविद्यादि सिद्ध्यतीवासद्वैलक्षण्येन भासते । सर्वेषां सिद्धिः प्रमाणाधीना, येषां प्रमाणेन सिद्धिर्न भवितुमर्हति तेषामसद्वैलक्षण्यं साक्षिप्रसादादेव भासते । प्रमाणं हि अज्ञातं भासयति साक्षी तु अज्ञातमज्ञातत्वेनैव भासयति नाज्ञानं निवर्तयति, प्रमाणं तु अज्ञानं निवर्तयत् विषयं साधयति अतः साक्षिप्रसादात् साक्षिभास्यः सिद्ध्यतीव इति इवकारेण निर्देशः कृतः । तमपि साक्षिणं पूर्णानन्दाद्यात्मना अज्ञानमावृणोति अतः अज्ञानस्य दुष्करं किमपि नास्ति अघटनघटनापटीयस्त्वात् इति । निर्विशेषस्य ब्रह्मणः अविद्याद्यधिष्ठानत्वमेव न सम्भवतीत्याह पूर्वपक्षी—न च बाधकालेऽपि सद्विशेषाज्ञानमस्तीति वाच्यम् । शुक्तिरजतादिभ्रमस्थले विशेषाज्ञानात् भ्रमः, विशेषज्ञानात् भ्रमनिवृत्तेरित्यनुभवसिद्धं ब्रह्मणो निर्विशेषत्वेनाविद्यादिभ्रमबाधकालेऽपि सद्रूपस्य ब्रह्मणो विशेषाभावात् भ्रमबाधकालेऽपि ब्रह्मणो विशेषधर्मस्याज्ञानमेव अस्तीति न ब्रह्मणो विशेषधर्मज्ञानात् अविद्यादिभ्रमनिवृत्तिः स्यादिति पूर्वपक्षिणो भावः । परिपूर्णानन्दत्वादेः सद्विशेषत्वेन बाधज्ञानस्य विशेषविषयकत्वमक्षतमेव इति सिद्धान्ती

यद्वा—भ्रमविरोधिज्ञानाभाव एव तन्त्रं, न तु विशेषाज्ञानम्; विश्वोपादानगोचराज्ञानस्य श्रवणादिजन्यमात्ममात्रविषयकं वृत्तिरूपं ज्ञानं विरोधि, न तु चिद्रूपं स्वतःसिद्धं ज्ञानम्; भ्रमविरोधिनश्च वृत्तिरूपस्य ज्ञानस्येदानीमभावोऽस्त्येव। ननु—आत्मानात्मनोर्द्रष्टृ-

---

समाधत्ते—पूर्वपक्षिणा एवं न च वाच्यं कुत इत्यत आह—**परिपूर्णानन्दत्वादेः सत एव विशेषत्वेन तदा तदज्ञानाभावात्। धर्मत्वमात्रस्यैव कल्पितत्वात्।** अविद्यादिभ्रमे सद्रूपेण भासमानं ब्रह्मैव अधिष्ठानं भ्रमे यद्रूपेणाधिष्ठानं भासते तद्रूपमेवाधिष्ठानस्य सामान्यरूपं, यद्रूपेणाधिष्ठानज्ञानात् भ्रमनिवृत्तिस्तदेवाधिष्ठानस्य विशेषरूपम्। अतो भ्रमेऽधिष्ठानं ब्रह्म सद्रूपेण भासते न भासते च पूर्णानन्दत्व-रूपेण अतः परिपूर्णानन्दत्वादेः सतः विशेषत्वमक्षतमेव। परिपूर्णानन्दात्मनाऽधिष्ठान-ज्ञानमेवाविद्याद्यध्यासबाधकमतो बाधकज्ञानस्य विशेषविषयकत्वात् बाधकज्ञानदशायां विशेषाज्ञानं नास्त्येव इति भावः। यद्यपि अधिष्ठानं ब्रह्म परिपूर्णानन्दात्मकमेव न तादृशानन्दत्वादिधर्मवत् तथापि परिपूर्णानन्दादौ ब्रह्मधर्मत्वं कल्पितम्। उक्तञ्च पञ्चपादिकायाम्—आनन्दो विषयानुभवो नित्यत्वमिति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते इति [पृ० ४]। अधिष्ठानविशेषाज्ञानात् भ्रमः विशेषज्ञानात् भ्रमनिवृत्तिरित्यभ्युपेत्य अधस्तात् समाधानमभिहितम्। वस्तुतस्तदेव न किन्तु भ्रमविरोधिज्ञानाभावादेव भ्रमः इत्याह सिद्धान्ती—**यद्वा भ्रमविरोधि-ज्ञानाभाव एव तन्त्रं न तु विशेषाज्ञानं, विश्वोपादानगोचराज्ञानस्य श्रवणादिजन्यमात्ममात्रविषयकं वृत्तिरूपं ज्ञानं विरोधि न तु चिद्रूपं स्वतः सिद्धं ज्ञानं भ्रमविरोधिनश्च वृत्तिरूपस्य ज्ञानस्य इदानीम-भावोऽस्त्येव।** भ्रमे तन्त्रं भ्रमव्यापकं भ्रमविरोधिज्ञानाभाव एव न तु विशेषा-ज्ञानम्। भ्रमविरोधिज्ञानाभावादेव भ्रमः न विशेषाज्ञानात्। तथा च विश्वोपादानं ब्रह्म तद्गोचराज्ञानस्य विरोधिश्रवणादिजन्यमात्ममात्रविषयकमन्तःकरणवृत्तिरूपं ज्ञानमेव। न तु इदानीमपि विद्यमानं स्वतः सिद्धं चिद्रूपं ज्ञानम्। तत् नाज्ञानविरोधि किन्तु उक्तवृत्तिरूपं ज्ञानमेवाज्ञानविरोधीति भावः। अज्ञानविरोधि तादृशवृत्तिज्ञानम् इदानीं प्रपञ्चभ्रमदशायां नास्त्येवेति। परस्परविरुद्धस्वभावयोरात्मानात्मनोर्भेदग्रहस्य सत्त्वात् कथम् आत्मनि अधिष्ठानेऽ-

दृश्यत्वात्मानात्मत्वादिना भेदज्ञानात् कथमध्यस्ताधिष्ठानभाव—इति चेत् ॥३॥

न, इदमनिदं न भवतीति पुरोवर्त्यपुरोवर्तिनोर्भेदग्रहेऽपीदं रजतमित्यध्यासवत् सन घट इत्याद्यध्यासो भविष्यति। न हि रूपान्तरेण भेदग्रहो रूपान्तरेणाध्यासविरोधी, सन्घट इत्यादिप्रत्यये च सद्रूपस्यात्मनो घटाद्यनुविद्धतया भानान्न तस्य घटाद्यध्यासाधिष्ठानतानुपपत्तिः। सद्रूपेण च सर्वज्ञानविषयतोपपत्तेर्न रूपादिहीनस्याप्यात्मनः कालस्येव चाक्षुषत्वाद्यनुपपत्तिः। ननु—विश्वं यदि कल्पितं स्यात्

---

नात्मनोऽध्यास इति पूर्वपक्षी शंकते—ननु आत्मानात्मनोर्द्रष्टृदृश्यत्वात्मानात्मत्वादिना भेदज्ञानात् कथमध्यस्ताधिष्ठानभाव इति चेत्। यच्च उक्तञ्च वाचस्पत्ये—अध्यासो हि भेदाग्रहेण व्याप्तः तद्विरुद्धश्चेहास्ति भेदग्रहः स विरोधितया भेदाग्रहं निवर्तयन् तद्व्याप्तमध्यासमपि निवर्तयतीति तदेवेह पूर्वपक्षिणाऽप्युपन्यस्तम्। यद्विरुद्धधर्माध्यस्तं तन्नाना इति व्याप्त्या आत्मत्वानात्मत्वयोः द्रष्टृत्वदृश्यत्वयोः विरुद्धधर्मयोः सम्बन्धात् आत्मानात्मानौ भिन्नौ इति भेदग्रहस्य सत्त्वात् नात्मनि अनात्मनोऽभेदेनाध्यासः सम्भवतीति ॥३॥

४—रूपान्तरेण भेदग्रहेऽपि यद्रूपेणाध्यस्ताधिष्ठानभावः तद्रूपेण भेदग्रहस्यासत्त्वात् भेदाग्रहस्यैव विद्यमानत्वात् न अध्यासानुपपत्तिरित्याह सिद्धान्ती—न इदमिदं न भवतीति पुरोवर्त्यपुरोवर्तिनोर्भेदग्रहेऽपि इदं रजतमित्यध्यासवत् सन् घट इत्यध्यासो भविष्यति। न हि रूपान्तरेण भेदग्रहो रूपान्तरेणाध्यासविरोधी, सन् घट इत्यादिप्रत्यये च सद्रूपस्य आत्मनो घटाद्यनुविद्धतया भानात् न तस्य घटाद्यध्यासाधिष्ठानतानुपपत्तिः। सद्रूपेण च सर्वज्ञानविषयतोपपत्तेर्न रूपादिहीनस्यापि आत्मनः कालस्येव चाक्षुषत्वाद्यनुपपत्तिः। शुक्तिरजताध्यासे शुक्तिरजते पुरोवर्त्यपुरोवर्तिनी अतस्तयोः पुरोवर्तित्वापुरोवर्तित्वाभ्यां भेदग्रहेऽपि इदन्त्वरजतत्वाभ्यां भेदाग्रहात् यथाध्यासः तथा सन् घटः इत्याद्यध्यासोऽपि भविष्यति। न हि रूपान्तरेण भेदग्रहः रूपान्तरेण भेदाग्रहं विरुणद्धि। न हि आत्मत्वानात्मत्वाभ्यामात्मनात्मनोर्भेदग्रहेऽपि सत्त्वघटत्वरूपेण सद्घटयोर्भेदाग्रहं निवारयति। आत्मन एव

तदा सप्रधानं स्यात्, न चैवम्, तस्मात् न कल्पितमिति—चेत् ॥४॥

सद्रूपेण घटाद्यनुगततया भानात् सन् घट इति प्रत्यक्षे सद्रूपात्मैव घटानुगततया चाक्षुषप्रतीतौ भासते। अतः सद्रूपेण आत्मनः घटाद्यध्यासाधिष्ठानत्वं न विरुद्ध्यते। आत्मनः सद्रूपेण सर्वज्ञानविषयत्वोपपत्तेः। उक्तञ्च परैरपि सत्तागुणत्वे च सर्वेन्द्रियग्राह्ये समवायोऽभावश्च तथा इति उद्योतकरीयवार्तिके [पृ० २०४] यथा मीमांसकैः न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते इति वदद्भिः कालस्य सर्वप्रत्ययवेद्यत्वाभ्युपगमात् रूपादिहीनस्यापि चाक्षुषत्वमभ्युपगतं तथा अस्माभिरपि रूपादिरहितस्यापि आत्मनः कालस्येव चाक्षुषत्वं स्वीकुर्मः। प्रतिनियतेन्द्रियवेद्ये रूपाद्यपेक्षायामपि सर्वेन्द्रियवेद्ये रूपाद्यपेक्षाया अभावात्।

इति विश्वं कल्पितम् स्यात् साधिष्ठानं स्यादिति प्रथमतर्कपराघातोद्धारः।

प्रतिकूलतर्कप्रयोगश्चेत्थम्—विश्वं यदि अकल्पितं स्यात् दृश्यं न स्यात् न च विश्वमदृश्यं तस्मात् कल्पितमिति सिद्धान्तिना अनुकूलतर्के प्रदर्शिते पूर्वपक्षी प्रतिकूलतर्कं हेतोः साधकत्वप्रतिघाताय दर्शयति—विश्वं यदि कल्पितं स्यात् साधिष्ठानं स्यात्। न च साधिष्ठानं ब्रह्मणोऽधिष्ठानत्वासम्भवात् तस्मान्न कल्पितम्। ब्रह्मणोऽधिष्ठानत्वसमर्थनेन प्रथमप्रतिकूलतर्कप्रतिघातो व्युदस्त इति।

विश्वं यदि कल्पितं स्यात् सत्यप्रधानं स्यात् इति द्वितीयप्रतिकूलतर्कमाशङ्कते पूर्वपक्षी—ननु विश्वं यदि कल्पितं स्यात् सत्य [स] प्रधानं स्यात् न चैवं तस्मात् न कल्पितमिति चेत्। अध्यासे संस्कारस्य कारणत्वात् यद्विषयकानुभवजन्यसंस्कारोऽध्यासे कारणं तत्तदध्यासे प्रधानं यथा रजताध्यासे आपणादिस्थरजतानुभवजन्यसंस्कारः रजताध्यासे कारणमतः रजताध्यासे आपणस्थरजतं प्रधानं प्रधानाधिष्ठानयोः सादृश्यं सादृश्यज्ञानजन्याध्यासेऽपेक्ष्यते। यद्यपि प्रधानसंस्कारस्यैव भ्रमहेतुत्वेन प्रधानस्य भ्रमहेतुत्वाभावात् तथापि प्रधानप्रमाजन्यसंस्कारस्य भ्रमहेतुत्वात् प्रधानस्य सत्यत्वमपेक्षितम्। प्रधानं यदि सत्यं न स्यात् कस्य प्रमाजन्यसंस्कारः भ्रमहेतुः स्यात्। विश्वस्य कल्पितत्वे विश्वस्याधिष्ठानं यथा सत्यमपेक्षितं तथा प्रधानमपि सत्यमपेक्षितम्। तथा च प्रपञ्चाध्यासे सत्यं प्रपञ्चान्तरं प्रधानरूपमवश्यमङ्गीकरणीयम्। एवञ्च प्रपञ्चमात्रस्य न कल्पितत्वसिद्धिरिति पूर्वपक्षिणो भावः ॥४॥

न, अत्रापि प्रधानस्य सजातीयस्य सत्त्वात्, पूर्वप्रपञ्चसजातीयस्यैवोत्तरप्रपञ्चस्याध्यसनात्। अध्यासो हि स्वकारणतया संस्कारमपेक्षते, न तु संस्कारविषयस्य सत्यताम् अनुपयोगात्। न च—प्रमाजन्य एव संस्कारो भ्रमहेतुः, अतो विषयसत्यत्वमावश्यकमिति—वाच्यम् मानाभवात्, विपरीते लाघवाच्च। अत एव—अध्यस्तसजातीयं पूर्वमध्यस्तापेक्षयाऽधिकसत्ताकमपेक्षणीयमित्यपि—निरस्तम् सत्यतावदधिकसत्ताया अप्यनुपयोगात्। पूर्वं तु ज्ञानमात्रमपेक्षते, तच्चास्त्येव ॥५॥

---

५.—प्रपञ्चाध्यासेऽपि प्रधानं स्वीकुर्वन् समाधत्ते सिद्धान्ती—न, अत्रापि प्रधानस्य सजातीयस्य सत्त्वात्। पूर्वप्रपञ्चसजातीयस्यैव उत्तरप्रपञ्चस्याध्यसनात् अध्यासो हि स्वकारणतया संस्कारमपेक्ष्यते न तु संस्कारविषयस्य सत्यतायामनुपयोगात्। न च प्रमाजन्य एव संस्कारो भ्रमहेतुरतो विश्वसत्यत्वमावश्यकमिति वाच्यं, मानाभावात् विपरीते लाघवाच्च। अत एव अध्यस्तसजातीयं पूर्वमध्यस्तापेक्षया अधिकसत्ताकमपेक्षणीयमित्यपि निरस्तं सत्यतावदधिकसत्ताया अप्यनुपयोगात्। पूर्वं तु ज्ञानमात्रमपेक्षते तच्चास्त्येव। एतत्प्रपञ्चाध्यासे एतत्सजातीयपूर्ववर्तिप्रपञ्चान्तरस्य सत्त्वात्। एतत्प्रपञ्चसजातीयपूर्वप्रपञ्चान्तरस्य एतत्प्रपञ्चाध्यासे प्रधानत्वात्। सृष्टिप्रलयप्रवाहस्यानादित्वात्। पूर्वपूर्वप्रपञ्चानुभवजन्यसंस्कारस्य उत्तरोत्तरप्रपञ्चाध्यासे हेतुत्वात् न प्रपञ्चाध्यासे प्रधानासत्त्वमिति। पूर्वप्रपञ्चसजातीयस्यैव उत्तरप्रपञ्चाध्यासात्। संस्कारो हि अध्यासे कारणं न तु संस्कारविषयस्य सत्यत्वमपि अध्यासे कारणम्। मिथ्याज्ञानजन्यसंस्कारस्यापि अध्यासहेतुत्वदर्शनात् संस्कारत्वेनैव संस्कारस्याध्यासहेतुत्वात् न तु प्रमाजन्यसंस्कारत्वेन गौरवात्। तादृशसंस्कारत्वेनाध्यासहेतुत्वे मानाभावात्। भ्रमप्रमासाधारणानुभवजन्यसंस्कारत्वेन हेतुत्वे लाघवाच्च। संस्कारत्वमपेक्ष्य प्रमाजन्यसंस्कारत्वस्य गौरवात् संस्कारत्वस्य तदपेक्षया लघुत्वाच्च। ये तु वैशेषिका ज्ञेयत्वप्रमेयत्वयोर्व्याप्तिमभ्युपगच्छन्ति। तन्मते ज्ञेयस्य प्रमेयत्वावश्यकत्वेऽपि अस्माभिस्तद्व्याप्तेरनङ्गीकारात् नियमापत्तिः सम्भवतीति भावः। संस्कारत्वेन संस्कारस्य भ्रमहेतुत्वादेव संस्कारविषयस्य अध्यस्तापेक्षया अधिकसत्त्वाकत्वमपि नापेक्षणीयम्। अध्यस्त-

ननु—एवमधिष्ठानस्यापि ज्ञानमात्रमेव हेतुः, न, तु तदिति न सदधिष्ठानापेक्षा स्यादिति शून्यवादापत्तिरिति चेत्। न, अधिष्ठानस्य ज्ञानद्वारा भ्रमहेतुत्वेऽप्यज्ञानद्वारा भ्रमहेतुत्वेन सत्त्वनियमात्। भ्रमोपादानाज्ञानविषयो ह्यधिष्ठानमित्युच्यते, तच्च सत्यमेव असत्यस्य सर्वस्याप्यज्ञानकल्पितत्वेनाज्ञानाविषयत्वात्, तदसत्यत्वे तज्ज्ञानस्य भ्रमाबाधकत्वप्रसङ्गात्। जगति भ्रमबाधव्यवस्था च न स्यात्। बाधेन हि किंचिद्विरुद्धं तत्त्वमुपदर्शयता आरोपितमतत्त्वं बाधनीयम्, उभयाध्यासे तु किं केन बाध्यते? अत एव भगवता भाष्यकारेण—"सत्यानृते मिथुनीकृत्ये"त्युक्तम्। ननु—एतत्प्रपञ्चस्याध्या-

---

सजातीयमध्यासे प्रधानीभूतं पूर्वसिद्धमध्यस्तापेक्षया अधिकसत्ताकं नापेक्षणीयमध्यासकारणत्वेन इति शेषः। अध्यासे अनुपयोगात् इति भावः। प्रधानस्य ज्ञानमात्रं संस्कारकारणतया अपेक्षितं तच्च अस्त्येव इति न दोषः ॥५॥

६—यदि अध्यासे प्रधानस्य ज्ञानमात्रमेवापेक्षणीयं न तु प्रधानस्य सत्यत्वं तर्हि अधिष्ठानस्यापि ज्ञानमात्रमेवाध्यासे अपेक्षणीयं न तु अधिष्ठानस्य सत्यत्वमपि। तथा च शून्यवादापत्तिरिति शंकते पूर्वपक्षी—ननु एवमधिष्ठानस्यापि ज्ञानमात्रमेव हेतुः न तु तदिति न सदधिष्ठानापेक्षा स्यादिति शून्यवादापत्तिरिति चेत्। कृतविवरणमेतत्।

सिद्धान्ती समाधत्ते—न, अधिष्ठानस्य ज्ञानद्वारा भ्रमहेतुत्वेऽपि अज्ञानद्वारा भ्रमहेतुत्वेन सत्त्वनियमात्। भ्रमोपादानाज्ञानविषयो हि अधिष्ठानमित्युच्यते तच्च सत्यमेव। असत्यस्य सर्वस्यापि अज्ञानकल्पितत्वेन अज्ञानाविषयत्वात् तदसत्यत्वे तज्ज्ञानस्य भ्रमाबाधकत्वप्रसङ्गात्। जगति भ्रमबाधव्यवस्था च न स्यात्। बाधेन हि किञ्चित् विरुद्धं तत्त्वमुपदर्शयता आरोपितमतत्त्वं बाधनीयमुभयाध्यासे तु किं केन बाध्यते? अत एव भगवता भाष्यकारेण सत्यानृते मिथुनीकृत्येत्युक्तम्। अधिष्ठानस्य ज्ञातत्वमज्ञातत्वञ्च द्वयमध्यासेऽपेक्षणीयम्। तथा च अधिष्ठानं यथा ज्ञानद्वारा अध्यासहेतुरेवम् अज्ञानद्वारापि, अध्यासस्य विषयज्ञानोभयात्मकस्य परिणाम्युपादानं यदज्ञानं तद्विषयत्वमेव वाधिष्ठानत्वम्। अज्ञान-

र्थक्रियाकारिणः प्रपञ्चान्तरस्याभावेन स्वोचितार्थक्रियाकारिणोऽस्य न मिथ्यात्वमिति—चेत् ॥६॥

न, स्वाप्नमायादौ व्यभिचारात्। स्वोचितार्थक्रियाकारित्वस्य पारमार्थिकसत्त्वाप्रयोजकत्वात्। नापि श्रुत्यादिसिद्धोत्पत्त्यादिमत्त्वं सत्त्वे

---

विषयस्य सत्यत्वमेवासत्यस्य अज्ञानविषयत्वायोगात् असत्यमात्रस्य अज्ञानकल्पितत्वेनाज्ञानविषयत्वायोगात्। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः इति न्यायात्। न केवलमज्ञानविषयत्वायाधिष्ठानस्य सत्यत्वमधिष्ठानज्ञानस्य भ्रमबाधकत्वादपि भ्रमबाधकज्ञानविषयस्याधिष्ठानस्य सत्यत्वम्। अधिष्ठानस्य मिथ्यात्वे तज्ज्ञानस्य भ्रमबाधकत्वमपि न स्यात्। अधिष्ठानस्य मिथ्यात्वे भ्रमबाधव्यवस्थैव न स्यात्। भ्रमबाधकज्ञानेन भ्रमविषयीभूतात् विषयात् विरुद्धं किञ्चित् तत्त्वं विषयीकुर्वता भ्रमो बाधनीयः। भ्रमज्ञानविषयीभूतं भ्रमज्ञानञ्च उभयमतत्त्वमविद्यापरिणामत्वात्। अतत्त्वमेव तत्त्वज्ञाने बाध्यते। भ्रमाधिष्ठानयोरुभयोरतात्त्विकत्त्वे किं केन बाध्यते। उभयोरतात्त्विकत्वाविशेषात्। अत एव भ्रमबाधव्यवस्थासिद्ध्यर्थमेवाध्यासभाष्ये भाष्यकारेण सत्यानृतमिथुनीकरणमध्यास इत्युक्तम्। सत्यमधिष्ठानमनृतमारोप्यं तयोर्मिथुनीकरणमध्यास इत्युक्तम्। स्वोचितार्थक्रियाकारिणः प्रपञ्चस्य कथं मिथ्यात्वमिति शङ्कते—**ननु एतत् प्रपञ्चसाध्यार्थक्रियाकारिणः प्रपञ्चान्तरस्याभावेन स्वोचितार्थक्रियाकारिणः अस्य न मिथ्यात्वमिति चेत्।** एतत्प्रपञ्चस्य मिथ्यात्वे उच्यमाने पूर्वपक्षिणा उक्तमेतत्प्रपञ्चस्य मिथ्यात्वे प्रधानभूतः प्रपञ्चः सत्यो भविष्यतीति सिद्धान्तिना तस्यापि भ्रमसिद्धत्वेन मिथ्यात्वाङ्गीकारे तु अस्यैव प्रपञ्चस्य सत्यत्वं सिद्ध्यतीत्याह—एतत्प्रपञ्चसाध्येति यथा शुक्तिरूप्यस्य मिथ्यात्वात् तदसाध्यार्थक्रियाकारि आपणस्थं रजतं यथा सत्यमङ्गीक्रियते। एवमस्यापि प्रपञ्चस्य मिथ्यात्वाङ्गीकारे एतत्प्रपञ्चासाध्यार्थक्रियाकारिप्रपञ्चान्तरमङ्गीकार्यं तस्यापि मिथ्यात्वाङ्गीकारे अर्थक्रियाकारित्वादिना प्रमितस्य अस्यैव प्रपञ्चस्य तात्त्विकत्वं स्यादिति ॥६॥

७—अर्थक्रियाकारित्वस्य सत्यत्वासाधकत्वादित्याह सिद्धान्ती—**स्वाप्नमायादौ व्यभिचारात्। स्वोचितार्थक्रियाकारित्वस्य पारमार्थिकसत्त्वा-**

तन्त्रम्; स्वप्नप्रपञ्चे व्यभिचारात्, तस्यापि 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथस्सृजत' इत्यादिश्रुत्योत्पत्त्यादिप्रतिपादनात्। न च कल्पाद्यभ्रमायोगः; कल्पान्तरीयसंस्कारस्य तत्र हेतुत्वात्। न च जन्मान्तरीयसंस्कारस्य कार्यजनकत्वे अतिप्रसङ्गः, अदृष्टादिवशेन क्वचिदुद्बोधेऽप्यन्यत्रानुद्बोधोपपत्तेः। कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात्। अन्यथा जातस्य स्तन्यपानादौ प्रवृत्तिर्न स्यात् ॥७॥

---

प्रयोजकत्वात्। नापि श्रुत्यादिसिद्धोत्पत्त्यादिमत्त्वं सत्त्वे तन्त्रं स्वप्नप्रपञ्चे व्यभिचारात्। तस्यापि न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते इत्यादिश्रुत्या उत्पत्त्यादिप्रतिपादनात्। न च कल्पाद्यभ्रमायोगः कल्पान्तरीयस्य संस्कारस्य तत्र हेतुत्वात्, न च जन्मान्तरीयसंस्कारस्य कार्यजनकत्वेऽतिप्रसंगः। अदृष्टादिवशेन क्वचिदुद्बोधेऽप्यन्यत्रानुद्बोधोपपत्तेः। कार्योन्नेयधर्माणां यथा कार्यमुन्नयनात्। अन्यथा जातस्य स्तन्यपानादौ प्रवृत्तिर्न स्यात्। यद्यत् अर्थक्रियाकारि तत् सत्यमित्येषा व्याप्तिरेवासिद्धा, स्वप्नप्रपञ्चे मायिकप्रपञ्चे च व्यभिचारात्। स्वप्नोपदर्शितस्त्र्यादौ अर्थक्रियाकारित्वसत्त्वेऽपि सत्यत्वाभावात्। एवमसुररक्षःप्रभृतिभिर्मायाविपुरुषेण चोत्थापिते मायादौ ऐन्द्रजालिकपुरुषोपदर्शिते-न्द्रजालादौ च अर्थक्रियाकारित्वसत्त्वेऽपि सत्यत्वाभावात् अर्थक्रियाकारित्वस्य सत्यत्वव्यभिचारात्। अतः स्वोचितार्थक्रियाकारित्वस्य पारमार्थिकसत्त्वासाधकत्वात्। नापि श्रुत्यादिसिद्धोत्पत्तिकत्वस्य पारमार्थिकसत्त्वप्रयोजकत्वम्। श्रुत्यादिसिद्धोत्पत्तिकत्वं न पारमार्थिकसत्त्वव्याप्यम्। छान्दोग्यश्रुतौ स्वाप्नरथादीनां स्वप्ने उत्पत्त्यादिश्रवणात् श्रुत्यादिसिद्धोत्पत्तिकस्य स्वप्नार्थस्यापारमार्थिकत्वादिति। पूर्वसंस्कारस्य भ्रमहेतुत्वे कल्पादौ भ्रमो न स्यात् कल्पारम्भात् प्राक् अनुभवायोगेन संस्कारस्यासम्भवात्। अध्यासे प्रधानस्य 'असत्यत्वमङ्गीकृत्य प्रधानभ्रमजन्यसंस्कारस्यैव भ्रमहेतुत्वाङ्गीकारे दोषमाह—कल्पाद्यभ्रमायोगाच्च इति। समाधत्ते—पूर्वकल्पीयसंस्कारस्य एतत्कल्पाद्यभ्रमहेतुत्वसम्भवादिति। शङ्कते जन्मान्तरीयसंस्कारस्य भ्रमहेतुत्वेऽतिप्रसङ्गात्। जन्मान्तरीयसंस्कारात् स्मृतेरुदये जन्मान्त-

ननु—चैत्रेण मैत्रे संस्काराध्यासेऽपि मैत्रस्य भ्रमादर्शनात् जगद्भ्रमहेतुसंस्कारस्य सत्त्वं दुर्वारम्, न च स्वेनाध्यस्तात्संस्काराद्भ्रमः, भ्रमात्पूर्वं स्वस्य कार्यानुमेयसंस्काराध्यासनियमाभावादिति—चेत् ।

न, शुक्तिरूप्यस्य कुण्डलाजनकत्ववच्चैत्राध्यस्तसंस्कारस्य मैत्रभ्रमाजनकत्वेऽपि वणिग्वीथीस्थरूप्यस्य कुण्डलजनकत्ववत्स्वेनाध्यस्तस्य संस्कारस्य वियदाद्यध्यासजनकत्वोपपत्तेः तत्प्रतीत्यभावेऽपि तदध्यासस्य पूर्वं सत्त्वात् - कृत्स्नस्यापि व्यावहारिकपदार्थस्य अज्ञातसत्त्वाभ्युपगमात् ॥८॥

---

रानुभूतं पित्रादिकं स्मरेत इत्यतिप्रसङ्गः स्यात् । समाधत्ते—क्वचित् अदृष्टादिवशेन जन्मान्तरीयसंस्कारोद्बोधेऽपि जन्मान्तरीयसंस्काद्बोधकस्य अदृष्टादेः सर्वदा अभावात् अनुद्बोधोपपत्तेः । यदपि जन्मान्तरानुभूतं न स्मर्यत इति अभियुक्तवचनं तत् प्रायिकाभिप्रायं बोध्यम् । कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात् । भ्रमस्य संस्कारजन्यत्वावधारणात् कल्पाद्यभ्रमेऽपि संकारजन्य एव अस्मिन् कल्पे तदसम्भवात् कल्पान्तरीयः संस्कारः कल्प्यते । जन्मान्तरानुभूतमात्रस्यैव स्मरणासम्भवे बालस्य स्तन्यपानादौ प्रवृत्तिर्न स्यात् । उक्तञ्च प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् [अक्ष० सू० ३।१।२२] ॥७॥

८—जगद्भ्रमहेतुसंस्कारस्य सत्यत्वं दुर्वारमित्याशङ्क्य समाधत्ते सिद्धान्ती—ननु चैत्रेण मैत्रे संस्काराध्यासेऽपि मैत्रस्य भ्रमादर्शनात् जगद्भ्रमहेतुसंस्कारस्य सत्त्वं दुर्वारं न च स्वेनाध्यस्तात् संस्काराद् भ्रमः भ्रमात्पूर्वं स्वस्य कार्यानुमेयसंस्काराध्यासनियमाभावादिति चेत् ? न, शुक्तिरूप्यस्य कुण्डलाजनकत्ववत् चैत्राध्यस्तसंस्कारस्य मैत्रभ्रमाजनकत्वेऽपि वणिग्वीथीस्थरूप्यस्य कुण्डलजनकत्ववत् स्वेनाध्यस्तस्य संस्कारस्य वियदाद्यध्यासजनकत्वोपपत्तेः तत्प्रतीत्यभावेऽपि तदध्यासस्य पूर्वं सत्त्वात् कृत्स्नस्यापि व्यावहारिकपदार्थस्य अज्ञातसत्त्वाभ्युपगमात् । सत्यस्य प्रधानस्य भ्रमहेतुत्वमनङ्गीकुर्वता संस्कारस्य भ्रमहेतुत्वमङ्गीकृतं तथापि संस्कारस्यैव सत्यत्वं स्यादित्याह पूर्वपक्षी—ननुचैत्रेण मैत्रे इति । यदि सत्यः संस्कारो भ्रमहेतुर्न स्यात् तर्हि मैत्रे संस्कारोऽस्तीत्येवं चैत्रेणाध्यासः कृतः तथा च चैत्राध्यस्तसंस्कारस्य मैत्रेऽपि विद्यमानत्वात् मैत्रस्य भ्रमः स्यात् ।

ननु प्रातिभासिकरूप्ये त्रैकालिकनिषेधस्य त्वन्मते व्यावहारिकरूप्यविषयत्ववद्व्यावहारिकप्रपञ्चेऽपि 'नेह नाने'ति त्रैकालिकनिषेधस्य पारमार्थिकप्रपञ्चान्तरविषयताऽवश्यं वाच्येति—चेत् ॥९॥

---

न हि एवं दृश्यते। अतः सत्यसंस्कारस्यैव भ्रमहेतुत्वमित्यर्थः। ननु न सत्यसंस्कारस्य भ्रमहेतुत्वं न च उक्तातिप्रसङ्गः मयि संस्कारोऽस्तीति स्वाध्यस्तसंस्कारस्यैव भ्रमहेतुत्वाङ्गीकारेणान्याध्यस्तसंस्कारस्य तद्धेतुत्वानङ्गीकारादित्याशङ्क्य निराकरोति पूर्वपक्षी—**न च स्वेनाध्यस्तसंस्कारादिति**। स्वेनाध्यस्तसंस्कारात् स्वस्मिन् भ्रम इति सम्बन्धः। अनाहार्यनिरुपाधिकभ्रमात् पूर्वं संस्कारस्य कारणत्वेन तस्य सत्त्वं वाच्यं, न तु तस्याध्यस्तत्वं संस्कारस्याज्ञातकारणत्वात्। ननु तर्हि तत्सत्त्वं कथं ज्ञातव्यमिति चेन्न भ्रमरूपकार्ये सति अस्य संस्कारः पूर्वं वृत्त इति तस्य कार्यानुमेयत्वात् कार्यानुमेयधर्माणां यथाकार्यं समुन्नयनात्। भ्रमात् पूर्वं मयैव भ्रमकारणस्य संस्कारस्यास्याध्यासकृत इति नियमाभावत्। अज्ञातसंस्कारस्यैव भ्रमकारणत्वात्। समाधत्ते—शुक्तिरूप्यस्य कुण्डलजनकत्वाभावेऽपि वणिग्वीथीस्थरूप्यस्य कुण्डलजनकत्ववत् चैत्राध्यस्तसंस्कारस्य मैत्रभ्रमाजनकत्वेऽपि स्वेनाध्यस्तसंस्कारस्य वियदाद्यध्यासजनकत्वोपपत्तेः। प्रातिभासिकव्यावहारिकयोरुभयोरध्यस्तत्वेऽपि प्रातिभासिकेन यन्न भवति व्यावहारिकेण तद्भवति इति यथा तथैव अन्याध्यस्तसंस्कारेण यो भ्रमो न भवति स्वाध्यस्तसंस्कारेण स भवति इति नियमे न कोऽपि दोषः, दृष्टानुसारात् स्वाध्यस्तसंस्कारस्य प्रतीतिरपेक्षिता इति नास्माभिरुच्यते स्वाध्यस्तत्वेन संस्कारस्य प्रतीत्यभावेऽपि अध्यासात् कार्यात् पूर्वं तत्कारणस्य संस्कारस्य सत्त्वात्। व्यावहारिकप्रपञ्चस्याज्ञातसत्ताभ्युपगमात् ॥८॥

९—पूर्वपक्षी शङ्कते—**ननु प्रातिभासिकरूप्ये त्रैकालिकनिषेधस्य त्वन्मते व्यावहारिकरूप्यविषयत्ववद्व्यावहारिकप्रपञ्चेऽपि नेह नानेति त्रैकालिकनिषेधस्य पारमार्थिकप्रपञ्चान्तरविषयताऽवश्यं वाच्येति चेत्**। उक्तं च विवरणे—लौकिकपरमार्थरजतस्य अत्र कालत्रयेऽपि शून्यत्वात्तदपेक्षया निरुपाधिकनिषेधसिद्धेः। [पृ० ३९] इति विवरणवाक्यस्य आक्षरिकार्थं गृहीत्वा पूर्वपक्षी शङ्कते प्रातिभासिकरूप्ये त्रैकालिकनिषेधस्य सिद्धान्तिमते व्यावहारिकरूप्यविषयत्ववदिति। वस्तुतो विवरणवाक्यस्य नायमर्थः उक्तं च तत्त्वप्रदीपिकायाम्—

न, भ्रमबाधवैयधिकरण्यापातेनास्य पक्षस्यानङ्गीकारपराहतत्वात्। अङ्गीकारेऽपि व्यावहारिकनिषेधे पारमार्थिकनिषेधत्वं न संभवति अप्रतीतस्य निषेधायोगात्। प्रतीत्या सहाध्यासातिरिक्तसम्बन्धाभावेन पारमार्थिके प्रतीतत्वाभावात् ॥१०॥

---

तस्माल्लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेधप्रतियोगीति पूर्वाचार्यवाचोयुक्तिरपि पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनात् लौकिकरजतात्मत्वेन अपरोक्षतया प्रतीतस्य कालत्रयेऽपि लौकिकरजतमिदं न भवतीति निषेधप्रतियोगितामङ्गीकृत्य नेतव्या। [पृ० ८०] द्वितीयमिथ्यात्वलक्षणे आचार्यैरेवास्य निष्कर्षः प्रदर्शितः [पृ० १२४] अतो विवृरणवाक्यार्थानवबोधविजृम्भितोऽयं पूर्वः पक्षः। पूर्वपक्षस्याभिप्रायस्तु—प्रातिभासिकरजतप्रसक्तौ तन्निषेधप्रतियोगित्वं यथा विवरणे व्यावहारिकरूप्ये स्वीक्रियते, तथा व्यावहारिकप्रपञ्चप्रसक्तौ तन्निषेधप्रतियोगित्वं पारमार्थिकप्रपञ्चे स्यात्। प्रातिभासिकापेक्षया अधिकसत्त्वं यथा व्यावहारिके तथा व्यावहारिकापेक्षया अधिकसत्त्वं पारमार्थिके तथा च पारमार्थिकप्रपञ्चसिद्धिरिति ॥९॥

१०—समाधत्ते सिद्धान्ती—न, भ्रमबाधवैयधिकरण्यापातेनास्य पक्षस्य अनङ्गीकारपराहतत्वात्। अङ्गीकारेऽपि व्यावहारिकनिषेधे पारमार्थिकनिषेधत्वं न सम्भवति अप्रतीतस्य निषेधायोगात्। प्रतीत्या सह अध्यासातिरिक्तसम्बन्धाभावेन पारमार्थिके प्रतीतत्वाभावात्। भ्रमे प्रातिभासिकरजतप्रसक्तौ व्यावहारिकरजतस्य निषेधे भ्रमबाधयोर्वैयधिकरण्यं स्यात्। अन्यत् प्रसक्तम् अन्यत् बाधितमिति अप्रसक्तप्रतिषेधः स्यात्। प्रातिभासिकं रजतं प्रसक्तं तन्न निषिद्धं व्यावहारिकं रजतमप्रसक्तं तस्यैव निषेधः अङ्गीकृतः स्यात्, अतोऽयं पक्षः अनङ्गीकारपराहत एव। द्वितीयमिथ्यात्वलक्षणे अस्य विवरणमतस्य निष्कर्षः प्रदर्शित एव। प्रातिभासिकप्रसक्तौ व्यावहारिकस्य निषेधाङ्गीकारेऽपि तद्दृष्ट्या व्यावहारिकप्रपञ्चस्य निषेधे पारमार्थिकप्रपञ्चप्रतियोगिकत्वं न सम्भवति पारमार्थिकप्रपञ्चस्य अप्रतीतत्वात्। अप्रतीतप्रतियोगिकत्वं निषेधस्य न सम्भवति। पारमार्थिकप्रपञ्चस्य प्रतीतत्वे स्वीक्रियमाणे तस्य पारमार्थिकत्वं न स्यात्। प्रतीतस्य—प्रतीतिविषयस्य प्रतीत्या सहानाध्यासिकसम्बन्धाभावेनाध्यासिकसम्बन्धे

ननु—प्रधानाधिष्ठानयोः सादृश्याभावात्कथमध्यासः ? अथ निर्गुणयोरपि गुणयोः सादृश्यवदत्रापि किंचित्सादृश्यं भविष्यतीति तन्न, निर्धर्मके ब्रह्मणि तस्याप्यध्यासाधीनत्वेनान्योन्याश्रयात्। यद्यपि सादृश्यं सोपाधिकाध्यासे न कारणम् व्यभिचारात्, तथापि निरुपाधिकाध्यासेऽन्वयव्यतिरेकाभ्यां तस्यावश्यमपेक्षणीयत्वात्। सोपाधिकेऽपि रक्तः स्फटिक इत्यादौ द्रव्यत्वादिना सादृश्यस्य सत्त्वाच्चेति—चेत् ॥११॥

---

वक्तव्ये प्रतीतौ प्रपञ्चः अध्यस्त एव स्यात् न तस्य पारमार्थिकत्वमिति भावः। विश्वं यदि कल्पितं स्यात् सत्यप्रधानं स्यात् इति द्वितीये प्रतिकूलतर्के प्रधानस्य मिथ्यात्वसमर्थनेन अयं तर्को निरस्तो वेदितव्यः ॥१०॥

द्वितीयप्रतिकूलतर्कनिरासः

११—विश्वं यदि कल्पितं स्यात् तदा प्रधानाधिष्ठानयोः सत्यसादृश्योपेतं स्यादिति तृतीयप्रतिकूलतर्कमाशङ्कते—अयं भावः सिद्धान्तिना प्रधानाधिष्ठानयोः सत्यं सादृश्यं नाङ्गीकर्तुं शक्यं, सादृश्यं हि गुणकर्मादिरूपं [कृत] वाच्यं तच्च गुणादिरहिते ब्रह्मणि नास्त्येव अतः प्रधानप्रतियोगिकसादृश्यस्याधिष्ठाने ब्रह्मणि अभावात् न विश्वं कल्पितमिति शङ्कते पूर्वपक्षी—ननु प्रधानाधिष्ठानयोः सादृश्याभावात् कथमध्यासः ? अथ निर्गुणयोरपि गुणयोः सादृश्यवदत्रापि किञ्चित् सादृश्यं भविष्यतीति, तन्न निर्धर्मके ब्रह्मणि तस्यापि अध्यासाधीनत्वेनान्योन्याश्रयात्। यद्यपि सादृश्यं सोपाधिकाध्यासे न कारणं व्यभिचारात् तथापि निरुपाधिकाध्यासेऽन्वयव्यतिरेकाभ्यां तस्य अवश्यमपेक्षणीयत्वात्। सोपाधिकेऽपि रक्तः स्फटिक इत्यादौ द्रव्यत्वादिना सादृश्यस्य सत्त्वाच्चेति चेत्। विश्वस्य कल्पितत्वेऽपि प्रधानसादृश्यमधिष्ठानेऽस्त्येव न च गुणादिकृतसादृश्यं न सम्भवति ब्रह्मणो निर्गुणत्वादिति वाच्यं, निर्गुणयोरपि सादृश्यविवरणे उक्तम् "निरुपाधिकभ्रमकार्यदर्शनमेव गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशः सर्पगन्धः इति वत् सादृश्यं वा शङ्खपीतिमादाविव कारणान्तरं कल्पयति [विवरणम्, पृ० १०]। सादृश्यप्रतीतिबलात् सर्पगन्धकेतकीगन्धयोः सादृश्यं वर्तते इति अङ्गीकर्तव्यम्। तन्न सम्भवति, यथा केतकी गन्धसर्पगन्धयोः न गुणकृतं सादृश्यमस्ति गुणे गुणानङ्गीकारात्।

न, अविद्याध्यासस्यानादित्वेन कारणानपेक्षस्य सादृश्यानपेक्षत्वात्। अन्तःकरणाध्यासेऽप्यविद्यासम्बन्धित्वस्यैव सादृश्यस्य विद्यमानत्वात्। वस्तुतस्तु—न भ्रमे सादृश्यापेक्षानियमः निरुपाधिकेऽपि 'पीतः शङ्ख' इत्यादौ व्यभिचारात्। रक्तः स्फटिक इत्यादावपि द्रव्य-

---

नाप्यवयवकृतं गन्धस्य निरवयवत्वात्, नापि कर्मकृतं गन्धे कर्माभावात्, अतस्तत्र किञ्चित् गुणादिकृतसादृश्यभिन्नं सादृश्यान्तरं गन्धे कल्पितमस्ति इत्यङ्गीकृत्य कल्पितसादृश्येन यथा प्रतीतिर्भ्रमरूपा युक्तेति कल्प्यते तथा प्रकृतेऽपि गुणादिहीने ब्रह्मणि वास्तवसादृश्याभावेऽपि सादृश्यान्तरं किञ्चित् कल्पनीयमिति इष्टापत्तिः। अथ वा रक्तस्फटिक [रक्तः स्फटिक] इत्यादौ रक्तद्रव्यस्फटिकयोः सादृश्याभावेऽपि स्फटिके यथा रक्तिमा आरोप्यते एवमिहापि सादृश्यं विनैव विश्वभ्रमोऽस्तु इत्यत आह—तन्नेति। जगद्भ्रमहेतुसादृश्यस्य कल्पितत्वाङ्गीकारेऽविद्ययैव कल्पितत्वं वाच्यम्, अविद्याया अपि कल्पितत्वेन सादृश्याधीनतया अध्यासेन अविद्यायां सिद्धायां तदधीनसादृश्यसिद्धिः तत्सिद्धौ च अविद्यासिद्धिरित्यन्योन्याश्रयः इति। रक्तः स्फटिक इति सोपाधिकभ्रमे सादृश्यनिरपेक्षे यद्यपि सादृश्यं न कारणं सादृश्यं विनैव सम्भवात् तथापि शुक्तिरजतादिनिरुपाधिकाध्यासेऽन्वयव्यतिरेकाभ्यां सादृश्यस्य अवश्यमपेक्षणीयत्वात्, सति सादृश्ये अध्यासः असति नेति अन्वयव्यतिरेकसिद्धं सादृश्ये निरुपाधिकाध्यासकारणत्वम्। ब्रह्मणि प्रपञ्चाध्यासस्तु निरुपाधिक एव अतस्तत्र सादृश्यमवश्यमपेक्षणीयम्। सोपाधिकाध्यासेऽपि सादृश्यमस्त्येव इत्याह—सोपाधिकेऽपीति। रक्तः स्फटिक इत्याद्यध्यासेऽपि प्रधानाधिष्ठानयोः रक्तद्रव्यस्फटिकद्रव्ययोः द्रव्यत्वगुणवत्त्वादिना सादृश्यस्य सत्त्वाच्च। पूर्वपक्षिमते भ्रममात्रे सादृश्यमवश्यमपेक्षणीयं तदभावात् न ब्रह्मणि प्रपञ्चाध्यासः। भ्रममात्रे सारूप्यं कारणमिति नैयायिकसम्मतम् यत्र भ्रमस्तत्र अवश्यं कथञ्चित् सारूप्यमिति [ता० टी; पृ० ७१] ॥११॥

१२–समाधत्ते सिद्धान्ती–न, अविद्याध्यासस्य अनादित्वेन कारणानपेक्षस्य सादृश्यानपेक्षत्वात्। अन्तःकरणाध्यासेऽप्यविद्यासम्बन्धित्वस्यैव सादृश्यस्य विद्यमानत्वात्। वस्तुतस्तु न भ्रमे सादृश्यापेक्षानियमः निरुपाधिकेऽपि पीतः शंख इत्यादौ व्यभिचारात्। रक्तस्फ-

त्वादिना सादृश्यमस्तीत्यपि न प्रधानमात्रवृत्तितया प्रागवगतमध्यास-समये चाधिष्ठानवृत्तितया गृहीतं यत् तदेव हि सादृश्यं विपर्ययप्रयोजकमिति त्वयापि वाच्यम् न तु प्रागेव प्रधानाधिष्ठानोभयवृत्तितया गृहीतम् तस्य सांशयिकत्वात्। द्रव्यत्वादि च लोहितालोहितवृत्तितया प्राग्गृहीतमिति न विपर्ययप्रयोजकम्। किं च सादृश्यं न स्वतो भ्रम-कारणम् मानाभावात् किन्तु संस्कारोद्बोधेन सामग्रीसम्पादकतया, संस्कारोद्बोधश्च न सादृश्यैकनियतः; अदृष्टादिनापि तत्सम्भवात्। तदु-क्तम्—"सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः" इति। चिन्ता-दिकं च प्रणिधानसूत्रे व्याख्यातम्। तथा चान्यतः संस्कारोद्बोधे सति सादृश्यमनुपयोगि। तदुक्तं विवरणे—"निरुपाधिकभ्रमकार्यदर्शनमेव गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशः सर्पगन्ध इतिवत् सादृ-श्यान्तरं वा, शङ्खपीतिमादाविव कारणान्तरं वा कल्पयती"ति ॥१२॥

---

टिक इत्यादावपि द्रव्यत्वादिना सादृश्यमस्तीत्यपि न प्रधानमात्र-वृत्तितया प्रागवगतम् अध्याससमये च अधिष्ठानवृत्तितया गृहीतं यत् तदेव हि सादृश्यं विपर्ययः प्रयोजकम् इति त्वयापि वाच्यं, न तु प्रागेव प्रधानाधिष्ठानोभयवृत्तितया गृहीतं तस्य संशायकत्वात् [सांशयिक-त्वात्] द्रव्यत्वादि च लोहितालोहितवृत्तितया प्राग्गृहीतमिति न विप-र्ययप्रयोजकम्। किञ्च सादृश्यं न स्वतो भ्रमकारणं मानाभावात् किन्तु संस्कारोद्बोधेन सामग्रीसम्पादकतया, संस्कारोद्बोधश्च न सादृश्यैक-नियतः अदृष्टादीनामपि तत्सम्भवात्। तदुक्तम् सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इति। चिन्तादिकञ्च प्रणिधानसूत्रे व्याख्यातम्। तथा च अन्यतः संस्कारोद्बोधे सति, सादृश्यमनुपयोगि। तदुक्तम् विवरणे निरुपाधिकभ्रमकार्यदर्शनमेव गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशः सर्पगन्ध इति वत् सादृश्यान्तरं वा शंखपीतिमा-दाविव कारणान्तरं वा कल्पयतीति। ब्रह्मणि कल्पितसादृश्येन तत्राध्यास-समर्थने अन्योन्याश्रयः पूर्वपक्षिणा उक्तः, तं परिहरति सिद्धान्ती—अनाद्यविद्याध्या-सस्य कारणानपेक्षस्य कारणतया सादृश्यस्यापि अनपेक्षणात्। अविद्या तच्चितो-

र्योगः पडस्माकमनादय इति अभियुक्तोक्तेः कार्याध्यासेषु अहङ्काराध्यास एव प्रथमः [ अहमिति तावत् प्रथमोऽध्यासः—पञ्चपादिका, पृ० ५ ] इत्याह—अन्तःकरणाध्यासेऽपीति । अहङ्काराध्यासेऽपीत्यर्थः । प्रधानाधिष्ठानयोः अविद्यासम्बन्धित्वमेव सादृश्यम् । अहङ्कारस्य अविद्यापरिणामत्वेन अविद्यासम्बन्धित्वम् अविद्योपहितस्य चैतन्यस्य अहङ्काराध्यासाधिष्ठानतया तस्य अविद्यासम्बन्धित्वम् । एतदहङ्काराध्यासे पूर्वोऽहङ्कारप्रधानमिति बोध्यम् । भ्रमे सादृश्यस्य कारणत्वमेव नास्ति इत्याह—वस्तुतस्त्विति । सादृश्यस्य भ्रमकारणत्वमभ्युपेत्य प्रागुदितम् । सोपाधिकभ्रमे स्फटिकलौहित्यादौ सादृश्यस्य कारणत्वं नास्तीति पूर्वपक्षिणाऽप्युक्तं निरुपाधिकभ्रमेऽपि पीतः शङ्ख इत्यादौ प्रधानाधिष्ठानयोः सादृश्याभावेऽपि भ्रमकार्यदर्शनात् व्यभिचारात् सादृश्यं निरुपाधिकभ्रमेऽपि न कारणम् । यदपि सोपाधिकभ्रमे रक्तः स्फटिकः इत्यादौ द्रव्यत्वादिना सादृश्यमस्तीति पूर्वपक्षिणोक्तं तदपि न यतः पूर्वपक्षिणा सादृश्यस्य भ्रमकारणत्वं यदुक्तं तदपि तत्रैव वक्तव्यं यत् अध्यासात् प्राक् प्रधानमात्रवृत्तितया अवगतम् अध्याससमये च अधिष्ठानवृत्तितया गृहीतं तदेव हि सादृश्यम् अध्यासकारणं पूर्वपक्षिणापि वाच्यं, न तु अध्यासात् प्रागेव प्रधानाधिष्ठानोभयवृत्तितया गृहीतम् अध्यासकारणम् । उभयसाधारणधर्मवत्तया ज्ञाने संशय एव स्यात् । साधारणादिधर्मस्य ज्ञानं संशयकारणमिति अभियुक्तोक्तेः । भाष्यकारोऽप्याह—समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति । [ब्र० सू० १।१।२३] लौहितः स्फटिक इत्यध्यासे द्रव्यत्वादेः लोहितालोहितवृत्तित्या अध्यासात् प्राग् ज्ञानात् न अध्यासात् प्राक् प्रधानमात्रवृत्तितया ज्ञानमतस्तन्न अध्यासकारणमिति । किञ्च सादृश्यं न दोषादिवत् स्वतोऽध्यासकारणं मानाभावात् । सम्प्रयोगदोषसंस्काराणां त्रयाणामेवाध्यासकारणत्वावधारणात् । किन्तु अध्यासकारणसंस्कारोद्बोधकतया सादृश्यम् अध्यासकारणं भवेत् : संस्कारोद्बोधश्च न सादृश्यैकनियतः अदृष्टादेरपि संस्कारोद्बोधकत्वावधारणात् । उक्तमभियुक्तैः सादृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इति स्मृतिबीजस्य संस्कारस्य इत्यर्थः । चिन्तादिकमुद्बोधकमुक्तं तत्रादिपदग्राह्यमक्षपादीयसूत्रे तृतीयाध्याये द्वितीयाह्निके एकचत्वारिंशसूत्रे संगृहीतम् । प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्य -

र्थविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्य: [अक्षपादसूत्रम्, ३।२।४१; पृ० ८३३] स्मरणमित्यनुवर्तते। निमित्तशब्दस्य द्वन्द्वात्परं श्रुतस्य प्रत्येकमभेदेनान्वयः। [१] प्रणिधानं मनसो विषयान्तरसञ्चार-वारणम्। [२] निबन्धः एकग्रन्थोपनिबन्धनम्। यथा प्रमाणेन प्रमेयस्मरणम्। [३] अभ्यासः संस्कारबाहुल्यमेतस्य यद्यपि नोद्बोधकत्वं तथापि तादृशे शीघ्र-मुद्बोधकसमवधानं स्यात् इत्याशयेन तदुपन्यासः। अभ्यासो दृढतरसंस्कारः उद्बोधकत्वेन उक्त इति केचित्। [४] लिङ्गव्याप्यं व्यापकस्य स्मारकम्। [५] लक्षणं यथा कोऽपि ध्वजादि अर्जुनादेः। [६] सादृश्यं देहादेः। [७] परि-ग्रहः स्वीकारः तस्य स्वस्वामिभावोऽर्थः तदेकतरेण तदन्यतरस्मरणम्। [८] आश्रयाश्रितौ राजादितत्परिजनौ परस्परस्मारकौ। [९] सम्बन्धः गुरुशिष्यभावादिः, गोवृषन्यायात् पृथगुक्तः। [१०] आनन्तर्यं प्रोक्षणावघातादेः। [११] वियोगो यथा दारादेः। [१२] एककार्याः अन्तेवासि प्रभृतयः परस्परस्मारकाः। [१३] विरोधादहिनकुलादेरन्यतरेणापरस्मरणम्। [१४] अतिशयः संस्कारः उपनयनादि-राचार्यादिस्मारकः। [१५] प्राप्तिर्धनादेः दातारं स्मारयति। [१६] व्यवधानम् आवरणं यथा खड्गादेः कोषादिः। [१७] सुखदुःखयोरन्यतरेण अपरस्य ताभ्यां तत्प्रयोजकस्य वा स्मरणम्। [१८] इच्छाद्वेषौ यद्विषयतया गृहीतौ तस्य स्मारकौ। [१९] भयं मरणादेर्भयहेतोर्वा स्मारकम्। [२०] अर्थित्वं दातुः। [२१] शाखादेः क्रियावाह्यादेः। [२२] रागात् पुत्रादेः स्मरणम्। [२३] धर्मा-धर्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयो प्रागनुभूतसुखादेश्च स्मरणम्। उक्तेषु च किञ्चित् स्वरूपसत् किञ्चिच्च ज्ञातमुद्बोधकं शिष्यव्युत्पादनाय अयं प्रपञ्चः। विश्वनाथवृत्तौ। [विश्वनाथवृत्तिः, पृ० ८८१] तथा च सादृश्यादन्यतः संस्कारोद्बोधे सति सादृश्यमनपेक्षितम्। निरुपाधिकभ्रमकार्यदर्शनमेवेत्यादिविवरण-वाक्यं व्याख्यातं तत्त्वदीपने—सादृश्याज्ञानस्य निरुपाधिकभ्रमव्यापकत्वे न अहङ्कारादेरात्मन्यध्यस्तत्वं सिद्ध्यति सादृश्याभावत् इत्याशङ्क्य भूयोऽवयव-सामान्यसादृश्याभावेऽपि कार्यानुपपत्त्यां सादृश्यान्तरं कल्प्यते इत्याह—निरुपाधिकेति। केतकीसर्पगन्धयोर्निर्गुणत्वान्निरवयवत्वाच्च गुणावयवसामान्या-भावेऽपि केतकीगन्धसदृशः सर्पगन्ध इत्यनुभवात् यथा सादृश्यान्तरम् आस्थितं

ननु दोषं विना भ्रमस्वीकारे तदप्रामाण्यस्य स्वतस्त्वापत्तिः। दोष-जन्यत्वस्वीकारे तु दोषस्याप्यध्यसनीयत्वेनानवस्थापत्तिरिति—चेत् ॥१३॥

न, अनाद्यविद्याध्यासस्य दोषानपेक्षत्वात्। साद्यध्यासस्य चाविद्यादोषजन्यत्वात् नाप्रामाण्यस्य स्वतस्त्वम्। नाप्यनवस्था। अन्यथा तार्किकाणामप्यनादिप्रमा गुणं विनापीति प्रामाण्यपरतस्त्वं भज्येत। जन्यप्रमामात्रस्य गुणजन्यत्वं तु जन्याध्यासमात्रस्य दोषजन्यत्वेन समम् ॥१४॥

---

तथा अत्रापीत्यर्थः निरुपाधिकभ्रमेऽपि न सादृश्यानुगतिरित्याह—शङ्खपीतिमादाविति। पयस्तिक्तमित्यादिभ्रम आदिशब्दार्थः। कारणान्तरमिति अज्ञानलक्षणमित्यर्थः। विश्वं यदि कल्पितं स्यात् सत्यसादृश्योपेतं स्यात् इति तृतीयप्रतिकूलतर्के सत्यसादृश्यगापाद्यमासीत्। सादृश्यस्याध्यासकारणता प्रत्याख्यानेन सत्यसादृश्यस्य अध्यासकारणत्वं सुदूरनिरस्तमेवञ्च तृतीयोऽपि प्रतिकूलतर्को-निरस्तो वेदितव्यः ॥१२॥

१३—विश्वं यदि कल्पितं स्यात् सत्यदोषोपेतं स्यादिति चतुर्थं प्रतिकूलतर्कमवतारयति पूर्वपक्षी—ननु दोषं विना भ्रमस्वीकारे तदप्रामाण्यस्य स्वतस्त्वापत्तिः। दोषजन्यत्वस्वीकारे तु दोषस्यापि अध्यसनीयत्वेनानवस्थापत्तिरिति चेत्। ज्ञानसामग्र्यां दोषस्य अप्रवेशेन ज्ञानसामग्रीमात्रजन्यत्वापत्त्या स्वतस्त्वप्राप्त्या ब्रह्मज्ञानस्यापि अप्रामाण्यापातः इति दोषं विना भ्रमस्वीकारो दोषमुक्त्वा भ्रमस्य दोषजन्यत्वंस्वीकारेऽनवस्थादोषमाह—भ्रमस्य दोषजन्यत्वे स्वीक्रियमाणे दोषस्यापि मिथ्यात्वे दोषस्यापि दोषजन्यत्वं स्वीकार्यं तस्यापि दोषस्य दोषान्तरजन्यत्वमेवमनवस्था स्यात् अनवस्थाभिया दोषस्य सत्यत्वं वक्तव्यम् दोषस्य सत्यत्वे विश्वस्य कल्पितत्वं न सिद्ध्येत् दोषस्यापि विश्वान्तर्गतत्वात् तस्य च सत्यत्वस्वीकारादिति पूर्वपक्षिण आशयः ॥१३॥

१४—समाधत्ते सिद्धान्ती—न अनाद्यविद्याध्यासस्य दोषानपेक्षत्वात्। साद्यध्यासस्य च अविद्यादोषजन्यत्वात् नाप्रामाण्यस्य स्वतस्त्वम्। नाप्यनवस्था। अन्यथा तार्किकाणामपि अनादिप्रमागुणं विना पीति प्रामाण्यपरतस्त्वं भज्येत। जन्यप्रमामात्रस्य गुणजन्यत्वं तु जन्याध्या-

ननु—लाघवेन प्रथमोपस्थितत्वेन च प्रवृत्तिमात्रं प्रति संसर्गधिय इव धूममात्रं प्रति वह्नेरिव अध्यासमात्रं प्रति दोषादीनां जनकत्वाद-विद्याध्यासोऽपि कथं क्लृप्तकारणेन विना भवतु? अन्यथा संसर्गधीरपि प्रवृत्तिविशेषे वह्निरपि धूमविशेषे हेतुरिति स्यात्, तथा चाख्यातिवादश्च अनुमानमात्रोच्छेदश्चापद्येयाताम् ॥१५॥

---

समन्त्रस्य दोषजन्यत्वेन समम् ।, अनाद्यविद्याध्यासस्य कारणानपेक्षत्वेन कारणविशेषदोषस्यापि अनपेक्षेति । प्राद्यध्यासस्य अविद्यादोषजन्यत्वात् ज्ञान-सामान्यसामग्र्यातिरिक्तदोषजन्यत्वेन नाप्रामाण्यस्य स्वतस्त्वम् । दोषस्य दोषान्तरा-पेक्षायामनवस्थापि न भवति, अविद्यारूपदोषस्य अनादित्वात् । एवं समाधानेऽपि अनाद्यविद्याध्यासस्य दोषाजन्यत्वात् तस्याप्रमात्वं स्वतः एव स्यात् इत्याशङ्क्याह— अन्यथा तार्किकाणामिति । तार्किकमते ईश्वरीयप्रमायां नित्यत्वात् तस्या गुण-जन्यत्वाभावात् तेषां प्रमात्वपरतस्त्वसिद्धान्तोऽपि भज्येत यदि तेषां जन्यप्रमाया गुणजन्यत्वेन प्रमात्वपरतस्त्वं तर्हि अस्माकमपि तत्सममित्याह—जन्याध्यास-मात्रस्याविद्यादोषजन्यत्वेन जन्याप्रमाया अप्रमात्वं परतः इति अस्माकमपि सिद्धान्तः संगच्छते ।।१४।।

१५–अध्यासमात्रस्य दोषजन्यत्वधारणात् अध्यासो क्लृप्तकारणं दोषं विना अविद्याध्यासोऽपि कथं भवेत् इति शंकते पूर्वपक्षी—ननु लाघवेन प्रथमो-पस्थितत्वेन च प्रवृत्तिमात्रं प्रति संसर्गधिय इव धूममात्रं प्रति वह्निरिव अध्यासमात्रं प्रति दोषादीनां जनकत्वात् अविद्याद्यध्यासोऽपि कथं क्लृप्तकारणेन विना भवेत्? अन्यथा संसर्गधीरपि प्रवृत्तिविशेषे वह्निरपि धूमविशेषहेतुरिति स्यात् तथा च अख्यातिवादोऽनुमान-मात्रोच्छेदश्चापद्येयाताम् । लाघवेनेति । कतिपयाध्यासत्वापेक्षया अध्यासत्वस्य लघुत्वात् सर्वाध्याससिद्धितः प्रथमं रूप्यादिकतिपयाध्यासेऽध्यासत्वस्योपस्थितत्वात् अन्यथा रूप्याद्यध्यासेऽध्यासत्वस्यासिद्धौ तस्य दृष्टान्तत्वासम्भवात् । अतो लघुत्वात् प्रथमोपस्थितत्वाच्च अध्यासत्वावच्छेदेन दोषत्वेन च कार्यकारणभावो वाच्यः, न कतिपयाध्यासत्वेन इति । अन्यथेति । लाघवप्रथमोपस्थितत्वयोर-नादरेऽनिष्टापत्तौ दृष्टान्तमाह संसर्गधीरपीति । यथा संवादिविसंवादिप्रवृत्तिमात्रे

किं च अविद्यारूपविषयस्यानादित्वेऽपि तत्प्रतीतेर्दोषाजन्यत्वेऽप्रामाण्यापातः, अप्रामाण्यप्रयोजकस्य दोषजन्यत्वस्याभावात्। अथ भेदवदविद्याख्यदोषस्य स्वपरनिर्वाहकत्वम् एवमपि भेदो भिन्न इतिवत् अज्ञानज्ञातमिति व्यवहारो भवतु प्रतीतिमात्रशरीरस्य स्वविषयधीहेतुत्वं कुतः ? स्वस्य स्वस्मात् पूर्ववृत्तित्वासंभवादिति—चेत् ॥ १६॥

न, अध्यासत्वस्य लघुत्वेऽपि प्रथमोपस्थितत्वेऽपि न दोषजन्य-

---

संसर्गधियः कारणत्वं लाघवात् तथा च भ्रमात् प्रवृत्तिसिद्धिः। यथा वा धूममात्रे वह्नेः कारणत्वं लाघवात् तथा च धूमात् पर्वते वह्निसिद्धिस्तद्वत्। लाघवानादरे तु—प्रवृत्तिविशेषे संवादिप्रवृत्तौ संसर्गधियः कारणत्वं वह्नेरपि धूमविशेषेऽपर्वतीय धूमे कारणत्वं स्यात्, तथा च अख्यातिवादः आपद्येत अनुमानोच्छेदश्च आपद्येत इति ॥१५॥

१६—अविद्याप्रतीतेर्दोषाजन्यत्वे प्रामाण्यापातोऽपि इत्याह पूर्वपक्षी—किञ्च अविद्यारूपविषयस्य अनादित्वेऽपि तत्प्रतीतेर्दोषाजन्यत्वे प्रामाण्यापातः। अप्रामाण्यप्रयोजकस्य दोषजन्यत्वस्य अभावात्। अथ भेदवत् अविद्याख्यदोषस्य स्वपरनिर्वाहकत्वमेवमपि भेदो भिन्न इतिवत् अज्ञानमज्ञातमिति व्यवहारो भवतु प्रतीतिमात्रशरीरस्य स्वविषयधीहेतुत्वं कुतः स्वस्य स्वस्मात् पूर्ववृत्तित्वासम्भवात् इति चेत्। अविद्यारूपविषयस्येति—विषयस्य अनादित्वेऽपि तत्प्रतीतेर्जन्यताया दृष्टत्वात् इहापि अविद्यारूपविषयस्य अनादित्वेऽपि तत्प्रतीतेर्दोषजन्यत्वमेव वाच्यम्, अन्यथा तस्याः प्रतीतेरप्रामाण्यस्यैवायोगात् दोषजन्यत्वेनैव ज्ञानस्य अप्रमात्वमिति भावः। अथ भेदवदिति स्वनिर्वाहकत्वं नाम स्वव्यवहारे स्वातिरिक्तानपेक्षत्वं यथा भेदो भिन्न इति व्यवहारे भेदातिरिक्तानपेक्षत्वं यथा वा प्रमेयत्वं प्रमेयमिति व्यवहारे स्वनिर्वाहकत्वम्। एवमज्ञानान्तरमन्तरेण अज्ञानमज्ञातमिति व्यवहारो जायतां नाम स्वज्ञानं प्रति स्वस्य दोषत्वं तु न सम्भवति कुत इत्यत आह—प्रतीतिमात्रशरीरस्येति। प्रतीतिमात्रशरीरं यत् स्वमविद्या तद्विषयिणी या धीः तत्र दोषतया हेतुत्वेन प्राप्तं यत् स्वस्य स्वात्मापेक्षया पूर्वभावित्वं तदयोगादित्यर्थः ॥१६॥

१७—सिद्धान्ती समाधत्ते—न अध्यासत्वस्य लघुत्वेऽपि प्रथमोपस्थि-

तायां तन्त्रत्वम्; दोषस्यापि दृश्यत्वेनाध्यसनीयतयाऽनवस्थापत्तेः। यथा नित्यज्ञानवादिनां ज्ञानत्वस्य न शरीरजन्यतादाववच्छेदकत्वम्; न वा गुणजन्यत्वस्य प्रामाण्यप्रयोजकत्वम्, बाधकबलात्, तद्वत् जन्याध्यासं प्रत्येव दोषादीनां कारणत्वम्, गुणाजन्यत्वेऽप्यबाधितविषयतया नित्यज्ञानप्रामाण्यवत् दोषाजन्यत्वेऽपि बाधितविषयतयाऽनाद्यध्यासस्याप्यप्रामाण्योपपत्तिः। बाधितविषयत्वेऽपि न दोषजन्यत्वमवच्छेदकम्। दोषजन्यत्वेऽप्यवच्छेदकान्तरान्वेषणेऽनवस्थापातात्। बाधितविषयत्वस्य दोषाजन्यवृत्तित्वेऽपि, दोषजन्यत्वस्य तद्व्याप्यत्वोपपत्तेः। अत एव शबरस्वामिना 'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनो नान्य' इति वदता दुष्टंकरणजन्यत्वमन्तरेणापि अर्थान्यथात्वमप्रामाण्यप्रयोजकमुक्तम्। अविद्याध्यासरूपस्य साक्षिचैतन्यस्याविद्याजन्यत्वानभ्युपगमात् न प्रतीतिमात्रशरीरत्वव्याघातः। 'अहमज्ञ' इत्याद्यभिलापकारणीभूतवृत्तिरूपाध्यासं प्रति त्वविद्यायाः कारणत्वमस्त्येव, घटादीनामिव स्वप्रत्यक्षं प्रति। वह्निविशिष्टधियोस्तु बाधका-

---

तत्वेऽपि न दोषजन्यतायां तन्त्रं दोषस्यापि दृश्यत्वेन अध्यसनीयतया अनवस्थापत्तेः। यथा नित्यज्ञानवादिनां ज्ञानत्वस्य न शरीरजन्यतावच्छेदकत्वं, न वा गुणजन्यत्वस्य प्रामाण्यप्रयोजकत्वं बाधकबलात् तद्वत् जन्याध्यासं प्रत्येव दोषादीनां कारणत्वं गुणाजन्यत्वेऽपि अबाधितविषयतया नित्यज्ञानप्रामाण्यवत् दोषाजन्यत्वेऽपि बाधितविषयतयाऽनाद्यध्यासस्यापि अप्रामाण्योपपत्तिः। बाधितविषयत्वेऽपि न दोषजन्यत्वमवच्छेदकम्। दोषजन्यत्वेऽपि अवच्छेदकान्तरान्वेषणेऽनवस्थापातात्। बाधितविषयत्वस्य दोषाजन्यवृत्तित्वेऽपि दोषजन्यत्वस्य तद्व्याप्यत्वोपपत्तेः। अत एव शबरस्वामिना यस्य च दुष्टं कारणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनो नान्यः इति वदता दुष्टकारणजन्यत्वमन्तरेणापि अर्थान्यथात्वमप्रामाण्यप्रयोजकमुक्तम्। अविद्याध्यासरूपस्य साक्षिचैतन्यस्य अविद्याजन्यत्वानभ्युपगमात् न प्रतीतिमात्रशरीरत्वव्याघातः। अहमज्ञ इत्याद्यभिलापकारणी-

भावात् सामान्येनैव धूमप्रवृत्तीः प्रति हेतुतेति न पूर्वोक्तदोषापातः ॥१७॥

भूतवृत्तिरूपाध्यासं प्रति तु अविद्यायाः कारणत्वमस्त्येव । घटादीनामिव स्वप्रत्यक्षं प्रति वह्निविशिष्टधियस्तु बाधकाभावात् सामान्येनैव धूमप्रवृत्तीः प्रति हेतुतेति न पूर्वोक्तदोषापातः । यत्र यत्र अध्यासत्वं तत्र दोषजन्यत्वमिति व्याप्तिर्न सम्भवति । अत्र तन्त्रपदं व्याप्यपरम् अध्यासत्वं न दोषजन्यत्वव्याप्यमित्यर्थः । पूर्वपक्षो प्रदर्शितरीत्या अध्यासत्वस्य लघुत्वात् प्रथमोपस्थितत्वाच्च तदेव दोषजन्यत्वव्याप्यं किमिति न स्यात् इत्यत आह— अनवस्थापत्तेरिति । दोषमात्रस्य दृश्यतया दृशि अध्यस्तत्वेन दोषस्यापि दोषजन्यत्वप्राप्त्या अनवस्था स्यात् । पूर्वपक्षिप्रदर्शितव्याप्यव्यापकभावेऽनवस्थैव बाधिका सा चात्राप्रामाणिकीत्यर्थः । नित्यज्ञानवादिनां नैयायिकवैशेषिकाणां मते अशरीरेश्वरस्य नित्यं ज्ञानमस्ति अस्मदादीनां ज्ञानन्तु अनित्यं शरीरजन्यं च अतस्तेषां मते यत्र यत्र ज्ञानत्वं तत्र शरीरजन्यत्वमिति व्याप्तेरभावात् ज्ञानत्वं न शरीरजन्यताया अवच्छेदकं ज्ञानत्वस्य शरीरजन्यतावच्छेदकत्वे शरीराजन्ये ईश्वरज्ञाने ज्ञानत्वं न स्यात् व्यापकाभावेन व्याप्याभावात् । एवमेव तेषां मते गुणजन्यत्वस्य प्रमात्वव्यापकत्वमपि न भवति ईश्वरीयनित्यज्ञानस्य गुणाजन्यत्वेऽपि प्रमात्वात् । ईश्वरीयनित्यप्रमाज्ञानसाधकप्रमाणेन बाधात् ज्ञानत्वं न शरीरजन्यतावच्छेदकं गुणजन्यत्वं वा न प्रमात्वव्यापकम् एवं यथा नैयायिकादिमते तद्वत् अस्मन्मतेऽपि जन्याध्यासं प्रत्येव दोषादीनां कारणत्वमनाद्यविद्यासाधकमानबाधादेवं स्वीक्रियते । ईश्वरीयनित्यप्रमायां गुणाजन्यत्वेऽपि अबाधितविषयकत्वेन यथा प्रमात्वं नैयायिकादिमते तथा अस्मन्मतेऽपि अनाद्यविद्याऽध्यासस्य दोषाजन्यत्वेऽपि बाधितविषयतया अप्रमात्वोपपत्तिः तत्त्वज्ञानबाध्यत्वादविद्यायाः इत्यर्थः । बाधितविषयत्वमपि न दोषजन्यत्वेनावच्छिद्यते । यदि दोषजन्यत्वं बाधितविषयताया अवच्छेदकं स्यात् तर्हि दोषजन्यतायाः अवच्छेदकान्तरानुसरणेऽनवस्थापत्तेः । दोषाजन्येऽपि अविद्यासाक्षिणि बाधितविषयत्वसत्त्वेऽपि दोषजन्यत्वस्य बाधितविषयत्वव्याप्यत्वोपपत्तेः । यद् यद् दोषजन्यं तद् बाधितविषयमिति व्याप्तिर्निराबाधैव । दोषजन्यत्वं न अप्रमात्वव्यापकमिति शबरस्वामिवचनेन द्रढयन्नाह—अत एव शबरस्वामिनेति । औत्पत्तिकसूत्रभाष्ये शबरस्वामिना अभिहितं [मीमांसासू०,

ननु—अविद्याध्यासस्यानादित्वेन दोषाद्यनपेक्षावदधिष्ठानानपेक्षापि स्यादिति—चेत्। न, जनकत्वेनाधिष्ठानानपेक्षायामप्याश्रयत्वेन तदपेक्षानियमात्। परममहत्त्वादेराश्रयापेक्षावत् अध्यासस्य साधिष्ठान-

---

१।१।५; पृ० २८ ] शावरवाक्यस्यायमर्थः—यत्रोत्तरकाले बाधकप्रत्ययः यत्र वा करणेषु दुष्टत्वावगमः तादृशस्थले एव ज्ञानमाभासात्मकं शवरस्वामिना अप्रामाण्यप्रयोजकं वैकल्पिकतया द्वयमुक्तं दुष्टकरणजन्यत्वं वा अर्थान्यथात्वं वेति। तथा च शावरमतेऽपि दोषजन्यत्वं न अप्रमात्वव्यापकमिति दुष्टकरणाजन्यस्यापि बाधितविषयकत्वेन अप्रमात्वमुक्तं शवरस्वामिना तथा च अस्मन्मतं शावरभाष्यानुकूलं न पूर्वपक्षिमतम्। तच्च मीमांसकसिद्धान्तविरुद्धम्। अविद्याध्यासस्य साक्षिचैतन्यरूपस्य अविद्याजन्यत्वानभ्युपगमेऽपि न प्रतीतिमात्रशरीरत्वव्याघातः यावदविद्यं साक्षिणो विद्यमानत्वात्। यदा तु अविद्याविषयिणी अविद्यावृत्तिरुदेति तदा अविद्याप्रतीतिरभिलापयोग्या भवति सविकल्पकप्रतीतित्वात् अन्यथा सा निरभिलप्यैव। अहमज्ञः इत्यादिवृत्तिरूपाऽध्यासं प्रति अविद्याया कारणत्वमस्त्येव न तु अविद्यासाक्षिरूपप्रत्यक्षे। अहमज्ञ इत्याद्यविद्यावृत्तेः सादित्वेन अविद्यैव उपादानम् अविद्योपादकाविद्याविषयकसाद्यविद्यावृत्तेः कारणत्वमविद्याया अस्त्येव। यथा घटप्रत्यक्षे घटस्य घटविषयकप्रत्यक्षवृत्तौ विषयस्य घटस्य यथाकारणत्वमस्ति एवमेव अविद्याविषयकाविद्यावृत्तावपि अविद्यायाः। यच्चोक्तं लाघवेन प्रथमोपस्थितत्वेन च प्रवृत्तिमात्रं प्रति संसर्गधिय इव धूममात्रं प्रति वह्नेरिवेति तत्र बाधकाभावात् विशिष्टधियः प्रवृत्तिं प्रति हेतुता वह्नेश्च धूमं प्रति हेतुता सिद्ध्यति, किन्तु प्रकृते प्रदर्शितबाधकसत्त्वात् न अध्यासमात्रे दोषजन्यता सिद्ध्यतीति भावः। विश्वं यदि कल्पितं स्यात् सत्यदोषोपेतं स्यात् इति चतुर्थप्रतिकूलतर्कोऽपि निरस्तः दोषस्य मिथ्यात्वेऽपि अध्यासोपपत्तेरिति भावः ॥१७॥

१८—अस्मिन्नेव प्रकरणे दोषान्तरं शङ्कते पूर्वपक्षी—ननु अविद्याध्यासस्य अनादित्वेन दोषाद्यनपेक्षावदधिष्ठानापेक्षाऽपि स्यादिति चेत्? अविद्याध्यासस्यानादितया कारणानपेक्षत्वेन यथा दोषाद्यनपेक्षत्वमेवं कारणत्वेनानाद्यध्यासस्याधिष्ठानापेक्षापि न स्यात् तथा चानाद्यध्यासः निरधिष्ठान एव स्यात् एवञ्चानाद्यध्यासस्य बाधोऽपि न स्यात् निरधिष्ठानभ्रमबाधकाभावादिति।

कत्वनियमेनात्रापि परतन्त्रत्वस्य समत्वात्, भास्यस्याविद्याध्यासस्य भासकतयाप्यधिष्ठानापेक्षणाच्च । अविद्यावच्छिन्नचैतन्यस्याविद्यादिसकलद्वैतद्रष्टृत्वात् तस्यैव चान्तःकरणावच्छेदेन प्रमातृत्वात्, भ्रमप्रमयोः सामानाधिकरण्योपपत्तेर्भ्रमस्य समानाधिकरणप्रमानिवर्त्यत्वमुपपद्यते ॥१८॥

---

समाधत्ते सिद्धान्ती—न जनकत्वेन अधिष्ठानानपेक्षायामपि आश्रयत्वेन तदपेक्षानियमात् । परममहत्त्वादेराश्रयापेक्षावत् अध्यासस्य साधिष्ठानकत्वनियमेन अत्रापि परतन्त्रत्वस्य सत्त्वात् । भारूपस्य अविद्याध्यासस्य भासकतयापि अधिष्ठानापेक्षणाच्च । अनाद्यविद्याध्यासस्य जनकत्वेन अधिष्ठानानपेक्षायामपि आश्रयत्वेन अधिष्ठानापेक्षाऽस्त्येव । यथा वैशेषिकमते परममहत्त्वपरमाणुत्वपरिमाणयोर्नित्यत्वेन कारणानपेक्षत्वेऽपि गुणत्वात् आश्रयद्रव्यापेक्षा वर्तते तथा अनाद्यध्यासस्यापि कारणानपेक्षत्वेऽपि आश्रयत्वेन अधिष्ठानापेक्षा वर्तते । गुणस्य परतन्त्रतावत् अध्यासस्यापि स्वभावेन परतन्त्रत्वात् नियताश्रयसापेक्षस्यैव परतन्त्रत्वात् । किञ्च अविद्याध्यासस्य स्वप्रकाशत्वाभावेन परप्रकाश्यत्वात् अध्यासस्य प्रकाशनायापि प्रकाशकापेक्षत्वादिति भावः ।

यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति स इतीष्टसिद्धिकारीयवचनात् अनुभवाच्च भ्रमप्रमयोः सामानाधिकरण्यमपेक्षितं तच्च सिद्धान्तिमतेन सम्भवति, भ्रान्तेर्द्रष्टा साक्षी प्रमायाः प्रमाता, साक्षिप्रमात्रोर्भेदात् इति शङ्कित्वा समाधत्ते—अविद्यावच्छिन्नचैतन्यस्य अविद्यादिसकलद्वैत द्रष्टृत्वात् तस्यैव च अन्तःकरणावच्छेदेन प्रमातृत्वात् भ्रमप्रमयोः सामानाधिकरण्योपपत्तेः भ्रमस्य समानाधिकरणः प्रमानिवर्त्यत्वमुपपद्यते । अविद्योपहितस्य साक्षिणः अविद्यादिसकलद्वैतद्रष्टृत्वात् सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एव इति विवरणवचनात् । यत्प्रसादादविद्यादि सिद्ध्यतीव दिवानिशम्—इति बृहदारण्यकभाष्यवार्त्तिककारसुरेश्वरवचनात् [४।३।१४] । तस्यैव साक्षिणः अन्तःकरणावच्छेदेन प्रमातृत्वात् । अविद्यापरिणामरूपान्तःकरणस्य अविद्याधिष्ठाने साक्षिण्येवाध्यासात् सति अन्तःकरणे साक्षिण एव प्रमातृत्वात् भ्रमप्रमयोः सामानाधिकरण्यस्योपपत्तेः । यस्यैव साक्षिणः भ्रमद्रष्टृत्वं तस्यैवान्तःकरणाध्यासात्

ननु देहेन्द्रियादिकं विना कथमन्तःकरणाध्यासः ? काऽत्रानुपपत्तिः ? अधिष्ठानापरोक्षत्वं हि अपरोक्षभ्रमे कारणम्। तत् यत्राधिष्ठानं स्वतो नापरोक्षम्, यथा शुक्त्याद्यवच्छिन्नचैतन्यम्, तत्र तदपरोक्षतार्थं देहेन्द्रियाद्यपेक्षा प्रकृते चाविद्यावच्छिन्नं चैतन्यमधिष्ठानम् तत्र चैतन्यस्य स्वप्रकाशत्वेनाविद्यायाश्च तदध्यस्तत्वेन तेनैव साक्षिणा अपरोक्षत्वात् कुत्र देहेन्द्रियाद्यपेक्षा ? अथैवं प्रलये देहेन्द्रियाद्यभावेऽप्यज्ञानसद्भावेनान्तःकरणाध्यासप्रसङ्गः। न, तदा देहेन्द्रियादिसर्जनविलम्बहेतुनैव तद्विलम्बसम्भवात्, अन्यथा तदा देहेन्द्रियादिकमपि कुतो नोत्पद्येत ? ॥१९॥

---

प्रमातृत्वम्। अतो भ्रमस्य समानाधिकरणप्रमानिवर्त्यत्वमप्युपपद्यते। प्रागुदाहृतमिष्टसिद्धिकारवचनमपि साधु सङ्गतं भवति ॥१८॥

१९—कार्याध्यासेषु अहङ्काराध्यास एव प्रथम इति प्रागुक्तं—तत्र पूर्वपक्षी शङ्कते देहेन्द्रियादिकं विना कथमन्तःकरणाध्यासः अहङ्काराध्यासकाले देहादीनामनुत्पन्नत्वादिति आशङ्क्य समाधत्ते सिद्धान्ती—ननु देहेन्द्रियादिकं विना कथमन्तःकरणाध्यासः। कात्र अनुपपत्तिः ? अधिष्ठानापरोक्षत्वं हि अपरोक्षभ्रमे कारणम्। तद् यत्र अधिष्ठानं स्वतो नापरोक्षं यथा शुक्त्याद्यवच्छिन्नचैतन्यं तत्र तदपरोक्षतार्थं देहेन्द्रियाद्यपेक्षा प्रकृते च अविद्यावच्छिन्नं चैतन्यमधिष्ठानं तत्र चैतन्यस्य स्वप्रकाशत्वेनाविद्यायाश्च तदध्यस्तत्वेन तेनैव साक्षिणा अपरोक्षत्वात् कुत्र देहेन्द्रियाद्यपेक्षा। अथैवं प्रलये देहेन्द्रियाद्यभावेऽपि अज्ञानसद्भावेन अन्तःकरणाध्यासप्रसङ्गः। न तदा देहेन्द्रियादिसर्जनविलम्बहेतुनैव तद्विलम्बसम्भवात् अन्यथा तदा देहेन्द्रियादिकमपि कुतो नोत्पद्येत ? देहेन्द्रियादिकं विना अन्तःकरणाध्यासे का अनुपपत्तिः ? अपरोक्षभ्रमे हि अधिष्ठानापरोक्षत्वं कारणं रजताद्यध्यासे तथा दर्शनात् अधिष्ठानापरोक्षत्वं विना अपरोक्षभ्रमादर्शनाच्च। रजताद्यध्यासे हि अधिष्ठानं स्वतो नापरोक्षं शुक्त्याद्यवच्छिन्नचैतन्यं हि तत्राधिष्ठानं तच्च न स्वतोऽपरोक्षं शुक्त्याद्यवच्छिन्नचैतन्यस्य अपरोक्षतार्थं देहेन्द्रियाद्यपेक्षा वर्तते। प्रकृतेऽन्तःकरणाध्यासेऽविद्यावच्छिन्नं चैतन्यमेवाधिष्ठानं तच्च स्वप्रकाशत्वेन स्वतोऽपरोक्षम्। स्वतोऽपरोक्षे चैतन्ये एव अविद्याया अध्यासात् अध्यस्ता-

न च—दोषादीनामध्यस्तत्वेन तदभावस्य तात्त्विकत्वात् अतात्त्विकेन तात्त्विककार्यप्रतिबन्धस्यायुक्तत्वात् बौद्धेन दुष्टतया कल्पितस्य वेदजन्यज्ञानस्येव कल्पितदोषजन्यस्य द्वैतविज्ञानस्य प्रामाण्यापात इति—वाच्यम् ॥२०॥

---

विद्यायाः तेनैव साक्षिणा अपरोक्षत्वात् अधिष्ठानापरोक्षत्वाय देहाद्यपेक्षा भावात् । न चैवं प्रलयेऽपि देहाद्यभावेऽपि अनाद्यज्ञानसद्भावेन अन्तःकरणाध्यासप्रसङ्गः । नायं प्रसङ्गः प्रलये देहेन्द्रियसर्जनविलम्बे हेतुः अदृष्टानां वृत्तिनिरोधः प्रलये निरुद्धवृत्तिकानामदृष्टानां सत्त्वात् न देहेन्द्रियादिसृष्टिः प्रलयविगमे लब्धवृत्तिकादृष्टेभ्यः एव देहेन्द्रियादिसृष्टिः एवमनङ्गीकारे पूर्वपक्षिणोऽपि मते प्रलये कुतो न देहाद्युत्पद्येत । समाधानस्य आवयोः समानत्वादिति भावः ।

एतेन अध्यासे सत्यदेहाद्यपेक्षानियमो निरस्तः विश्वं[यदि]कल्पितं स्यात् सत्यदेहाद्यपेक्षं स्यात् इति अष्टमस्तर्कः पूर्वपक्षिणा प्रदर्शित आसीत् स चात्रैव निरस्त इति ॥१९॥

२०—दोषाणां कल्पितत्वेन कल्पितदोषजन्यद्वैतज्ञानस्य नाप्राण्यं किन्तु द्वैतज्ञानस्य प्रामाण्यमेव इति पूर्वपक्षी शङ्कते—

**न च दोषादीनामध्यस्तत्वेन तदभावस्य तात्त्विकत्वात् अतात्त्विकेन तात्त्विककार्यप्रतिबन्धस्य अयुक्तत्वात् बौद्धेन दुष्टतया कल्पितस्य वेदजन्यज्ञानस्येव कल्पितदोषजन्यस्य द्वैतविज्ञानस्य प्रामाण्यापात इति वाच्यम् ।** दोषादप्रमा दोषाभावात् प्रमा इति स्थितिः । द्वैतज्ञानस्य दोषजन्यत्वेऽपि न अप्रमात्वं दोषस्यैव कल्पितत्वात् । यत्र दोषः कल्पितः तत्र दोषाभावस्तात्त्विकः तात्त्विकदोषाभावकार्यं द्वैतज्ञानस्य प्रमात्वम् तात्त्विकदोषाभावेन द्वैतज्ञानस्य प्रमात्वेऽतात्त्विकदोषेण तात्त्विकदोषाभावकार्यस्य रूपद्वैतज्ञानप्रमात्वस्य प्रतिबन्धः कथं स्यात् । अतात्त्विकेन तात्त्विककार्यप्रतिबन्धस्य अयुक्तत्वात् । अत्र दृष्टान्तमाह—बौद्धेनेति । यथा वेदजन्यज्ञाने बौद्धकल्पितानृतत्वव्याघातादिदोषेण अप्रामाण्ये शङ्किते सति तत्र सिद्धान्तिना उच्यते वेदजन्यज्ञाने दोषाणां कल्पितत्वेन प्रातिभासिकतया तदभावस्य तात्त्विकत्वेन तात्त्विकदोषाभावेन स्वकार्यं प्रामाण्यमेव प्रयोजनीयं तत्र च अतात्त्विकदोषाणां न प्रतिबन्धकत्वमतात्त्विकं तात्त्विकस्य कार्येन प्रतिबन्धकम् । एवमिहापि दोषाणां प्रातिभासिकत्वेन तदभावस्य

बौद्धकल्पितस्य प्रातिभासिकदोषस्य व्यावहारिकवेदापेक्षया न्यूनसत्ताकत्वेन तदप्रामाण्याप्रयोजकत्वेऽप्यविद्याख्यदोषद्वैतप्रपञ्चयोः समसत्ताकत्वेन कार्यकारणभावनियमेन च कारणीभूताविद्याख्यदोषाभावे कार्यभूतद्वैतप्रपञ्चतद्विज्ञानयोरभावनियमेन नाविद्यामिथ्यात्वेन द्वैतज्ञानसत्यतापातः। कारणमिथ्यात्वे कार्यमिथ्यात्वस्यावश्यकत्वात्। ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकत्वस्य बाध्याबाध्यसाधारणस्य मिथ्यात्वसिद्ध्यनपेक्षत्वात् न सत्त्वविभागासिद्धिः ॥२१॥

---

तात्त्विकत्वप्राप्त्या तात्त्विकेन दोषाभावेन द्वैतज्ञाने प्रामाण्ये प्रयोजनीये अतात्त्विकदोषाणामप्रतिबन्धकत्वमेव युक्तमतो द्वैतज्ञानस्य प्रामाण्यसिद्धिरिति ॥२०॥

२१—समाधत्ते सिद्धान्ती—बौद्धकल्पितस्य प्रातिभासिकदोषस्य व्यावहारिकवेदापेक्षया न्यूनसत्ताकत्वेन तदप्रामाण्याप्रयोजकत्वेऽपि अविद्याख्यदोषद्वैतप्रपञ्चयोः समसत्ताकत्वेन कार्यकारणभावनियमेन च कारणीभूताऽविद्याख्यादोषाभावे कार्यभूतद्वैतप्रपञ्चतद्विज्ञानयोरभावनियमेन नाविद्यामिथ्यात्वेन द्वैतज्ञानसत्यत्वापातः। कारणमिथ्यात्वे कार्यमिथ्यात्वस्य आवश्यकत्वात्। ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकत्वस्य बाध्याबाध्यसाधारणस्य मिथ्यात्वसिद्ध्यनपेक्षत्वात् न सत्त्वविभागासिद्धिः। द्वैतज्ञानस्य कल्पितदोषजन्यत्वेऽपि न कल्पितदोषस्य प्रातिभासिकत्वं किन्तु व्यावहारिकत्वं कल्पितस्यापि व्यावहारिकत्वप्रातिभासिकत्वाभ्यां द्वैविध्यात्। वेदजन्यज्ञाने बौद्धेन दुष्टतया कल्पितेऽपि बौद्धकल्पितदोषस्य प्रातिभासिकत्वात् व्यावहारिकवेदापेक्षया प्रातिभासिकदोषस्य न्यूनसत्ताकत्वात् न वेदजन्यज्ञानमप्रमा। न्यूनसत्ताकदोषस्य अप्रामाण्याप्रयोजकत्वात्। बौद्धोत्प्रेक्षितदोषापेक्षया वेदस्याधिकसत्ताकत्वात् वेदजन्यज्ञानं प्रमैव। प्रकृते च अविद्याख्यदोषस्य द्वैतप्रपञ्चस्य च समसत्ताकत्वेन द्वयोर्व्यावहारिकत्वेन ब्रह्मज्ञानेतराबाध्यत्वेन दृष्टान्तवैलक्षण्यात्। समसत्ताकाविद्याद्वैतप्रपञ्चयोः उपादानोपादेयभावनियमस्य श्रुत्यादिसिद्धत्वेन उपादानभूताविद्याख्यदोषाभावे तदुपादेयद्वैतप्रपञ्चतद्विज्ञानयोरभावः सिद्ध्यति।

ननु—दोषादीनां रूप्यादिभ्रमहेतूनां पारमार्थिकसत्त्वमौत्सर्गिकप्रामाण्येन सिद्धमिति परमार्थसतामेव तेषां हेतुत्वमिति—चेत् ॥२२॥

न, व्यावहारिकप्रामाण्यस्य साक्षिणा ग्रहणेऽपि त्रिकालाबाध्यत्व-

---

-"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ इति
[श्वेताश्व० ४।१०]

श्रुत्या अविद्याद्वैतप्रपञ्चयोः कार्यकारणभावावधारणात् । उपादानभूताया अविद्याया मिथ्यात्वे उपादेयमिथ्यात्वावश्यं भावात् । प्रपञ्चमिथ्यात्वसिद्धेः प्राक् व्यावहारिकत्वासिद्ध्या कथमविद्याख्यदोषस्य व्यावहारिकत्वं निश्चीयते इति न वाच्यं व्यावहारिकत्वं हि ब्रह्मज्ञानेतराबाध्यत्वं, तच्च सर्वथा अबाध्ये ब्रह्मज्ञानबाध्ये च उभयत्र साधारणम् । अबाध्यसाधारणस्य व्यावहारिकत्वस्य मिथ्यात्वसिद्ध्यनपेक्षत्वात् मिथ्यात्वसिद्धेः प्राक् व्यावहारिकसत्त्वविभागासिद्धिरिति । एतेन यदुक्तं पूर्वपक्षिणा "दोषादीनां व्यावहारिकसत्त्वस्य अद्याप्यसिद्ध्या अन्योन्याश्रयादि"ति निरस्तम् । प्रपञ्चसिद्ध्यनपेक्षत्वात् व्यावहारिकत्वसिद्धेर्नान्योन्याश्रयः इति । एवं हि पूर्वपक्षिण अभिप्रेतमासीत्—जगदध्यासे सिद्धे तदन्तर्गतदोषादीनां व्यावहारिकसत्त्वसिद्धिः तत्सिद्धौ च तत्सदृशसत्त्वोपेतैर्दोषादिभिर्जगदध्याससिद्धिरिति ॥२१॥

२२—ननु पूर्वपक्षिमतेऽपि जगदध्यासाभावसिद्धौ तदन्तर्गतदोषादीनां पारमार्थिकसत्त्वसिद्धिः तत्सिद्धौ पूर्वपक्ष्युक्तप्रतिकूलतर्कसिद्ध्या विपर्ययपर्यवसानेन जगदध्यासाभावसिद्धिरित्यन्योन्याश्रयः समान एव इत्यत आह पूर्वपक्षी दोषादीनां पारमार्थिकसत्त्वं औत्सर्गिकप्रामाण्येन सिद्धमिति । ननु दोषादीनां रूप्यादिभ्रमहेतूनां पारमार्थिकसत्त्वमौत्सर्गिकप्रामाण्येन सिद्धमिति परमार्थसतामेव तेषां हेतुत्वमिति चेत् । औत्सर्गिकप्रामाण्येन प्रत्यक्षादिना रूप्यादिभ्रमहेतूनां पारमार्थिकसत्त्वं सिद्धमिति दोषादीनां पारमार्थिकसत्त्वस्य जगदध्यासाभावसिद्ध्यधीनत्वाभावात् पूर्वपक्षिमते न अन्योन्याश्रयः ॥२२॥

२३—पारमार्थिकसत्त्वं न औत्सर्गिकप्रामाण्येन प्रत्यक्षादिना सेद्धुमर्हतीत्याह सिद्धान्ती—न व्यावहारिकप्रामाण्यस्य साक्षिणा ग्रहणेऽपि त्रिकाला-

रूपतात्त्विकप्रामाण्यं न केनापि गृह्यत इति प्रत्यक्षबाधोद्धारे प्रागेवाभिहितत्वात् ॥२३॥

न च—रूप्याद्यध्यासे दोषादीनामधिष्ठानसमानसत्ताकत्वम् दृष्टमिति इहापि तथेति वाच्यम् ।

साधर्म्यसमजात्युत्तरत्वात् । वस्तुतस्तु सर्वत्र चैतन्यस्यैवाधिष्ठानत्वेन कुत्रापि दोषादीनामधिष्ठानसमसत्ताकत्वाभावात् ॥२४॥

---

बाध्यत्वरूपतात्त्विकप्रामाण्यं केनापि गृह्यते इति प्रत्यक्षबाधोद्धारे प्रागेवाभिहितत्वात् । ज्ञानग्राहकेण साक्षिणा ज्ञानगतं प्रमात्वं ज्ञानत्ववदेव गृह्यते । तच्च प्रमात्वं न त्रिकालाबाध्यत्वरूपं साक्षिणा ग्रहीतुं शक्यते । कालत्रयाणां प्रागनुपस्थितत्वात् साक्ष्यसम्बन्धाच्च । यच्च प्रमात्वं गृह्यते तच्च अज्ञातार्थविषयकनिश्चयत्वरूपं व्यावहारिकप्रमात्वम् । तेन दोषादीनां न पारमार्थिकसत्त्वं सिद्ध्यतीति भावः । प्रत्यक्षबाधोद्धारे हि—चक्षुराद्यध्यक्षयोग्यमिथ्यात्वविरोधिसत्त्वानिरुक्तेरित्युक्तम् । तथा च पूर्वपक्षिमते एव सुदृढोऽन्योन्याश्रय इति भावः ॥२३॥

२४—रूप्याद्यध्यासे दोषादीनामधिष्ठानसमानसत्ताकत्वं दृष्टं तद्वदेव प्रपञ्चाध्यासेऽपि दोषादीनामधिष्ठानब्रह्मसमानसत्ताकत्वं भविष्यतीत्याह पूर्वपक्षी—न च रूप्याद्यध्यासे दोषादीनामधिष्ठानसमानसत्ताकत्वं दृष्टमिति इहापि तथेति वाच्यम् । कृतविवरणमेतद् वाक्यम् । समाधत्ते सिद्धान्ती—साधर्म्यसमजात्युत्तरत्वात् । वस्तुतस्तु सर्वत्र चैतन्यस्यैवाधिष्ठानत्वेन कुत्रापि दोषादीनामधिष्ठान समानसत्ताकत्वाभावात् । साधर्म्यसमजात्युत्तरत्वात् इत्यस्य तर्काभावेऽपि दोषत्वादिसाधर्म्यमात्रेण यदापादनं तद्बोधकवाक्यत्वादित्यर्थः । रूप्याद्यध्यासे प्रपञ्चाध्यासे च दोषः दोषत्वेन समः । रूप्याद्यध्यासे दोषस्याधिष्ठानसमानसत्ताकत्वेऽपि प्रपञ्चाध्यासे दोषस्याधिष्ठानसमानसत्ताकत्वासम्भवात् दोषस्य दृश्यत्वेन कल्पितत्वात् । अधिष्ठानस्य ब्रह्मणः अकल्पितत्वात् इति । जातिषु इयं प्रथमा बोध्या । रजताद्यध्यासे दोषस्याधिष्ठानसमानसत्ताकत्वमभ्युपेत्य परिहार उक्तः । वस्तुतस्तु कुत्रापि दोषस्याधिष्ठानसमानसत्ताकत्वं नास्त्येव यतः सर्वत्रैवाध्यासे चैतन्यमेवाधिष्ठानं तच्च पारमार्थिकं दोषस्य दृश्यत्वेन कल्पितत्वमिति ॥२४॥

न च—बाधकज्ञानं सत्यमेव वक्तव्यम्, अन्यथा बाधकपरम्पराया अनवस्थापत्तेरिति—वाच्यम्। वेदान्तवाक्यजन्यचरमवृत्तेः कतकरजो-न्यायेन स्वपरबाधकतयाऽनवस्थाया अभावात्। दृश्यत्वमात्रेण युगपत्कृत्स्नबाधसम्भवात्। न हि गुहायां न शब्द इति शब्दः स्वं न निषेधति। अन्यथा स्वस्य स्वेनानिषेधे तत्राप्यनवस्थापत्तिः शब्द-मात्रनिषेधानुभवविरोधश्च। यद्यपि बाधकज्ञानं वृत्त्युपरक्तचैतन्यरूपं स्वतः सत्यमेव, तथापि तदवच्छेदिकाया वृत्तेर्दृश्यत्वेन मिथ्यात्वात् बाधोपपत्तिः॥२५।

---

२५—बाधकज्ञानस्य सत्यत्वमाशङ्क्य समाधत्ते—न च बाधकज्ञानं सत्यमेव वक्तव्यमन्यथा बाधपरम्पराया अनवस्थापत्तेरिति वाच्यम्। वेदान्त-वाक्यजन्यचरमवृत्तेः कतकरजोन्यायेन स्वपरबाधकतया अनवस्थाया साभवात्। दृश्यत्वमात्रेण युगपत्कृत्स्नबाधसम्भवात्। न हि गुहायां न शब्दः इति शब्दः स्वं न निषेधति अन्यथा स्वस्य स्वेन अनिषेधे तत्राप्यनवस्थापत्तिः। शब्दमात्रनिषेधानुभवविरोधश्च यद्यपि बाधकज्ञानं वृत्त्युपरक्तचैतन्यरूपं स्वतः सत्यमेव तथापि तदवच्छेदिकायाः वृत्तेर्दृश्यत्वेन मिथ्यात्वात् बाधोपपत्तिः। प्रपञ्चबाधकं चरमतत्त्वसाक्षात्कार-रूपं ब्रह्मज्ञानं स्वयं सत्यमेवेति वक्तव्यं सिद्धान्तिना अन्यथा तस्य बाधकज्ञानस्यापि बाध्यत्वे बाधकान्तरापेक्षायामनवस्थापातात् इति पूर्वपक्षिणा न च वाच्यम्। यतः वेदान्तवाक्यजन्यचरमवृत्तेः स्वपरबाधकतया अनवस्थाभावात् स्वबाधनाय बाध-कान्तरापेक्षाभावात्। यथा कतकरजः रजोऽन्तराविले पाथसि प्रक्षिप्तं रजोऽन्तराणि भिन्दत् स्वयमपि भिद्यमानमनाविलं पाथः करोति एवं चरमवृत्तिरपि अविद्यान्त-राण्यपगमयन्ती स्वयमपि अपगच्छति इति न अनवस्था। एष एव कतकरजो-न्यायः बाधकज्ञानं हि दृश्यत्वादिरूपेणैव विश्वं बाधते बाध्यतावच्छेदकप्रपञ्च-दृश्यत्वादिबाधकज्ञानेऽपि वर्तते। अतो बाधकज्ञानं स्वबाधकमपि भवति। कृत्स्न-प्रपञ्चस्य दृश्यत्वेनैव बाध्यत्वात् स्वपरबाधकत्वे दृष्टान्तान्तरमाह—गुहायां न शब्दः इति शब्दः गुहायां शब्दान्तरं निषेधन् गुहायां स्वात्मानमपि निषेधति। अस्य शब्दस्य स्वात्मनोऽनिषेधकत्वे तस्य निषेधाय निषेधकशब्दान्तरमपेक्षेत एवं तस्य

ननु—बन्धस्यात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वे तदभावार्थं यत्नो न स्यात्, अत्यन्ताभावस्यासाध्यत्वात्। अत एव न तत्प्रतीत्यभावार्थमपि यत्नः तस्या अपि मिथ्यात्वात्। अन्यथा मोक्षेऽपि बन्धप्रतीत्या तद्दशायामपि प्रातिभासिकबन्धापातात्। अथ पारमार्थिकत्वाकारेण मिथ्यात्वम् स्वरूपेण तु निवृत्तिरेव, न, तस्य [तस्याः] स्वरूपाबाधेनाप्युपपत्तेरिति—चेत् ॥२६॥

---

तस्यापीति अनवस्था स्यात्। निषेधकशब्दस्य गुहायां विद्यमानत्वे गुहायां शब्दसामान्याभावानुभवविरोधश्च स्यात्। बाधकज्ञानं चिद्रूपं चेत् कथं स्वात्मनापि बाध्येत इत्यत आह यद्यपि बाधकज्ञानमिति। वेदान्तमहावाक्यजन्याखण्डाकारचित्वृत्त्युपरक्तं चैतन्यमेव बाधकज्ञानं तच्च चैतन्यं स्वतः वृत्त्यनुपरक्तरूपेण परमार्थसत्यमेव तथापि चैतन्यावच्छेदिकाया चित्तवृत्तेर्दृश्यत्वेन मिथ्यात्वात् चित्तवृत्तेर्बाधोपपत्तिः अवच्छेदिकाया चित्तवृत्तेर्बाधे निर्मलं चैतन्यमात्रमवशिष्यते इति भावः ॥२५॥

चतुर्थप्रतिकूलतर्कविवरणं समाप्तम्

२६—बन्धस्य कल्पितत्वे बन्धनिवृत्त्यर्थं यत्नो न स्यात् इति पञ्चमः प्रतिकूलतर्कः। अयम्भावः—बन्धस्य कल्पितत्वं नाम मिथ्यात्वं तच्च अत्यन्ताभावप्रतियोगित्वं बन्धस्य मिथ्यात्ववत्त्वे तदभावार्थं यत्नो न स्यात्, बन्धप्रतियोगिकात्यन्ताभावरूपनिवृत्त्यर्थं यत्नो न स्यात् अत्यन्ताभावस्यासाध्यत्वात्। मिथ्याभूतबन्धप्रतियोगिकत्वस्य निवृत्तिरूपध्वंसेऽसम्भवेन बन्धप्रतियोगिकात्यन्ताभाव एव वाच्यः, किन्तु तदर्थं यत्नो न सम्भवति अत्यन्ताभावस्य नित्यत्वात् इत्याशयेन पूर्वपक्षी शङ्कते—ननु बन्धस्य अत्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वे तदभावार्थं यत्नो न स्यात् अत्यन्ताभावस्य असाध्यत्वात्। अत एव न तत्प्रतीत्यभावार्थमपि यत्नः, तस्या अपि मिथ्यात्वात्। अन्यथा मोक्षेऽपि बन्धप्रतीत्या तद्दशायामपि प्रातिभासिकबन्धापातात्। अथ पारमार्थिकत्वाकारेण मिथ्यात्वं स्वरूपेण तु निवृत्तिरेव तस्य[स्याः] स्वरूपाबाधेनाप्युपपत्तेरिति चेत्। ननु इत्याद्यसाध्यत्वादित्यन्तं कृतविवरणमेव। अत एवेति। यथा बन्धस्य मिथ्यात्वात् तदभावार्थं यत्नो न

न, सत्यस्य ब्रह्मणो निवृत्त्यदर्शनेन स्वरूपतो मिथ्यात्वाभावे निवृत्त्ययोगात् मिथ्यात्वं निवृत्त्यनुकूलमेव । न च तदर्थं प्रवृत्त्यनुपपत्तिः, अधिष्ठानसाक्षात्कारानन्तरं तथैव । ततः पूर्वं तु कण्ठगतविस्मृतचा-

---

सम्भवति एवं बन्धप्रतीतेरपि मिथ्यात्वात् तदभावार्थमपि यत्नो न सम्भवति मिथ्यात्वघटकात्यन्ताभावस्य नित्यत्वादिति । अथ बन्धप्रतीत्यभावार्थं यत्नो न भवत्विति चेत्तत्राह—अन्यथेति । बन्धप्रतीत्यभावार्थं यदि यत्नो न स्यात् तर्हि बन्धप्रतीतिर्न निवर्तेत एवञ्च मोक्षेऽपि बन्धप्रतीत्यापत्त्या मोक्षेऽपि प्रातिभासिकबन्धापातात् । यदि एतद्दोषपरिजिहिर्षया सिद्धान्तिना एवमुच्येत पारमार्थिकत्वरूपेणैव बन्धस्य मिथ्यात्वं स्वरूपेण तु बन्धस्य निवृत्तिरेव । निवृत्तेर्ध्वंसस्य साध्यत्वात् तदर्थं यत्नः स्यादेव इत्यत आह—तस्य स्वरूपाबाधेनाप्युपपत्तेरिति । अयम्भावः । ननु प्रपञ्चस्य स्वरूपेण अत्यन्ताभावो बन्धनिवृत्तिरिति नोच्यते किन्तु पारमार्थिकत्वाकारेण अत्यन्ताभावः कथ्यते । जगत्पारमार्थिकत्वाकारेण कालत्रयेऽपि नास्तीति यावत् । स्वरूपेण तु निवृत्तिरूपध्वंसोऽस्त्येव । न च मिथ्याभूतस्य ध्वंसायोगः मिथ्याभूतस्य प्रातिभासिकस्य ध्वंसायोगेऽपि व्यावहारिकस्य ध्वंससम्भवात युक्त एव यत्नः इत्याशङ्क्याह पूर्वपक्षी—न च पारमार्थिकत्वाकारेण अत्यन्ताभावः स्वरूपेण तु निवृत्तिरिति युक्तं तस्य निराकारे ब्रह्मणीव स्वरूपाबाधेनाप्युपपत्तेः । एतस्य पूर्वपक्षग्रन्थस्य संक्षेपेणाभिधानं मूले "तस्य स्वरूपाबाधेनाप्युपपत्तेः । ब्रह्मणो निराकारतया पारमार्थिकत्वाकारेण अत्यन्ताभावोऽस्ति विशिष्टनिषेधस्य विशेष्ये बाधे, विशेषणविषयकत्वेन ब्रह्मणि पारमार्थिकत्वं नास्तीति लभ्यते एवं ब्रह्मणि पारमार्थिकत्वस्य अभावेऽपि स्वरूपतो ब्रह्मणो न निवृत्तिः । किन्तु सत्त्वमेव एवं बन्धस्यापि स्यात् । बन्धे पारमार्थिकत्वाभावेऽपि बन्धस्य स्वरूपतः सत्त्वं स्यात् । बन्धस्य स्वरूपाबाधेऽपि तत्र पारमार्थिकत्वं नास्तीति ब्रह्मवत् बन्धोऽपि स्यादिति पूर्वपक्षाशयः । मूलस्थवाक्यस्य संक्षिप्तत्वात् तदर्थो न झटिति स्फुरतीति न्यायामृतग्रन्थादस्य आशयो बोध्यः ॥२६॥

२७—बन्धस्य स्वरूपतो मिथ्यात्वाभावे तस्य निवृत्तिरपि न स्यात् निवर्त्यत्वव्यापकत्वात् स्वरूपतो मिथ्यात्वस्येत्याह सिद्धान्ती—न, सत्यस्य ब्रह्मणो निवृत्त्यदर्शनेन स्वरूपतो मिथ्यात्वाभावे निवृत्त्ययोगात् मिथ्यात्वं

मीकरप्राप्तय इव भ्रमबाधकज्ञानोत्पत्तये प्रवृत्त्युपपत्तेः । अत्यन्ताभावाधिकरणे च प्रतियोगिवत्तन्निवृत्तिरप्युपपादितैव ।

न च—त्रैकालिकनिषेधप्रतियोगिनि तुच्छे निवृत्तिर्न दृष्टेति कथं तादृशि प्रपञ्चे सा स्यादिति—वाच्यम् ॥२७॥

यथाकथंचित् सजातीयेऽदर्शनस्याप्रयोजकत्वात् । अन्यथा अनुत्पन्ने निवृत्तिर्न दृष्टेति प्रागभावोऽपि न निवर्तेत । तस्मात् स्वभावविशेष एव तुच्छनित्यविलक्षणो निवृत्तिप्रयोजक इति वाच्यम् । सा च

---

निवृत्त्यनुकूलमेव । न च तदर्थं प्रवृत्त्यनुपपत्तिः अधिष्ठानसाक्षात्कारानन्तरं तथैव । ततः पूर्वं तु कण्ठगतविस्मृत चामीकरप्राप्तये इव भ्रमबाधकज्ञानोत्पत्तये प्रवृत्त्युपपत्तेः अत्यन्ताभावाधिकरणे च प्रतियोगिवत् तन्निवृत्तिरप्युपादिता एव । बन्धस्य स्वरूपतो मिथ्यात्वाभावे तस्य निवृत्तिरपि न स्यात् सत्यस्य ब्रह्मणो निवृत्त्यदर्शनात् मिथ्यात्वं निवृत्त्यनुकूलमेव । यदि मिथ्या न स्यात् न निवर्तेत ब्रह्मवत् इति निवर्त्यत्वव्यापकत्वात् मिथ्यात्वस्य मिथ्यात्वं निवृत्त्यनुकूलमेव । न च बन्धस्य मिथ्यात्वे तन्निवृत्त्यर्थं यत्नो न स्यात् अधिष्ठानतत्त्वसाक्षात्कारानन्तरं यत्नाभावो मदिष्ट एव । अधिष्ठानतत्त्वसाक्षात्कारेण बन्धस्यैव बाधितत्वादिति अधिष्ठानसाक्षात्कारात् पूर्वं तु कण्ठगतविस्मृतचामीकरन्यायेन भ्रान्तिबाधकज्ञानोत्पत्तये यत्नोपपत्तेः । मिथ्यावस्तुनः स्वात्यन्ताभावाधिकरणे एव प्रतीयमानत्वात् स्वात्यन्ताभावाधिकरणे मिथ्याप्रतियोगिनः सत्त्वमिव प्रतियोगिनिवृत्तेरपि सत्त्वं द्वितीयमिथ्यात्वलक्षणे उपपादितम् ।

अस्य प्रतिकूलतर्कस्य दृढत्वाय अन्यत्किञ्चित् शङ्कते पूर्वपक्षी—न च त्रैकालिकनिषेधप्रतियोगिनी तुच्छे निवृत्तिर्न दृष्टा इति कथं तादृशी प्रपञ्चे सा स्यादितिवाच्यम् । माध्वमते असतस्त्रैकालिकनिषेधप्रतियोगित्वाङ्गीकारात् असतो यथा निवृत्तिर्न भवति एवं सिद्धान्तिनापि प्रपञ्चस्य त्रैकालिकनिषेधाङ्गीकारेण असत्तुल्ये प्रपञ्चेऽपि निवर्त्यत्वं कथं स्यादिति पूर्वपक्षिणा न वाच्यम् ॥२७॥

२८—समाधत्ते सिद्धान्ती—यथा कथञ्चित् सजातीये अदर्शनस्य अप्रयोजकत्वात् । अन्यथा अनुत्पन्ने निवृत्तिर्न दृष्टा इति प्रागभावोऽपि न निवर्तेत । तस्मात् स्वभावविशेष एव तुच्छनित्यविलक्षणो निवृत्ति-

निवृत्तिरधिकरणस्वरूपेति पक्षे घटनाशार्थं मुद्गरपातादाविव मननादौ प्रवृत्तिरूहनीया। अतिरिक्तेति पक्षे त्वनिर्वचनीया, पञ्चमप्रकारा चरमवृत्तिरूपा वा सा, सर्वथा जन्यैवेति न काप्यनुपपत्तिः ॥२८॥

---

प्रयोजक इति वाच्यम्। सा च निवृत्तिरधिकरणस्वरूपेति पक्षे घटनाशार्थं मुद्गरपातादाविव मननादौ प्रवृत्तिरूहनीया। अतिरिक्त[इति]-पक्षे तु अनिर्वचनीया पञ्चमप्रकारा चरमवृत्तिरूपा[या]वा सा सर्वथा जन्यैवेति न काप्यनुपपत्तिः। त्रैकालिकनिषेधप्रतियोगित्वेन प्रपञ्चसजातीये तुच्छे निवृत्तिर्न दृष्टा इति प्रपञ्चेऽपि यथा कथञ्चित् तुच्छसजातीये निवृत्तिर्न स्यात् इति वक्तुं न शक्यते प्रपञ्चे तुच्छसालक्षण्येऽपि वैलक्षण्यस्यापि सत्त्वात्। सत्त्वप्रकारकप्रतीतिविषयत्वमेव तुच्छवैलक्षण्यं प्रपञ्च एव वर्तते इत्याह—यथा कथञ्चित् इति। यथा कथञ्चित् साम्यमात्रेण नियमाङ्गीकारे दोषामाह—अन्यथेति। यथा कथञ्चित् साम्यमात्रेणैव नियमाङ्गीकारे अनुत्पन्ने घटादौ निवृत्तिर्न दृष्टेति अनुत्पन्नस्य प्रागभावस्यापि निवृत्तिर्न स्यात् इति तस्मात् तुच्छब्रह्मविलक्षणः स्वभावविशेष एव निवृत्तिप्रयोजक एष्टव्यः। स च स्वभावविशेषः दृश्यत्वादिरिति भावः। सा च निवृत्तिः प्रतियोग्यधिकरणस्वरूपेति मते घटनाशः घटावयवविभागोपहितस्य घटावयवस्य निष्पत्तिः। घटावयवस्य प्राक् सिद्धत्वेऽपि घटावयवविभागस्य असिद्धत्वात्। असिद्धोपहितस्यापि-असिद्धत्वात् तत्साधनाय यत्नः उपपद्यते। एवं रूपे घटनाशे यथा प्रवृत्ति-रुपपद्यते एवं बन्धनाशार्थत्वेन मननादौ प्रवृत्तिरूहनीया। बन्धाधिकरणात्म-स्वरूपैव बन्धनिवृत्तिरिति मतेऽपि ज्ञानोपलक्षितात्मस्वरूपनिष्पत्त्यर्थं श्रवणमननयोः प्रवृत्तिरिति भावः। उक्तञ्च तत्त्वप्रदीपिकायाम्—नाप्यात्मैवाज्ञाननिवृत्तिः आत्मनः सदातनत्वेन अज्ञाननिवृत्तेरपि तथात्वे संसाराभावप्रसङ्गात्। आत्मनस्तत्त्वज्ञान-साध्यत्वप्रसङ्गाच्च ज्ञात आत्मा[इत्यत्र]अज्ञाननिवृत्तिर्न स्वरूपेण इति चेत्, न, ज्ञानस्य विशेषणत्वे नित्यत्वे च मोक्षदशायामपि अन्तःकरणादेरवस्थानप्रसङ्गात् अनित्यत्वे च अज्ञाननिवृत्तिरूपायामुक्तेरपि अनित्यत्वापातात्। न च ज्ञानोपलक्षित एव आत्मा अज्ञाननिवृत्तिरुपलक्षितत्वस्य नित्यत्वानित्यत्वयोः प्राचीनदोषानुसङ्गात्। तस्मान्नाज्ञाननिवृत्तिरुपपन्नेति। अत्रोच्यते—

ननु बन्धस्य ब्रह्मण्यध्यस्तत्वे तन्निदिध्यासनसाध्यतत्साक्षात्कार-निवर्त्यत्वं, श्रवणादिनियमादृष्टसापेक्षब्रह्मज्ञाननिवर्त्यत्वं च न स्यात् ।

---

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
उपलक्षणनाशेऽपि स्यान्मुक्तिः पाचकादिवत् ॥

यथा लोके सकारणस्य कलधौतविभ्रमस्य ज्ञाता शुक्तिरेव निवृत्तिः । [पृ० ३८२] बन्धस्वरूपमुक्तं सुरेश्वरवार्तिके—अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः इति । तदनुसृत्य तत्त्वप्रदीपिकायाम् अविद्यानिवृत्तिरेव बन्धनिवृत्तिरभिहिता । अज्ञानरूपबन्धस्य निवृत्तिः अधिकरणातिरिक्तेति मते अनिर्वचनीया इति । अयं भावः—ज्ञानोपलक्षितात्मनः अज्ञाननाशत्वे ज्ञानादज्ञाननाशोत्पत्तिर्न सम्भवति युगपदेव ज्ञानतदुपलक्षितात्मनोरुत्पादात् । तथा च ज्ञात्वा देव मुच्यते सर्वपाशैरिति श्रुतौ आनन्तर्यबोधकक्त्वाप्रत्ययविरोधः । तत्राह—मूलकारः—अतिरिक्तेति । अतिरिक्ताया अपि निवृत्तेर्भुज्यमाना दृष्टा समानकालीनेन तत्त्वज्ञानेन तत्संस्कारेण वा उच्छेद्यत्वेन ज्ञाननिवर्त्यत्वादनिर्वाच्यत्वम् । ननु तत्त्वज्ञानान्तरस्य अनुत्पादेऽपि भोगसमाप्तौ कैवल्यसम्भवात् उक्तनिवृत्तेः ज्ञाननिवर्त्यत्वासम्भवेन अनिर्वाच्यत्वासम्भवः संस्कारद्वारा ज्ञाननिवर्त्यत्वन्तु न मिथ्यात्वं साक्षाज्ज्ञानोच्छेद्यत्वस्यैव मिथ्यात्वात् अत आह—पञ्चमप्रकारेति । ज्ञानानुच्छेद्या । तथा च ज्ञानानुच्छेद्यत्वेऽपि चिद्भास्यत्वरूपदृश्यत्वादेव तस्य मिथ्यात्वं संस्कारद्वारकसाधारणं ज्ञानोच्छेद्यत्वं वा मिथ्यात्वम् । ननु ज्ञानमेवाज्ञाननाशोऽस्तु अतिरिक्तनाशकल्पने गौरवात् तत्राह—चरमवृत्तिरूपा वा इति । न हि विरोध्युदयमन्तेरण विरोधिनिवृत्तिर्नाम अन्या दृश्यते युज्यते वा अतः ज्ञातोऽर्थस्तज्ज्ञप्तिर्वा अज्ञानहानिरितीष्टसिद्धिकारैरभिधानात् । विद्यैव वा अद्वया सान्ता तदस्तमय उच्यते इति ब्रह्मसिद्धिकारैरप्युक्तत्वात् इति [तत्त्वप्रदीपिका०, पृ० ३८१] बन्धनिवृत्तेरधिकरणरूपत्वेऽतिरिक्तत्वे वा सर्वथा जन्यैव इति तदर्थं यत्नो न अनुपपन्नः इति भावः ? ॥२८॥

पञ्चमप्रतिकूलतर्कनिराकरणं समाप्तम् ।

२९—षष्ठसप्तमौ तर्कौ प्रदर्शयन्नाह पूर्वपक्षी [६]—बन्धस्य ब्रह्मण्यध्यस्तत्वे तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यत्वं न स्यात् । एवम् [७] बन्धस्य

न हि देवतानिदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यं दुरितं तत्राध्यस्तम्; न वा दूरागमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यं दुरितं तत्राध्यस्तमिति—चेत् ॥२९॥

न, आत्माध्यस्तगौरत्वादेः शुक्त्याद्यध्यस्तरूप्यादेश्च तत्तत्साक्षात्कारनिवर्त्यत्वदर्शनेन प्रपञ्चस्यापि ब्रह्मण्यध्यस्ततया तत्साक्षात्कारनिवर्त्यत्वस्यावश्यकत्वात्। न हि शुक्त्याद्यध्यस्तं रूप्यादि शुक्त्यादिज्ञानं विना निवर्तते। देवतादर्शनादिना तु प्रायश्चित्तसमयकक्ष्येण दुरितस्य कारणात्मनावस्थानमात्रं क्रियते, न तु शुक्तिज्ञानेन रूप्यस्येव

---

ब्रह्मण्यध्यस्तत्वे श्रवणादिनियमादृष्टसापेक्षब्रह्मज्ञाननिवर्त्यत्वञ्च न स्यात्। न हि देवतानिदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यं दुरितं तत्राध्यस्तम्। न वा दूरगमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यं दुरितं तत्राध्यस्तम्। ब्रह्मणि अध्यस्तोबन्धः ब्रह्मसाक्षात्कारनिवर्त्यः इति सिद्धान्तिनः पक्षः। स च न सम्भवति, प्रदर्शिते-प्रतिकूलतर्कद्वयप्रतिघातात्। तर्कमूलीभूतव्याप्तिग्रहणभूमिं दर्शयन् सत्तर्कत्वं प्रदर्शयति। यथा देवता निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यं दुरितं न देवतायामध्यस्तम्। एवं ब्रह्मनिदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यो बन्धः न ब्रह्मणि अध्यस्तः स्यात्। यथा वा दूरगमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यं दुरितं न सेतौ अध्यस्तमेवं श्रवणादिनियमादृष्टसापेक्षब्रह्मदर्शननिवर्त्यो बन्धः न ब्रह्मणि अध्यस्तः स्यात्। इति प्रतिकूलतर्कद्वयं दर्शयति मूलकारः—ननु बन्धस्य ब्रह्मण्यध्यस्तत्वे तन्निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यत्वं, श्रवणादिनियमादृष्टसापेक्षब्रह्मज्ञाननिवर्त्यत्वञ्च न स्यात्। न हि देवता निदिध्यासनसाध्यतत्साक्षात्कारनिवर्त्यं दुरितं तत्राध्यस्तं न वा दूरागमनादिनियमादृष्टसापेक्षसेतुदर्शननिवर्त्यं दुरितं तत्राध्यस्तमिति चेत्। अस्याभिप्रायः प्रागेव प्रदर्शितः ॥२९॥

३०— समाधत्ते सिद्धान्ती—न, आत्माध्यस्तगौरत्वादेः शुक्त्याद्यध्यस्तरूप्यादेश्च तत्साक्षात्कारनिवर्त्यत्वदर्शनेन प्रपञ्चस्यापि ब्रह्मण्यध्यस्ततया तत्साक्षात्कारनिवर्त्यत्वस्यावश्यकत्वात्। न हि शुक्त्याद्यध्यस्तं रुप्यादिशुक्त्यादिज्ञानं विना निवर्तते। देवतादर्शनादिना तु

निवृत्तिः, अधिष्ठानाज्ञानरूपोपादानकस्यारोपितस्य तन्निवृत्तिं विना निवृत्त्ययोगात्। अज्ञाननिवृत्तिश्चाधिष्ठानज्ञानादेवेत्युक्तं प्राक्। श्रवणादिनियमादृष्टं च न मुक्तिं प्रति कारणम्, किन्तु ब्रह्मापरोक्ष्यं प्रति ॥३०॥

---

प्रायश्चित्तसमकक्ष्येण दुरितस्य कारणात्मना अवस्थानमात्रं क्रियते। न तु शुक्तिज्ञानेन रूप्यस्येव निवृत्तिः अधिष्ठानाज्ञानरूपोपादानकस्य आरोपितस्य तन्निवृत्तिं विना निवृत्त्ययोगात्। अज्ञाननिवृत्तिश्च अधिष्ठानज्ञानादेव इत्युक्तं प्राक्। श्रवणादिनियमादृष्टं च न मुक्तिं प्रति कारणं किन्तु ब्रह्मापरोक्ष्यं प्रति। यद्विषयप्रमात्वं यन्निवर्तकत्वप्रयोजकं तत्राध्यस्तमिति नियमस्य न व्यभिचार इत्याह सिद्धान्ती—न आत्माध्यस्तगौरत्वादेरिति। यद्यपि शुक्तौ रजताध्यासस्य रज्ज्वाध्यासेनापि निवृत्तिरस्ति तथापि समूलसकलाध्यासनिवृत्तिरधिष्ठानप्रमापेक्षा, तदन्यानपेक्षा च दृष्टा तन्न्याय इहापि ग्राह्य इत्याह—आत्माध्यस्त गौरत्वादेः शुक्त्यध्यस्त रजतादेश्च तत्तदधिष्ठानतत्त्वसाक्षात्कारनिवर्त्यत्वदर्शनेन प्रपञ्चस्यापि ब्रह्मण्यध्यस्ततया तत्साक्षात्कारनिवर्त्यत्वस्य आवश्यकत्वात् अन्यथा समूलसकलाध्यासनिवृत्तिर्न स्यात्। तार्क्ष्यध्याननिवर्त्यविषस्येव देवताध्याननिवर्त्यदुरितस्यापि कल्पिताकल्पितसाधारणयथोपदिष्टार्थविषयकतार्क्ष्यध्यानस्येव विषनिवर्तने देवतानिदिध्यासनसाध्यसाक्षात्कारस्य दुरितनिवर्तने प्रमात्वं नापेक्षते। प्रमात्वेन देवतासाक्षात्कारस्य न दुरितनिवर्तकता किन्तु यथोपदिष्टार्थविषयकत्वेन। निदिध्यासनसाध्यसाक्षात्कारस्य प्रमात्वाभावात् विधुरपरिभावितकामिनीसाक्षात्कारवत्। यथोपदिष्टार्थविषयकत्वेन देवतासाक्षात्कारस्य प्रायश्चित्तसमकक्षता यथोपदिष्टप्रायश्चित्ताचरणात् यथा पापस्य निवृत्तिरेवं यथोपदिष्टदेवतासाक्षात्कारात् दुरितनिवृत्तिरिति गरुडध्यानदेवतासाक्षात्कारयोर्न प्रमात्वेन विषादृष्टयोर्निवर्तकता किन्तु यथोपदिष्टार्थकत्वेन। तथा च यथा प्रायश्चित्तेन आचीर्णेन दुरितं कारणात्मना अवतिष्ठते न कारणेन सह बाध्यते एवमेव देवतादर्शनेनापि दुरितं कारणात्मना अवतिष्ठते न समूलसकलाध्यासनिवृत्तिरिति न साक्षात्कारप्रमात्वेन सत्यस्य निवृत्तौ निदर्शनम्। एतेन

ननु—अवघातसाध्यवैतुष्यान्यापूर्वस्येव श्रवणादिसाध्यापरोक्ष्या-

सेतुदर्शननिदर्शनञ्च चोदितक्रियात्मनैव दुरितनिवर्तकं न प्रमित्यात्मना पश्यतामपि सेतुं म्लेच्छानां श्रद्धाविरहिणां वा अघानुपघातात्¹।

आत्मप्रमा तु दृष्टद्वारेण बन्धनिवर्तिनी न विधिद्वारा आत्मज्ञानविधेः समन्वय-सूत्रे पराकृतत्वात् इति। सेतुदर्शननिवृत्तमपि दुरितं कारणात्मनावस्थितं भवति। शुक्तिज्ञानेन तु अधिष्ठानतत्त्वसाक्षात्कारेण रजताध्यासोपादानाज्ञानेन सह रजता-ध्यासस्य निवृत्तिरिति न समं निदर्शनं यदप्युक्तं श्रवणनियमादृष्टसहकारेण ब्रह्मज्ञानं बन्धनिवर्तकमिति तन्न, न हि श्रवणनियमादृष्टं बन्धनिवृत्तिं प्रति कारणं बन्धस्य ज्ञानैकनिवर्त्यत्वात्। अत एव बन्धस्य मिथ्यात्वम्। किन्तु सर्वसुकृतिसापेक्षो ब्रह्मसाक्षात्कार एव श्रवणनियमादृष्टसाध्यः। सर्वापेक्षा च यज्ञादिश्रुतेरित्यधिकरणे निर्णीतोऽयमर्थः। [ब्र० सू० ३।४।२६] ब्रह्मविद्या स्वोत्पत्तौ सर्वाणि सुकृतान्य-पेक्षते। उत्पन्ना तु विद्या फलसिद्धिं प्रति न किञ्चिदन्यदपेक्षते इति तत्रैवाधिकरणे निर्णीतम् ॥३०॥

---

१. सेतुदर्शनप्रकारश्च मिताक्षरायां प्रायश्चित्ताध्याये (२५० श्लोकः, विसर्गे—यदपि पराशरेणोक्तम्—

चातुर्विद्योपपन्नस्तु विधिवत् ब्रह्मघातके।
समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥
सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाहरेत्।
वर्जयित्वा विकर्मस्थान् छत्रोपानद्विवर्जितः ॥
अहं दुष्कृतकर्मा वै महापातककारकः।
गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥
गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च।
तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥
एतेषु ख्यापयेदेनः पुण्यं गत्वा तु सागरम्।
ब्रह्महाऽपि प्रमुच्येत स्नात्वा तस्मिन् महोदधौ ॥
ततः पूतो गृहं प्राप्य कृत्वा ब्राह्मणभोजनम्।
दत्त्वा वस्त्रं पवित्राणि पूतात्मा प्रविशेद् गृहम् ॥
गवां वापि शतं दद्यात् चातुर्विद्याय दक्षिणम्।
एवं शुद्धिमवाप्नोति चातुर्विद्यानुमोदितः ॥
अत्र सेतुदर्शनस्य विहितक्रियात्वं सुस्पष्टम्।

न्यमुक्तेरेव तत्साध्यत्वम्, अन्यथा श्रवणनियमादृष्टसाध्ये साक्षात्कारे श्रवणनिरपेक्षस्योपायान्तरस्याप्रसक्त्या तत्प्रसक्त्यधीननियमविध्ययोगात्। न च--परोक्षज्ञानं श्रवणात्, अपरोक्षं तु नियमादृष्टादिति-युक्तम्, श्रवणादिविधौ परोक्षज्ञानप्रवाहरूपंनिदिध्यासनसाध्यापरोक्षस्यैव दृशिनोद्देशात्[1] त्वन्मते परोक्षज्ञाने कामनाया अयोगेन तस्योद्देश्यत्वायोगाच्चेति—चेत् ॥२१॥

---

२१—श्रवणनियमसाध्यापूर्वस्य मुक्तावपि जनकत्वं व्रीह्यवघातन्यायादिति शङ्कते पूर्वपक्षी—ननु अवघातसाध्यवैतुष्यान्यापूर्वस्येव श्रवणादिः साध्यापरोक्ष्यान्यमुक्तेरेव तत्साध्यत्वमन्यथा श्रवणनियमादृष्टसाध्ये साक्षात्कारे श्रवणनिरपेक्षस्य उपायान्तराप्रसक्त्या तत्प्रसक्तधीननियमविध्ययोगात्। न च परोक्षज्ञानं श्रवणात् अपरोक्षं तु नियमादृष्टात् इति युक्तं श्रवणादि विधौ परोक्षज्ञानप्रवाहरूपनिदिध्यासनसाध्यापरोक्ष्यस्यैव दृशिना उद्देशात्। त्वन्मते परोक्षज्ञाने कामनाया अयोगेन तस्य उद्देश्यत्वायोगाच्च इति चेत्। प्रदर्शितसप्तमतर्के यन्नियमादृष्टसापेक्ष्यज्ञाननिवर्त्यं यद् तत् तत्र नाध्यस्तमिति तर्के दृष्टापत्तिः ब्रह्मसाक्षात्कारेण बन्धनिवृत्तिरूपे मोक्षे जननीये सहकारितया श्रवणादिनियमादृष्टापेक्षाया अभावात् श्रवणादिनियमजन्यादृष्टमपि ज्ञानवत् न मोक्षहेतुरिति यावत्। तर्हि नियमादृष्टस्य वैयर्थ्यं स्यादिति चेन्न, साक्षात्कारं प्रत्येव कारणत्वाभ्युपगमात् इत्याशङ्क्य निषेधति अवघातसाध्येति। सर्वत्रापि क्रियातन्नियमादृष्टयोः फलभेद एव दृष्टः। यथा व्रीहीनवहन्ति इत्यत्र अवहननक्रियासाध्यं फलं वैतुष्यम् अवहननेनैव वैतुष्यं सम्पाद्यं न तु नखविदलनादिना इत्येवमवहननक्रियानियमेन किञ्चित् अवान्तरादृष्टं जायते। तत्साध्यं वैतुष्यभिन्नं परमापूर्वरूपं फलमस्ति इत्येवं क्रिया तन्नियमादृष्टयोः फलभेदो दृष्टः, एवं श्रवणादिक्रियासाध्यं फलं ब्रह्मापारोक्ष्यं श्रवणादिनैव ब्रह्मापारोक्ष्यं सम्पाद्यं नान्यथा इत्येवं श्रवणादिरूपक्रियानियमेन किञ्चिददृष्टं जायते तत्साध्यं फलं ब्रह्मापरोक्ष्यात् भिन्नं मोक्षरूपमेवाङ्गीकरणीयम्। इति नेष्टापत्तिरित्यर्थः। तत्साध्यत्वमिति नियमादृष्टसाध्यत्वमिति। ननु सर्वत्र नियमविधिस्थले क्रियातन्नियमादृष्टयोः फलभेदेऽपि श्रवणादितन्नियमादृष्टयोः एकफलत्व-

मेवास्तु तथा च सप्तमतर्के पुनरिष्टापत्तिरेव अत आह—अन्यथेति । अस्यैव विवरणं श्रवणनियमादृष्टसाध्ये साक्षात्कारेऽङ्गीकृते इति शेषः । श्रवणादिरूपक्रिया तन्नियमादृष्टयोः साक्षात्काररूपमेकफलं प्रति हेतुत्वाङ्गीकारे नियमविधित्वमेव न स्यात्, विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति इति वचनात् । व्रीहीनवहन्तीत्यत्र वितुषिभावरूपे फले अवहनननिरपेक्षनखविदलनादिरूपोपायान्तरप्रसक्तौ सत्यामवहननेनैव वितुषिभावं सम्पादयेत्, तेन अदृष्टं जायते इत्येवं नियमादृष्टं कल्प्यते । एवं साक्षात्काररूपे फले श्रवणनिरपेक्षोपायान्तरप्रसक्तौ सत्यां श्रवणादिनैव साक्षात्कारं सम्पादयेदिति नियमेन किञ्चिददृष्टं जायते इति कल्पनीयम् । न चैवमस्ति श्रवणादिनिरपेक्षोपायान्तरप्रसक्तेरेवाभावात् । उपायान्तरप्रसक्त्यधीननियमविध्ययोगात् इत्यर्थः ।

श्रवणादिक्रियातन्नियमादृष्टयोः फलभेदात् सप्तमे तर्के पुनरिष्टापत्तिरित्याशङ्क्य निराकरोति—न च **परोक्षज्ञान**मिति । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इत्यत्र यादृशज्ञानमुद्दिश्य निदिध्यासनं विहितं तादृशमेव ज्ञानं दृशिना निर्दिश्य तादर्थ्येन श्रवणादिकमपि विधीयते । अन्यथा निदिध्यासनापेक्षया दृशेरपरोक्षज्ञानोपस्थापकत्वं श्रवणाद्यपेक्षया परोक्षज्ञानोपस्थापकत्वं चेति वैरूप्यापत्तेः [द्वैरूप्यापत्तेः] अतः श्रवणविधेरपि अपरोक्षज्ञानार्थत्वमिति न फलभेदः इति नेष्टापत्तिरिति । ननु निदिध्यासनविधावपि श्रवणादिविधाविव परोक्षज्ञानमेव दृशिना उद्दिश्यतामित्यत उक्तं—परोक्षज्ञानप्रवाहरूपनिदिध्यासनसाध्यापरोक्षस्यैव दृशिना उद्देशात् इति । निदिध्यासनस्य परोक्षज्ञानप्रवाहरूपत्वात् निदिध्यासनस्य परोक्षं ज्ञानं फलं न भवितुमर्हतीति । **त्वन्मते परोक्षज्ञाने** इति । अयमभिप्रायः—न श्रवणविधौ परोक्षज्ञानस्य उद्देश्यत्वं काम्यत्वमेव हि उद्देश्यत्वं परोक्षज्ञाने च कामना न सम्भवति । तथा हि ब्रह्मज्ञानं मे भूयादिति हि कामनाकर्तव्या । तत्र प्रष्टव्यं ब्रह्मज्ञानं ज्ञातं न वा, न चेत् ब्रह्मज्ञानं मे भूयादिति कामनाया अयोगः अज्ञाते कामनाया असम्भवात् । ज्ञातत्वे ज्ञानवच्छेदकतया ब्रह्मणोऽपि ज्ञातत्वेन सुतरां काम्यत्वायोगः, सिद्धे इच्छाविरहात् । न च अपरोक्षज्ञानस्यापि काम्यत्वायोगः तत्रापि प्रष्टव्यम् अपरोक्षज्ञानं ज्ञातं न वा, नेति पक्षे कामनाया अयोगः आद्ये ब्रह्मणोऽपि ज्ञातत्वात् कामनाया अयोग इति वक्तुं

न, तत्र क्रत्वर्थस्य नियमापूर्वस्य परमापूर्वसाधकत्वेऽपि पुरुषार्थ-हिरण्यधारणादिनियमादृष्टस्य तदभाववत् श्रवणादिसाध्यसाक्षात्कारा-न्यफलाभावेऽपि तेनैव फलवत्त्वोपपत्तेः। सर्वापेक्षा च यज्ञादिश्रुतेरश्व-वदिति न्यायात्। 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति स्मृतेश्च। अत्र सर्वाखिलपदाभ्यां कर्मशब्दवाच्यापूर्वमात्रस्य ज्ञाने समाप्तिर्दर्शिता मोक्षस्याविद्यानिवृत्तिरूपस्य ज्ञानातिरिक्तासाध्यत्वनियमाच्च। ज्ञाने त्वसम्भावनादिनिवृत्त्या प्रतिबन्धकदुरितादिनिवृत्त्या च दृष्टादृष्टांशोपयोगः। सामान्यपुरस्कारेण च प्रसक्तस्य साधनान्तरस्य निवृत्तिः सर्वत्र नियमविधेः फलम् विशेषरूपेण त्वपूर्वविधित्वमेव। यथा हि व्रीहीनवहन्तीत्यादावपूर्वसाधनीभूतव्रीहिवैतुष्ये विशिष्यावघाता-तिरिक्तसाधनान्तराप्रसक्तावपि व्रीहिवैतुष्यमात्रे प्रसक्तस्य नखविदलना-

---

न युज्यते। परोक्षतो ज्ञाते ब्रह्मणि अपरोक्षज्ञानकामनायाः सम्भवात्। न चैवं सिद्धान्तिना वक्तुं शक्यते, अपरोक्षतो ज्ञाते ब्रह्मणि परोक्षज्ञानकामनाया असम्भवात् इति भावः। अतः परोक्षज्ञाने कामनाया अयोगेन तस्य उद्देश्यत्वायोगात् इति मूलमपि सङ्गतमेव इति भावः ॥३१॥

३२—सर्वत्र क्रियातन्नियमादृष्टयोः फलभेदो नास्तीति सिद्धान्ती समाधत्ते—

न, तत्र क्रत्वर्थस्य नियमापूर्वस्य परमापूर्वसाधकत्वेऽपि पुरुषार्थहिरण्यधारणादिनियमादृष्टस्य तदभाववत् श्रवणादिसाध्यसाक्षात्काराण्यफला-भावेऽपि तेनैव फलवत्त्वोपपत्तेः। सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् इति न्यायात्। सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते इति स्मृतेश्च। अत्र सर्वाखिलपदाभ्यां कर्मशब्दवाच्यापूर्वमात्रस्य ज्ञाने समाप्तिर्दर्शिता। मोक्षस्य अविद्यानिवृत्तिरूपस्य ज्ञानातिरिक्तासाध्यत्वनियमाच्च। ज्ञाने तु असम्भावनादिनिवृत्त्या प्रतिबन्धकदुरितादिनिवृत्त्या च दृष्टादृष्टांशो-पयोगः। सामान्यपुरस्कारेण च प्रसक्तस्य साधनान्तरस्य निवृत्तिः सर्वत्र नियमविधेः फल विशेषरूपेण त्वपूर्वविधित्वमेव। यथा हि व्रीहीनवहन्तीत्यादौ अपूर्वसाधनीभूतव्रीहिवैतुष्ये विशिष्यावघातातिरिक्तसाधनान्तराप्रसक्तावपि व्रीहिवैतुष्यमात्रे प्रसक्तस्य नखविदलना-

र्देनिवृत्तिः, विशिष्यकार्यकारणभावबोधनात् तथा निर्विशेषब्रह्मात्माभेद-साक्षात्कारप्रतिबन्धनिवृत्तौ श्रवणाद्यतिरिक्तसाधनान्तराप्रसक्तावप्यात्म-ज्ञानमात्रप्रतिबन्धनिवृत्तौ साङ्ख्यादिशास्त्रस्यापि प्रसक्तेः तन्निवृत्तिर्वि-शिष्यवेदान्तवाक्यविचारविधानादिति परमगम्भीरोऽयं ग्रन्थार्थः ॥३२॥

---

र्देर्निवृत्तिः विशिष्यकार्यकारणभावबोधनात् तथा निर्विशेषब्रह्मात्मा-भेदसाक्षात्कारप्रतिबन्धनिवृत्तौ श्रवणाद्यतिरिक्तसाधनान्तराप्रसक्तावपि आत्मज्ञानमात्रप्रतिबन्धनिवृत्तौ सांख्यादिशास्त्रस्यापि प्रसक्तेः तन्निवृत्तिः विशिष्यवेदान्तवाक्यविचारविधानादिति परमगम्भीरोऽयं ग्रन्थार्थः। क्रत्वर्थनियमापूर्वस्येति क्रतुं तत्कारकं च उद्दिश्य विहितं यत् तदीयनियमापूर्वस्य इत्यर्थः। **परमापूर्वसाधकत्वेऽपीति।** उत्पत्त्यपूर्वसाधकत्वेऽपीत्यर्थः। तृतीया-ध्याये तेषामर्थेन सम्बन्ध इत्यधिकरणेऽवघातादेः आग्नेयाद्युत्पत्त्यपूर्वार्थत्वस्य निर्णीतत्वात् परमापूर्वार्थत्वाभावात् अन्यथा अवघातादेः उपांशु याजीयाज्यादिषु चारणासम्भवात्। पुरुषार्थहिरण्यधारणादिनियमादृष्टस्येति । पूर्वमीमांसायाः तृतीयाध्याये चतुर्थपादे चिन्तितं। सुवर्णं हिरण्यं धार्यं सुवर्ण एव भवति दुर्वर्णोऽ-स्य भ्रातृव्यो भवतीति वाक्ये अनारभ्याधीते शोभनवर्णहिरण्यधारणं क्रत्वर्थं पुरुषार्थं-वेति संशये पुरुषार्थत्वे फलकल्पना गौरवात् अग्निहोत्रादिकर्मसु अङ्गम्। रात्रि-सत्रादौ तु आर्थवादिकफलकल्पनायुक्ता न तु प्रकृते धारणसंस्कृतस्य सुवर्णस्य क्रतूपयोगसम्भवादिति पूर्वपक्षे प्राप्ते—नैवं क्रतुं प्रति हि आहवनीयादेरिव धारणस्य न विधिरस्ति नापि जुह्वादेरिव सुवर्णस्य क्रतौ अव्यभिचरितसम्बन्धः। येन तस्य क्रतूपस्थापकतया क्रत्वपूर्वसाधनीभूतं तदुद्दिश्य हिरण्यधारणविधि-सम्भवात् क्रत्वर्थत्वं शङ्कनीयम्। लोकेऽपि हिरण्यस्योपयोगसम्भवेन जुह्वादेरिव क्रत्वव्यभिचारिसम्बन्धाभावात्। तस्मात् आर्थवादिकं भ्रातृव्यदुर्वर्णत्वादिफलं पुरुषापेक्षितमुद्दिश्य हिरण्यधारणं विधीयते। सोऽयं नियमविधिः उक्तफले साधनान्तरनिवृत्तिफलकसाधननियमस्य प्रत्यवायनिवृत्त्यर्थत्वात् यथा प्रतिग्रहादेर्नियम-विधिना साधनान्तरेण द्रव्यार्जने पुरुषस्य प्रत्यवायः तथा साधनान्तरेण भ्रातृव्यदुर्वर्णतायाः स्वकीयसुवर्णतायाश्च करणे प्रत्यवायः। तथा च हिरण्यधार-णादिनियमापूर्वस्य यथा परमापूर्वा[र्थ]साधनत्वं तथा श्रवणादिनियमापूर्वस्येति भावः।

ननु [कख] यदि विश्वं कल्पितं स्यात्, तदा 'जन्माद्यस्य यत' इति सूत्रे 'यतो वा इमानी'त्यादि श्रुतौ च जन्माद्युक्तिः, [गघ] 'ईक्षते-

---

श्रवणादिनियमापूर्वस्य श्रवणादिसाध्यसाक्षात्कारान्यफलाभावेऽपि साक्षात्कारफलेनैव फलवत्त्वोपपत्तेः । सर्वापेक्षा चेति [ब्र० सू० २५० ३।४।२६] सूत्रसूचितन्यायात् सर्वं कर्माखिलं पार्थ इति गीतास्मृतेश्चेति सूत्रस्यायमर्थः—सर्वविहितकर्मणां तत्त्व-साक्षात्कारेऽपेक्षा विविदिषन्तीति श्रुतेः, कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते इति स्मृतेश्च । यथा अश्वो रथचालनादौ अपेक्ष्यते न तु लाङ्गलकर्षणादौ, अनुपयुक्तत्वात् तथा तत्त्वावरकाज्ञाननिवृत्तिरूपे मोक्षे तत्त्वज्ञानैकसाध्ये कर्मणां नापेक्षा इति सूत्रार्थः । सर्वकर्मणां ज्ञाने परिसमाप्तिर्नाम ज्ञानसाध्याजनकत्वे सति ज्ञानजनकत्वम् । स्मृतौ सर्वाखिलशब्दाभ्यां कर्मशब्दवाच्यापूर्वमात्रस्य ज्ञाने समाप्तिर्दर्शिता । विहितकर्मजन्यापूर्वस्य नियमापूर्वस्य च सर्वाखिलपदाभ्यां ग्रहणनियमापूर्वस्याग्रहणे पदद्वयं पुनरुक्तं स्यात् । अविद्यानिवृत्तिरूपमोक्षस्य इति अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः इति वार्तिकवाक्यात् मोक्षस्य अविद्यानिवृत्तिरूपत्वम् अविद्यायाश्च ज्ञानैकनिवर्त्यत्वात् ज्ञानमज्ञानस्यैव निवर्तकमिति पञ्चपादिकावचनात् ज्ञानातिरिक्ता-साध्यत्वनियमः सिद्ध्यतीति । ज्ञाने तु इति ब्रह्मसाक्षात्काररूपज्ञाने श्रवणादिनियमाः प्रमाणप्रमेयगता सम्भावनां निवर्तयन्तः दृष्टद्वारेण नियमजन्यापूर्वेण साक्षात्कार-प्रतिबन्धकदुरितादिनिवृत्त्या च दृष्टादृष्टांशेन उपयोगिनो भवन्ति । उक्तं हि विवरणप्रमेयसंग्रहे—मननं हि विषयगतासम्भावनां निराकृत्य चित्ते संशयमपन-यति । निदिध्यासनं च विपरीतभावनां निराकृत्य चित्तवृत्तेरैकाग्र्यं जनयतीति [विवरणप्रमेयसंग्रहः पृ० १०३] श्रवणनियमेन प्रमाणगतासम्भावनां निराकृत्य नियमादृष्टेन प्रतिबन्धकदुरितनिवर्हणेन च साक्षात्कारो जन्यत इति दृष्टादृष्टांशोप-योगः श्रवणादिनियमानां बोध्यः । सर्वत्र नियमविधेः सामान्यपुरस्कारेण प्रवृत्तस्य साधनान्तरस्य निवृत्तिः फलम् । विशेषरूपेण तु सर्वो नियमविधिरपूर्वविधिरेव । अत एव प्रकटार्थकृता श्रवणेऽपूर्वविधिरेवाङ्गीकृतः । विवरणे तु नियमविधिरित्यु-क्तम् । विधिभेदाङ्गीकारे कारणं पूर्वमेवोक्तम् । यथा व्रीहीनवहन्तीत्यादिनियम-विधेः दर्शपूर्णमासीयापूर्वसाधनीभूत व्रीहिवैतुष्ये अवघातातिरिक्तसाधनान्तरा-प्रसक्तावपि लौकिकालौकिकसाधारणव्रीहिवैतुष्यमात्रे प्रसक्तस्य नखनिर्दलनादि-

र्नाशब्दमिति सूत्रे, 'तदैक्षते' त्यादिश्रुतौ च ईश्वरस्येक्षापूर्वककर्तृत्वोक्तिः; [ङच] 'लोकवत्तु लीलाकैवल्य'मिति सूत्रे 'आप्तकामस्य का स्पृहे'त्यादिश्रुतौ च प्रयोजनाभावेऽपि लीलया सृष्ट्याद्युक्तिः, [छज] 'वैषम्यनैर्घृण्ये न सापेक्षत्वादि'ति सूत्रे 'पुण्येन पुण्यं लोकं नयती'त्यादिश्रुतौ च कर्मसापेक्षत्वेनावैषम्योक्तिः, [झञ] तेजोऽतस्तथा ह्याहेति सूत्रे 'वायोरग्नि'रित्यादिश्रुतौ च तेज आदेर्वाय्वादिजन्यत्वोक्तिः;[टठ]विपर्ययेण तु क्रमोऽत उपपद्यते चे'ति सूत्रे 'पृथिव्यप्सु प्रलीयत'इत्यादिस्मृतौ च पृथिव्यादीनामबादौ लयोक्तिरित्याद्ययुक्तं स्यात्, न हि कल्पिते तत्तद्विरोधशङ्का तन्निराकरणं च युक्तमिति—चेत् ॥३३॥

---

साधनान्तरस्य निवृत्त्या नियमविधित्वम् । तथैव निर्विशेषब्रह्मात्माभेदसाक्षात्कारप्रतिबन्धदुरितनिवृत्तौ श्रवणाद्यतिरिक्तसाधनान्तराप्रसक्तावपि आत्ममात्रसाक्षात्कारप्रतिबन्धनिवृत्तौ सांख्यादिशास्त्रस्यापि प्रसक्तेस्तन्निवृत्तिः श्रवणनियमात् सिद्ध्यति वेदान्तवाक्यविचारविधानात् इत्यस्य श्रवणे नियमविधानादित्यर्थः । नियमविधेरेवापूर्वविधित्वं संक्षिप्योक्तं विस्तृतविचारस्तु परमगम्भीरः ॥३२॥

षष्ठसप्तमप्रतिकूलतर्कनिराकरणं समाप्तम् ।

३३—अष्टमप्रतिकूलतर्कप्रदर्शनाय पूर्वपक्षी शङ्कते—यद्यपि अष्टमस्तर्क एकत्वेन व्यवह्रियते एतस्य तर्कस्य आन्तर्गणिका बहवस्तर्कभेदा वर्तन्ते तेषां सर्वेषाम ष्टमत्वेन व्यवहारो दृश्यते । ननु [क ख] विश्वं यदि कल्पितं स्यात् तदा जन्माद्यस्य यतः इति सूत्रे यतो वा इमानीत्यादि श्रुतौ च जन्माद्युक्तिः; [ग घ] ईक्षतेर्नाशब्दमिति सूत्रे तदैक्षत इत्यादि श्रुतौ च ईश्वरस्य ईक्षा पूर्वक कर्तृत्वोक्तिः; [ङ च] लोकवत्तु लीलाकैवल्यमिति सूत्रे आप्तकामस्य का स्पृहेत्यादिश्रुतौ च प्रयोजनाभावेऽपि लीलया सृष्ट्याद्युक्तिः; [छ ज] वैषम्यनैर्घृण्ये न सापेक्षत्वात् इति सूत्रे पुण्येन पुण्यं लोकं नयति इत्यादिश्रुतौ च कर्मसापेक्षत्वेन अवैषम्योक्तिः; [झ ञ] तेजोऽतस्तथा ह्याह इति सूत्रे वायोरग्निरित्यादिश्रुतौ च तेज आदेर्वाय्वादिजन्यत्वोक्तिः; [ट ठ] विपर्ययेन तु क्रमोऽत्र उपपद्यते च इति सूत्रे पृथिव्यप्सु प्रलीयते इत्यादिस्मृतौ च पृथिव्यादीनामबादौ लयोक्तिरित्याद्ययुक्तं

न, प्रपञ्चस्य कल्पितस्यापि व्यावहारिकसत्त्वाभ्युपगमेन तद्दशायां विरोधशङ्कातत्परिहारयोरुचितत्वात्। इन्द्रजालादावध्यस्तेऽप्यैन्द्रजालिकादेरीक्षापूर्वकस्रष्टृत्वादेर्दर्शनाच्च। यथा च कल्पितस्यापि जन्माद्युपपत्तिस्तथाऽनिर्वचनीयवादे वक्ष्यते। स्वप्नेऽपि सृष्ट्यादेः श्रुत्या प्रतिपादनाच्च। अध्यस्तस्यापि सर्पस्य भयकम्पादिजनकत्ववत् वाय्वादीनां तेजः आदिजनकत्वमप्युपपन्नम्; 'तदभिध्यानादेव तु तल्लिङ्गात्स' इति सूत्रे च तत्तद्भावापन्नस्य ब्रह्मण एव कारणत्वाभिधानात्। अबादौ पृथिव्यादिलयोक्तिरपि तत्तद्भावापन्नचैतन्ये व्याख्येयेति नाधिष्ठानातिरिक्ते लयोक्तिः। वैषम्यनैर्घृण्यप्रयोजनादिशङ्कापरिहारादिकं तूपासनावस्थायाम्। 'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकव'दिति आपाततः

---

स्यात्। न हि कल्पिते तत्तत् विरोधशङ्का तन्निराकरणं च युक्तमिति चेत्। एकजातीया अपि द्वादशतर्काः पूर्वपक्षिणा प्रदर्शिताः। प्रदर्शिततर्केषु सर्वत्र अयुक्ता स्यात् इति परिशेषोक्तं योजनीयम्। यतो वा इत्यादिकं श्रुतिवाक्यं तत्तत् सूत्रविषयवाक्यं बोध्यम्। कुतोऽयुक्तमित्यतस्तदुपपादयति—न हीति। विरोधशङ्कातन्निराकरणं च न युक्तमित्यर्थः। न हि कल्पितस्य रूप्यादेर्जन्मादिकमीक्षापूर्वं स्रष्टृत्वं वा युक्तमित्यर्थः। प्रदर्शिततर्काणामर्थस्तु अतिरोहित इति न तेषां विवरणापेक्षा इति ॥३३॥

३४—समाधत्ते सिद्धान्ती—न, प्रपञ्चस्य कल्पितस्यापि व्यावहारिक [सत्त्वाभ्युपगमेन तद्दशायां विरोधशङ्कातत्परिहारयो]-रुचितत्वात्। इन्द्रजालादौ अध्यस्तेऽपि ऐन्द्रजालिकादेरीक्षापूर्वकस्रष्टृत्वादेर्दर्शनाच्च। यथा च कल्पितस्यापि जन्माद्युपपत्तिस्तथा अनिर्वचनीयवादे वक्ष्यते। स्वप्नेऽपि सृष्ट्यादेः श्रुत्या प्रतिपादनाच्च। अध्यस्तस्यापि सर्पस्य भयकम्पादिजनकत्ववत् वाय्वादीनां तेज आदिजनकत्वमप्युपपन्नम्। तदभिध्यानादेव तु तल्लिङ्गात् स इति सूत्रे च तत्तद्भावापन्नस्य ब्रह्मण एव कारणत्वाभिधानात्। अबादौ पृथिव्यादिलयोक्तिरपि तत्तद्भावापन्नचैतन्ये व्याख्येया इति नाधिष्ठानातिरिक्ते लयोक्तिः। वैषम्यनैर्घृण्यप्रयोजनादिशङ्का परिहारादिकं तूपासनावस्थायाम्। भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवदिति आपातत:

परिणामवादाभ्युपगमेन। 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति तु विवर्त-वादेपरमसिद्धान्तदशायां न शङ्का न चोत्तरम्। मायाविन इवेश्वरस्य स्वप्रतिबिम्बभूतजीवभ्रमयितृत्वेन सर्वविरोधनिरासोपपत्तेः।

---

परिणामवादाभ्युपगमेन। तदनन्यत्वमारम्भणशब्दादिभ्य इति तु विवर्तवादे परमसिद्धान्तदशायां न शङ्का न चोत्तरम्। मायाविन इव ईश्वरस्य स्वप्रतिबिम्बभूतजीव भ्रमयितृत्वेन सर्वविरोधनिराशोपपत्तेः। कल्पितमात्रस्य प्रातिभासिकत्वमभ्युपगम्य पूर्वपक्षिणा दोषाः प्रदर्शिताः। वस्तुतः कल्पितमात्रस्य न प्रातिभासिकत्वं कल्पितस्यापि व्यावहारिकसत्त्वाभ्युपगमेन व्यवहारदशायां शङ्का परिहारयोरावश्यकत्वात्। यावत् ब्रह्मज्ञानमबाध्यमानं व्यावहारिकम्। अबाध्यत्वमेव सत्त्वं तच्च सर्वथा अबाध्यत्वेन पारमार्थिकं ब्रह्मणि व्यवहारकालाबाध्यत्वेन व्यावहारिकसत्त्वं वियदादिप्रपञ्चे प्रतिभासकालाबाध्यत्वेन प्रातिभासिकं सत्त्वं शुक्तिरजतादौ। व्यावहारिकप्रातिभासिकयोः कल्पितत्वाविशेषेऽपि ब्रह्मज्ञानतदितरज्ञानबाध्यत्वेन वैलक्षण्यस्यापि सत्त्वात्। ब्रह्मज्ञानेतराबाध्यत्वं व्यावहारिकत्वमित्युक्तं प्राक्। प्रातिभासिकस्य ब्रह्मज्ञानेतराबाध्यत्वमस्ति न व्यावहारिकस्य। प्रातिभासिकस्यापि इन्द्रजालादेः इक्षापूर्वकस्रष्टृत्वस्य ऐन्द्रजालिके दर्शनात् कल्पितस्य इक्षापूर्वकस्रष्टृत्वं कथमिति शङ्कावसरो नास्ति। प्रथम-परिच्छेदे एव अनिर्वचनीयवादे कल्पितस्य जन्माद्युपपत्तिः समर्थयिष्यते। अकल्पितस्य ब्रह्मणो असतश्च जन्माद्यनुपलम्भात् जन्मादिमतः कल्पितत्वमेव सिद्ध्यतीतिभावः। प्रातिभासिकस्यापि स्वाप्नप्रपञ्चस्य सृष्ट्यादेः श्रुत्या प्रतिपादनात् कल्पितस्य कथं सृष्ट्यादि इति चोद्यानवकाशः। कल्पितस्यापि सर्पादेर्भयादिजनकत्वदर्शनेन कल्पितस्यार्थक्रियाकारित्वात् कल्पितवाय्वादीनां तेज आदि-जनकत्वमुपपन्नम्। तदभिध्यानादेव तु तल्लिङ्गात् स [ब्रह्मसूत्रम्, २।३।१३] इति सूत्रे भाष्यकृतोक्तं—स एव परमेश्वरः तेन तेन आत्मना अवतिष्ठमानो अभिध्यायन् तं तं विकारं सृजति इति कुतः तल्लिङ्गात् तथाहि शास्त्रं यः पृथिव्यां तिष्ठन्, पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति [बृहदारण्यकोपनिषद् ३।७।३] इत्येवं जातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति। शास्त्रे जलादौ पृथिव्यादिलयोक्तिरपि जलभावापन्ने

ननु—इश्वरस्यापि सपरिकरस्य जीवेनाध्यस्तत्वात् कथं भ्रमयितृत्वम् । न; अविद्योपहितचित्त एवानादेरीश्वरत्वेनान्तःकरणोपहित-

---

ब्रह्मणीति व्याख्येया अधिष्ठानाद् ब्रह्मणोऽन्यत्र लयोक्तिर्न सम्भवतीति कृत्वा 'हीन-मध्यमोत्तमभावेन प्राणिनः सृजतः परमेश्वरस्य वैषम्यादिदोषशङ्कायाः केन प्रयोजनेन ईश्वर जगत् सृजतीति प्रयोजनशङ्कायाश्च समाधानं यत् ब्रह्मसूत्रकृता कृतं, तत् उपासनावस्थायां कर्मानुष्ठानकाले च बोध्यं न परमार्थद्वैतावस्थायामिति कृपणजनबोध्यनुरोधेन आपाततः परिणामवादाभ्युपगम्य भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवदिति परिहारोऽभिहितः । उक्तञ्च भामत्याम् इमां शङ्काम् आपाततोऽविचारितलोकसिद्धदृष्टान्तोपदर्शनमात्रेण निराकरोति सूत्रकारः स्याल्लोकवदिति । तदनन्यत्वमारम्भणशब्दादिभ्यः इति तु विवर्तवादे······नं शङ्का न चोत्तरमिति उक्तं भामत्यां; परिहाररहस्यमाह—तदनन्यत्वमित्यादि । उक्तं च कल्पतरौ अङ्गीकृत्य हि भेदग्राहिमाणस्य प्रामाण्यं भेदाभेदयोः रूपभेदेन विरोधः परिहृतः इदानीं त्वस्वीकृत्य प्रामाण्यं तत्त्वावेदकत्वात् प्रच्याव्य व्यावहारिकत्वे व्यवस्थाप्यते । भाष्येऽप्युक्तम्—अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारोऽभिहितः, न त्वयं विभागः परमार्थतोऽस्ति यस्मात्तयोः कार्यकारणयोरनन्यत्वमवगम्यते इति । संक्षेपशारीरकेऽप्युक्तम्—

आरम्भसंहतिविकारविवर्तवादान् आश्रित्यवादिजनता खलु वावदीति ।
आरम्भसंहतिमते परिहृत्य वादो, द्वावत्र संग्रहपदं नयते मुनीन्द्रः ॥
तत्रापि पूर्वमुपगम्य विकारवादं भोक्त्रादिसूत्रमवतार्य विरोधनुत्यै ।
प्रावर्तत व्यवहृतेः परिरक्षणाय कर्मादिगोचरविधावुपयोगहेतोः ॥

विधावुपयोग इति विधिषु श्राद्धोऽधिकारीति न्यायेन विवर्तवादालम्बनेन प्रपञ्चमिथ्यात्वे निश्चिते विहिते प्रवृत्त्यसम्भवात् परिणामवादस्यैव विहितप्रवृत्त्युपयोग इति भावः । परमसिद्धान्तावस्थायां न शंका न चोत्तरमिति—उक्तञ्च पञ्चदश्याम्—

चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया ।
अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरमिति ॥

मायाविन ईश्वरस्येति विवरणमते अविद्योपाधौ प्रतिबिम्बो जीवः ईश्वरस्तु

जीवकल्पितत्वायोगात्। जीवकल्पितत्वपक्षेऽपि तादृग्धर्मविशिष्टतयैव कल्पनेन तस्य भ्रमयितृत्वाद्युपपत्तेः। 'परिकल्पितोऽपि मरणाय भवेदुरगो यथा न तु नभो मलिन'मिति न्यायात्। ३४॥

ननु—जीवानां वाय्वादिभ्योऽग्न्याद्युत्पत्तिरिति भ्रमोऽस्ति, यः स्वाप्नभ्रम इव श्रुतेरालम्बनं स्यात्। न च भ्रान्ति विना कल्पितमस्ति; न चैतद्वाक्यजभ्रान्तिकल्पितमेव एतद्वाक्यालम्बनम्; वेदस्य

---

बिम्बः अतो जीवाः ईश्वरप्रतिबिम्बाः तान् प्रतिबिम्बभूतान् जीवान् बिम्बभूतः परमेश्वरो भ्रमयति। उक्तञ्च कल्पतरौ—

प्रतिबिम्बगताः पश्यन् ऋजुवक्रादि विक्रियाः।
पुमान् क्रीडेत् यथा ब्रह्म तथा जीवस्थविक्रियाः॥

[कल्पतरुः, २।१।३३]।

सपरिकरेश्वरस्यापि जीवकल्पितत्वात् कथं जीवकल्पितस्य ईश्वरस्य जीवभ्रमयितृत्वमिति आशङ्क्य समाधत्ते—ननु ईश्वरस्यापि सपरिकरस्य जीवेनाध्यस्तत्वात् कथं भ्रमयितृत्वम्। न अविद्योपहितचित एव अनादेरीश्वरत्वेन अन्तःकरणोपहितजीवकल्पितत्वायोगात्। जीवकल्पितत्वपक्षेऽपि तादृग्धर्मविशिष्टतयैव कल्पनेन तस्य भ्रमयितृत्वाद्युपपत्तेः। परिकल्पितोऽपि मरणाय भवेदुरगो यथा न तु नभो मलिनमिति न्यायात्। अनादीश्वरस्य जीवकल्पितत्वासम्भवात् अनङ्गीकारपराहतोऽयं पक्ष इति समाधत्ते अन्तःकरणतत्संस्कारान्यतरोपहिताज्ञानप्रतिबिम्बितचैतन्यस्य जीवत्वात् प्रतिबिम्बस्य बिम्बकल्पकत्वायोगात्। ईश्वरस्य जीवकल्पितत्वपक्षेऽपि न दोष इत्याह—जीव भ्रमयितृत्वादिधर्मविशिष्टतयैव ईश्वरस्य जीवेन कल्पितत्वात् ईश्वरस्य जीवभ्रमयितृत्वाद्युपपत्तेः। तदुक्तं संक्षेपशारीरके—यथा जीवकल्पितोऽपि महानुरगः महाभयोत्पादनद्वारा जीवस्य मरणाय भवति एवं जीवकल्पितोऽपि ईश्वरः जीवस्य भ्रमयिता भवति। यथा कल्पितमालिन्येन नभसो न मालिन्ययोगः एवं कल्पितभ्रमयितृत्वेनापि ईश्वरस्य न वस्तुतः भ्रमयितृत्वसम्बन्ध इति भावः॥३४॥

३५—विश्वस्य कल्पितत्वे प्रपञ्चोत्पत्तिश्रुतिर्निरालम्बना स्यात् इति शङ्कते—ननु न च जीवानां वाय्वादिभ्यो अग्न्याद्युत्पत्तिरिति भ्रमोऽस्ति यः

भ्रमजनकत्वप्रसङ्गात्, अनुवादे तु न दोषः। न चेश्वर एव तत्कल्पकः; तस्य भ्रान्तत्वप्रसङ्गात्। तदभ्युपगमेऽपि न विस्तारः, भ्रान्तेर्देहेन्द्रियादिकार्यत्वात् तेषां च पृथिव्यादिकार्यत्वात् पृथिव्याद्युत्पत्तेः प्राक्भ्रान्त्ययोगादिति—चेत् ॥३५॥

---

स्वप्नभ्रम इव श्रुतेरालम्बनं स्यात्, न च भ्रान्तिं विना कल्पितमस्ति न च एतद्वाक्यजभ्रान्तिकल्पितमेव एतद्वाक्यालम्बनं वेदस्य भ्रमजनकत्वप्रसंगात् अनुवादे तु न दोषः। न च ईश्वर एव तत्कल्पकः तस्य भ्रान्तत्वप्रसंगात्। तदभ्युपगमेऽपि न निस्तारः भ्रान्तेर्देहेन्द्रियादिकार्यत्वात् तेषां च पृथिव्यादिकार्यत्वात् पृथिव्याद्युत्पत्तेः प्राक् भ्रान्त्ययोगात् इति चेत्। ननु ईश्वरस्य कल्पकाभावेऽपि कल्पितत्वमस्तु इत्यत आह— न च जीवानां वाय्वादिभ्य इति। तथा च परिशेषेण जीवकल्पित एव ईश्वरो वाच्यः, तत्र च अन्योन्याश्रयः। एकस्य कल्पितस्य कल्पितान्तरादुत्पत्तेरदर्शनात् वायोरग्निरित्यादिश्रुतौ तेन आदेर्वाय्वादिजन्यत्वोक्तिरयुक्ता स्यात्। ततश्च श्रुतेर्निर्विषयत्वं स्यात् इत्युक्तमयुक्तम्। कल्पितेन वास्तवोत्पत्तेरभावेऽपि वाय्वादिभ्यः अग्न्यादिकमुत्पद्यते इति जीवानां भ्रमस्य विद्यमानत्वात् जीवभ्रमसिद्धार्थावलम्बनेन श्रुतेः सविषयत्वोपपत्तिरित्याशङ्क्य निषेधति—न च भ्रान्तिं विना इति। ननु प्रत्यक्षेण एतादृशभ्रमासम्भवेऽपि वायोरग्निरित्यादिवाक्येनैव अग्न्यादीनां जन्यजनकभावभ्रमो भवति तादृशभ्रमसिद्धार्थालम्बनेन तद्वाक्यस्य प्रामाण्यमुपपद्यते इत्याशङ्क्य निराकरोति—न च एतत् वाक्यजभ्रान्तिकल्पितमिति। बौद्धागमजन्यभ्रान्तिसिद्धतदर्थावलम्बनेनैव बौद्धागमस्यापि प्रामाण्यं स्यात्, तद्वदेव वेदस्य प्रामाण्ये बौद्धागमवत् वेदस्यापि भ्रमजनकत्वप्रसंगात्। वेदस्य अनुवादमात्रत्वे तु न दोषः वेदस्य भ्रमसिद्धानुवादरूपतया प्रामाण्यं न स्यात्। एतद्वाक्यजन्यभ्रान्तिसिद्धार्थावलम्बनेन एतद्वाक्यस्य प्रामाण्यमित्युक्तम्। तत्र पृच्छाम एतद्वाक्यजन्यभ्रान्तिर्जीवानामुत ईश्वरस्य ? ईश्वरस्य भ्रान्तिकल्पने ईश्वरस्यैव भ्रान्तत्वप्रसंगः। ईश्वरस्य भ्रान्तत्वाभ्युपगमेऽपि न निस्तारः भ्रान्तेर्देहेन्द्रियादिकार्यत्वात् देहादीनां च पृथिव्यादिकार्यत्वात्। तथा च वायोरग्निरित्यादिवाक्यात् देहेन्द्रियादिमत ईश्वरस्य तथाविधभ्रान्तिसिद्धौ तत्प्रमाणकवाय्वादिस्वरूपसिद्धिः तत्सिद्धौ च

न भ्रान्तिमात्रे देहेन्द्रियाद्यपेक्षायाः प्रागेव निरासात्। ईश्वराध्यस्तवाय्वादिहेतुकाग्न्याद्युत्पत्त्यालम्बनत्वेन वेदस्य भ्रमाजनकत्वात् अध्यस्तस्य चाध्यस्तत्वेन स्फुरणान्न मायाविन इव ईश्वरस्य भ्रान्तत्वप्रसङ्गः। न चाध्यस्तत्वे उत्पत्त्याद्यनुपपत्तिः; अनध्यस्तस्य क्वाप्युत्पत्त्याद्यदर्शनेनाध्यस्तत्वस्यैव तदुपपादकत्वात्, सत्कार्यवादासत्कार्यवादनिषेधेनानिर्वचनोयकार्यवादमात्रे कार्यकारणभावपर्यवसानात्। तदेवं कृत्स्नस्य प्रपञ्चस्याद्वये ब्रह्मणि कल्पनोपपत्तेर्न प्रतिकूलतर्कपराहतिः ॥३६॥

इत्यद्वैतसिद्धौ ब्रह्मणि प्रपञ्चकल्पनोपपादनेन प्रतिकूलतर्कनिराकरणम् ॥

---

वाय्वाद्यारब्धदेहेन्द्रियादिमदीश्वरसिद्धिरित्यन्योन्याश्रय इति भावः। तदुक्तं मूले पृथिव्याद्युत्पत्तेः प्राक् ईश्वरस्य भ्रान्त्ययोगात् इति ॥३५॥

३६—भ्रान्तिमात्रे देहेन्द्रियाद्यपेक्षायाः प्रागेव निरासात् नैवमिति समाधत्ते सिद्धान्ती—न, भ्रान्तिमात्रे देहेन्द्रियाद्यपेक्षायाः प्रागेव निरासात्। ईश्वराध्यस्तवाय्वादिहेतुकाग्न्याद्युत्पत्त्यालम्बत्वेन वेदस्य भ्रमाजनकत्वात् अध्यस्तस्य च अध्यस्तत्वेन स्फुरणात् न मायाविन इव ईश्वरस्य भ्रान्तत्वप्रसङ्गः। न च अध्यस्तत्वे उत्पत्त्याद्यनुपपत्तिः अनध्यस्तस्य काप्युत्पत्त्याद्यदर्शनेन अध्यस्तत्वस्यैव तदुपपादकत्वात्। सत्कार्यवादासत्कार्यवादनिषेधेन अनिर्वचनीयकार्यवादमात्रे कार्यकारणभावपर्यवसानात् तदेवं कृत्स्नस्य प्रपञ्चस्य अद्वयब्रह्मणि कल्पनोपपत्तेर्न प्रतिकूलतर्कपराहतिः।

अस्मिन्नेव प्रकरणे इतः प्रागेव भ्रान्तिमात्रे देहेन्द्रियाद्यपेक्षा निरासात्। ननु देहेन्द्रियादिकं विना कथमन्तःकरणाध्यास इति पूर्वपक्षे एवं समाधानमभिहितं कात्रानुपपत्तिः? अधिष्ठानापरोक्षत्वं हि अपरोक्षभ्रमे कारणम्। तत् यत्राधिष्ठानं स्वतो नापरोक्षं यथा शुक्त्याद्यवच्छिन्नचैतन्यं तत्र तदपरोक्षार्थं देहेन्द्रियाद्यपेक्षा प्रकृते च अविद्यावच्छिन्नचैतन्यम् अधिष्ठानं तत्र चैतन्यस्य स्वप्रकाशत्वेन अविद्यायाश्च तदध्यस्तत्वेन तेनैव साक्षिणा अपरोक्षत्वात् कुत्र देहेन्द्रियाद्यपेक्षेति [अद्वैतसिद्धिः, पृ० ४९८, नि० सा०] वियदाद्युत्पत्तिप्रतिपादकवेदस्यापि न भ्रमजनकत्वं

ब्रह्मसाक्षात्कारमात्रबाध्यत्वेऽपि व्यवहारदशायामबाधात् व्यावहारिकसत्त्ववत्तया प्रतिपादनात् न भ्रमजनकत्वं वेदस्य। निर्विशेषब्रह्ममात्रप्रतिपादकवेदस्यैव सर्वथा अबाधितविषयप्रतिपादकत्वेन मुख्यं प्रामाण्यम् अन्यत्र सर्वत्रैव व्यावहारिकं प्रामाण्यम्। अध्यस्तं वियदादिकम् अध्यस्तत्वेनैव जानन् कथमीश्वरो भ्रान्तः स्यात् अनध्यस्तत्वेन जानन् हि भ्रान्तः स्यात्, ईश्वरे दोषाभावात् तन्न सम्भवति। तद्वति तत्प्रकारकत्वलक्षणव्यावहारिकप्रमात्वस्य ईश्वरज्ञाने सत्त्वात् अध्यस्तं प्रपञ्चं जानन् नेश्वरो भ्रान्तः इति। अध्यस्तस्य उत्पत्त्याद्यसम्भवोऽपि न अनध्यस्तस्य ब्रह्मणो अलीकस्य च उत्पत्त्यसम्भवेन अध्यस्तत्वमेव उत्पत्त्यादेरुपपादकम्। यत् यदुपपादकं तन्न तद्विरोधीति भावः। कार्यकारणभावस्य अनिर्वचनीयकार्यवादे पर्यवसानं भाष्यादौ प्रपञ्चितम्। संक्षेपतस्तु उत्पत्तेः पूर्वं कार्यस्य सत्त्वे कारणव्यापारवैफल्यात् असत्त्वे तत्र कार्यासम्बद्धकारणस्य अवच्छेदकत्वासम्भवात्। तथात्वे सदैव कार्यस्य असत्त्वापत्तिः। अतः सत्त्वासत्त्वाभ्यामुत्पत्तेः पूर्वम् अनिर्वाच्यं कार्यम्। प्रकरणार्थमुपसंहरति—तदेवमिति। मिथ्यात्वसाधकदृश्यत्वादिहेतूनां प्रतिकूलतर्कपराघातेन न प्रपञ्चमिथ्यात्वासाधकत्वमिति ॥२६॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यां प्रतिकूलतर्कनिराकरणविवरणम्।

## अथ सामान्येन मिथ्यात्वश्रुत्युपपत्तिः

एतदनुमानम् 'एकमेवाद्वितीय'मित्यादिश्रुतिरप्यनुगृह्णाति । ननु—श्रुत्या स्वस्वरूपस्वप्रामाण्यस्वयोग्यतादेर्मिथ्यात्वाबोधनेन प्रत्यक्षादिसिद्धतत्सत्त्वोपजीवनेन च ब्रह्मेतरसकलमिथ्यात्वासिद्धिः, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न्यायेन प्रत्यक्षादिसिद्धघटादिमिथ्यात्वासिद्धिश्च,- योग्यतादिमिथ्यात्वबोधने च श्रुत्यर्थस्यातात्त्विकत्वापत्तिः । शाब्दबोधस्य शब्दतत्प्रामाण्ययोग्यतादिना समसत्ताकत्वनियमात् । न च सदर्थस्वाप्नदेवतावाक्ये व्यभिचारः; आप्तत्वापौरुषेयत्वायोगेन तस्य शब्दत्वेन प्रामाण्यायोगात् । किं तूपश्रुतिवत्तादृशशब्दज्ञानं लिङ्गत्वेन प्रमाणमिति—चेत् ॥१॥

---

१—श्रुतिश्चात्र प्रपञ्चमिथ्यात्वे प्रमाणमितिसामान्येनोक्तं विशेषतो दर्शयितुमाह सिद्धान्ती—एतदनुमानम् एकमेवाद्वितीयमित्यादिश्रुतिरप्यनुगृह्णाति। सपरिकरं प्रपञ्चमिथ्यात्वानुमानं प्रदर्श्य प्रपञ्चमिथ्यात्वानुमानानुग्राहिकाः श्रुतयोऽपि विद्यन्ते इति प्रतिपादयितुमुपक्रमते—एतदनुमानमिति । प्रपञ्चमिथ्यात्वानुमानानुग्राहिकाः श्रुतयोऽपि विद्यन्ते इत्यसहमानः पूर्वपक्षी शङ्कते—ननु श्रुत्या स्वस्वरूपस्वप्रामाण्यस्वयोग्यतादेर्मिथ्यात्वाबोधने[न] प्रत्यक्षादिसिद्धतत् सत्त्वोपजीवने च ब्रह्मेतरसकलमिथ्यात्वासिद्धिः सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न्यायेन प्रत्यक्षादिसिद्धघटादिमिथ्यात्वासिद्धिश्च । योग्यतात्वादिमिथ्यात्वबोधने च श्रुत्यर्थस्य अतात्त्विकत्वापत्तिः । शाब्दबोधस्य शब्दतत्प्रामाण्ययोग्यतादिना समसत्ताकत्वनियमात् । न च सदर्थस्वाप्नदेवतावाक्ये व्यभिचारः आप्तत्वापौरुषेयत्वायोगेन तस्य शब्दत्वेन प्रामाण्यायोगात् । किन्तूपश्रुतिवत् तादृशशब्दज्ञानं लिङ्गत्वेन प्रमाणमिति चेत् । विश्वमिथ्यात्वे श्रुतिरपि न प्रमाणमिति पूर्वपक्षिणोऽभिप्रायः । आह च पूर्वपक्षी—नेह नानेति श्रुतिः श्रोत्रप्रत्यक्षादिसिद्धस्वस्वरूपस्वप्रामाण्यतद्धेतुयोग्यतादेर्मिथ्यात्वमबोधयित्वा प्रत्युत स्वस्वरूपादि-

न, निर्दोषशब्दत्वेन तस्य शब्दविधयैव प्रामाण्यसम्भवात्, आप्त-त्वापौरुषेयत्वयोर्दोषाभाव एवोपक्षयात् व्याप्त्याद्युपस्थितिकल्पने गौर-

---

सत्यत्वमुपजीव्य किं सर्वमिथ्यात्वं बोधयति किं वा स्वस्वरूपस्वप्रामाण्यंतद्धेतु-योग्यतादेर्मिथ्यात्वं बोधयित्वा सर्वमिथ्यात्वं बोधयति ? नाद्य इत्याह—श्रुत्या स्व-स्वरूपेति प्रत्यक्षादिसिद्धेति। स्वस्वरूपादिसत्यत्वोपजीवने च। सकलमिथ्या-त्वासिद्धिरिति स्वस्वरूपादेर्मिथ्यात्वाबोधनादित्यर्थः। किञ्च सर्वमिथ्यात्वं बोध-यन्त्या श्रुत्या सन् घट इत्यादि प्रत्यक्षसिद्धं घटादिकं धर्मीकृत्य तत्र मिथ्यात्वं बोध-नीयम्। तन्न सम्भवति, प्रत्यक्षोपजीवनेन प्रवृत्तायाः श्रुतेस्तद्बाधनासामर्थ्यात् अतः प्रत्यक्षादिसिद्धघटादिमिथ्यात्वासिद्धिः। तदुपजीवनेन प्रवृत्तस्यापि तद्बाधकत्वं किं न स्यात् ? इत्यत्र आह—सन्निपातेति। यत्सन्निपातेन—यदुपजीवनेन लक्षणं स्वरूपं यस्य विधेः स विधिः तस्य सोपजीव्यस्य विघातस्य अनिमित्तमिति महा-भाष्योक्तन्यायेन उपजीव्यप्रत्यक्षादिसिद्धघटादेः उपजीविन्या श्रुत्या न मिथ्यात्व-सिद्धिः। न द्वितीयः इत्याह—योग्यत्वामिथ्यात्वबोधने च इति। श्रुत्यर्थस्य—सर्वमिथ्यात्वस्य अतात्त्विकत्वापत्तिः कुत इत्यत आह—शब्द-बोध्यस्य इति। शब्दबोध्यस्य अर्थस्य अर्थबोधकशब्दप्रमाणेन तद्गतप्रामाण्येन तद्धेतुयोग्यतादिना च तुल्य सत्त्वाकत्वनियमात् अनेन विश्वमिथ्यात्वबोधकत्वेन अभिमता श्रुतिः, स्वस्वरूपप्रामाण्ययोग्यतादिसमसत्ताकस्वबोध्यार्थयुक्ता, प्रमाणशब्दत्वात् सम्मतवत् इत्यनुमानमुक्तं भवति। नन्वेवं चेत् "तव एवं भविष्यतीति" स्वाप्नदेवता वाक्यं किञ्चिदस्ति। तद्वाक्यस्वरूपं मिथ्यात्वान्ना-स्त्येव तन्निष्ठप्रामाण्ययोग्यतेऽपि असती एव बोध्यार्थश्च सन् आर्थक्रियाकारित्वानु-भवात्। एवञ्च तत्र प्रमाणशब्दत्वहेतुरस्ति स्वस्वरूपयोग्यतादिसमसत्ताकबोध्यार्थ-युक्तत्वाभावात् व्यभिचारः। पूर्वपक्षी व्यभिचारमुद्धरति—स्वाप्नदेवतावाक्ये प्रमाणशब्दत्वरूपहेतुरेव नास्ति अतो न व्यभिचारः। प्रमाणशब्दत्वं तत्र कुतो नास्तीत्याह—आप्तत्वपौरुषेयत्वायोगेनेति। लौकिके पौरुषेयवाक्ये प्रामाण्य-प्रयोजकत्वेन क्लृप्ताया आप्तोक्तायाः वाक्यार्थप्रमावदुक्तत्वस्य स्वाप्नदेवतावाक्येऽ-भावात्। तथा वेदवाक्ये प्रामाण्यप्रयोजकत्वेन क्लृप्तस्य अपौरुषेयत्वस्यापि अभावात् स्वाप्नदेवतावाक्ये प्रमाणशब्दत्वं नास्ति। तर्हि स्वाप्नदेवतावाक्यस्य सदर्थकत्वं

वात्, वक्तुः कल्पितत्वेऽपि तद्गतदोषस्यार्थसंवादेन कल्पयितुमशक्यत्वाच्च। तथा च शब्दसमसत्ताकत्वस्य व्यभिचारात् योग्यतादिसमसत्ताकत्वनियमसिद्धेरप्रयोजकत्वाच्च। परोक्षत्वानित्यत्वाद्युपाधिसम्भवाच्च, श्रुत्या योग्यतादिसकलमिथ्यात्वबोधनेऽपि तदर्थस्य न मिथ्यात्वम्। मिथ्यात्वप्रयोजकरूपाभावात्। महाभाष्योक्तन्यायोदाहरणमपि न युक्तम्; विषयवैषम्यात्। तथाहि—'शतानि सहस्राणी'त्यत्र सर्वनामस्थानसंज्ञकशिसन्निपातेन विहितो नुम् 'ष्णान्ता षडि'ति षट्संज्ञाद्वारा 'षड्भ्यो लुगि'ति शिस्वरूपसर्वनामस्थानस्य पञ्चेत्यादाविव लुङ्निमित्तं न भवति; तत्सन्निपातेनैव विहितत्वात्। तत्सङ्का-

---

कथमित्याह—किन्तूपश्रुतिवत् इति। स्वाप्नदेवतावाक्यं यादृच्छिकसंवादी वा? उपश्रुतिवत् तादृशशब्दज्ञानं लिङ्गत्वेन प्रमाणं वा?

उपश्रुतिशब्दस्य अयमर्थः—एतत् कर्तव्यं न वेति संदिहानेन श्रूयमाणमन्यस्य कर्तव्यतापरम् 'अवश्यमेतत् कर्तव्यमि'ति वाक्यम् अन्यस्मै अन्येन उच्यमानम् उपश्रुतिः। तस्य कर्तव्यतया सन्दिग्धस्यार्थस्य कर्तव्यतायां शब्दतया न प्रामाण्यं तस्य तत्परत्वाभावात् आप्तोक्तत्वाभावाच्च; तथापि अनुमापकतया आगमेन बोधनात् लिङ्गत्वेन तद्वाक्यं प्रमाणमित्यर्थः ॥१॥

२—पूर्वपक्ष्युक्तप्रमाणशब्दत्वहेतोर्व्यभिचारं द्रढयितुं स्वाप्नदेवतावाक्यस्य शब्दविधयैव प्रामाण्यं व्यवस्थापयति सिद्धान्ती—न, निर्दोषशब्दत्वेन तस्य शब्दविधयैव प्रामाण्यसम्भवात् आप्तत्वापौरुषेयत्वयोः दोषाभावे एव उपक्षयात्। व्याप्त्याद्युपस्थितिकल्पने गौरवात्। वक्तुः कल्पितत्वेऽपि तद्गतदोषस्य अर्थसम्वादेन कल्पयितुमशक्यत्वाच्च। तथा च शब्दसमानसत्ताकत्वस्य व्यभिचारात् योग्यतादिसमानसत्ताकत्वनियमसिद्धेरप्रयोजकत्वाच्च। परोक्षत्वानित्यत्वाद्युपाधिसम्भवाच्च। श्रुत्या योग्यतादिसकलमिथ्यात्वबोधनेऽपि तदर्थस्य न मिथ्यात्वम्। मिथ्यात्वप्रयोजकरूपाभावात्। महाभाष्योक्तन्यायोदाहरणमपि न युक्तं विषयवैषम्यात्, तथा हि शतानि सहस्राणीत्यत्र सर्वनामस्थानसंज्ञकशिसन्निपातेन विहितो नुम् 'ष्णान्ता षडि'ति षट्संज्ञाद्वारा

वनियमेनैव विहितत्वादित्यर्थः। अलुप्तस्यैव सर्वनामस्थानस्य नुम्नि-मित्तत्वात्, 'न लुमताङ्गस्ये'ति लुमता लुप्तेऽङ्गकार्यनिषेधात्। तथा चालुप्तप्रत्ययत्वेन यत्र निमित्तता तत्र सन्निपातलक्षणन्यायावतारः। 'यत्र तु प्रत्ययलोपे प्रत्ययलक्षणमि'ति न्यायेन लुप्तेऽपि प्रत्यये कार्यं भवति, तत्रालुप्तत्वविशेषणनैरपेक्ष्येण प्रत्ययत्वमात्रेणैव निमित्तत्वात् न सन्निपातलक्षणन्यायावतारः। प्रत्ययसद्भावस्य तत्रानुपजीव्यत्वात्। एवं स्थिते यद्यमिथ्याभूतत्वेन प्रत्यक्षादेर्निमित्तता स्यात्, तदा प्रत्ययस्यालुप्तत्वेन निमित्ततायामिव भवेदेतन्न्यायावतारः। प्रत्यक्षादेस्तु स्वरूपेणैव निमित्तता स्वप्नाद्यर्थस्याप्यर्थक्रियाकारित्वदर्शनेन प्रागेवोपपादिता। अतो यत् बाध्यते तात्त्विकत्वं तन्नोपजीव्यम्, यच्चोपजीव्यमर्थक्रियासामर्थ्यलक्षणव्यावहारिकप्रामाण्यं तच्च न बाध्यत इति किं केन सङ्गतम्? तदुक्तम् टीकाकृद्भिः—'उत्पादकाप्रतिद्वन्द्वित्वादिति।

अत एव—ज्योतिष्टोमादिविधेरुपजीव्याग्निविद्यावद्विषयत्वेनेव द्वैत-

---

षड्भ्यो लुगिति शिस्वरूपसर्वनामस्थानस्य पञ्चेत्यादाविव लुङ्निमित्तं न भवति तत्सन्निपातेनैव विहितत्वात्। तत् सद्भावनियमेनैव विहितत्वादित्यर्थः। अलुप्तस्यैव सर्वनामस्थानस्य लुम् निमित्तत्वात्। न लुमताङ्गस्य इति लुमता लुप्तेऽङ्गकार्यनिषेधात्। तथा च अलुप्तप्रत्ययत्वेन यत्र निमित्तता तत्र सन्निपातलक्षणन्यायावतारः। यत्र तु प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायेन लुप्तेऽपि प्रत्यये कार्यं भवति तत्र अलुप्तत्वविशेषणनैरपेक्ष्येण प्रत्ययत्वमात्रेणैव निमित्तत्वात् न सन्निपातलक्षणन्यायावतारः। प्रत्ययसद्भावस्य तत्रानुपजीव्यत्वात्। एवं स्थिते यदि अमिथ्याभूतत्वेन प्रत्यक्षादेर्निमित्तता स्यात्, तदा प्रत्ययस्य अलुप्तत्वेन निमित्ततायामिव भवेदेतन्न्यायावतारः। प्रत्यक्षादेस्तु स्वरूपेणैव निमित्तता स्वप्नाद्यर्थस्यापि अर्थक्रियाकारित्वदर्शनेन प्रागेवोपपादिता। अतो यद्बाध्यते तात्त्विकत्वं तन्नोपजीव्यं यच्च उपजीव्यमर्थक्रियासामर्थ्यलक्षणव्यावहारिकप्रामाण्यं तच्च न बाध्यते इति किं केन सङ्गतम्? तदुक्तं टीकाकृद्भिः—उत्पादकाप्रतिद्वन्द्वित्वा-

निषेधस्यापि स्वोपजीव्ययोग्यतादीतरविषयत्वेन सङ्कोचस्य वा सृष्ट्यादिश्रुतेरिव कल्पितविषयत्वस्य वोपपत्तौ न तात्त्विकसर्वमिथ्यात्वपरत्वकल्पनं युक्तमिति—अपास्तम्, दृष्टान्ते अग्निविद्यादेरिव दार्ष्टान्तिके योग्यत्वादेस्तात्त्विकस्यानुपजीव्यत्वात्। न हि योग्यतातात्त्विकयोग्यतात्वेन निमित्तम् किन्तु योग्यतात्वेनैव। सकलद्वैताभावस्याधिकरणस्वरूपत्वेन तदधिकरणस्य च ब्रह्मणः 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तत्सत्यं स आत्मे'त्यादिश्रुत्या सत्यत्वप्रतिपादनात्। न सृष्ट्यादिश्रुतेरिव कल्पितविषयत्वोपपत्तिः। तस्माद्योग्यतादेर्मिथ्यात्वेऽपि वेदान्तबोध्यं सत्यमेवेति स्थितम्। यथा चाविद्यातत्कार्यस्य स्वरूपतो निषेधेऽपि तुच्छवैलक्षण्यं पारमार्थिकत्वाकारेण निषेधे वा पारमार्थिकत्वधर्मशून्यस्यापि ब्रह्मणः स्वरूपेण सत्त्वं तथोपपादितमधस्तात्।

---

दिति। अत एव ज्योतिष्टोमादिविधेरुपजीव्याग्निविद्यावद्विषयत्वेनेव द्वैतनिषेधस्यापि स्वोपजीव्ययोग्यतादीतरविषयत्वेन सङ्कोचस्य वा सृष्ट्यादिश्रुतेरिव कल्पितविषयत्वस्य वा उपपत्तौ न तात्त्विकसर्वमिथ्यात्वपरत्वकल्पनं युक्तमिति अपास्तम्। दृष्टान्ते अग्निविद्यादेरिव दार्ष्टान्तिके योग्यतादेस्तात्त्विकस्य अनुपजीव्यत्वात्। नहि योग्यतातात्त्विकयोग्यतात्वेन निमित्तं, किन्तु योग्यतात्वेनैव। सकलद्वैताभावस्य अधिकरणस्वरूपत्वेन तदधिकरणस्य च ब्रह्मणः 'सत्यं ज्ञानमनन्तं ब्रह्म,' 'तत्सत्यं स आत्मा इत्यादि'श्रुत्या सत्यत्वप्रतिपादनात्। न सृष्ट्यादिश्रुतेरिव कल्पितविषयत्वोपपत्तिः। तस्मात् योग्यतादेर्मिथ्यात्वेऽपि वेदान्तबोध्यं सत्यमेवेति स्थितम्। यथा च अविद्यातत्कार्यस्यस्वरूपतो निषेधेऽपि तुच्छवैलक्षण्यं पारमार्थिकत्वाकारेण निषेधे वा पारमार्थिकत्वधर्मशून्यस्यापि ब्रह्मणः स्वरूपेण सत्त्वं तथोपपादितमधस्तात्।

पूर्वपक्षिणा निर्दोषस्वाप्नदेवतावाक्यस्य शब्दत्वेन प्रामाण्यायोगात् तादृशशब्दज्ञानं लिङ्गत्वेन प्रमाणमुक्तं, तन्न, तस्य स्वाप्नदेवतावाक्यस्य निर्दोषशब्दत्वेन शब्दविधयैव प्रामाण्यसम्भवात्। न च तादृशवाक्यस्य आप्तप्रणीतत्वापौरुषेयत्वयोरभावेऽपि कथं शब्दविधया प्रामाण्यमिति वाच्यं, तयोः आप्तप्रणीतत्वापौरुषेयत्वयोः शब्दस्य

दोषाभाव एव उपक्षयात् तादृशः शब्दः निर्दोष इति निश्चये एव उपक्षयात् विरत-व्यापारात् साक्षाच्छब्दप्रामाण्ये नोपयुज्यते ! दोषाभाव एव साक्षाच्छब्दप्रामाण्ये उपयुज्यते । तयोस्तु दोषाभावनिश्चय एव फलम् । तादृशशब्दज्ञानस्य लिङ्गत्वेन प्रामाण्ये व्याप्तिज्ञानपक्षधर्मताज्ञानयोः कल्पनीयत्वेन गौरवात् । शाब्दविषया प्रामाण्ये तयोरनपेक्षणीयत्वेन लाघवादिति । उक्तञ्च भट्टवार्तिके—

यदा स्वतः प्रमाणत्वं तदाऽन्यन्नैव मृग्यते ।
निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥
तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतुत्थदोषज्ञानैरपोद्यते ॥

[ चोदनासूत्रम्—५२–५३ श्लो० ]

स्वाप्नदेवतावाक्ये स्वाप्नदेवतावक्त्री तस्याः कल्पितत्वेऽपि तद्गतदोषस्य अर्थसम्वादेन "तव एवं भविष्यतीति" स्वाप्नदेवतावाक्यम्, अर्थसम्वादि-देवतावाक्यानुसारेण एवमेव जातम् । वाक्यार्थग्राहकप्रमाणेन वाक्यस्य संवादात् समानविषयत्वात्, वक्तुर्दोषस्य कल्पयितुमशक्यत्वात् अर्थसंवाद एव वक्तुर्दोष-कल्पनाय बाधक इत्यर्थः । तथा च यो यः प्रमाणशब्दः स स्वस्वरूपप्रामाण्ययोग्य-तादिसमानसत्ताकस्वबोध्यार्थयुक्तः इति व्याप्तिरेवासिद्धा । स्वाप्नदेवतावाक्ये व्यभिचारात् । योग्यतादिसमानसत्ताकत्वनियमसिद्धेराप्रयोजकत्वाच्चेति । निश्चाय-कस्य तर्कस्य अनवतारेण अनिश्चयरूपत्वात्, तथा च व्याप्तिरेवासिद्धेतिभावः । पूर्वपक्ष्युक्तानुमाने परोक्षत्वानित्यत्वाद्युपाधिसंभवाच्च इति । विश्वमिथ्यात्व-बोधिका श्रुतिः स्वप्रामाण्ययोग्यतादितुल्यसत्ताकास्वार्थबोधिका प्रमाणशब्द-त्वात् । घटोऽस्तीति प्रमाणशब्दवत् । अत्र एकमेवाद्वितीयमित्यादिश्रुतिरेव पक्षः तया श्रुत्या जायमानेऽद्वैतत्वोपलक्षितब्रह्मनिर्विकल्पनिश्चये परोक्षत्वानित्यत्वयोर-भावात् दृष्टान्ते च घटोऽस्तीति वाक्यजन्यबोधे तयोः सत्त्वाच्च तयोः प्रकृतानु-माने उपाधित्वसम्भवात् । अद्वैतत्वोपलक्षितब्रह्मनिर्विकल्पकनिश्चयस्य साक्षिरूप-त्वात् तत्र नित्यत्वापरोक्षत्वयोः सत्त्वात् । पक्षावृत्तितया उपाधेः साधनाव्यापक-त्वस्य दृष्टान्तवृत्तितया उपाधेः साध्यव्यापकत्वस्य सत्त्वात् इति भावः । श्रुत्या योग्यतादिसकलमिथ्यात्वबोधनेऽपीति । तदुक्तं खण्डने "अद्वैतं हि पारमार्थिकम्,

इदं पारमार्थिकेन भेदेन विरुध्यते न तु अविद्याविद्यमानेन। तस्मादविद्याव्यवस्थितं भेदं तद्बोधं च उपजीवन्त्या न परमार्थाद्वैतबुद्धेरुपजीव्यबाधः। यदि श्रुतिजन्या भवत्यपि अद्वैतबुद्धिरविद्या विद्यमाना तथापि तद्विपयस्तावत् परमार्थसदेवाद्वैतम्। विपयविरोधेन च तस्या बाध्यता स च नास्तीति तस्मात्—

"पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः।
बाधनादुपजीव्येन विभेति न मनागपि॥

ख० ख० खा०, पृ० २१९, श्लो० २३

इत्येतत् समाकलय्य उक्तं योग्यतादिसकलमिथ्यात्वबोधनेऽपि, तदर्थस्य न मिथ्यात्वं परमार्थसदद्वैतस्य तदर्थत्वात् तत्र च मिथ्यात्वप्रयोजकदृश्यत्वादेरभावात्। पूर्वपक्षिणा यन्महाभाष्योक्तन्यायोदाहरणं कृतं तदपि न युक्तमित्याह—विषयवैषम्यादिति। दृष्टान्तेन शिसद्भावस्य निमित्तत्वात् तदविघातकत्वेऽपि दार्ष्टान्तिके तात्त्विकप्रामाण्यस्य अनिमित्तत्वात् तद्विघातकत्वेऽपि नोक्तन्यायबाधः। व्यावहारिकप्रामाण्यस्य निमित्तत्वेऽपि न तद्विघातकत्वमुक्तश्रुतिरीष्यते इति भावः। यं दृष्ट्वा यस्य सम्भवः स तस्य सन्निपातः सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न्यायस्य उपजीविना स्वोपजीव्यं न बाध्यते इत्येव निर्गलितोऽर्थः। प्रकृते च स्वरूपेण प्रत्यक्षादेः श्रुत्युपजीव्यत्वेऽपि अमिथ्यात्वेन प्रत्यक्षादेर्न श्रुत्युपजीव्यता येन श्रुतिः प्रत्यक्षादेर्मिथ्यात्वं न बोधयेत्। श्रुत्युपजीव्यप्रत्यक्षादिस्वरूपं यद्व्यावहारिकं तन्न श्रुत्या बाध्यते। अतो न महाभाष्यीयन्यायविरोधस्य अत्रावकाशः।

**शतानि सहस्राणीति**। तथा हि शतानि सहस्राणीत्यत्र शतशब्दात् असि "जसशसोः शिः" इति सूत्रेण जसः शीत्यादेशे "शिसर्वनामस्थानमिति" शेः सर्वनामस्थानसंज्ञायाम् "लशक्वतद्धिते" इति शकारस्य संज्ञायाम् इत्संज्ञकस्य शकारस्य लोपे शत इ इति जाते "नपुंसकस्य झलच" इति सूत्रेण सर्वनामस्थानसंज्ञकशिप्रत्यये परे नुमागमे शत न् इ इति जाते "सर्वनामस्थाने चासम्बुद्धौ" इत्युपधादीर्घे शतान् इ (इति स्थिते) शतानि इति भवति। तदिदमयुक्तं "ष्णान्ता षट्"—षान्ता नान्ता च संख्या षट् संज्ञा स्यादिति नान्तसंख्यावाचिशतन्शब्दस्य षट् संज्ञायां "षड्भ्यो लुक्" इति षट्संज्ञकेभ्यः परयोः जसशसोर्लुक् स्यात् इति प्रत्ययलोपे तन्निमितकदीर्घस्यापि अभावे शतं सहस्रम् इत्येव स्यात्, न तु शतानि

इति शंकायामयं न्यायः प्रवृत्तः । नात्र शिप्रत्ययलोपः । सर्वनामस्थानभूतशिप्रत्यये परेनुमागमस्य विहितत्वात् शिप्रत्ययसन्निपातेन प्राप्तो नुम् ष्णान्ता षट् इति षट्संज्ञाद्वारा प्राप्तस्य शिप्रत्ययलोपस्य न निमित्तम् । एवञ्च शिप्रत्ययलोपाभावेन तत्प्रयुक्तोपधादीर्घे सति शतानि इत्यादि भवति इत्युदाहरणं द्रष्टव्यम् । "महाभाष्योक्तन्यायोदाहरणमपि न युक्तं विषयवैषम्यात्" इति मूलसन्दर्भस्य वैयाकरणरीत्या अर्थो लिख्यते । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति परिभाषास्वरूपम् । द्वयोः सन्निकर्षः—सन्निपातः सन्निकर्षः सम्बन्धविशेषः । अत्र सन्निकर्षपदेन अव्यवहितपूर्वापरिभावः, अभेदसम्बन्धेन विशेषणविशेष्यभावश्चेति द्विविधो गृह्यते । शतानीत्यादौ शतशब्दात् जसः शि आदेशे "शिः सर्वनामस्थानम्" इति शेः सर्वनामस्थानसंज्ञायां शिप्रत्यये परे अजन्ताङ्गस्य नुमागमः क्रियते । प्रकृते शत इ इति दशायां प्रकृतेः शिप्रत्ययेन सह अव्यवहितपूर्वापरिभावः सम्बन्धो वर्तते । तं सन्निपातं निमित्तीकृत्य जायमानो नुमागमः तत्सन्निपातविघातकस्य "षड्भ्यो लुक्" इति सूत्रेण विहितस्य शिलोपस्य निमित्तं न भवितुमर्हति, उपजीव्यविरोधात् । प्रकृते उपजीव्यः अव्यवहित पूर्वापरिभावसम्बन्धो विशिष्टः शिप्रत्ययः । उपजीवकश्च नुमागमः । स चोपजीवको नुम् उपजीव्यशिप्रत्ययविघाताय षट् संज्ञाद्वारा निमित्तं न भविष्यति । तथा च शतानि इत्यादौ शिप्रत्ययस्य लुक् न भवति । तत्सन्निपातेनैव विहितत्वात् । सन्निपातसद्भावनियमेनैव नुमो विहितत्वात् । लुक्शब्दद्वारा लुप्तसर्वनामस्थानस्य नुमागमे निमित्तत्वाभावात् । यद्यपि प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रेण शिप्रत्ययस्य लुप्तत्वेऽपि शिप्रत्ययनिमित्तकं कार्यम् अव्यवहितपूर्वापरिभावरूपसन्निपातरूपव्यवहाररूपं कार्यं कर्तुं शक्यते तथापि प्रकृते "न लुमताङ्गस्य" इति सूत्रेण प्रत्ययलोपे प्रत्ययलक्षणकार्यनिषेधात् । "लुक्श्लुलुपः" एते लुमन्ताः एतैः शब्दैः विधीयमाने लोपेऽङ्गोद्देश्यकक्कार्ये कर्तव्ये सति प्रत्यये लुप्ते प्रत्ययलक्षणं कार्यं न भवति । प्रकृते "षड्भ्यो लुक्" इत्यनेन लुक्शब्देन शिप्रत्ययस्य लोपात् शिप्रत्ययमिमित्तकस्य अव्यवहितपूर्वापरिभावरूपस्य सन्निपातस्य विघातोऽस्त्येव । यत्र तु प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रेण लुप्तेऽपि प्रत्यये पूर्वोक्तसन्निपातस्य विघातो न भवति तत्रेयं परिभाषा न प्रवर्तते । यथा

हे नदि इत्यत्र नदीशब्दात् सम्बोधने सौ विभक्तौ "अम्बार्थनद्योर्ह्रस्वः" इत्यनेन नदीशब्दस्य ह्रस्वे कृते "एङ्ह्रस्वात् सम्बुद्धेः" इत्यनेन सकारस्य लोपः क्रियते। अत्र सन्निपातपरिभाषा न प्रवर्तते, सन्निपातविघाताभावात्। प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रेण आहार्यज्ञानविषयीभूतस्य सन्निपातस्य सम्भवात्। यत्र अलुप्तप्रत्ययत्वेन निमित्तता वर्तते तत्र सन्निपातलक्षणन्यायस्य अवतारो भवति। शतानीत्यादौ अलुप्तस्यैव सर्वनामस्थानस्य नुम् निमित्तत्वात्। यस्मिन् स्थले तु "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रेण प्रत्यये लुप्तेऽपि कार्यं भवति, तत्र अलुप्तत्वविशेषणं व्यर्थं प्रत्ययत्वमात्रविशिष्टस्यैव प्रत्ययस्य तस्मिन् कार्ये निमित्तत्वात्। तत्र सन्निपातलक्षणन्यायावतारो नास्ति। तस्मिन् कार्ये प्रत्ययसद्भावस्य अनुपजीव्यत्वात्। लुप्ते प्रत्यये अलुप्ते च प्रत्यये यत्कार्यं भवति तत्कार्ये प्रत्ययसद्भावो नोपजीव्यो भवितुमर्हति। एवं स्थितौ यदि अमिथ्याभूतत्वविशिष्टप्रत्यक्षादेः आगमं प्रति निमित्तता स्यात् तदा सन्निपातलक्षणन्यायस्य प्रवृत्तिर्भवेत्। यथा अलुप्तत्वविशिष्टप्रत्ययनिमित्तके कार्ये कर्तव्ये सन्निपातलक्षणन्यायस्य अवतारः कृतः। तथा त्वत्र नास्ति प्रत्यक्षादेः स्वरूपेणैव आगमं प्रति निमित्तत्वं स्वीकृतम्। यथा स्वप्नाद्यर्थस्य अर्थक्रियाकारित्वदर्शनेन स्वरूपतो निमित्तता स्वीकृता। अतो यद्बाध्यते इति प्रपञ्चमिथ्यात्वप्रतिपादकश्रुत्या यत्प्रत्यक्षादेस्तात्त्विकत्वं बाध्यते तत् प्रत्यक्षादेस्तात्त्विकत्वं मिथ्यात्वश्रुतेर्नोपजीव्यम्। यच्च प्रत्यक्षादेर्व्यावहारिकसत्त्वं मिथ्यात्वश्रुत्या उपजीव्यं तच्च न मिथ्यात्वश्रुत्या बाध्यते। इति किं केन सङ्गतम्। उपजीव्यत्वबाध्यत्वयोर्वैयधिकरण्यादित्यर्थः। उपजीव्यविरोधाभावादेव उपजीव्यविरोधन्यायोदाहरणमसङ्गतमेव। तदुक्तं भामतीकृद्भिः उत्पादकाप्रतिद्वन्द्वित्वात् इति उक्तश्च भामत्यां प्रमितौ अनपेक्षत्वेऽपि उत्पत्तौ प्रत्यक्षापेक्षत्वात् तद्विरोधात् अनुत्पत्तिलक्षणमप्रामाण्यमिति चेत् न उत्पादकाप्रतिद्वन्द्वित्वात्। न हि आगमज्ञानं सांव्यवहारिकं प्रत्यक्षस्य प्रामाण्यम् उपहन्ति येन कारणाभावात् न भवेत्, अपि तु तात्त्विकं न च तत् तस्योत्पादकमिति। [भामती, पृ० ६] अत एव इत्यस्य पूर्वपक्षिणा यदुक्तं तदपास्तमित्यनेनान्वयः। उक्तं च पूर्वपक्षिणा—ज्योतिष्टोमादिविधेरिति। ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यत्र न सर्वेषाम् अत्रैवर्णिकाणामधिकारः किन्तु येषां आधानसिद्धोऽग्निः अध्ययनसिद्धा विद्या

च अस्ति तेषामेवाधिकारः। अग्निविद्ययोश्च उपजीव्यत्वात् अग्निविद्ययोश्च अत्रैवर्णिकाणामभावात् न तेषाम् अग्निष्टोमादियागेऽधिकार इति एवं स्वर्गकाम इति सामान्यतः श्रुतस्यापि अग्निविद्यावद्विषयकत्वेन यथा सङ्कोचः क्रियते तद्वत् द्वैतनिषेधस्यापि स्वोपजीव्ययोग्यतादीतरविषयत्वेन संकोचः क्रियताम् मिथ्यात्व-प्रतिपादकश्रुत्या यत् यत् उपजीव्यं तद्व्यतिरिक्तं मिथ्या इति मिथ्यात्वप्रतिपादक-श्रुत्या प्रतिपाद्यते। सृष्टिप्रतिपादकश्रुतेर्यथा सिद्धान्तिमते कल्पितसृष्टिविषयत्व-मेवं मिथ्यात्वप्रतिपादकश्रुतेरपि कल्पितमिथ्यात्वप्रतिपादकत्वमस्तु न तात्त्विक-सर्वमिथ्यात्वपरत्वम् एतत् पूर्वपक्ष्युक्तम् अपास्तम्। कुत इति चेत्? अग्निविद्ययो-र्यथा ज्योतिष्टोमादियागोपजीव्यत्वं न तथा तात्त्विकयोग्यतादेः मिथ्यात्वश्रुत्यु-पजीव्यत्वम्। कुतो न इत्यत आह—न हि योग्यतेति? तात्त्विकयोग्यतात्वेन योग्यता न कारणं नोपजीव्यं किन्तु योग्यतात्वेनैव। योग्यतात्वेन योग्यता न मिथ्यात्वश्रुत्या बाध्यते बाध्यते च तात्त्विकयोग्यतात्वेन तात्त्विकी योग्यता सा च न उपजीव्या इति भावः। सकलद्वैताभावस्येति। द्वितीयमिथ्यात्वलक्षणे एतत् प्रपञ्चितम् तदेव स्मारयन्नाह—ब्रह्माधिष्ठानकद्वैतमात्रस्य अत्यन्ताभावः द्वैता-धिष्ठानब्रह्मस्वरूप एव अधिष्ठानस्य च ब्रह्मणः सत्यत्वं सकलश्रुतियुक्तिसिद्धमित्याह सत्यं ज्ञानमिति तत् सत्यमिति च श्रुत्या प्रतिपादनात्। सृष्ट्यादिश्रुतेः स्वार्थे तात्पर्याभावात् ब्रह्माद्वैतप्रतिपादने एव तात्पर्यात् सृष्ट्यादिश्रुतेः कल्पितविषयत्वेऽपि परमतात्पर्यविषयस्य ब्रह्मणः प्रतिपादिका श्रुतिर्न कल्पितविषया भवितुमर्हति। आध्या-रोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते इति न्यायेन सृष्टिश्रुतिरध्यारोपप्रदर्शनार्था न तात्त्विकीति भावः। योग्यतादेर्मिथ्यात्वेऽपि वेदान्तबोध्यं ब्रह्मसत्यमेव। लोकव्यवहारसिद्धयोग्यतादिकमुपजीव्य श्रुत्या परमार्थसत्यप्रतिपादनादिति द्वितीय-मिथ्यात्वलक्षणे प्रतिपादितम् अर्थजातम् अत्राप्यनुसन्धेयमित्याह—अविद्या तत्कार्ययोः स्वरूपतो निषेधेऽपि क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वादसद्वैलक्षण्यं ब्रह्मणि पारमार्थिकत्वधर्माभावेऽपि एकेनैव सत्स्वरूपेण ब्रह्मणः सर्वत्र सत्सदिति प्रतीतेरुपपत्तौ प्रत्येकं सत्स्वभावताकल्पने मानाभावात् गौरवाच्च—इति प्रथममिथ्या-त्वलक्षणे विवेचितम्। सर्वानुस्यूते ब्रह्मणि धर्मकल्पनं किमर्थमिति विवेक्तव्यं कस्माच्चेत् व्यावर्तनायैव धर्मकल्पनं सर्वानुवृत्ते ब्रह्मणि व्यावृत्तेरेवाभावात्।

ननु—तत्त्वमस्यादिवाक्येन प्रत्यक्षाद्यविरोधाय तत्त्वं पदलक्षितयोरैक्यमिव मिथ्यात्वश्रुत्यापि तदविरोधाय प्रत्यक्षादिसिद्धादन्यस्यैव मिथ्यात्वं बोध्यम्; अन्यथा प्रत्यक्षाद्यनुग्रहाय व्यावहारिकमपि सत्त्वं न कल्प्येत। 'नेह नाने'त्यादिनिषेधेनात्यन्तसत्त्वबोधनात्—इति चेत् ॥२॥

न, विशिष्टयोरैक्ये विशेषणयोरप्यैक्यापातेन सर्वत्र विशिष्टाभेदपरवाक्यस्य लक्षितविशेष्यैक्यपरत्वनियमेन 'तत्त्वमसी'त्यत्रापि तथाभ्युपगमात्। तदुक्तम्—

---

कल्पितोऽपि धर्मः ब्रह्मणो भिन्नश्चेत् स जडदृश्यरूप एव वाच्यः, जडत्वेन दृश्यत्वेन तस्य मिथ्यात्वमेवापतिष्यति। किञ्च असंगेन ब्रह्मणा धर्मस्य कः सम्बन्धः पारमार्थिकधर्मासम्भवात् आध्यासिक एव वाच्यः स च अस्माभिरङ्गीक्रियत एव सर्वैरेव दृश्यैः ब्रह्मण आध्यासिकसम्बन्धाङ्गीकारादिति भावः। साक्षिरूपत्वेन च ब्रह्मणो बाधासम्भवाच्च, एतत्सर्वं प्रथममिथ्यात्वलक्षणे एव उपपादितम्। नेह नानेति श्रुत्या प्रत्यक्षसिद्धप्रपञ्चस्य मिथ्यात्वं बोधयितुं न शक्यं प्रत्यक्ष—विरोधादेव। अतः प्रत्यक्षसिद्धप्रपञ्चभिन्नस्यैव कस्यचित् प्रपञ्चस्य मिथ्यात्वश्रुत्या निषेधोऽस्तु न तु प्रत्यक्षसिद्धस्य अत एव तत्प्रपञ्चस्य सत्यत्वसिद्धिः। प्रत्यक्षविरोधो मया नाद्रियते इति चेत् न तथात्वे तत्त्वमसि इत्यादौ प्रत्यक्षविरोधभीत्या तत्त्वं पदयोर्लक्षणा नाङ्गीक्रियेत इत्याह पूर्वपक्षी—ननु तत्त्वमस्यादिवाक्येन प्रत्यक्षाद्यविरोधाय तत्त्वं पदलक्षितयोरैक्यमिव मिथ्यात्वश्रुत्यापि तद्विरोधाय प्रत्यक्षादिसिद्धादन्यस्यैव मिथ्यात्वं बोध्यम्। अन्यथा प्रत्यक्षाद्यनुग्रहाय व्यावहारिकमपि सत्त्वं न कल्प्येत। नेह नानेत्यादिनिषेधेन अत्यन्तासत्त्वबोधनादिति चेत्। प्रत्यक्षाद्यविरोधाय यथा तत्त्वं पदयोर्लक्षणाऽङ्गीक्रियते, तथैव प्रत्यक्षाद्यविरोधायैव मिथ्यात्वश्रुत्यापि लक्षणया प्रत्यक्षाद्यसिद्धस्यैव मिथ्यात्वं बोधनीयम्। अन्यथा प्रत्यक्षादिविरोधभयाभावे प्रपञ्चस्य व्यावहारिकसत्त्वमपि न सिद्धान्तिना कल्प्येत। प्रत्यक्षादिकं बाधित्वैव नेह नानेत्यादिश्रुत्या प्रपञ्चस्य अत्यन्तासत्त्वं प्रतिपाद्यतामिति। सर्वत्र विशिष्टयोरैक्यपरे वाक्ये लक्षितविशेष्यैक्यपरत्वं न केवलं तत्त्वमस्यादिवाक्ये एव इति ॥२॥

३—समाधत्ते सिद्धान्ती—न विशिष्टयोरैक्ये विशेषणयोरपि ऐक्या-

'अविरुद्धविशेषणद्वयप्रभवत्वेऽपि　विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदा नतरां तद्विपरीतरूपयोः' ॥ इति ।

मिथ्यात्वबोधकश्रुतौ तु नास्ति प्रत्यक्षादिविरोधः । तात्विकत्वांशस्यानुपजीव्यत्वात्, व्यावहारिकसत्त्वस्य चोपजीव्यत्वान्नात्यन्तासत्त्वकल्पनमित्यस्याप्युक्तप्रायत्वात् ॥ ३॥

---

पातेन सर्वत्र विशिष्टाभेदपरवाक्यस्य लक्षितविशेष्यैक्यपरत्वनियमेन तत्त्वमसीत्यत्रापि तथाभ्युपगमात् । तदुक्तम्—

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदान्यतरां तद्विपरीतयोः ॥

इति मिथ्यात्वबोधकश्रुतौ तु नास्ति प्रत्यक्षादिविरोधः । तात्त्विकांशस्य अनुपजीव्यत्वात् । व्यावहारिकसत्त्वस्य च उपजीव्यत्वात् नात्यन्तासत्त्वकल्पनमित्यस्यापि उक्तप्रायत्वात् । यथा सोऽयं देवदत्त इत्यादिविशिष्टाभेदपरवाक्ये तत्तेदन्ताविशिष्टयोरैक्ये तत्तेदन्तयोरपि विशेषणयोरैक्यापातेन अस्य विशिष्टाभेदपरवाक्यस्य विरुद्धविशेषणांशद्वयपरित्यागमलक्षितविशेष्यांशद्वयस्य अविरुद्धस्य ऐक्यपरत्वं तथा तत्त्वमसीत्यादिवाक्यस्यापि । स एवायं देवदत्त इति वाक्यं नाऽयं सः, सोऽयं नवेति विपर्यस्तं सन्दिहानं वा प्रति प्रयुज्यते भ्रमसंशययोर्निवृत्त्यर्थम् । तच्च प्रयोजनं कदा निर्वहति यदि देवदत्त स्वरूपमभिन्नं प्रतिपाद्यते । तथा च तच्छब्दः तत्ताभागं त्यक्त्वा व्यक्तिं लक्षयति इदं शब्दोऽपि इदन्त्वं त्यक्त्वा व्यक्तिं लक्षयति तदनन्तरम् उभाभ्यां पदाभ्यां वाक्यार्थत्वेन अभिन्ना व्यक्तिः प्रतिपाद्यते । तत्ताविशिष्टस्य इदानीमविद्यमानत्वेन इदन्ताविशिष्टेस्वाभेदासम्भवात् मुख्यार्थबाधोऽस्त्येव । एवञ्च यदि इदं पदे लक्षणा न स्यात् तदा विशिष्टाविशिष्टयोरैक्यमसम्भावितमेव । न च पौनरुक्त्यं वाच्यार्थे पौनरुक्त्यभावात् लक्ष्यार्थे तु इष्टापत्तिः तदैवाभेदो वाक्यार्थः सम्भवति नान्यथा एवमेव वाक्यार्थसिद्ध्या भेदभ्रमादिनिवृत्तिः फलं सिद्ध्यति नान्यथा । एषा रीतिः तत्त्वमस्यादिवाक्यार्थबोधेऽपि अनुसरणीया । अन्यथा जीवब्रह्मभेदभ्रान्त्यादेर्निवृत्तिर्न स्यादिति । तदुक्तं संक्षेपशारीरके [१।१६७ श्लोकः] अविरुद्धविशेषणद्वययुक्तयोर्विशिष्टद्वयवाचकयोः पदयोरपि दण्डी कुण्डली चैत्रः इत्यादौ दण्डिकुण्डलिनोरे-

ननु—श्रुतेस्तात्पर्यं चैतन्यमात्रे वा, द्वितीयाभावविशिष्टे वा, तदुपलक्षिते वा, नाद्यः, विश्वमिथ्यात्वासिद्धेरिष्टापत्तेः। तस्य स्वप्रकाशतया नित्यसिद्धत्वेन श्रुतिवैयर्थ्याच्च। न द्वितीयः, अखण्डार्थत्वहानात्। अत एव न तृतीयः; काकवदितिवत् द्वियीयाभाववदित्यनेनापि सप्रकारकज्ञानजननेनाखण्डार्थत्वायोगात्, चिन्मात्रस्य नित्यसिद्धत्वेन तदन्यस्य च मुमुक्ष्वज्ञेयत्वेन काकेन संस्थानविशेषस्येव द्वितीयाभावेनोपलक्ष्यस्यान्यस्याभावात् तस्योपलक्षणत्वायोगाच्चेति—चेत् ॥४॥

---

क्ता यदा न घटते दण्डकुण्डलयोर्भेदात् तदा कैव कथा विरुद्धविशेषणद्वययुक्तयोर्विशिष्टद्वयवाचकयोः पदयोरिति। यथा सोऽयं देवदत्तः तत्त्वमसीत्यादिवाक्ये। तत्तेदन्त्वयोरिव जीवत्वब्रह्मत्वयोर्विशेषणयोर्विरोधात्। यच्चोक्तं प्रत्यक्षविरोधात् मिथ्यात्वश्रुतिरन्यपरेति तन्न विरोधस्यैवाभावात्। प्रत्यक्षादि, प्रपञ्चस्य तात्त्विकत्वं ग्रहीतुमेव न शक्नोति प्रत्यक्षाद्ययोग्यत्वात् तात्त्विकत्वस्य अतः प्रत्यक्षादेस्तत्त्वावेदकत्वरूपं प्रामाण्यं स्वोत्पत्तौ श्रुत्या नोपजीव्यते। यच्च उपजीव्यते व्यावहारिकसत्त्वं तन्न श्रुत्या बाध्यते इत्यक्षक्दा वेदितम्। श्रुतेः स्वोत्पत्तौ प्रत्यक्षादेर्व्यावहारिकप्रामाण्यस्य उपजीव्यत्वात् न तेषाम् अत्यन्तासद्विषयकत्वकल्पनम्। तेषाम् अत्यन्तासद्विषयकत्वे श्रुतेरेवात्मलाभो न स्यादिति ॥३॥

४–प्रपञ्चमिथ्यात्वे श्रुतेस्तात्पर्याभावादपि श्रुत्या न प्रपञ्चमिथ्यात्वसिद्धिरिति शङ्कते पूर्वपक्षी–ननु श्रुतेस्तात्पर्यं चैतन्यमात्रे वा ? द्वितीयाभावविशिष्टे वा ? तदुपलक्षिते वा ? नाद्यः, विश्वमिथ्यात्वासिद्धेः इष्टापत्तेः। तस्य स्वप्रकाशतया नित्यसिद्धत्वेन श्रुतिवैयर्थ्याच्च। न द्वितीयः, अखण्डार्थत्वहानात्। अत एव न तृतीयः काकवदितिवत् द्वितीयाभाववदित्यनेनापि सप्रकारकज्ञानजनने न अखण्डार्थत्वायोगात् चिन्मात्रस्य नित्यसिद्धत्वेन तदन्यस्य च मुमुक्ष्वज्ञेयत्वेन काकेन संस्थानविशेषस्येव द्वितीयाभावेन उपलक्ष्यस्य अन्यस्याभावात् तस्य उपलक्षणत्वायोगाच्च इति चेत् ? श्रुतेस्तात्पर्यं कुत्रेति पृच्छायां कल्पत्रयं प्रदर्श्य त्रिष्वपि कल्पेषु क्रमशः दोषं दर्शयति—नाद्य इति। नेह नानेत्यादिश्रुतेः चैतन्यमात्रपरत्वेन प्रपञ्चमिथ्यात्वे

न, काकस्य संस्थानविशेष इव द्वितीयाभावस्य स्वरूपमेवोपलक्ष्यमित्युपलक्ष्याभावनिबन्धनोपलक्षणत्वानुपपत्तेरभावात्। उपलक्षणत्वे हि उपलक्ष्यसत्त्वमात्रं तन्त्रम्, न तु तस्य स्वरूपातिरिक्तत्वमपि गौरवात्। उपलक्ष्यतावच्छेदकरूपाभावेऽपि स्वतोव्यावृत्तजातिवदुपलक्ष्यत्वसम्भवात्। अत एव न सप्रकारकत्वापत्तिः। काकवदित्यत्राप्युप-

---

तात्पर्याभावेन मिथ्यात्वासाधकत्वात् इष्टापत्तिरिति भावः। तस्य चिन्मात्रस्य इत्यर्थः श्रुतेश्चिन्मात्रप्रतिपादकत्वे श्रुतिवैयर्थ्यमेव स्यात्, चिन्मात्रस्य स्वप्रकाशत्वेन नित्यसिद्धत्वादिति भावः। न द्वितीयः इति द्वितीयाभावविशिष्टे चैतन्ये श्रुतेस्तात्पर्याङ्गीकारे विशिष्टार्थप्रतिपादकतया श्रुतेरखण्डार्थत्वं न स्यादित्यर्थः। पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकत्वं हि श्रुतेरखण्डार्थत्वं तच्च श्रुतेर्विशिष्टार्थप्रतिपादकत्वे न स्यात्। अत एव न तृतीय इति। द्वितीयाभावस्य उपलक्षणत्वे यथा उपलक्षणस्य काकस्य काकवद्गृहमिति काकवत्त्वप्रकारकज्ञानहेतुत्वं तथा द्वितीयाभावस्य उपलक्षणत्वेऽपि स्वप्रकारकज्ञानहेतुत्वमेव स्यात्। किञ्च द्वितीयाभावरूपोपलक्षणेन उपलक्ष्यं किं शुद्धस्वरूपमात्रं किं वा विशिष्टं शुद्धगतधर्मान्तरं वेति विकल्प्य आद्यं निरस्यति—चिन्मात्रस्य नित्यसिद्धत्वेन इति। तथा च प्रतिपादनवैयर्थ्यमेव। उपलक्षणं विनैव स्वप्रकाशत्वेन तस्य नित्यसिद्धत्वात् इति द्वितीयं निरस्यति अन्यस्य च मुमुक्ष्वज्ञेयत्वेन इति शुद्धात्मन एव मुमुक्षुज्ञेयत्वेन विशिष्टस्य मुमुक्ष्वज्ञेयत्वात् शास्त्रेण उपलक्षणद्वारा शुद्धस्यैव बोधनीयत्वात् न विशिष्टस्य उपलक्ष्यत्वमित्यर्थः। तृतीयं निराकरोति—काकेन संस्थानविशेषस्येवेति। काकेन गृहगतसंस्थानविशेषस्य उत्तृणत्वादेरिव द्वितीयाभावेन ब्रह्मगतधर्मान्तरस्य उपलक्ष्यस्य अभावेन द्वितीयाभावस्य उपलक्षणत्वायोगात् इति ॥४॥

५—द्वितीयाभावेन ब्रह्मस्वरूपमेव उपलक्ष्यमिति समाधत्ते सिद्धान्ती—न, काकस्य संस्थानविशेषस्येव द्वितीयाभावस्य स्वरूपमेव उपलक्ष्यमित्युपलक्ष्याभाव निबन्धनोपलक्षणत्वानुपपत्तेरभावात्। उपलक्षणत्वे हि उपलक्ष्यसत्त्वमात्रं तन्त्रं न तु तस्य स्वरूपातिरिक्तत्वमपि गौरवात्। उपलक्ष्यतावच्छेदकरूपाभावेऽपि स्वतो व्यावृत्तजातिवदुपलक्ष्यत्वसम्भ-

लक्षणस्याप्रकारत्वात्, किन्तु स्वरूपातिरिक्तधर्मस्य तत्रोपलक्षणत्वेन सप्रकारकत्वम्, इह तु तन्नेति वैषम्यम्। न चोपलक्षणवैयर्थ्यम् अनर्थनिवृत्तिहेतुत्वेन द्वितीयाभावद्वारकस्वरूपज्ञानस्योद्देश्यत्वात्, तस्य प्रागसिद्धत्वात्। न च मिथ्यात्वासिद्धेरिष्टापत्तिः, अवान्तरतात्पर्यस्य तत्रापि सत्त्वात्। तद्द्वारैव स्वरूपचैतन्ये महातात्पर्यात्। अत एव— श्रुतिबोध्यस्य विशेषणस्योपलक्षणस्य वा द्वितोयाभावस्य सत्त्वे अद्वैत-हानिः। असत्त्वे चादण्डे दण्डीति वाक्यवत् काकहीने काकवदिति वाक्यवच्चाद्वैतवाक्यस्यातत्त्वावेदकत्वापत्तिरिति— निरस्तम्। आद्ये द्वितीयाभावसत्त्वेन द्वितीयाभावासिद्ध्यापादनस्यानुचितत्वात्, अभाव-स्याधिकरणातिरेकानभ्युपगमाच्च। द्वितीये तु सृष्ट्यादिवाक्यवदुपलक्ष्य-स्वरूपसत्यत्वमादाय तत्त्वावेदकत्वात्, मुख्यतात्पर्यविषयस्यासत्यताया-मेवातत्त्वावेदकत्वाभ्युपगमात्। अत एव महातात्पर्याभिप्रायेण चैतन्य-मात्रे तात्पर्यमित्याद्यपक्षेऽपि न दोषः; अवान्तरतात्पर्येण मिथ्यात्व-सिद्धेरपि स्वीकारेणेष्टापत्तेरप्यसंभवात् ॥५॥

---

वात्। अत एव न स्वप्रकारकत्वापत्तिः। काकवदित्यत्रापि उपलक्षणस्य अप्रकारत्वात्। किन्तु स्वरूपातिरिक्तधर्मस्य तत्रोपलक्षणत्वेन सप्रकारकत्वम्। इह तु तन्नेति वैषम्यम्। न च उपलक्षणवैयर्थ्यमनर्थ-निवृत्तिहेतुत्वेन द्वितीयाभावद्वारकस्वरूपज्ञानस्य उद्देश्यत्वात् तस्य प्रागसिद्धत्वात्। न च मिथ्यात्वासिद्धेरिष्टापत्तिः अवान्तरतात्पर्यस्य तत्रापि सत्त्वात्। तद्द्वारैव स्वरूपचैतन्ये महातात्पर्यात्। अत एव श्रुतिबोध्यस्य विशेषणस्य उपलक्षणस्य वा द्वितीयाभावस्य सत्त्वे अद्वैत-हानिः। असत्त्वे च अदण्डे दण्डीति वाक्यवत् काकहीने काकवदिति वाक्यवच्च अद्वैतवाक्यस्य अतत्त्वावेदकत्वापत्तेरिति निरस्तम्। आद्ये द्वितीयाभावसत्त्वेन द्वितीयाभावासिद्ध्यापादनस्य अनुचितत्वात् अभावस्य अधिकरणातिरेकानभ्युपगमाच्च। द्वितीये तु सृष्ट्यादिवाक्य-वत् उपलक्ष्यस्वरूपसत्यत्वमादाय तत्त्वावेदकत्वात् मुख्यतात्पर्यविषयस्य असत्यतायामेव अतत्त्वावेदकत्वाभ्युपगमात्। अत एव महातात्पर्या-

भिप्रायेण चैतन्यमात्रे तात्पर्यमित्याद्यपक्षेऽपि न दोषः अवान्तरतात्पर्येण मिथ्यात्वसिद्धेरपि स्वीकारेण इष्टापत्तेरप्यसम्भवात्। उक्तञ्च असतः साधकत्वाभावे बाधकनिरूपणप्रकरणे [अद्वैतसिद्धिः, पृ० ४४९, निर्णयसागर सं०] येन च स्वोपरागमुदासीनं कुर्वता विशेष्यगतव्यावर्तकधर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदुपलक्षणं यथा काकादि। अतः काकैर्गृहं देवदत्तस्य इत्यत्र काकोपलक्षणं तच्च गृहगतसंस्थानविशेषस्य उत्तृणत्वादेरुपस्थापनद्वारा गृहं गृहान्तरेभ्यो व्यावर्तयति। प्रकृते द्वितीयाभावः उपलक्षणं तेन च ब्रह्मस्वरूपमेव उपलक्ष्यम्। तेन उपलक्ष्याभावात् द्वितीयाभावो नोपलक्षणमिति निरस्तम्। उपलक्ष्यसत्त्वमात्रमेव उपलक्षणत्वव्यापकम् उपलक्ष्यसत्त्वाभावे उपलक्षणत्वमेव न स्यात् न तु उपलक्ष्यस्य स्वरूपातिरिक्तत्वमपि अपेक्ष्यते। यथा दृष्टान्ते उत्तृणत्वादेर्गृहातिरिक्तत्वं तत्र उपलक्ष्यस्य स्वरूपातिरिक्तत्वं सम्भवति प्रकृते असम्भवात् न उपलक्ष्यस्य स्वरूपातिरिक्तत्वं नैतावता उपलक्षणस्वरूपहानिः उपलक्ष्यसत्त्वमात्रेणैव उपलक्षणत्वसम्भवात् उपलक्ष्यस्य स्वरूपातिरिक्तत्वापेक्षणे गौरवं स्यात् अनपेक्षितत्वादिति भावः। स्वरूपस्य उपलक्ष्यत्वे उपलक्ष्यतावच्छेदकधर्मः कः इति तु न देश्यम् उपलक्ष्यतावच्छेदकधर्मरहितस्यापि स्वतो व्यावृत्तस्य उपलक्ष्यत्वसम्भवात्। उपलक्ष्यतावच्छेदकधर्मो हि व्यावृत्तिसिद्धये अपेक्ष्यते स्वतो व्यावृत्तेः व्यावर्तकधर्मापेक्षैव नास्ति। किञ्चिद्धि वस्तु स्वतो व्यावृत्तमिति न्यायेन गोत्वादिजातौ व्यावर्तकधर्मान्तराभावात् न च तत्रापि गोत्वत्वादिर्व्यावर्तकधर्मोऽस्तीति वाच्यं, स च गवेतरा वृत्तित्वे सति सकलगोवृत्तित्वरूपोऽङ्गीकार्यः। अन्यथा अक्लृप्तपदार्थकल्पनाप्रसंगात्। सकलगोवृत्तित्वेन यदि गोत्वजातिर्विशिष्येत। तर्हि परस्पराश्रयापातः स्यात्, जात्या व्यावृत्ता व्यक्तिर्जातिं व्यावर्तयिष्यति, व्यक्त्या च व्यावृत्ता जातिर्व्यक्तिं व्यावर्तयिष्यति, अतो व्यावर्तकधर्मान्तराभावेऽपि गोत्वादिजातयः स्वतो व्यावृत्ताः भवन्ति। अतः किञ्चिद्धि वस्तु स्वतो व्यावृत्तमित्यवश्यमङ्गीकरणीयम्। अत एव उक्तं मूले स्वतो व्यावृत्तजातिवदुपलक्ष्यत्वसम्भवादिति। उपलक्ष्यस्य स्वतो व्यावृत्तत्वादेव न तद्विषयज्ञानस्य सप्रकारत्वापत्तिः। काकवद् गृहम् इत्यत्रापि उपलक्षणीभूतः काकः न प्रकारः किन्तु गृहस्वरूपातिरिक्तधर्मस्य उत्तृणत्वादेः। काकोपस्थाप्यस्य तत्र प्रकारत्वेन भानम् इह तु द्वैताभावोपस्थाप्य-

स्वरूपस्यैव भानात् न सप्रकारत्वमिति वैषम्यम्। न च द्वैताभावेन स्वरूपस्य उपलक्ष्यत्वे उपलक्षणवैयर्थ्यम् इति वाच्यं, द्वितीयाभावद्वारकस्वरूपज्ञानस्य कर्तृत्वाद्यनर्थनिवृत्तिहेतुत्वेन उद्देश्यत्वात्। आत्मनि द्वितीयाभावे बोधिते आत्मनः प्रमातृत्वकर्तृत्वभोक्तृत्वादयो अनर्थाः निवर्तन्ते नान्यथा अतो द्वितीयाभावद्वारकस्वरूपज्ञानं मुमुक्षुभिरभिलष्यते। स्वरूपज्ञानमात्रेण तदसिद्धत्वात् अनर्थनिवृत्तये द्वितीयाभावद्वारकस्वरूपज्ञानं भवत्युद्देश्यम्। न च श्रुत्या परमतात्पर्यविषयीभूतात्मस्वरूपज्ञाने जायमानेऽपि तेन प्रपञ्चमिथ्यात्वासिद्ध्या पूर्वपक्षिण इष्टापत्तिरिति वाच्यं, चिन्मात्रस्वरूपे श्रुतेः परमतात्पर्येऽपि प्रपञ्चमिथ्यात्वे अर्थात् द्वैताभावे द्वारिभूतार्थे श्रुतेरवान्तरतात्पर्यमस्त्येव इति नेष्टापत्तिसम्भवः। श्रुतिरवान्तरतात्पर्येण द्वैताभावप्रतिपादनद्वारा परमतात्पर्यविषयीभूतं चिन्मात्रस्वरूपं बोधयति इति नेष्टापत्तिसम्भावनेति भावः। अत एव इति। निरस्तमित्यनेन अन्वेति। तेन श्रुतिबोध्यस्य द्वितीयाभावस्य विशेषणत्वे उपलक्षणत्वे वा ब्रह्मव्यतिरिक्तस्य द्वितीयाभावस्य सत्त्वात् अद्वैतहानिः ब्रह्मव्यतिरिक्तस्य द्वितीयाभावस्य असत्त्वे न तस्य विशेषणत्वमुपलक्षणत्वं वा सम्भवतीत्याह—अदण्डे दण्डीति वाक्यवत् काकहीने काकवदिति वाक्यवच्च अद्वैतवाक्यस्य अतत्त्वावेदकत्वापत्तिः। असतो न विशेषणत्वं न वा उपलक्षणत्वमित्यत्र दृष्टान्तद्वयम् उक्तं न विशेषणत्वं यथा अदण्डे दण्डीति वाक्यम्, न उपलक्षणत्वमित्यत्र दृष्टान्तः काकहीने काकवदिति वाक्यम्, एतद्वाक्यद्वयं यथा अतत्त्वावेदकं तथा अद्वैतप्रतिपादिका श्रुतिरपि अतत्त्वावेदिका भवेदिति निरस्तम्। पूर्वपक्षिणा उपलक्षणीभूतस्य द्वितीयाभावस्य सत्त्वे असत्त्वे च दोषा उक्ता ते न सम्भवन्तीत्याह—आद्ये इति। द्वितीयाभावस्य सत्त्वपक्षे इत्यर्थः, द्वितीयाभावस्य सत्त्वाभ्युपगमे द्वितीयाभावस्य असत्त्वापादनं पूर्वपक्षिणोऽनुचितमेव। यच्च सत्त्वाभ्युपगमे द्वैतापत्तिरिति, तन्न, अभावस्य अधिकरणातिरेकानभ्युपगमात्। ब्रह्मनिष्ठद्वैताभावस्य अधिकरणरूपतयैव सत्त्वम् अधिकरणरूपत्वादेव न द्वैतापत्तिरिति भावः। द्वितीये द्वैताभावस्य असत्त्वपक्षे सृष्ट्यादिवाक्यं ब्रह्मणस्तटस्थलक्षणप्रतिपादकं सत् सृष्ट्यादिप्रतिपादनद्वारा ब्रह्म उपलक्षयति—उपलक्षणमिथ्यात्वेऽपि उपलक्षणस्य ब्रह्मणः सत्यत्वादेव उपलक्षणप्रतिपादकसृष्ट्यादिवाक्यानां तत्त्वावेदकत्वम् एवम् उपलक्षणीभूतस्य द्वितीयाभावस्य मिथ्यात्वेऽपि

ननु—द्वितीयाभावे महातात्पर्याभावः किं प्रमाणान्तरप्राप्त्या, यथा वायुक्षेपिष्ठत्वादौ, उत तद्विरोधित्वेन—यथात्मवपोत्खननादौ, उतोद्देश्यविशेषणत्वादिना यथा ग्रहैकत्वादौ, नाद्यः, त्वयैव द्वितीयाभावस्य प्रमाणान्तरप्राप्त्यनभ्युपगमात् । द्वितीयेऽपि विरोधिमानं न तावत्प्रत्यक्षादि द्वैतग्राहि; त्वन्मते तस्यैव श्रुतिबाध्यत्वात्, नाद्वैतवाक्यान्तरम्, तस्यात्ममात्रपरत्वे द्वितीयाभावाविरोधित्वात्, न हि विशेष्यविषयं 'अग्निहोत्रं जुहोती'ति वाक्यं विशिष्टविषयेण 'दध्ना जुहोती'ति वाक्येन विरुध्यते, द्वैताभावपरत्वे त्वेकविषयत्वेन सुतरामविरोधात् । नापि तृतीयः; 'ग्रहं संमार्ष्टी'त्यत्र संमार्जनस्येवाखण्डार्थपरे वाक्ये विधेयान्तरस्याभावेन विशेष्यस्य शास्त्रगम्यस्य चिन्मात्रस्याप्राप्तत्वेनोद्देश्यत्वा-

---

उपलक्ष्यब्रह्मणः सत्यत्वादेव द्वितीयाभावप्रतिपादकवाक्यस्य तत्त्वावेदकत्वम् । मुख्यतात्पर्यविषयीभूतस्य असत्यत्वे एव वाक्यस्य अतत्त्वावेदकत्वं मुख्यतात्पर्यविषयीभूतस्य सत्यतायां तु तत्त्वावेदकत्वमेव । यच्च पूर्वपक्षिणा शङ्कितं श्रुतेस्तात्पर्यं चैतन्यमात्रे वेति तदपि सम्यगेव श्रुतेर्महातात्पर्यं चैतन्यमात्रे एव तस्मिन् आद्यपक्षेऽपि न दोषः । चैतन्यमात्रे महातात्पर्येऽपि अवान्तरतात्पर्येण प्रपञ्चमिथ्यात्वसिद्धेरिष्टापत्त्यसम्भवात् इति ॥५॥

६—यच्च सिद्धान्तिना द्वितीयाभावे श्रुतेर्महातात्पर्यं नास्तीत्युक्तं तद्विकल्प्य दूषयन्नाह पूर्वपक्षी—ननु द्वितीयाभावे महातात्पर्याभावः किं प्रमाणान्तरप्राप्त्या यथा वायुक्षेपिष्ठत्वादौ, उत तद्विरोधित्वेन यथा आत्मवपोत्खननादौ, उत उद्देश्यविशेषणत्वादिना यथा ग्रहैकत्वादौ नाद्यः त्वयैव द्वितीयाभावस्य प्रमाणान्तरप्राप्त्यनभ्युपगमात् । द्वितीयेऽपि विरोधिमानं न तावत् प्रत्यक्षादिद्वैतग्राहि त्वन्मते तस्यैव श्रुतिबाध्यत्वात् न अद्वैतवाक्यान्तरं तस्य आत्ममात्रपरत्वे द्वितीयाभावाविरोधित्वात् न हि विशेष्यविषयम् अग्निहोत्रं जुहोति इति वाक्यं विशिष्टविषयेण दध्नाजुहोति इति वाक्येन विरुध्यते द्वैताभावपरत्वे तु एकविषयत्वेन सुतरामविरोधात् । नापि तृतीयः ग्रहं सम्मार्ष्टि इत्यत्र सम्मार्जनस्येव अखण्डार्थपरे वाक्ये विधेयान्तरस्य अभावेन विशेष्यस्य शास्त्रगम्यस्य

योगाच्च द्वितीयाभावस्योद्देश्यविशेषणत्वानुपपत्तेः। अविवक्षाहेतोरनुवाद्यत्वस्याप्यभा वाच्चेति—चेत् ॥६॥

---

चिन्मात्रस्य अप्राप्तत्वेन उद्देश्यत्वायोगाच्च। द्वितीयाभावस्य उद्देश्यविशेषणत्वानुपपत्तेः। अविवक्षाहेतोरनुवाद्यत्वस्यापि अभावाच्च इति चेत्। नेह नानेति श्रुतेर्द्वितीयाभावे महातात्पर्याभावः किं मानान्तरप्राप्त्या?

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इत्यभियुक्तोक्त्या अपूर्वत्वस्य तात्पर्यनिर्णायकलिङ्गत्वात् मानान्तरप्राप्ते अपूर्वत्वाभावात् तात्पर्याभावः इति किं सिद्धान्तिनो मतम्? यथा वायव्यां श्वेतमालमेत भूतिकामः इति विधेरर्थवादत्वेन आम्नायते [श्रूयते] वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेन उपधावति स एवैनं भूतिं गमयतीति अत्र वायोः क्षिप्रतमत्वं शीघ्रगामित्वं प्रत्यक्षादिमानसिद्धमिति न तत्र श्रुतेस्तात्पर्यम् अपूर्वत्वाभावात् तथा किं प्रकृते द्वितीयाभावे इति प्रथमविकल्पार्थः। मानान्तरविरोधाद्वा इति द्वितीयविकल्पः। तात्पर्यनिर्णायकलिङ्गेषु षष्ठं लिङ्गमुपपत्तिः। सा च प्रमाणन्तराविरोधः, प्रमाणान्तरविरोधे उपपत्तिरूपं लिङ्गं न स्यात् यथा आत्मवपोत्खनादौ प्राजापत्य तूपरयशोः प्राशस्त्याय अयमर्थवादः श्रूयते। "प्रजापतिरात्मनो वपाम् उदखिदत् इति" आन्तरधातुविशेषभूताया वपायाः प्रजापतिना स्वशरीरात् निष्कासनं कृतमित्येवं रूपे वाक्यार्थे तात्पर्यं नास्ति कुतः प्रजापतेरधुनापि जीवनग्राहकमानविरोधात्। वपोत्खनने च मरणस्यैव प्राप्त्या जीवनस्यैवानुपपत्तेरिति भावः। तृतीयं विकल्पमाह—उद्देश्यविशेषणत्वादिना यथा ग्रहैकत्वादौ इति। तृतीयाध्याये प्रथमपादे चिन्तितम्—ज्योतिष्टोमे श्रूयते दशापवित्रेण ग्रहं सम्मार्ष्टि इति दशापवित्रं वासः खण्डः गुहं सोमाधारयज्ञपात्रम्। अत्र ग्रहैकत्वं विवक्षितं न वेति संशये श्रुतस्य अविवक्षायां कारणाभावात् विवक्षितमेव एकत्वमिति एकस्यैव ग्रहस्य सम्मार्गोऽनुष्ठेयः इति पूर्वः पक्षः।

सिद्धान्तस्तु ग्रहैकत्वं विवक्षितं चेत ग्रहमुद्दिश्य एकत्वसम्मार्गयोर्द्वयोर्विधाने वाक्यभेदापत्तेः—ग्रहं सम्मृज्यात् तच्च एकमिति वाक्यभेदभयात्

एकत्वमविवक्षितमिति द्वादशा अपि ग्रहाः सम्मार्जनीयाः। एतेषु त्रिषु विकल्पेषु प्रथमो विकल्पो न सङ्गच्छते इत्याह—नाद्यः। अद्वैतश्रुतेरननुवादकत्वं वदता त्वयैव प्रमाणान्तरप्राप्त्यनभ्युपगमात्। न द्वितीय इत्याह—द्वितीयेऽपीति। द्वैतग्राहिप्रत्यक्षादेरेव द्वितीयाभावबोधक नेह नानेति श्रुतिबाध्यत्वाङ्गीकारेण द्वैतग्राहिप्रत्यक्षादेर्दुर्बलतया अद्वैतश्रुतिविरोधकत्वं न सम्भवतीत्यर्थः। न अद्वैतवाक्यान्तरमिति नेह नानेति श्रुतेर्द्वितीयाभावे तात्पर्याङ्गीकारे द्वितीयाभावरूपद्वितीयस्यैव प्राप्तेस्तत्र च अद्वैतप्रतिपादकं यन्नेह नानेति वाक्यभिन्नं वाक्यम् एको द्रष्टा अद्वैतो भवति इत्यादिरूपं तदेव विरोधिमानं भविष्यतीति तद्विरोधात् द्वितीयाभावे न तात्पर्यमित्यर्थः। तत्राह—तस्येति। तस्यापि अद्वैतवाक्यान्तरस्य चैतन्यमात्रपरत्वेन द्वितीयनिषेधे तात्पर्याभावात् द्वितीयाभावाविरोधित्वात द्वितीयाभावरूपद्वितीयाविरोधित्वादिति भावः। अविरोधमेव उपपादयति न हि इति। अत्र विशेष्यविपयेण अग्निहोत्रं जुहोतीतिवाक्येन विशिष्टविषयं दध्ना जुहोतीतिवाक्यं न विरुध्यते। अग्निहोत्रवाक्येन धर्मिरूपाग्निहोत्राख्यविशेष्यमात्रप्रतिपादकेन दध्याख्यगुणविशिष्टाग्निहोत्रप्रतिपादकस्य वाक्यस्य विरोधो नास्ति। देवदत्तो, दण्डी देवदत्तः इत्यनयोर्विरोधादर्शनात्। तथा नेह नानेति वाक्यस्य द्वितीयाभावविशिष्टचैतन्यप्रतिपादकत्वे विशेष्यभूतचिन्मात्रप्रतिपादकाद्वैतवाक्यान्तरेण विरोधी नास्तीत्यर्थः। द्वैताभावपरत्वे तु इति। अद्वैतवाक्यान्तरस्य चैतन्ये द्वितीयाभावेऽपि तात्पर्याङ्गीकारे द्वितीयाभावविशिष्टचैतन्यप्रतिपादकत्वप्राप्त्या तेन द्वितीयाभावविशिष्टचैतन्यप्रतिपादक नेह नानेति वाक्यस्य न विरोधः एकविषयकत्वादिति भावः। नापि तृतीय इति। ग्रहं सम्मार्ष्टि इत्यत्र यथा ग्रहोद्देशेन सम्मार्गस्य विधानमस्ति नैवमखण्डपरवाक्ये विधेयान्तरमस्ति विधेयान्तरसत्त्वेऽखण्डत्वहानात् विशेष्यस्य चिन्मात्रस्य शास्त्रैकसमधिगम्यस्य मानान्तराप्राप्ततया अनुवाद्यत्वरूपोद्देश्यत्वासम्भवात्। अतः द्वितीयाभावस्य न चिन्मात्रोद्देश्यविशेषणत्वम्। द्वैताभावे नेह नानेति श्रुतेस्तात्पर्याभावे हेतुरनुवाद्यत्वम् अनुवाद्यमविवक्षितं भवति। मानान्तराविषये द्वैताभावेऽनुवाद्यत्वशङ्कैव नास्तीत्यर्थः। तथा च द्वितीयाभावे नेह नानेति श्रुतेर्महातात्पर्यमस्त्येव। तात्पर्याभावे हेत्वभावादित्यर्थः ॥६॥

न, स्वयमेव स्वबोधितमपि द्वितीयाभावं द्वितीयत्वादेव निषेधतीति स्वविरोधादेव श्रुतेस्तत्रातात्पर्यात्; मानविरोधित्वमात्रस्य तात्पर्याभावे प्रयोजकत्वात् स्वविरोधेऽपि न क्षतिः। ननु—एकेनैव प्रमाणेनैकस्य प्राप्तिनिषेधावनुपपन्नौ न रूपभेदेनाविरोधात्। द्वितीयाभावस्वरूपं हि शास्त्रेण प्राप्यते। तस्य च प्राप्यतावच्छेदकरूपं द्वितीयाभावत्वम्। तच्च न निषेध्यतावच्छेदकं किन्तु द्वितीयत्वमेव निषेध्यमात्रानुगतम्। तत्र तदनभ्युपगमे तु न तस्य निषेध्यत्वम्। न वा तेन आत्मनः सद्वितीयत्वापत्तिरिति न कोऽपि दोषः। यत्र तु प्राप्यतावच्छेदकमेव निषेध्यतावच्छेदकं, तत्र प्राप्तिनिषेधशास्त्रयोरतुल्यविषयत्वेऽपि विशेषशास्त्रविषयपरित्यागेन सामान्यशास्त्रप्रवृत्तिः। तुल्यविषयत्वे त्वगत्या विकल्प इति न निषेधस्यासङ्कोचेन प्रवृत्तिः। यथा 'न हिंस्यात्सर्वा भूतानी'ति निषेधशास्त्रस्य 'अग्नीषोमीयं पशुमालभेते'त्यादिप्राप्तिशास्त्रविषयेतरविषयत्वं, अतिरात्रे षोडशिनं गृह्णाति', 'नाति-

---

७—एकमेवाद्वितीयमित्यादिश्रुतेर्द्वितीयाभावे न महातात्पर्यं स्वविरोधादित्याह सिद्धान्ती—न, स्वयमेव स्वबोधितमपि द्वितीयाभावं द्वितीयत्वादेव निषेधति इति स्वविरोधादेव श्रुतेस्तत्र अतात्पर्यात्। मानविरोधित्वमात्रस्य तात्पर्याभावे प्रयोजकत्वात् स्वविरोधेऽपि न क्षतिः। ननु एकेनैव प्रमाणेन एकस्य प्राप्तिनिषेधोऽनुपपन्नो न रूपभेदेन अविरोधात्। द्वितीयाभावस्वरूपं हि शास्त्रेण प्राप्यते। तस्य च प्राप्यतावच्छेदकरूपं द्वितीयाभावत्वम्। तच्च न निषेध्यतावच्छेदकं किन्तु द्वितीयत्वमेव निषेध्यमात्रानुगतम्। तत्र तदनभ्युपगमे तु न तस्य निषेध्यत्वम्। न वा तेन आत्मनः सद्वितीयत्वापत्तिरिति न कोऽपि दोषः। यत्र तु प्राप्यतावच्छेदकमेव निषेध्यतावच्छेदकं तत्र प्राप्तिनिषेधशास्त्रयोरतुल्यविषयत्वेऽपि विशेषशास्त्रविषयपरित्यागेन सामान्यशास्त्रप्रवृत्तिः। तुल्यविषयत्वे तु अगत्या विकल्प इति न निषेधस्य असंकोचेन प्रवृत्तिः। यथा न हिंस्यात् सर्वाभूतानीति निषेधशास्त्रस्य अग्नीषोमीयं पशुमालभेत इत्यादि प्राप्तिः शास्त्रविषयेतर-

रात्रे षोडशिनं गृह्णाती'त्यादिप्राप्तिनिषेधशास्त्रयोस्तु विकल्पेनैकविषयत्वम्, एकस्यैव हिंसात्वस्य षोडशिग्रहत्वस्य च प्राप्तिनिषेधयोरवच्छेदकत्वात्, तत्र निषेधशास्त्रस्यासंकुचद्वृत्तित्वे प्राप्तिशास्त्रस्य सर्वात्मना वैयर्थ्यापत्तिः। प्रकृते च द्वितीयत्वेन रूपेण निषधस्यैव शास्त्रार्थत्वान्न कस्यापि वैयर्थ्यशङ्का ॥७॥

---

विषयत्वम्। अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीत्यादिप्राप्तिनिषेधशास्त्रयोस्तु विकल्पेन एकविषयत्वम् एकस्यैव हिंसात्वस्य षोडशिग्रहत्वस्य च प्राप्तिनिषेधयोरवच्छेदकत्वात्। तत्र निषेधशास्त्रस्य असंकुचद्वृत्तित्वे प्राप्तिशास्त्रस्य सर्वात्मना वैयर्थ्यापत्तिः। प्रकृते च द्वितीयत्वेन रूपेण निषेधस्यैव शास्त्रार्थत्वान्न कस्यापि वैयर्थ्याशङ्का। द्वितीयाभावे मुख्यतात्पर्याभावे हेतुं निर्दिशति—स्वयमेवेति। अद्वैतश्रुतिः द्वैतमात्रं निवारयन्ती द्वैताभावोऽपि यदि अधिकरणातिरिक्तः स्यात् तर्हि सोऽपि द्वैतान्तःपाती सन् अद्वैतश्रुत्यैव निषिध्यते। अतो अद्वैतश्रुतिः स्वयमेव स्वबोधितं द्वितीयाभावमधिकरणातिरिक्तं द्वितीयत्वादेव निषेधति अधिकरणातिरिक्तो द्वितीयाभावोऽपि द्वितीयत्वादेव अद्वैतश्रुत्या निषिध्यते। अतो द्वितीयाभावो अद्वैतश्रुतिप्रतिपाद्योऽपि अद्वैतश्रुत्यैव निषिध्यते अद्वैतश्रुतिनिषेध्यत्वादेव द्वैताभावेऽद्वैतश्रुतेर्मुख्यतात्पर्यं न सम्भवति। मानबाधिते मुख्यतात्पर्यासम्भवादितिभावः। मानबाधस्य तात्पर्याभावज्ञापकत्वात् मानबाधमात्रं तात्पर्याभावज्ञापकं न तु स्वातिरिक्तमानेन बाधः निष्प्रयोजनत्वात् गौरवाच्चेति हृदयम्। स्वबोधितमपि यदि स्वयं बाध्यते तदापि तत् मानबाधितमेव। न च एकेनैव मानेन एकस्य प्राप्तिनिषेधौ अनुपपन्नौ इति वाच्यम्, एकेन मानेन प्राप्तिबाधयोः रूपभेदेन अविरोधात्। प्राप्यतावच्छेदकनिषेध्यतावच्छेदकरूपयोर्भेदात् न विरोध इत्याह—द्वितीयाभावरूपं हि शास्त्रेण प्राप्यते इति। अद्वैतश्रुत्या द्वितीयाभावत्वेन द्वितीयाभावः प्राप्यते बोध्यते इत्यर्थः; शास्त्रप्राप्यता द्वितीयाभावत्वेन अवच्छिद्यते। तच्च द्वितीयाभावत्वं न निषेध्यतावच्छेदकं निषेध्यतावच्छेदकं तु द्वितीयत्वम्। तच्च निषेध्यमात्रेऽनुगतम्। द्वितीयत्वं निषेध्यतासमनियतमित्यर्थः। तत्रेति। तत्र द्वितीयाभावे तदनभ्युपगमे द्वितीयत्वानभ्युपगमे तस्य

द्वितीयाभावस्य न निषेध्यत्वम् । अयम्भावः द्वितीयाभावस्य अधिकरणस्वरूपत्वे तत्र द्वितीयत्वमेव नास्ति, अतो न द्वितीयाभावस्य निषेध्यत्वम् , अधिकरणातिरिक्तरूपत्वे तु तस्य द्वितीयत्वात् निषेध्यत्वमेव । द्वितीयाभावस्य अधिकरणात्मकत्वे तु न तेन द्वितीयाभावेन आत्मनः स द्वितीयत्वम् आत्मस्वरूपत्वादेव द्वितीयाभावस्येति भावः । प्राप्तिनिषेधशास्त्रयोरतुल्यबलत्वे इति सामान्यविशेषभावाद्यापन्नविषयकत्वे इत्यर्थः । विशेषशास्त्रविषयपरित्यागेन सामान्यशास्त्रप्रवृत्तिः । सामान्यविधिरुत्सर्गः विशेषविधिरपवादः अपवादविषयं परित्यज्य सामान्यशास्त्रं प्रवर्तते इति न्यायात् [उत्सर्गोहि प्रवर्तते इति न्यायात्] इति भावः । तुल्यविषयत्वे तु इति सामान्यविशेषभावाद्यनापन्नविषयकत्वे इत्यर्थः । विधिनिषेधशास्त्रयोस्तुल्यबलत्वे तुल्यबलविरोधे विकल्प इति न्यायेन तत्र विकल्पो भवति । पाक्षिकानुष्ठानं भवतीत्यर्थः । न **निषेधशास्त्रस्येति** । सामान्यनिषेधशास्त्रस्य असंकोचेन अपवादविषयम् अपरिहृत्यैव न प्रवृत्तिः । तत्र दृष्टान्तमाह—**यथा न हिंस्यादिति** । सामान्यहिंसामात्रस्य निषेधकं शास्त्रम् अग्नीषोमीयं पशुमालभेत इति विहितहिंसेतरहिंसाविषये प्रवर्तते प्राप्तिनिषेधशास्त्रयोरतुल्यबलत्वात् सामान्यविशेषभावापन्नविषयकत्वात् । प्राप्तिनिषेधशास्त्रयोस्तुल्यबलत्वे विकल्पोक्तः । तत्र दृष्टान्तमाह—**अतिरात्रे इति** । **विकल्पेन एकविषयत्वमिति** । विकल्पेन पाक्षिकानुष्ठानेन एकस्य अतिरात्रस्य सोमसंस्थाविशेषस्य विधिनिषेधोभयसम्बन्धबोधकत्वम् । ग्रहणेऽनुष्ठिते तत् सहितैरङ्गैरुपकारः अननुष्ठिते तद्रहितैरपि उपकारः परन्तु तत्सहिताङ्गोपकृतेन अतिरात्रेण जनिते फले भूमा अस्ति अन्यथा तत्सहिते प्रवृत्त्यनुपपत्तेः इति कल्प्यते इति भावः । एकस्यैव हिंसात्वस्य षोडशिग्रहत्वस्य च इति पूर्वोदाहरणे एकस्यैव हिंसात्वस्य प्राप्तिनिषेधयोरवच्छेदकत्वम् । द्वितीयोदाहरणे षोडशिग्रहत्वस्य प्राप्तिनिषेधयोरवच्छेदकत्वम् । षोडशिग्रहो नाम यस्मिन् सोमग्रहे गृह्यमाणे षोडशसंख्यकानि शस्त्राणि शस्यन्ते स एव ग्रहः षोडशी इति । तत्र निषेधशास्त्रस्येति प्रथमोदाहरणे इति शेषः । निषेधशास्त्रस्य मा हिंस्यादिति शास्त्रस्य असंकुचद्वृत्तित्वे अपवादशास्त्रविषयम् अपरिहृत्यैव सर्वत्र हिंसायां प्रवृत्तत्वे अग्नीषोमीयमिति हिंसाप्राप्तिशास्त्रस्य सर्वात्मना वैयर्थ्यापत्तिः । अस्य प्रपञ्चस्तु "अशुद्धमिति चेन्न शब्दात् [ब्रह्मसूत्रम् ३।१।२५] इति ब्रह्मसूत्रभाष्यभामत्यादौ द्रष्टव्यः । प्रकृते च न कस्यापि वैयर्थ्यमित्याह—**प्रकृते च**

अत एव— द्वितीयाभावनिषेधे पुनर्द्वितीयोन्मज्जनापत्तिरिति— निरस्तम्। उपपादितमेतत् मिथ्यात्वमिथ्यात्वसाधने। यथा प्रतियोग्यभावयोर्निषेध्यतावच्छेदकैक्ये नैकनिषेधेऽपरसत्त्वापत्तिरिति।

न च— स्वेनैव निषिद्धस्य द्वितीयाभावस्य द्वितीयस्येव विशेषणत्वेनोपलक्षणत्वेन वा पुनरुपादानं न युक्तमिति वाच्यम्।

---

इति। अद्वैतश्रुत्या द्वितीयत्वेन रूपेण अवान्तरतात्पर्यविषयीभूतस्य निषेधस्य बोधनात् न कस्यापीति द्वितीयाभावोऽत्र न प्राप्यः तस्यापि द्वितीयत्वेन तत्प्राप्तेरेव तन्निषेधरूपत्वात् द्वितीयसामान्याभावो हि एकः स्वेतरस्येव स्वस्यापि द्वितीयस्य अभाव इति तत्प्राप्तिरपि द्वितीयत्वरूपेण तद्विशिष्टबुद्धौ विरोधिनी तन्निषेध एवेति। निषेधशास्त्रस्यैव तत्प्रापकशास्त्रत्वेन न वैयर्थ्यशङ्कापीति भावः। द्वितीयाभावस्य स्वसमानविरोधेन तात्पर्याविषयत्वात् न तत्सत्यत्वशंकावसरः। प्राप्यतावच्छेदकनिषेध्यतावच्छेदकैक्येविशेषशास्त्रपरित्यागेन सामान्यशास्त्रप्रवृत्तावपि तद्भेदे तदभावेन द्वितीयत्वद्वितीयाभावत्वरूपप्राप्यतावच्छेदकनिषेध्यतावच्छेदकभेदसत्त्वात् न प्रकृते तादृशन्यायप्रसर इति न द्वितीयाभावेतरविषयकत्वमेव निषेधश्रुतेरिति मन्तव्यम्। प्राप्यतावच्छेदकनिषेध्यतावच्छेदकैक्ये प्रदर्शितोदाहरणद्वयं प्रकृते तद्वैलक्षण्यं प्रदर्शयितुम् उदाहरणद्वयम् उपात्तमिति भावः ॥७॥

८—द्वितीयाभावनिषेधे द्वितीयोन्मज्जनापत्तिं परिहरन् आह सिद्धान्ती— **अत एव द्वितीयाभावनिषेधे पुनर्द्वितीयोन्मज्जनापत्तिरिति निरस्तम्। उपपादितमेतत् मिथ्यात्वमिथ्यात्वसाधने। यथा प्रतियोग्यभावयोर्निषेध्यतावच्छेदकैक्ये न एक निषेधे अपरसत्त्वापत्तिरिति।** यत एव प्रकृते प्राप्यतावच्छेदकनिषेध्यतावच्छेदकयोरैक्यम् अत एव प्रतियोग्यभावयोर्निषेध्यतावच्छेदैक्यात् द्वितीयाभावनिषेधेन द्वितीयोन्मज्जनापत्तिः। मिथ्यात्वमिथ्यात्वोपपादनप्रकरणे एव एतत् प्रदर्शितम्। स्वेनैव निषिद्धस्य द्वितीयाभावस्य पुनर्विशेषणत्वादिना उपादानं न युक्तमित्याह पूर्वपक्षी—**न च स्वेनैव निषिद्धस्य द्वितीयाभावस्य द्वितीयस्येव विशेषणत्वेन उपलक्षणत्वेन वा पुनरुपादानं न युक्तमिति वाच्यम्।** स्वेन निषिद्धस्य द्वितीयाभावस्य विशेषणत्वादिना पुनरुपादानं न युक्तमित्यत्र दृष्टान्तमाह—द्वितीयस्येवेति। यथा

अभावबुद्धौ निषिद्धस्यापि प्रतियोगिनः 'सा शुक्तिरि'त्यत्र प्रतिषिद्धस्यापि पूर्वप्रतीतरजतस्योपलक्षणतयोपादानदर्शनात्। असङ्कीर्णज्ञानप्रयोजकत्वस्य प्रकृतेऽपि तुल्यत्वात्। तस्मात् 'एकमेवाद्वितीय'मित्यादिश्रुतिर्विश्वमिथ्यात्वे प्रमाणमिति सिद्धम् ॥८॥

इत्यद्वैतसिद्धौ सामान्येन मिथ्यात्वश्रुत्युपपत्तिः।

---

श्रुत्या निषिद्धं द्वितीयं पुनर्ब्रह्मविशेषणत्वादिना श्रुतिर्नोपादत्ते एव मित्यर्थः। निषिद्धस्यापि प्रतियोगिनः उपलक्षणतया पुनरुपादानदर्शनात् नैवमित्याह सिद्धान्ती—अभावबुद्धौ निषिद्धस्यापि प्रतियोगिनः सा शुक्तिरित्यत्र प्रसिद्धस्यापि पूर्वप्रतीतरजतस्य उपलक्षणतया उपादानदर्शनात्। असंकीर्णज्ञानप्रयोजकत्वस्य प्रकृतेऽपि तुल्यत्वात्। तस्मात् एकमेवाद्वितीयमित्यादिश्रुतिर्विश्वमिथ्यात्वे प्रमाणमिति सिद्धम्। नात्र रजतमिति बुद्धौ निषिद्धस्यापि रजतस्य प्रतियोगिनः सा शुक्तिरित्यत्र उपलक्षणतया उपादानदर्शनात्। ननु सा शुक्तिरित्यत्र रजतस्य तत्पदार्थस्य विशेष्यत्वेन नोपलक्षणत्वं तत्राह—प्रसिद्धस्येति। भ्रमसिद्धस्येत्यर्थः। तथा च सा शुक्तिरिति ज्ञानं रजतभ्रमबाधकत्वेन भ्रमतद्विषयविरोधित्वात् न तद्विशेष्यकम्। तत्पदबोध्यत्वं भ्रमप्रतीतत्वादेव इत्याशयेन पूर्वप्रतीतेत्युक्तम्। उपलक्षणतयेति। विशेष्यीभूतेदन्त्वविशिष्टोपस्थापकत्वे सति अभासमानतया। ननु इयं शुक्तिरितिज्ञानं भ्रमविशेष्येदन्त्वविशिष्टे शुक्तित्वं विषयीकुर्वदेव बाधकं नान्यथा। तत्र विशेष्योपस्थापकतया रजतस्य उपादानम् उपयुज्यते, द्वितीयाभावस्य तु ब्रह्मज्ञाने विशेष्यीभूते ब्रह्मणि किंचिद्धर्मविशिष्टत्वस्य नोपस्थापकत्वं तत्र अभासमानत्वमात्रेण तु नोपलक्षणत्वं तत्राह—असंकीर्णज्ञानेति। व्यावृत्त्याकारं ज्ञानम् असंकीर्णज्ञानम्। तत्प्रयोजकत्वम् उपलक्षणे इव द्वितीयाभावेऽपि तुल्यम्। किञ्चिद्धर्मविशिष्टब्रह्मानुपस्थापकत्वेऽपि शुद्धब्रह्मोपस्थापकत्वात् उपलक्षणतस्या व्यावर्तकत्वस्यापि पूर्वमुक्तत्वात् व्यावृत्त्याकारकधीप्रयोजकत्वेन द्वितीयाभावस्यापि उपयोगः इति भावः ॥८॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यां सामान्येन मिथ्यात्वे श्रुत्युपपत्तिविवरणम्।

## अथ अद्वैतश्रुतेर्बाधोद्धारः

ननु—आपातप्रतिपन्न एव न तावच्छ्रुत्यर्थः। 'कश्छन्दसां योगमावेद धीर' इति श्रुत्या 'बिभेत्यल्पश्रुताद्वेद' इति स्मृत्या च वेदार्थस्यातिगहनतोक्तेः। मीमांसावैयर्थ्यप्रसङ्गाच्च। किन्तु मानान्तरेण पूर्वोत्तरेण चाविरुद्ध एवार्थः; अविरोधग्रहणार्थं च मीमांसासाफल्यम्। अत एव 'आज्यैः स्तुवते', 'आकाशादेव समुत्पद्यन्त' इत्यादावापातप्रतीतघृतगगनादिपरित्यागेनाज्याकाशादिपदानां सामपरमात्माद्यर्थत्वं स्थापितं पूर्वोत्तरमीमांसयोश्चित्राकाशाद्यधिकरणेषु। अन्यथा तत्तत्पूर्वपक्षाभ्युपगमापत्तेः। तथा चोक्तं वार्तिककारैः शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमित्यत्र—

असन्निकृष्टवाचा च द्वयमत्र जिहासितम्।
ताद्रूप्येण परिच्छेदस्तद्विपर्ययतोऽपि च॥

---

१—एकमेवाद्वितीयमित्यादौ अद्वितीयमित्यादिशब्दैः द्वितीयमात्रनिषेधात् श्रुतिर्मिथ्यात्वे मानमिति यदुक्तं सिद्धान्तिना तन्निषेधंर्ति—ननु आपातप्रतिपन्न एवेति। ननु आपातप्रतिपन्न एव न तावत् श्रुत्यर्थः। कश्छन्दसां योगमावेदधीर इति श्रुत्या विभेत्यल्पश्रुताद् वेद इति स्मृत्या च वेदार्थस्य अतिगहनतोक्तेः। मीमांसावैयर्थ्यप्रसङ्गाच्च। किन्तु मानान्तरेण पूर्वोत्तरेण च अविरुद्ध एवार्थः अविरोधग्रहणार्थं च मीमांसाफल्यम्। अत एव आज्यैः स्तुवते, आकाशादेव समुत्पद्यन्ते इत्यादौ आपातप्रतीतघृतगगनादिपरित्यागेन आज्याकाशादिपदानां सामपरमात्माद्यर्थत्वं स्थापितं पूर्वोत्तरमीमांसायाश्चित्राकाशाद्यधिकरणेषु अन्यथा तत्तत्पूर्वपक्षाभ्युपगमापत्तेः। तथा चोक्तं वार्तिककारैः शास्त्रं शब्दविज्ञानात् असन्निकृष्टे अर्थे विज्ञानम् इत्यत्र—

असन्निकृष्टवाचा च द्वयमत्र जिहासितम्।
ताद्रूप्येण परीच्छेदस्तद्विपर्ययतोऽपि च॥

विषयाविषयौ ज्ञात्वा तेनोत्सर्गापवादयोः ।
बाधाबाधौ विवेक्तव्यौ न तु सामान्यदर्शनात् ॥
अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते ।
अन्यस्तु परिपूर्णेन समस्याङ्गोपसंहृतौ ॥ इति ।

अन्यत्राप्युक्तम्—

'विरुद्धवत्प्रतीयन्त आगमा यत्र ये मिथः ।
तत्र दृष्टानुसारेण तेषामर्था विवक्षिताः ॥' इति ।

तथा च प्रत्यक्षादिविरोधात् पूर्वोत्तरविरोधाच्च नाद्वैतपरत्वमेकमेवेत्यादिवाक्यानामिति—चेत् ॥१॥

---

विषयाविषयौ ज्ञात्वा तेनोत्सर्गापवादयोः ।
बाधाबाधौ विवेक्तव्यौ न तु सामान्यदर्शनात् ॥
अन्यत्र वैकदेशेन शास्त्रस्यार्थः प्रतीयते ।
अन्यस्तु परिपूर्णेन समस्ताङ्गोपसंहृतौ ॥ इति ।

अन्यत्राप्युक्तम्—

विरुद्धवत् प्रतीयन्ते आगमा यत्र ये मिथः ।
तत्र दृष्टानुसारेण तेषामर्था विवक्षिताः ॥ इति

तथा च प्रत्यक्षादिविरोधात् पूर्वोत्तरविरोधाच्च नाद्वैतपरत्वमेकमेवेत्यादि वाक्यानामिति चेत् । अद्वैतश्रुतेरापातप्रतिपन्नोऽर्थो न श्रुतितात्पर्यविषयीभूतः योऽर्थः आपातप्रतिपन्नः सिद्धान्तिना अङ्गीक्रियते नासौ श्रुत्यर्थः यतः श्रुतिरेव श्रुत्यर्थस्य अतिगहनत्वं दर्शयति कश्छन्दसामिति । ऋक्संहितायामष्टमे अष्टके षष्ठाध्याये सप्तदशवर्गे इयं ऋक् आम्नाता । अत्र माधवीयभाष्यम्—धीरो धीमान् कः मानुषः च्छन्दसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना योगम् आवेद आजानाति वेद तात्पर्यस्य दुर्ज्ञेयत्वम् अनया ऋचा बोध्यते ।

तथा— इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥ इति

महाभारतीयस्मृत्या च [महा० भा० १।२६७ श्लो०] वेदार्थस्य अतिगहनत्वोक्तेः । वेदस्य आपातप्रतिपन्नार्थ एव यदि वेदतात्पर्यविषयीभूतः तर्हि पूर्वो-

त्तरमीमांसाया वैयर्थ्यमेव । किन्तु योऽर्थः मानान्तरेण न विरुद्ध्यते न वा उपक्रमोपसंहाराभ्यां विरुद्धयते स एव वेदार्थः । मानान्तरेण स्ववाक्येन च अविरोधग्रहणार्थं मीमांसायाः साफल्यम् । अत एव "आज्यैः स्तुवते" इति वेदवाक्ये आज्यपदस्य घृतरूपम् आपातप्रतिपन्नमर्थं परित्यज्य सामरूपोऽर्थः स्तोत्ररूप इति यावत् पूर्वमीमांसायाः प्रथमाध्याये चतुर्थपादे चित्राधिकरणे व्यवस्थापितः । तथा सर्वाणि ह वा इमानिभूतानि आकाशादेव समुत्पद्यन्ते [छान्दो० १।९।१] इति श्रुतिवाक्ये आकाशशब्दो भूताकाशपरः परमात्मपरो वेति सन्देहे प्रसिद्धभूताकाशपर इति पूर्वपक्षे प्राप्ते आकाशस्तल्लिङ्गादिति [ब्रं० सू० १।१।२२] इत्यधिकरणेऽयमाकाशशब्दः परमात्मपर एवेति व्यवस्थापितः । अन्यथा आपातप्रतीतस्यैव श्रुत्यर्थत्वे चित्राकाशाधिकरणीयपूर्वपक्ष एव श्रेयान् आपद्येत । शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमिति शावरभाष्यवाक्यम् [मी० सू० १।१।५] तद्व्याचक्षाणेन वार्तिककृता उक्तम्—असन्निकृष्टवाचा च इति । वस्तुतः ज्ञातसम्बन्धस्यैकदेशदर्शनात् एकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिरनुमानमिति [मी० सू० १।१।५] अनुमानलक्षणभाष्यव्याख्यानावसरे वार्तिकेऽसन्निकृष्टवाचा च इत्याद्युक्तं न तु शास्त्रलक्षणभाष्यव्याख्यानावसरे तथापि तुल्यन्यायत्वात् तत्रापि तत्सम्बद्धयते असन्निकृष्ट इत्यनेन प्रमाकरणत्वं विवक्षितम् । प्रमायाञ्च शाब्दत्वं शब्दप्रमाणलक्षणेऽनुमितित्वम् अनुमानलक्षणे प्रविष्टम् इति परं विशेषः इत्याशयेन शास्त्रलक्षणोऽपि तदुक्तमित्यभिहितम् । वस्तुतस्तु न्यायामृतानुवादोऽयं नाचार्यस्य स्वारसिकाभिप्रायविषयः इति बोध्यम् । वार्तिकवाक्यस्य अयमर्थः—येन रूपेण वाक्यबोध्यता तेन रूपेण पूर्वप्रमितत्वं तद्विपरीतरूपेण च प्रमितत्वं जिहासितम् अभावविशेषणतया शब्दप्रमाणलक्षणे प्रविष्टमित्यर्थः । तथा च मानान्तरेण अप्रमितम् अबाधितं यत् तद्विषयवाक्यत्वं शास्त्रत्वमिति पर्यवसितम् । तथा च विरुद्धार्थवर्णने विपरीतप्रमाजनकत्वप्राप्त्या शास्त्रत्वं न स्यादिति भावः । पूर्वोत्तराविरुद्ध एव अर्थो वर्णनीय इत्यत्र वाक्यान्तरं पठति विषयाविषयौ ज्ञात्वेति । ननु मयापि एकमेव इत्यादेर्मानान्तराविरुद्ध एव अर्थो वर्ण्यते इति चेत् तत्राह—**तथा च प्रत्यक्षादिविरोधादिति** । एकमेवेत्यादिश्रुतेर्द्वितीयमात्रनिषेधेन मिथ्यात्वार्थकत्वेन सन्घटः घटपटौ भिन्नौ इत्यादिप्रत्यक्षविरोधः । विषयाविषयौ ज्ञात्वेति पद्यं स्मृति-

न, द्वैतप्रत्यक्षस्य चन्द्रप्रादेशिकत्वप्रत्यक्षवत् संभाविताप्रामाण्यतया अद्वैतश्रुतिविरोधित्वाभावात्। यथा च श्रुत्या प्रत्यक्षं बाध्यते, तथा प्रपञ्चितमधस्तात्। किं च प्रत्यक्षं नियतविषयम्, श्रुतिः सर्वविषया; तथा च यत्र प्रत्यक्षेण भेदो न गृहीतः, तत्रैवाभेदश्रुतेरवकाशः।

---

पादवार्त्तिके द्वितीयाधिकरणस्थम्; अन्यपद्यद्वयमपि स्मृतिपादीयवार्त्तिकस्थम्। वार्तिकवाक्यानामर्थः स्पष्टः। अद्वैतश्रुतेर्यथा प्रत्यक्षादिविरोधित्वमेवं पूर्वापरविरोधित्वमपि इत्याह—**पूर्वोत्तरविरोधाच्चेति**—छान्दोग्योपनिषदि षष्ठाध्याये द्वितीयखण्डे एकमेवाद्वितीयमित्याम्नायते। अस्मिन्नेवाध्याये प्रथमखण्डे—मृत्तिकेत्येव सत्यं, लोहमित्येव सत्यं, कृष्णायसमित्येव सत्यमित्यादिवाक्यैर्द्वैतसत्यत्वप्रतिपादनात् पूर्वोत्तरविरोधः स्पष्ट एव इति भावः। अद्वितीयश्रुतेरनन्तरमपि चतुर्थे खण्डे त्रीणिरूपाणीत्येव सत्यमिति पौनःपुन्येन श्रूयते अतोऽद्वैतश्रुतिः पूर्वापरविरोधिन्येव ॥१॥

२—मानान्तरेण यथा नाद्वैतश्रुतेर्विरोधस्तथा प्रदर्शयन् समाधत्ते सिद्धान्ती—न, द्वैतप्रत्यक्षस्य चन्द्रप्रादेशिकत्वप्रत्यक्षवत् सम्भाविताप्रामाण्य तया अद्वैतश्रुतिविरोधित्वाभावात्। यथा च श्रुत्या प्रत्यक्षं बाध्यते तथा प्रपञ्चितमधस्तात्। किञ्च प्रत्यक्षं नियतविपयं श्रुतिः सर्वविषया तथा च यत्र प्रत्यक्षेण भेदो न गृहीतः तत्रैवाभेदश्रुतेरवकाशः। अखण्डचैतन्यावरकाविद्यादोपयुक्तत्वात् द्वैतग्राहिप्रत्यक्षमात्रं सम्भाविताप्रामाण्यकं यथा चन्द्रप्रादेशिकत्वग्राहिप्रत्यक्षम्। सदोपतया सम्भाविताप्रामाण्यस्य द्वैतग्राहिप्रत्यक्षस्य निर्दोपाद्वैतश्रुतिविरोधित्वाभावात्। यथा च निर्दोषश्रुत्या सदोषप्रत्यक्षं बाध्यते तथा प्रपञ्चितमधस्ताव, प्रत्यक्षस्य आगमबाध्यत्वप्रकरणे। किञ्च प्रत्यक्षमिन्द्रियसन्निकर्षजन्यतया नियतविषयमतो द्वैतग्राहिप्रत्यक्षमल्पविपयम्। अद्वैतश्रुतिः सर्वद्वैताभावविषया, तथा च नियतविपयद्वैतप्रत्यक्षेण यत्र भेदो न गृहीतः तत्र विरोधिप्रत्यक्षाभावात् निर्बाधा अभेदश्रुतिः भेदं निषेधन्ति प्रवर्तते। अतो न प्रत्यक्षविरोधात् अद्वैतश्रुतेरन्यथानयनमितिभावः।

प्रत्यक्षाप्रसक्तं चेत् अप्रसक्तनिपेधता।
श्रुतेस्स्यात् तत्प्रवृत्त्यं चेत् तद्बाधः सुस्थिरः श्रुतेः॥

ननु—ययोरैक्यं श्रुत्या बोध्यते तयोर्भेदः प्रसक्तो न वा? नान्त्यः, अप्रसक्तप्रतिषेधापातात्। नाद्यः; प्रसञ्जकप्रमाणविरोधेनैक्यस्य बोधयितुमशक्यत्वादिति—चेत्। न, अन्त्यपक्षाभ्युपगमे दोषाभावात्। अप्रसक्तप्रतिषेध इति च किमप्रसिद्धप्रतियोगित्वं, किं वा निष्प्रयोजनत्वमिति विवेचनीयम्। नाद्यः, अन्यत्र प्रसिद्धस्यैव भेदस्य भेदत्वेनोपस्थितस्य परस्परप्रतियोग्यनुयोगिभावेनान्यत्र निषेधसंभवात्। न च तत्रैव प्रसिद्धिस्तन्तम्; निषेधप्रमामात्रोच्छेदप्रसङ्गात्। न द्वितीयः; अनर्थनिवृत्तेरेव प्रयोजनत्वात्। 'नान्तरिक्षेऽग्निश्चेतैव्य' इत्यादौ स्तुतिमात्रप्रयोजनेनापि अप्रयोजनेनापि अप्रसक्तनिषेधदर्शनाच्च ॥२॥

---

इति रीत्या अद्वैतश्रुतेरप्रसक्तप्रतिषेधता वा प्रत्यक्षबाधो वा अद्वैतश्रुतेः स्यादित्याशङ्कते—ननु ययोरैक्यं श्रुत्या बोध्यते तयोर्भेदः प्रसक्तो न वा? नान्त्यः, अप्रसक्तप्रतिषेधापातात्। नाद्यः, प्रसञ्जकप्रमाणविरोधेन ऐक्यस्य बोधयितुमशक्यत्वात् इति चेत्। प्रत्यक्षादिप्रसक्तो हि भेदः नेह नानेति श्रुत्या निषेध्यः। अन्यथा अप्रसक्तप्रतिषेधापातात् प्रसक्तं हि प्रतिषिध्यते इति न्यायात्। तथा च यत्र यत्र अद्वैतश्रुतिस्तिष्ठासति तत्र तत्र प्रागेव प्रत्यक्षादिना भेदो ग्राह्यः इति कथं यामिकगृहे चौर इव श्रुतिस्तत्र तिष्ठेत् इति भावः। अप्रसक्तप्रतिषेधाभ्युपगमेऽपि दोषाभावादित्याह सिद्धान्ती—न, अन्त्यपक्षाभ्युपगमे दोषाभावात्। अप्रसक्तप्रतिषेध इति च किमप्रसिद्धप्रतियोगित्वं किं वा निष्प्रयोजनत्वमिति विवेचनीयम्। नाद्यः, अन्यत्र प्रसिद्धस्यैव, भेदस्य भेदत्वेनोपस्थितस्य परस्परप्रतियोग्यनुयोगिभावेन अन्यत्र निषेधसम्भवात्। न च तत्रैव प्रसिद्धिस्तन्त्रं निषेधप्रमात्रोच्छेदप्रसंगात्। न द्वितीयः, अनर्थनिवृत्तेरेव प्रयोजनत्वात्। नान्तरिक्षे अग्निश्चेतव्य इत्यादौ स्तुतिमात्रप्रयोजनेनापि [अप्रयोजनेनापि] अप्रसक्तनिषेधदर्शनाच्च। आद्यपक्षे भेदप्रसञ्जकप्रत्यक्षादिमानं बलवत्या अद्वैतश्रुत्या बाध्यते इत्यस्य पूर्वमेव उपपादितत्वात्। अन्त्यपक्षाभ्युपगमेऽपि दोषाभावं प्रदर्शयितुम् अन्त्यपक्षाभ्युपगमेऽपि इत्युक्तं मूले। अप्रसक्तप्रतिषेधापत्तेरिति पूर्वपक्षिणा यदुक्तं तस्य कोऽर्थः? अप्रसिद्धप्रतियोगिकत्वं वा? निष्प्रयोज-

अथ श्रुत्या ययोरभेदो बोध्यते तयोरुपस्थितिरस्ति न वा ? नान्त्यः; अनुपस्थितयोरभेदबोधनायोगात्। आद्ये सा किं श्रुतिजन्या, प्रत्यक्षादिजन्या वा ? नाद्यः, श्रुतेर्मानान्तरागोचराभेदमात्रपरत्वेन घटाद्युपस्थितेस्तज्जन्यत्वाभावेन सर्वाद्वैतासिद्धेः, श्रुतिस्थकिंचने-

---

नकत्वं वा ? नाद्यः, श्रुत्या यस्मिन् अधिकरणे भेदो निषिध्यते तदधिकरणादन्यत्र अधिकरणे प्रसिद्धस्य प्रतीतस्य भेदस्य भेदत्वेन निषेधकाले उपस्थितस्य ज्ञायमानस्य अन्यत्र तस्य निषेध सम्भवात् भेदो हि परस्परानुयोगिप्रतियोगिभावेन प्रतीयते, येन रूपेण प्रतीयते तेनैव रूपेण निषिध्यते इति बोधयितुं परस्परप्रतियोग्यनुयोगिभावेन इत्युक्तं मूले। न च अन्यत्र प्रसिद्धस्य अन्यत्र निषेधे अप्रसक्तप्रतिषेध एव, यत्र निषेधः तत्रैव निषेध्यप्रसक्तिर्वक्तव्या इति वाच्यं, निषेधप्रमोच्छेदप्रसङ्गादिति। अयम्भावः यत्र निषेधः तत्रैव निषेध्यप्रसक्तोऽङ्गीक्रियमाणायां सा प्रसक्तिः भ्रमरूपा वा प्रमारूपा वा वाच्या। आद्ये निषेधसिद्धौ एव तत्र निषेध्य-प्रसक्तिर्भ्रमरूपा भवितुमर्हति। निषेधे सिद्धे पुनर्निषेधप्रतिपादनं व्यर्थमेव। द्वितीये निषेध्यप्रमैव निषेधबाधिका इति निषेधप्रमा उच्छिद्येत। एतेन निषेध्यस्य आहार्य प्रसक्तिरतन्त्रमित्यपि निरस्तम्। प्रसक्तेराहार्यत्वाय निषेधस्य प्राक्सिद्धिरभ्युपगन्तव्या अन्यथा प्रसक्तेराहार्यत्वमेव न स्यात्। निषेधसिद्धौ पुनर्निषेधप्रतिपादनं व्यर्थमेव। अप्रसक्तप्रतिषेधे निष्प्रयोजनत्वमिति द्वितीपक्षोऽपि न सङ्गच्छते इत्याह—न द्वितीय इति। तत्राप्रसक्तस्यापि निषेधे अनर्थनिवृत्तेः प्रयोजनस्य सत्त्वात्। द्वितीयाद्वै भयं भवतीति श्रुतेर्द्वितीयनिवृत्त्या भयनिवृत्तिरनर्थनिवृत्तिरित्यर्थः। मीमांसाप्रथमाध्याये द्वितीयपादे भाष्ये चिन्तितम्—अन्तयोर्यथोक्तम्—[मी० सू० १।२।१८] न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीति। हिरण्यं निधाय चेतव्यमित्याकाङ्क्षितत्वात् अस्य विधेः शेषः। पृथिव्यादीनां निन्दा हिरण्यस्तु-त्यर्थाः। असति प्रसङ्गे प्रतिषेधो नित्यानुवादः। यथा पृथिव्यन्तरिक्षादौ अप्रसक्तस्य अग्निचयनस्य निषेधस्तथा प्रकृतेऽपीति भावः ॥२॥

२—श्रुत्या सर्वाद्वैतसिद्धिर्न भवितुमर्हतीति पूर्वपक्षी शङ्कते—अथ श्रुत्या ययोरभेदो बोध्यते तयोरुपस्थितिरस्ति न वा ? नान्त्यः, अनुपस्थित-योरभेदबोधनायोगात्। आद्ये सा किं श्रुतिजन्या प्रत्यक्षादिजन्या

त्यादिपदानामनुवादकत्वाभ्युपगमात् । द्वितीये तु तयोर्भेदोऽपि प्रत्यक्षादिसिद्ध इति क्वाद्वैतश्रुत्यवकाशः ?

मैवम्; यत् प्रत्यक्षादिना गृह्यते, तद्भेदोऽपि तेन गृह्यत एवेति नियमाभावात् । तथा हि—न तावत्पदार्थस्वरूपज्ञानमेव भेदज्ञानम्; अभेदभ्रमोच्छेदप्रसङ्गात् । स्वरूपभेदवादिनामपि स्वरूपज्ञानात् घटत्वादिप्रकारकात् भेदत्वप्रकारकं भेदज्ञानं विलक्षणमेव । अन्यथा भेदाग्रहनिबन्धनव्यवहारानुदयप्रसङ्गात् । अत एव स्वरूपज्ञानोत्तरकालमवश्यं भेदज्ञानमित्यपि न; अनवस्थाप्रसङ्गाच्च । तथा हि—घटपटौ भिन्नौ जानामीति घटपटभेदधीः स्वप्रकाशा वा ? अनुव्यवसायसिद्धा

---

वा ? नाद्यः, श्रुतेर्मानान्तरागोचराभेदमात्रपरत्वेन घटाद्युपस्थितेस्तज्जन्यत्वाभावेन सर्वाद्वैतासिद्धेः । श्रुतिस्थ किञ्च नेत्यादि पदानाम् अनुवादकत्वाभ्युपगमात् । द्वितीये तु तयोर्भेदोऽपि प्रत्यक्षादिसिद्ध इति क्व अद्वैतश्रुत्यवकाशः ? श्रुत्या ययोर्घटपटयोरभेदो बोध्यते तयोर्घटपटयोरुपस्थितिरस्ति न वेति ? नान्त्यः, अनुपस्थितयोर्घटपटयोरभेदबोधनासम्भवात् । अतस्तयोरुपस्थितिर्वक्तव्या । साप्युपस्थिति किं श्रुत्या प्रत्यक्षादिना वा ? न श्रुत्या, श्रुतेः प्रामाण्याय मानान्तरागोचराभेदमात्रप्रतिपादकत्वेन घटपटाद्युपस्थितेः श्रुतिजन्यत्वाभावात् । श्रुत्यनुपस्थाप्ये घटपटादौ श्रुत्या अभेदबोधनासम्भवेन न श्रुत्या सर्वाद्वैतसिद्धिः । यदि नेह नास्ति किञ्चनेति श्रुतिस्थकिञ्चनशब्देन घटादीनामुपस्थितिः कल्प्येत, तन्न सम्भवति, तथैव श्रुतिस्थकिञ्चनेति पदानामनुवादकत्वाभ्युपगमात् । अतः प्रत्यक्षादिभिरेव घटपटाद्युपस्थितिरङ्गीकर्त्तव्या प्रत्यक्षादिभिर्घटपटयोरुपस्थितौ तयोर्भेदोऽपि तैरेव सिद्ध्यतीति क्व अद्वैतश्रुतेरवकाशः ? प्रत्यक्षादिभिर्धर्मिणोः सिद्धावपि तयोर्भेदोऽपि न तैरेव सिद्ध्यतीति समाधत्ते सिद्धान्ती—मैवं, यत् प्रत्यक्षादिना गृह्यते तद्भेदोऽपि तेन गृह्यते एव इति नियमाभावात् । तथा हि—न तावत् पदार्थ स्वरूपज्ञानमेव भेदज्ञानम्, अभेदभ्रमोच्छेदप्रसंगात् । स्वरूपभेदवादिनामपि स्वरूपज्ञानात् घटत्वादिप्रकारकात् भेदत्वप्रकारकं भेदज्ञानं विलक्षणमेव । अन्यथा भेदाग्रहनिबन्धनव्यवहारानुदयप्रसंगात् । अत एव स्वरूपज्ञानोत्तरकालम्

वा ? साक्षिसिद्धा वा ? न स्वप्रतियोगिकभेदविषया; प्रतियोगिधीजन्यत्वनियमेन प्रतियोगिधीव्यक्तिभिन्नव्यक्तित्वावश्यकत्वात्। स्वस्या एव स्वजन्यत्वानुपपत्तेः ज्ञानान्तरेण च तद्भेदग्रहे क्वचित् भेदधीधाराविश्रान्तिरवश्यं वाच्या; अन्यथा सुषुप्तिविषयान्तरसञ्चारादिकं न स्यात्। अतः तत्रापि चरमभेदधीरेवोदाहरणम्। तथा च बाधकत्वाभिमता या घटपटभेदधीः स्वभेदाविषया भासते, तया सह बाध्यत्वाभिमतायाः ऐक्यधिय ऐक्यं बोधयित्वा निर्बाधा सती श्रुतिः सर्वाभेदे पर्यवस्यति। नह्यभेदेऽपि बाध्यबाधकभावः; स्वस्यापि स्वबाधकतापत्तेः। तदुक्तं खण्डनकृद्भिः—

सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा।
निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥ इति ॥३॥

---

अवश्यं भेदज्ञानमित्यपि न अनवस्थाप्रसंगाच्च। तथा हि घटपटौ भिन्नौ जानामीति घटपटभेदधीः स्वप्रकाशा वा ? अनुव्यवसायसिद्धा वा?, साक्षिसिद्धा वा ? न, स्वप्रतियोगिकभेदविषया, प्रतियोगिधीजन्यत्वनियमेन प्रतियोगिधीव्यक्तिभिन्नव्यक्तित्वावश्यकत्वात्। स्वस्य एव स्वजन्यत्वानुपपत्तेः। ज्ञानान्तरेण च तद्भेदग्रहे क्वचित् भेदधीधाराविश्रान्तिरवश्यं वाच्या। अन्यथा सुषुप्तिविषयान्तर सञ्चारादिकं न स्यात्। अतस्तत्रापि चरमभेदधीरेवोदाहरणम्। तथा च बाधकत्वाभिमता या घटपटभेदधीः स्वाभेदविषया भासते तया सहबाध्यत्वाभिमताया ऐक्यधियः ऐक्यं बोधयित्वा निर्बाधा सति श्रुतिः सर्वाभेदे पर्यवस्यति। न हि अभेदे बाध्यबाधकभावः स्वस्यापि स्वबाधकतापत्तेः। तदुक्तं खण्डनकृद्भिः—

सुदुरधावनश्रान्ता बाधबुद्धिपरम्परा।
निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥ इति।

[खण्डनखण्डखाद्यम्—१५९]

येन प्रमाणेन यद्वस्तु गृह्यते तेनैव प्रमाणेन तन्निष्ठभेदोऽपि गृह्यते सोऽपि भेदः अर्थात् अन्यप्रतियोगिकः। तथा च वस्तुज्ञानमेव भेदवत् वस्तुज्ञानमिति नियमो नास्ति। कुतो नास्ति—भेदः स्वरूपं वा ? इतरेतराभावो वा ?

धर्मान्तरं वा ? न प्रथमः इत्याह—न तावत् पदार्थस्वरूपज्ञानमेव भेदज्ञानं कुतो न इत्याह—अभेदभ्रमोच्छेदप्रसंगादिति । इदन्त्वेन शुक्तिस्वरूपज्ञानमेव यदि रजतादिप्रतियोगिकभेदज्ञानं तर्हि इदमि रजतात् भेदग्रहे रजताभेदभ्रमो न स्यात् । भेदग्रहस्य अभेदग्रहविरोधित्वादिति । उक्तञ्च—

सापेक्षत्वात् सावधेश्च तत्त्वेऽद्वैतप्रसङ्गतः ।
एकाभावात् असन्देहात् न रूपं वस्तुनो भिदा ॥ इति ।

[तत्त्वप्रदीपिकायां द्वितीयपरिच्छेदे, पृ० १९६] । स्वरूपभेदवादिनां प्रभाकरार्कबन्धुप्रभृतीनां घटत्वादिरूपेण घटादिस्वरूपज्ञानात् भेदत्वेन भेदज्ञानं विलक्षणमेव सम्मतम् । अन्यथा वस्तुस्वरूपे गृहीते एव यदि तन्निष्ठभेदोऽपि गृहीतः स्यात् तर्हि अख्यातिवादिमते भेदाग्रहात् व्यवहारः इति न स्यात् । वस्तुस्वरूपे गृहीते भेदाग्रहस्यैवासम्भवात् । स्वरूपभेदपक्षं निरस्य धर्मभेदपक्षं निरस्यति । स्वरूपज्ञानोत्तरकालम् अवश्यं भेदज्ञानमित्यपि न इति । भेदः स्वरूपात् भिन्नोऽपि स्वरूपे ज्ञाते अवश्यं भेदो गृह्यते इति नियमोऽपि नास्ति । कुत इति चेत्, अनवस्था प्रसङ्गादिति । अनवस्थाप्रसङ्गमेव दर्शयति—तथा हीति । घटपटौ भिन्नौ जानानीत्यनुभवः सर्वसम्मतः एषा घटपटभेदधीः स्वप्रकाशेति प्रभाकरमते, अनुव्यवसायसिद्धेति नैयायिकमते, साक्षिसिद्धेति अद्वैतवादिमते । सर्वेषामपि मते एषा भेदविषयिणी धीः न स्वप्रतियोगिकभेदविषया, भेदधियः प्रतियोगिधीजन्यत्वात् प्रतियोगिज्ञानभेदज्ञानयोर्भिन्नकालीनत्वात् ; घटपटभेदविषयकं ज्ञानं न स्वप्रतियोगिकभेदमपि विषयीकर्तुमर्हति । प्रतियोगिज्ञानजन्यत्वात् भेदज्ञानस्य । तथा च घटपटौ भिन्नौ जानामीति धीः घटपटभेदविषयिण्यपि घटपटतद्भेदेषु ज्ञानान्तरेषु च स्वप्रतियोगिकभेदमनवगाहमाना एव उदेति प्रथमभेदधीः स्वप्रकाशापि स्वप्रतियोगिकं भेदं नावगाहते । भेदज्ञानस्य प्रतियोगिज्ञानभिन्नज्ञानव्यक्तित्वस्य आवश्यकत्वात् भेदज्ञानस्य प्रतियोगिज्ञानोत्तरकालीनत्वात् । स्वप्रतियोगिकभेदानवगाहने यामिकगृहे चौरः कथं तिष्ठेदिति यदुक्तं तदत्रैव यामिकः सुषुप्तौ कथमत्र अद्वैतश्रुतिं निवारयेत् । अत्र अनिवारिता अद्वैतश्रुतिः भेदभिया सार्द्धं घटपटभेदानां ज्ञानान्तराणाञ्च ऐक्यं बोधयन्ती सर्वाद्वैते पर्यवस्यति । स्वप्रतियोगिकभेदधीः स्वजन्या न भवितुमर्हति । स्वस्य स्वजन्यत्वाभावात् । अतः

न च—सिद्धान्ते घटतद्धीभेदग्राहिणा स्वप्रकाशेन साक्षिणा स्वास्मिन्नितरभेदस्यापि ग्रहणान्नानवस्था, अन्यथा स्वस्य घटादिभ्योऽभेदसंशयः स्यादिति—वाच्यम् ।

---

ज्ञानान्तरेण स्वप्रतियोगिकभेदग्रहे वक्तव्ये, ज्ञानान्तरमपि स्वप्रतियोगिकभेदं स्वज्ञेये न विषयीकरोतीति तत्रापि अद्वैश्रुतिर्निराबाधा । तस्यापि भेदस्य ग्रहाय ज्ञानान्तरं कल्पयसि चेत् , तदपि ज्ञानान्तरं स्वप्रतियोगिकं भेदं न विषयीकर्तुमर्हति इति तत्रापि अद्वैतश्रुतिर्निराबाधा । अद्वैतश्रुतेः प्रसरनिरोधाय भेदधीधाराभ्युपगमेऽपि क्वचित् धीधाराया विश्रान्तिर्वक्तव्या । अन्यथा सुषुप्त्याद्यनुपपत्तेः । अतो यत्र भेदधीधाराया विश्रान्ति सा चरमभेदधीरेवोदाहरणम् । सा धीः स्वप्रतियोगिकभेदमनवगाहमानैव उदेतीति अवश्यं स्वीकार्यम् । यतो न स्वप्रतियोगिकभेदज्ञानं स्वज्ञानजन्यम् । न हि जन्यं जनकं च एकमेव भवितुमर्हति । तथा च अद्वैतश्रुतेर्बाधकत्वेनाभिमता या घटपटभेदधीः स्वप्रतियोगिकभेदाविषया भासते तया बाधकधिया सह बाध्यत्वाभिमताया ऐक्यधियः ऐक्यं बोधयित्वा अद्वैतश्रुतिः निर्बाधो सति सर्वभेदे पर्यवस्यति । न हि बाध्यबाधकधियोरैक्ये बाध्यबाधकभावः सम्भवति; तथात्वे स्वस्यापि स्वबाधकत्वापत्तेरिति । एतत्सर्वं खण्डनोक्तरीतिमवलम्ब्य मूलकृतोक्तम् । अतः खण्डनपद्यमेव पठति—**सुदूरधावनश्रान्तेति** । खण्डनपद्यस्यायमर्थः—बाधबुद्धिपरम्परानवस्थाभयात् कस्यांचित्कक्षायां निवृत्तौ सत्यामद्वयाऽऽम्नायैः पार्ष्णिग्राहस्थानीयैर्विजीयते । सुदूरधावनश्रान्ताभूरिकक्षानुसरणालसा इति यावत् । विजिगीषो पृष्ठभागे क्रमशः पार्ष्णिग्राहस्ततः पश्चात् आक्रन्द तदनन्तरम् आसारश्चेति शास्त्रात् विजिगीषोः अव्यवहितपृष्ठवर्ती शत्रुः पार्ष्णिग्राहनाम्ना उच्यते । यथा लोके कश्चित् विजिगीषुः दूरे प्रस्थितः परवाहिनीर्विजित्य निवृत्तौ पार्ष्णिग्राहैर्विजीयते तथाबाधाबुद्धिपरम्परा अद्वैतबुद्धिपरम्परा जयाय दूरं प्रस्थिता अनवस्थाना क्वचिन्निवृत्तौ पार्ष्णिग्राहैरद्वैताम्नायैर्विजीयते ॥३॥

४—स्वप्रकाशेन साक्षिणा घटतद्धियोर्भेदग्रहात् नाद्वैतश्रुतेः प्रवृत्तिः सम्भवति; साक्षिप्रत्यक्षविरोधादिति शङ्कते पूर्वपक्षी—न च सिद्धान्ते घटतद्धीभेदग्राहिणा स्वप्रकाशेन साक्षिणा स्वस्मिन् इतरभेदस्यापि ग्रहणान्नानवस्था

साक्षिणः स्वप्रकाशत्वेऽपि स्वनिष्ठेतरप्रतियोगिकभेदग्रहे इतर-प्रतियोग्युपस्थितिसापेक्षत्वात् । अन्यथा स्वस्यान्तःकरणाद्यभेदविभ्रमो न स्यात् । स्वप्रकाशेन भेदाग्रहेऽपि मानान्तरेण भेदग्रहाद । न घटाद्य-भेदसंशय इति न किंचिदेतत् । स्यादेतत्—घटपटौ भिन्ना'विति

---

अन्यथा स्वस्य घटादिभ्योऽभेदसंशयः स्यादिति वाच्यम् । सिद्धान्ते वृत्तिज्ञानस्य साक्षिभास्यत्वात् विषयेण सहैव वृत्तिज्ञानं साक्षिणा भास्यते । उक्तञ्च विवरणे—सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एवेति । तथा च यथा वृत्तिविषययोर्भासकः साक्षित्वयोर्भेदमपि भासयति । एवमेव स्वस्मिन् साक्षिणि स्वेतरभेदस्यापि साक्षिणैव ग्रहणात् न भेदग्रहणपरम्परया अनवस्था । एवमनङ्गीकारे स्वस्मिन् साक्षिणि घटादिभ्योऽभेदसंशयः स्यात् । तथा च अनिष्ट-प्रसङ्गभयात् साक्षिणि इतरभेदस्यापि साक्षिणैव ग्रहणं वाच्यं; तथा च न अन-वस्था इति । स्वनिष्ठेतरप्रतियोगिकभेदग्रहे इतरस्य प्रतियोगिनः उपस्थितिर्वक्त-व्याः, अन्यथा अनुपस्थितप्रतियोगिकभेदग्रहस्यासम्भवात् ।

नैवमिति परिहरति सिद्धान्ती—साक्षिणः स्वप्रकाशत्वेऽपि स्वनिष्ठे-तरप्रतियोगिकभेदग्रहे इतरप्रतियोग्योपस्थितिसापेक्षत्वात् । अन्यथा स्वस्य अन्तःकरणाद्यभेदविभ्रमो न स्यात् । स्वप्रकाशेन भेदाग्रहेऽपि मानान्तरेण भेदग्रहात् न घटाद्यभेदसंशय इति न किञ्चिदेतत् । साक्षिणः स्वप्रकाशत्वेऽपि स्वप्रकाशसाक्ष्यनुयोगिकेतरप्रतियोगिकभेदग्रहः न साक्षिणा सम्भाव्यते । प्रतियोग्युपस्थितिसापेक्षत्वात् भेदग्रहस्य तदानीं प्रतियोग्युपस्थापक-मानाभावात् न प्रतियोग्युपस्थितिः । अतो न साक्षिणा स्वेतरप्रतियोगिकस्वानु-योगिकभेदो गृह्यते इति भावः । प्रतियोग्युपस्थितिं विनैव यदि साक्षिणा स्वेतर-प्रतियोगिकस्वनिष्ठो भेदो गृह्येत तर्हि साक्षिणः अन्तःकरणाद्यभेदविभ्रमो न स्यात् । अन्तःकरणप्रतियोगिकस्वनिष्ठभेदस्य साक्षिणा गृहीतत्वादिति । न च तर्हि स्वस्य घटादिभ्योऽभेद संशयः स्यादिति वाच्यं, स्वप्रकाशेन साक्षिणा घटादि-प्रतियोगिकस्वनिष्ठभेदस्याग्रहेऽपि प्रमाणान्तरेण भेदग्रहात् न अभेदसंशयः । भेदग्रहमात्रस्यैव अभेदसंशयविरोधित्वं, न तु स्वेनैव भेदग्रहस्य इति भावः ।

प्रत्यक्षं स्वस्याद्वैतज्ञानादिना भेदं विनानुपपत्तेस्तमप्याक्षिपतीति सर्वत्र भेदस्याप्रत्यक्षत्वेऽपि नाद्वैतश्रुतेरवकाशः ॥४॥

अत्रोच्यते, आक्षेपो हि अनुमानमर्थापत्तिर्वा ? तत्र विवादाध्यासिता बुद्धिः सर्वतो भिन्नेति नानुमानं संभवति; स्वतोऽपि भेदसाधने बाधात्। दृष्टान्तस्य साध्यविकलत्वात्। यतः कुतश्चित् भेदसाधने त्वनुमानाविषये लब्धावकाशा श्रुतिरभेदं बोधयिष्यति। न च स्वव्यतिरिक्तात् सर्वतो भिन्नेति साध्यम्। अद्वैतवादिनं प्रत्यप्रसिद्धविशेषणत्वात्। एतेन—सर्वं सर्वस्माद्भिन्नमिति वाक्यमपि—निरस्तम्। तदुक्तम्—

---

अर्थापत्त्या भेदग्रहस्य सिद्धत्वान्नाद्वैतश्रुतेरवकाशः इति पूर्वपक्षी शंकते—स्यादेतत् घटपटौ भिन्नौ इति प्रत्यक्षं स्वस्य अद्वैतज्ञानादिना भेदं विना अनुपपत्तेस्तमप्याक्षिपतीति सर्वत्र भेदस्याप्रत्यक्षत्वेऽपि नाद्वैतश्रुतेरवकाशः। सविषयकज्ञानयोः परस्परमभेदे विषययोरपि परस्परम् अभेदः स्यात्; विभिन्नविषयकयोर्ज्ञानयोरभेदासम्भवात्। एवञ्च घटपटौ भिन्नौ इति प्रत्यक्षं यदि अद्वैतविषयकज्ञानेन अभिन्नं स्यात्तर्हि घटपटयोरद्वैताभेदात् घटपटयोरपि भेदो न स्यात्। अतः प्रमितस्य घटपटभेदस्य परिपालनाय घटपटौ भिन्नौ इति प्रत्यक्षम् अद्वैतज्ञानादितो भिन्नमङ्गीकरणीयम्। घटपटौ भिन्नौ इति प्रत्यक्षस्य अद्वैतज्ञानादितो भेदाभावे घटपटयोरपि भेदोऽनुपपन्नः स्यात्। अतो भेदप्रत्यक्षस्य अद्वैतज्ञानादितो भेदमाक्षिपति—अर्थापत्तिसिद्धोऽपि भेदः अद्वैतश्रुतिं बाधते एव। न हि प्रत्यक्षभेद एव अद्वैतश्रुतेर्बाधकः; प्रमितभेदस्यैव अद्वैतश्रुतिबाधकत्वादिति भावः ॥४॥

५—नार्थापत्त्या नाप्यनुमानेन अद्वैतश्रुतिबाधिकाभेदसिद्धिर्भवितुमर्हतीति समाधत्ते सिद्धान्ती—अत्रोच्यते आक्षेपो हि अनुमानमर्थापत्तिर्वा ? तत्र विवादाध्यासिता बुद्धिः सर्वतो भिन्नेति नानुमानं सम्भवति, स्वतोऽपि भेदसाधने बाधात्। दृष्टान्तस्य साध्यविकलत्वाच्च। यतः कुतश्चिद् भेदसाधने तु अनुमानाविषये लब्धावकाशाश्रुतिरभेदं बोधयिष्यति। न च स्वव्यतिरिक्तात् सर्वतो भिन्नेति साध्यम् अद्वैतवादिनं प्रति

'हेत्वाद्यभावसार्वज्ञ्येय सर्वं पक्षयताऽऽस्थिते ।
किंचित्तु त्यजता दत्ता सैवद्वारद्वयश्रुते ॥' इति ।

नाप्यर्थापत्तिः सर्वभेदविषया स्वाविषयत्वात् । ययोर्हि भेदं विना यत्रानुपपत्तिर्गृहीता, तयोस्तत्र भेदग्रहेऽप्यनुपपत्तावनुपपत्त्यन्तराग्रहणात् । सर्वत्र तदग्रहपे तु धाराविश्रान्तौ चरमधीरुदाहरणम् । तदुक्तम्—

आद्यधीवेद्यभेदीयाप्यन्यथानुपपन्नता ।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम् ॥ इति ॥५॥

---

अप्रसिद्धविशेषणत्वात् । एतेन सर्वं सर्वस्मात् भिन्नमिति वाक्यमपि निरस्तम् । तदुक्तं—

हेत्वाद्यभावसार्वज्ञ्ये सर्वं पक्ष यातास्थिते ।
किञ्चित्तु त्यजता दत्ता सैव द्वारद्वयश्रुते : ॥

नापि अर्थापत्तिः सर्वभेदविपया स्वाविपयत्वात् । ययोर्हि भेदं विना यत्र अनुपपत्तिर्गृहीता तयोस्तत्र भेदग्रहेऽपि अनुपपत्तौ अनुपपत्त्यन्तराग्रहणात् । सर्वत्र तद्ग्रहणे तु धारा विश्रान्तौ चरमधीरुदाहरणं तदुक्तम्—

आद्यधीवेद्यभेदीयाप्यन्यथानुपपन्नता ।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम् ॥ इति ।

घटपटौ भिन्नौ इति प्रत्यक्षं स्वस्य अद्वैतज्ञानादिना भेदं विना अनुपपत्तेस्तमाक्षिपतीत्युक्तं पूर्वपक्षिणा अत्र पृच्छते—कोऽयमाक्षेपः ? अनुमानम् आक्षेपशब्दस्य अर्थः, अर्थापत्तिर्वा आक्षेपः ? उभयथापि भेदो न सिद्ध्यतीति प्रतिपादयितुं प्रथमतः भेदसाधकमनुमानं निरस्यति खण्डनोक्तरीतिमनुसृत्य — किं तावत् भेदसाधकमनुमानं यदुक्तं खण्डने सर्वं सर्वस्माद् भिन्नमिति साध्ये सर्वमेव पक्षनिक्षिप्तं, किं वा दृष्टान्तादिसिद्ध्ये पक्षात् किञ्चित् पृथक् क्रियते ? प्रथमं प्रत्याह हेत्वाद्यभावसार्वज्ञ्ये इति । सर्वं पक्षयता धर्मि कुर्वता हेत्वाद्यभावसार्वज्ञ्ये आस्थिते स्वीकृते स्याताम्, पक्षातिरिक्तसाध्यहेतुदृष्टान्तानामभावात् । तथा मानसिद्धमेव अनुमानाङ्गम् इत्यङ्गीकारात् सर्वस्य प्रमाणतोऽवगन्तृतया सर्वज्ञत्वमस्य स्यादित्यर्थः । प्रदर्शितानुमाने हेत्वाद्यभावः सर्वज्ञता च स्यात् ।

यदि द्वितीयस्तत्राह—**किञ्चिदिति**। यस्य पक्षे अनिक्षेपात् नानुमानेन भेदः साध्यते तदभेदबोधनद्वारा सर्वाद्वैतश्रुतेः पर्यवसानात् सैव द्वारं दत्त्वा स्यादद्वैतबोधनाय श्रुतेरित्यर्थः। मूले अद्वैतश्रुतिबाधकभेदसिद्धये अनुमानं दर्शयति—**विवादाध्यासिता बुद्धिरिति**। सर्वतो भेदाभेदाभ्यां विप्रतिपन्ना बुद्धिरेव पक्षः। सर्वतोभिन्नेति साध्यं बुद्धित्वादिति हेतुः बुद्ध्यन्तरं दृष्टान्तः। भेदवादिप्रदर्शितमिदमनुमानं न सम्भवति। इत्याह—**नानुमानं सम्भवति**। कुत इति चेत्? सर्वतो भेदसाधने स्वस्मादपि भेदः प्रसज्यते, स्वतो भेदसाधने प्रत्यक्षादिबाधादिति दृष्टान्तस्य बुद्ध्यन्तरस्य साध्यविकलत्वात् बुद्ध्यन्तरमपि न सर्वस्मात् भिन्नं स्वस्मात् स्वस्य भेदाभावादित्यर्थः। यतः कुतश्चित् भेदस्य साध्यत्वे यतो न भेदः साध्यते यतो भेदोऽनुमानेन न विषयीक्रियते तत्र लब्धावकाशाऽद्वैतश्रुतिः अभेदबाधकमानस्य अनुपस्थितत्वात् अभेदं बोधयिष्यति। अतोऽद्वैतश्रुतिः सावकाशैवेति भावः। सर्वतो भिन्नेति अनुक्त्वा स्वव्यतिरिक्तात् सर्वतो भिन्नेति साध्यं निर्दिश्यते, अतो नोक्तदोषः स्यादित्यत आह—**अद्वैतवादिनं प्रति अप्रसिद्धविशेषणत्वात्**। उक्तं च खण्डने "स्वव्यतिरिक्तादिति चाद्वैतवादिन्यव्यवच्छेकम्।" [खण्डनखण्डखाद्यम्, पृ० १६५] अव्यवच्छेदकमव्यावर्तकं स्वातिरिक्तपदार्थमात्रानङ्गीकारात् इत्यर्थः। सर्वतो भेदसाधकमनुमानं निरस्य शब्दप्रमाणमपि खण्डनरीत्या निरस्यति—**एतेनेति**। तदुक्तं खण्डने—"एतेन सर्वं भिन्नमिति वाक्येन—विना बाधं स्वतः प्रमाणेन—सप्रतिशब्दा सेयमद्वैतश्रुतिरित्यप्यनवकाशं प्रत्यवस्थानं मन्तव्यम्। यस्मात् कस्मादपि भेदे मिथ्यातः सत्यभेदोपगमेन सिद्धसाधनात्। सर्वस्मादिति स्वस्मात् अप्यापत्तेः। स्वव्यतिरिक्तादिति चाद्वैतवादिन्यव्यवच्छेदकम्। [खण्डनखण्डखाद्यम्, पृ० १६५] खण्डनरीत्या भेदं निरस्य प्रदर्शितविचारप्रपञ्चसंग्राहकं खण्डनपद्यं पठति तदुक्तं—**हेत्वाद्यभावसार्वज्ञ्ये** इति। इदं पद्यं प्रागेव विवृतम्। अर्थापत्तिर्वा? आक्षेपशब्दार्थम् इति द्वितीयं पक्षं निराकरोति—**नापीति**। अत एव नापि अर्थापत्तिः सर्वज्ञत्वप्रसङ्गद्वारदानयोरन्यतरप्रसङ्गादेव नार्थापत्तिः सर्वभेदविषयाः सेद्धुमर्हति स्वाविषयत्वादर्थापत्तेः। स्वाविषयिणी अर्थापत्तिः कथं स्वस्मात् भेदं साधयेत् स्वतो भेदसाधने बाधादित्युक्तम्। अर्थापत्त्या हि ययोर्भेदं विना यत्र अनुपपत्तिर्गृहीता तयोस्तत्र भेदग्रहेऽपि—घटपटभेदविषयिण्याः

ननु—यावदुपपादकं तत्सर्वमर्थापत्तेर्विषयः, न तु यत्किचिदुपपादकम्। तथा चार्थापत्तेरितरस्मात् भेदाभावे तत्रैवाभेदश्रुतेर्लब्धावकाशत्वात् घटपटभेदासिद्ध्यापत्तेरर्थापत्तिभेदस्यापि घटपटभेदोपपादकत्वे-

---

भेदप्रमाया घटपटयोर्भेदं विना अनुपपन्नायाः घटपटभेदविषयकत्वेऽपि न तया स्वस्मात् घटपटयोर्भेदः सिद्ध्यति—घटपटयोर्भेदं विना घटपटभेदप्रमा अनुपपन्ना इत्येवं अनुपपत्तिग्रहेऽपि अनुपपत्तिज्ञानात् अनुपपत्तेर्भेदं न गृह्णाति इयमर्थापत्तिः। ज्ञानादनुपपत्तेर्भेदोऽस्तु वा नास्तु वा घटपटयोर्भेदः अस्त्येव तावतैव घटपटभेदप्रमा उपपन्ना। प्रतीयमानैव अनुपपन्नताभेदं साधयति इति अवश्यं वाच्यम्। तथा च अनुपपत्तिगोचरज्ञानात् अनुपपत्तेर्भेदं विना घटपटभेदानुपपत्त्यभावात् अनुपपत्तिज्ञानात् अनुपपत्तेर्भेदं न साधयेत्। अनुपपत्तिज्ञानादपि अनुपपत्तेर्भेदसाधनाय यदि अनुपपत्तिज्ञानान्तरं मृग्यं स्यात् तर्हि अनवस्था स्यात्। अनुपपत्तिधीधाराया अविच्छेदात्, सुषुप्त्याद्यभावप्रसङ्गाच्च। क्वचित् अनुपपत्तिधीधाराया विश्रान्तौ चर्मानुपपत्तिधीरेव उदाहरणं सा धीः स्वस्मात् अनुपपत्तेर्भेदं यतो न विषयीकरोति अतोऽर्थापत्त्यविषये भेदे लब्धावकाशा अद्वैतश्रुतिः सर्वभेदं बोधयिष्यतीति। खण्डनरीत्या अर्थापत्तिं निरस्य तदीयपद्यमेव पठति—प्रदर्शितविचारसंग्रहाय। आद्यधीवेद्येति। घटात् पटो भिन्न इति घटपटभेदप्रत्यक्षमाद्यधीः। तथा धिया वेद्यो यो भेदः स आद्यधीः वेद्यभेदः, तदीया तत्सम्बन्धिनी अन्यथा अनुपपन्नता भेदानुमानवदेव अद्वयश्रुतिं न बाधते। तत्र हेतुं कथयति—अन्ते स्वज्ञानापेक्षणात्। अयमर्थः प्रतीयमानैव अनुपपन्नताभेदं साधयति नान्यथा। अतोऽनुपपत्तेर्ज्ञानमवश्यं स्वीकार्यम्। अनुपपद्यमानदर्शनात् उपपादके बुद्धिरर्थापत्तिरिति स्वीकारात्। यथा च अनुपपत्तिगोचरज्ञानात् अनुपपत्तेर्भेदं विना घटपटभेदानुपपत्त्यभावात् स्वज्ञानात् आत्मनो भेदं न साधयेत्, ततश्च अनुपपत्तेः स्वज्ञानात् अभेदबोधनद्वारा अद्वैतश्रुतिः सर्वाद्वैते पर्यवस्यतीति नार्थापत्तिरपि अद्वैतश्रुतिं बाधते इति भावः। यावन्ति उपपादकानि तानि सर्वाण्येव अर्थापत्तेर्विषयः ॥५॥

६—तथा च अर्थापत्तेरितरस्मात् भेदोऽपि अर्थापत्तेर्विषय एव इति पूर्वपक्षी शङ्कते—ननु यावदुपपादकं तत् सर्वमर्थापत्तेर्विषयः न तु यत् किञ्चिदुपपादकम्। तथा च अर्थापत्तेरितरस्मात् भेदाभावे तत्रैव अभेदश्रुते-

नार्थापत्तिविषयत्वं वाच्यम्। अन्यथा दृग्दृश्यसम्बन्धानुपपत्तिर्ज्ञाननिवर्त्यत्वानुपपत्तिश्च स्वमिथ्यात्वविषया न स्यात्। 'सर्वं खल्विदं ब्रह्मे'ति श्रुतिः 'नेह नाने'ति ब्रह्मणि भेदमात्रनिषेधानुपपत्तिश्च स्वाभेदविषया न स्यात्। तथा च तत्रापि श्रुत्यन्तरमर्थापत्त्यन्तरं वा वाच्यमिति तवाप्यनवस्थापत्तिः—इति ॥६॥

---

लब्धावकाशत्वात्, घटपटभेदासिद्ध्यापत्तेरर्थापत्तिभेदस्यापि घटपटभेदोपपादकत्वेन अर्थापत्तिविषयत्वं वाच्यम्। अन्यथा दृग्दृश्यसम्बन्धानुपपत्तिर्ज्ञाननिवर्त्यत्वानुपपत्तिश्च स्वमिथ्यात्वविषया न स्यात्। सर्वं खल्विदं ब्रह्म इति श्रुतिः नेह नानेति ब्रह्मणि भेदमात्रनिषेधानुपपत्तिश्च स्वाभेदविषया न स्यात् तथा च तत्रापि श्रुत्यन्तरम् अर्थापत्त्यन्तरं वा वाच्यमिति तवापि अनवस्थापत्तिः इति। ननु प्रमाणेन प्रमेयसम्बन्ध्येवार्थः सिद्ध्यति न प्रमाणसम्बन्धचक्षुरादिना घटसम्बन्धिरूपपरिमाणादिसिद्धिवत् चक्षुरादिसम्बन्धिरूपादेरसिद्धेः। अतोऽर्थापत्तिरूपप्रमाणासम्बन्धित्वे सति उपपादकत्वम् एव अर्थापत्तेर्विषयत्वे तन्त्रम्। अतो अर्थापत्तिनिष्ठो अद्वैतज्ञानप्रतियोगिको भेदः कथमर्थापत्तिविषय इत्यत आह—**यावदुपपादकम्** इति। उपपादकत्वं हि अर्थापत्तिविषयत्वे तन्त्रं न तु अर्थापत्त्यसम्बन्धित्वम्। तथा च उपपाद्यस्य घटपटभेदस्य यावदुपपादकमर्थापत्तेरद्वैतज्ञानात् भेदादिकं तत्सर्वम् अर्थापत्तेर्विषयः। तथा च अर्थापत्तेरितरस्मात् अद्वैतज्ञानात् भेदाभावे तत्रैव अभेदश्रुतिर्लब्धावकाशा घटपटयोर्भेदमपि निवारयेत्। अर्थापत्तेरद्वैतज्ञानात् भेदस्यापि घटपटभेदोपपादकतया अर्थापत्तिविषयत्वात्। अद्वैतज्ञानात् अर्थापत्तेर्भेदस्य अर्थापत्तिविषयत्वानङ्गीकारे सिद्धान्त्यङ्गीकृतमपि न सिद्ध्येत् इत्याह—**अन्यथेति**। दृश्यमात्रस्य प्रपञ्चस्य दृक्सम्बन्धानुपपत्त्या कल्प्यमानम् अध्यस्तत्वरूपमिथ्यात्वं दृक्सम्बन्धानुपपत्त्या दृक्सम्बन्धानुपपत्तौ अपि मिथ्यात्वं सिद्ध्यति इति सिद्धान्तिना अङ्गीकृतं, तन्न सिद्ध्येत्। एवं ज्ञान निवर्त्यत्वान्यथानुपपत्त्या प्रपञ्चे कल्प्यमानं मिथ्यात्वं ज्ञाननिवर्त्यत्वान्यथानुपपत्तेरपि प्रपञ्चान्तर्गतत्वेन ज्ञान निवर्त्यत्वात् तस्यामनुपपत्तावपि मिथ्यात्वं सिद्ध्यतीति यत् त्वया अङ्गीकृतं तन्न स्यात्। सर्वं खल्विदं ब्रह्मेति—ब्रह्मणः सर्वाभेदविषया श्रुतिः स्वाभेदमपि ब्रह्मणि

मैवं वोचः; वस्तुतः उपपादकत्वं नार्थापत्तिविषयत्वे तन्त्रम्, किंतूपपादकत्वेन ज्ञातत्वम्; अन्यथा अर्थापत्तिभ्रमानुपपत्तेः। तथा च येन रूपेणोपपादकत्वं गृहीतं, तद्रूपावच्छिन्नमुपपादकमर्थापत्तेर्विषयः। तत्र यद्यर्थापत्तिगतभेदसाधारणमुपपादकतावच्छेदकमेकं भवेत्, तदा सोऽपि भायादेव। न चैवमस्ति; तदनिरूपणात्। तथाहि—घटपटभिन्नत्वमुपपाद्यम्, तदुपपादकं च न सर्वभिन्नत्वम्,

---

बोधयति सापि न स्यात्। यदि इयं श्रुतिः स्वाभेदं ब्रह्मणि न बोधयेत् तर्हि तद्बोधाय श्रुत्यन्तरापेक्षायां सिद्धान्तिनोऽपि अनवस्था स्यात्। एवं नेह नानेति ब्रह्मणि भेदमात्रनिषेधानुपपत्तिश्चेति। ननु ब्रह्मणि नेह नानेति श्रुत्या भेदनिषेधस्य श्रौतत्वात् कथमियमन्यथानुपपत्तिः, अनया श्रुत्या ब्रह्मण्येव सर्वभेदबोधनात् कथं भेदमात्रनिषेधः? घटपटाद्यभेदाबोधनादिति चेत्? सत्यं, ब्रह्मणि भेदनिषेधस्य श्रौतत्वेऽपि भेदमात्रनिषेधो यः स अन्यथानुपपत्तिलभ्यः। तथा हि अनया श्रुत्या ब्रह्मणि स्वेतरसर्वघटपटादिप्रतियोगिकभेदनिषेधस्तावत् सिद्धः। तथा च यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तिबलात् घटाभिन्नब्रह्माभिन्नत्वात् पटस्यापि घटाभेदः सिद्ध्यतीत्येवं व्याप्तिबलेन घटपटाद्यभेदस्य साध्यत्वात् अन्यथानुपपत्तिरित्युक्तम्। अर्थापत्तेः स्वविषयकत्वाभावे यत् यदभिन्नाभिन्नमिति भेदमात्रनिषेधरूपव्याप्त्यनुपपत्त्या एतदर्थापत्तीतरघटपटाभेद एव सिद्ध्येत न अर्थापत्तिसम्बन्ध्यभेदः ततश्च तेन भेदमात्रनिषेधासिद्धिः स्यादिति भावः। न हि सर्वं सर्वस्मादभिन्नमिति काचित् श्रुतिरस्ति। अस्ति चेदपि सापि स्वाभेदविषया न स्यात्। तथा च तत्र अर्थापत्त्यन्तरं श्रुत्यन्तरं च वाच्यम् इति सिद्धान्तिनोऽपि अनवस्था स्यात्। उपपादकत्वेन ज्ञातत्वम् अर्थापत्तिविषयत्वे तन्त्रम्, तथा च येन रूपेण उपपादकत्वं गृहीतं तद्रूपावच्छिन्नमुपपादकमर्थापत्तेर्विषयः अर्थापत्तिगतभेदसाधारणमुपपादकतावच्छेदकमेकं भवेत् तदा अर्थापत्तिगतभेदोऽपि भायात्। नत्वेवमस्ति ॥६॥

७—अर्थापत्तिगतभेदसाधारणस्य एकस्य उपपादकतावच्छेदकस्य निरूपयितुमशक्यत्वादित्याह सिद्धान्ती—मैवं वोचः वस्तुतः उपपादकत्वं नार्थापत्तिविषयत्वे तन्त्रम्। किन्तु उपपादकत्वेन ज्ञातत्वम् अन्यथा अर्थापत्तिभ्रमानुपपत्तेः। तथा च येन रूपेण उपपादकत्वं गृहीतं तद्रूपावच्छिन्न-

स्वतोऽपि भेदापत्त्या तदसम्भवात्। नापि स्वातिरिक्तसर्वभिन्नत्वम्; अद्वैतवादिनं प्रति स्वातिरेकविशेषणासिद्धेः, स्वत्वाननुगमाच्च। तथा च तेन तेन रूपेण तत्तद्भिन्नत्वमेव उपपादकमुपेयम्। अत उपपादकतावच्छेदकनानात्वान्न सर्वमुपपादकमर्थापत्तेर्विषय इति पृथक्पृथगनुपपत्तिज्ञानापेक्षायां सर्वत्रानुपपत्तिज्ञाने अनवस्थानात् क्वचिद्धाराविश्रान्तौ तत्रैव लब्धावकाशा श्रुतिः सर्वाद्वैते पर्यवस्यतीति किमनुपपन्नम्? दृष्टान्ते च सर्वत्र स्वसाधारणमुपपादकमेकतावच्छेदमेवेति तदवच्छिन्नतया स्वस्यापि भानमिति वैषम्यम्। तथाहि—दृश्यत्वावच्छिन्नमिथ्यात्वं विना दृक्सम्बन्धानुपपत्तिग्रहात्तदवच्छिन्नमिथ्यात्वमर्थापत्तेर्विषय इति स्वमिथ्यात्वमपि स्वविषयः, एव मेव ज्ञाननिवर्त्यत्वानुपपत्तेरपि स्वविषयत्वम्; तत्रापि दृश्यत्वादेरेकस्यैवावच्छेदकत्वात्। एवं च ब्रह्मणि सर्वभेदबोधिकायाः श्रुतेर्भेदमात्रनिषेधान्यथानुपपत्तेश्च

---

मुपपादकमर्थापत्तेर्विषयः। तत्र यदि अर्थापत्तिगतभेदसाधारणम् उपपादकतावच्छेदकम् एकं भवेत् तदा सोऽपि भायादेव। न चैवमस्ति—तदनिरूपणात् तथा हि घटपटभिन्नत्वमुपपाद्यं तदुपपादकश्च न सर्वभिन्नत्वम्। स्वतोऽपि भेदापत्त्या तदसम्भवात्। नापि स्वातिरिक्त सर्वभिन्नत्वम्। अद्वैतवादिनं प्रति स्वातिरेकविशेषणासिद्धेः। स्वत्वाननुगमाच्च। तथा च तेन तेन रूपेण तत्तद्भिन्नत्वमेव उपपादकमभ्युपेयम्। अत उपपादकतावच्छेदकनानात्वात् न सर्वम् उपपादकमर्थापत्तेर्विषयः इति पृथक् पृथक् अनुपपत्तिज्ञानापेक्षायां सर्वत्र अनुपपत्तिज्ञाने अनवस्थानात् क्वचित् [धारा] विश्रान्तौ तत्रैव लब्धावकाशा श्रुतिः सर्वाद्वैते पर्यवस्यतीति किमनुपपन्नम्। दृष्टान्ते च सर्वत्र स्वसाधारणमुपपादकतावच्छेदकमेकमेव इति तदवच्छिन्नतया स्वस्या अपि भानमिति वैषम्यम्। तथा हि दृश्यत्वावच्छिन्नमिथ्यात्वं विना दृक्सम्बन्धानुपपत्तिग्रहात् तदवच्छिन्नमिथ्यात्वमर्थापत्तेर्विषय इति स्वमिथ्यात्वमपि स्वविषयः। एव मेव ज्ञाननिवर्त्यत्वानुपपत्तेरपि स्वविषयत्वम्। तत्रापि दृश्यत्वादेरेकस्यैवावच्छेदकत्वात्। एवञ्च ब्रह्मणि

स्वाभेदविषयत्वमविरुद्धम् । न हि सर्वभेदे स्वभेदापत्तिरिव सर्वाभेदे स्वाभेदो दोषाय । तस्मादद्वैतश्रुतिर्बाध्यबाधकयोरैक्यबोधनेन निराबाधा सर्वाद्वैतं प्रतिपादयति ।

---

सर्वाभेदबोधिकायाः श्रुतेर्भेदमात्रनिषेधान्यथानुपपत्तेश्च स्वाभेद-विषयत्वमविरुद्धम् । न हि सर्वभेदे स्वभेदापत्तिरिव सर्वाभेदे स्वाभेदो दोषाय । तस्मात् द्वैतश्रुतिर्बाध्यबाधकयोरैक्यबोधनेन निराबाधात् सर्वाद्वैतं प्रतिपादयति । उपपाद्यस्य वस्तुतः "उपपादकत्वं" न अर्थापत्तेर्विषयत्वव्यापकं यत् उपपाद्यस्य वस्तुतः उपपादकं न भवति नु तत् अर्थापत्तेर्विषय इति न कुत इति चेत् ? अर्थापत्तिरूपभ्रमानुपपत्तेः । वस्तुतः अनुपपादकं विषयीकुर्वती अर्थापत्तिरेव भ्रमरूपा भवति । अर्थापत्तिर्यदि वस्तुगत्या उपपादकमेव सर्वत्र विषयीकुर्यात् तर्हि अर्थापत्तिः सर्वत्र प्रमारूपैव स्यात् । किन्तर्हि अर्थापत्तेर्विषयत्वे तन्त्रमित्याह—उपपादकत्वेन ज्ञातत्वम् । उपपाद्योपपाद-कत्वेन ज्ञातत्वमेवार्थापत्तिविषयत्वे तन्त्रम् । तेन उपपाद्यस्य वस्तुतः अनुपपादकमपि उपपादकत्वेन यदि गृहीतं स्यात् तदपि अर्थापत्तेर्विषय इत्यर्थः । तेन अनुपपादकस्य उपपादकत्वेन ग्रहात् अर्थापत्तेर्भ्रमरूपत्वमपि कदाचित् स्यात् । तेन उपपादकत्वं येन रूपेण गृहीतं तद्रूपावच्छिन्नमुपपादकम् अर्थापत्तेर्विषयः । ज्ञायमानोपपादकतावच्छेदकावच्छिन्नम् अर्थापत्तेर्विषय इत्यर्थः । उपपादकता-वच्छेदकरूपं यदि अर्थापत्तिगतभेदसाधारणं स्यात् तर्हि अर्थापत्तिगतभेदोऽपि अर्थापत्तौ भायात् अर्थापत्तेर्विषयो भवेदित्यर्थः ! अर्थापत्तिगतभेदसाधारणम् एकमुप-पादकतावच्छेदकं पूर्वपक्षिप्रदर्शितार्थापत्तौ नास्ति । कुतः अर्थापत्तिगतभेद-साधारणस्य एकस्य उपपादकतावच्छेदकरूपस्य अनिरूपणात्, निरूपणासम्भवात् इत्यर्थः । असम्भवमेव दर्शयति—तथा हीति । पूर्वपक्षिणा हि घटपटौ भिन्नाविति प्रत्यक्षं स्वस्य अद्वैतज्ञानादिना भेदं विनानुपपत्तेस्तमप्याक्षिपतीत्युक्तम् । तथा च घटपटभिन्नत्वं प्रत्यक्षसिद्धमुपपाद्यं भेदग्राहिप्रत्यक्षस्य सर्वतो भिन्नत्वं न उपपादकं भवितुमर्हति । भेदग्राहिप्रत्यक्षस्य सर्वतो भिन्नत्वे स्वस्मादपि भेदापत्तेरिति प्रागेवोक्तम् । नापि स्वातिरिक्तसर्वभिन्नत्वमुपपादकं तदपि स्वातिरिक्तादिति चाद्वैतवादिन्यव्यवच्छेदकमिति [खण्ड० ख० खा०, पृ० १६५] खण्डनोक्त्या प्रागेव

निरस्तम् । स्वातिरिक्तसर्वभिन्नत्वमुपपादकमिति निरूपणमपि न सम्भवति स्वत्वस्य अननुगमात् । समभिव्याहृतपरत्वात् स्वशब्दस्य एकं सर्वस्वानुगतं स्वत्वं नास्त्येव समभिव्याहृतपरत्वेन अनुगमनं तु शब्दानुगमनमात्रं नैतावता अनुगतोऽर्थः सिद्ध्यति । अर्थानुगतिस्तु प्रकृतेऽपेक्ष्यते शब्दानुगमनमात्रमकिञ्चित्करम् । प्रमाणान्तरोपन्यासे शब्द स्वाभाव्य प्रदर्शनमौढ्यादेव । तथा च अनुगतरूपाभावात् तेन तेन रूपेण तत्तद्भिन्नत्वमुपपादकमभ्युपेयम्; एवञ्च उपपादकतावच्छेदकैकरूपाभावात् सर्वमुपपादकं नार्थापत्तेर्विषय इति । एतेन यदुक्तं पूर्वपक्षिणा यावदुपपादकं तत्सर्वमर्थापत्तेर्विषय इति निरस्तम् । उपपादकतावच्छेदकैकरूपाभावात् सर्वाणि उपपादकानि न एकस्या अर्थापत्तेर्विषय इति भावः । अतः पृथक् पृथक् अनुपपत्तिज्ञानापेक्षायां स्वातिरिक्ते सर्वत्र अनुपपत्तिज्ञाने अनवस्थानात् । सुषुप्त्याद्यभावप्रसंगेन क्वचित् अनुपपत्तिज्ञानधाराया विश्रान्तौ तत्रैव लब्धावकाशाऽद्वैतश्रुतिः सर्वाद्वैते पर्यवस्यतीति नार्थापत्तिरद्वैतश्रुतेर्बाधिकाभवितुमर्हति । अतः पूर्वपक्षिमतं निरस्तं वेदितव्यम् । यच्च पूर्वपक्षिणा दृग्दृश्यसम्बन्धानुपपत्तिः ज्ञाननिवर्त्यत्वानुपपत्तिश्च स्वमिथ्यात्वविषयः न स्यात् इत्युक्तं यच्च नेह नानेति ब्रह्मणि भेदमात्रनिषेधानुपपत्तिश्च स्वाभेदविषया न स्यात् इत्यादि उक्तं; तन्निरस्यति—

दृष्टान्ते च इति । पूर्वपक्षिप्रदर्शितदृष्टान्ते च स्वपरसाधारणमुपपादकत्वावच्छेदकरूपमेकमेव न यथा पूर्वपक्षिमते नाना इति वैषम्यात् दृष्टान्तो न संगच्छते । वैषम्यमेव दर्शयति—दृश्यत्वावच्छिन्नमिथ्यात्वं विना दृग्दृश्यसम्बन्धानुपपत्तिग्रहात् । दृश्यत्वावच्छिन्नसत्यत्वे दृग्दृश्ययोः अनुभूयमानसम्बन्धो न स्यात् । अतो दृग्दृश्यसम्बन्धो दृश्यसत्यत्वे अनुपपद्यमानः दृश्यत्वावच्छिन्नमिथ्यात्वम् उपपादकं कल्पयति । एवञ्च येन रूपेण उपपादकत्वं गृहीतं तद्रूपावच्छिन्नम् अर्थापत्तेर्विषय इति स्वमिथ्यात्वमपि स्वविषयः । अर्थापत्तेर्मिथ्यात्वमपि अर्थापत्तेर्विषय इत्यर्थः । एकेनैवरूपेण स्वस्वेतरविषयीकरणात् । एवमेव ज्ञाननिवर्त्यत्वानुपपत्तेरपि इति यथा ज्ञाननिवर्त्यत्वानुपपत्त्या अविद्यादीनां मिथ्यात्वं ज्ञाननिवर्त्यत्वोपपादकं दृश्यत्वादिकम् आदिपदात् जडत्वादिपरिग्रहः । तच्च दृश्यत्वादि यथा अविद्यादौ तथा ज्ञाननिवर्त्यत्वेऽपीति तस्यापि मिथ्यात्वं सिद्ध्यतीति भावः । एवञ्च ब्रह्मणि सर्वभेदबोधिकाश्रुतिः सर्वभेदमात्रनिषेधानुपपत्त्या श्रुत्यभेदमपि ब्रह्मणि बोधयति

ननु—शब्दबुद्धिकर्मणा विरम्य व्यापाराभावात् कथमादावल्पविषया बुद्धिः पश्चात् बहुविषयापि भवतीत्युच्यत इति—चेत् ॥७॥

न, श्रुतितो द्रागेव जातायाः सर्वविषयाया अद्वैतबुद्धेः प्रामाण्यं व्यवस्थापयन्तीनामस्मद्बुद्धीनामेव क्रमेण जायमानत्वात्। अयोग्यता-

---

सर्वाभिन्ने ब्रह्मणि श्रुत्यभेदो न विरुद्धः। यथा सर्वभेदे स्वस्मिन् स्वभेदो विरुद्ध्यते नैवं सर्वभेदे स्वाभेदो विरुद्ध्यते। तस्मात् अद्वैतश्रुतिः बाध्यबाधकयोरैक्यबोधनेन बाधकस्यापि बाध्याभिन्नतया बाध्यबाधनायोगेन निराबाधा सर्वाद्वैते पर्यवस्यति। अत्र मूले यद् यद् उक्तं तत् सर्वं खण्डनग्रन्थात् संगृहीतम्। उक्तञ्च खण्डने—बाधिकायाः प्रत्यक्षधियो बाध्यायाश्चाद्वैतबोधने श्रुतिर्निराबाधा सती तयोरैक्यं बोधयतीति तत् प्रत्यक्षादि कथं स्वात्मानमेव बाधते घटेन पटेन तद्भेदेन च स्वविषयेण सह तस्या एव धियः श्रुत्या सर्वस्याद्वैतं गोचरयन्त्या कथं नाभेदे प्रामाण्यमासादयितव्यम्, तत्राबाध्यमानत्वात्। न हि तस्या धियः स्वात्मा वा स्वात्मना वा सह घटपटादेर्भेदोऽपि विषयः। घटपटौ भिन्नावित्येवमाकारा हि सा जायते, न त्वहं घटात् पटाच्च भिन्ना मत्तो वा तौ भिन्नाविति। [खण्डनखण्डखाद्यम्, पृ० १५०]। सर्वं खल्विदं ब्रह्मेत्याद्यद्वैतश्रुतिः तज्ज्ञानं वा नियतविषयकभेदग्राहिप्रत्यक्षेण आदौ ऐक्यं गृह्णाति पश्चात् निर्बाधा श्रुतिः सर्वाद्वैतं बोधयति इति तदयुक्तं, शब्दबुद्ध्योर्विरम्य व्यापारप्रसङ्गात्; विरम्यव्यापारस्य चेतनधर्मत्वे जडयोः शब्दबुद्ध्योरयोगात् इति पूर्वपक्षी शङ्कते—ननु शब्दबुद्धिकर्मणां विरम्यव्यापाराभावात् कथमादौ अल्पविषयाबुद्धिः पश्चात् बहुविषयापि भवतीत्युच्यते इति चेत्। भेदग्राहिप्रत्यक्षं नियतविषयमतोऽल्पविषयम्। तदेव अद्वैतबुद्धेर्विरोधीति प्रथमतो विरोधिप्रत्यक्षेण अल्पविषयेण अद्वैतश्रुतिरैक्यं बोधयति पश्चात् भेदग्राहिप्रत्यक्षे विरोधिनि अपगते निर्बाधा अद्वैतश्रुतिः सर्वाद्वैतं बोधयति इति न युक्तं; शब्दबुद्धिकर्मणां विरम्यव्यापाराभावादिति। अद्वैतश्रुतेः क्रमेण अभेदग्रहो न युक्त इति भावः ॥७॥

८—अत्र अद्वैतश्रुतेः न विरम्यव्यापार इति परिहरति सिद्धान्ती—न श्रुतितो द्रागेव जाताया सर्वविषयाया अद्वैतबुद्धेः प्रामाण्यं व्यवस्थापयन्तीनाम्

ज्ञानं च न शाब्दबोधे प्रतिबन्धकम्, न वा योग्यताज्ञानं हेतुः; येन प्रथमं सर्वाद्वैतबुद्धिर्न स्यात् । तदुक्तम्—

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम् ॥' इति ।

वेदान्तकल्पलतिकायामस्यार्थस्य प्रपञ्चो द्रष्टव्यः । एतेन—चरमज्ञानमिथ्यात्वेऽपि न तद्विषयस्य मिथ्यात्वम्; ज्ञानमिथ्यात्वस्य विषयमिथ्यात्वासाधकत्वात्, अद्वैतज्ञाने व्यभिचारादिति—निरस्तम् । श्रुत्यैव द्वैतमात्रनिषेध्यत्वबोधनात् । अद्वैतज्ञानविषये च मिथ्यात्वबोधकाभावादेव सत्यत्वम् । न तु ज्ञानमिथ्यात्वादिति न किंचिदेतत् ।

---

अस्मत् बुद्धिनामेव क्रमेण जायमानत्वात् । अयोग्यताज्ञानं च न शब्दबोधे प्रतिबन्धकम् । न वा योग्यताज्ञानं हेतुः येन प्रथमं सर्वाद्वैतबुद्धिर्न स्यात् । तदुक्तम् —

अत्यन्तासत्यपि ज्ञानम् अर्थे शब्दः करोति हि ।
अबाधात्तु प्रमामत्र स्वतः प्रामाण्य निश्चलाम् ॥ इति ।

वेदान्तकल्पलतिकायाम् अस्यार्थस्य प्रपञ्चो द्रष्टव्यः । एतेन चरमज्ञानमिथ्यात्वेऽपि न तद्विषयस्य मिथ्यात्वं ज्ञानमिथ्यात्वस्य विषयमिथ्यात्वासाधकत्वात्, अद्वैतज्ञाने व्यभिचारादिति निरस्तम् । श्रुत्यैव द्वैतमात्रनिषेधत्वबोधनात् । अद्वैतज्ञानविषये च मिथ्यात्वबोधकाभावादेव सत्यत्वम् । न तु ज्ञानमिथ्यात्वात् इति न किञ्चिदेतत् । पूर्वपक्षिणाखण्डनोक्तापत्तिरेव प्रदर्शिता सिद्धान्तिनापि खण्डनोक्तमेव समाधानं दर्शयति—श्रुतितो द्रागेव जाताया इति । एकमेवाद्वितीयम् इत्याद्यैकात्म्यपरो हि आगमः परमात्मन एव एकतामाह; प्रत्यक्षादीनि तु घटपटादिभेदं गृह्णन्तीति; तदयुक्तम् अभ्यासविरोधादित्याह खण्डने—"एकमित्युपादाय यदेवकारमप्युपादत्ते श्रुतिरेकमेवेदमितिरूपा तदैकान्तिकमैक्यं बोधयतीति भेदाभेदे नाप्यशक्यसमर्थनं घटपटादिभेदग्राहिप्रत्यक्षादिप्रामाण्यम्" [खण्डनखण्डखाद्यम्, पृ० १५६] । अनन्तरं शङ्केयं प्रवृत्ता—बाध्यबाधकबुद्ध्योर्बाधकबुद्धेश्चस्वविषयैरभेदबोधनद्वारा सर्वाद्वैतबोधनं श्रुतेः किं क्रमेण किं वा युगपत् ।

न तावत् युगपत् अंशतः प्रत्यक्षविरोधात्। नापि क्रमेण बुद्धेर्विरम्यव्यापाराभावात्। इति शंकायाम् उक्तं खण्डने—"बुद्धेर्विरम्य व्यापाराभावात् कथमित्थमि'ति चेन्न। श्रुतितो प्रागेव जातायाः सर्वविषयाया अद्वैतधियोऽस्मद्बुद्धय एवं विध-विचारसोपानपरम्परामारोहन्त्यो नानाविषयेषु तत्प्रामाण्यविषयाः क्रमेण परितिष्ठन्ती-त्युच्यमानत्वात्" [खण्डनखण्डखाद्यम्, पृ० १५६] विवृतञ्चैतदानन्दपूर्णेन—जन्मैव बुद्धेर्व्यापारोऽर्थावग्रहरूपाया इति न्यायेन जन्मातिरिक्तव्यापाराभावात् तस्याश्च एकत्वात् पर्यायेण सर्वाद्वैतबोधनमनुपपन्नमित्यर्थः। परिहरति न श्रुतित इति। ज्योतिष्टोमवाक्यं भावनामंशत्रयवतीमेकव्यापारेण बोधयति। तत्र च धात्वर्थादीनां करणत्वादिविषयविज्ञानानि विचारपरम्परया क्रमेण जायन्ते यथा तथा अद्वैतश्रुतिरपि तत्तदर्थजातस्य ज्ञानजातस्य च अद्वैतं युगपत् बोधयति। तत्र तत्र परिपन्थिप्रत्यक्षादिविरोधोत्थाने तन्निरासफलविज्ञानानि विचारपरम्परा क्रमेण जायन्ते; अस्माकम् अतो न विरोधगन्धोऽपि। द्रागिति शीघ्रमित्यर्थः। एकपदार्थे अपरपदार्थसम्बन्धो योग्यता, तज्ज्ञानं च न शाब्दबोधे कारणमिति प्रत्यक्षादिना भेदग्रहेऽपि अद्वैतश्रुतिरभेदं बोधयत्येव। शाब्दबोधस्य इतरकारण-कलापे सति योग्यताज्ञानविलम्बेन शाब्दबोधविलम्बाभावात्, योग्यताज्ञानं न शाब्दबोधे कारणं, नापि अयोग्यताज्ञानं शाब्दबोधे प्रतिबन्धकं, कलहादिस्थले शब्दज्ञानस्य विपरीतनिश्चया प्रतिबोध्यत्वात्। यदि योग्यताज्ञानं शाब्दबोधे कारणं स्यात् तदा अद्वैतागमे सर्वाद्वैतबुद्धिर्न स्यात्, द्वैतग्राहिप्रत्यक्षादि-विरोधात्। योग्यताज्ञानस्य शब्दबोधाहेतुत्वे भट्टपादीय वाक्यं प्रमाणयति। इदं वाक्यं खण्डनेऽप्युद्धृतम्। अत्यन्तासत्यपीति। विपरीततया निश्चितेऽपि कलहादिस्थले शब्दः वाक्यम् अर्थे ज्ञानं करोत्येव। अत्र वेदाज्जनितेऽलौकिकार्थ-ज्ञाने प्रमाणान्तरेण बाधाभावात् औत्सर्गिकं स्वतः प्रमात्वं सुस्थितं भवति इत्यर्थः। चरमज्ञानमिथ्यात्वेऽपीति। अद्वैत श्रुतेः सर्वमिथ्यात्वे तात्पर्येऽपि चरमाद्वैतज्ञानस्य अद्वैतश्रुत्या वास्तवे मिथ्यात्वे प्रमितेऽपि चरमज्ञानस्य व्यावहारिकप्रमात्वेन तद्विषयस्य अद्वैतस्य सत्यत्ववत् भेदज्ञानस्य मिथ्यात्वेऽपि तद्विषयस्य भेदस्य अद्वैतस्येव सत्यत्वं स्यात्। ज्ञानमिथ्यात्वेन तद्विषयस्य मिथ्यात्वं न सिद्धयति अद्वैतज्ञाने एव व्यभिचारात्। अद्वैतज्ञानस्य मिथ्या-

ननु—द्वैतज्ञानाद्वैतज्ञानयोरभेदे कथं बाध्यबाधकभावः ? न च व्यावहारिकभेदमात्रेण सः; द्वैतज्ञानस्यापि बाधकत्वापत्तेः—इति चेत् ? ॥८॥

न, व्यावहारिकभेदमात्रस्य बाधकत्वाप्रयोजकत्वात्। यद्धि परीक्षितप्रमाणभावत्वेन बलवत्, तत् बाधकम्, यत्तु सन्दिग्धप्रमाणभावत्वेन दुर्बलं तत् बाध्यमिति व्यवस्थायां द्वैतज्ञानस्य दुर्बलत्वेनाबाधकत्वस्याद्वैतज्ञानस्य च बलवत्त्वेन बाधकत्वस्य शब्दप्रत्यक्षबलाबलविचारे दर्शितत्वात्।

---

त्वेऽपि तद्विषयस्य अद्वैतस्य सत्यत्वादितिपूर्वपक्ष्युक्तं निरस्तम्। अद्वैतश्रुत्यैव द्वैतमात्रस्य निषेध्यत्वबोधनात् न भेदस्य सत्यत्वं सम्भवति अद्वैतश्रुतिविरोधात्। अद्वैतज्ञानविषये च अद्वैते यत् सत्यत्वं तन्मिथ्यात्वबोधकः प्रमाणाभावादेव। न तु मिथ्याज्ञानविषयत्वात् अद्वैतस्य सत्यत्वम्। द्वैताद्वैतज्ञानयोरभेदे द्वैतज्ञानस्य बाध्यत्वम् अद्वैतज्ञानस्य च बाधकत्वं सिद्धान्त्यभिप्रेतं न स्यादिति पूर्वपक्षी शङ्कते—ननु द्वैतज्ञानाद्वैतज्ञानयोरभेदे कथं बाध्यबाधकभावः ? न च व्यावहारिकभेदमात्रेण स द्वैतज्ञानस्यापि बाधकत्वापत्तेरिति चेत्। बाध्यबाधकभावव्यापकस्य भेदस्य द्वैताद्वैतज्ञानयोरभावात् कथं द्वैतज्ञानं बाध्यबाधकञ्च अद्वैतज्ञानं स्यात्। यदि द्वैताद्वैतज्ञानयोः पारमार्थिकाभेदेऽपि व्यावहारिकभेदस्य सत्त्वात् बाध्यबाधकभावः स्यादित्युचेत् तर्हि विरुद्धयोर्बाध्यबाधकभावे विनिगमनाविरहेण द्वैतज्ञानस्यापि अद्वैतज्ञानबाधकत्वं स्यात्। तथा च अद्वैतज्ञानेन द्वैतज्ञानमेव बाध्यमिति सिद्धान्त्यभिमतो नियमो न स्यादिति भावः ॥८॥

९—परीक्षितप्रामाण्यकज्ञानस्यैव बलवत्त्वेन बाधकत्वं न व्यावहारिकभेदवत्त्वेन इति समाधत्ते सिद्धान्ती—न व्यावहारिकभेदमात्रस्य बाधकत्वाप्रयोजकत्वात् यद्धि परीक्षितप्रमाणभावत्वेन बलवत् तद्बाधकं यत्तु सन्दिग्धप्रमाणभावत्वेन दुर्बलं तद्बाध्यमिति व्यवस्थायां द्वैतज्ञानस्य दुर्बलत्वेन अबाधकत्वस्य अद्वैतज्ञानस्य च बलवत्त्वेन बाधकत्वस्य शब्दप्रत्यक्षबलाबलविचारे दर्शितत्वात्। यदुक्तं पूर्वपक्षिणा व्यावहारिकभेदमात्रेण बाध्यबाधकभाव इति तन्न व्यावहारिकभेदमात्रस्य बाधकत्वाव्याप्यत्वात्,

यत्तु—'आपो वा इदं सर्वं भूत'मित्यादिश्रुतिः, 'विमतं जलाभिन्नं प्रतीतत्वात् जलवदि'त्यनुमानं व्रा स्वबाधकस्य जलाभेदं गृहीत्वा निर्बाधं सत् त्वदुक्तन्यायेन सर्वस्य जलाभेदं बोधयेत्—इति ॥९॥

तन्न; जलाभेदबोधनेऽपि बाध्यबाधकयोरैक्याबोधनात् बाधकस्य बाधकत्वोपपत्तेः। ऐक्यज्ञानभेदज्ञानयोर्बाध्यबाधकभावस्य जलाभेदज्ञानेनानपायात्। बाधकाभेदो हि बाधकत्वाभावे प्रयोजकः; बाधकस्य

---

किन्तु यद्यज्ज्ञानं परीक्षितप्रमात्मकं तद्बलवत्। यद्बलवत् तद्बाधकम्; अपरीक्षितप्रमात्मकं दुर्बलं तद्बाध्यमिति व्यवस्था। द्वैतज्ञानस्य अविद्यादोषजन्यस्य अपरीक्षितप्रमात्मकस्य दुर्बलत्वेन अद्वैतज्ञानेन निर्दोषतया परीक्षितप्रमात्मकेन बाध्यत्वम्। न द्वैतज्ञानेन अद्वैतज्ञानस्य। प्रत्यक्षस्य आगमबाध्यत्वनिर्णयप्रकरणे अधस्तादेव एतदुक्तम्। अद्वैतागमस्य परीक्षितप्रमाणविरोधाभावेन मुख्यार्थत्वोपपत्तेरिति [अद्वैतसिद्धिः, पृ० ३७३] परीक्षा च वाक्यशेषप्रमाणान्तरसम्वादार्थक्रियादिरूपा, तस्मिन्नेव प्रकरणे प्रागेवोक्ता। अस्मिन्नेवप्रकरणे प्रत्यक्षागमयोर्बलाबलविचारः कृतः; तत्रैवानयोः प्राबल्यदौर्बल्ये द्रष्टव्ये इति।

प्रदर्शितरूपेण ब्रह्माद्वैते श्रुतेः पर्यवसाने उपहासव्याजेन अनिष्टं प्रसञ्जयति पूर्वपक्षी—यत्तु आपो वा इदं सर्वं भूतमित्यादिश्रुतिः, विमतं जलाभिन्नं प्रतीतत्वात् जलवत् इत्यनुमानं वा स्वबाधकस्य जलाभेदं गृहीत्वा निर्बाधं सत् तदुक्तन्यायेन सर्वस्य जलाभेदं बोधयेत् इति। व्यावहारिकत्वेन उक्तव्यवस्थामनङ्गीकृत्य उक्तरीत्या निर्बाधा श्रुतिः सर्वाद्वैते पर्यवस्यतीत्यस्य सर्वाभेदे, भेदनिषेधे वा तात्पर्यमित्यङ्गीकारे अतिप्रसंगमाह—यत्तु आपो वा इदं सर्वमिति। प्रदर्शितश्रुत्यनुमानबाधकस्य जलभेदग्राहिप्रत्यक्षज्ञानस्य जलाभेदं गृहीत्वा निर्बाधं सत् सर्वस्य जलाभेदं बोधयेत्। एवञ्च यत्र भेदः प्रत्यक्षसिद्धः न तत्र अभेदः कदापि श्रुतितः सुग्रहः। अन्यत्र कामं गृह्यताम् न नो हानिरिति ॥९॥

१०—प्रदर्शितश्रुत्यनुमानाभ्यां बाध्यबाधकयोरैक्याबोधनात् नैवमित्याह सिद्धान्ती—तन्न, जलाभेदबोधनेऽपि बाध्यबाधकयोरैक्याबोधनात् बाधकस्य बाधकत्वोपपत्तेः ऐक्यज्ञानभेदज्ञानयोर्बाध्यबाधकभावस्य

स्वबाधकत्वादर्शनात्। अतो न बाध्यबाधकैक्यज्ञानस्य जलाभेदज्ञान-साम्यम्। एतेन—सर्वं सर्वस्माद्भिन्नमिति मद्वाक्यमद्वैतवाक्यतज्ज्ञानतद्विषयाणां तेभ्यो भेदमादौ गृहीत्वा निर्बाध सत्सर्वभेदे पर्यवस्यतीति निरस्तम्। बाध्यबाधकयोरभेदे बाधकत्वाभाववत् भेदेऽपि बाधकत्वं न स्यादित्यत्र हेत्वभावात्। पूर्वोक्तदोषाच्चेति दिक्। सर्वासत्त्वं सर्व-मिथ्यात्वान्नातिरिच्यते; अतः 'सर्वमसदि'ति प्रत्यवस्थानमनवकाशम्।

---

जलाभेदज्ञानेन अनपायात्। बाधकाभेदो हि बाधकत्वाभावे प्रयोजकः बाधकस्य स्वबाधकत्वादर्शनात् अतो न बाध्यबाधकैक्यज्ञानस्य जलाभेद-ज्ञानसाम्यम्। एतेन सर्वं सर्वस्मात् भिन्नमिति मद्वाक्यमद्वैतवाक्य-तज्ज्ञान [तज्ज्ञान] तद्विषयाणां तेभ्यो भेदमादौ गृहीत्वा निर्बाधं सत् सर्वभेदे पर्यवस्यतीति निरस्तम्। बाध्यबाधकयोरभेदे बाधकत्वाभाववत् भेदेऽपि बाधकत्वं न स्यात् इत्यत्र हेत्वभावात्। पूर्वोक्तदोषाच्चेति दिक्। सर्वासत्त्वं सर्वमिथ्यात्वान्नातिरिच्यते अतः सर्वमसदिति प्रत्यव-स्थानमनवकाशम्। प्रदर्शितश्रुत्यनुमानाभ्यां सर्वस्य जलाभेदबोधनेऽपि बाध्य-बाधकयोरैक्याबोधनात् बाधकस्य बाधकत्वोपपत्तेः अयम्भावः—यथा फेनबुद्बुद-तरङ्गादीनां जलाभेदे गृहीतेऽपि तेषां परस्परभेदस्य परस्परं विनाश्यविनाशक-भावस्य च अबाधात्, तत्कस्य हेतोः फेनबुद्बुदयोर्बुद्बुदतरङ्गयोर्वा ऐक्याग्रहात्। तयोरैक्यग्रहे विनाश्यविनाशकभावादि न स्यात्। एवमेव सर्वस्य जलाभेदे गृही-तेऽपि द्वैतप्रत्यक्षाद्वैतज्ञानयोरैक्यांबोधनात्, बाधकस्य अद्वैतज्ञानस्य भेदज्ञान-बाधकत्वोपपत्तिः। जलाभेदज्ञाने ऐक्यज्ञानभेदज्ञानयोर्बाध्यबाधकभावस्य अनि-वारणात्। बाधकत्वाभावे बाध्यबाधकयोरैक्यं प्रयोजकमैक्ये बाध्यबाधकभावो न भवति। यथा स्वस्य न स्वबाधकत्वं बाध्यबाधकयोरैक्यात्। जलाभेदज्ञानेऽपि बाध्यबाधकयोरैक्यज्ञानाभावेन न बाध्यबाधकैक्यज्ञानस्य जलाभेदज्ञानसाम्यम्। एतेन इत्यस्य निरस्तमित्यनेनान्वयः। यदुक्तं पूर्वपक्षिणा—सर्वं सर्वस्मात् भिन्न-मिति मद्वाक्यं घटोऽपि घटाद्भिन्न इति सर्वं सर्वस्मादित्यर्थः घटपटौ भिन्नौ इति बाधकत्वेन अभिमतात् प्रत्यक्षज्ञानात् बाध्यत्वेन अभिमतम् ऐक्यज्ञानं भिन्नमित्य-ग्रहणात्। तत्र लब्धपदा अद्वैतश्रुतिस्तयोस्तावत् ऐक्यं गृह्णाति। ततश्च अनिर्बाधा

ननु—श्रुत्या सर्वस्य मिथ्यात्वं वा बोध्यते, ब्रह्माभिन्नत्वं वा। आद्ये 'सर्वं खल्विदं ब्रह्मे'ति सामानाधिकरण्यं न स्यात्; सत्यानृतयोरै-

---

श्रुति सर्वाद्वैते पर्यवस्यतीति सिद्धान्त्युक्तन्यायेन अद्वैतवाक्यविषयकज्ञानात् अद्वैतवाक्यविषयकज्ञानस्य, अद्वैतवाक्यजन्यज्ञानार्थं, अद्वैतवाक्यजन्यज्ञानस्य, अद्वैतवाक्यात् अद्वैतवाक्यस्य, अद्वैतज्ञानविषयादद्वैतात् अद्वैतस्य च इत्येवं तज्ज्ञानतद्विषयाणां तेभ्यो भेदम् आदौ गृहीत्वा स्वस्मिन् स्वाभेदग्राहकप्रमाणप्रवृत्तेः पूर्वमित्यर्थः। **निर्बाधं सत्** इति। स्वस्मिन् स्वभेदग्राहकं मद्वाक्यं प्रतिबाधकत्वेन अभिमतस्य स्वस्मिन् स्वाभेदग्राहकस्य प्रमाणस्य प्राक्प्रवृत्तेन स्वस्मिन् स्वभेदग्राहकेण मद्वाक्येनैव बाधितत्वात् निर्बाधं सत् मद्वाक्यं सर्वभेदे इति "घटात् पटस्य पटाद् घटस्य इत्येवं सर्वभेदे पर्यवस्यति इति स्यात्। इति पूर्वपक्ष्युक्तं निरस्तम्। बाध्यबाधकयोरभेदे यथा बाधकत्वं न भवति एवं भेदेऽपि बाधकत्वं न स्यात् इत्यत्र हेत्वभावात्। **पूर्वोक्त दोषाच्चेति**। भेदज्ञानस्य स्वस्मादपि भेदसिद्ध्यापत्त्या बाधकत्वाभावापत्तिः, स्वातिरिक्तसर्वभेदविषयकत्वे वाच्ये अद्वैतवादिनं प्रति असिद्धिरित्यादीतीत्यर्थः। आपो वेति नारायणीयोपनिषत्वाक्यस्य स्तुतिपरत्वेन अभेदपरत्वाभावात् भेदप्रत्यक्षाद् दुर्बलत्वम्। सर्वं न सर्वमित्यादिवाक्यस्य अनाप्तोक्तत्वेन घटो न घट इत्यादिवत् अपार्थकत्वेन च न तथात्वमिति बोध्यम्। सर्वमिथ्यात्वात् सर्वासत्त्वं नातिरिच्यते। अतः सर्वमसत् इत्यस्य सर्वं मिथ्या इत्येव स्यात्; तच्च अस्माकमिष्टमेवेति असदेवेदमग्र आसीत् इति श्रुतिः, विमतम् असत् ज्ञेयत्वादित्यनुमानं स्वबाधकस्य सत्त्वे व [सदेव] सोम्येदमग्र आसीदित्यादेः असत्त्वं गृहीत्वा सर्वासत्त्वं बोधयेत्; तत्राह—**सर्वासत्त्वमिति**। प्रत्यक्षादिगृह्यमाणस्य अलीकत्वं वक्तुमशक्यम्, अतो मिथ्यात्वरूपम् असत्त्वं वाच्यं तच्चेष्टम्। वस्तुतस्तु उक्तवाक्यं व्याकृतप्रपञ्चनिषेधम् अग्रकाले बोधयति न असत्त्वमिति भावः।

यदुक्तं सिद्धान्तिना—क्वचिद्धाराविश्रान्तौ तत्रैव लब्धावकाशा श्रुतिः सर्वाद्वैतत्वे पर्यवस्यतीति [अद्वैतसि०, पृ० ५१८]; तत्र पृच्छते सर्वस्य अद्वैते पर्यवसानं किं सर्वस्य मिथ्यात्वे पर्यवसानम्? अथ वा सर्वस्य ब्रह्माभिन्नत्वे पर्यवसानम्? अन्यथा अद्वैते पर्यवसानमेव अद्वैतश्रुतेर्न स्यादिति पूर्वपक्षी

क्यायोगात्। द्वितीये 'इदं रजतं', 'गौरोऽह'मित्यादिभ्रयाणां प्रमात्वं स्यात्; आत्मनि देहादिभेदस्यानृताद्व्यावृत्तेश्च बोधकानां वेदान्तानां 'नेदं रजत' मित्यादिबाधकस्य चाप्रामाण्यं स्यात्। घटज्ञानेनैव तद-भिन्नब्रह्मतदभेदादेः सर्वस्यापि वस्तुतो ज्ञातत्वेन सार्वज्ञ्यम्, वेदान्तानां वैयर्थ्यम्, सद्योमोक्षश्च स्यात्। सुखदुःखबन्धमोक्षभेदादभेददूषणभूषण-जयपराजयभ्रान्तिप्रमादादेरपि वस्तुतो भेदाभावेन सर्वसङ्करापत्त्या स्वक्रियास्वन्यायस्ववचनविरोधाश्च स्युरिति—चेत् ॥१०॥

---

शङ्कते—ननु श्रुत्या सर्वस्य मिथ्यात्वं वा बोध्यते, ब्रह्माभिन्नत्वं वा ? आद्ये सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यं न स्यात्; सत्यानृतयोरैक्या-योगात्। द्वितीये इदं रजतं गौरोऽहमित्यादिभ्रमाणां प्रमात्वं स्यात्। आत्मनि देहादिभेदस्य अनृताद्व्यावृत्तेश्च बोधकानां वेदान्तानां नेदं रजतमित्यादिबाधकस्य च अप्रामाण्यं स्यात्। घटज्ञाने नैव तदभिन्न-ब्रह्मतदभेदादेः सर्वस्यापि वस्तुनः ज्ञातत्वेन सार्वज्ञ्यं वेदान्तानां वैयर्थ्यं सद्यो मोक्षस्य स्यात्। सुखदुःखबन्धमोक्षभेदात् अभेददूषणभूषणजय-पराजयभ्रान्तिप्रमादादेरपि वस्तुतो भेदाभावेन सर्वसङ्करापत्त्या स्वक्रियास्वन्यायस्ववचनविरोधाश्च स्युरिति चेत्। एकमेवाद्वितीय-मित्यादिश्रुत्या मिथ्यात्वं प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपं वा बोध्यते ? अयम्भावः—अद्वितीयपदेन स्वद्वितीयत्वेन प्रतीते ब्रह्मणि द्वितीयाभावबोधनात्, द्वितीयस्य मिथ्यात्वं बोध्यते। ब्रह्माभिन्नत्वं वेति। अद्वितीयपदस्य द्वितीयत्व-रूपविशेषणनिषेधपरत्वेन ब्रह्माद्वितीयत्वस्य ब्रह्मभेदव्यापकतया द्वितीयत्वनिषेधात् व्यापकनिवृत्त्या व्याप्यनिवृत्तिन्यायेन भेदनिषेधस्य आर्थिकतया लाभः। तथा च अद्वितीयपदेन ब्रह्माभिन्नत्वस्य लाभः। तथा च अद्वितीयश्रुत्या प्रपञ्चस्य मिथ्यात्वं प्रपञ्चस्य ब्रह्माभिन्नत्वं वा लभ्यते। एतयोः पक्षयोः प्रथमपक्षे दोषमाह—सर्वं खल्विदं ब्रह्मेति। सामानाधिकरण्यं न स्यात् श्रुत्या प्रपञ्चस्य मिथ्यात्वबोधनात्, ब्रह्मप्रपञ्चयोः सत्यमिथ्यावस्तुनोः सामानाधिकरण्यमैक्यं न स्यात् इत्युक्तं—सत्या-नृतयोरैक्यायोगादिति। द्वितीये पक्षे दोषमाह—इदं रजतमित्यादिभ्रमाणां प्रमात्वं स्यात् प्रपञ्चमात्रस्य ब्रह्माभिन्नत्वेन सत्यत्वात्। इदं रजतमित्यादिब्रह्माभिन्न-

न आद्ये 'मृद्घटः' 'इदं रजत' मित्यादाविव उपादानोपादेयभावेनापि सामानाधिकरण्योपपत्तेः। द्वितीये वस्तुतो भेदाभावेऽपि आविद्यकभेदमादाय सर्वव्यवस्थोपपत्तेः। न च—भेदस्याप्यनाविद्यकब्रह्माभिन्नत्वेनाविद्यकत्वायोग इति—वाच्यम्; आविद्यकत्वस्याप्याविद्यकस्यैवाङ्गीकारात, अथाविद्यकत्वस्यापि ब्रह्माभिन्नत्वात् कथमाविद्यकत्वमिति चेत्, तस्मिन्नपि तस्य कल्पितत्वादिति गृहाण ॥११॥

---

सत्यविषयकज्ञानानां भ्रमत्वं न स्यात्, सत्यविषयकत्वेन प्रमात्वमेव स्यात्। आत्मनि गौरदेहाभेदरूपस्य अर्थस्य ब्रह्माभिन्नत्वेन सत्यत्वादित्यर्थः। अतिप्रसंगान्तरमाह—आत्मनि देहादि भेदस्येति। आत्मनि जीवे देहाभेदस्य आत्मनि ब्रह्मणि अनृताभेदस्यैव सत्त्वेन तद्भेदस्य च मिथ्यात्वात् शरीरात्मनोर्भेदबोधकानां तस्मात् शरीरात् प्रवृहेन्मुञ्जादिवेषिकां धैर्येण इत्यादिवेदान्तानाम् अप्रामाण्यं स्यात्। तथा ब्रह्मणि प्रपञ्चभेदबोधकानां स एष नेति नेतीत्यादीनां वेदान्तानामप्रामाण्यं स्यात्। अतिप्रसंगान्तरमाह—घटज्ञानेनैवेति। प्रपञ्चस्य ब्रह्माभिन्नत्वात् घटस्यापि ब्रह्माभिन्नत्वमेव। तथा च ब्रह्माभिन्नघटज्ञानेनैव घटाभिन्नस्य ब्रह्मणः ब्रह्माभेदादेः सर्वस्यापि वस्तुतो ज्ञातत्वात् घटज्ञातुः सर्वज्ञत्वं घटज्ञानेनैव ब्रह्मणो ज्ञातत्वात् वेदान्तानां वैयर्थ्यञ्च सकृद् घटज्ञानेनैव मोक्षश्च स्यात्। सर्वेषां ब्रह्माभिन्नत्वात्, सर्वेषामपि परस्परमभिन्नत्वेन सुखदुःखादीनाम् अभिन्नत्वेन सर्वसंकरापत्तिः। स्वक्रियास्वन्यायस्ववचनविरोधानां सर्वेषामपि भेदघटितत्वेन सर्वाभेदाङ्गीकारे सर्व संकरापत्त्या तद्विरोधाः स्युरित्यर्थः ॥१०॥

११—उभयमपि सिद्धान्तानुकूलमिति सिद्धान्ती समाधत्ते—न, आद्ये मृद्घटः इदं रजतमित्यादाविव उपादानोपादेयभावेनापि सामानाधिकरण्योपपत्तेः। द्वितीये वस्तुतो भेदाभावेऽपि आविद्यकभेदमादाय सर्वव्यवस्थोपपत्तेः। न च भेदस्यापि अनाविद्यकब्रह्माभिन्नत्वेन आविद्यकत्वायोगः इति वाच्यम्? आविद्यकत्वस्यापि आविद्यकस्यैव अङ्गीकारात्। अथ आविद्यकत्वस्यापि ब्रह्माभिन्नत्वात् कथमाविद्यकत्वमिति चेत्? तस्मिन्नपि तस्य कल्पितत्वादिति गृहाण। अद्वैतश्रुत्या प्रपञ्चस्य मिथ्यात्वबोधने सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यं न स्यात्। सत्यमिथ्यावस्तुनोः

ननु—मुक्तावाविद्यकस्यापि भेदस्याभावेनानन्दस्य दुःखाभिन्नत्वेना-पुरुषार्थत्वापातः, तत्तदसाधारणस्वभावस्य तत्र तत्राभावेऽपि तत्तदभेदे

---

सामानाधिकरण्याभावात् इति पूर्वपक्षिणा यदुक्तं तन्न संगतमित्याह—न आद्ये इति। आद्ये अद्वैतश्रुत्या प्रपञ्चस्य मिथ्यात्वबोधने मृद्घट इतिवत् उपादानोपादेयभावेन सामानाधिकरण्योपपत्तेः। मृद् यथा घटस्योपादानमेवं ब्रह्म इदं शब्दाभिधेयस्य सर्वस्योपादानं पारिणामिकोपादानत्ववैवर्तिकोपादानत्वाभ्यां भेदेऽपि उभयसाधारणं स्वात्मनि कार्यजनिहेतुत्वरूपमुपादानत्वं वर्तते एवेति न दोषः। पूर्वपक्षिमते आरोपितस्यं रजतादेरसत्वेऽपि तैः सदसतोः सामानाधिकरण्यं स्वीक्रियते। अस्मन्मते सत्यमिथ्यावस्तुनोः उपादानोपादेयभावेन सामानाधिकरण्ये ते कं दोषं पश्यन्तीति भावः। द्वितीयपक्षे—अद्वैतश्रुत्या प्रपञ्चस्य ब्रह्माभिन्नत्वं बोध्यते इति पक्षे प्रपञ्चब्रह्मणोः वस्तुतो भेदाभावेऽपि अविद्या प्रयुक्तभेदमादाय सर्वव्यवहारोपपत्तेः। तदुक्तं खण्डने—

नानात्वमवलम्ब्यापि वदत्यद्वैतवादिनी।
असिद्धभेदात् व्याघातः पतेदापादकात् कुतः॥ इति

न च सर्वस्य ब्रह्माभिन्नत्वात् ब्रह्मणश्च अनाविद्यकत्वात् अनाविद्यकब्रह्माभिन्नभेदस्य आविद्यकत्वं कथमिति वाच्यम्? आविद्यकत्वस्य पारमार्थिकत्वे अयं दोषः स्यात्। तदेव नास्तीत्याह—आविद्यकत्वस्यापि आविद्यकस्यैवाङ्गीकारात्। अनुपपद्यमानत्वं वस्तुनः पारमार्थिकत्वं विहन्ति न कल्पितत्वमिति भावः। न च आविद्यकत्वस्यापि ब्रह्माभिन्नत्वात् अद्वैतश्रुत्या सर्वस्य ब्रह्माभिन्नत्वप्रतिपादनादिति भावः; कथम् आविद्यकत्वम् इति वाच्यं? ब्रह्मणि कल्पिते भेदे अविद्यकत्वधर्मयुक्तस्यैव भेदस्य ब्रह्मणि कल्पितत्वात्, भेदे आविद्यकत्वमपि कल्पितमिति भावः ॥११॥

१२—भेदावच्छेदेन ब्रह्मणि कल्पितत्वमपि कल्पितमिति। भेदमात्रस्य आविद्यकत्वाभ्युपगमे मुक्तौ आविद्यकभेदाभावात् मुक्तौ आनन्दस्यापि दुःखाभिन्नत्वेन अपुरुषार्थत्वापात इति पूर्वपक्षी शङ्कते—ननु मुक्तौ आविद्यस्यापि भेदकस्याभावेन आनन्दस्य दुःखाभिन्नत्वेन अपुरुषार्थत्वापातः, तत्तदसाधारणस्वभावस्य तत्र तत्र अभावेऽपि तत्तदभेदे पारिभाषिकोऽयमभेदो भेदे

पारिभाषिकोऽयमभेदो भेदे पर्यवस्येत्, असाधारणरूपेण भेदमभ्युपेत्य [गम्य] सद्रूपेण भेदनिषेधेऽपि इष्टापत्तिरप्रसक्तनिषेधश्चेति—चेत्। न, एकस्यामेव ब्रह्मव्यक्तौ तत्तदसाधारणस्वभावानां कल्पितत्वेनासत्त्वात् सर्वकल्पनानिषेधकाले कल्पितधर्मविच्छिन्नभेदाभेदादिप्रसक्तेरयोगात्। अत एव नाप्रसक्तप्रतिषेध इष्टापत्तिर्वा; 'सद् द्रव्यं' 'सन् गुण' इत्यादि—

---

पर्यवस्येत्, असाधारणरूपेण भेदमभ्युपगम्य सद्रूपेण भेदनिषेधे इष्टापत्तिरप्रसक्तनिषेधश्च इति चेत्। आविद्यकभेदेन सुखदुःखव्यवस्थाङ्गीकारे मोक्षेऽविद्याया अभावेन आविद्यकभेदाभावत् आनन्दस्यापि दुःखात्मकत्वापत्त्या अपुमर्थत्वं स्यात्। ननु मोक्षगतनन्दस्य वस्तुगत्या दुःखाभेदेऽपि वस्तुगत्या तस्य-प्रतिकूलवेदनीयत्वाभावेन मोक्षस्य पुमर्थत्वमुपपद्यते इति चेत्। तत्राह तत्तदसा-धारणस्वभावस्येति। दुःखासाधारणस्वभावस्य निरुपाधिकप्रतिकूलवेदनीयत्वस्य आनन्दाभिन्नदुःखे अभावेऽपि मोक्षे सुखस्य दुःखाभेदः पारिभाषिको भवेत्। असाधारणस्वभाववतो दुःखस्य सुखाभेदो नाङ्गीकर्तुं शक्यते। असाधारणस्वभाव-हीनस्य दुःखस्य सुखाभेदेऽसाधारणस्वभाववतोः सुखदुःखयोर्भेद एव स्यात्; भेदे अभेदोक्तिपरिभाषामात्रम्। नैतावता सुखदुःखयोरभेदः सिद्ध्यतीति भावः।

ननु मुक्तौ आनन्ददुःखयोरनुकूलवेदनीयत्वप्रतिकूलवेदनीयत्वरूपासाधारण-रूपाभ्यां भेदमङ्गीकृत्य सत्त्वेन भेदो नास्ति इति सद्रूपमात्रेण एव भेदो निषि-ध्यते, अतो मौक्तानन्दस्य सत्त्वेन अभेदेऽपि असाधारणरूपेण भेदसद्भावात् न अपुरुषार्थत्वप्रसङ्ग इत्यत आह—इष्टापत्तिः। सर्वं सदिति सत्त्वेन अभेदस्य पूर्वपक्षिणा अङ्गीकारादित्यर्थः। सत्त्वेन अभेदेऽपि सादृश्यलक्षणोऽभेदः स्यात् न मुख्याभेदः इत्यस्वरसादाह—अप्रसक्त प्रतिषेधापत्तेश्च इति। आनन्दादिकं सन्न भवतीति सत्त्वावच्छिन्नभेदस्य प्रसक्त्यभावेन सद्रूपमात्रभेदस्य निषेधेऽप्रसक्त-निषेधापत्तिरित्यर्थः।

समधत्ते सिद्धान्ती—न, एकस्यामेव ब्रह्मव्यक्तौ तत्तदसाधारण-स्वभावानां कल्पितत्वेन असत्त्वात् सर्वकल्पनानिषेधकाले कल्पित-धर्मावच्छिन्नभेदाभेदादिप्रसक्तेरयोगात्। अत एव न अप्रसक्त-प्रतिषेध इष्टापत्तिर्वा सद्द्रव्यं सन् गुणः इत्यादिप्रतीत्या प्रसक्तानां

प्रतीत्या प्रसक्तानां तत्तद्धर्माणां ब्रह्मणि प्रतिषेधात्। अतः सर्वधर्म-शून्याया एकस्या एव सद्व्यक्तेश्चिदानन्दरूपायाः प्रतिपादनान्न परिभाषिकोऽयमभेद इति सिद्धम्। तदेवं 'सर्वं ब्रह्माभिन्नमि'ति मते मिथ्याभूतस्य ब्रह्मभेदेऽपि सन्मात्रमेव ब्रह्माभिन्नमिति मते वा न प्रत्यक्षादिविरोधः, नापि पूर्वोत्तरविरोधः ॥१२॥

इत्यद्वैतश्रुतेर्बाधोद्धारः।

तत्तद्धर्माणां ब्रह्मणि प्रतिषेधात्। अतः सर्वधर्मशून्याया एकस्या एव सद्व्यक्तेश्चिदानन्दरूपायाः प्रतिपादनात् न पारिभाषिकोऽयमभेद इति सिद्धम्। तदेवं सर्वं ब्रह्माभिन्नमिति मते मिथ्याभूतस्य ब्रह्मभेदेऽपि सन्मात्रमेव ब्रह्माभिन्नमिति मते वा न प्रत्यक्षादिविरोधः, नापि पूर्वोत्तरविरोधः।

द्वैतमात्रकल्पनाधिष्ठानभूतायाम्, एकस्यामेव ब्रह्मव्यक्तौ अविद्यया तत्तद-साधारणस्वभावानां सुखदुःखवह्निजलाद्यसाधारणस्वभावानां कल्पितत्वेन ब्रह्मनिष्ठ-त्रैकालिकनिषेधप्रतियोगित्वात्। कल्पिताधर्माः कल्पनाधिष्ठानं कालत्रयेऽपि न स्पृशन्तीति भावः। चरमतत्त्वसाक्षात्कारेण सर्वकल्पनोपादानभूता मूलविद्या विनश्यति, मूलाविद्यायां निवृत्तायां भेदाभेदादिप्रसक्तेर्ज्ञानस्य अभावात्। अत एव अद्वैतश्रुत्या न अप्रसक्तस्य प्रतिषेधः क्रियते—सद्द्रव्यं सन् गुण इत्यादिप्रतीत्या द्रव्यत्व-गुणत्वादिधर्माणां ब्रह्मणि प्रसक्तानामेव प्रतिषेधात्। द्वितीयमात्रस्य ब्रह्मणि कल्पि-तत्वात् अद्वैतश्रुत्या कल्पितमात्रस्य निषेधे पूर्वपक्षिण इष्टापत्तिर्न सम्भवतीति भावः। यद्विषयप्रमया यादृशभेदस्य ज्ञानमुच्छिद्यते तादृशभेदविरोधी स एव अभेदः। भेदविरोधिन एवाभेदत्वादिति। नायं पारिभाषिकोऽभेदः इति भावः। अद्वैत-श्रुत्या सर्वं ब्रह्माभिन्नं बोध्यते इति मतेनेदं रजतमित्यादिप्रत्यक्षादिविरोधो न आविद्यकभेदमादाय व्यवस्थोपपत्तेरिति। मतान्तमाह—मिथ्याभूतस्येति—एक-मेवाद्वितीयमित्यादिश्रुत्या मिथ्यात्वेन बोधितस्य द्रव्यादेः सद्रूपेणैव द्रव्यादेः ब्रह्म-भेदाभावानुयोगित्वं न तु द्रव्यत्वादिना, तेन रूपेण ब्रह्मभेदानुयोगित्वस्य सत्त्वेन

विरोधात् । अत एव ब्रह्मभेदस्य पारमार्थिकत्वेनैवाभावस्तत्र स्वीक्रियते । न तु ब्रह्मभेदत्वेन, येन रूपेण प्रतियोगी यत्र वर्तते तेन रूपेण अभावस्य तत्रानभ्युपगमात् । सन्मात्रमेव ब्रह्माभिन्नमिति द्वितीयमते सर्वं खल्विदमित्यादिश्रुतिविरोधप्रयुक्तः पूर्वापरश्रुतिविरोधो न सर्वपदमपि लक्षणया सर्वाधिष्ठानीभूतं सन्मात्रमेव लक्षयति इति भावः ॥१२॥

इतिश्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यामद्वैतश्रुतेर्बाधोद्धारविवरणम् ।

## अथ एकमेवाद्वितीयमित्यादिश्रुत्यर्थविचारः

ननु—यद्यपि 'सलिल एको द्रष्टा अद्वैत' इत्यत्र सलिलशब्दस्य तत्सादृश्यात् स्वच्छत्वमात्रपरत्वात् तस्य च सर्वमलासंसर्गित्वस्वरूपस्याद्वैतेऽप्युपपत्तेः 'सदेव सोम्येदमग्र आसीदित्यत्र चाग्रपदस्य तदैक्षत नामरूपे व्याकरोदित्यादेश्च कालेक्षणनामरूपात्मकप्रपञ्चप्रापकस्याविद्यकद्वैतविषयकत्वेन वास्तवाद्वैतविरोधित्वाभावः। तथापि "सदेव-सोम्येदमग्र आसीदि"त्यनेन इदं शब्दोदितस्य विश्वस्य सदभेदेन सत्त्व-मुक्त्वा पुनरद्वितीयपदेन तन्निषेधे व्याघातः, न हि 'सदासी' दित्य-स्यासदासीदित्यर्थ इति—चेत्।

---

मानान्तराविरुद्धपूर्वोत्तराविरुद्धश्च श्रुत्यर्थोवर्णनीयः। तत्र एकमेवेति श्रुतेर्मानान्तरेण प्रत्यक्षेण विरोधमुक्त्वा पूर्वोत्तरविरोधमाह—ननु यद्यपीति। ननु यद्यपि सलिल एको द्रष्टा अद्वैत इत्यत्र सलिलशब्दस्य तत्सादृश्यात् स्वच्छत्वमात्रपरत्वात् तस्य च सर्वमलासंसर्गित्वस्वरूपस्य अद्वैतेऽप्युपपत्तेः। सदेव सोम्येदमग्र आसीदित्यत्र च अग्रपदस्य तदैक्षत नामरूपे दिव्याकरोदित्यादेश्च कालेक्षणनामरूपात्मकप्रपञ्चप्रापकस्याविद्यकद्वैतविषयकत्वेन वास्तवाद्वैतविरोधित्वाभावः। तथापि सदेव सोम्येदमग्र आसीदित्यनेन इदं शब्दोदितस्य विश्वस्य सदभेदेन सत्त्वमुक्त्वा पुनरद्वितीयपदेन तन्निषेधे व्याघातः, न हि सदासीदित्यस्य असदासीदित्यर्थः इति चेत्? सलिल एको द्रष्टा अद्वैतो भवति एष ब्रह्मलोकः सम्राडिति—[बृह० आ० ४।३।३२] एतद्वाक्यं भामत्यामेवं व्याख्यातं सलिलमिव 'सलिलः सलिलप्रातिपदिकात् सर्वप्रातिपदिकेभ्यः इत्युपमानादाचारे क्विपि कृते पचाद्यचि च कृते रूपम्। एतदुक्तम् भवति यथा सलिलमम्भोनिधौ प्रक्षिप्तं तदेकीभावमुपयाति एवं द्रष्टापि ब्रह्मणेति [ब्रह्मसूत्रम्, पृ० ४।४।१६] विवतं चैतत् विस्तीर्यकल्पतरुकृद्भिः, बाहुल्यभयादुपेक्षितम्। सलिलशब्दस्य नपुंसकत्वात् श्रुतौ पुलिङ्गत्वानुपपत्तिमाशङ्क्य भामत्याम् एवं व्याख्यातं

न, सद्व्यतिरेकेण नासीदित्यर्थस्यैव निषेधार्थत्वात्। विवृतं चैतत् भाष्यकारादिभिरारम्भणाधिकरणे। न च—सद्व्यतिरेकेणासत्त्वोक्तौ सदात्मना सत्यत्वमागच्छतीति—वाच्यम्; आगच्छतु नाम, को हि

---

तदनुसारेण सलिलपदस्य अयमर्थो लभ्यते—सलिलमिवाचरति तत्तुल्यो वर्तते इत्यर्थः। एतदनुसारेण मूले उक्तम्—सलिलशब्दस्य तत्सादृश्यात् स्वच्छत्वमात्रपरत्वात् सलिलवदाचारश्च सर्वमलसंसर्गित्वं सलिलवत् सर्वमलासंसर्गित्वरूपस्य अद्वैतेऽप्युपपत्तेः। इमामेव श्रुतिं भेदसिद्धौ शंकरमिश्र अन्यथा पठितवान्—स किल एको द्रष्टेति। तदनूद्य आचार्येण अद्वैतरत्नरक्षणे स पाठस्तिरस्कृतः। [अद्वैतरत्नरक्षणम्, पृ० ४]।' 'सदेव सोम्येदमग्र आसीत् [छान्दो० ६।२।१], तदैक्षत बहुस्याम् प्रजायेयेति [छान्दो० ६।२।३], जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्' [छान्दो० ६।३।३] इत्यादिश्रुतिषु अग्रपदेन कालस्य, ऐक्षतपदेन ईक्षणस्य, नामरूपे व्याकरोदित्यनेन नामरूपप्रपञ्चस्य प्रापनात् प्रापितस्यापि कालादेराविद्यकतया आविद्यकद्वैतविषयकत्वेन यद्यपि वास्तवाद्वैतविरोधित्वाभावः तथापि सदेव सोम्येदमग्र आसीत् [छान्दो० ६।२।१] इति पूर्वभागस्य एकमेवाद्वितीयमिति उत्तरभागेन व्याघातः स्यादेव। इदंशब्दोदितस्य विश्वस्य सदभेदेन सत्त्वम् इदं सदिति पूर्वभागेन उक्त्वा पुनरुत्तरभागस्थाद्वितीयपदेन सदभिन्नविश्वस्य निषेधे व्याघातः स्यात्। सद्वितीयत्वेन प्रतीते ब्रह्मणि द्वितीयाभावबोधनात् द्वितीयस्य मिथ्यात्वं स्यात्। इदंशब्दोदितस्य विश्वस्य सदभेदं प्रतिपाद्य पुनर्विश्वस्य अद्वितीयपदेन मिथ्यात्वबोधने व्याघातः स्यात्। इदं सदासीदित्यस्य इदं नासीत् इत्यर्थे पर्यवसाने व्याघातः स्यात्। एतत्पूर्वपक्षोपसंहारे उक्तं पूर्वपक्षिणा—तस्मादद्वैतवाक्यमध्यस्थम् अद्वैतवाक्यम् उपांशुयाजवाक्यमध्यस्थविष्ण्वादिवाक्यवत् पूर्वोत्तरद्वैतवाक्यानुसारेण नेयमिति ॥१॥

२—सर्वासु उपनिषत्सु उपक्रमोपसंहारयोरद्वैते एवं पर्यवसानात् अद्वैतस्यैव महाप्राकरणिकतया अवान्तरवाक्यानां महाप्राकरणिकार्थानुगुणतया व्याख्येयत्वान्नैवमिति समाधत्ते सिद्धान्ती—न, सद्व्यतिरेकेण नासीदित्यर्थस्यैव निषेधार्थत्वात्। विवृतं चैतत्भाष्यकारादिभिरारम्भणाधिकरणे। न च सद्व्यतिरेकेण असत्त्वोक्तौ सदात्मना सत्यत्वमागच्छति इति वाच्यम्,

ब्रह्माभिन्नस्यासत्त्वसाधनाय प्रवृत्तो यो बिभीयात्। अद्वैतवाक्यस्य च षड्विधतात्पर्यलिङ्गवत्तया बलवत्त्वेनाविघ्नकद्वैतप्रतिपादकत्वं सृष्ट्यादिवाक्यानामिति श्रवणस्वरूपनिरूपणे वेदान्तकल्पलतिकायामभिहितमस्माभिः। इहाप्यभिधास्यते षड्विधतात्पर्यलिङ्गानि प्रदर्शयद्भिः। अत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञयोपक्रमात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी' त्युपसंहाराच्च अद्वैतस्यैव महाप्राकरणिकतया तदनुसारेण तद्वाक्यस्थपदानां व्याख्येयत्वावधारणात् नानार्थपदानामर्थान्तरोपस्थापकत्वसंभवेऽपि प्रकृतवाक्यार्थानन्वयितया तत्परित्यागेन प्रकृतवाक्यार्थानुकूलपदार्थोपस्थितिपरत्वमेवास्थेयम् ॥२॥

---

आगच्छतु नाम, को हि ब्रह्माभिन्नस्य असत्त्वसाधनाय प्रवृत्तो यो बिभीयात्। अद्वैतवाक्यस्य च षड्विधतात्पर्यलिङ्गवत्तया बलवत्त्वेन अविघ्नकद्वैतप्रतिपादकत्वं सृष्ट्यादिवाक्यानामिति श्रवणस्वरूपनिरूपणे वेदान्तकल्पलतिकायाम् अभिहितमस्माभिः। इहापि अभिधास्यते षड्विधतात्पर्यलिङ्गानि प्रदर्शयद्भिः। अत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया उपक्रमात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'त्युपसंहाराच्च अद्वैतस्यैव महाप्राकरणिकतया तदनुसारेण तद्वाक्यस्थपदानां व्याख्येयत्वावधारणात् नानार्थपदानामर्थान्तरोपस्थापकत्वसम्भवेऽपि प्रकृतवाक्यार्थानन्वयितया तत्परित्यागेन प्रकृतवाक्यार्थानुकूलपदार्थोपस्थितिपरत्वमेवास्थेयम्। 'एकमेवाद्वितीयमिति श्रुतौ एवकाराद्वितीयपदाभ्यां सद्व्यतिरेकेण अन्यत् नासीत् इत्येव निषेधः प्रतिपाद्यते। तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादिसूत्रैरारचिते आरम्भणाधिकरणे भाष्यकारभामतीकारादिभिरेतद्विवृतम्। तदनन्यत्वमिति न प्रपञ्चस्य सदनन्यत्वं ब्रूमः, किन्तु सद्व्यतिरेकेण प्रपञ्चस्य अभावं ब्रूमः; कुत एवमित्याह आरम्भणशब्दादिभ्यः। सूत्रकृतैव आरम्भणशब्दादीनां हेतुत्वेनोपन्यस्तत्वात्, आरम्भणशब्दे हि 'वाचारम्भणविकारो नामधेयं मृत्तिकेत्येव सत्यमि'ति कारणमात्रस्यैव सत्यत्वावधारणात् कार्यजातस्य मिथ्यात्वं प्रतिपाद्यते, उभयसत्यतायां हि मृत्तिकेत्येव सत्यमित्यवधारणं न स्यादित्यर्थः। किञ्च उपक्रमो हि येनाश्रुतं श्रुतं भवतीति

एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय प्रतिज्ञातार्थोऽपादनायैव हि परः सन्दर्भः प्रवर्तते, न प्रतिज्ञातार्थविघाताय, तथात्वे वरघाताय वधूद्वाहः इति न्यायः समापतेत् । तथा च उपक्रमवाक्यपराक्रममज्ञात्वा पूर्वपक्षिभिर्यत् प्रलपितं तत्

"पूर्वपरपरामर्शरहितैः प्राज्ञमानिभिः ।
कल्पितेयं गतिनपा विदुषामनुरञ्जिका ॥ इति

कल्पतरुक्त्यैव निरस्तम् । न च प्रपञ्चस्य सद्भिन्नत्वेन मिथ्यात्वप्रतिपादनेऽपि सदात्मना प्रपञ्चस्य सत्यत्वम् आयास्यति इति वाच्यम् ? सद्भिन्नतया सत्यत्वमस्माकमिष्टमेवेति नास्माकं हानिरिति भावः । उपक्रमादिषड्विधतात्पर्यनिर्णायकलिङ्गोपेतत्वात् अद्वैतवाक्यस्य निस्तात्पर्यकद्वैतवाक्यापेक्षया बलवत्त्वात्; आविद्यकद्वैतप्रतिपादकत्वेन सृष्ट्यादिवाक्यानाम् अद्वैतवाक्यापेक्षया दुर्बलत्वादिति प्रतिपादितं वेदान्तकल्पलतिकायाम् । इहाप्यद्वैतसिद्धौ भेदश्रुतेः षड्विधतात्पर्यलिङ्गभंगप्रकरणे षड्विधतात्पर्यलिङ्गानि प्रदर्शयद्भिः अद्वैतश्रुतेर्बलवत्त्वं प्रदर्शयिष्यते । अद्वैतवाक्यस्य षड्विधतात्पर्यलिङ्गवत्त्वञ्च एवम्—छान्दोग्योपनिषदि-षष्ठप्रपाठके—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"त्युपक्रमः । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीति तस्यैवोपसंहारः । तस्यैव तत्त्वमसीति नवकृत्वोऽभ्यासः । अपूर्वत्वन्तु तस्य प्रमाणान्तरानधिगतत्वात् सुप्रसिद्धमेव । तद्विज्ञानफलकीर्तनञ्च—आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति । येनाश्रुतं श्रुतं भवतीत्यर्थवादः । उपपत्तिप्रदर्शनञ्च—'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'त्यादि । विवरणस्य नवमवर्णकेऽपि "तथा हि तत्त्वमसीति नवकृत्वोऽभ्यस्तस्य अनेन जीवेनात्मना अनुप्रविश्य इत्यैकात्म्यसिद्धयेऽर्थवादो गृह्यते इत्यारभ्य तदेवं सर्ववेदान्तेषु तत्र तत्र अवस्थात्रयपर्युदासेन ब्रह्मात्मैकत्वं प्रतिपाद्यमानं द्रष्टव्यम् ।" षड्विधतात्पर्यलिङ्गवत्त्वेन अद्वैतश्रुतेर्बलवत्त्वम् अनन्यार्थत्वमित्यर्थः । अद्वैतात्मप्रतिपादनपरतया सृष्ट्यादिश्रुतीनामाविद्यकद्वैतप्रतिपादकत्वम् । उक्तञ्च—

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ।
नान्यत्र कारणात्कार्यं न चेत्तत्र क्व तद्भवेत् ॥ इति

सृष्ट्यादिश्रुतेः स्वार्थे तात्पर्याभावात् दुर्बलत्वम्। सृष्ट्यादिश्रुत्या सृष्टेर-प्रतिपादने जीवानां भोगो न स्यादिति न वाच्यं; स्वभाववादे मीमांसकमते च सृष्ट्यादिश्रुत्या सृष्टेरप्रतिपादनेऽपि तेषां भोगस्य अप्रतिहतत्वात्। उपासनार्था सृष्टिश्रुतिरिति चेत्, न आरोपेणापि उपासनायाः सम्भवात्। अतो अद्वैतात्म-प्रतिपादनपरतैव सृष्ट्यादिश्रुतीनां छान्दोग्ये षष्ठप्रपाठकस्य एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनाय प्रवृत्तस्य, अन्त्ये च ऐतदात्म्यमिदं सर्वमित्यादितत्त्वमसी-त्यन्ते उपसंहाराच्च, अद्वैतस्यैव समस्तप्रपाठकप्रतिपाद्यतया महाप्राकरणिकत्वम्; एवमेव बृहदारण्यकेऽपि 'आत्मत्येवमुपासीते'ति सूत्रितब्रह्मविद्याविवरणरूपायां चतुरध्याय्याम् 'अनेन ह्येतत् सर्वं वेदे'ति, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकं 'ब्रह्म वा इदमग्र आसीत्, 'तदात्मानमेवावेत्'' 'अहं ब्रह्मास्मी'ति, 'तस्मात्तत् सर्वमभवत्' इत्यभेदेन उपक्रम्य चतुर्थाध्यायान्ते मैत्रेयीब्राह्मणे निगमनरूपे 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादिना अभेदेनैवोपसंहारात्। अध्यायचतुष्टयस्यापि अभेदपरत्वे स्थिते तदन्तर्गतस्य ब्रह्मलोकान्तरसूत्रात्म-प्रतिपादनपरस्य उत्तरब्राह्मणप्रतिपाद्यनिरुपाधिकसर्वान्तरब्रह्मप्रतिपत्त्यनुकूलस्य महा-प्रकरणानुरोधेन तद्विरोधिभेदपरत्वाभावादिति। इहापीति। अद्वैतसिद्धौ द्वितीय-परिच्छेदे भेदश्रुतेः षड्विधतात्पर्यलिङ्गभंगप्रकरणे इत्यर्थः। छान्दोग्योपनिषदि षष्ठ-प्रपाठके एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया उपक्रमादिति "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति अमतं मतम् अविज्ञातं विज्ञातमि"ति वाक्येन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा प्रदर्शिता। 'स आत्मा तत्त्वमसी'त्युपसंहारेण अद्वैतस्यैव महा-प्राकरणिकतया महाप्राकरणिकाद्वैतानुसारेणैव अवान्तरवाक्यस्थपदानां व्याख्येय-तया अवधारणात्, प्रकृतवाक्यार्थानुकूलपदार्थोपस्थापकत्वमङ्गीकरणीयम्। एतेन पूर्वपक्षिणा यदुक्तं—'सलिल एको द्रष्टा अद्वैतो भवती'त्यत्र सलिलपदेन, सदेव सोम्येदमग्र आसीदि'त्यत्र कालप्रापकेन अग्रपदेन तदैक्षत, नामरूपे व्याकरो-दितीक्षणनामरूपात्मक प्रपञ्चप्रापकेन उत्तरेण च द्वैतवाक्येन विरोधः। प्रामाण्यस्य स्वतस्त्वेन अद्वैतवाक्येन अद्वैतस्येव द्वैतवाक्येनैव द्वैतस्य सत्य-त्वसिद्धेः। यदि च अविरोधाय द्वैतवाक्यस्य लक्षणादिना अद्वैतपरत्वं वा, अतात्त्विकविषयत्वेन व्यवस्था वा, अद्वैतविरोधेन अप्रामाण्यं वा, तदा

तत्र न द्वितीयमद्वितीयमिति तत्पुरुषाभ्युपगमे न द्वितीयम्, किंतु प्रथमं तृतीयं चेत्यर्थः स्यात्, स च न संभवति; तयोरपि किंचिदपेक्ष्य द्वितीयत्वात्। अतो न विद्यते द्वितीयं यत्रेति बहुव्रीहिरेवादरणीयः। न च—एकेनैवाद्वितीयपदेन भेदत्रयनिषेधसंभवे एकावधारणपदयोर्वैयर्थ्यमिति—वाच्यम्; विजातीयं किंचिदपेक्ष्य द्वितीयत्वावच्छिन्ननिषेधस्याद्वितीयशब्दार्थत्वात्। अयं चात्र सङ्कोचो बलीवर्दपदसन्निधानात् गोपद इव सजातीयस्वगतभेदनिषेधकैकावधारणपदसन्निधिप्रयुक्त एव। तदुक्तम्—

'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः॥

---

विपरीतं किं न स्यादिति—तत् सर्वथा निरस्तं वेदितव्यम्। महाप्राकरणिकाद्वैतानुसारेणैव अवान्तरवाक्यस्थपदानां व्याख्येयत्वात्। अन्यथा महाप्रकरणात् विच्छिद्य स्वातन्त्र्येण अवान्तरवाक्यस्थपदानाम् अर्थग्रहणे "मा हिंस्यात् सर्वा भूतानी'त्यत्र सर्वभूतहिंसानुमतिः, न सुरा पातव्या इत्यत्र सुरापानानुमतिः किं न स्यात्। हिंस्यात् सर्वा भूतानि, सुरा पातव्या इति वाक्यांशद्वयं पूर्ववाक्ययोर्न वर्तते किं यत् हिंसाद्यनुमतिर्न स्यात्। तथा च पूर्वपक्षिरीत्या शास्त्रव्याख्याने महान् शास्त्रार्थविप्लवः स्यात्। स एव पूर्वपक्षिणामिष्टः, शास्त्रार्थविप्लवकारिण एव ते इति ॥२॥

३—अत्रैव पूर्वपक्ष्यन्तरमाशंक्य समाधत्ते—तत्र न द्वितीयमद्वितीयमिति तत्पुरुषाभ्युपगमे न द्वितीयं किन्तु प्रथमं तृतीयञ्च इत्यर्थः स्यात्। स च न सम्भवति तयोरपि किञ्चिदपेक्ष्य द्वितीयत्वात्। अतो न विद्यते द्वितीयं यत्रेति बहुव्रीहिरेवादरणीयः। न च एकेनैव अद्वितीयपदेन भेदत्रयनिषेधसम्भवे एकावधारणपदयोर्वैयर्थ्यमिति वाच्यं; विजातीयं किञ्चिदपेक्ष्य द्वितीयत्वावच्छिन्ननिषेधस्य अद्वितीयशब्दार्थत्वात्। अयञ्चात्र संकोचो बलीवर्दपदसन्निधानात् गोपद इव सजातीयस्वगतभेदनिषेधकैकावधारणपदसन्निधिप्रयुक्त एव तदुक्तम्—

तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
एकावधारणाद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥' इति ।
[पञ्चदशी, महाभूतविवेकः, श्लो० २०।२१]

स्वगतभेदः नानात्वरूपजीवेश्वरभेदः । सजातीयभेदोऽत्र द्रव्यत्वादिना सजातीयपृथिव्यादिभेदः । विजातीयभेदो गुणादिभेदः । अथ वा-जड़भेदो विजातीयभेदः, चैतन्यभेदः सजातीयभेदः । ज्ञानानन्दादिधर्मभेदः स्वगतभेदः ॥३॥

---

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात् सजातीयो विजातीयः शिलादितः ॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
एकावधारणाद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥
[ पञ्चदशी, महाभूतविवेकः श्लो० २०।२१ ]

इति स्वगतभेदः नानात्वरूपजीवेश्वरभेदः । सजातीयभेदोऽत्र द्रव्यत्वादिना सजातीयपृथिव्यादिभेदः । विजातीयभेदो गुणादिभेदः अथ वा जडभेदो विजातीयभेदः, चैतन्यभेदः सजातीयभेदः ज्ञानानन्दादिधर्मभेदः स्वगतभेदः । सद्वस्तुनो अद्वितीयत्वमुक्तं श्रुत्या; तत्र अद्वितीयपदस्य कोऽर्थ इति जिज्ञासायां न द्वितीयः अद्वितीय इति नञ् तत्पुरुषसमासाङ्गीकारे सद्वस्तु द्वितीयभिन्नम् इत्यर्थः स्यात् । स च न सम्भवति, तर्हि सद्वस्तु प्रथमं तृतीयं वा स्यात् तदपि न संभवति; प्रथमस्य तृतीयस्यापि वा किंचिदपेक्ष्य द्वितीयत्वात् । ब्रह्मातिरिक्तवस्त्वन्तरसत्त्वे तदपेक्ष्य ब्रह्मणः द्वितीयत्वमवर्जनीयमेव । तथा च ब्रह्म न द्वितीयमित्यर्थो न सम्भवति; एवञ्च तत्पुरुषसमासासम्भवात्, अगत्या न विद्यते द्वितीयं यत्रेति बहुव्रीहिसमासाश्रयणेन अर्थो ग्रहीतव्यः । तेन ब्रह्मव्यतिरिक्तस्य द्वितीयस्याभावसिद्ध्या ब्रह्मणोऽद्वितीयत्वं सिद्ध्यतीति भावः । 'एकमेवाद्वितीयमि'ति श्रुतौ एकेन अद्वितीयपदेनैव स्वगतसजातीयविजातीयभेदत्रयनिषेधसम्भवे एकपदस्य एवकारस्य च वैयर्थ्यं स्यात् , निषेध्यान्तरभावात् इति । न च वाच्यम् अद्वितीयपदस्य विजातीयद्वितीयनिषेधपरत्वात् अद्वितीयपदस्य द्वितीयमात्रनिषेधपरत्वे सम्भवति किमिति विजातीयद्वितीयनिषेधे

यदि च "अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेवद्वितीयोऽन्विष्यते नाश्वो न गर्दभ" इति महाभाष्यानुसारात् समानजातीयद्वितीयपरत्वं द्वितीयशब्दस्य तदा अद्वितीयशब्दस्य सजातीयभेदनिषेधपरत्वम्; विजातीयस्वगतभेदनिषेधपरत्वं तु एकावधारणपदयोर्यथेष्टं व्याख्येयम्। अथ वा अद्वितीयपदेनैव भेदत्रयनिषेधः, एकावधारणपदे तु सङ्कोचशङ्कापरिहाराय।

---

वृत्तिसङ्कोचः क्रियते इत्यत आह—अयं चात्र सङ्कोच इति। गोबलीवर्दन्यायेन अत्र सङ्कोचः, यथा गावो बलीवर्दाश्च वर्तन्ते इति प्रयोगे बलीवर्दानामपि गोत्वात् गावो वर्तन्ते इत्यनेनैव बलीवर्दानामपि प्रतीतेः बलीवर्दपदसन्निधानात् गोपदस्य बलीवर्दभिन्नगोवाचकत्वं गोपदवृत्तिसंकोचेन अङ्गीकृतम् अन्यथा बलीवर्दपदवैयर्थ्यापत्तेः; एवं प्रकृतेऽपि संकोचो बोध्यः। अयमेव ब्राह्मणवशिष्ठन्यायः। तदुक्तं पञ्चदश्यां [महाभूतविवेके श्लो० २०।२१] वृक्षस्य स्वगतो भेद इति एकपदेन एवकारेण अद्वैतपदेन च यथाक्रमं स्वगतसजातीयविजातीयभेदाः निवार्यन्ते। चिद्वस्तुनि स्वगतभेदः जीवेश्वरभेदः। सजातीयभेदः द्रव्यत्वादिना चिद्वस्तुनः सजातीयपृथिव्यादिभ्यो भेदः। चिद्वस्तुनो विजातीयभेदः गुणकर्मादिभ्यो भेदः।

ननु पृथिव्यादिकं न ब्रह्मसजातीयं, ब्रह्मणो द्रव्यत्वाभावादित्यत आह अथ वेति। अविद्यादिजडेभ्यो भेदः विजातीयभेदः। जीवेश्वरभावेन चैतन्यभेदः सजातीयभेदः। ज्ञानानन्दादिधर्मभेदः स्वगतभेदः। उक्तञ्च पञ्चपाद्याम् आनन्दो विषयानुभवो नित्यत्वमिति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते। [पञ्चपादिका, पृ० ४] ॥३॥

४—अत्रैव कश्चित् विशेषमाशङ्क्य समाधत्ते—यदि च अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्वेष्यते नाश्वो न गर्दभः इति महाभाष्यानुसारात् समानजातीयद्वितीयपरत्वं द्वितीयशब्दस्य तदा अद्वितीयशब्दस्य सजातीयभेदनिषेधपरत्वं विजातीयस्वगतभेदनिषेधपरत्वं तु एकावधारणपदयोर्यथेष्टं व्याख्येयम्। अथ वा अद्वितीयपदेनैव भेदत्रयनिषेधः एकावधारणपदे तु सङ्कोचशंकापरिहाराय।

यत्तु केनचित् प्रलपितं—द्वितीयशब्दः सहायवाची; 'असिर्द्वितीयोऽनुससार पाण्डवमि'ति प्रयोगात् । 'असिद्वितीयः असिसहायः' इति महाभाष्योक्तेश्च । तथा चाद्वितीयमसहायमित्यर्थोऽस्तु । एवमेकशब्दस्यापि नानार्थत्वेनाविरुद्धार्थमादायोपपत्तौ न मिथ्यात्वपर्यवसायिताऽऽस्थेया । तथा च 'एके मुख्यान्यकेवला' इत्यमरः, 'एकशब्दोऽयमन्यप्रधानासहायसङ्ख्याप्रथमसमानवाची'ति 'एको गोत्र' इति सूत्रे कैयटः । "ष्णान्ता षडि"ति सूत्रे महाभाष्यकारोऽपि एकशब्दोऽयं बह्वर्थः, अस्ति सङ्ख्यार्थः, अस्त्यसहायवाची, अस्त्यन्यार्थं इत्यादि व्याख्यातवान् । तथा च जीवादिभ्योऽन्यत्वं प्राधान्यं वा एकशब्दार्थोऽस्तु । एवमन्यान्यपि श्रुतिपदानि व्याख्येयानि—इति; तत् पूर्वोक्तयुक्तिभिरपास्तम् ।

---

महाभाष्यानुसारेण अद्वितीयशब्दस्य सजातीयभेद निषेधपरत्वम्, एकपदैवकारयोः विजातीयस्वगतभेदनिषेधपरत्वं यथेष्टं व्याख्येयं विनिगमनाभावादित्यर्थः । द्वितीयपदस्य स्वान्यसामान्यबोधकत्वस्य मुख्यवृत्त्यैव सम्भवात् अद्वितीयपदस्यैव द्वितीयसामान्यनिषेधपरत्वसम्भवेन पदान्तरम् एकपदमेवकारेण अवधारणं च अद्वितीयपदस्य तत्परत्वग्राहकमित्याशयेन अथ वेति पक्षान्तरमुक्तं मूले । तदर्थस्तु स्पष्ट एव । द्वितीयशब्दस्य सहायवाचित्वेन अद्वितीयशब्दात् असहायं ब्रह्मेत्यर्थसम्भवेन भेदत्रयनिषेधपरत्वं न सम्भवतीत्याशङ्क्य समाधत्ते — यत्तु केनचित् प्रलपितम्—द्वितीयशब्दः सहायवाची असिद्वितीयोऽनुससार पाण्डवमिति प्रयोगात् । असिद्वितीयो असिसहाय इति महाभाष्योक्तेश्च । तथा च अद्वितीयमसहायमित्यर्थोऽस्तु । एवम् एकशब्दस्यापि नानार्थत्वेन अविरुद्धार्थमादाय उपपत्तौ न मिथ्यात्वपर्यवसायिता आस्थेया तथा च एके मुख्यान्यकेवला इत्यमरः, एकशब्दोऽयमन्यप्रधानासहायसंख्याप्रथमसमानवाचीति 'एको गोत्रे' इति सूत्रे कैयटः । 'ष्णान्ता षड्' इति सूत्रे महाभाष्यकारोऽपि एकशब्दोऽयं बह्वर्थः अस्ति संख्यार्थः अस्त्यसहायवाची अस्त्यन्यार्थं इत्यादि व्याख्यातवान् । तथा च जीवादिभ्योऽन्यत्वं प्राधान्यं वा एकशब्दार्थोऽस्तु एवमन्यान्यपि श्रुतिपदानि व्याख्येयानीति; तत् पूर्वयुक्तिभिर-

विस्तरेण च वक्ष्यते तात्पर्यनिरूपणे। तदेवं सद्रूपे ब्रह्मणि पदत्रयेण भेदत्रयनिषेधात् तद्भिन्नमिथ्यात्वे पर्यवसितम् 'एकमेवाद्वितीय'मिति वाक्यम्। एव मन्या अपि श्रुतयः स्मृतयश्च ग्रन्थविस्तरभयान्नोदाहृताः स्वयमेव सूरिभिराकरे द्रष्टव्याः।

इत्यद्वैतसिद्धौ सर्वाद्वैतश्रुतेः अद्वैततात्पर्यकत्वनिर्णयः।

---

पास्तम्। विस्तरेण च वक्ष्यते तात्पर्यनिरूपणे। तदेवं सद्रूपे ब्रह्मणि पदत्रयेण भेदत्रयनिषेधात् तद्भिन्नमिथ्यात्वे पर्यवसितम्—एकमेवाद्वितीयमिति वाक्यम्। एवमन्या अपि श्रुतयः स्मृतयश्च ग्रन्थविस्तरभयान्नोदाहृताः। स्वयमेव सूरिभिराकरे द्रष्टव्याः।

अत्र पूर्वपक्षिणा महाप्रकरणमन्धवददृष्ट्वा महाप्रकरणान्तर्गतावान्तरवाक्यघटकपदानां महाप्राकरणिकार्थान् अननुकूलान् प्रत्युत महाप्राकरणिकार्थप्रतिकूलान् याहच्छिकप्रयुक्तवाक्यान्तर्गतपदसाम्येन बहुविधान् अर्थान् उत्प्रेक्ष्य केवलं बहुभाषित्वमात्मनः प्रख्यापितम्। तस्य तस्य प्रलापस्य उत्तरप्रदानेऽपि लज्जमानः पूर्वपक्षान् संक्षेपेणानुद्य पूर्वोक्तयुक्त्यैव समाधत्ते मूलकारः—तत् पूर्वोक्तयुक्तिभिरपास्तमिति। अत्र पूर्वपक्षिणां प्रलापाः कौतुकोद्दीपनाय प्रदर्श्यन्ते—किञ्च द्वितीयशब्दः सहायवाची असिद्वितीयोऽनुससार पाण्डवमिति प्रयोगात्। असिद्वितीयः असिसहाय इति गम्यते इति महाभाष्योक्तेश्च। तथा च अद्वितीयम् असहायमित्यर्थोऽस्तु। यद्वा द्वितीयशब्दः प्रकृतसमाने एव द्वितीये व्युत्पन्नः, न तु तत्र तस्य सङ्कोचः। लोके अस्मिन् ग्रामे अयमेकोऽद्वितीयः इति, स्मृतौ च—

एक एवाद्वितीयोऽसौ अश्वमेधक्रतुष्वपि।
एक एवाद्वितीयोऽसौ प्रणवो मन्त्र उच्यते॥

इति प्रयोगात्। महाभाष्ये च अस्य गौर्द्वितीयेन भाव्यमित्युक्ते सदृशो गौरेवोपादीयते नाश्वो न गर्दभः इत्युक्तेश्च। शांकरभाष्ये च अस्य गौर्द्वितीयोऽन्वेष्टव्य इत्युक्तेः, गौरेव द्वितीयोऽन्विष्यते नाश्वः पुरुषो वा इत्युक्तेश्च। समे द्वितीयशब्दः स्यादिति स्मृतेश्च। द्वितीयशब्देन द्वितीयमात्रोक्तौ अद्वितीयशब्देनैव स्वेतरसर्वनिषेधसम्भवेन सजातीयनिषेधैकशब्दादिवैयर्थ्याच्च। तद्वैयर्थ्याय द्वितीयशब्दस्य विजातीयपरत्वेन सङ्कोचे च अग्रे इत्यनेनाविरोधाय समद्वितीयपरत्वेन

सङ्कोचः स्यात्। तथा च समाभ्यधिकराहित्यमेव अद्वितीयशब्दार्थः। 'न तत् समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः। न त्वत्समोऽस्त्यभ्यधिक इति स्मृतेश्च। एक एवाद्वितीयो भगवान् तत्तत्सदृशः परो नास्तीति श्रुतौ—

ज्ञानानन्दाद्यभिन्नत्वात् एकः सर्वोत्तमोत्तमः।
अद्वितीयो महाविष्णुः पूर्णत्वात् पुरुषः स्मृतः॥

'भेदाभेदनिवृत्त्यर्थम् एव शब्दोऽवधारकः' इति स्मृतौ च व्याख्यातत्वाच्च। द्वितीयाभावस्य भावाभावाभ्यां व्याघातेन अद्वितीयशब्दस्य तत्परत्वासम्भवाच्च। उक्तं च—यथा चोलनृपः सम्राट् अद्वितीयोऽस्ति भूपतिः इति; इति तत्तुल्य-नृपह्निनिवारणपरं वचः। न तु तद्भ्रातृतत्पुत्रकलत्रादिनिवारकमिति; तस्मात्—

एकमेवाद्वितीयोऽसावाकाशे सवितेति वत्।
एकमेवाऽद्वितीयं सत् अग्र इत्यपि योज्यताम्॥

इति प्रदर्शितानां वाक्यानां महाप्रकरणानन्तर्गतत्वेन विच्छिन्नवाक्यत्वात् स्तुतिपरत्वेन च उपास्योत्कर्षप्रतिपादकत्वात् यादृच्छिकवाक्यतयापि यथाकथंचि-दर्थपरत्वसम्भवात्; एकविज्ञानेन सर्वविज्ञानोपपत्त्यसम्भवात्। तादृशज्ञानस्य साक्षान्मुक्तिसम्पादकत्वाभावात्, न तेषां साक्षान्मोक्षजनकज्ञानजनकत्वम्। प्रकृते च अद्वैतवाक्यस्य महाप्राकरणिकतया साक्षान्मोक्षसम्पादकज्ञानजनकत्वात् एक-विज्ञानेन सर्वविज्ञानसम्पादनद्वारा अशेषानर्थहेत्वज्ञाननिवर्तकत्वात् प्रकृताद्वैतवाक्यस्य प्रदर्शितवाक्येभ्यो महद्वैलक्षण्यात्। एतद्वैलक्षण्यमदृष्ट्वा यत् पूर्वपक्षिणा प्रलपितं तत्प्रलपितमेव केवलमिति भावः। विस्तरेण च भेदश्रुतेः षड्विधतात्पर्यलिङ्गभंग-प्रकरणेऽभिधास्यते। सद्रूपे ब्रह्मणि प्रसक्तभेदत्रयनिवारकेण पदत्रयेण सद्भिन्न-वस्तुमात्रस्य मिथ्यात्वे पर्यवसानात् अद्वैतवाक्यं प्रपञ्चमिथ्यात्वपरमेवेति। पूर्वपक्षिणा उदाहृता श्रुतयः स्मृतयश्च यथा अद्वैतश्रुतेर्न विरोधिन्यः न वा तद्वशेन अद्वैतश्रुतेरन्यथानयनं तत् सूरिभिरेव विवेचनीयम्। विवेचितं च इतः प्रागेव अस्माभिरिति ॥४॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्र-नाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्या-मेकमेवाद्वितीयमित्यादिश्रुत्यर्थविचारविवरणम्।

## अथ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिः

'तरति शोकमात्मवित्', तथा 'विद्वान्नामरूपाद्विमुक्तः'—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्यकर्माणि तस्मिन् दृष्टे परावरे ॥'

इत्यादिश्रुतिस्मृतिबोधितज्ञाननिवर्त्यत्वान्यथानुपपत्तिरपि बन्धमिथ्यात्वे प्रमाणम् । सत्यत्वे ब्रह्मवदनिवर्त्यत्वापत्तेः । ~~तथा~~ हि—

---

१—मिथ्यात्वानुमानेन प्रपञ्चस्य मिथ्यात्वं प्रसाध्य प्रपञ्चस्य ज्ञाननिवर्त्यत्वान्यथानुपपत्त्यापि मिथ्यात्वं सिद्ध्यति इति प्रदर्शयितुं ज्ञाननिवर्त्यत्वान्यथानुपपत्तिप्रकरणमारभते—तरति शोकमात्वादिति । [यद्यपि] निवर्त्यत्वान्यथानुपपत्त्यापि निवर्तनीयस्य मिथ्यात्वं सिद्ध्यति न हि सत्यं वस्तु कदाचिदपि निवर्तते । अत एव ये प्रपञ्चस्य अनित्यत्वमभ्युपगम्य तस्य मिथ्यात्वं नाङ्गीकुर्वन्ति तेऽपि निरस्ताः । यतोऽनित्यत्वव्यापकमेव मिथ्यात्वम् । यदि मिथ्या न स्यात् तर्हि अनित्यं न स्यात् । तदेव वस्तु निवर्तते यददृढस्वभावम् । वस्तुनोऽदृढस्वभावत्वं तु मिथ्याभूताज्ञानोपादानकत्वेन । यत् मिथ्याभूताज्ञानोपादानकं तादृशाज्ञानप्रयुक्तं वा तददृढस्वभावम् । तदेव च निवर्तते । अत एव नित्यानित्यवस्तुविवेक इत्यस्य सत्यमिथ्यावस्तुविवेके एव पर्यवसानं बोध्यम् । निवर्त्यत्वेन मिथ्यात्वं न तादृक् सुस्पष्टं यथा ज्ञाननिवर्त्यत्वेन मिथ्यात्वम् । यतो ज्ञानमज्ञानस्यैव निवर्तकमिति पञ्चपादिकावचनात्, तत्त्वज्ञानेन अज्ञाने निवृत्ते तत्प्रयुक्तमपि निवर्तते । इति मिथ्याभूताज्ञानप्रयुक्तत्वेन प्रपञ्चस्य मिथ्यात्वं सुस्पष्टम् ।

'तरति शोकमात्मवित्', 'विद्वान् नामरूपाद् विमुक्तः'—
'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ इत्यादिश्रुतिस्मृतिबोधितज्ञाननिवर्त्यत्वान्यथानुपपत्तिरपि बन्धमिथ्यात्वे प्रमाणम् । सत्यत्वे ब्रह्मवत् अनिवर्त्यत्वापत्तेः । तथा हि—शुक्ति-

शुक्तिरूप्यरज्जुसर्पादौ ज्ञाननिवर्त्यत्वे न तावत्तत्तद्रूपवत्त्वं ज्ञाननिवर्त्य-तावच्छेदकम्। अननुगमात्। किन्तु सर्वानुगतं मिथ्यात्वमेवाज्ञान-कल्पितत्वापरपर्यायमवच्छेदकम्। एवं ज्ञानस्यापि तन्निवर्तकत्वे न शुक्त्यादिविषयकत्वमवच्छेदकम्; अननुगमात्, किन्तु सर्वानुगतम-धिष्ठानप्रमात्वमेव। तथा च यत्र ज्ञानस्याधिष्ठानप्रमात्वेन निव-र्तकता, तत्र मिथ्यात्वेनैव निवर्त्यतेति नियमः सिध्यति। एतादृश-नियमानभ्युपगमे चानन्तनियमकल्पनागौरवरूपो बाधकस्तर्कः। तथा हि—यन्निष्ठा यदाकारा प्रमारूपान्तःकरणवृत्तिरुदेति, तन्निष्ठं तदाकार-मज्ञानं नाशयतीति नियमस्य सिद्धत्वात्, उपादाननाशस्य चोपादेय-निवर्तकत्वात्, शुक्त्यादिज्ञानेन तत्तदाकाराज्ञाननाशे तदुपादेयानां रजतादीनां निवृत्तिरौचित्यावर्जितैवेति नियमान्तराकल्पनेन लाघव-मनुकूलस्तर्कोऽस्मत्पक्षे। अज्ञानोपादेयत्वं च शुक्तिरजतादीनामन्वय-व्यतिरेकसिद्धमग्रे स्थास्यति। एवं स्थिते कृत्स्नस्यापि प्रपञ्चस्यात्म-प्रमानिवर्त्यत्वे तदज्ञानकल्पितत्वमेव तत्रावच्छेदकं कल्प्यते। न त्वन

---

रूप्यरज्जुसर्पादौ ज्ञाननिवर्त्यत्वे न तावत्तत्तद्रूपवत्त्वं ज्ञाननिवर्त्यताव-च्छेदकम्। अननुगमात्। किन्तु सर्वानुगतं मिथ्यात्वमेव अज्ञान-कल्पितत्वापरपर्यायमवच्छेदकम्। एवं ज्ञानस्यापि तन्निवर्तकत्वेन शुक्त्यादिविषयकत्वमवच्छेदकमननुगमात् किन्तु सर्वानुगतमधिष्ठान-प्रमात्वमेव। तथा च यत्र ज्ञानस्य अधिष्ठानप्रमात्वेन निवर्तकता तत्र मिथ्यात्वेनैव निवर्त्यता इति नियमः सिद्ध्यति। एतादृशनियमान-भ्युपगमे च अनन्तनियामककल्पनागौरवरूपो बाधकस्तर्कः। तथा हि यन्निष्ठा यदाकारा प्रमारूपा अन्तःकरणवृत्तिरूपेति तन्निष्ठं तदाकार-मज्ञानं नाशयतीति नियमस्य सिद्धत्वात् उपादाननाशस्य चोपादेय-निवर्तकत्वात्, शुक्त्यादिज्ञानेन तत्तदाकाराज्ञाननाशे तदुपादेयानां रजतादीनां निवृत्तिरौचित्यावर्जितैव इति नियमान्तराकल्पनेन लाघ-वमनुकूलस्तर्कोऽस्मत्पक्षे। अज्ञानोपादेयत्वं च शुक्तिरजतादीनामन्व-यव्यतिरेकसिद्धमग्रे स्थास्यति। एवं स्थिते कृत्स्नस्यापि प्रपञ्चस्य आत्म-

नुगतमाकाशत्वादि। न वा ब्रह्मभिन्नत्वं सद्भिन्नत्वं वा सर्वानुगतमपि; तुच्छेऽतिप्रसक्तेः, तद्वारकविशेषणप्रक्षेपे तु सदसद्विलक्षणत्वरूपमिथ्यात्वमेव निवर्त्यताप्रयोजकं पर्यवसितम्। अन्यथा नियमान्तरकल्पना गौरवापत्तेः तथा च शुक्त्यादिज्ञानस्य येन रूपेण निवर्तकत्वं, तेन रूपेणात्मज्ञानस्य निवर्तकत्वम्। रूप्यादौ येन रूपेण निवर्त्यत्वं, प्रपञ्चे तद्रूपं विनानुपपद्यमानं स्वोपपादकतया तत्र तत् कल्पयतीति सिद्धं मिथ्यात्वम् ॥१॥

---

प्रमानिवर्त्यत्वे तदज्ञानकल्पितत्वमेव तत्र अवच्छेदकं कल्प्यते। न तु अननुगतमाकाशत्वादि। न वा ब्रह्मभिन्नत्वं सद्भिन्नत्वं वा सर्वत्रा[र्वा]नुगतमपि तुच्छेऽतिप्रसक्तेः तद्वारकविशेषणप्रक्षेपे तु सदसद्विलक्षणत्वरूपमिथ्यात्वमेवं निवर्त्यताप्रयोजकं पर्यवसितम्। अन्यथा नियमान्तरकल्पनागौरवापत्तेः तथा च शुक्त्यादिज्ञानस्य येन रूपेण निवर्तकत्वं तेन रूपेणात्मज्ञानस्य निवर्तकत्वम्। रूप्यादौ येन रूपेण निवर्त्यत्वं प्रपञ्चे तद्रूपं विनाऽनुपपद्यमानं स्वोपपादकतया तत्र तत् कल्पयतीति सिद्धं मिथ्यात्वम्। शोकं भीतिहेतुं, तरति अत्यन्तमुच्छिनत्ति, आत्मवित् ब्रह्मात्मतासाक्षात्कारवान्। ब्रह्मात्मतासाक्षात्कारेण द्वैतमात्रस्य अत्यन्तमुच्छेदे श्रुत्या प्रतिपाद्यमाने भीतिहेतुद्वैतमात्रस्याज्ञानकल्पितत्वं सिद्ध्यति। शोकस्य अज्ञानकल्पितत्वं विना ब्रह्मसाक्षात्कारात् निवृत्तिर्न स्यात्। 'विद्वान् नामरूपाद्विमुक्त' इति श्रुत्या विद्यासमानकालीनं नामरूपविमोचनमविद्यानिवृत्तिरूपायाः विद्यायाः समानकालीनत्वं नामरूपविमोचनस्य तदैव भवितुमर्हति यदि नामरूपमपि अविद्यात्मकं स्यात्। अविद्यात्मकत्वे तु मिथ्यात्वमेव। अविद्याया एव सर्वमिथ्यानेतृत्वात्। उक्तञ्च ब्रह्मवित्प्रकाण्डैर्भर्तृहरिभिः—

शुद्धतत्त्वं प्रपञ्चस्य न हेतुरनिवृत्तितः।
ज्ञानज्ञेयादिरूपस्य मायैव जननी ततः॥

भिद्यते नाश्यते हृदयग्रन्थिरहङ्कारः, सर्वसंशयाः छिद्यन्ते कारणोच्छेदात् उच्छिद्यन्ते। अविद्योपादानकोऽहंकारः कार्याध्यासेषु प्रथमः अविद्यानिवृत्त्या निवर्तते। संशयादीनामपि अन्तःकरणकारणकत्वात् 'कामः संकल्प' इत्यादिश्रुतेर-

हङ्कारनिवृत्तौ संशयादयो निवर्तन्ते। तस्मिन् दृष्टे परावरे इति। परः हिरण्यगर्भः अवरः कनिष्ठो यस्मात् तस्मिन् परमात्मनि दृष्टे तद्विषयकाविद्यानिवृत्तौ अहङ्कारादिनाशक्रमेण प्रपञ्चमात्रस्य नाशः, प्रदर्शितश्रुतिस्मृत्यादिभिः प्रपञ्चस्य ज्ञाननिवर्त्यत्वं बोधितम्। श्रुत्यादिबोधितज्ञाननिवर्त्यत्वस्य अन्यथानुपपत्तिरपि प्रपञ्चमिथ्यात्वे प्रमाणम्। अन्यथोपपत्तिमाशङ्क्य निराचष्टे—सत्यत्वे इति। मिथ्यात्वं विना प्रपञ्चस्य ज्ञाननिवर्त्यत्वमनुपपन्नम्। प्रपञ्चस्य सत्यत्वे सत्यब्रह्मवत् सत्यप्रपञ्चस्यापि ज्ञानानिवर्त्यत्वापत्तेः। मिथ्यात्वमेव ज्ञाननिवर्त्यतावच्छेदकम्। ज्ञानस्य निवर्तकतावच्छेदकमपि अधिष्ठानप्रमात्वमेव इति प्रदर्शयितुमाह—तथा हीति। शुक्तिरूप्यरज्जुसर्पादौ बाधकज्ञाननिवर्त्यत्वं सुप्रसिद्धम्। शुक्तिरूप्यादीनां ज्ञाननिवर्त्यत्वे शुक्तिरूप्यत्वं रज्जुसर्पत्वं न ज्ञाननिवर्त्यतावच्छेदकम्। ज्ञाननिवर्त्यता शुक्तिरूप्यरज्जुसर्पादिषु समाना। समानायाः निवर्त्यताया अवच्छेदकमपि रूपमनुगतमेव वक्तव्यम्, न तु शुक्तिरूप्यत्वरज्जुसर्पत्वादिकमननुगतम्। अननुगतावच्छेदकेनावच्छिद्यमाना निवर्त्यता अनुगता न भवितुमर्हति। किन्तु सर्वज्ञाननिवर्त्यतानुगतं मिथ्यात्वमेव निवर्त्यतावच्छेदकं भवितुं युक्तम् अनुगतत्वात्। मिथ्यात्वञ्च अज्ञानकल्पितत्वरूपम्। ननु अज्ञानातिरिक्तस्य अज्ञानकल्पितत्वेऽपि अज्ञानस्य नाज्ञानकल्पितत्वम्। तथा चाज्ञानस्य अज्ञानकल्पितत्वाभावादज्ञानस्य ज्ञाननिवर्त्यत्वेऽज्ञानकल्पितत्वं निवर्त्यतावच्छेदकं न स्यादिति चेत्, न, अज्ञानस्य स्वपरनिर्वाहकत्वात्। उक्तञ्च मधुसूदनसरस्वतीश्रीचरणैः संक्षेपशारीरकटीकायाम्—एवमज्ञानमपि शक्तिवशात् स्वपरकल्पकः स्यादित्यर्थः। उक्तञ्च संक्षेपशारीरके—

स्वाज्ञानमेवमिदमात्मपरप्रक्लृप्तौ।
शक्तं भवेदिति न किञ्चन दौस्थ्यमस्ति॥
[सं० शा० १।५४]

अज्ञानस्य स्वपरकल्पकत्वमुक्त्वा पुनस्तत्रैव शंकते—ननु आत्मनो ज्ञानाख्यशक्तिमत्त्वात् अस्तु स्वपरसाधकत्वम्, अज्ञानस्य तु परशक्तिभूतस्य शक्त्यन्तराभावात् अज्ञानान्तरमेव अज्ञानसाधकमुपेयम्, एवञ्चानवस्था। इत्याशङ्क्य परदृष्ट्यैव दृष्टान्तान्तरमाह—

भेदश्च भेद्यञ्च भिनत्ति भेदो यथैव भेदान्तरमन्तरेण ।
मोहश्च कार्यञ्च बिभर्त्ति मोहस्तथैव मोहान्तरमन्तरेण ॥
[सं० शा० १।५५]

अयमर्थः—यथैव हि भेदो भेद्यं घटपटद्वयं मिथो भिन्नं बोधयति, तथा भेद आत्मानमपि भेदं घटादेर्भेद्यात् सकाशात् भिनत्ति, न तु भेदप्रतियोगिकं भेदान्तरमपेक्षते, अनवस्थानात् । तथा मोहोऽपि मोहान्तरं विना मोहं तत्कार्यञ्च कल्पयतीत्यर्थः । भेदस्य स्वपरनिर्वाहकत्ववत् अज्ञानस्यापि स्वपरनिर्वाहकत्वम् । भेदो भिन्न इति प्रतीत्या भेदस्य स्वपरनिर्वाहकत्वं प्रसिद्धमन्यथाऽनवस्थानात् । अतः मिथ्यात्वमेवाज्ञानकल्पितत्वापरपर्यायं निवर्त्यतावच्छेदकं यदुक्तं तत् संगतमेव । अज्ञानेऽपि अज्ञानकल्पितत्वानपायात् । निवर्त्यतावच्छेदकं प्रदर्श्य निवर्तकतावच्छेदकमप्याह—शुक्त्यादिज्ञानस्य रजतादिनिवर्तकत्वे न शुक्त्यादिविषयकत्वं निवर्तकतावच्छेदकम् । एवञ्चेत्, अवच्छेदकाननुगमात् अवच्छेद्या निवर्तकतापि अननुगता स्यात् । किन्तु सर्वनिवर्तकज्ञानानुगतम् अधिष्ठानप्रमात्वमेव निवर्तकतावच्छेदकम् । तथा चायं नियमः पर्यवस्यति—यत्र ज्ञानस्याधिष्ठानप्रमात्वेन निवर्तकता तत्र मिथ्यात्वेनैव वस्तुनो निवर्त्यता । एतादृशानुगतनियमानभ्युपगमेऽनन्तनियमकल्पनागौरवं नियमानभ्युपगमबाधकस्तर्कः । अस्मत्पक्षे पुनः लाघवमनुकूलतर्कं प्रदर्शयितुमाह—तथा हीति । यन्निष्ठा यदाकारा देवदत्तादिनिष्ठा घटाद्याकारा घटादिविषयिणीत्यर्थः, प्रमारूपान्तःकरणवृत्तिरुदेति तन्निष्ठं देवदत्तादिनिष्ठं तदाकारं घटादिविषयकमज्ञानं नाशयति इति नियमस्य सिद्धत्वात् प्रमाज्ञानेन अध्यासोपादानाज्ञानस्य नाशात् तेन चोपादेयनिवृत्तिः । शुक्त्यादिप्रमया शुक्तिविषयकाज्ञाननाशे शुक्त्याद्यज्ञानोपादेयानां रजतादीनां निवृत्तिरौचित्यावर्जिता एव उपादाननाशात् उपादेयस्य नाशात् [नाशः] । एवमधिष्ठानप्रमया अधिष्ठानविषयकाज्ञानतदुपादेयानां नाशे नियमान्तराकल्पनेन लाघवमनुकूलस्तर्कोऽस्मत्पक्षे । अधिष्ठानप्रमया अधिष्ठानाज्ञानतदुपादानकाध्यस्तानां नाशकल्पने लाघवतर्क एव अनुग्राहको वर्तते । अज्ञानोपादेयत्वञ्च शुक्तिरजतादीनामन्वयव्यतिरेकसिद्धम् । उक्तञ्च विवरणे—ननु कथं मिथ्याज्ञानमध्यासस्योपादानम्, तस्मिन् सति अध्यासस्य उदयात्, असति चानुदयादिति ब्रूमः । ननु अध्यासस्य प्रतिबन्धकं

तत्त्वज्ञानं, तदभावश्च अज्ञानमिति प्रतिबन्धकाभावविषयतया अज्ञानस्याध्यासेन अन्वयव्यतिरेकौ अन्यथासिद्धौ। नैतत्सारं, पुष्कलकारणे हि सति कार्योत्पाद-विरोधि प्रतिबन्धकम्। न चाध्यासपुष्कलकारणे सति तत्त्वज्ञानं कार्यप्रतिबन्धकतया ज्ञायते, किन्तु असत्येव अध्यासकारणे तत्त्वज्ञानोदयः। तस्मात् नाज्ञानान्वय-व्यतिरेकौ प्रतिबन्धकाभावविषयौ इत्याद्युक्त्वा तस्मात् प्रथमापेक्षितकारणक्लृप्तिमेव अन्वयव्यतिरेकौ न्यायसहितौ कुर्वाते [विवरणम्, पृ० ११] इत्युक्तम्। विवृतञ्च तत्त्वदीपने—न्यायसहितौ इति। अपेक्षितानपेक्षितविधानयोरपेक्षितविधानं बलवदिति न्यायः। अन्वयव्यतिरेकाभ्यां शुक्तिरजतादीनामज्ञानोपादेयत्वं प्रसाध्य कृत्स्नस्यापि प्रपञ्चस्य आत्मप्रमानिवर्त्यत्वस्य श्रुत्या प्रमितत्वात् आत्मविषयकाज्ञान-कल्पितत्वं प्रपञ्चस्य सिद्ध्यति; कृत्स्नप्रपञ्चस्य आत्मप्रमानिवर्त्यत्वात्; आत्माज्ञान-कल्पितत्वमेव निवर्त्यतावच्छेदकं कल्प्यते पूर्वप्रदर्शितदृष्टान्तानुसारात्। आत्मप्रमा-निवर्त्यत्वावच्छेदकम् आत्माज्ञानकल्पितत्वमेवानुगतं वाच्यम्; अन्यथा आकाशत्व-वायुत्वादीनां निवर्त्यत्वावच्छेदकत्वकल्पने अवच्छेदकाननुगमात् गौरवं स्यात्। न च ब्रह्मभिन्नत्वमेवानुगतं निवर्त्यतावच्छेदकमस्तु इति वाच्यं; कृतम् आत्मा-ज्ञानकल्पितत्वेन इत्यत आह—तुच्छस्यापि शशविषाणादेर्ब्रह्मभिन्नत्वात् शशविषा-णादावपि ब्रह्मज्ञाननिवर्त्यत्वस्य प्रसक्तिः स्यात् तत्रापि निवर्त्यतावच्छेदकसत्त्वात्। एतदतिप्रसक्तिवारणाय असद्विलक्षणत्वे सति इति विशेषणोपादाने च ब्रह्मविलक्ष-णत्वे सति असद्विलक्षणत्वमेव निवर्त्यतावच्छेदकं स्यात्; तच्च सदसद्विलक्षणत्वरूप-मिथ्यात्वमेव स्यात्। तथा च मिथ्यात्वमेव निवर्त्यतावच्छेदकमित्यापन्नम्। तथा च ज्ञाननिवर्त्यत्वान्यथानुपपत्त्या मिथ्यात्वमेव सिद्ध्यतीति इष्टमेवास्माकमिति भावः। मिथ्यात्वस्य निवर्त्यतावच्छेदकत्वाकल्पने आकाशत्वादीनामननुगतानामवच्छेदकत्व-कल्पने पूर्वोक्तं गौरवमेव स्यात्। तथा च शुक्त्यादिज्ञानस्य येन रूपेण रजतादि-निवर्तकत्वमधिष्ठानप्रमात्वेन इत्युक्तं प्राक्, तेनैव अधिष्ठानप्रमात्वेनैव आत्मप्रमायाः प्रपञ्चनिवर्तकत्वम्। येन च रूपेण रजतादौ निवर्त्यत्वं मिथ्यात्वापरपर्यायाज्ञान-कल्पितत्वेन प्रपञ्चेऽपि निवर्त्यत्वं तद्रूपं विना अनुपपन्नं तद्रूपं मिथ्यात्वं स्वोपपा-दकतया कल्पयति। निवर्त्यत्वोपपादकतया मिथ्यात्वं कल्पयतीति निवर्त्यत्वान्य-थानुपपत्त्या प्रपञ्चस्य मिथ्यात्वसिद्धिरिति भावः ॥१॥

ननु—भवेदेतदेवम्; यद्यात्मज्ञानस्य प्रपञ्चे निवर्त्ये शुक्त्यादि-ज्ञानसाधारणमधिष्ठानप्रमात्वमेवावच्छेदकमित्यत्र किंचिन्मानं भवेत्; रूपान्तरेणापि निवर्तकत्वसंभवात्। श्रुतिस्तु द्वैतप्रपञ्चस्याद्वितीयात्म-ज्ञानं निवर्तकमित्येतावन्मात्रे प्रमाणम्। न त्ववच्छेदकविशेषेऽपि। न च ज्ञाननिवर्त्यतामात्रान्मिथ्यात्वसिद्धिः। सेतुदर्शनादिनिवर्त्यदुरितादिषु व्यभिचारात्। तत्र विहितक्रियात्वादिना निवर्तकत्वान्न व्यभिचार इति चेत्, प्रकृतेऽपि रूपान्तरं नावच्छेदकमिति कुतो निरणायि? ज्ञानस्य हि स्वप्रागभावं प्रति प्रतियोगित्वेन निवर्तकता, पूर्वज्ञानादिकं प्रति तु उत्तरविरोधिगुणत्वेन, संस्कारं प्रति फलत्वेन, रागादिकं प्रति विषयदोषदर्शनत्वेन, विषं प्रति गरुडध्यानत्वेन, सेत्वादिदर्शनस्य दुरितं प्रति विहितक्रियात्वेन, एवं च मिथ्यात्वं विनापि ज्ञाननिवर्त्यत्वदर्शनात् न तन्मिथ्यात्वस्य साधकम्। उदाहृतेष्वपि सत्यत्वासंप्रतिपत्त्या मिथ्या-त्वमेवास्तीति चेत्, अस्तु वा मास्तु; ज्ञाननिवर्त्यत्वमात्रं तु न तस्य साधकमिति ब्रूमः, हेत्वन्तरेण सिद्धौ चैतदुपन्यासो व्यर्थः ॥२॥

---

२—अधिष्ठानप्रमात्वेनैव ज्ञानस्य निवर्तकत्वमित्यत्र प्रमाणाभावात् अन्यथापि ज्ञानस्य निवर्तकत्वसम्भवात्। न च ज्ञाननिवर्त्यत्वमात्रेण वस्तुनो मिथ्यात्वसिद्धिरिति पूर्वपक्षी शङ्कते—ननु भवेदेतदेवं यदि आत्मज्ञानस्य प्रपञ्चे निवर्त्ये शुक्त्यादिज्ञानसाधारणमधिष्ठानप्रमात्वमेवावच्छेदकमित्यत्र किञ्चि-न्मानं भवेत् रूपान्तरेणापि निवर्तकत्वसम्भवात्। श्रुतिस्तु द्वैतप्रपञ्चस्य अद्वितीयमात्मज्ञानं निवर्तकमित्येतावन्मात्रे प्रमाणम्। न तु अव-च्छेदकविशेषेऽपि न च ज्ञाननिवर्त्यतामात्रात् मिथ्यात्वसिद्धिः। सेतुदर्शनादिनिवर्त्यदुरितादिषु व्यभिचारात्। तत्र विहितक्रियात्वादिना निवर्तकत्वान्न व्यभिचार इति चेत्, प्रकृतेऽपि रूपान्तरं नावच्छेदक-मिति कुतो निरणायि? ज्ञानस्य हि स्वप्रागभावं प्रति प्रतियोगित्वेन निवर्तकता, पूर्वज्ञानादिकं प्रति तु उत्तरविरोधिगुणत्वेन, संस्कारं प्रति फलत्वेन, रागादिकं प्रति विषयदोषदर्शनत्वेन, विषं प्रति गरुडध्या-नत्वेन सेत्वादिदर्शनस्य दुरितं प्रति विहितक्रियात्वेन, एवञ्च मिथ्यात्वं

विनापि ज्ञाननिवर्त्यत्वदर्शनात् न तन्मिथ्यात्वस्य साधकम्। उदाहृतेष्वपि सत्यत्वासंप्रतिपत्त्या मिथ्यात्वमेवास्तीति चेत्, अस्तु वा मास्तु; ज्ञाननिवर्त्यत्वमात्रं तु न तस्य साधकमिति ब्रूमः। हेत्वन्तरेण सिद्धौ चैतदुपन्यासो व्यर्थः। तरति शोकमात्मवित् 'विद्वान् नामरूपाद्विमुक्त', इत्यादिश्रुत्या आत्मज्ञानं प्रपञ्चनिवर्तकमित्येतन्मात्रमवगतम्; न तु शुक्तिज्ञानवत् अधिष्ठानप्रमात्वेन रजतनिवर्तकत्वं श्रुत्या आत्मज्ञानस्य अधिष्ठानप्रमात्वेन प्रपञ्च-निवर्तकत्वमवगतम्। अधिष्ठानप्रमात्वेन आत्मज्ञानस्य प्रपञ्चनिवर्तकत्वे प्रमिते निवर्त्यप्रपञ्चस्य मिथ्यात्वं सिद्ध्यति। रूपान्तरेण आत्मज्ञानस्य प्रपञ्चनिवर्तकत्वे निवर्त्यप्रपञ्चस्य मिथ्यात्वं न सिद्ध्यति। उदाहृता श्रुतिस्तु द्वैतप्रपञ्चस्य आत्मज्ञानं निवर्तकमित्येतावन्मात्रे प्रमाणं न तु अधिष्ठानप्रमात्वेन आत्मज्ञानस्य निवर्तकत्वे प्रमाणम्। श्रुत्या निवर्तकतावच्छेदकरूपाप्रतिपादनात्। रूपान्तरेण ज्ञानस्य निवर्तकत्वे निवर्तनीयस्य मिथ्यात्वं न सिद्ध्यति। ज्ञाननिवर्त्यस्यापि मिथ्यात्वं कुत्र न सिद्धमित्यत आह—सेत्वादिदर्शननिवर्त्यदुरितादिषु मिथ्यात्वाभावेन व्यभिचारात् यज्ज्ञाननिवर्त्यं तन्मिथ्या इति नियमस्य व्यभिचारात्। अत्र सेत्वादीति आदिपदात्—

अग्निचित् कपिला सत्री राजा जिष्णुर्महोदधिः।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येद्धि नित्यशः॥

इति स्मृतिवाक्यं ग्राह्यम्। सेतुदर्शनस्य पापनिवर्तकत्वं तु 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'ति स्मृतिबोध्यम्। एतेषु ज्ञाननिवर्त्यदुरितादिषु मिथ्यात्वाभावात् उक्तनियमस्य व्यभिचारः। यदि सेत्वादिदर्शनं न ज्ञानत्वेन प्रमात्वेन वा दुरितादिनिवर्तकं किन्तु विहितक्रियात्वेनेति न व्यभिचारः, तर्हि प्रकृतेऽपि आत्मदर्शने प्रपञ्चनिवर्तकत्वस्य अवच्छेदकं रूपान्तरं नास्ति इति कुतो निरणायि? निवर्तकतावच्छेदकरूपान्तरबाधकाभावात्। न हि ज्ञानस्य निवर्तकत्वे ज्ञानत्वमेवावच्छेदकमिति नियमः, बहुशो व्यभिचारादित्याह—**ज्ञानस्य स्वप्रागभावं प्रतीति**। प्रागभावं प्रति प्रतियोगित्वेन प्रतियोगिनो निवर्तकत्वात् ज्ञानप्रागभावं प्रत्यपि ज्ञानस्य प्रतियोगित्वेनैव निवर्तकता स्वीकरणीया न ज्ञानत्वेन तथात्वे घटप्रागभावं प्रति घटस्य निवर्तकता न स्यात्। एवं पूर्ववर्तिज्ञानेच्छादिकं

प्रति उत्तरज्ञानस्य उत्तरविरोधिगुणत्वेन निवर्तकत्वात् ज्ञानत्वेन निवर्तकत्वे स्वोत्तरवर्तीच्छादीनां निवर्तकता न स्यात्। एवं संस्कारं प्रति स्मृतिज्ञानस्य फलत्वेन निवर्तकत्वात् संस्कारफलं स्मरणं फलत्वेन स्वजनकसंस्कारनाशकम्। संस्कारस्य फलनाश्यत्वनियमात्। विषयरागादिकं प्रति रागविषयस्य दोषदर्शनं निवर्तकं, दोषदर्शनस्य रागादिन्निवर्तकत्वे विषयदोषदर्शनत्वमेव निवर्तकतावच्छेदकं न दर्शनत्वमात्रं ज्ञानत्वमात्रं वा अतिप्रसंगात्। विषं प्रति गरुडध्यानस्य यन्निवर्तकत्वं तदपि न ज्ञानत्वेन किन्तु गरुडध्यानत्वेनैव, अन्यथा अतिप्रसंगात्। सेत्वादिदर्शनं यद्दुरितनाशकं तदपि न दर्शनत्वेन प्रमात्वेन वा; दर्शनत्वेन प्रमात्वेन वा दुरितनिवर्हकत्वे तत्रस्थम्लेच्छानां श्रद्धाविरहितानाञ्च पापनाशप्रसंगात। किन्तु विहितक्रियात्वेन सेतुदर्शनं पापनाशकम्। विवृतं चैतत्कल्पतरौ [अधिकरणे १।१।१]। मिताक्षरायाञ्च प्रायश्चित्ताध्याये [मिताक्षरा, पृ० ३९३ निर्णयसागरसं०]। तथा च ज्ञानस्य निवर्तकत्वे ज्ञानत्वस्य प्रमात्वस्य वा निवर्तकतावच्छेदकत्वमिति नियमो नास्त्येव। तथा च अधिष्ठानप्रमात्वेन आत्मज्ञानस्य प्रपञ्चानिवर्तकतया न प्रपञ्चस्य मिथ्यात्वं सिद्ध्यति। प्रपञ्चस्य मिथ्यात्वं विनापि सत्यत्वेऽपीत्यर्थः, शास्त्रप्रामाण्यात् प्रपञ्चस्यात्मज्ञाननिवर्त्यत्वसम्भवात्। प्रपञ्चस्यात्मज्ञाननिवर्त्यत्वमात्रं न प्रपञ्चस्य मिथ्यात्वसाधकं, प्रदर्शितस्थलेषु सत्यस्यैव ज्ञाननिवर्त्यत्वदर्शनात्। यदि उदाहृतस्थलेषु सत्यत्वासम्प्रतिपत्त्या मिथ्यात्वमेवास्तीति ज्ञाननिवर्त्यस्य मिथ्यात्वमेव, प्रदर्शितस्थलेषु मिथ्यात्वमस्तु वा मास्तु वा; ज्ञाननिवर्त्यत्वमात्रं न निवर्तनीयस्य मिथ्यात्वसाधकमिति ब्रूमः। निवर्तनीयस्य हेत्वन्तरेण मिथ्यात्वसिद्धौ ज्ञाननिवर्त्यत्वोपन्यासो व्यर्थ एव। अत्रेयं विचारणा—

ननु सुहृज्ज्ञानं सत्यस्य दुःखस्य कपिलादिदर्शनञ्च सत्यस्य पापस्य निवर्तकमित्यन्वयव्यतिरेकाभ्यां स्मृतेश्चावगतमिति चेन्न, उत्पन्नानुत्पन्नदुःखयोः सुहृद्दर्शनानिवर्त्यत्वात्। सुखं प्रत्येव तस्य हेतुत्वात्। अग्निचित् कपिला सत्रीत्यादिस्मृतेश्च न ज्ञानमात्रात् पापनिवृत्तिरर्थः, पश्यतामपि म्लेच्छानां तन्निवृत्त्यभावात्, किन्तु श्रद्धाद्यङ्गविशिष्टादेव। एतेन ब्रह्मज्ञानमात्रं नाज्ञाननिवर्तकं, अध्ययनश्रवणादिनियमविशिष्टस्यैव तन्निवर्तकत्वात्। भाषाप्रबन्धादिना अनधीतवेदान्तजन्येन असम्भावनादिप्रतिबद्धेन ज्ञानेन तदनिवृत्तेः इति नवीनोक्तं प्रत्युक्तम्। अध्यय-

नादिनियमस्य ज्ञानोत्पादहेतुत्वेन उत्पन्नज्ञानस्य तदनपेक्षणात् । अन्यथा 'ज्ञानादेव तु कैवल्यं,' 'नान्यः पन्था', इत्याद्यवधारणश्रुतिविरोधात् । स्त्रीशूद्रयोः भाषाप्रबन्धज्ञानादपि अविद्यानिवृत्तेः । वेदाधिकारिणाञ्च तस्य निषेधादहेतुत्वात् । यच्च निदिध्यासनमदृष्टद्वारा अज्ञाननिवर्तकं, न ज्ञानमज्ञाननिवर्तकमिति, तन्न । निदिध्यासनस्यापि 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति ज्ञानोद्देशेन विधानात् । लोके चाज्ञानस्य विनापि निदिध्यासनं ज्ञानादेव निवृत्तिदर्शनात् । "तस्याभिध्यानात् योजनात् तत्त्वभावात् । भूयश्चान्ते विश्वमायानिवृत्तिः" इति ध्यानस्यापि अज्ञाननिवर्तकत्वं श्रूयत इति चेन्न, ध्यानस्य योजनाख्यसाक्षात्कारमात्रहेतुत्वेन श्रुतत्वात् ध्यानस्यैव अज्ञाननिवर्तकत्वे योजनस्य वैयर्थ्यप्रसङ्गात् । ध्यानस्य उक्तसाक्षात्कारहेतुत्वश्रुतिविरोधप्रसङ्गाच्च । सत्यपि ध्याने लोके साक्षात्कारं विना अज्ञानानिवृत्तेश्च । तथा च यज्ज्ञानमात्रनिवर्त्यं तदज्ञानमसत्यमेव । अथ वा ज्ञानत्वपुरस्कारेण यज्ज्ञाननिवर्त्यं तदज्ञानमेव । अज्ञानञ्च, न जानामीत्यनुभवात्; पापादिकञ्च ज्ञानविशेषणेनै[विशेषेणै]व निवर्त्यमिति न व्यभिचारः । एतेन परमेश्वरविग्रहदर्शनसेतुदर्शनशाब्दब्रह्मज्ञानादेः पापनिवर्तकत्वात् न ज्ञानस्याविद्यामात्रनिवर्तकत्वनियम. इति प्रत्युक्तम् । सर्वत्रापि श्रद्धादिविशिष्टस्यैव निवर्तकत्वात्, ज्ञानमात्रस्य निवर्तकत्वे मानाभावात् । नन्वस्तु अज्ञानस्य ज्ञानैकनिवर्त्यत्वं, तथापि न ज्ञाननिवर्त्यस्य मिथ्यात्वनियमः । मिथ्यात्वं विनापि अज्ञानत्वादेव अज्ञानस्य ज्ञाननिवर्त्यत्वात् । विरोधो हि निवर्त्यनिवर्तकयोरपेक्ष्यते, न तु निवर्त्यस्य मिथ्यात्वम् । प्रकाशनिवर्त्यतमसः तद्भावात् । विरोधश्च अज्ञानकृत एव । अन्यथा रजतादेरपि साक्षाज्ज्ञाननिवर्त्यत्वप्रसङ्गात् । सत्यस्य कुत्रापि प्रकाशनिवर्त्यत्वं न दृष्टमित्यपि निरस्तम् । अज्ञानादन्यत्रासत्यत्वेऽपि ज्ञाननिवर्त्यत्वादर्शनात् । अज्ञानत्वप्रयुक्तज्ञाननिवर्त्यत्वस्य सत्यत्वासत्यत्वयोस्तुल्यत्वात् । अत एव सत्यस्य ज्ञाननिवर्त्यत्वे आत्मनोऽपि ज्ञाननिवर्त्यत्वापत्तिः । श्रुत्युपपत्त्यर्थं बन्धस्य अविद्यात्मकत्वं वर्णनीयमित्यपि अत एव निरस्तम् । सत्यस्याप्यज्ञानस्य अज्ञानत्वादेव ज्ञानान्निवृत्तौ अज्ञानकार्यबन्धस्यापि कारणनिवृत्त्यैव निवृत्तेः । नचाज्ञानमसत्यं, ज्ञाननिवर्त्यत्वात्, शुक्तिरजतवदिति साध्यम् । दृष्टान्ते ज्ञाननिवर्त्यत्वस्य हेतोरभावात् । उच्यते—ज्ञानं स्वसमानविषयमज्ञानं निवर्तयति, भिन्नविषय-

शुक्तिरूप्यादौ कथमिति चेच्छृणु; अधिष्ठानज्ञानत्वेन तत्र ज्ञानस्य निवर्तकत्वात्। अधिष्ठानज्ञानत्वं हि अज्ञाननाशकज्ञानत्वं वा, अज्ञानसमानविषयकप्रमात्वं वेति? तेन रूपेण निवर्तकत्वे तन्निवर्त्यस्य तज्ज्ञानसमानविषयकाज्ञानोपादानकत्वरूपमिथ्यात्वं सिद्धयतोति युक्तं शुक्त्यादिज्ञानसमानविषयकाज्ञानोपादानकत्वेन रजतादेर्मिथ्यात्वम्। सेत्वादिदर्शनादि निवर्त्यदुरितादेस्तु न निवर्तकज्ञानसमानविषयका-

---

योस्तयोर्निवर्त्यनिवर्तकताया अदृष्टेरिति ब्रह्मज्ञाननिवर्त्यमज्ञानं तावद् ब्रह्मविषयं वक्तव्यम्। ब्रह्म च नित्यप्रकाशात्मकप्रत्यगभिन्नं भेदे प्रमाणाभावात्, श्रुत्यादिनिषेधाच्च इत्युक्तम्। न च नित्यप्रकाशात्मनोऽप्रकाशविषयत्वं युक्तम्। अविद्या च यदि परमार्थः, तदा तद्विषयत्वं न मिथ्याविषयविषयिणोः स्वतोः विषयत्वस्य तदयोगात्। तथा चाविद्याया ज्ञाननिवर्त्यत्वसिद्धये एव तन्मिथ्यात्वमपेक्ष्यते। अयम्भावः—प्रकाशमानत्वं हि प्रकाशप्रयुक्तसंशयाद्यगोचरत्वम्। अज्ञानविषयत्वं च अज्ञानप्रयुक्तसंशयादियोग्यत्वम्। तयोश्च प्रकाशाज्ञानयोः अन्यतरमिथ्यात्वमन्तरेण एकत्र समावेशोऽनुपपन्नः। तत्र प्रकाशमानत्वस्य आविद्यकत्वे ब्रह्मणः स्वप्रकाशत्वायोगात् जगदान्ध्यप्रसङ्गात्, प्रकाशस्य अप्रकाशमानत्वमेवारोपितं वक्तव्यम्। अविद्याविषयत्वस्य मिथ्यात्वेऽपि अविद्यायाः किमायातम्? इत्यत आह—**अविद्या च यदि परमार्थ** इति। विषयविषयिभावस्य स्वरूपसम्बन्धात्मकत्वेन सम्बन्धिनोरुभयोरपि सत्यत्वे सम्बन्धस्य मिथ्यात्वायोगात् अविद्याया मिथ्यात्वमावश्यकम्। तथा चाविद्याया ज्ञाननिवर्त्यत्वे तदेव मिथ्यात्वं ज्ञाननिवर्त्यत्वे प्रयोजकम् ॥२॥

३—ज्ञाननिवर्त्यस्य मिथ्यात्वं विनापि विरुद्धत्वमात्रेण निवर्त्यत्वं स्यादिति पूर्वपक्षं समाधाय अधिष्ठानप्रमात्वेन ज्ञानस्य निवर्तकत्वे ज्ञाननिवर्त्यस्य मिथ्यात्वमेव सिद्धयतीति प्रदर्शयन्नाह सिद्धान्ती—शुक्तिरूप्यादौ कथमिति चेत् शृणु, अधिष्ठानज्ञानत्वेन तत्र ज्ञानस्य निवर्तकत्वात्। अधिष्ठानज्ञानत्वं हि अज्ञाननाशकज्ञानत्वं वा? अज्ञानसमानविषयकप्रमात्वं वा? इति तेन रूपेण निवर्तकत्वे तन्निवर्त्यस्य तज्ज्ञानसमानविषयताज्ञानोपादानकत्वरूपमिथ्यात्वं सिद्धयतीति युक्तं शुक्त्यादिज्ञानसमानविषयकाज्ञानो-

ज्ञानोपादानकत्वमिति न मिथ्यात्वम्। एवं चात्मज्ञानस्यापि विहित-क्रियात्वेन निवर्तकत्वसंभवात् अधिष्ठानज्ञानत्वेन च निवर्तकत्वे माना-भावात् नात्माज्ञानोपादानकत्वरूपमिथ्यात्वसिद्धिः प्रपञ्चस्येति—प्राप्तम्। अत्रोच्यते—आत्मज्ञानस्याप्यधिष्ठानज्ञानत्वेनैव प्रपञ्चं प्रति निवर्त-कत्वम्, प्रकारान्तरासंभवात्। तथा हि—प्रतियोगित्वं तावन्नावच्छेद-कम्; प्रपञ्चस्य भावरूपत्वात्। ज्ञानस्य प्रागभावनिवृत्तिरूपत्वेन प्रति-योगित्वेन प्रागभावनिवर्तकत्वासिद्धेश्च। नाप्युत्तरगुणत्वम्; आकाशा-देरात्मविशेषगुणत्वाभावात्, इच्छादेरपि प्रपञ्चनिवर्तकत्वापाताच्च। नापि फलत्वम्; संस्कारस्य स्मरणजनकत्ववदाकाशादेरात्मज्ञानजनक-त्वाभावात्। संस्कारस्य स्मृत्यनाश्यत्वेनोदाहरणासिद्धेश्च। विषय-दोषदर्शनस्य तु रागादिनिवर्तकत्वं रागादिकारणीभूतबलवदनिष्टान-नुबन्धीष्टसाधनत्वभ्रमरूपतत्कारणनिवर्तकत्वेनेति न प्रकृतोदाहरणा-दतिरिच्यते; शुक्तिरूप्यतुल्यत्वात्। गरुडध्यानं तु न प्रत्युदाहरणम्;

---

पादानकत्वेन रजतादेर्मिथ्यात्वम्। सेत्वादिदर्शनादिनिवर्त्यदुरितादेस्तु न निवर्तकज्ञानसमानविषयकाज्ञानोपादानकत्वमिति न मिथ्या-त्वम्। एवञ्च आत्मज्ञानस्यापि विहितक्रियात्वेन निवर्तकत्व-सम्भवात् अधिष्ठानज्ञानत्वेन च निवर्तकत्वे मानाभावात् नात्मा-ज्ञानोपादानकत्वरूपमिथ्यात्वसिद्धिः प्रपञ्चस्येति प्राप्तम्। अत्रोच्यते, आत्मज्ञानस्यापि अधिष्ठानज्ञानत्वेनैव प्रपञ्चं प्रति निवर्तकत्वं प्रकारान्तरासम्भवात्। तथा हि प्रतियोगित्वं तावन्नावच्छेदकं प्रपञ्चस्य भावरूपत्वात्। ज्ञानस्य प्रागभावनिवृत्तिरूपत्वेन प्रतियोगि-त्वेन प्रागभावनिवर्तकत्वासिद्धेश्च। नाप्युत्तरगुणत्वम् आकाशादेरात्म-विशेषगुणत्वाभावात् इच्छादेरपि प्रपञ्चनिवर्तकत्वापाताच्च। नापि फलत्वं संस्कारस्य स्मरणजनकत्ववदाकाशादेरात्मज्ञानजनकत्वा-भावात्। संस्कारस्य स्मृत्यनाश्यत्वेन उदाहरणासिद्धेश्च। विषयदोष-दर्शनस्य तु रागादिनिवर्तकत्वं रागादिकारणीभूतबलवदनिष्टाननु-बन्धीष्टसाधनत्वभ्रमरूपतत्कारणनिवर्तकत्वेनेति न प्रकृतोदाहरणादति-

ध्यानस्य रागादेरिव ज्ञानत्वानभ्युपगमात्। ज्ञानस्येच्छानधीनत्वेन तदधीनज्ञानापेक्षया वैलक्षण्यात्। स्पष्टं चैतदाकरे। ज्ञानत्वेऽपि तस्य सेतुदर्शनपक्षान्नातिरेकः। शास्त्रविहितत्वाविशेषात्। केवलं सेत्वादिदर्शनवद्विहितक्रियात्वमवशिष्यते। तच्च न संभवति; ज्ञानस्य कर्तुमकर्तुमशक्यत्वेन विधेयत्वायोगात्। विस्तरेण च ज्ञाने विधिराकरेषु निराकृतः। निराकरिष्यते चेहापि। सेतुदर्शने कथमिति चेत्? विशिष्टाकारेण विधेयत्वोपपत्तिः। न हि सेतुदर्शनमात्रस्य दुरितनाशकत्वम्; तत्रत्यम्लेच्छानामपि दुरितनाशप्रसङ्गात्, किंतु परराष्ट्रादुपस्थानादिपूर्वकव्रतकलापविशिष्टस्य; तथा च छत्रपादुकादिवर्जनदोषोद्घोषण-दूरदेशगामित्वभिक्षाभोजित्वादिनियमानां कृतिसाध्यत्वात् तद्विशिष्टं सेतुदर्शनमपि कृतिसाध्यमिति विशिष्टरूपेण विधानोपपत्तिः। आत्मज्ञाने तु नास्ति किंचिद्विशेषणमपि कृतिसाध्यम्, येन तद्विशिष्टत्वेनापि विधेयत्वं स्यात्। कर्मसमुच्चयस्य निराकरिष्य-

---

रिच्यते शुक्तिरूप्यतुल्यत्वात्। गरुडध्यानन्तु न प्रत्युदाहरणं ध्यानस्य रागादेरिव ज्ञानत्वानभ्युपगमात्। ज्ञानस्य इच्छानधीनत्वेन तदधीनज्ञानापेक्षया वैलक्षण्यात्। स्पष्टश्चैतदाकरे। ज्ञानत्वेऽपि तस्य सेतुदर्शनपक्षान्नातिरेकः। शास्त्रविहितत्वाविशेषात्। केवलं सेत्वादिदर्शनवद् विहितक्रियात्वमवशिष्यते। तच्च न सम्भवति ज्ञानस्य कर्तुमकर्तुमशक्यत्वेन विधेयत्वायोगात्। विस्तरेण च ज्ञाने विधिराकरेषु निराकृतः। निराकरिष्यते चेहापि। सेतुदर्शने कथमिति चेत्? विशिष्टाकारेण विधेयत्वोपपत्तिः। न हि सेतुदर्शनमात्रस्य दुरितनाशकत्वं तत्रत्यम्लेच्छानामपि दुरितनाशप्रसंगात्। किन्तु परराष्ट्रादुपस्थानादिपूर्वकव्रतकलापविशिष्टस्य तथा च छत्रपादुकादिविवर्जन-दोषोद्घोषणदूरदेशगामित्वभिक्षाभोजित्वानियमानां कृतिसाध्यत्वात् तद्विशिष्टं सेतुदर्शनमपि कृतिसाध्यमिति विशिष्टरूपेण विधानोपपत्तिः। आत्मज्ञाने तु नास्ति किञ्चिद् विशेषणमपि कृतिसाध्यं येन तद्विशिष्टत्वेनापि विधेयत्वं स्यात्। कर्मसमुच्चयस्य

माणत्वात् । बन्धस्याज्ञानमात्रहेतुकत्वेन ज्ञानातिरिक्तनिवर्तकानपेक्षणाच्च । बन्धस्याज्ञानहेतुकत्वं च 'मायां तु प्रकृतिं विद्यात्' 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इत्यादिश्रुतिस्मृतिन्यायसिद्धम् । वक्ष्यते चाग्रे । अज्ञाननिवर्तकज्ञानस्य चोत्पत्तिमन्तरेणान्यापेक्षा नास्तीति शुक्त्यादिज्ञाने दृष्टम् । तथा चोक्तं वार्तिककृद्भिः—

'तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥' इति
'प्रत्यग्याथात्म्यधीरेव प्रत्यगज्ञानहानिकृत् ।
सा चात्मोत्पत्तितो नान्यद्ध्वान्तध्वस्तावपेक्षते ॥' इति च ।

अत एव 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि'त्यादिश्रुतिः । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।' इत्यादिस्मृतिश्चाविद्यावस्थायां संसारोपलम्भं विद्या-

---

निराकरिष्यमाणत्वात् । बन्धस्याज्ञानमात्रहेतुकत्वेन ज्ञानातिरिक्तनिवर्तकानपेक्षणाच्च । बन्धस्य अज्ञानहेतुकत्वञ्च 'मायान्तु प्रकृतिं विद्यात्', 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इत्यादिश्रुतिस्मृतिन्यायसिद्धम् । वक्ष्यते चाग्रे—अज्ञाननिवर्तकज्ञानस्य चोत्पत्तिमन्तरेण अन्यापेक्षा नास्तीति शुक्त्यादिज्ञाने दृष्टम् । तथा चोक्तं वार्तिककृद्भिः—

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यतीति ॥
प्रत्यक् याथात्म्यधीरेव प्रत्यगज्ञानहानिकृत् ।
सा चात्मोत्पत्तितो नान्यद् ध्वान्तध्वस्तावपेक्षते ॥ इति च ।

अत एव यत्र हि द्वैतमिव भवति तदा इतरः इतरं पश्यति, यत्रत्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् इत्यादिश्रुतिः ।

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति सर्वाणि सा निशा पश्यतो मुनेः ॥

वस्थायां च तदनुपलम्भं दर्शयति। तस्मादधिष्ठानप्रमात्वेनात्मज्ञान-
निवर्त्यत्वाच्छुक्तिरूप्यादिष्विव बन्धेऽपि मिथ्यात्वं सिद्धम्।

---

इत्यादिस्मृतिश्च अविद्यावस्थायां संसारोपलम्भं विद्यावस्थायाञ्च तदनुपलम्भं दर्शयति। तस्मादधिष्ठानप्रमात्वेनात्मज्ञाननिवर्त्यत्वात् शुक्तिरूप्यादिष्विव बन्धेऽपि मिथ्यात्वं सिद्धम्। पूर्वपक्षिमते आरोपित-वस्तुमात्रस्य शशविषाणादिवदसद्रूपत्वात् तस्य तत्त्वज्ञाननिवर्त्यत्वं तैनाङ्गीक्रियते इत्यतः पूर्वपक्षी पृच्छति—शुक्तिरूप्यादौ कथमिति चेत्? शुक्ति-रूप्यादौ असति ज्ञाननिवर्त्यत्वं कथम्? सिद्धान्ती स्वसिद्धान्तानुसारेण उत्तर-यति—शुक्तिरजतस्य प्रातिभासिकस्याधिष्ठानं शुक्तिः। शुक्तितत्त्वसाक्षात्कारेण अधिष्ठानज्ञानत्वेन ज्ञानस्य शुक्तिरजतोपादानाज्ञाननिवर्तकत्वात् अज्ञानोपादेयरज-तस्यापि ज्ञाननिवर्त्यत्वम्। अध्यासोपादानाज्ञानविषयो हि अधिष्ठानम्। अतोऽ-धिष्ठानज्ञानत्वमधिष्ठानविषयकाज्ञाननाशकत्वम्। अथ वा अध्यासोपादानाज्ञान-विषयविषयकप्रमात्वमधिष्ठानज्ञानत्वम्। तेन रूपेणाधिष्ठानज्ञानस्याज्ञाननिवर्तकत्वेऽ-ज्ञानोपादानकरजतादेरपि उपादानाज्ञाननिवृत्तावेव उपादेयस्य निवृत्तत्वात्। अधि-ष्ठानज्ञानसमानविषयकाज्ञानोपादानकत्वरूपं मिथ्यात्वं शुक्तिरजतादीनां सिद्ध्यति। अतः शुक्तिरजतादीनां शुक्त्यादिज्ञानसमानविषयकाज्ञानोपादानकत्वेन रजतादे-र्मिथ्यात्वम्। ननु रजतादेरज्ञानोपादानकत्वे सिद्धेऽप्युपादेयस्य रजतस्य मिथ्यात्वं कुतः सिद्ध्यति? ननु मृदुपादानकत्वेन घटादेर्मिथ्यात्वम्? मृद्वत् अज्ञानस्यापि सत्यत्वात्। अज्ञानस्य सत्यत्वे ज्ञाननिवर्त्यत्वं न स्यादिति चेन्न, विरोधो हि निवर्त्यनिवर्तकभावेऽपेक्ष्यते, न तु सत्यत्वमिथ्यात्वे। ज्ञाननिवर्त्यस्यापि अज्ञानस्य सत्यत्वमेव, यथा दण्डनिवर्त्यस्य घटादेः सत्यत्वम्। अतोऽज्ञानस्य मिथ्यात्वं दुरवधारणमिति चेत्। अज्ञानस्य मिथ्यात्वाभावे तदुपादानकप्रपञ्चस्यापि मिथ्यात्वं न स्यात्। अतोऽज्ञानस्य कया रीत्या मिथ्यात्वं प्रसाधनीयमित्येव विचार्यम्। अत्र ब्रूमः—अहमज्ञ इत्यादिप्रतीत्या प्रकाशावरकमज्ञानमिति तावत् सिद्धम्। 'अज्ञानेनावृतं ज्ञानमि'ति स्मृत्यापि प्रकाशाज्ञानयोर्विषयविषयिभाव आवरकात्रिय-माणभावः सिद्ध एव। तयोर्विरुद्धस्वभावयोः ज्ञानाज्ञानयोः सत्यः सम्बन्धो न भवितुमर्हति, यथालोकान्धकारयोः। अतोऽज्ञानप्रकाशसम्बन्धो मिथ्येति अव-

श्यमेव वक्तव्यम्। सम्बन्धस्य च विषयविषयिभावस्य सम्बन्ध्यनतिरिक्तत्वात् एकस्य सम्बन्धिनोऽवश्यं मिथ्यात्वं वक्तव्यम्, अन्यथा सम्बन्धस्य मिथ्यात्वं न स्यात्। सर्वसाक्षिणः प्रकाशस्य मिथ्यात्वे जगदान्ध्यं स्यात्। अतो बलात् अज्ञानस्यैव सम्बन्धिनो मिथ्यात्वं वक्तव्यं विरोधादेव ज्ञानाज्ञानयोः निवर्तकनिवर्त्यभावे यथा ज्ञानेन अज्ञानस्य निवृत्तिरेवम् अज्ञानेनापि ज्ञानस्य निवृत्तिः स्यात्, विरोधस्य अविशेषात्। अतोऽज्ञानस्यैव निवर्त्यतायां कारणविशेषो वक्तव्यः स च अज्ञानस्य मिथ्यात्वमेव नान्यत्कारणं भवितुमर्हतीति भावः। अज्ञानस्य मिथ्यात्वे सिद्धे तदुपादानकप्रपञ्चस्यापि मिथ्यात्वं कैमुतिकन्यायसिद्धमेव। एतदभिप्रायेणैव अज्ञानोपादानकत्वेन रजतादेः मिथ्यात्वमुक्तम्। सेत्वादिदर्शननिवर्त्यदुरितानान्तु न निवर्तकज्ञानसमानविषयकाज्ञानोपादानकत्वम्। अत्र निवर्तकज्ञानं सेतुदर्शनम्। तत्समानविषयकमज्ञानं सेतुविषयकमज्ञानम्। न तत् निवर्त्यदुरितादेरुपादानम् इति न दुरितस्य मिथ्यात्वम्। ननु सेतुदर्शनस्य विहितक्रियात्वेन यथा दुरितादिनिवर्तकता न अधिष्ठानज्ञानत्वेन; एवमेव आत्मज्ञानस्यापि विहितक्रियात्वेनैव प्रपञ्चनिवर्तकता अस्तु। आत्मज्ञानस्य अधिष्ठानज्ञानत्वेन प्रपञ्चनिवर्तकत्वे मानाभावात्। आत्मज्ञानं प्रपञ्चनिवर्तकम् इत्यत्रैव श्रुतिः प्रमाणं; किन्तु आत्मज्ञानस्य निवर्तकतावच्छेदकत्वरूपेऽधिष्ठानज्ञानत्वे श्रुतिर्न प्रमाणम्। अतो प्रपञ्चस्य नात्मविषयकाज्ञानोपादानकत्वरूपमिथ्यात्वसिद्धिः इति शङ्कायामाह—आत्मज्ञानस्य प्रपञ्चनिवर्तकत्वं प्रदर्शितश्रुतिस्मृतिसिद्धम्। तच्चात्मज्ञानमवश्यमेव किञ्चिद्रूपेण निवर्तकं भवति। निवर्तकतावच्छेदकरूपापरिचये निवर्तकत्वस्यैव ग्रहीतुमशक्यत्वात्। निवर्तकतावच्छेदकं रूपं चाधिष्ठानज्ञानत्वं व्यतिरेकेणान्यद्रूपं न भवितुमर्हति असम्भवादित्याह सिद्धान्ती—आत्मज्ञानस्यापि अधिष्ठानज्ञानत्वेनैव प्रपञ्चनिवर्तकत्वम्। निवर्तकतावच्छेदकप्रकारान्तरासम्भवात्। सम्भावितान् निवर्तकतावच्छेदकप्रकारान् प्रदर्श्य निराचष्टे—तथा हीति। यथा प्रतियोगित्वेन प्रतियोगी स्वप्रागभावनिवर्तको भवति एवमात्मज्ञानं प्रतियोगित्वेन प्रपञ्चनिवर्तकं न भवितुमर्हति, प्रपञ्चस्य भावरूपत्वात्। प्रागभावस्यैव निवर्तकता प्रतियोगित्वेनावच्छिद्यते। किञ्च प्रतियोग्यपि न प्रागभावनिवर्तकः, अतः प्रतियोगित्वेन प्रागभावनिवर्तकत्वं प्रतियोगिनो

नास्त्येव । प्रतियोगिनः प्रागभावनिवृत्तिरूपत्वात् । प्रतियोगिनः प्रागभाव-निवर्तकत्वे प्रतियोग्युत्पत्तिकालेऽपि प्रागभावस्य सत्त्वात् उत्पन्नस्य पुनरुत्पत्त्या-पत्तिस्तदवस्थैव स्यात् । प्रतियोग्युत्पत्तिकालेऽपि प्रागभावस्यपि विद्यमानत्वे प्रति-योगिनो युगपत् भावित्ववर्तमानत्वे स्याताम् । अतः प्रतियोगी प्रागभाव-निवृत्तिरेव, न तु निवर्त्तकः । ज्ञानस्य स्वप्रागभावनिवृत्तिरूपत्वात् न स्वप्राग-भावनिवर्तकत्वम् । एवमात्मज्ञानस्य प्रपञ्चनिवर्तकत्वे न उत्तरज्ञानत्वं निवर्तक-तावच्छेदकम् । योग्यात्मविशेषगुणस्य स्वोत्तरगुणनाश्यत्वेऽपि आकाशादिप्रपञ्चस्य आत्मविशेषगुणत्वाभावात् न उत्तरात्मगुणत्वेन आत्मज्ञानस्याकाशादिप्रपञ्चनिवर्त-कत्वम् । स्वोत्तरात्मगुणत्वेन आत्मज्ञानस्य प्रपञ्चनिवर्तकत्वे आकाशाद्युत्तरोत्पन्ने-च्छादेरपि आकाशादिप्रपञ्चनिवर्तकतापातात् । नापि फलत्वेनात्मज्ञानस्य प्रपञ्चनिव-र्तकत्वम् । यथा संस्कारस्य संस्कारफलेन स्मृत्या नाशः, संस्कारजन्यत्वात् स्मरणस्य । संस्कारः स्मरणजनकम् अतः स्मरणं संस्कारफलम् । आत्मज्ञान-रूपेण फलेन तदैव प्रपञ्चस्य निवृत्तिर्भवितुमर्हति यदि आकाशादिप्रपञ्चस्य आत्मज्ञानजनकत्वं स्यात् । तदभावात् आत्मज्ञानं न फलत्वेन आकाशादि-प्रपञ्चस्य निवर्तकं भवितुमर्हति । वस्तुतस्तु संस्कारफलेन स्मरणेन न संस्कारो नश्यति । अतः फलनाश्यत्वमपि संस्कारे नास्ति । अतः स्मरणेन संस्कारनाशे फलत्वेन नाशकत्वं स्मरणस्य यदुक्तं तदेवासिद्धम् । स्मरणेन संस्कारनाशे स्मृतिधारा न स्यात् । स्मरणस्य संस्कारनाशकत्वं तु नास्त्येव । प्रत्युत, पुनः पुनः स्मरणे संस्कारो दृढो भवतीति प्रतीतेश्च न स्मरणं संस्कार-नाशकमिति भावः । कृतव्युत्पादनश्चैतत् तृतीयमिथ्यात्वलक्षणे । उक्तञ्च तत्रैवा-चार्येण—स्मृतेः संस्कारनिवर्तकत्वे मानाभावात् । स्मृतौ हि जातायां संस्कारो दृढो भवतीत्यनुभवसिद्धम् । तेषां दृढतरत्वञ्च समानविषयकसंस्कारानेकत्वादित्य-दोषः इत्यादिग्रन्थेन । यच्चोक्तं पूर्वपक्षिणा—विषयदोषदर्शनस्य रागादिनिवर्त-कत्वेऽपि दर्शननिवर्त्यरागादेर्न मिथ्यात्वम् । एवमेव ब्रह्मदर्शननिवर्त्यप्रपञ्चस्यापि न मिथ्यात्वमिति; तदपि अतितुच्छम् । रागादेर्भ्रमकार्यतया विषयदोषदर्शनस्य च रागादिकारणभ्रमनिवर्तकत्वेन न प्रकृतोदाहरणादतिरिच्यते । सुरापानादौ यद्द्वारा रागाद्युत्पद्यते तत्कारणं बलवदनिष्टाननुबन्धीष्टसाधनत्वं भ्रमः । सुरायामिष्टसाध-

नत्वभ्रान्त्यैव रागी तत्र रज्यति, विषयदोषदर्शनेन सा भ्रान्तिर्निवर्तते। सुरायां बलवदनिष्टानुबन्धित्वग्रह एव विषयदोषदर्शनं; तेन बलवदनिष्टाननुबन्धित्व-भ्रान्तिनिवृत्त्या रागो निवर्तते। यथा शुक्तितत्त्वसाक्षात्कारेण शुक्तिविषयकाज्ञाने निवृत्ते तदुपादानकरजतादि निवर्तते, एवमेव चात्रापि बलवदनिष्टानुबन्धित्वग्रहात् बलवदनिष्टाननुबन्धित्वभ्रमो निवर्तते। ततो रागो निवर्तते। यदपि सत्यं विषं गरुडध्यानान्निवर्तते, एवमेव सत्यः प्रपञ्चो ब्रह्मध्यानादित्यपि न प्रत्युदाहरणम्। ध्यानस्य रागादेरिव ज्ञानत्वानभ्युपगमात्। ज्ञानध्यानयोर्वैलक्षण्यात्। ज्ञानस्य इच्छानधीनत्वात् ध्यानस्य च इच्छासाध्यत्वात् द्वयोर्महद्वैलक्षण्यम्। अत एव ध्यानस्य मानसत्वेऽपि तत् मानसी क्रिया न ज्ञानम्। उक्तञ्चाकरे—

न बुद्धिं मर्दयन् दृष्टो घटतत्त्वस्य वेदिता।
उपमृद्नाति चेद् बुद्धिं ध्यातासौ न तु तत्त्ववित्॥

ध्यानस्य बुद्धिमर्दनापेक्षत्वात् तत्त्वज्ञानस्य तदनपेक्षत्वात् ज्ञानध्यानयोर्महदन्तरम्। स्पष्टश्चैतदाकरे चतुर्थसूत्रशांकरभाष्ये इत्यर्थः। तुष्यतु दुर्जनन्यायेनाह—ध्यानस्य **ज्ञानत्वेपि तस्य सेतुदर्शनपक्षात् नातिरेकः**। यथा सेतुदर्शनं शास्त्रविहितत्वेन पापनिवर्तकमेवं गरुडध्यानमपि शास्त्रविहितत्वेन विषनिवर्तकम्। एवञ्च प्रपञ्चनिवर्तकज्ञानेऽधिष्ठानप्रमात्वातिरेकेणान्यत् निवर्तकतावच्छेदकं न भवितुमर्हतीत्युक्तम्। अतः परिशेषादधिष्ठानप्रमात्वेनैवात्मज्ञानस्य प्रपञ्चनिवर्तकत्वं सिद्ध्यति। **केवलं सेत्वादिदर्शनवत् विहितक्रियात्वमवशिष्यते** इति। यथा विहितक्रियात्वेन सेत्वादिदर्शनं पापनिवर्तकम् एवमात्मदर्शनमपि विहितक्रियात्वेनैव प्रपञ्चनिवर्तकं भवतु; तथा च विहितक्रियानिवर्त्यदुरितवत् प्रपञ्चस्य सत्यत्वमेव स्यात् इति पूर्वपक्षिणोऽभिप्रायः।

समाधत्ते सिद्धान्ती—**तच्च न सम्भवति**। ज्ञानस्य विहितक्रियारूपत्वं न सम्भवति। एतच्च भाष्यकृद्भिरेव समन्वयसूत्रे प्रतिपादितम्। ज्ञानस्य कर्तुमकर्तुमशक्यत्वेन विधेयत्वायोगात्। विस्तरेण च ज्ञानविधिराकरेषु निराकृतः। इहापि तृतीयपरिच्छेदे ज्ञानस्य पुरुषतन्त्रताभङ्गप्रकरणे ज्ञानविधिभङ्गप्रकरणे च निराकरिष्यते। ननु सेतुदर्शनस्यापि ज्ञानरूपत्वात् कथं विशिष्टक्रियात्वेन विहितत्वमिति चेत्? सेतुदर्शनस्य ज्ञानत्वेऽपि न दर्शनत्वेन विधेयत्वं, किन्तु विशि-

ष्टाकारेण विधेयत्वम्। सेतुदर्शनज्ञाने यानि विशेषणानि कर्माणि दूरदेशगमनादीनि तेषां क्रियात्वात् तद्विशिष्टसेतुदर्शनस्यापि विशिष्टरूपेण क्रियात्वादेव विधेयत्वम्। कथं सेतुदर्शनस्य विहितक्रियात्वेन विधेयत्वं, न तु दर्शनत्वेनेति निर्णीतमित्यत आह—**न हि सेतुदर्शदमात्रस्य दुरितानाशकत्वम्**। न हि निर्विशेषं सेतुदर्शनं विहितक्रियारूपविशेषणरहितं केवलं सेतुदर्शनं दुरितनाशकम्। तथात्वे सेतुस्थलीयानां म्लेच्छानाञ्च दुरितनाशप्रसङ्गात्। कीदृक् विहितकर्मकलापविशिष्टं सेतुदर्शनं दुरितनाशकमित्याकाङ्क्षायामाह—**किन्तु परराष्ट्रात् उपस्थानादिपूर्वकमित्यादि**। सेतुदर्शनविशेषणत्वेन यानि विहितकर्माणि मूले उक्तानि तानि सर्वाणि मिताक्षराधृतपराशरोक्तानि; तानि च प्राक् कथितानि। दर्शनविशेषणानां कर्मणां कृतिसाध्यत्वात् तद्विशेषणविशिष्टं सेतुदर्शनमपि कृतिसाध्यमिति सेतुदर्शनस्य विधेयत्वोपपत्तिः। आत्मज्ञानेन तु अज्ञाने निवर्तनीये कृतिसाध्यं किञ्चिदपि विशेषणं नात्मज्ञाने विशेषणीयं येन कृतिसाध्यविशेषणविशिष्टत्वेनात्मज्ञानस्य विधेयत्वं स्यात्। कर्मसमुचितज्ञानस्य न मोक्षजनकत्वमाकरे बहुधा निराकृतत्वादिहापि निराकरिष्यमाणत्वात्। बन्धस्याज्ञानमात्रप्रयुक्तत्वेन ज्ञानातिरिक्तनिवर्तकानपेक्षणाच्च। बन्धस्याज्ञानप्रयुक्तत्वञ्च "मायान्तु प्रकृतिं विद्यात्", "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इत्यादिश्रुतिस्मृतिन्यायसिद्धम्। ज्ञानेन हि अज्ञाने निवर्तनीये स्वोत्पत्तिमन्तरेण अन्यापेक्षा नास्तीति शुक्त्यादिज्ञाने दृष्टम्। भगवता जैमिनिनापि 'पुरुषस्येन्द्रियाणां बुद्धिजन्म' इति जन्मपदेन सूचितम्। तत्त्वज्ञानस्य उत्पत्तिमन्तरेण अज्ञाननिवर्तने अन्यापेक्षा नास्तीति निरपेक्षमेव ज्ञानमज्ञाननिवर्तकम् इत्यत्र वार्तिककार सम्मतिमाह—**सम्यग्धीजन्ममात्रत इति**। सा चात्मधीः **आत्मोत्पत्तितो नान्यद् ध्वान्तध्वस्तौ अपेक्षते इति च**। अत एव प्रदर्शिते, श्रुतिस्मृती अविद्यावस्थायां संसारोपलम्भं विद्यावस्थायाञ्च संसारानुपलम्भं दर्शयतः। तस्मादधिष्ठानप्रमात्वेनैव आत्मज्ञानस्य निवर्तकत्वम्। अधिष्ठानप्रमानिवर्त्यत्वेन च शुक्तिरूप्यादिष्विव मिथ्यात्वं

यत्त्वीश्वरज्ञानेन सत्यं घटादि निवर्तत इति प्रत्युदाहरणम्। तन्न; ईश्वरज्ञानस्य तार्किकमतेऽपि उपादानगोचरापरोक्षज्ञानत्वेनैव कारणत्वात्। अभावस्य च निरुपादानत्वात्; अभावं प्रति कारणत्वे मानाभावात्। सोपादानत्वे तु समवेतत्वेन तस्यापि भावत्वापत्तेः अत्यन्ताभावादिवच्च तदजन्यत्वेऽपि ध्वंसस्य तद्विषयत्वोपपत्तेः। न च तादृगीश्वरज्ञाने संप्रतिपत्तिरप्यन्येषामिति न काप्यनुपपत्तिः। यथा च शुक्त्यादिज्ञानस्य रूप्यादिनिवर्तकत्वमप्रामाण्यज्ञानविरहमपेक्ष्यैव, एवमात्मज्ञानस्यापि श्रवणादिनिवृत्तावसंभावनादिनिवृत्तिरूपाप्रामाण्यज्ञानविरहापेक्षत्वमिति न किंचिदप्यधिकं कल्पितम्। आत्मज्ञानस्य सर्वसुकृतसाध्यत्वं शुक्त्यादिज्ञानापेक्षया विलक्षणमिति तु दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यमात्रोद्भावनाद् वैधर्म्यसमा जातिः। अज्ञानस्य च

---

बन्धेऽपि सिद्धम्। अविद्याया मिथ्यात्वेनैव अधिष्ठानज्ञानमात्रनिवर्त्यत्वात्। तदुपादेयानाञ्च उपादानाज्ञाननिवृत्तिद्वारा अधिष्ठानप्रमानिवर्त्यत्वात् मिथ्यात्वम्। सत्यस्यापि ईश्वरज्ञाननिवर्त्यत्वात् न ज्ञाननिवर्त्यत्वमात्रेण मिथ्यात्वं सिद्ध्यतीति पूर्वपक्षिशंकां समाधत्ते—यत्तु ईश्वरज्ञाने सत्यं घटादि निवर्तते इति प्रत्युदाहरणम्, तन्न, ईश्वरज्ञानस्य तार्किकमतेऽपि उपादानगोचरापरोक्षत्वेन [ज्ञानत्वेनैव] कारणत्वात्। अभावस्य च निरुपादानत्वात् अभावं प्रति कारणत्वे मानाभावात्। सोपादानत्वे तु समवेतत्वेन तस्यापि भावत्वापत्तेः। अत्यन्ताभावादिवच्च तदजन्यत्वेऽपि ध्वंसस्य तद्विषयत्वोपपत्तेः। न च तादृगीश्वरज्ञाने सम्प्रतिपत्ति[रप्य]न्येपामिति न काप्यनुपपत्तिः। यथा च शुक्त्यादिज्ञानस्य रूप्यादिनिवर्तकत्वमप्रामाण्यज्ञानविरहमपेक्ष्यैव एवमात्मज्ञानस्यापि श्रवणादिनिवृत्तावसम्भावनादिनिवृत्तिरूपाप्रामाण्यज्ञानविरहापेक्षत्वमिति न किंचिदप्यधिकं कल्पितम्। आत्मज्ञानस्य सर्वसुकृतिसाध्यत्वं शुक्त्यादिज्ञानापेक्षया विलक्षणमिति तु दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यमात्रोद्भावनाद्

समानाधिकरणसमानाकारज्ञाननिवर्त्यत्वम्। जीवन्मुक्तौ च प्रारब्ध-कर्मप्रतिबन्धेन बन्धनाशविलम्ब इत्यादि सर्वमुपरिष्टादुपपादयिष्यते। सत्यस्य ज्ञाननिवर्त्यत्वे तु आश्रयविषयोभयसंबन्धित्वादिना अतिप्रसङ्गो विवरणकारैर्वर्णितः। तस्मादधिष्ठानज्ञानत्वेन ज्ञाननिवर्त्यत्वं मिथ्यात्वे प्रमाणमिति सिद्धम् ॥३॥

इत्यद्वैतसिद्धौ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिः ॥

---

वैधर्म्यसमा जातिः। अज्ञानस्य च समानाधिकरणसमानाकारज्ञाननिव-र्त्यत्वम्। जीवन्मुक्तौ च प्रारब्धकर्मप्रतिबन्धेन बन्धनाशविलम्ब इति [इत्यादि]सर्वमुपरिष्टादुपपादयिष्यते। सत्यस्य ज्ञाननिवर्त्यत्वे तु आश्रयविषयोभयसम्बन्धित्वादिनातिप्रसङ्गो विवरणकारैर्वर्णितः। तस्मा-दधिष्ठानज्ञानत्वेन ज्ञाननिवर्त्यत्वं मिथ्यात्वे प्रमाणमिति सिद्धम्।

धर्मिग्राहकमानेन ईश्वरस्य जगत्कर्तृत्वसिद्धौ सर्वज्ञत्वमपि सिद्ध्यति; कर्तृत्वञ्च स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमीश्वरस्य स्वोपादानद्व्यणु-काद्युपादानगोचरापरोक्षज्ञानं सिध्यत् अदृष्टदृष्टौ सर्वज्ञ इति न्यायेन सर्वविषयकं सिद्ध्यति। ईश्वरज्ञानस्य कार्यमात्रं प्रति हेतुतया घटादिसत्यवस्तुनाशेऽपि ईश्वरज्ञानं कारणं वाच्यम्; तथा च ईश्वरज्ञाननिवर्त्ये घटादौ मिथ्यात्वाभावात् न ज्ञाननिवर्त्यत्वेन मिथ्यात्वसिद्धिः घटादौ व्यभिचारादिति पूर्वपक्षिणोऽभिप्रायः। तं निरस्यति—ईश्वरज्ञानस्य उपादानगोचरापरोक्षत्वेन कारणता पूर्वोक्तयुक्त्या निश्चिता; घटादिनाशस्य च अभावत्वेन निरुपादानत्वात् निरुपादानाभावं प्रति प्रद-र्शितरूपेण ईश्वरज्ञानस्य कारणत्वाभावात्। घटादिनाशस्य सोपादानत्वाभ्युपगमे नाशस्यापि भावत्वापत्तेः। नित्यस्यात्यन्ताभावस्य ईश्वरज्ञानाजन्यस्यापि यथा ईश्वरज्ञानविषयत्वं तथा ध्वंसस्यापि ईश्वरज्ञानाजन्यस्य ईश्वरज्ञानविषयत्वम्, ईश्वरज्ञानस्य यत् यत्किञ्चिद्विषयत्वे प्रमाणाभावात् ईश्वरज्ञानस्य सर्वविषयकत्वात्। तार्किकमतसिद्धेश्वरज्ञानमादायापि व्यभिचारो नास्तीत्युक्त्वा तार्किकमतसिद्धम् ईश्वरज्ञानमौपनिषदानां न सम्मतम्; अतः तदादाय व्यभिचारशङ्कैव नास्तीति तार्किकमतसिद्धेश्वरज्ञानाङ्गीकारे अनङ्गीकारे वा न काप्यनुपपत्तिरित्युक्तम्।

शुक्तिप्रमया मिथ्यारजतनिवृत्तिवत् आत्मप्रमया मिथ्याप्रपञ्चनिवृत्तिरिति दृष्टानुसारेणैव सिद्धयति, न दृष्टादधिकं किमपि अस्माभिः कल्प्यते इत्याह— यथा शुक्त्यादिज्ञानस्येति। शुक्त्यादिज्ञानमपि स्वकीयाप्रामाण्यशङ्कादिविरहमपेक्ष्यैव रजतादिनिवर्तकं शुक्त्यादिज्ञानेऽप्रामाण्यशङ्कायामप्रामाण्यनिश्चये वा न रजतादिनिवर्तकता; एवमात्मज्ञानेऽपि असम्भावनादिसत्त्वे न प्रपञ्चनिवर्तकत्वं किन्तु श्रवणमननादिना आत्मज्ञानस्य असम्भावनादिनिवृत्तिरूपाप्रामाण्यज्ञानविरहमपेक्ष्य प्रपञ्चनिवर्तकत्वम्। इति न दृष्टात् किमप्यधिकं कल्प्यतेऽस्माभिः। यच्च आत्मज्ञानस्य सर्वसुकृतिसापेक्षत्वं शुक्तिज्ञानस्य तन्निरपेक्षत्वमितिदृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यमात्रोद्भावनं नास्मत् सिद्धान्तबाधकम्। यथा धूमवत्तया महानसस्य साधर्म्येण पर्वते वह्नि सिद्धौ पर्वते महानसत्वाभाववैधर्म्येण वह्निर्न सिद्धयेदिति यथा वैधर्म्यमात्रं पर्वते वह्नि सिद्धौ न बाधकं तथा प्रकृतेऽपीति। बाधनाक्षमदूषणोद्भावनं जात्युत्तरमिति भावः। ज्ञानाज्ञानयोः समानाश्रयविषयकयोरेव बाध्यबाधकभावः; ज्ञानसमानाश्रय विषयकमेवाज्ञानं ज्ञाने न बाध्यते इति। जीवन्मुक्तौ तु आत्मज्ञाने सत्यपि बन्धनाशविलम्बः प्रारब्धकर्मप्रतिबन्धादिति अग्रे उपपादयिष्यते चतुर्थाध्याये जीवन्मुक्त्युपपत्ति प्रकरणे इति भावः। सत्यस्य ज्ञाननिवर्त्यत्वे तु अतिप्रसंगो विवरणाचार्यैरेव दर्शित विवरणप्रथम वर्णके— निवर्त्यतां तर्हि ज्ञानेन वस्तुभूतमेव प्रमातृत्वकर्तृत्वभोक्तृत्वमिति; नेत्याह तद्यदि वस्तुकृतमिति तथाहि चित्रावयविनि नील विशिष्टद्रव्यज्ञानं स्वविषयं नीलं वा स्वविषयसमवेतं वा रसादिकं, विरोधिनं वा पीतिमादिगुणं न निवर्तयति स्वविषयानवबोध एव केवलस्तेन निवर्त्यते। स्वाश्रयगतं वस्तु ज्ञानेन निवर्तते इति चेन्न, घटादिज्ञानेन आत्मगतधर्माधर्मादिगुणानिवृत्तेः। न च आश्रयविषयोभय सम्बन्धि वस्तु ज्ञानेन निवर्तते आत्मनः शरीरविषयज्ञानेन देहात्मसम्बन्धाद्यनिवृत्तेरिति। [विवरणम्, पृ० ६] तस्मात् अधिष्ठानज्ञानत्वेन ज्ञाननिवर्त्यत्वं मिथ्यात्वे प्रमाणमिति सिद्धम् ॥३॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यां ज्ञाननिवर्त्यत्वान्यथानुपपत्तिविवरणम्।

## अथ दृष्टिसृष्टयुपपत्तिः

शुक्तिरूप्यस्वप्नादिवत् दृष्टिसृष्ट्यन्यानुपपत्त्यापि जगतो मिथ्या-त्वसिद्धिः। अथ केयं दृष्टिसृष्टिः? [१] दृष्टिरेव सृष्टिरिति वा, [२] दृष्टि-

---

१—ननु गुरुदेवतादेरन्यस्य वा प्रपञ्चस्य मिथ्यात्वे कथं ततो अद्वैत-ब्रह्मावगमः, अन्यद् वा विचित्रं कार्यं भवेदिति चेन्न, स्वप्ने मिथ्याभूतादपि सत्यविचित्रकार्यदर्शनात्। एवं जाग्रत्यपि तत्प्रसिद्धमित्याह—

मिथ्यासुषीः सवितृमण्डलमध्यवर्ती
प्रत्यक्षदृष्टिपथमापतितोऽचिरेण।
द्रष्टुः शरीरकरणप्रविभागरूपं
मृत्युं निवेदयति सत्यमिति प्रसिद्धम्॥ [सं० शा०१—३३७]

सवितरि रथनाभिच्छिद्रवत् कल्पितं सुषिरं प्रत्यक्षदृष्टिविषयोऽचिरेण द्रष्टुः मृत्युं मरणं सत्यं निवेदयति। एतच्च ऐतरेयब्राह्मणे [न]—"चिरमिव जीविष्य-तीति विद्यादि,,त्युपक्रम्य "छिद्र इवादित्यो दृश्यते" इति श्रुतिप्रसिद्धमनुभवसिद्धञ्च, नात्र विमतिरिति भावः। वस्तुनः कारणत्वे कार्यत्वे च सर्वसम्प्रतिपन्नासद्विलक्षण-स्वरूपविशेष एव विवक्षितः। तावतैव अनन्यथासिद्धत्वादेः कारणत्वशरीर-स्योपपत्तेः, न तु अबाध्यत्वमपेक्षितम्। किञ्च सूत्रकारोऽपि उक्तन्यायम्

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयादित्यादि" श्रुतिं [छा० ५।२।९] च पश्यन् मिथ्या सन्नपि स्त्रीदर्शनकुञ्जरारोहणदर्शनादिरूपः स्वप्नः शुभाशुभफलयोरागमस्य—प्राप्तेः सूचकः स्यादिति "सूचकश्च हि श्रुतेः" इत्यादिसूत्रेणाह, इति तस्यापि सम्मतमेतत् इत्याह—

स्वप्नः शुभाशुभफलागमसूचकः स्या-
न्मिथ्यापि सन्निति च सूत्रकृदाह यत्नात्।
गुर्वादि सर्वमिदमद्वयबुद्धिहेतु-
र्मायानिबन्धनमिति प्रतिपादनाय॥
[सं० शा० १।३३८]

व्यतिरिक्तसृष्ट्यभावो वा, [३] दृष्टिव्यतिरेकेण सृज्याभावो वा, [४] दृष्टिसामग्रीजन्यत्वं वा, [५] दृष्टिसमानकालीनसृष्टिर्वा, [६] दृष्टिसमानसत्ताकसृष्टिर्वा, [७] सदसद्विलक्षणत्वं वा, [८] त्रिविधसत्त्वबहिर्भूतत्वे सत्यसद्विलक्षणत्वं वा, [९] अज्ञातसत्त्वाभावो वा, [१०] ज्ञातैकसत्त्वं वा। आद्ये वृत्तिरूपा, चैतन्यरूपा वा, दृष्टिरभिमता। प्रथमे चरमवृत्तिविषयब्रह्मणोऽपि दृष्टिसृष्ट्यापत्तिः। द्वितीये, सर्वदापि सृष्ट्यापत्तिः। न द्वितीयः; चैत्रेण सृष्टो मया दृष्ट इति वैलक्षण्येन व्यवहारानुपपत्तेः। न तृतीयः; 'ज्ञातो घटो न ज्ञानमि'ति अनुभवविरोधात्।

---

ननु ब्रह्मविचारमध्ये किमिदं सूत्रकारस्य स्वप्नफलनिरूपणमित्याशङ्क्य तदाशयमाह गुर्वादीति। मायानिबन्धनमपीदं गुर्वादि अद्वयबुद्धिहेतुरिति प्रतिपादनाय सूत्रकारस्य स्वप्नफलनिरूपणं विचारशास्त्रे। तथा च श्रुतिसूत्रसम्मतेयं दृष्टिसृष्टिप्रक्रिया, न तु यथाकथञ्चित् उत्प्रेक्षितेयं परवर्तिकालीना। अस्यां प्रक्रियायां पूर्वपक्षिणोत्प्रेक्षितानां दोषाणां समाधानाय प्रपञ्चमिथ्यात्वसिद्ध्यनुकूलत्वात् प्रक्रियामिमामवतारयति—**शुक्तिरूप्यस्वप्नादिवत् दृष्टिसृष्ट्यन्यथानुपपत्त्यापि जगतो मिथ्यात्वसिद्धिः।** प्रपञ्चस्य शुक्तिरूप्यवत् स्वप्नादिवच्च दृष्टिसृष्ट्यन्यथानुपपत्त्या द्रष्ट्रन्तरावेद्यत्वे सति ज्ञातैकसत्त्वादिरूपस्य दृष्टिसृष्टित्वस्य जगति सम्प्रतिपन्नस्य जगतो मिथ्यात्वं विनाऽनुपपत्त्या जगतो मिथ्यात्वसिद्धिः। अतः प्रपञ्चमिथ्यात्वसिद्ध्यनुगुणमिदं प्रकरणमिति मन्तव्यम्। का नामेयं दृष्टिसृष्टिरिति पूर्वपक्षी पृच्छति; या दृष्टिसृष्ट्यन्यथानुपपत्तिः प्रपञ्चस्य मिथ्यात्वानुकूला सा केति पृच्छन् तस्याः सम्भावितप्रकारानुल्लिख्य प्रतिप्रकारं दोषं प्रदर्शयति। **अथ केयं दृष्टिसृष्टिः? [१] दृष्टिरेव सृष्टिरिति वा?, [२] दृष्टिव्यतिरिक्तसृष्ट्यभावो वा?, [३] दृष्टिव्यतिरेकेण सृज्याभावो वा?, [४] दृष्टिसामग्रीजन्यत्वं वा?, [५] दृष्टिसमानकालीनसृष्टिर्वा?, [६] दृष्टिसमानसत्ताकसृष्टिर्वा?, [७] सदसद्विलक्षणत्वं वा?, [८] त्रिविधसत्त्वबहिर्भूतत्वे सति असद्विलक्षणत्वं वा?, [९] अज्ञातसत्त्वाभावो वा?, [१०] ज्ञातैकसत्त्वं वा। आद्ये, वृत्तिरूपा चैतन्यरूपा वा दृष्टिरभिमता। प्रथमे चरमवृत्तिविषयब्रह्मणोऽपि दृष्टिसृष्ट्यापत्तिः।**

न चतुर्थः; एकसामग्रीप्रसूतत्वेन घटादेर्दृष्ट्यभिन्नत्वेनानन्तरोक्तदोषात्। न पञ्चमः; शाब्दादिज्ञानसमकालोत्पन्नघटादौ सिद्धसाधनात्, तद्वदन्यत्रार्थान्तरतापत्तेश्च। न षष्ठः; उभयसत्त्वेऽप्युपपत्तेः सिद्धसाधनात्। न सप्तमः; अस्यैव मिथ्यात्वरूपत्वेन तत्साधनायैव तदुपन्यासानुपपत्तेः। नाष्टमः; त्रिविधसत्त्वमध्ये प्रातिभासिकसत्त्वस्याप्यन्तर्भावेन दृष्टिसृष्टिपक्षे तद्वति जगति तद्बहिर्भावानुपपत्तेः। न नवमः; तुच्छसाधारण्यात्। न दशमः; सुखादौ सिद्धसाधनात्, तद्वदन्यत्रार्थान्तराच्चेति—चेत्? ॥१॥

---

द्वितीये, सर्वदाऽपि सृष्ट्यापत्तिः। न द्वितीयः, चैत्रेण सृष्टः, मया दृष्ट इति वैलक्षण्येन व्यवहारानुपपत्तिः। न तृतीयः, 'ज्ञातो घटः, न ज्ञानम्' इति अनुभवविरोधात्। न चतुर्थः, एकसामग्रीप्रसूतत्वेन घटादेर्दृष्ट्यभिन्नत्वेन अनन्तरोक्तदोषात्। न पञ्चमः, शाब्दादिज्ञानसमानकालीन[कालोत्पन्न]घटादौ सिद्धसाधनात्; तद्वदन्यत्रार्थान्तरतापत्तेश्च। न षष्ठः, उभयसत्त्वेऽप्युपपत्तेः सिद्धसाधनात्। न सप्तमः, अस्यैव मिथ्यात्वरूपत्वेन तत्साधनायैव तदुपन्यासानुपपत्तेः। नाष्टमः, त्रिविधसत्त्वमध्ये प्रातिभासिकसत्त्वस्याप्यन्तर्भावेन दृष्टिसृष्टिपक्षे तद्वति जगति तद्बहिर्भावानुपपत्तेः। न नवमः, तुच्छसाधारण्यात्। न दशमः, सुखादौ सिद्धसाधनात्, तद्वदन्यत्राप्यर्थान्तराच्चेति चेत्। दृष्टिरेव सृष्टिरिति। सृष्टस्य दृष्टिरिति साधारणानुभवे भासते। प्रकृते तु सृष्टं वस्तु दृष्टितो न भिद्यते। यैव दृष्टिः सैव सृष्टिः। विषयसृष्टिः न दृष्टेः प्राक्। नापि विषयसृष्टिर्दृष्टितो भिन्ना; दृष्टिदृश्ययोरत्यन्तमभेद इत्यर्थः। एवमभ्युपगमे चरमवृत्तिविषयब्रह्मणोऽपि चरमवृत्तिरूपतया क्षणिकत्वापातात्। वृत्तितद्विषययोर्भेदाभावादिति न प्रथमः पक्षः साधीयान्। दृष्टिपदस्य वृत्त्यर्थकत्वे अयं दोषः। दृष्टिपदस्य चैतन्यरूपत्वे वा सर्वदा सृष्ट्यापत्तिः। चैतन्यस्य सदातनत्वात्। अतो दृष्टिपदस्य अन्तःकरणवृत्तिरूपत्वे चैतन्यरूपत्वं[वा]उभयथाप्यसङ्गतेर्नायं पक्षः साधीयान्। एवं दृष्टिव्यतिरिक्तसृष्ट्यभावरूपोऽपि द्वितीयः पक्षो न सङ्गच्छते। चैत्रेण सृष्टो मया दृष्ट इति अबाधितव्यवहारात् दृष्टिसृष्ट्योर्भेदात् दृष्टिव्यतिरिक्तसृष्ट्यभावपक्षः न सङ्गतः। दृष्टिव्यतिरेकेण सृज्याभाव इति तृतीयः पक्षोऽपि

न समीचीनः। दृष्टिव्यतिरेकेण सृज्याभावः ज्ञानज्ञेययोरभिन्नत्वे सत्युपपद्येत। ज्ञानज्ञेयभेदस्याबाधितानुभवसिद्धत्वात् नैवमित्याहं ज्ञातो घटो न ज्ञानं ज्ञातमित्यनुभवविरोधात्। विषये ज्ञातेऽपि विषयविषयकज्ञानस्याज्ञातत्वसम्भवात् ज्ञातत्वाज्ञातत्वरूपधर्मद्वयस्य विरोधेन एकत्रासम्भवात्। अतो न दृष्टिव्यतिरेकेण सृज्याभावः सम्भवति। एवं दृष्टिसामग्रीजन्यत्वं सृष्टेरिति चतुर्थपक्षोऽपि न साधुः। दृष्टिसृष्ट्योरेकसामग्रीजन्यत्वे दृष्टिसृष्ट्योरभेदापत्त्या अनन्तरोक्तदोषाज्ज्ञातो घटः, न ज्ञानं ज्ञातमित्यनुभवो न स्यात्। घटस्य ज्ञातत्वेन ज्ञानस्यापि ज्ञातत्वापातात्। एवं दृष्टिसमानकालीनसृष्टिरिति पञ्चमः पक्षोऽपि न सङ्गतः। शाब्दादिपरोक्षज्ञानसमानकालोत्पन्नघटादौ सिद्धसाधनात्। परोक्षज्ञानं तद्विषयश्च कदाचिदेकदैव उत्पत्तुमर्हति। प्रत्यक्षज्ञानस्य विषयजन्यत्वात् ज्ञानविषययोर्युगपदुत्पत्तिर्न सम्भवति। शाब्दज्ञानविषययोः कदाचित् युगपदुत्पादसम्भवात् विषयसत्यत्वेऽपि अस्य पञ्चमपक्षस्य सम्भवात् सिद्धसाधनम्। दृष्टिसृष्ट्यन्यथानुपपत्त्या प्रपञ्चस्य मिथ्यात्वसिद्धिरिति हि ते मतम्। तत्प्रपञ्चस्य सत्यत्वेऽपि पञ्चमी दृष्टिसृष्टिर्यदि उपपद्येत तर्हि सिद्धसाधनमेव। दृष्टिसमानसत्ताकसृष्टिर्वेति षष्ठपक्षोऽपि न सङ्गच्छते— दृष्टिसृष्ट्योर्द्वयोः सत्यत्वेऽपि दृष्टिसमानसत्ताका सृष्टिरुपपद्यते। तथा च द्वयोः सत्यत्वे सिद्धसाधनात्, न षष्ठ्या दृष्टिसृष्ट्या प्रपञ्चस्य मिथ्यात्वसिद्धिरिति भावः। एवं सदसद्विलक्षणत्वरूपः सप्तमोऽपि पक्षोऽसङ्गत एव। यतः सदसद्विलक्षणत्वमेव मिथ्यात्वं प्रथममिथ्यात्वलक्षणे प्रतिपादितम्। मिथ्यात्वेनैव मिथ्यात्वस्य साधनासम्भवात्। एवं त्रिविधसत्त्वबहिर्भूतत्वे सति असद्विलक्षणत्वरूपाष्टमोऽपि पक्षोऽसंगत एव। दृष्टिसृष्टिपक्षे प्रपञ्चस्य शुक्तिरजतादिवत् प्रातिभासिकत्वेन प्रातिभासिकसत्त्ववति प्रपञ्चे त्रिविधसत्त्वबहिर्भावासम्भवात्; त्रिविधेषु सत्त्वेषु प्रातिभासिकसत्त्वस्यापि अन्तर्भावात्। पारमार्थिकं व्यावहारिकं प्रातिभासिकमिति त्रिविधं सत्त्वम्। दृष्टिसृष्टिमते प्रपञ्चस्य प्रातिभासिकत्वाङ्गीकारात् न प्रपञ्चस्य त्रिविधसत्त्वबहिर्भावः इति। अज्ञातसत्त्वाभाव इति नवमोऽपि पक्षो न संगच्छते, तुच्छस्य शशविषाणादेरपि अज्ञातसत्त्वाभावात्। अज्ञातसत्त्वाभावस्य तुच्छसाधारण्यात्, तुच्छसाधारणाज्ञातसत्त्वाभावेन प्रपञ्चस्य मिथ्यात्वसाधनाभावात्। तुच्छस्य मिथ्याभिन्नत्वात्। ज्ञातैकसत्त्वमिति दशमोऽपि पक्षोऽसङ्गत एव।

न; दोषप्रयुक्तत्वनिबन्धनस्य ज्ञातैकसत्त्वस्याज्ञातसत्त्वाभावस्य वा, प्रतिपन्नोपाधिदृष्टिजन्यज्ञातैकसत्त्वस्य वा, द्रष्ट्रन्तरावेद्यत्वे सति ज्ञातैकसत्त्वस्य वा विवक्षितत्वात्। तथा च न सुखाद्यंशे सिद्धसाधनम्, तद्वदन्यत्रार्थान्तरं वा ॥२॥

---

ज्ञातैकसतः सुखादेः सत्यत्वात् प्रपञ्चस्यापि ज्ञातैकसत्सुखादिवत् सत्यत्वेन सिद्धसाधनात्। प्रपञ्चस्य मिथ्यात्वसमर्थनाय दशमी दृष्टिसृष्टिः प्रपञ्चस्य मिथ्यात्वमप्रसाध्य ज्ञातैकसत्त्वं सुखादिवत् प्रसाधयतीति अर्थान्तरम्, उद्देश्यादन्यार्थसाधनादिति भावः ॥१॥

२—विकल्पितेषु पक्षेषु नवमं दशमञ्च पक्षं विशेषणान्तरयोगेन विशेषयन् सिद्धान्तमाह—न; दोषप्रयुक्तत्वनिबन्धनस्य ज्ञातैकसत्त्वस्य अज्ञातसत्त्वाभावस्य वा, प्रतिपन्नोपाधिदृष्टिजन्यज्ञातसत्त्वस्य वा, द्रष्ट्रन्तरावेद्यत्वे सति ज्ञातसत्त्वस्य वा विवक्षितत्वात्। तथाच न सुखाद्यंशे सिद्धसाधनम्, तद्वदन्यत्र अर्थान्तरं वा। दोषप्रयुक्तत्वेति। भ्रमत्वावच्छिन्नं प्रति जनकतावच्छेदिका या अविद्यात्वजातिः तद्वत्त्वं दोषत्वम्। भ्रमत्वजातिमद्विषयत्वं दोषप्रयुक्तत्वम्! तथा च भ्रमत्वजातिमद्विषयत्वं दोषप्रयुक्तत्वम्। तथा च भ्रमत्वजातिमद्विषयत्वे सति ज्ञातैकसत्त्वं प्रथमलक्षणं पर्यवसितम्। माध्वमतेऽसतः भ्रमविषयत्वाङ्गीकारेण सिद्धसाधनवारणाय विशेष्यदलम्। ज्ञातैकसत्त्वं नाम स्वज्ञानव्याप्यत्वम्। यदा यदा विषयस्तदा तदा ज्ञानमित्येव ज्ञातैकसत्त्वं, वृत्तिरूपं ज्ञानमादाय प्रथमलक्षणं बोध्यम्। अज्ञानशून्यचिद्रूपं ज्ञानमपेक्ष्य लाघवादाह अज्ञातसत्त्वाभावस्य वेति। अत्रापि दोषप्रयुक्तत्वनिबन्धनेत्यनुसञ्जनीयम्। तथा च दोषप्रयुक्तत्वनिबन्धनाज्ञातसत्त्वाभावो दृष्टिसृष्टिरित्यर्थः। पुरुषान्तरवेद्ये च पुरुषान्तरस्य नाज्ञानं मानाभावात्। यत्र हि यं पुरुषं प्रति यस्य प्रकाशप्रसक्तिः तत्र तस्य अज्ञानं युक्तं; पुरुषान्तरवेद्यस्य पुरुषान्तरं प्रति प्रकाशप्रसक्तिरेव नास्तीति न तत्राज्ञानम्। द्वितीयपक्षस्यायं निर्यासः—तत्तत्पुरुषीयाज्ञानाभावव्याप्यत्वं तत्तत्पुरुषं प्रति दृष्टिसृष्टिरिति। प्रतिपन्नेति—स्वप्रतिपत्तिविशेष्यदृष्टिजन्यस्य ज्ञातैकसत्त्वस्य दृष्टिसृष्टित्वात् अधिष्ठानसामान्यांशदृष्टेरारोप्यमात्रे हेतुत्वेन उक्तदृष्टिजन्यत्वं जन्यमात्रस्याक्षतम्। द्रष्ट्रान्तरेति। दृष्टिसृष्टिपक्षे

ननु—'जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥'

इति प्राचां वचनेन बौद्धं प्रति प्रत्यभिज्ञानादिना विश्वस्य स्थायित्वप्रतिपादकेन च सूत्रभाष्यविवरणादिग्रन्थेन विरोध इति चेत् ? न;

---

पुरुषान्तरीयसुखादिकं न ज्ञायते किन्तु पुरुषान्तरीयत्वेन स्वस्मिन्नेव कल्प्यते इति येन पुरुषेण यद्वेद्यते तत् पुरुषान्तरेण न वेद्यते इति भावः । तथा च सुखादीनां ज्ञातैकसत्त्वेऽपि दोषप्रयुक्तत्वनिबन्धनत्वात् सत्यत्वासिद्ध्या न सिद्धसाधनम्; अनात्मवस्तुमात्रस्य ज्ञातैकसत्त्वस्यापि दोषप्रयुक्तत्वेन मिथ्यात्वात् न सत्यत्वमिति न कुत्रापि सिद्धसाधनम् । यदि सत्यं सत् ज्ञातैकसत् किमपि अनात्मवस्तु स्यात् तर्हि सिद्धसाधनत्वं वक्तुं शक्यम्; तच्च न सम्भवति दृष्टिसृष्टिपक्षे अनात्मवस्तुमात्रस्य ज्ञातैकसत्त्वेऽपि दोषप्रयुक्तत्वनिबन्धनत्वात् मिथ्यात्वम् । अविद्यात्वजातिमत्त्वं दोषत्वमिति प्रागेवोक्तम् । तथा च अविद्याप्रयुक्तत्वनिबन्धनत्वात् अनात्ममात्रस्य मिथ्यात्वमिति भावः ॥२॥

३—जीवेशब्रह्मादीनामनादिवस्तूनां दृष्टिसृष्टित्वे स्थायित्वं न स्यात्; तथा च तेषामनादित्वव्याकोपः, प्रत्यभिज्ञानादिना विश्वस्य स्थायित्वप्रतिपादनं सूत्रभाष्यकारादीनामसङ्गतं स्यात् इति पूर्वपक्षी शङ्कते—

ननु जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इति प्राचां वचनेन बौद्धं प्रति प्रत्यभिज्ञानादिना विश्वस्य स्थायित्वप्रतिपादकेन च सूत्रभाष्यविवरणादिग्रन्थेन विरोध इति चेत् ।

दृष्टिसृष्टित्वपक्षे सर्वेषामाशुतरविनाशित्वात् कस्यापि अनादित्वं न स्यात्; अथ च वेदान्तसम्प्रदायविद्भिरेव जीवादीनां षण्णामनादित्वाभ्युपगमात् दृष्टिसृष्टिवादिनोऽपसिद्धान्तः स्यात् । क्षणिकत्ववादिबौद्धं प्रति वस्तूनां स्थायित्वोपपादनाय सूत्रभाष्यकारादिभिः प्रत्यभिज्ञाद्युपस्थापनात् सूत्रभाष्यादिग्रन्थेनापि दृष्टिसृष्टिपक्षस्य विरोधः स्यात्; तथा च पूर्वाचार्यसिद्धान्तविरोधात् सूत्रभाष्यादिविरोधाच्च न दृष्टिसृष्टिपक्षः सम्भवतीति भावः ।

अनाद्यतिरिक्तसृष्टिविषय एव दृष्टिसृष्टिस्वीकारात्, कारणात्मना स्थायित्वस्वीकाराच्च। तावतैव बौद्धाभिमतक्षणिकत्वनिराकरणोपपत्ते-र्नाकरविरोधः, प्रत्युताकरेषु बहुशो दृष्टिसृष्टिरुपपादितैव ॥३॥

---

अनाद्यतिरिक्तविषये दृष्टिसृष्टित्वाभ्युपगमात् कार्यात्मना दृष्टिसृष्टित्वेऽपि कारणात्मनो वस्तुनः स्थायित्वाभ्युपगमात्, न प्रत्यभिज्ञादिविरोध इति समाधत्ते सिद्धान्ती—न; **अनाद्यतिरिक्तसृष्टिविषय एव दृष्टिसृष्टिस्वीकारात्, कारणात्मना स्थायित्वस्वीकाराच्च। तावतैव बौद्धाभिमतक्षणिकत्वनिराकरणोपपत्तेर्नाकरविरोधः। प्रत्युताकरेषु बहुशो दृष्टिसृष्टिरुपपादितैव।** षडनाद्यतिरिक्तस्थले एव दृष्टिसृष्टिस्वीकारात् न प्राचीनवचनविरोधः[1]। अनाद्यविद्यादीनां दृष्टिसृष्टित्वेन मिथ्यात्वाभावेऽपि दृश्यत्वादिहेतुनैव तेषां मिथ्यात्वसिद्धेरिति न दोषः। निरन्वयविनाशस्वीकर्तृबौद्धमते कस्यापि सान्वयविनाशाभावात् अस्माकं विनाशमात्रस्य सान्वयत्वात् अनुयायिकारणस्य स्थायित्वस्वीकारात्, प्रत्यभिज्ञया अनुयायिकारणस्य स्थायित्वप्रतिपादनात् न प्रत्यभिज्ञाविरोधः। सादिवस्तुमात्रस्य अनुयायिकारणं द्वयमधिष्ठानतया ब्रह्म, परिणाम्युपादानतया अविद्या—तयोर्द्वयोरनादिषट्कमध्येऽन्तर्भावात् न काप्यनुपपत्तिः। न सूत्रभाष्याद्याकरविरोधः। प्रत्युत आकरेषु गौड़पादीयकारिकातद्भाष्यादिषु, योगवासिष्ठे, वार्तिकामृते, विवरणनवमवर्णके च दृष्टिसृष्टिरुपपादितैव। विवरणे नवमवर्णके "स्वप्नादिवच्च तत्त्वज्ञानेन सर्वोपाधिविनिर्मोक्षश्च युज्यते" इत्यादिना दृष्टिसृष्टिवादः प्रपञ्चितः। व्याख्यातश्च

---

१. सिद्धान्तलेशसंग्रहे द्वितीयपरिच्छेदे साद्यनादिसाधारणी दृष्टिसृष्टिरित्येकः पक्षोऽपि दर्शितः। अत्र केचिदाहुः—पूर्वपूर्वकल्पिताविद्योपहित आत्मा उत्तरोत्तराविद्याकल्पकः। अनिदं प्रथमत्वाच्च कल्पककल्पनाप्रवाहस्य नानवस्थादोषः। न च अविद्याया अनादित्वोपगमात् शुक्तिरजतवत् कल्पितत्वं न युज्यतेऽन्यथा साद्यनादिविभागानुपपत्तिरिति वाच्यम्। यथा स्वप्ने कल्प्यमानं गोपुरादि किंचित् पूर्वसिद्धत्वेन कल्प्यते किञ्चित् तदानीमुत्पद्यमानत्वेन, एवं जागरेऽपि किञ्चित् कल्प्यमानं सादित्वेन कल्प्यते, किञ्चिदन्यथेति तावता साद्यनादिविभागोपपत्तेः। एतेन कार्यकारणविभागोऽपि व्याख्यातः। वस्तुतः कारणत्वाभावेऽपि कारणत्वेन कल्प्यते इति भावः। (सिद्धान्तलेशसंग्रहः पृ० ३५८)

नन्वेवं—प्रतीतिमात्रशरीरत्वेन नियतकारणाजन्यत्वे श्रुतिषु स्वर्गाद्यर्थं ज्योतिष्टोमादिविधेः ब्रह्मसाक्षात्कारार्थं श्रवणादिविधेराकाशादेर्वाय्वादिहेतुत्वस्य चोक्तिरयुक्तेति—चेत् ? ॥४॥

न ; स्वाप्नकार्यकारणभावबोधकवाक्यवदुपपत्तेः। न चैवं वेदान्तवाक्यस्य तन्मीमांसायाश्च स्वप्नवाक्यतन्मीमांसातुल्यतापत्तिः ; विषय-

---

ऋजुविवरणे—नानाजीवपक्षाश्रयणेन व्यवस्थामुपपाद्य एकजीवाश्रयेण सर्वोपाधिक्षयोऽपि उपपद्यते इत्याह—स्वप्नादिवत् इति। यथा स्वप्ने अनन्तोपाधिदर्शिनः परमार्थभूतस्य एकस्य प्रबोधे यत् किञ्चिदुपाधिजातं दृष्टं तस्य सर्वस्य प्रलये एवमत्रापि एक एव संसारी भ्रान्त्या अनेकान् पश्यति तस्य च तत्त्वज्ञाने सति तदज्ञानविजृम्भितं सर्वं प्रलीयते इत्यर्थः। वेदान्तमुक्तावल्यां प्रकाशानन्देन अयं पक्षः सप्रपञ्चमुपपादितः। एतत्प्रकरणारम्भे च संक्षेपशारीरकपद्यम् उदाहृत्य सर्वज्ञात्ममुनिप्रभृतिसम्मतेयं प्रक्रिया प्रदर्शिता ॥३॥

४—दृष्टिसृष्टिपक्षे दृश्यमात्रस्य प्रतीतिमात्रशरीरत्वे कार्यस्य नियतकारणजन्यत्वाभावात् स्वर्गाद्यर्थं ज्योतिष्टोमादेर्ब्रह्मसाक्षात्कारार्थं श्रवणादेर्विधानं न स्यात्, श्रुतौ आकाशादेर्वाय्वादिकारणत्वोक्तिरसंगता स्यात् इति पूर्वपक्षी शङ्कते—नन्वेवं प्रतीतिमात्रशरीरत्वेन नियतकारणाजन्यत्वे श्रुतिषु स्वर्गाद्यर्थं ज्योतिष्टोमादिविधेः ब्रह्मसाक्षात्कारार्थं श्रवणादिविधेराकाशादेर्वाय्वादिहेतुत्वस्य च उक्तिरयुक्ता इति चेत्। प्रपञ्चमात्रस्य प्रातिभासिकत्वे स्वज्ञानव्याप्यत्वे स्वज्ञानाभावकाले विषयस्याभावात् श्रुतिषु स्वर्गादिसाधनत्वेन ज्योतिष्टोमादिकर्मणां विधानं न स्यात्, ज्योतिष्टोमादिज्ञानाभावकाले ज्योतिष्टोमादीनामेवासत्त्वात्। एवमेव ब्रह्मसाक्षात्कारार्थं श्रवणादीनां श्रुतिषु विधानं न स्यात्। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुरित्यादितैत्तिरीयश्रुतौ [२।१] आकाशादेर्वाय्वादिहेतुत्वप्रतिपादनं न स्यात्। एवमेव प्रत्यक्षेऽज्ञातविषयस्य कारणत्वात् ज्ञानाभावकाले विषयस्यापि अभावे प्रत्यक्षं प्रति विषयस्य कारणत्वं न स्यात् इत्यपि बोध्यम् ॥४॥

५—स्वप्नदशायां कल्पितकार्यकारणभावबोधकवाक्यवत् श्रुतिवाक्यस्योपपत्तेरिति परिहरति—न ; स्वाप्नकार्यकारणभावबोधकवाक्यवदुपपत्तेः। न चैवं

बाधाबाधाभ्यां विशेषोपपत्तेः। अत एव—तृप्त्यर्थं भोजने परप्रत्याय-नार्थं शब्दादौ च प्रवृत्तेरयोगेन स्वक्रियाव्याघात इति—निरस्तम्; स्वाप्नव्यवहारवदुपपत्तेः।

---

वेदान्तवाक्यस्य तन्मीमांसायाश्च स्वप्नवाक्यतन्मीमांसातुल्यतापत्तिः; विषयबाधाबाधाभ्यां विशेषोपपत्तेः। अत एव तृप्त्यर्थं भोजने परप्रत्याय-नार्थं [परप्रत्ययार्थं पा०] शब्दादौ च प्रवृत्तेरयोगेन स्वक्रियाव्याघात इति निरस्तम्। स्वाप्नव्यवहारवदुपपत्तेः। यदुक्तं ज्योतिष्टोमश्रवणादिविधिविरोध इति तन्न ज्योतिष्टोमस्वर्गयोः कार्यकारणभावबोधकंस्वाप्नवाक्यवदुपपत्तेः। स्वाप्नवाक्यात् यथा कार्यकारणभावबोधो जायते एवमेव श्रुतिवाक्यादपि। न चैवं वेदान्तवाक्यस्य तन्मीमांसायाश्च स्वाप्नवाक्यतन्मीमांसातुल्यतापत्तिः; स्वाप्नवाक्य-तुल्यत्वेऽपि विषयबाधाबाधाभ्यां विशेषोपपत्तेः। स्वाप्नवाक्यं बाधितार्थप्रतिपादकमबा-धितार्थप्रतिपादकञ्च भवति। स्वप्ने गुर्वादिदत्तसिद्धमन्त्रादिलाभदर्शनात्। स्वाप्नोपदेशवाक्यमात्रस्य न बाधितार्थकत्वमबाधितार्थकस्वाप्नवाक्यमपि भवति; दोषप्रयुक्तत्वाज्ज्ञानेन अबाधोपपत्तेरिति भावः। श्रुत्यादिवाक्यमपि स्वाप्नवाक्यत्वा-विशेषेऽपि अबाधितार्थकमिति वैलक्षण्यं बाधितार्थकस्वाप्नवाक्यादिति भावः। अत एव स्वक्रियाव्याघात इति निरस्तम्। स्वाप्नव्यवहारवदुपपत्तेः। यथा स्वप्नदशायां स्वप्नदृष्टपुरुषान्तरबोधनाय स्वप्नद्रष्टा वाक्यानि उच्चारयति तद्वत्। यच्चोक्तं सृष्टिश्रुतेर्निरालम्बनत्वं स्यादिति तत् शास्त्रदर्पणे अमलानन्दश्रीचरणैरेव प्रतिसमाहितम्—

श्रुतीनां सृष्टितात्पर्यं स्वीकृत्येदमुदीरितम्।
ब्रह्मात्मैक्यपरत्वात्तु तासां तन्नैव विद्यते॥

इति वदद्भिः। उक्तञ्च कल्पतरौ—

परैरुद्भावितो दोष उद्धर्तव्यः स्वदर्शने।
इति शिक्षार्थमत्रत्यचिन्तां तत्राकरोन्मुनिः॥

इति च। [ब्र० सू० १।४।१४]

अनात्मप्रपञ्चस्य दृष्टिसृष्ट्युपगमे [अभ्युपगमे] प्रतिकर्मव्यवस्थाया अनुपपत्तिः सम्प्रयोगसंस्कारदोषजन्यत्वरूपस्य अध्यासलक्षणस्य च अयोग इति पूर्वपक्षी

अथैवं—घटादेः स्वज्ञानात्पूर्वमसत्त्वेन प्रतिकर्मव्यवस्थानुपपत्तिः, अधिष्ठानस्यापि शुक्तीदमंशस्य रूप्यादिवत् 'इदं रजतमि'ति ज्ञानात्प्रागसत्त्वेन सम्प्रयोगादिहेतुत्रयजन्यत्वरूपाध्यासतटस्थलक्षणस्य सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदावभास इत्यस्य स्वरूपलक्षणस्य चायोग इति—चेत् ? न; प्रतिकर्मव्यवस्थायाः सम्प्रयोगादिहेतुत्रयजन्यत्वरूपाध्यासतटस्थलक्षणस्य च मन्दाधिकारिविषयत्वात्। सत्यस्य वस्तुनो मिथ्या-

---

शङ्कते—अथैवं घटादेः स्वज्ञानात् पूर्वमसत्त्वेन प्रतिकर्मव्यवस्थानुपपत्तिः। अधिष्ठानस्यापि शुक्तीदमंशस्य रूप्यादिवत् इदं रजतमिति ज्ञानात् प्रागसत्त्वेन सम्प्रयोगादिहेतुत्रयजन्यत्वरूपाध्यासतटस्थलक्षणस्य सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदावभास इत्यस्य स्वरूपलक्षणस्य चायोग इति चेत्। दृष्टिसृष्टिपक्षे घटादिविषयस्य स्वज्ञानात् पूर्वमसत्त्वेन विषयेण सह इन्द्रियसंप्रयोगस्याभावात् न ज्ञानस्य प्रतिनियतकर्मव्यवस्था स्यात्; त्वयाऽपि विषयेन्द्रियसम्प्रयोगमभ्युपगम्यैव प्रतिकर्मव्यवस्था समर्थिता, दृष्टिसृष्टिपक्षे सा न स्यात्। किञ्च स्मृतिरूपः परत्र पूर्वदृष्टावभास इत्यध्यासलक्षणे स्मृतिरूपपदेन कारणत्रितयजन्यत्वमध्यासस्येत्युक्तम्। विवरणे सम्प्रयोगसंस्कारदोषाख्यत्रितयजन्यत्वमध्यासतटस्थलक्षणमित्ययुक्तम् अनाद्यध्यासाव्यापनात्। शुक्तौ रजताध्यासे शुक्तीदमंशेन चक्षुःसम्प्रयोगात् रजताध्यासो जायते। शुक्तीदमंशस्यापि प्रातिभासिकत्वेन रजताध्यासात् प्रागसत्त्वेन केन सह चक्षुःसम्प्रयोगः स्यात्, तदभावे कारणत्रितयजन्यत्वमपि रजताध्यासस्य कथं स्यात्। तथा च रजताध्यासे अध्यासतटस्थलक्षणमनुपपन्नमेव। तथा स्वरूपलक्षणमप्यनुपपन्नमित्याह—सत्यस्य वस्तुनः इति। सत्यानृते मिथुनीकृत्य इति भाष्यविवरणे सत्यानृतसंभेदावभासोऽध्यास इति अध्यासस्वरूपलक्षणमुक्तं विवरणकृद्भिः। तदप्यनुपपन्नं स्यात्।

सर्वस्य प्रातिभासिकत्वेन मिथ्यात्वादिति मन्दाधिकारिव्युत्पादनार्थत्वात् प्रतिकर्मव्यवस्थाया उत्तमाधिकारिणं दृष्टिसृष्टिवादिनं प्रति नेयं व्यवस्था अतो न दोषः। दृष्टिसृष्टिपक्षेऽध्यासस्वरूपलक्षणस्यानपायान्न दोष इति परिहरति सिद्धान्ती—न; प्रतिकर्मव्यवस्थायाः सम्प्रयोगादिहेतुत्रयजन्यत्वरूपाध्यासतटस्थ-

वस्तुसंभेदासभास इति स्वरूपलक्षणं तु दृष्टिसृष्टिपक्षेऽप्यविरुद्धम्। न हीदमंशावच्छिन्नं चैतन्यं न वस्तु; न वा मिथ्यारूप्यस्य तेन सह न संभेदावभासः ॥४॥

न च—'इदं रूप्यमि तिज्ञानकाले शुक्तित्वादेरभावेनाध्यासस्य तदज्ञानकार्यत्वादिप्रक्रियाविरोध इति—वाच्यम्।

---

लक्षणस्य च मन्दाधिकारिविषयत्वात्। सत्यस्य वस्तुनो मिथ्यावस्तु-संभेदावभास इति स्वरूपलक्षणन्तु दृष्टिसृष्टिपक्षेऽप्यविरुद्धम्। नहीद-मंशावच्छिन्नं चैतन्यं न वस्तु; न वा मिथ्यारूप्यस्य तेन सह न संभेदा-वभासः। अधिकारिभेदकल्पिता हि प्रक्रियाभेदाः शास्त्राचार्यैरनुदिताः। तत्त्व-ज्ञानोपयोगित्वात्। फलवत् सन्निधावफलं तदङ्गमिति न्यायात्, भ्रमसिद्धस्यापि श्रुत्याऽनुवादसम्भवात्। उक्तञ्च वार्तिके—

यया यया भवेत् पुंसो व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता॥

अनाद्यध्यासे कारणत्रितयजन्यत्वलक्षणस्याव्यापनादपि तटस्थलक्षणं नाध्याससामान्यस्य लक्षणमित्यपि बोध्यम्। अध्यासस्वरूपलक्षणं तु दृष्टिसृष्टिपक्षेऽ-प्यविरुद्धमित्याह—न हीदमंशावच्छिन्नं चैतन्यं न वस्तु इति। [ यद्यपि इदं रजतमित्यादौ इदमाद्यधिष्ठानाकारावृत्तिः पूर्वं सम्भवति, पूर्वजाताया अपि इदं वृत्तेः रूप्यकालानुवृत्तिसम्भवात्, तथापि इदं रूप्यमित्याकारा विशिष्टविषयिका एव वृत्तिर्लाघवात्। अधिष्ठानज्ञानहेतुत्वपक्षे तु वृत्तिद्वयस्वीकारादिति भावः—लघु० ५२४]। इदमंशस्य उपाधेर्मिथ्यात्वेऽपि तदवच्छेदेन अधिष्ठानताश्रयस्य शुद्ध-चैतन्यस्य सत्यत्वमिति भावः। तथा च सत्यस्य वस्तुनः मिथ्यावस्तुसंभेदावभास-रूपत्वात्, दृष्टिसृष्टिपक्षेऽपि रजताध्यासेऽध्यासस्वरूपलक्षणस्यानपायादिति भावः ॥४॥

५—विषयाभावकाले तद्विषयकाज्ञानस्यापि अभावात् अध्यासस्य अज्ञानो-पादानकत्वप्रक्रियाविरोध इति पूर्वपक्षी शङ्कते—न च इदं रूप्यमिति ज्ञानकाले शुक्तित्वादेरभावेन अध्यासस्य तदज्ञानकार्यत्वादिप्रक्रियाविरोध इति वाच्यम्। इदं रूप्यमिति भ्रमकालेऽधिष्ठानज्ञानाभावात् दृष्टिसृष्टिमते

'इदं रूप्यमि'ति ज्ञानकाले शुक्तित्वस्याभावेऽपि तदज्ञानस्थित्य-विरोधात्। नहि सत्ताकाल इव सत्ताविरहकालेऽपि अज्ञानं विरुध्यते। न च—'इदं रूप्यं नेदं रूप्यमि'ति ज्ञानयोर्भिन्नविषयत्वेन बाध्यबाधक-भावानुपपत्तिरिति—वाच्यम्।

---

ज्ञानाभावे तद्विषयस्यापि अभावात्, अधिष्ठानविषयकमज्ञानमपि न स्यात्; अधिष्ठानाज्ञानाभावेऽध्यासोऽपि न स्यात्—अध्यासस्य अधिष्ठानविषयकाज्ञानो-पादानकत्वात्। उपादानीभूताज्ञानाभावे उपादेयस्य अध्यासस्यापि अभावः स्यात्। तथा च अध्यासमात्रोच्छेदापत्तेर्दृष्टिसृष्टिपक्षो न सङ्गच्छते इति। अज्ञानस्य चिन्मात्राश्रयविषयकत्वात् जडस्य अज्ञानविषयतावच्छेदकत्वात् अज्ञानविषयता-वच्छेदकस्य जडस्य अविद्यमानत्वे न अज्ञानस्य काचित् क्षतिरिति सिद्धान्ती समाधत्ते—इदं रूप्यमिति ज्ञानकाले शुक्तित्वस्याभावेऽपि तदज्ञानस्थि-त्यविरोधात्। न हि सत्ताकाल इव सत्ताविरहकालेऽपि अज्ञानं विरु-ध्यते। इदं रूप्यमिति भ्रमकाले शुक्तेरभावेऽपि शुक्तित्वप्रकारिकाया अविद्यायाः स्थित्यविरोधात्। सृष्टदृष्टिपक्षेऽपि भाविनि ज्ञानविषयत्वस्येव अज्ञानविषयत्व-स्यापि स्वीकारात [लघु० पृ० ५३४]। यथा सृष्टदृष्टिपक्षे जडविषयसत्ताकाले जडविषयावच्छेदेन चैतन्य एव अज्ञानविषयत्वं न जडे एवं विषयासत्त्वकालेऽपि भाविजडावच्छेदेन चैतन्येऽज्ञानं स्वीक्रियते, अनुभवबलात् कार्यान्यथानुपपत्तेश्च। एवञ्च दृष्टिसृष्टिपक्षेऽपि अविद्यमानजडावच्छेदेन अज्ञानस्य चैतन्ये सत्त्वे बाधकाभावः। अविद्यमानविषयकज्ञानस्येव अज्ञानस्यापि अविद्यमानविषयकत्वे बाधकाभावात्।

दृष्टिसृष्टिपक्षे ज्ञानभेदेन विषयभेदात् भिन्नविषयज्ञानयोर्बाध्यबाधकभावा-भावात्, इदं रजतं नेदं रजतमिति ज्ञानयोर्बाध्यबाधकभावो न स्यादिति पूर्वपक्षी शङ्कते—न च इदं रूप्यं नेदं रूप्यमिति ज्ञानयोर्भिन्नविषयत्वेन बाध्य-बाधकभावानुपपत्तिरिति वाच्यम्। भ्रमज्ञानबाधकज्ञानयोर्भिन्नत्वात् दृष्टि-सृष्टिपक्षे ज्ञानभेदेन विषयस्यापि भेदात् 'भिन्नविषयकयोर्ज्ञानयोर्बाध्यबाधकभावा-भावात्, इदं रूप्यमिति ज्ञानं भिन्नविषयकेन नेदं रूप्यमिति ज्ञानेन न बाध्यते। तथाच अनुभवसिद्धबाध्यबाधकभावो दृष्टिसृष्टिपक्षे न स्यादिति।

भिन्नविषयत्वेऽपि विषययोः सारूप्यात् स्वप्नबाध्यबाधकयोरिव बाध्यबाधकभावोपपत्तेः ॥५॥

न च—रूप्यादिबाधस्यापि दृष्टिसृष्टित्वे तेन रूप्यादेर्मिथ्यात्वासिद्धिरिति—वाच्यम् ; बाध्यान्यूनसत्ताकत्वमेव बाधकत्वे प्रयोजकम्, न त्वधिकसत्ताकत्वमित्यस्योपपादितत्वेन व्यावहारिकेण व्यावहारिकबाधवत् प्रातिभासिकेन प्रातिभासिकबाधाविरोघात् ॥६॥

---

भिन्नविषयत्वेऽपि विषयसारूप्यात् स्वप्नज्ञानयोर्बाध्यबाधकभाववत् दृष्टिसृष्टिपक्षेपि बाध्यबाधकभावोपपत्तेरिति परिहरति सिद्धान्ती—**भिन्नविषयत्वेऽपि विषययोः सारूप्यात् स्वप्नबाध्यबाधकयोरिव बाध्यबाधकभावोपपत्तेः।** दृष्टिसृष्टिपक्षे ज्ञानभेदेन विषयभेदेऽपि समानदोषजन्यत्वेन विषयसारूप्यात् बाध्यबाधकभावापन्नयोः स्वप्न[स्वाप्न]ज्ञानयोर्विषयसारूप्येन बाध्यबाधकभाववत् प्रकृतेऽपि बाध्यबाधकभावोपपत्तेः। दृष्टिसृष्टिपक्षे यावन्तो दोषाः स्वप्न[स्वाप्न]ज्ञानदृष्टान्तेनैव परिहरणीयाः। स्वाप्नी सृष्टिर्दृष्टिसृष्टिरेव। तदनुसारेणैव उत्तमाधिकारिणां कृते दृष्टि- सृष्टिप्रक्रिया प्रदर्शिता। निवृत्तविषयरागा हि उत्तमाधिकारिणः। तेषामेव व्यवहारसिद्धिविषयेऽनादरः। व्यवहारसिद्धिविषयेऽनादरादेव दृष्टिसृष्टिप्रक्रिया प्रदर्शिता इति बोध्यम् ॥५॥

६—दृष्टिसृष्टिपक्षे रजतभ्रमानन्तरं नेदं रजतमिति बाधेन भ्रमप्रसक्तरजतस्य मिथ्यात्वसिद्धिर्न स्यात्; भ्रमबाधयोर्द्वयोरेव दृष्टिसृष्टित्वेन तुल्यसत्ताकत्वादिति पूर्वपक्षी शंकते—**न च रूप्यादिबाधस्यापि दृष्टिसृष्टित्वे तेन रूप्यादेर्मिथ्यात्वासिद्धिरिति वाच्यम्।** बाध्यापेक्षयाऽधिकसत्ताकज्ञानस्यैव बाधकत्वात् प्रकृते बाध्यबाधकयोस्तुल्यसत्ताकत्वादिति भावः।

बाध्यान्यूनसत्ताकत्वेनैवब ाधकत्वं न तु अधिकसत्ताकत्वेन इति परिहरति सिद्धान्ती—**बाध्यान्यूनसत्ताकत्वमेव बाधकत्वे प्रयोजकं न त्वधिकसत्ताकत्वमित्यस्योपपादितत्वेन व्यावहारिकेण व्यावहारिकबाधवत्, प्रातिभासिकेन प्रातिभासिकबाधाविरोधात्।** उक्तञ्च द्वितीयमिथ्यात्वलक्षणे—अतात्त्विक एव वा निषेधोऽयम्। अतात्त्विकत्वेऽपि न प्रातिभासिकः किन्तु व्यावहारिकः। न च तर्हि निषेधस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधित्वात्

न च—सुषुप्तिप्रलयादौ जीवब्रह्मविभागस्याप्रतीतत्वेनाविद्यमानतया प्रतिसुषुप्ति प्रतिप्रलयं च मुक्तस्य पुनरावृत्त्यापत्तिरिति—वाच्यम्; जीवब्रह्मविभागादेरनादित्वेन दृष्टिसृष्टित्वानभ्युपगमस्योक्तत्वात्। न च सुषुप्तं प्रति संस्कारादेरप्यभावेन तस्य पुनः प्रबोधायोगः; कारणात्मना

---

अर्थान्तरमिति वाच्यम्, स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात्, निषेधस्य बाध्यत्वं पारमार्थिकसत्ताविरोधित्वे न तन्त्रं; किन्तु निषेध्यापेक्षयाऽन्यूनसत्ताकत्वम्, प्रकृते च तुल्यसत्ताकत्वात् कथं न विरोधित्वमिति। स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात् न निषेध्यापेक्षयाऽधिकसत्ताकत्वं बाधकत्वे प्रयोजकम्। किन्तु बाध्यापेक्षयाऽन्यूनसत्ताकत्वमेव बाधकत्वे प्रयोजकम्। प्रकृते च बाधकस्य बाध्यापेक्षयाऽन्यूनसत्ताकत्वात्, नेदं रजतमिति बाधकेन बाध्यस्य रजतस्य मिथ्यात्वमेवेति भावः ॥६॥

७—सुषुप्त्यादौ जीवब्रह्माविभागस्य अप्रतीतत्वेन अविद्यमानत्वात् ब्रह्मैक्यापन्नमुक्तस्यापि जीवत्वापत्त्या मुक्तस्य पुनरावृत्त्यापत्तिरिति पूर्वपक्षी शङ्कते—न च सुषुप्तिप्रलयादौ जीवब्रह्मविभागस्य अप्रतीतत्वेन अविद्यमानतया प्रतिसुषुप्ति प्रतिप्रलयश्च मुक्तस्य पुनरावृत्त्यापत्तिरिति वाच्यम्। दृष्टिसृष्टिपक्षे सुषुप्त्यादौ जीवब्रह्मविभागस्य अप्रतीतत्वेन जीवब्रह्मविभागस्य अविद्यमानतया ब्रह्मणोऽपि जीवाभेदापत्त्या ब्रह्मैक्यापन्नमुक्तस्यापि तदापत्त्या प्रतिसुषुप्ति प्रतिप्रलयञ्च मुक्तस्य पुनरावृत्त्यापत्तिरिति। अनाद्यतिरिक्तसृष्टिविषये एव दृष्टिसृष्टिस्वीकारात्, अनादिजीवब्रह्मविभागादौ दृष्टिसृष्टेरनङ्गीकारात्, नैवमिति परिहरति सिद्धान्ती—जीवब्रह्मविभागादेरनादित्वेन दृष्टिसृष्टित्वानभ्युपगमस्योक्तत्वात्। न च सुषुप्तं प्रति संस्कारादेरप्यभावेन तस्य पुनः प्रबोधायोगः कारणात्मना संस्कारादेः सत्त्वात्। सुषुप्तौ संस्कारस्य धर्माधर्मयोश्च सर्वकार्यपरिणाम्युपादानभूतायामुपादानात्मना सत्त्वात्, न तेषामभावः, सत्कार्यवादाभ्युपगमादिति भावः। उक्तञ्च भामत्यां प्रथमाध्यायतृतीयपादे—यद्यपि महाप्रलयसमये नान्तःकरणादयः समुदाचरद्वृत्तयः सन्ति, तथापि स्वकारणेऽनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपिकाऽविद्यावासनाभिः सह अव-

संस्कारादेः सत्त्वात्। न च मोक्षस्य दृगन्यत्वेन स्वाप्नमोक्षवत् दृष्टिसृष्ट्यापत्तिः, मोक्षस्य ब्रह्मस्वरूपत्वेन दृग्भिन्नत्वासिद्धेः ॥६॥

न च—चैतन्यमात्ररूपा दृष्टिर्न सृष्टिः, किन्तु वृत्तिविशिष्टचैतन्यरूपा वा, वृत्तिरूपा वा, दृष्टिः सृष्टिरिति वाच्यम्; तथा च तस्या अपि दृष्ट्यन्तरं सृष्टिरित्यनवस्थेति—वाच्यम् ॥७॥

चैतन्यमात्रस्य दृष्टित्वे यद्यपि तत्समानसत्ताकतया घटादेः सदातनत्वापत्तिः; तथापि वृत्त्युपहितचैतन्यमेव दृष्टिशब्दार्थः। वृत्तावपि

---

तिष्ठन्त एव इति [भामती, पृ० ३३३]। कारणस्य अविद्याया अनादित्वात् तत्र दृष्टिसृष्ट्यनङ्गीकारादिति भावः ॥६॥

७—मोक्षस्य दृगन्यत्वेन दृष्टिसृष्टिमाशङ्क्य तस्य दृग्रूपत्वेन शंकां परिहरति सिद्धान्ती—**न च मोक्षस्य दृगन्यत्वेन स्वाप्नमोक्षवत् दृष्टिसृष्ट्यापत्तिः; मोक्षस्य ब्रह्मस्वरूपत्वेन दृग्भिन्नत्वासिद्धेः**। 'अविद्यास्तमयो मोक्षः' इत्यभिधानात् 'अविद्यास्तमयस्य च' 'निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित' इति चित्सुखाचार्येण प्रतिपादनात् ज्ञातत्वोपलक्षितात्मैव मोक्षः तथाच मोक्षस्य दृग्भिन्नत्वमसिद्धमिति भावः। दृष्टिसृष्टिरित्यत्र दृष्टिपदस्य चैतन्यमात्रं वा अर्थः वृत्तिविशिष्टचैतन्यं वा ? वृत्तिरेव वा ? इति विकल्प्य दृष्टिसृष्टिपक्षं दूषयति पूर्ववादी—**न च चैतन्यमात्ररूपा दृष्टिर्न सृष्टिः, किन्तु वृत्तिविशिष्टचैतन्यरूपा वा, वृत्तिरूपा वा, दृष्टिः सृष्टिरिति वाच्यं। तथाच तस्या अपि दृष्ट्यन्तरं सृष्टिरित्यनवस्थेति वाच्यम्**। 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते'ऽविनाशित्वादिति श्रुत्या चैतन्यमात्ररूपा दृष्टिरेका सदातनी वृत्तिरूपाप्यन्या दृष्टिः कादाचित्की। तत्र चैतन्यमात्ररूपा सदातनी दृष्टिर्न सृष्टिः तथात्वे सृष्टेरपि दृष्टिसमानसत्ताकत्वेन प्रपञ्चस्यापि सदातनत्वापत्तिः स्यात्। अतो न चिद्रूपा दृष्टिः सृष्टिः; किन्तु वृत्तिविशिष्टचैतन्यरूपा दृष्टिः केवल वृत्तिरूपा वा दृष्टिः, सैव सृष्टिः। वृत्तेर्दृष्टिसृष्टित्वे वृत्तिविशिष्टचैतन्यस्य वा दृष्टिसृष्टित्वे तयोरनित्यत्वात् तयोरपि दृष्ट्यन्तरं सृष्टिरेवं तस्या अपि अन्या इत्येवम् अनवस्था स्यात् इति भावः ॥७॥

८—वृत्त्युपहितचैतन्यमेव दृष्टिशब्दार्थः, वृत्तेरपि स्वरूपेणैव चैतन्योपाधित्वात् नानवस्थेति परिहरति—**चैतन्यमात्रस्य दृष्टित्वे यद्यपि तत्समानसत्ताक-**

वृत्तिरेव स्वस्वरूपा चैतन्योपाधिरिति नानवस्था। अत एव—दोषाज्ञानादृष्टदेहेन्द्रियादीनामभावे न भ्रम इति तेषामपि दृष्टिसृष्टित्वे अनवस्थेति—निरस्तम्; स्वाप्नभ्रमवद्देहेन्द्रियादिनैरपेक्ष्येणाप्युपपत्तेः। अन्वयव्यतिरेकानुविधानं च तद्वदेव।

---

तथा घटादेः सदातनत्वापत्तिः। तथापि वृत्त्युपहितचैतन्यमेव दृष्टिशब्दार्थः। वृत्तावपि वृत्तिरेव स्वस्वरूपा चैतन्योपाधिरिति नानवस्था। अत एव दोषाज्ञानादृष्टदेहेन्द्रियादीनाम् अभावे न भ्रम इति तेषामपि दृष्टिसृष्टित्वे अनवस्थेति निरस्तम्। स्वाप्नभ्रमवत् देहेन्द्रियादिनैरपेक्ष्येणाप्युपपत्तेः। अन्वयव्यतिरेकानुविधानञ्च तद्वदेव। दृष्टिसृष्टिरित्यस्य दृष्टिसमानसत्ताका सृष्टिरित्यर्थः; यथा प्रातिभासिकरजतादिसृष्टेर्दृष्टिसमानसत्ताकत्वं द्वयोरपि अविद्यापरिणामत्वात् समानकालत्वाच्च एवमेव प्रकृतेऽपि। तथा च चैतन्यस्य दृष्टित्वे तत्समानसत्ताकघटादिसृष्टेरपि चैतन्यवत् सदातनत्वापत्तिः, अतः चैतन्यस्य केवलस्य दृष्टित्वं नाङ्गीक्रियते। किन्तु तत्तद्विषयाकाराऽविद्यावृत्त्युपहितं चैतन्यमेव तस्य तस्य दृष्टिरित्यर्थः; केवलाविद्यावृत्तेर्जडत्वात् दृष्टिरेव सा न सम्भवति; अतः सा न दृष्टिः। न च अविद्यावृत्तेरपि जन्यतया दृष्टिसृष्टित्वं वक्तव्यं तथा च वृत्त्याकाराऽविद्यावृत्त्युपहितं चैतन्यं वृत्तेर्दृष्टिरेष्टव्येति एवं तस्या अपि वृत्तेस्तदन्यवृत्त्युपहितं चैतन्यं दृष्टित्वेनाङ्गीकरणीयमित्यनवस्थेति वाच्यम्; वृत्तेर्दृष्टिसृष्टित्वाय वृत्त्यन्तरोपहितं चैतन्यं नापेक्षते, सैव वृत्तिः स्वस्या दृष्टित्वाय चैतन्योपाधिः, वृत्तेः स्वपरनिर्वाहकत्वाङ्गीकारात् नानवस्थेति बोध्यम्। दृष्टिसृष्टेर्भ्रमात्मकत्वात् भ्रान्तिकारणत्वेन अपेक्षितानां देहेन्द्रियादीनामपि दृष्टिसृष्टित्वाय अन्यदेहेन्द्रियादीनामपेक्षणेऽनवस्थेति पूर्वपक्ष्युक्तं निरस्तम्। जाग्रद्भ्रमे देहेन्द्रियादीनामपेक्षितत्वेऽपि स्वाप्नभ्रमे तन्नैरपेक्ष्यवत् प्रकृतेऽपि तन्नैरपेक्ष्यं बोध्यम्। स्वप्ने देहेन्द्रियादीनामन्वयव्यतिरेकानुविधानवत् प्रकृतेऽपि। स्वाप्नभ्रमे देहादीनामकारणत्वेऽपि कारणत्वेन कल्पितत्वं यथा तथा प्रकृतेऽपीति।

अनात्मप्रपञ्चस्य दृष्टिसृष्टित्वं सत्यत्वेऽनुपपन्नमिति प्रपञ्चस्य मिथ्यात्वं कल्पयति इति ते मतम्, अनात्मप्रपञ्चान्तर्गतदृष्टिसृष्टेरपि दृष्टिसृष्टित्वं वाच्यम्; तथा च घटादिदृष्टिसृष्टेरपि दृष्टिसृष्टित्वे घटादेरदृष्टिसृष्टित्वापत्तिः,

न च—दृष्टिसृष्टेरपि दृष्टिसृष्टित्वेन घटादेरदृष्टिसृष्टित्वापत्तिरिति—वाच्यम्; ज्ञानस्य ज्ञेयत्वेऽपि विषयस्याज्ञेयत्वाभाववत् दृष्टिसृष्टेर्दृष्टिसृष्टित्वेऽपि घटादेर्दृष्टिसृष्टित्वोपपत्तेः ॥८॥

ननु—ऐक्यप्रत्यभिज्ञाविरोधः; पूर्वकालप्रतीतस्येदानीमभावात्, न चैषा भ्रान्तिः; दीपादौ परिणामभेदस्येवेह बाधकस्याभावात्, तदभावेऽपि भ्रान्तित्वे घटादेरप्येकस्मिन् क्षणे भेदस्यात्मनोऽपि प्रतिक्षणं भेदस्य प्रसङ्ग इति—चेत् ॥९॥

---

यथा प्रपञ्चमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य सत्यत्वमिति पूर्वपक्षी शङ्कते—न च दृष्टिसृष्टेरपि दृष्टिसृष्टित्वेन घटादेरदृष्टिसृष्टित्वापत्तिरिति वाच्यम्। घटादेर्दृष्टिसृष्टित्वे घटादेः सत्यत्वापहारो भवति तस्या अपि दृष्टिसृष्टेर्दृष्टिसृष्टित्वे घटादेरपहृतं सत्यत्वं पुनः प्रतिष्ठितं स्यादिति शंकार्थः मिथ्यात्वमिथ्यात्वे सत्यत्वमिव इति।

घटविशेषितज्ञानस्य ज्ञातत्वे घटस्य ज्ञातत्वमिव घटादिविशेषितदृष्टिसृष्टेर्दृष्टिसृष्टित्वे घटादीनामपि दृष्टिसृष्टित्वमेव इति समाधत्ते सिद्धान्ती—ज्ञानस्य ज्ञेयत्वेऽपि विषयस्य अज्ञेयत्वाभाववत् दृष्टिसृष्टेर्दृष्टिसृष्टित्वेऽपि घटादेर्दृष्टिसृष्टित्वोपपत्तेः। विषयस्य अज्ञेयत्वे तद्विशेषितं ज्ञानं ज्ञेयं न भवितुमर्हति। ज्ञानस्य ज्ञेयत्वे ज्ञानविशेषणीभूतो विषयोऽपि अवश्यमेव ज्ञेयो भवति; ज्ञानस्य ज्ञेयत्वे तद्विशेषणीभूतस्य विषयस्य अज्ञेयत्वाभाववत् घटादिदृष्टिसृष्टेर्दृष्टिसृष्टित्वे घटादेरपि दृष्टिसृष्टित्वमेव। दृश्यत्वेनैव घटादेर्दृष्टिसृष्टित्वं तद्दृश्यत्वं दृष्टिसृष्टावपीति घटादेः तद्दृष्टिसृष्टेश्च समं दृष्टिसृष्टित्वमिति न घटादेरदृष्टिसृष्टित्वं स्यादिति भावः ॥८॥

९—पूर्वापरकालप्रतीतस्य ऐक्यप्रत्यभिज्ञाविरोधात् न दृष्टिसृष्टिः सम्भवतीति पूर्वपक्षी शङ्कते—ननु ऐक्यप्रत्यभिज्ञाविरोधः पूर्वकालप्रतीतस्य इदानीमभावात्। नचैषा भ्रान्तिः प्रदीपादौ परिणामभेदस्येव इह बाधकस्याभावात्। तदभावेऽपि भ्रान्तित्वे घटादेरपि एकस्मिन् क्षणे भेदस्य आत्मनोऽपि प्रतिक्षणं भेदस्य प्रसंग इति चेत्? दृष्टिसृष्टिपक्षे पूर्वप्रतीतस्य इदानीमभावात् दृष्टिभेदेन सृष्टेर्भेदात् स एवायं घट इति विभिन्नकालीनघटैक्य-

न, 'नेह नाने'त्यादिश्रुतिभिः प्रपञ्चस्य मिथ्यात्वेऽवधृते रज्जुसर्पादिवत् प्रतिभासमात्रशरीरत्वमेव प्रतिभासकालातिरिक्तकाल-सत्त्वे बाधकम्, अतो भिन्नकालानामात्मभिन्नानां प्रत्यभिज्ञाभ्रान्तिः। आत्मन्येकप्रतीतिरेककालावच्छेदेन घटादौ चैक्यप्रत्यभिज्ञा न भ्रान्तिः। एककालावच्छिन्नघटादावात्मनि चाभेदे बाधकाभावात्। पुरुषान्तर-प्रतीतेन सहैककालावच्छेदेनापि घटादौ प्रत्यभिज्ञानं भ्रम एव; प्रतिभासस्य भेदात्। यथा एकस्यामेव रज्ज्वां मन्दान्धकारवर्तिन्यां दशानां युगपत् सर्पभ्रमेण पलायमानानां परस्परसंवादेनैक एव सर्पः सर्वैरनुभूयत इति प्रत्यभिज्ञा भ्रमः; अन्यभ्रमसिद्धस्यान्येन ज्ञातुमशक्यत्वात् ॥१०॥

---

प्रत्यभिज्ञाविरोधः दृष्टिसृष्ट्यभ्युपगमे स्यात्। न च एषा प्रत्यभिज्ञा भ्रान्तिरेवेति वाच्यम्, बाधकाभावात्। प्रदीपादौ सैवेयं दीपशिखेति ऐक्यप्रत्यभिज्ञा प्रतिक्षणं प्रदी-पशिखापरिणामभेदग्राहकेण प्रत्यक्षेण बाध्यते इति सा भ्रान्तिः तद्वत् स एवायं घट इति ऐक्यप्रत्यभिज्ञाया बाधकाभावात् भ्रान्तिरिति वक्तुं न युज्यते। बाधका-भावेऽपि ऐक्यप्रत्यभिज्ञाया भ्रान्तित्वे घटादेरपि एकस्मिन् क्षणे भेदः प्रसज्येत। बाधकाभावेऽपि प्रत्यभिज्ञाया भ्रान्तित्वे आत्मनोऽपि प्रतिक्षणं भेदः स्यात् ॥९॥

१०—अनात्मप्रपञ्चस्य कालभेदेऽपि ऐक्यप्रत्यभिज्ञा 'नेह नाने'ति श्रुतिबाधि-तेति भ्रान्तिरेव अबाधितात्मप्रत्यभिज्ञा न भ्रान्तिरिति समाधत्ते सिद्धान्ती—न, 'नेह नाने'ति श्रुतिभिः प्रपञ्चस्य मिथ्यात्वेऽवधृते रज्जुसर्पादिवत् प्रतिभा-समात्रशरीरत्वमेव प्रतिभासकालातिरिक्तकालसत्त्वे बाधकम्। अतो भिन्नकालानाम् आत्मभिन्नानां प्रत्यभिज्ञाभ्रान्तिः। आत्मन्येकप्रतीतेरेक-कालावच्छेदेन घटादौ च ऐक्यप्रत्यभिज्ञा न भ्रान्तिः। एककालाव-च्छिन्नघटादौ आत्मनि च अभेदे बाधकाभावात्। पुरुषान्तरप्रतीतेन सह एककालावच्छेदेनापि घटादौ प्रत्यभिज्ञानं भ्रम एव। प्रतिभासस्य भेदात्। यथा एकस्यामेव रज्ज्वां मन्दान्धकारवर्तिन्यां दशानां युगपत् सर्पभ्रमेण पलायमानानां परस्परसंवादेन एक एव सर्पः सर्वैरनुभूते इति प्रत्यभिज्ञानं भ्रमः। अन्यभ्रमसिद्धस्य अन्येन ज्ञातुम् अशक्य-

ननु—अत्र कथमभेदभ्रमः ? तत्कारणस्य सादृश्यादेः कस्याप्यभावादिति—चेन्न; स्वप्नाभेदभ्रमवत् दृष्टिसृष्टिसिद्धसादृश्यादिसंभवात् ॥११॥

---

त्वात् । प्रपञ्चमिथ्यात्वबोधिकाभिः 'नेह नांने'ति श्रुतिभिः प्रपञ्चस्य मिथ्यात्वेऽवधृते 'नेह नाने'ति श्रुत्या द्वैततादात्म्यापन्ने ब्रह्मणि द्वैतवत्त्वकालावच्छेदेन द्वैताभावबोधनात् द्वैतमात्रस्य मिथ्यात्वं बोधितं द्वितीयमिथ्यात्वलक्षणविवरणावसरे प्रपञ्चितमेतत् मिथ्यावस्तुनश्च प्रतिभासमात्रशरीरत्वं रज्जुसर्पवत् ; तथा च मिथ्यावस्तुनः प्रतिभासकालातिरिक्तकालसत्त्वे न प्रतिभासमात्रशरीरत्वं बाधकम् । बाधकवशादेव प्रत्यभिज्ञाया भ्रान्तित्वं स्वीकार्यम् । अतो मिथ्याभूतानां प्रतिभासमात्रशरीराणाम् आत्मभिन्नप्रपञ्चानां भिन्नकालानां प्रत्यभिज्ञाभ्रान्तिरेव । कालभेदेन आत्मनि ऐक्यप्रत्यभिज्ञा न भ्रान्तिः बाधकाभावात्, एवमेव एककालावच्छिन्ने घटादौ अभेद एव, अभेदे बाधकाभावात् । एकपुरुषीयप्रतिभासमपेक्ष्य एककालावच्छिन्ने घटादौ यद्यप्यभेद उक्तः तथापि पुरुषान्तरप्रतीतेन सह एककालावच्छेदेनापि घटादौ प्रत्यभिज्ञानं भ्रम एव, प्रतिभासभेदेन प्रतिभास्यभेदात् । अनात्मप्रपञ्चस्य प्रतिभासमात्रशरीरत्वात् । प्रतिभासभेदात् प्रतिभास्यभेदे दृष्टान्तमाह—यथा एकस्यामेव रज्ज्वामिति । दशानां पुरुषाणाम् एकस्यां रज्ज्वां युगपत् सर्पभ्रमे भ्रमविषयसर्पे एकत्वप्रत्यभिज्ञा भ्रम एव । भ्रमसिद्धस्य प्रतिभासमात्रशरीरत्वात् प्रतिभासभेदेन, प्रतिभास्यभेदात् अन्यभ्रमसिद्धस्य अन्येन ज्ञातुमशक्यत्वात् । सुखदुःखद्वित्वादिवत् भ्रमविषयस्य असाधारणत्वात् तत्तत्पुरुषमात्रसंवेद्यत्वादिति भावः ॥१०॥

११—बहूनां युगपद् एकस्यां रज्ज्वां सर्पभ्रमे य एव सर्पस्त्वया दृष्टः स एव मयाऽपीति अभेदप्रत्यभिज्ञा तावदस्त्येव, सा च भ्रान्तिरिति त्वयोक्तं न सम्भवति भिन्नेऽभेदभ्रमे सादृश्यादेः कारणत्वात् तदभावादत्र न अभेदभ्रमः सम्भवतीति पूर्वपक्षी शङ्कते—ननु अत्र कथमभेदभ्रमः, तत्कारणस्य सादृश्यादेः कस्याप्यभावादिति चेत् ? कृतविवरणमेतत् पातनिकायामेव । कल्पितसादृश्यादिसम्भवात् नैवमित्याह सिद्धान्ती—न, स्वाप्नाभेदभ्रमवत् दृष्टिसृष्टिसिद्धसादृश्यादिसम्भवात् । स्वाप्नप्रपञ्चस्य प्रतिभासमात्रशरीरत्वं सर्वानुभवसिद्धमेव, स्वप्नेऽपि

न चैवम्—अभेद एवोत्पद्यतामिति—वाच्यम्; इष्टापत्तेः, रज्जुसर्पादिवदुत्पन्नस्यैव ग्रहणनियमात्। न च क्वचिदुत्पद्यते क्वचिन्नेत्यत्र नियामकाभावः; मायाया विचित्रशक्तिकत्वाभ्युपगमात् ॥१२॥

न च—'सोऽयं देवदत्त' इति दृष्टान्तेन तत्त्वमस्यादिवाक्ये जहदजहल्लक्षणयैक्यपरत्वोक्त्ययोग इति—वाच्यम्;

---

कदाचित् घटपटादिकं दृष्ट्वा तस्यामेव स्वप्नदशायां पूर्वदृष्टघटपटादेरन्यस्मिन् घटपटादौ पूर्वदृष्टघटपटादिसादृश्यं यथा साक्षात् क्रियते पूर्वदृष्टघटादिसदृशमेतत् घटादिकमिति तथैव प्रकृतेऽपीति भावः। स्वाप्नी सृष्टिर्दृष्टिसृष्टिरेव। तद्दृष्टान्तेनैव जाग्रत्सृष्टेरपि दृष्टिसृष्टित्वं सिषाधयिषितं दृश्यत्वादिहेतुभिः। दृश्यत्वादिहेतुभिर्दृश्यस्य दृष्टिसृष्टौ पर्यवसानं दृश्यस्य स्थायित्वप्रतीतिर्भ्रान्त्या विषये उत्कटरागादिति बोध्यम् ॥११॥

१२—बहुपुरुषाणामेकस्मिन् भ्रान्तिदशायां भ्रान्तिविषयाणां या एकत्वप्रत्यभिज्ञा भ्रान्तिविषयाणाम् अभेदबुद्धिः सा भ्रान्तिरित्युक्तम्; अभेदभ्रान्तौ कारणं सादृश्यादिकमपि दृष्टिसृष्टिसिद्धमित्यप्युक्तं सिद्धान्तिना। इदानीमभेदभ्रान्तिसिद्धये सादृश्यादीनां किं दृष्टिसृष्टित्वकल्पनया अभेद एव उत्पद्यतां शुक्तिरजतादिवदिति पूर्वपक्षिशंकाम् इष्टापत्त्या परिहरति सिद्धान्ती—**न चैवमभेद एव उत्पद्यतामिति वाच्यम्; इष्टापत्तेः। रज्जुसर्पादिवत् उत्पन्नस्यैव ग्रहणनियमात्। न च क्वचिदुत्पद्यते क्वचिन्नेत्यत्र नियामकाभावः मायाया विचित्रशक्तिकत्वाभ्युपगमात्।** बहुपुरुषीयभ्रान्तिविषयाणां यत्राभेदभ्रान्तिः तत्र अभेद एव प्रातिभासिक उत्पद्यतामिति पूर्वपक्षिशङ्का इष्टापत्त्यैव परिहरणीया। इष्टापत्तौ युक्तिमाह—**उत्पन्नस्यैव ग्रहणनियमात्।** शुक्तिरजताद्यध्यासेऽस्य नियमस्य सिद्धत्वादिति भावः। इदं रजतमिति भ्रमे रजतमुत्पन्नं सद् भासते; किन्तु इदं वस्तु पूर्वोत्पन्नमेव मिथ्यारजतसंसृष्टतया भासते; न तु तदानीमुत्पद्यते इत्यत्र किं नियामकम्; इदं रजतयोर्भ्रमे भासमानत्वाविशेषात् इत्यत्राह—**मायाया विचित्रशक्तिकत्वाभ्युपगमात्।** विचित्रशक्तिशालिनी माया किञ्चिद्वस्तु तदानीमुत्पन्नतया चिद्विषयतामापादयति—दर्शयति किञ्चित् पूर्वोत्पन्नतया इति भावः ॥१२॥

यद्यपि धर्मवद्धर्म्यभेदोऽपि बाधित एवेति जहदजहल्लक्षणापि न युज्यते; तथापि यदा धर्माभेदो बाधान्न गृहीतः, किन्तु धर्म्यभेद एव, तदा 'सोऽय'मित्यादौ जहदजहल्लक्षणासंभवेन दृष्टान्तत्वोपपत्तिः। न चाभेदस्यापि दृष्टिसृष्टित्वेन तज्ज्ञानस्य बाधकत्वायोगः; आत्माभेदस्यात्मरूपत्वेन दृष्टिसृष्टित्वाभावात्, अन्यूनसत्ताकत्वमात्रेण बाधकत्वोपपत्तेश्च ॥१३॥

---

१३—तत्तेदन्तयोर्धर्मयोरभेदवत् तदिदं धर्मिणोरपि अभेदस्य बाधितत्वात् सोऽयं देवदत्त इति वाक्यवत् तत्त्वमस्यादिवाक्ये जहदजहल्लक्षणया ऐक्यपरत्वोक्तेरयोग इति शङ्कते पूर्वपक्षी—न च सोऽयं देवदत्त इति दृष्टान्तेन तत्त्वमस्यादिवाक्ये जहदजहल्लक्षणया ऐक्यपरत्वोक्त्ययोग इति वाच्यम्? सोऽयमिति वाक्ये तत्तेदन्तयोर्धर्मयोरभेदः बाधित एव; अत एव विरुद्धयोर्धर्मयोस्तत्तेदन्तयोः वाच्यांशयोः परित्यागेन लक्षणया अविरुद्धवाच्यविशेष्यांशयोरुपस्थापनात् यथा तयोरभेदः सोऽयमिति वाक्येन बोध्यते एवं तत्त्वमस्यादिवाक्येऽपि तत्त्वंपदाभ्यां वाच्ययोः सर्वज्ञत्वविशिष्टचैतन्यकिञ्चिज्ज्ञत्वविशिष्टचैतन्ययोः सर्वज्ञत्वकिञ्चिज्ज्ञत्वरूपविरुद्धविशेषणांशपरित्यागेन लक्षणया अविरुद्धविशेष्यांशद्वयोपस्थापनात् तयोरभेदो महावाक्येन बोध्यते इति सिद्धान्तो न सङ्गच्छते; विरुद्धधर्मयोरभेदवत् धर्मिणोरपि अभेदो बाधित एव। भेदवद् अभेदस्यापि चिद्धर्मत्वेन दृष्टिसृष्टित्वेन मिथ्यात्वादिति पूर्वपक्ष्याशयः।

आत्माभेदस्य आत्मरूपत्वान्न दृष्टिसृष्टित्वेन मिथ्यात्वमिति समाधत्ते सिद्धान्ती—यद्यपि धर्मवद् धर्म्यभेदोऽपि बाधित एवेति जहदजहल्लक्षणापि न युज्यते तथापि यदा धर्माभेदो बाधान्न गृहीतः किन्तु धर्म्यभेद एव तदा सोऽयमित्यादौ जहदजहल्लक्षणासम्भवेन दृष्टान्तत्वोपपत्तिः। न च अभेदस्यापि दृष्टिसृष्टित्वेन तज्ज्ञानस्य बाधकत्वायोगः आत्माभेदस्य आत्मरूपत्वेन दृष्टिसृष्टित्वाभावात्। अन्यूनसत्ताकत्वमात्रेण बाधकत्वोपपत्तेश्च। यद्यपि विरुद्धयोर्धर्मयोरभेदे बाधस्फुरणात् यथा न तयोरभेदो बोध्यते तथा धर्मिणोरपि अभेदो बाधित एव इति न जहदजहल्लक्षणा युज्यते, तथापि यदा धर्मयोरभेदे बाधस्फुरणात्

न च—साक्षात्कारस्यापि दृष्टिसृष्टित्वेन प्रमाणजन्यत्वाभावात् तत्त्वज्ञानत्वाभावेन ततो मुक्तिर्न स्यादिति—वाच्यम् ॥१४॥

अबाधितविषयत्वेनैव तत्त्वज्ञानत्वोपपत्तेः, तस्य च दृष्टिसृष्टित्वेऽप्यक्षतेः । न च 'ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ध्रुवं

---

अभेदो न गृह्यते धर्म्यंभेदे बाधास्फुरणाद् धर्मिणोरभेदो गृह्यते तदा सोऽयमित्यादौ जहदजहल्लक्षणासम्भवेन दृष्टान्तत्वोपपत्तिः । न च दार्ष्टान्तिके निष्कृष्टचैतन्ययोरभेदस्यापि दृष्टिसृष्टित्वाद् अभेदज्ञानस्यापि भ्रान्तित्वेन भेदभ्रान्तिबाधकत्वायोग इति वाच्यम्; आत्माभेदस्य आत्मरूपत्वाद् दृष्टिसृष्टित्वाभावान्न चिन्मात्राभेदज्ञानस्य दृष्टिसृष्टित्वम् । अभेदज्ञानस्य दृष्टिसृष्टित्वेऽपि न भेदबाधकत्वायोगः द्वयोर्दृष्टिसृष्टित्वेऽपि बाध्यापेक्षयाऽन्यूनसत्ताकत्वस्य बाधकत्वे तन्त्रत्वस्य प्रागेवोक्तत्वात् स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनादिति ॥१३॥

१४—चरमात्मसाक्षात्कारस्यापि दृष्टिसृष्टित्वेन प्रमाणजन्यत्वाभावात् तत्त्वज्ञानत्वाभावेन ततो न मुक्तिः स्यादिति पूर्वपक्षी शङ्कते—**न च साक्षात्कारस्यापि दृष्टिसृष्टित्वेन प्रमाणजन्यत्वाभावात् तत्त्वज्ञानत्वाभावेन ततो मुक्तिर्न स्यादिति वाच्यम्** । दृष्टिसृष्टिर्मायिकी न प्रमाणजन्या यथा शुक्तौ रजतादिदृष्टिः । अतश्चरमसाक्षात्कारस्यापि अन्तःकरणपरिणामत्वेन दृष्टिसृष्टिपक्षेऽविद्यापरिणामत्वेन प्रमाणाजन्यत्वात् शुक्तौ रजतादिज्ञानवत् तत्त्वज्ञानत्वाभावात् न ततोऽविद्यानिवृत्तिरूपा मुक्तिर्भवितुमर्हति ॥१४॥

१५—अबाधितविषयकत्वेनैव तत्त्वज्ञानत्वं न प्रमाणजन्यत्वेन इति परिहरति सिद्धान्ती— **अबाधितविषयकत्वेनैव तत्त्वज्ञानत्वोपपत्तेः तस्य च दृष्टिसृष्टित्वेऽप्यक्षतेः** । उक्तश्च खण्डने—

> पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः ।
> विरोधादुपजीव्येन बिभेति न मनागपि ॥ इति ।

अबाधितविषयकज्ञानं तत्त्वज्ञानं न प्रमाणजन्यं ज्ञानम्; प्रमाणजन्यस्यापि घटपटादिज्ञानस्य बाधितविषयकत्वेन अतत्त्वज्ञानत्वात् चरमज्ञानस्य दृष्टिसृष्टित्वेऽपि तद्विषयस्य सर्वथा अबाधितत्वान्न तस्य तत्त्वज्ञानत्वक्षतिरिति भावः ।

विश्वमिदं जगदि'त्यादिश्रुतिविरोधः; अनित्यतावादिभिरपि ध्रुवेत्यस्यान्यथानयने आवश्यके दृष्टिसृष्टिप्रतिपादकश्रुत्यनुरोधेन आकल्पं संतानाविच्छेदपरत्वस्यैव युक्तत्वात्, अन्यथा 'ध्रुवो राजे'त्यादावगतेः। दृष्टिसृष्टौ च 'एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि सर्वं एत आत्मानो व्युचरन्ती'ति श्रुतिः सुप्तोत्थितजीवात् प्राणादिसृष्टिं प्रतिपादयन्ती प्रमाणम् ॥१५॥

---

दृश्यग्रामस्य ध्रुवत्वप्रतिपादकश्रुतिविरोधाद् दृष्टिसृष्टिरयुक्तेति पूर्वपक्षिमतमाशंक्य समाधत्ते—न च 'ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे'। 'ध्रुवं विश्वमिदं जगदि'त्यादिश्रुतिविरोधः; अनित्यतावादिभिरपि ध्रुवेत्यस्य अन्यथानयने आवश्यके दृष्टिसृष्टिप्रतिपादकश्रुत्यनुरोधेन आकल्पं सन्तानाविच्छेदपरत्वस्यैव युक्तत्वात्, अन्यथा 'ध्रुवो राजा' इत्यादौ अगतेः। दृष्टिसृष्टौ च 'एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि सर्वे एत आत्मानो व्युच्चरन्ती'ति श्रुतिः सुप्तोत्थितजीवात् प्राणादिसृष्टिं प्रतिपादयन्ती प्रमाणम्। ध्रुवा द्यौरिति अयं मन्त्रः ऋक्संहितायाम् अष्टमेऽष्टके आम्नायते—[ऋक्० सं०—८।८।३२।४] मन्त्रपाठस्त्वयम्।

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे।
ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम् ॥

अत्र माधवीयभाष्यम्—

द्यौर्ध्रुवा स्थिरा भवति पृथिवी च ध्रुवा स्थिरा भवति इमे दृश्यमानाः पर्वताः महीधराश्च ध्रुवासः स्थिराः इदं विश्वं सर्वं जगद् ध्रुवं स्थिरं भवति। एवमेवायं विशां प्रजानां राजा स्वामी सन् ध्रुवः स्थिरो भवतु। द्युलोकभूलोकादीनां स्थैर्यप्रतिपादिन्या श्रुत्या दृष्टिसृष्टेर्न विरोधः। द्युलोकादीनामनित्यतावादिभिर्वैशेषिकादिभिरपि अन्यथैव इयं श्रुतिर्व्याख्यातव्या। अतः वैशेषिकादितर्कविरोधाद् अस्याः श्रुतेरन्यथानयने अवश्यकर्तव्ये दृष्टिसृष्टिप्रतिपादकश्रुत्यनुरोधेनापि इयं श्रुतिरन्यथा नेतव्या; अन्यथानयनञ्च—अस्याः श्रुतेराकल्पं सन्तानाविच्छेदपरत्वम्। नित्यरूपमुख्यार्थभिन्नार्थकत्ववचनम्। द्युलोकादीनां

न च—सुषुप्तौ प्राणादिपञ्चकस्य सत्त्वात्किमर्थं पुनः सृष्टिरिति—वाच्यम्; 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदि'त्यादिना सुषुप्तौ सकलकार्यप्रपञ्चलयश्रवणात् ॥१६॥

---

प्रतिदृष्ट्युत्पत्तिस्वीकारेऽपि कल्पावसानपर्यन्तं सन्तानाविच्छेदेन विद्यमानत्वम्। स्वसमानजातीयनाशव्यापकप्रागभावप्रतियोगित्वम्। व्याप्तिश्च कालगर्भा ग्राह्या। एकद्युलोकादिनाशकालेऽपि तत्समानजातीयद्युलोकान्तरस्य प्रादुर्भावात्। आकल्पं स्वसमानजातीयद्युलोकादिशून्यः कालः न भवतीति भावः। अस्य मन्त्रस्य राजस्थैर्यशंसनपरत्वाद् द्युलोकादीनां स्थैर्यप्रतिपादने तात्पर्याभावात्। अत एवोक्तं मूले—अन्यथा ध्रुवो राजेत्यादौ अगतेरिति। द्युलोकादिवद् यस्य कस्यचिद्राज्ञः चिरस्थैर्यप्रतिपादनासम्भवात्। ध्रुवपदेन चिरस्थैर्यप्रतिपादने मन्त्रांश एव विरुद्ध्यते। दृष्टिसृष्टौ च श्रुतयः प्रमाणम्—ब्रह्मसूत्रप्रथमाध्यायचतुर्थपादे—अन्यार्थन्तु जैमिनिः [ब्र० सू० १।४।१८] इति सूत्रभाष्ये 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोकाः' [कौपितकिब्राह्मणम्, ४।२०] परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायते इति वेदान्तमर्यादा इति च भाष्यम्। कौषितकिब्राह्मणोपनिषदि—'स यदा प्रतिबुध्यते यथा अग्नेर्ज्वलतो विस्फुलिंगा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोकाः' [कौपितकिब्राह्मणम्, ३।३ खण्डः]। पूर्वोदाहृतसूत्रभाष्येऽपि 'सर्वे एते आत्मानो व्युच्चरन्ती'ति श्रुतिरुदाहृता। मूलकृताऽपि दृष्टिसृष्टौ श्रुतिरुदाहृता; अतो न निष्प्रामाणिकी दृष्टिसृष्टिकल्पना ॥१५॥

१६—सुषुप्तौ प्राणपञ्चकव्यापारस्य दृष्टत्वात्, विद्यमाने प्राणपञ्चके प्रतिबुद्धस्य प्राणपञ्चकसृष्टिरसमञ्जसेति शङ्कते पूर्वपक्षी—न च सुषुप्तौ प्राणादिपञ्चकस्य सत्त्वात् किमर्थं पुनः सृष्टिरिति वाच्यम्? सुषुप्तौ विद्यमाने प्राणपञ्चके प्रबुद्धस्य प्राणपञ्चकसृष्टिर्व्यर्थेति शङ्कार्थः। सुषुप्तौ प्राणपञ्चकस्य सत्त्वमेवासिद्धं, श्रुतिविरोधादिति समाधत्ते सिद्धान्ती—न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येदित्यादिना सुषुप्तौ सकलकार्यप्रपञ्चलयश्रवणात्। बृहदारण्यके चतुर्थाध्याये तृतीयब्राह्मणे त्रयोविंशखण्डे

न च 'सुषुप्तौ हितानामनाड्य' इति नाडीसत्त्वप्रतिपादकवाक्य-विरोधः; केन क्रमेण सुषुप्तौ भवतीत्यपेक्षायां 'हिता नाम नाड्यो हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेत' इत्यादिना सुषुप्त्यव्यवहितकाले क्रमोक्तये नाडीसत्त्वं प्रतिपाद्यते, न तु सुषुप्तिकालेऽपि, वाक्यान्तरविरोधात्; प्राक् सत्त्वमात्रेण च क्रमाभिधानपर्याप्तेः ॥१७॥

ननु—'यत्रैष एतत्सुप्तोऽभूदि'ति यच्छब्देन सुप्ताधारत्वेनोक्तस्य

---

सुषुप्तिदशायां सकलकार्यप्रपञ्चस्य लयप्रतिपादनात्, श्रुतिविरोधेन प्राणपञ्चक-सत्त्वकल्पनाया असम्भवादिति भावः ॥१६॥

१७—बृहदारण्यके द्वितीयाध्याये प्रथमब्राह्मणे ऊनविंशखण्डे सुषुप्तिं प्रस्तुत्य 'हितानामनाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते' इत्याम्नातम्; सुषुप्तिदशायां सर्वप्रलयेऽभ्युपगम्यमाने इयं श्रुतिः पीड्येत इत्याशंक्य समाधत्ते सिद्धान्ती—न च सुषुप्तौ हितानामनाड्य इति नाडीसत्त्वप्रतिपादक-वाक्यविरोधः। केन क्रमेण सुषुप्तो भवति इत्यपेक्षायां 'हितानाम-नाड्यो हृदयात् पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते, इत्यादिना सुषुप्त्यव्यवहितकाले क्रमोक्तये नाडीसत्त्वं प्रतिपाद्यते, न तु सुषुप्तिकालेऽपि वाक्यान्तरविरोधात्। प्राक्सत्त्वमात्रेण च क्रमा-भिधानपर्याप्तेः। सुषुप्तौ नाडीसत्त्वप्रतिपादनाय इयं श्रुतिः प्रवृत्तेति पूर्वपक्षिणो भ्रमः। उक्तं भाष्ये—केन पुनः क्रमेण सुषुप्तो भवतीत्युच्यते—हितानाम नाड्य इति। भाष्यमेवानुसृत्य उक्तं मूले—केन क्रमेण सुषुप्तौ भवतीत्यपेक्षायामिति। सुषुप्त्यव्यवहितप्राक्काले सुषुप्तिक्रमोक्तये नाडीसत्त्वं प्रतिपाद्यते। न तु सुषुप्तिकाले नाडीसत्त्वं प्रतिपाद्यते 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्, इत्यादिवाक्यान्तरविरोधात्। सुषुप्तेः प्राक्सत्त्व-मात्रेण नाडीनां सुषुप्तिक्रमाभिधानसम्भवात्, न दृष्टिसृष्टेर्विरोधः ॥१७॥

१८—बृहदारण्यकोपनिषदि गार्ग्यजातशत्रुसंवादे—सुप्ताधारत्वेन उक्तस्य ब्रह्मण एव 'अस्मादात्मन' इत्यनेन परामर्शात्; ब्रह्मकर्तृकैव प्राणादिसृष्टिर्न जीवकर्तृ-केति न दृष्टिसृष्टिप्रतिपादनीयं श्रुतिरिति पूर्वपक्षी शङ्कते—ननु यत्रैष एतत्

ब्रह्मण एवास्मादात्मन इत्यनेन परामर्शात्तत्कर्तृकैव प्राणादिसृष्टिर्न तु सुप्तोत्थितजीवकर्तृका ; अन्यथाऽग्न्यूर्णनाभ्यादेस्तन्तुविस्फुलिङ्गादि-जननोक्तिरत्रापि वाक्ये सर्वलोकसृष्ट्युक्तिश्चालीकार्था स्यात्, न हि दृष्टि-सृष्टिपक्षे अग्न्यूर्णनाभ्यादेस्तन्त्वादिजनकत्वं सर्वलोकसृष्टिर्वास्तीति—चेत् ॥१८॥

न ; यत्रेत्यस्य कालपरत्वेन यच्छब्देन 'ब्रह्मणो निर्देशाभावात् ।

---

सुप्तो अभूत् इति यच्छब्देन सुप्ताधारत्वेन उक्तस्य ब्रह्मण एव अस्मादात्मन इत्यनेन परामर्शात् तत्कर्तृकैव प्राणादिसृष्टिर्न तु सुप्तोत्थितजीव-कर्तृका, अन्यथा अग्न्यूर्णनाभ्यादेस्तन्तुविस्फुलिंगादिजननोक्तिरत्रापि वाक्ये सर्वलोकसृष्ट्युक्तिश्च अलीकार्था स्यात्; न हि दृष्टिसृष्टिपक्षे अग्न्यूर्णनाभ्यादेस्तन्त्वादिजनकत्वं सर्वलोकसृष्टिर्वा अस्तीति चेत् ? बृहदारण्यकोपनिषदि द्वितीयाध्याये प्रथमब्राह्मणसमाप्तौ 'स यथोर्णनाभिस्तन्तु-नोच्चरेद् यथा अग्नेः क्षुद्रा विस्फुलिंगाः व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ती'ति वाक्ये अस्मदात्मन इत्यनेन एतत्पूर्ववाक्यनिर्दिष्टस्य 'यत्रैष एतत् सुप्तो अभूदि"ति यच्छब्देन सुप्तजीवाधारत्वेन उक्तस्य ब्रह्मण एव परामर्शात्; यत्र ब्रह्मणि एष जीवः सुप्तो अभूद् अस्मात् ब्रह्मणः सर्वे प्राणाः सर्वे लोका व्युच्चरन्तीति ब्रह्मकर्तृकैव सृष्टिः प्रतिपाद्यते न सुप्तोत्थितजीवकर्तृका येनेयं श्रुतिः दृष्टिसृष्टौ प्रमाणं स्यात् । अन्यथा सुप्तोत्थितजीवात् 'प्राणादिसृष्टिप्रतिपादने श्रुतेस्तात्पर्यकल्पने एतत्-प्रथमब्राह्मणपरिसमाप्तौ 'यथोर्णनाभिस्तन्तुनोच्चरेद् यथा अग्नेः क्षुद्रा विस्फु-लिंगा व्युच्चरन्ती' त्यादिवाक्यैः तन्तुविस्फुलिंगादिजननोक्तिः असंगता स्यात् । एवं सर्वलोकसृष्टिश्च असंगता स्यात् । न हि दृष्टिसृष्टौ अग्न्यूर्णनाभ्यादेस्तन्त्वादि-जनकत्वं सम्भवति, दृष्टेरेव सृष्टित्वात्, एवमेव दृष्टिसृष्टिपक्षे सर्वलोकसृष्टिरपि असंगता स्यात । दृष्टिमात्रस्यैव सृष्टित्वात् तस्मात् नेयं श्रुतिः दृष्टिसृष्टौ प्रमाणम् । न हि ऊर्णनाभ्यादिदृष्टान्तद्वयं दृष्टिसृष्ट्यनुगुणम्, नापि सुप्तोत्थितस्य सर्वलोक-दृष्टिर्वा अस्ति येन इयं श्रुतिर्दृष्टिसृष्ट्यनुगुणतां भजेत इति भावः ॥१८॥

१९—'यत्रैष एतत् सुप्तो अभूदि'ति पूर्ववाक्ये यत्रेत्यस्य कालपरत्वे ब्रह्म-

न च यत्रेत्यस्य ब्रह्मरूपाधिकरणपरत्वं कालपरत्वं वेत्यत्र विनिगमनाविरहः; अनन्तरवाक्ये क्वैष तदाभूदित्यत्र क तदेति पदद्वयोपादानस्यैव विनिगमकत्वात्, यत्रेत्यनेन देशनिर्देशे क्वेति देशप्रश्नानुपपत्तेः, कालानिर्देशे च तदेति प्रतिनिर्देशानुपपत्तेः, भाष्यकारादिभिश्च स्थूलाधिकारिणं प्रति तथा व्याख्यानात्, ऊर्णनाभ्यादेस्तन्त्वादिजन्मोत्पत्तिस्तु लौकिकभ्रमसिद्धकार्यकारणभावप्रसिद्धिमनुरुध्य। सर्वलोकादिसृष्टिश्च तत्तद्दृष्टिव्यक्तिमभिप्रेत्य; यदा यत् पश्यति, तत्समकालं तत् सृजतीत्यत्र तात्पर्यात् ॥१९॥

---

परत्वाभावात् पूर्वपक्षिकृता श्रुतियोजना विपरीता इत्याह सिद्धान्ती—न, यत्रेत्यस्य कालपरत्वेन यच्छब्देन ब्रह्मणो निर्देशाभावात्। न च यत्रेत्यस्य ब्रह्माधिकरणपरत्वं कालपरत्वं वा इत्यत्र विनिगमनाविरहः। अनन्तरवाक्ये क्वैष तदा अभूदित्यत्र क्व तदेति पदद्वयोपादानस्यैव विनिगमकत्वात्। यत्र इत्यनेन देशनिर्देशे क्वेति देशप्रश्नानुपपत्तेः, कालनिर्देशे च तदेति प्रतिनिर्देशोपपत्तेः। भाष्यकारादिभिश्च स्थूलाधिकारिणं प्रति तथा व्याख्यानात्। ऊर्णनाभ्यादेस्तन्त्वादिजन्मोत्पत्तिस्तु लौकिकभ्रमसिद्धकार्यकारणभावप्रसिद्धिमनुरुद्ध्य। सर्वलोकादिसृष्टिश्च तत्तद्दृष्टिव्यक्तिमभिप्रेत्य 'यदा तत् पश्यति तत् समकालं तत् सृजती'त्यत्र तात्पर्यात्। 'यत्रैष एतत् सुप्तोऽभूदि'त्यत्र यच्छब्देन सुप्त्याधारकालस्यैव परामर्शः न ब्रह्मणः, कालपरयच्छब्देन ब्रह्मणो निर्देशाभावात्। भाष्यकृतापि यत्र यस्मिन् काले एष विज्ञानमयः सुप्तोऽभूदित्येव व्याख्यानं कृतम्; अतोऽत्र यच्छब्दो न ब्रह्मपरः किन्तु कालपर एव। न च यत्रेत्यस्य ब्रह्मरूपाधिकरणपरत्वं वा कालपरत्वं वा इत्यत्र विनिगमनाविरहः, एतद्वाक्यानन्तरवाक्ये क्वैष तदा अभूदित्यत्र क्व तदेति पदद्वयोपादानस्यैव विनिगमकत्वात्। यत्रेत्यस्य ब्रह्मरूपाधिकरणपरत्वे क्वेति देशप्रश्नानुपपत्तेः। यत्रेत्यस्य कालपरत्वे तदेति कालप्रतिनिर्देशोपपत्तेश्च। अतः यत्रैष इत्यत्र यच्छब्देन सुषुप्त्याधारकालस्यैव परामर्शः भाष्यकाराद्युक्तः संगच्छते। पूर्वपक्षिमते तु न संगच्छते इति भावः। भाष्यकारस्तु दृष्टिसृष्टिपक्षं नातिस्फुटयन् इमं ग्रन्थं व्याचख्यौ,

न चाविद्यासहकृतजीवकारणकत्वे जगद्वैचित्र्यानुपपत्तिः, जगदुपादानस्याज्ञानस्य विचित्रशक्तिकत्वात्। उपपत्त्यन्तरं चात्र सिद्धान्तबिन्दुकल्पलतिकादावस्माभिरभिहितम्। वासिष्ठवार्तिकामृतादावाकरे च स्पष्टमेवोक्तम्। यथा 'अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव। क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥" इत्यादि। तस्मात् ब्रह्मातिरिक्तं कृत्स्नं द्वैतजातं ज्ञानज्ञेयरूपमाविद्यकमेवेति प्रातीतिकसत्त्वं सर्वस्येति सिद्धम् ॥

---

मन्दाधिकारिजनानुजिघृक्षया इति न भाष्यादिविरोधः। यच्चोक्तम् ऊर्णनाभ्यादिदृष्टान्तो दृष्टिसृष्टिपक्षे न संगच्छते इति तदपि मन्दम्; लौकिकभ्रमसिद्धकार्यकारणभावप्रसिद्धिमनुरुद्ध्य दृष्टान्तद्वयं श्रुत्या उपात्तम्। सर्वलोकसृष्टिश्च दृष्टिसृष्टिपक्षे न विरुद्ध्यते—तत्तद्दृष्टिव्यक्तिमभिप्रेत्य सर्वलोकसृष्टिरुक्ता। यदा यत्पश्यति तत् समानकालं तत् सृजतीत्यत्र सर्वलोकसृष्टिवाक्यस्य तात्पर्यम्। अतो दृष्टिसमानकाला सृष्टिरेव दृष्टिसृष्टिः प्रातिभासिकसृष्टिसाधारणीति भावः। गौडपादीयभाष्यतदानन्दगिरिव्याख्यानयोगवाशिष्ठसंक्षेपशारीरकवार्तिकामृतादिषु अस्य पक्षस्य प्रपञ्चो द्रष्टव्यः ॥१९॥

२०—'यत्रैष एतत् सुप्तोऽभूदि'ति श्रुतौ सुप्ताधारत्वेन ब्रह्मणः प्रतिपादनात्, 'अस्मादात्मनः' इत्यनेन ब्रह्मण एव परामर्शाद् ब्रह्मकर्तृकैव प्राणादिसृष्टिः न तु सुप्तोत्थितजीवकर्तृका; जीवकर्तृकत्वे जगद्वैचित्र्यानुपपत्तिरिति जगद्वैचित्र्यान्यथानुपपत्त्यापि प्राणादिसृष्टिर्न जीवकर्तृकेति आशंक्य समाधत्ते—न च अविद्यासहकृतजीवकारणकत्वे जगद्वैचित्र्यानुपपत्तिः जगदुपादानस्य अज्ञानस्य विचित्रशक्तिकत्वात्। उपपत्त्यन्तरं चात्र सिद्धान्तबिन्दुकल्पलतिकादौ अस्माभिरभिहितम्। वाशिष्ठवार्तिकामृतादौ आकरे च स्पष्टमेवोक्तम्। यथा—

अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥

इत्यादि, तस्माद् ब्रह्मातिरिक्तं कृत्स्नं द्वैतजातं ज्ञानज्ञेयरूपमाविद्यकमेवेति प्रातीतिकसत्त्वं सर्वस्येति सिद्धम्।

रज्जुसर्पादिवद्विश्वं नाज्ञातं सदिति स्थितम् ।
प्रबुद्धदृष्टिसृष्टित्वात्सुषुप्तौ च लयश्रुतेः ॥
इत्यद्वैतसिद्धौ दृष्टिसृष्ट्युपपत्तिः ॥२०॥

---

रज्जुसर्पादिवद् विश्वं नाज्ञातं सदिति स्थितम् ।
प्रबुद्धदृष्टिसृष्टित्वात् सुषुप्तौ च लयः श्रुतेः ॥
इत्यद्वैतसिद्धौ दृष्टिसृष्ट्युपपत्तिः ।

अविद्यासहकृतजीवदृष्टिसमानकालैव सृष्टिरित्यभ्युपगमे जीवदृष्टिसमानकालीनायाः सृष्टेरनन्तवैचित्र्यं न स्यात्; वैचित्र्यञ्च समस्य नेति न्यायात् । अविचित्रकारणाद् विचित्रकार्योदयासम्भवाद् इति पूर्वपक्षिणा, न च वाच्यम् । जगदुपादानीभूताया अविद्याया विचित्रशक्तिकत्वात् । कारणावच्छेदकवैचित्र्यात् कार्यवैचित्र्यं सूपपन्नमेवेति भावः । उपपत्त्यन्तरं चात्र सिद्धान्तविन्दुवेदान्तकल्पलतिकादौ अस्माभिरभिहितमिति । उक्तञ्च सिद्धान्तविन्दौ प्रथमश्लोकव्याख्यायाम्—मुख्यो वेदान्तसिद्धान्त एकजीववादाख्यः इममेव दृष्टिसृष्टिवादमाचक्षते । अस्मिन् पक्षे जीव एव स्वाज्ञानवशात् जगदुपादानं निमित्तञ्च । दृश्यं सर्वं प्रातीतिकम्, देहभेदाच्च जीवभेदभ्रान्तिः । एकस्यैव स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यात्, आत्मसाक्षात्कारे सति मोक्षः । शुकादीनाञ्च मोक्षश्रवणं तु अर्थवादः । महावाक्ये च तत्पदम् अनन्तसत्यादिपदवद् अज्ञानानुपहितचैतन्यस्य लक्षणया उपस्थापकमित्याद्या अवान्तरभेदाः स्वयमूहनीयाः । व्याख्यातञ्च न्यायरत्नावल्यां गौडब्रह्मानन्देन—ईश्वरस्य जगदुपादानत्वे स्रष्टव्यालोचनं कल्प्यम् अधिष्ठानाद्यभिज्ञकर्तृककार्यं प्रति कर्तव्यत्वेन तदालोचनस्य हेतुत्वात् । मायाविकर्तृकेन्द्रजालादौ तथा दृष्टत्वात् । जीवस्य जगदुपादानत्वे तु तन्न कल्प्यम्, स्वापादिरूपकार्यं प्रति तदहेतुत्वस्य दृष्टत्वात्; तथा च लाघवात् जीवस्यैव जगदुपादानत्वम् इत्याशयेनाह—अस्मिंश्च पक्षे इति । स्वाज्ञानवशादिति स्वं प्रति आवरकं यदज्ञानं तद्वशात् । जीव एव उपादानं निमित्तं कर्त्ता च नेशः उक्तरीत्या कार्यालोचनकल्पने गौरवादिति भावः । दृश्यं सर्वमिति, अज्ञानतत्प्रयुक्तं दृश्यम् । प्रातीतिकमिति यदा यदा विद्यते तदा अवश्यं ज्ञायते । साक्षि-

स्वरूपेण जीवेन स्वनिष्ठं सर्वं विद्यमानतादशायां प्रकाश्यते। न तु तत्रावरणं तद्भंजकमनोवृत्तिर्वा कल्प्यते गौरवादिति भावः। उक्तञ्च योगवाशिष्ठे—

अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम्॥ इति

दृष्टिसृष्टिपक्षे सर्वे भावाः अविद्याप्रयुक्ताः—जलबुद्बुदा इव क्षण-भङ्गुरा दृष्टिकालमात्रस्थायित्वात्। दृष्टिमात्रेणोद्भूय क्षणमात्रं स्थित्वा चैतन्यजलधौ लयं गच्छन्तीति दृष्टिसृष्टिपक्षः समर्थितः। तस्मात् चिन्मात्रातिरिक्तं कृत्स्नं जातं द्वैतं ज्ञानज्ञेयरूपम् आविद्यकमेव, अतः प्रातीतिक-सत्त्वमेव दृश्यमात्रस्य। उक्तञ्च ब्रह्मवित्प्रकाण्डैर्भर्तृहरिभिः—

शुद्धतत्त्वं प्रपञ्चस्य न हेतुरनिवृत्तितः।
ज्ञानज्ञेयादिरूपस्य मायैव जननी ततः॥
यत्र द्रष्टा च दृश्यञ्च दर्शनञ्च विकल्पितम्।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः॥

प्रकरणार्थमुपसंहरन्नाह—रज्जुसर्पादिवत् प्रातिभासिकस्य विश्वस्य अज्ञात-सत्त्वं नास्त्येवेति सिद्धान्तः। विश्वस्य सुप्तप्रबुद्धदृष्टिसृष्टित्वात् प्राति-भासिकत्वमेव। सुषुप्तौ विश्वस्य प्रलयश्रुतेः 'अथ हैतत् पुरुषः स्वपीति नाम तद् गृहीत एव प्राणो भवति, गृहीता वाक् गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः' इति बृहदारण्यके [बृहदारण्यकम्, २।१।१७] दृष्टिसमानकालीना सृष्टिरिति पक्षः सिद्धिकृता उपपादितः। सिद्धान्तमुक्तावल्यां प्रकाशानन्दचरणास्तु दृष्टिरेव सृष्टिः, दृश्यस्य दृष्टिभेदे प्रमाणाभावात्;

"ज्ञानस्वरूपमेवाहुर्जगदेतद् विचक्षणाः।
अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टयः॥" इति

इति विष्णुपुराणीयस्मरणमनुसृत्य पक्षान्तरमाहुः॥२०॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथ-देवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यां दृष्टिसृष्ट्युपपत्तिविवरणम्।

## अथ एकजीववादः ।

स च द्रष्टैक एव; तन्नानात्वे मानाभावात् । ननु—कथमेक एव जीवः; प्रतिशरीरं 'अहं सुखी अहं दुःखी अहं संसारी अहमस्वाप्स्मि'त्याद्यनुभवविरोधादिति—चेत् ॥ १ ॥

---

१.—अद्वितीये ब्रह्मणि वेदान्तानां समन्वयसिद्धये आरम्भणाधिकरणेन अचेतनस्य वियदादिप्रपञ्चस्य मिथ्यात्वं प्रसाधितम्'। 'अचेतनानां मिथ्यात्वे सिद्धेऽपि चेतनानां जीवानाम् अपवर्गभाजां मिथ्यात्वायोगात्, अद्वितीये ब्रह्मणि वेदान्तानां समन्वयो न सिद्ध्येत् । न च जीवानां ब्रह्माभेदाद् अद्वितीये समन्वयसिद्धिरिति वाच्यम्, परस्परभिन्नानां जीवानामेकेन ब्रह्मणा अभेदासम्भवात् । न च जीवानां परस्परभेदोऽसिद्ध इति वाच्यम्; सुखदुःखादिव्यवस्थया तद्भेदसिद्धेरिति चेन्न जीवैक्येऽपि उपाधिभेदादेव सुखदुःखादिव्यवस्थोपपत्तेरिति समन्वयसिद्धये एकजीववादः प्रसाध्यते, समन्वयसिद्धये प्रपञ्चमिथ्यात्वमिव । किञ्च भेदमात्रस्य आविद्यकत्वेन जीवानां परस्परभेदोऽसिद्ध्यन् एकजीववादे एव पर्यवस्यतीति बोध्यम् । उक्तञ्च संक्षेपशारीरके--

जीवैकत्वमुमुक्षुभेदगतितो व्यामिश्रदृष्टिर्द्विधा ।
भिन्ना तत्र च पूर्वपूर्वविलयात् ऊर्ध्वोऽङ्कलब्धिर्भवेत् ॥

[संक्षेपशारीरकम् २।८३]

व्याख्यातञ्च आचार्यश्रीचरणैः विवर्तदृष्टेरपि जीवैकत्वनानात्वविषयतया द्वैविध्यमाह—जीवैकत्वेति । बहवो जीवास्ते च क्रमेण मुमुक्षवो इति विवर्त्ते प्रथमा दृष्टिः, द्वितीया च अहमेक एव सर्वकार्यकरणेषु अन्तःसाक्षी मदविद्याकल्पितञ्च मुक्तामुक्तविद्वदज्ञानेकजीवेशादिभिन्नं जगदवभासते मद्बोधाच्च निवर्तिष्यत इति अनन्तरञ्च संक्षेपशारीरके—

परिणाम इत्यर्थ विवर्त इति, बहवोऽहमेव च मुमुक्षुरिति ।
परिपुष्कलञ्च परमं पदमित्यवगत्य तिष्ठति महिम्नि निजे ॥

[संक्षेपशारीरकम् , २।८६]

प्रथमं सृष्टिवाक्यादिसमन्वयालोचनेन ब्रह्मैव प्रपञ्चोपादानं मृदिव घटस्य इत्यवगच्छति; उपादानतैव अत्र परिणामगिरा विवक्षिता। अथ तदनन्तरम् आरम्भणाद्यधिकरणन्यायेन निषेधवाक्यतात्पर्यालोचनेन सृष्टिवाक्यार्थो विवर्त इत्यवगच्छति पूर्वबुद्धिं विना ब्रह्मणि प्रपञ्चस्य विवर्तत्वनिश्चयासम्भवात्। यत्र यदवगतं तत्रैव तन्निषेधे तस्य मिथ्यात्वनिश्चयेन,तस्य विवर्तत्वं निश्चीयते, ब्रह्मणि प्रपञ्चासञ्ज्ञकपरिणामधीरपेक्षितैव। न वा प्रपञ्चस्य विवर्तत्वधियमन्तरेण शुद्धात्म-साक्षात्कारो भवेत्। एवमविचारावस्थायां जीवबहुत्वज्ञानमपि दृष्टादृष्टद्वारेण मुमुक्षाद्वारा तत्र उपयुज्यते इत्याशयेनाह—बहव इति। मुमुक्षव इति जीवा इत्यर्थः। अनेन प्रकारेण परिपुष्कलं पूर्णं परमं शुद्धं पदं स्वस्वरूपमिति चावगत्य निजे महिम्नि तिष्ठति। अतः परिणामधियोऽपि अस्ति साक्षात्कारे उपयोग इति। एवमेवास्मिन् प्रकरणे एकजीववादः संक्षेपशारीरके बहुधा प्रपञ्चितः। विवरणे नवमवर्णके प्रकाशात्मश्रीचरणैरेकजीववाद इत्थं प्रदर्शितः—जीवभेदेन व्यवस्थासम्भवेऽपि एकजीववादे कथं सेति आशंक्याह स्वप्नादिवदिति—'स्वप्नादिवच्च तत्त्वज्ञानेन सर्वोपाधिविनिर्मोक्षश्च युज्यते' वामदेवादिमुक्त्या इदानीं संसारानुपलब्धिः स्यादिति चेत् एकैकमुक्तावपि अनन्तैरेव युगैरनन्तानां जीवानां मुक्तत्वात् तुल्येदानीं संसारानुपलब्धिः। इदानीं संसारदर्शनन्तु परस्यापि तुल्यम्। अनुपपत्तिश्चावयोः समाना। अतो निरुपाधिकचैतन्ये त्वयि ब्रह्मणि प्रत्यक्षे बन्धावभासे सोपाधिकचैतन्येषु तव मुक्ततावभासो भ्रमः। तद्विषय-श्रुत्यादीनां प्रत्यक्षविरुद्धतया अर्थवादत्वात् निरुपाधिकचैतन्यप्रतिभासे त्वयि सोपाधिकचैतन्यभेदानां कल्पितत्वात् कस्यैकस्य बन्धमोक्षौ इति तव तावत् सन्देहो न जायते। सोपाधिकचैतन्येषु मुक्तताभ्रमात् तद्वचनानाञ्च अर्थवादत्वात्। एवं प्रत्येकमात्मनो न सन्देहः। [विवरणम्, ११२४ पृ०] टीकाकृद्भिरयं पक्षो बहुधा प्रपञ्चितः।

अद्वितीये ब्रह्मणि वेदान्तानां समन्वयानुकूलतया दृश्यमात्रस्य मिथ्यात्वं प्रसाध्य तस्य च मिथ्यात्वस्य दृष्टिसृष्टौ पर्यवसानमुक्त्वा इदानीं दृष्टेः को द्रष्टा इति निर्णेतुम् एकजीववादपक्षमवतारयति—**स च द्रष्टा एक एव तन्नानात्वे मानाभावात्। ननु कथमेक एव जीवः? प्रतिशरीरमहं सुखी अहं**

न; अविद्यावशात् ब्रह्मैवैकं संसरति । स एव जीवः । तस्यैव प्रतिशरीरमहमित्यादिबुद्धिः । स्वाप्नशरीरे 'अयं सुखी अयं दुःखी'-त्येव यत्र बुद्धिर्न त्वहं सुखीत्यादि, तत्तु निर्जीवम् । यत्र त्वहमित्यादि तत् सजीवम् । जाग्रच्छरीरान्तरे अहमिति प्रतीत्यवच्छेदके सजीव-तोक्तिर्न द्वितीयेन जीवेन सजीवत्वमित्यभिप्रेत्य ; तत्र मानाभावात् । बन्धमोक्षादिव्यवस्थानुपपत्तिस्तत्र मानमिति चेन्न ; बन्धमोक्षगुरुशिष्यादिव्यवस्थायाः स्वप्नवद्यावदविद्यमुपपत्तेः ॥२॥

---

दुःखी अहं संसारी अहमस्वाप्सम् इत्याद्यनुभवविरोधादिति चेत् । दृष्टि-सृष्टेर्द्रष्टा एक एव स एव जीव इति भावः । द्रष्टृजीवनानात्वे प्रमाणाभावात्, भेदखण्डनप्रकरणे भेदमात्रस्य निरसिष्यमाणत्वात् कथं द्रष्टृजीवानां परस्परं भेदः सिद्ध्येदिति भावः । जीवैकत्वसमर्थनमसहमानः पूर्वपक्षी सुखदुःखभोगव्यवस्थानु-पपत्त्या जीवनानात्वं साधयितुं शङ्कते—ननु कथमेक एव जीव इति । व्यवस्थातो नानेति वैशेषिकसूत्राशयमनुसृत्य [वैशेषिकसूत्रम्, ३।२।२०] व्यवस्थित-सुखदुःखानुभवं जीवनानात्वसाधकमुपस्थापयति—अहं सुखी, अहं दुःखीति ॥१॥

२—अविद्यावशात् ब्रह्मैवैकं संसरति स एव जीव इति समाधत्ते—न, अविद्यावशाद् ब्रह्मैवैकं संसरति स एव जीवः । तस्यैव प्रतिशरीरमह-मित्यादिबुद्धिः । स्वाप्नशरीरे अयं सुखी, अयं दुःखीत्येव यत्र बुद्धिर्न त्वहं सुखीत्यादि तत्तु निर्जीवम् । यत्र तु अहमित्यादि तत् सजीवम् । जाग्रच्छरीरान्तरे अहमिति प्रतीत्यवच्छेदके सजीवतोक्तिर्न द्वितीयेन जीवेन सजीवत्वमभिप्रेत्य तत्र मानाभावात् । बन्धमोक्षादिव्यवस्था-नुपपत्तिस्तत्र मानमिति चेन्न, बन्धमोक्षगुरुशिष्यादिव्यवस्थायाः स्वप्नवद् यावदविद्यमुपपत्तेः । उक्तञ्च चित्सुखाचार्यैः तदेवं स्वाविद्यया ब्रह्मैव संसरति स्वविद्यया च मुच्यते इति एकाविद्यापक्षे न कश्चिद्दोष इति । स्वाविद्यया संसरद् ब्रह्मैव जीव इत्यर्थः । तस्यैव जीवस्य प्रतिशरीरमहमिति बुद्धिः । अहमिति बुद्ध्यवच्छेदकीभूतं शरीरं सजीवमिदमिति बुद्धिविषयीभूतं शरीरं निर्जीवम् । स्वाप्नशरीरेऽयं सुखीत्यादिरेव बुद्धिः अतस्तत् निर्जीवम् । स्वप्नदृष्टचैत्रादिशरीरे स्वप्नद्रष्टुरहं बुद्ध्यभावात् । अहमिति प्रतीत्यवच्छेदके

न चैवं तस्मिन्नेकस्मिन्नेव जीवे सुप्ते समस्तजगदप्रतीत्यापातः; समष्ट्यभिमानिनो मुख्यजीवस्यासुप्तत्वात्। तस्मिन् लयकाले प्रसुप्ते जगदप्रतीतेः। अन्तःकरणावच्छिन्ने जीवाभासे तु, सुप्ते तमेव प्रति जगदप्रतीतिः, न त्वन्यानपि प्रति; तदुपाधीनामप्रलीनत्वात्। संस्कारस्य कारणात्मना स्थितेर्न सुप्तस्य पुनरुत्थानानुपपत्तिरित्युक्तम्। एतेन—मम कल्पकत्वे तव मोक्षार्थं प्रवृत्त्ययोगः; तव कल्पकत्वे त्वत्कल्पितास्मदादिबोधार्थं तव शब्दप्रयोगाद्यनुपपत्तिः, न च स्वप्नवत् पर्यनुयोगायोगः; एवमपर्यनुयोज्यत्वे निर्मर्यादतया कथानधिकारप्रसङ्गादिति—निरस्तम्; चैत्रमैत्रादिसर्वाभिमानिनो जीवस्य कल्पकत्वे-

---

जाग्रच्छरीरान्तरे या सजीवतोक्तिर्न सा द्वितीयं जीवमादाय। जीवभेदे प्रमाणाभावात्। जीवो ग्रहीता तत्सविधे अन्यत् सर्वं ग्राह्यतयैव भासते न ग्रहीतृतया; ग्राह्यतया भासमानं निर्जीवमेव। न च बन्धमोक्षादिव्यवस्थानुपपत्तिर्जीवभेदे मानम्; स्वप्ने यथा कश्चित् बद्धः कश्चिन्मुक्त इति स्वप्नद्रष्ट्रा दृश्यते एवमेव जागरेऽपीति न स्वाप्नव्यवहारेण जीवभेदसिद्धिरिति भावः। दृश्यमात्रस्य अनात्मत्वमित्येव तत्त्वम्। स्वप्ने जागरणे वा द्रष्ट्रा ये जीवा दृश्यन्ते ते सर्वे आत्मान एव मिथ्याभूताः कथं तैर्जीवभेदसिद्धिरिति भावः। सुखदुःखादीनामात्मधर्मत्वाभावादपि न तेषामात्मभेदकत्वमित्यपि बोध्यम् ॥२॥

३—जीवभेदानभ्युपगमे त्वदभिमतस्य जीवस्य सुप्तत्वे समस्तजगदप्रतीत्यापातः इत्याशंक्य समाधत्ते—न चैवं तस्मिन्नेकस्मिन्नेव जीवे सुप्ते समस्तजगदप्रतीत्यापातः। समष्ट्यभिमानिनो मुख्यजीवस्यासुप्तत्वात्। तस्मिन् लयकाले[प्र]सुप्ते जगदप्रतीतेः। अन्तःकरणावच्छिन्ने जीवाभासे तु सुप्ते तमेव प्रति जगदप्रतीतिः न तु अन्यानपि प्रति तदुपाधीनामप्रलीनत्वात् संस्कारस्य कारणात्मना स्थितेर्न सुप्तस्य पुनरुत्थानानुपपत्तिरित्युक्तम्। एतेन मम कल्पकत्वे तव मोक्षार्थं प्रवृत्त्ययोगः, तव कल्पकत्वे त्वत्कल्पितास्मदादिबोधार्थं तव शब्दप्रयोगाद्यनुपपत्तिः। न च स्वप्नवत् पर्यनुयोगायोगः, एवम् अपर्यनुयोज्यत्वे निर्मर्यादतया कथानधिकारप्रसंगादिति निरस्तम्। चैत्रमैत्रादि-

न तव ममेत्यादिविकल्पानुपपत्तेः। नापि स्वक्रियादिविरोधः; स्वक्रियायाः कल्पितत्वादिनिश्चयविरहकालीनत्वेन पर्यनुयोगायोगात् ॥३॥

---

सर्वाभिमानिनो जीवस्य कल्पकत्वेन तव ममेत्यादिविकल्पानुपपत्तेः। नापि स्वक्रियाविरोधः, स्वक्रियायाः कल्पितत्वादिनिश्चयविरहकालीनत्वेन पर्यनुयोगायोगात्। एकस्मिन् जीवे सुप्ते तदा समस्तजगदप्रतीत्यापातः पूर्वपक्षिणा शङ्कितः। तत्रेयं पृच्छा—कं प्रति जगदप्रतीतिरापाद्यते ? सुप्तं प्रति, असुप्तं प्रति वा ? आद्ये इष्टापत्तिरेव। द्वितीये सुप्तासुप्तयोर्भेदः केन प्रमाणेन सिद्ध्यतीति वाच्यम् ? भेदमात्रस्य आविद्यकत्वात्। आविद्यकवस्तुमात्रस्य दृष्टिसृष्टिरूपत्वात्, दृष्टौ असत्यं सृष्टिरपि नास्त्येव इति न शङ्कावसरः। परनरप्रतिभासोऽपि स्वाविद्याकल्पित एव सुषुप्तौ विक्षेपरहिता अविद्या विद्यमानापि कथं परनरप्रतिभासं विक्षिपेत्। तस्मात् सुप्तं पुरुषं प्रति जगदप्रतीतिरापत्तेर्विषय एव न भवति। तदानीं जगदप्रतीतेः सिद्धत्वात्। असाक्षिकजगत्प्रतीतिः कथं सिद्ध्येत्। एवं प्रत्येकमात्मनः सुप्तौ नायं प्रश्नः प्रमाणवान्। एवं कोऽपि जीवः स्वाज्ञानकल्पितं जीवं विहाय अकल्पितं जीवान्तरं द्रष्टुं न शक्नुयात्। स्वाज्ञानाकल्पितजीवस्य असिद्धत्वात्। एतादृश एव एकजीववादः विवरणाचार्यैः प्रदर्शितः। तत्र कस्या अपि शङ्काया अवसरो नास्ति। आचार्येण पुनः विवरणप्रदर्शितप्रकारात् प्रकारान्तरमभ्युपगम्य पूर्वपक्षिशङ्कायाः परिहारमाह—समष्ट्यभिमानिनो मुख्यजीवस्य असुप्तत्वाद् एकस्मिन् जीवे सुप्ते न जगदप्रतीत्यापत्तिः। मुख्यामुख्यजीवकल्पनं पूर्वपक्षी शंकापरिहारसौकर्याय। अयमपि पक्षः शास्त्रे निर्दिष्टः। विवरणप्रदर्शिते एकजीववादे मनःप्रत्ययमलभमाना केचिदाचार्याः एवं कल्पयन्ति—हिरण्यगर्भ एको ब्रह्मप्रतिबिम्बो मुख्यो जीवः, अन्ये तु हिरण्यगर्भप्रतिबिम्बभूताः चित्रपटलिखितमनुष्यदेहार्पितपटाभासकल्पा जीवाभासाः संसारादिभाज इति ! अपरे तु हिरण्यगर्भस्य प्रतिकल्पं भेदेन कस्य हिरण्यगर्भस्य मुख्यं जीवत्वमित्यत्र नियामकं नास्तीति मन्यमाना एक एव जीवोऽविशेषेण सर्वं शरीरमधितिष्ठतीत्याहुः। [सिद्धान्तलेशसंग्रहे] एवमेव एकजीववादे आचार्याणां बहवो मतभेदा वर्तन्ते।

अथ ब्रह्मण एव जीवत्वेन तस्यैव बन्धमोक्षाविति तस्य नित्यमुक्तत्वादिश्रुतिविरोधः, न; मुक्तेः स्वस्वरूपत्वेन बन्धस्य चाविद्यकत्वेन

---

तस्मिन् मुख्यजीवे प्रलयकाले सुप्ते जगदप्रतीतिः। उक्तञ्च भामत्याम्—अस्य च सुप्तं महाप्रलय इति। जीवाभासा ये प्रागुक्ताः तेऽन्तःकरणावच्छिन्नाः चिदाभासाः। तस्मिन् चिदाभासे सुप्ते तमेव प्रति जगतोऽप्रतिभासः। न तु अन्यान् जीवाभासान् प्रति जगतोऽप्रतिभासः। एकस्मिन् जीवाभासे सुप्ते तदुपाधिभूतान्तःकरणस्य लयेऽपि अन्यजीवाभासोपाधीनाम् अन्तःकरणानाम् अप्रलीनत्वात् तान् प्रति जगदवभासोऽस्त्येवं इति भावः। सुप्तस्य जीवाभासस्य उपाधिभूतमन्तःकरणं लीनमपि सूक्ष्मरूपेण संस्कारात्मना अविद्यायां विद्यमानत्वात् संस्कारोद्बोधे सुप्तस्य जागरणं भवति—एतदपि इतः प्रागेवोक्तम्। एतेनेति। समष्ट्यभिमानिनो मुख्यजीवस्य विश्वकल्पकत्वाभ्युपगमात् कल्पकत्वविकल्पानामनवकाश इत्याह—तव कल्पकत्वे इत्यादि। एकजीववादे स्वप्नादिवद् व्यवस्थोपपादनं पूर्वाचार्यैः प्रदर्शितमपि अस्मन्मते नावश्यकमित्याह—न च स्वप्नवत् पर्यनुयोगायोग इत्यादि। समष्ट्यभिमानिमुख्यजीवकल्पनेन पूर्वपक्ष्युक्तम् आपत्तिजातं निरस्तं वेदितव्यम्। एतत्कल्पने पूर्वपक्षिशङ्कायाः परिहारसौकर्यमेव निदानम्। तच्च प्रदर्शितमेव। चैत्रमैत्रादिसर्वाभिमानिनः कल्पकत्वात् कल्पकत्वविकल्पानामनवकाशः। पूर्वपक्षिणा शङ्कितम्—मम कल्पकत्वे तव मोक्षार्थं प्रवृत्त्ययोगेन तवैव कल्पकत्वे वाच्ये अस्मदादिबोधार्थं तव शब्दप्रयोगरूपस्वक्रियाविरोधाच्चेति तत्राह—नापि स्वक्रियाविरोध इति। कल्पकस्य स्वकल्पितजीवबोधार्थं शब्दप्रयोगस्वक्रिया न भवितुमर्हति कल्पितस्य निर्जीवत्वात्; अथ च कल्पितजीवबोधार्थं शब्दप्रयोगरूपोपदेशो भवत्येवेति उपदेष्टुः स्वक्रियाविरोध इत्यपि न; कुत इति चेत्? शृणु—कल्पकस्य उपदेष्टुः उपदेश्ये स्वकल्पितत्वनिश्चयविरहकाले उपदेशक्रिया भवति न स्वकल्पितत्वनिश्चयकाले उपदेश्यं प्रति उपदेशक्रिया इति न उपदेष्टुः स्वक्रियाविरोध इति भावः ॥३॥

४—जीवो न ब्रह्मणः प्रतिबिम्बः, किन्तु कौन्तेयस्य राधेयत्ववत् ब्रह्मण एव स्वाविद्यया जीवभावः, तस्यैव बन्धमोक्षौ एवं सति ब्रह्मण एव बन्ध-

तदविरोधः । नहि मृगतृष्णिकाकल्पितोदकेन स्वभावशुष्का मरुभूमिरार्द्रा भवति ॥४॥

एतेन—कल्पितस्य जीवस्य कल्पकं प्रति प्रत्यक्त्वायोगः; तेन कल्पकेन प्रत्यक्त्वेनाज्ञानात्, अन्यस्यानुभवितुरभावात्, तथानुभवापलापे एकजीवाद्वैतश्रुत्यादेरप्यसिद्धिरिति—निरस्तम्; अनेकशरीरे एकजीववादस्याङ्गीकारात् ॥५॥

---

मोक्षौ उक्तौ स्याताम्; न च तद् युक्तं ब्रह्मणः नित्यमुक्तत्वादिश्रुतिविरोधात् इत्याशंक्य समाधत्ते—अथ ब्रह्मण एव जीवत्वेन तस्यैव बन्धमोक्षौ इति तस्य नित्यमुक्तत्वादिश्रुतिविरोधः न मुक्तेः स्वस्वरूपत्वेन बन्धस्य च आविद्यकत्वेन तदविरोधः। न हि मृगतृष्णिकाकल्पितोदकेन स्वभावशुष्का मरुभूमिरार्द्रा भवति । 'निवृत्तिरात्मामोहस्य ज्ञातत्वेनोपलक्षितः' इति चित्सुखाचार्योक्तेः मोक्षस्य आत्मस्वरूपत्वोक्तेः स्वरूपस्यानपायात् नित्यमुक्तत्वश्रुतिरुपपन्ना । 'सा च बन्ध उदाहृतः' इति वार्तिकाद् बन्धस्य अविद्यारूपत्वात् प्रमातृत्वादेर्बन्धत्वेऽपि तस्य आविद्यकत्वात्, आविद्यकबन्धेन ब्रह्मणो न स्वरूपहानम्; तत्र दृष्टान्तमाह—न हि मृगतृष्णिकेति । उक्तञ्च संक्षेपशारीरके—

> न हि भूमिरुषरवती मृगतृड्, जलवाहिनीं सरितमुद्वहति ।
> मृगवारिपूरपरिवारवती, न नदी तथोषरभुवं स्पृशति ॥
>
> [संक्षेपशारीरकम्, ३।२५] ॥४॥

५—जीवो यदि एकः स्यात् तं सर्वोऽपि अहमिति जानीयात्; न चैवमस्तीति शंकानिरासाय आह सिद्धान्ती—एतेन कल्पितस्य जीवस्य कल्पकं प्रति प्रत्यक्त्वायोगः तेन कल्पकेन प्रत्यक्त्वेनाज्ञानाद् अन्यस्यानुभवितुरभावात्। तथानुभवापलापे एकजीवाद्वैतश्रुत्यादेरप्यसिद्धिः इति निरस्तम्। अनेकशरीरे एकजीववादस्याङ्गीकारात्। एकशरीरैकजीववादमभ्युपगम्य पूर्वपक्षिणा उपात्तं दोषम् अनेकशरीरैकजीववादमभ्युपगम्य परिहरति सिद्धान्ती—कल्पकं जीवं प्रति तत्कल्पितस्य जीवस्य प्रत्यक्त्वायोगः—अहमितिप्रतीतिविषयत्वायोगः । न हि कल्पको जीवः तत्कल्पितं जीवम् अहमिति प्रत्येति । कल्पितस्य पराक्त्वादिति भावः । तेन कल्पकेन जीवेन

न च--तर्हि तमेव प्रति प्रत्यक्त्वपराक्त्वयोरयोगः, मैत्रं प्रति त्वमितिधीविषयस्य चैत्रस्य तमेव प्रति अहमितिधीविषयत्वायोगश्चेति--वाच्यम् ;

भिन्नभिन्नान्तःकरणाभेदाध्यासेन तत्तदन्तःकरणमादाय प्रत्यक्त्वपराक्त्वाहमित्यादिबुद्धिविषयत्वव्यवस्थोपपत्तेः ॥६॥

---

कल्पितस्य पराक्त्वेन ज्ञानात् प्रत्यक्त्वेनाज्ञानात् । कल्पकादन्यस्य तं प्रत्यक्त्वेन ज्ञातुरभावात् । तथा च कल्पितो जीवः केनापि प्रत्यक्त्वेनाज्ञायमानः कथं जीवः स्यात् । सर्वोऽपि जीवः स्वात्मानं प्रत्यक्त्वेन जानात्येव । तथा च कल्पितस्य जीवस्य केनापि प्रत्यक्त्वेनाज्ञायमानस्य स्वीकारे अनुभवापलोपः स्यात्, अनुभवापलापे एकजीववाद अद्वैतश्रुतिश्च न सिद्ध्येत् । इति पूर्वपक्षिशंकितं निरस्तम् । एकशरीरैकजीववादेऽयं दोषः, वयन्तु अनेकशरीरैकजीववादमङ्गीकुर्मः; अतो न दोषः । एक एव जीवः सर्वाणि शरीराणि अहमित्येवाभिमन्यते । समष्ट्यभिमानिनो मुख्यजीवस्याङ्गीकारात् ॥५॥

५—समष्ट्यभिमानिनो मुख्यजीवस्याङ्गीकारेऽपि तं समष्ट्यभिमानिनं प्रति प्रत्यक्त्वपराक्त्वयोरयोग इति शंकते—न च तर्हि तमेव प्रति प्रत्यक्त्वपराक्त्वयोरयोगः । मैत्रं प्रति त्वमितिधीविषयस्य चैत्रस्य तमेव प्रति अहमितिधीविषयत्वायोगश्चेति वाच्यम् । समष्ट्यभिमानिनं प्रति सर्वस्यैव प्रत्यक्त्वात् कस्यापि तं प्रति पराक्त्वाभावात् प्रत्यक्त्वपराक्त्वयोः समष्ट्यभिमानिनं प्रति अयोगः इत्येको दोषः । अन्यश्च मैत्रं प्रति त्वमितिधीविषयस्य चैत्रस्य मैत्रमेव प्रति पुनश्चैत्रस्य अहमितिधीविषयत्वायोगः । अयोगे एकजीववादो न सिद्ध्येदित्यभिप्रायः । एकजीववादसिद्धये सोऽपि अभ्युपगन्तव्यस्तथा च विरोध एव ।

विभिन्नान्तःकरणाभेदाध्यासोपगमेन परिहरति सिद्धान्ती—विभिन्नान्तःकरणाभेदाध्यासेन तत्तदन्तःकरणमादाय प्रत्यक्त्वपराक्त्वाहमित्यादिबुद्धिविषयत्वव्यवस्थोपपत्तेः । जीवाभासे तु विभिन्नान्तःकरणाभेदाध्यासेन तत्तदन्तःकरणमादाय प्रत्यक्त्वपराक्त्वादिव्यवस्थोपपत्तेर्न दोषः । जीवाभासानां नानात्वेऽपि मुख्यो जीवः एक एव इत्येव एकजीववादः ॥६॥

न च चैत्रसुखदुःखादीनां मैत्रेणानुसन्धानापत्तिः ; अन्तःकरणावच्छिन्नेनाविद्यावच्छिन्नेन वा । नाद्यः; तत्र परस्परं भेदात् । न द्वितीयः; इष्टापत्तेः । अतएव—चैत्रस्य शुक्तिसाक्षात्कारेण रजतभ्रमनिवृत्तावन्येषामपि तन्निवृत्तिः स्यादिति—निरस्तम् ; अन्तःकरणभेदेन व्यवस्थोपपत्तेः ॥७॥

ननु—एवं मुक्तावपि चैत्राद्यन्यतमान्तःकरणावच्छेदेन साक्षात्कारे उत्पन्ने तदवच्छेदेनैव संसारनिवृत्तिः स्यात्, न तु तदितरान्तःकरणावच्छेदेनेति—चेत्; न, तत्साक्षात्कारस्य सविलासमूलाज्ञाननिवृत्तिरूपतया तत्कालेऽन्तःकरणस्याभावेन वैषम्यात् ॥८॥

---

७—एकजीववादाभ्युपगमे चैत्रेणानुभूतस्य सुखादेर्मैत्रेणानुसन्धानप्रसंग इति शङ्कते पूर्वपक्षी—न च चैत्रसुखदुःखादीनां मैत्रेणानुसन्धानापत्तिः । कृतव्याख्यानमेतत् । तत्तदन्तःकरणावच्छिन्नसुखादीनाम् अनुसन्धानप्रसंगो वा ? अविद्यावच्छिन्नसुखादीनां वा अनुसन्धानप्रसंगः ? आद्ये, अन्तःकरणभेदाद् व्यवस्था, अन्ते इष्टापत्तिरिति परिहरति सिद्धान्ती—अन्तःकरणावच्छिन्नेन अविद्यावच्छिन्नेन वा ? नाद्यः [तत्र] परस्परं भेदात् । न द्वितीयः, इष्टापत्तेः । अत एव चैत्रस्य शुक्तिसाक्षात्कारेण रजतभ्रमनिवृत्तौ अन्येषामपि तन्निवृत्तिः स्यादिति निरस्तम् । अन्तःकरणभेदेन व्यवस्थोपपत्तेः । जीवाभासानां तत्तदन्तःकरणभेदाध्यासाद् व्यवस्थोपपत्तिः प्रागेव दर्शितेति भावः ॥७॥

८—तत्तदन्तःकरणभेदाध्यासे अभ्युपगम्यमाने यदन्तःकरणावच्छेदेन साक्षात्कार उत्पन्नस्तदन्तःकरणावच्छेदेनैव जीवाभासस्य मुक्तावपि तदितरान्तःकरणावच्छेदेन बन्ध एव स्याद् इति शङ्कते—ननु मुक्तावपि चैत्राद्यन्यतमान्तःकरणावच्छेदेन साक्षात्कारे उत्पन्ने तदवच्छेदेनैव संसारनिवृत्तिः स्यात् न तु तदितरान्तःकरणावच्छेदेन इति चेत् । एवञ्चेत् कस्यापि मोक्षो न स्यादिति भावः । साक्षात्कारस्य मूलाज्ञाननिवर्तकत्वान्नैवमिति समाधत्ते सिद्धान्ती—न, तत्साक्षात्कारस्य सविलासमूलाज्ञाननिवृत्तिरूपतया तत्कालेऽन्तःकरणस्याभावेन वैषम्यात् ।

ननु—श्रुतिषु 'अविद्यायामन्तरे वर्तमाना' इत्यादावविद्या, 'रमणीयचरणा' इत्यादौ कर्मबन्धः, 'सति सम्पद्य न विदुरि'त्यादौ सति सुषुप्तिः, 'वेदान्तविज्ञानसुनिश्चितार्था' इत्यादौ तत्त्वज्ञानम्, 'परामृतात्परिमुच्यन्ति सर्वे' इत्यादौ मुक्तिश्च चेतनधर्मः कथमनेकेषूच्यत इति—चेत् ॥९॥

न, 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इत्यादिश्रुतिष्वेक-

---

तत्त्वसाक्षात्कारस्य विलासपदस्य च—विलसति व्यक्तीभवति अज्ञानमनेनेति अज्ञानविलासो मिथ्यारजतादिः—सकार्यमूलाज्ञाननिवृत्तिरूपत्वात्; यथा प्रतियोग्येव प्रागभावनिवृत्तिर्न तु निवर्तकः; एवमखण्डाकारा वृत्तिरेव अज्ञाननिवृत्तिरूपा। आचार्येणापि चतुर्थपरिच्छेदे उक्तम्—वस्तुतस्तु अविद्यानिवृत्तेर्वृत्तिरूपतयेति। तत्त्वसाक्षात्कारकाले मूलाज्ञानोपादानकान्तःकरणस्यैवाभावात् न अन्तःकरणान्तरावच्छेदेन संसारः स्यादिति शङ्कापि ॥८॥

९—एकजीववादाभ्युपगमे श्रुतिषु बहूनां जीवानामुल्लेखः पीड्येत इति शङ्कते पूर्वपक्षी—ननु श्रुतिषु 'अविद्यायामन्तरे वर्तमाना' इत्यादौ अविद्या, 'रमणीयचरणा' इत्यादौ कर्मबन्धः, 'सति सम्पद्य न विदुः' इत्यादौ सति सुषुप्तिः, 'वेदान्तविज्ञानसुनिश्चितार्था' इत्यादौ तत्त्वज्ञानम्, 'परामृतात् परिमुच्यन्ति सर्वे' इत्यादौ मुक्तिश्च चेतनधर्मः कथमनेकेषु उच्यते इति चेत्। वर्तमानाः इति बहुवचनेन अविद्यावत्त्वं बहूनां जीवानां श्रुतिः प्रतिपादयति, एवं 'रमणीयचरणा' इत्यादौ आदिपदेन 'कपूयचरणा, इत्यस्य संग्रहः। बहुवचनेन कर्मबन्धः बहूनां जीवानां श्रुतिः प्रतिपादयति, 'न विदुरि'त्यादौ बहुवचनेन सत्सम्पत्तिरूपा सुषुप्तिः बहूनां जीवानां श्रुतिः प्रतिपादयति, 'सुनिश्चितार्था' इति बहुवचनेन, बहूनां जीवानां तत्त्वज्ञानं प्रतिपादयति श्रुतिः, परिमुच्यन्ति सर्वे इत्यादौ बहुवचनेन बहूनां मुक्तिश्च एकजीववादे अनुपपन्ना स्यात्; बहुतरश्रुत्यनुग्रहाय नानाजीववाद एव श्रेयान् इति भावः ॥९॥

१०—श्रुतौ जीवे एकत्वनिर्देशात् लाघवतर्कानुगृहीतप्रबलश्रुत्यनुसारेण इतरासां नेयत्वात् सार्वजनीनभ्रमसिद्धबहुत्वानुवादेन श्रुतिषु बहुवचन-

वचनप्राप्तैकत्वविरोधेनोदाहृतश्रुतीनामनेकत्वपरत्वाभावात्। सार्वजनीनभ्रमसिद्धतदनुवादेनाविरोधात्॥१०॥

न च—उदाहृतश्रुतिविरोधेन, 'इति सृष्टौ विनिश्चिता' इति पूर्वेण 'स पूज्यः सर्वभूतानामि'त्युत्तरेण च विरोधेनेदमेकवचनं 'यदा नीतिपरो राजा', 'स्वर्गकामो यजेते'त्यादिवन्नैकत्वपरमित्येव किं न स्यादिति—वाच्यम्॥११॥

---

निर्देशोपपत्तेरिति समाधत्ते सिद्धान्ती—न, 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इत्यादिश्रुतिषु एकवचनप्राप्तैकत्वविरोधेन उदाहृतश्रुतीनामनेकपरत्वाभावात्। सार्वजनीनभ्रमसिद्धतदनुवादेनाविरोधात्। जीवस्य बहुत्वप्रतिपादनं श्रुतेर्न सम्भवति जीवबहुत्वस्य भ्रमप्राप्तत्वात्; प्रतिपादने श्रुतेरनुवादित्वापत्तेः, जीवैकत्वप्रतिपादकश्रुतिविरोधाच्च। जीवानेकत्वप्रतिपादने श्रुतेस्तात्पर्याभावात्। सार्वजनीनजीवबहुत्वभ्रमानुवादेन श्रुतौ जीवबहुत्वोल्लेखस्य उपपत्तेरिति। यद्यपि 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इति वचनं गौडपादीयमाण्डूक्यकारिकासु विद्यते न माण्डूक्यश्रुतौ, तथापि पूर्वपक्षिणा गौडपादीयकारिकाणां श्रुतित्वाभ्युपगमाद् आचार्येण इयं कारिका श्रुतित्वेनोदाहृतेति मन्तव्यम्॥१०॥

१०—जीवैकत्वप्रतिपादककारिकायाः पूर्वोत्तरकारिकयोः जीवबहुत्वोल्लेखात् मध्यवर्तिकारिकयाः जीवैकत्वप्रतिपादनं सन्दंशन्यायेन पूर्वोत्तरकक्यानुसारेणैव नेत्यमिति पूर्वपक्षी पुनः शङ्कते—न च उदाहृतश्रुतिविरोधेन, इति सृष्टौ विनिश्चिता इति पूर्वेण, 'स पूज्यः सर्वभूतानामि'त्युत्तरेण च विरोधेन, इदमेकवचनं 'यदा नीतिपरो राजा,' 'स्वकामो यजेत' इत्यादिवन्नैकत्वपरमित्येव किं न स्यादिति वाच्यम्। 'अविद्यायामन्तरे वर्तमाना' इत्याद्युदाहृतजीवबहुत्वप्रतिपादकश्रुतिविरोधेन इदं जीवैकत्ववचनं न जीवैकत्वपरम्, किञ्च जीवैकत्वप्रतिपादकवचनस्य पूर्वोत्तरवचनविरोधेन न तद्वचनं जीवैकत्वपरमित्येव किं न स्यात्। पूर्वोत्तरवचनयोःजीवबहुत्वस्यैव प्रतिपादनात्। जीवबहुत्वप्रतिपादनप्रवाहे पतितं जीवैकत्ववचनमविवक्षितमेव—यथा 'यदा नीतिपरो राजा' इत्यत्र

प्रत्यक्त्वपराक्त्वत्वमहमित्यादिव्यवहारप्रयोजकान्तःकरणाभेदाध्यासबलात् बहुत्वस्य प्राप्तत्वेन पूर्वोत्तरवाक्योदाहृतश्रुत्यादीनामतत्परत्वात् ॥१२॥

न च—मुक्तबहुत्वं नान्यतः प्राप्तमिति—वाच्यम्; जीवबहुत्वस्य प्राप्तत्वेन मुक्त्यंश एवाप्राप्तत्वपर्यवसानात्। ॥१३॥

---

राजपदोत्तरमेकवचनमविवक्षितम्, यथा वा 'स्वर्गकामो यजेत' इत्यत्र स्वर्गकामपदोत्तरमेकवचनम् अविवक्षितम् एवमेव प्रकृतेऽपीति स्यात ॥११॥

१२—पूर्वोत्तरवाक्ययोः उदाहृतश्रुतीनाञ्च प्राप्तार्थकत्वेन तत्र तात्पर्याभावात् अतात्पर्यकवाक्यविरोधेन सतात्पर्यकवाक्यस्य न अविवक्षितार्थकत्वं युज्यते इति समाधत्ते सिद्धान्ती—**प्रत्यक्त्वपराक्त्वमहमित्यादिव्यवहारप्रयोजकान्तःकरणाभेदाध्यासबलाद् बहुत्वस्य प्राप्तत्वेन पूर्वोत्तरवाक्योदाहृतश्रुत्यादिनामतत्परत्वात्।** जीवबहुत्वस्य प्राप्तत्वेन तदनुवादिवचनजातस्य तत्परत्वाभावात् तदतत्परवचनयोर्विरोधे तत्परवचनस्यैव प्राबल्यं दौर्बल्यमतत्परवचनस्य; तथा च प्रबलवचनानुसारेणैव दुर्बलं वचनं नीयमानं न विरुध्यते। प्रत्यक्त्वादिरूपेण भेदव्यवहारप्रयोजकः तत्तदन्तःकरणाभेदाध्यासः। एकस्मिन्नेव जीवे विभिन्नान्तःकरणतादात्म्याध्यासबलात् नानात्वस्य प्राप्तिः जीवे न स्वाभाविकं नानात्वं किन्तु नानान्तःकरणतादात्म्याध्यासात् जीवे एकस्मिन्नेव नानात्वस्य प्राप्तिः; तदनुवादिवचनजातं न नानात्वपरमिति भावः ॥१२॥

१३—श्रुत्युक्तं मुक्तजीवानां नानात्वं न अन्यतः प्राप्तमिति मुक्तजीवनानात्वप्रतिपादकश्रुत्या जीवनानात्वं सिद्धयतीति पूर्वपक्षिमतमाशङ्क्य अप्राप्तमुक्त्यंशे एव तेषां तात्पर्यादिति समाधत्ते सिद्धान्ती—**न च मुक्तबहुत्वं नान्यतः प्राप्तमिति वाच्यं जीवबहुत्वस्य प्राप्तत्वेन मुक्त्यंशे एव अप्राप्तत्वपर्यवसानात्।** 'तद् यो यो देवानां प्रत्यबुद्धयत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणामि'त्यादि श्रुत्या अन्यतोऽप्राप्तं मुक्तजीवबहुत्वं प्रतिपाद्यते; अतः मुक्तजीवबहुत्वप्रतिपादकश्रुत्या जीवबहुत्वसिद्धिः स्यादित्याशङ्क्य आहाचार्यः—प्रदर्शितरीत्या जीवबहुत्वस्य प्राप्तत्वेन जीवबहुत्वं नाप्राप्तम्।

न चैकस्यैव जीवस्य सर्वकल्पकत्वे जीवस्य कारणत्वं निषिध्य ईश्वरकारणत्वविधायकैः श्रुत्यादिभिर्विरोधः; अविद्याचिन्मात्राश्रयत्वोपपादने निरसिष्यमाणत्वात् ॥१४॥

---

प्राप्तजीवबहुत्वमनूद्य अप्राप्ता मुक्तिरेव श्रुत्या प्रतिपाद्यते। अतो न श्रुत्या जीवबहुत्वसिद्धिरिति ॥१३॥

१४—एकस्य जीवस्य सर्वकल्पकत्वे जीवस्य जगत्कारणत्वं निषिध्य ईश्वरकारणत्वप्रतिपादकश्रुत्यादिभिर्विरोधः स्यादित्याशङ्क्य समाधत्ते—**न च एकस्यैव जीवस्य सर्वकल्पकत्वे जीवस्य कारणत्वं निषिद्ध्य ईश्वरकारणत्वविधायकैः श्रुत्यादिभिर्विरोधः अविद्याचिन्मात्राश्रयत्वोपपादने निरसिष्यमाणत्वात्।** जीवस्य एकस्यैव सर्वकल्पकत्वे जीव एव जगतः स्रष्टा नेश्वरः तथा च जीवस्य जगत्कारणत्वं निषिध्य ईश्वरकारणत्वप्रतिपादकैः श्रुत्यादिभिः विरोधः स्यात्। ब्रह्मसूत्रे प्रथमाध्यायचतुर्थपादे पञ्चमे जगद्वाचित्वाधिकरणे जीवस्य जगत्कारणत्वं निषिध्य ईश्वरकारणत्वप्रतिपादनं त्वन्मते विरुद्ध्येत। त्वदीयभाष्यकारादिभिरपि जीवस्य जगत्कारणत्वं प्रतिषिद्ध्य ईश्वरकारणत्वसमर्थनात्। कल्पतरुकृद्भिरपि वाचस्पतिमते इयमाशङ्का प्रदर्शिता—

जीवाज्जज्ञे जगत्सर्वं सकारणमिति ब्रुवन्।
समन्वयं क्षिपन् जीवे न लेजे वाक्पतिः कथम् ॥ इति।

वाचस्पतिमते जीवाश्रिताविद्यायाः परिणामो जगदिति जीवस्यैव जगत्कारणत्वम्; जगत्कारणे च वेदान्तानां समन्वयः। कल्पतरुकृद्भिरेव अस्याः समधानमेवमुक्तम्—

अधिष्ठानं विवर्तानामाश्रयो ब्रह्मशुक्तिवत्।
जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम् ॥

कल्पतरूक्तसमाधानमत्राप्यनुसन्धेयम्। जीवस्यापि ब्रह्मैवाधिष्ठानमिति भावः। अविद्यायाः चिन्मात्राश्रयत्वोपपत्तिप्रकरणे आचार्यैरभिहितम्—तस्मादविद्याकृतविच्छेदेन ब्रह्मण्येव नित्यमुक्तत्वसंसारित्वसर्वज्ञत्वकिञ्चिज्ज्ञत्वादिव्यवस्थोपपत्तिः। ततः परमेकजीववादे संसार्यसंसारिव्यवस्थाऽयोगादिति निरस्तमित्युक्तम्। अत्राविद्याकृतविच्छेदेन इत्यस्य अविद्याप्रयुक्तभेदेन इत्यर्थः ॥१४॥

न च—एवं सर्वज्ञत्वसर्वकर्तृत्वादिबोधकश्रुतीनां निर्विषयत्वम्; शुद्धचैतन्ये सत्त्वस्यैवाभावात्, ईश्वरस्य च जीवभिन्नस्याभावात्, जीवे सार्वज्ञस्यानुभवबाधितत्वादिति—वाच्यम्; समष्ट्यभिमानिनो जीवस्य सर्वज्ञत्वसर्वकर्तृत्वादिस्वीकारात्। न चानुभवविरोधः; अन्तःकरणाभेदाध्यासबलात्तदननुभवतद्विपरीतानुभवयोरुपपत्तेः। सर्वाभिमानिनस्तु सार्वज्ञ्यानुभवोऽस्त्येव। अत एव 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतपे' त्याद्युपपद्यते ॥१५॥

---

१५—एकजीवादे सर्वज्ञत्वसर्वकर्तृत्वबोधकश्रुतीनां निर्विषयत्वं शुद्धचैतन्ये सर्वज्ञत्वादेरभावात् जीवभिन्नेश्वराभावात् जीवे च सर्वज्ञत्वादीनामनुभवबाधितत्वादिति पूर्वपक्षी शङ्कते—न चैवं सर्वज्ञत्वसर्वकर्तृत्वादिबोधकश्रुतीनां निर्विषयत्वं शुद्धचैतन्ये सत्त्वस्यैवाभावात्। ईश्वरस्य जीवभिन्नस्याभावात्, जीवे सार्वज्ञ्यस्यानुभवबाधितत्वाद् इति वाच्यम्। 'यः सर्वज्ञः सर्वविदि'त्यादिश्रुतयः कस्य सर्वज्ञात्वादिकं बोधयेयुः, न शुद्धचैतन्यस्य, नापि ईश्वरस्य, नापि जीवस्य; शुद्धचैतन्ये सर्वज्ञत्वादेरभावात्, अन्यथा शुद्धत्वविरोधात्, एकजीववादे जीवस्यैव सर्वकल्पकत्वेन जीवभिन्नेश्वरस्यैवाभावात्। जीवे च सर्वज्ञत्वादेरनुभवबाधितत्वादिति भावः।

समष्ट्यभिमानिनो मुख्यजीवस्य सर्वज्ञत्वादेः स्वीकारान्नैवमिति समाधत्ते सिद्धान्ती—समष्ट्यभिमानिनो जीवस्य सर्वज्ञत्वसर्वकर्तृत्वादिस्वीकारात्। न च अनुभवविरोधः, अन्तःकरणाभेदाध्यासबलात् तत्तदननुभवतद्विपरीतानुभवयोरुपपत्तेः। सर्वाभिमानिनस्तु सार्वज्ञ्यानुभवो अस्त्येव। अत एव 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप' इत्याद्युपपद्यते। समष्ट्यभिमानिनो मुख्यजीवस्य सर्वज्ञत्वादेः स्वीकारात् न सर्वज्ञत्वादिबोधकश्रुतीनां निर्विषयत्वम्। न च जीवाभासानां स्वसर्वज्ञत्वादिकमनुभवबाधितमिति वाच्यम्, जीवाभासेषु तत्तदन्तःकरणाभेदाध्यासेन मुख्यजीवगतसर्वज्ञत्वादेः स्वीयत्वेनाननुभवस्य तद्विपरीतासर्वज्ञत्वादेरनुभवस्य च जीवाभासानामुपपत्तेः। मुख्यजीवस्य तु समष्ट्यभिमानिनः सार्वज्ञ्याद्यनुभवो अस्त्येव। अत एव समष्ट्यभिमानिनः सर्वज्ञत्वं जीवाभासानामसर्वज्ञत्वं गीतोक्तमुपपद्यते ॥१५॥

न च—'आचार्यवान्पुरुषो वेदे'ति श्रुतेरुपदेशं विना जीवस्य तत्त्वज्ञानमनुपपन्नम्, उपदेष्टृव्याद्यस्य चैतन्यस्याभावाच्च नोपदेशो युज्यत इति—वाच्यम् ॥१६॥

स्वप्न इवोपदेष्टुः कल्पितस्य संभवात्। ननु—उपदेष्टृत्वं न कल्पितमात्रस्य, किंतु तत्त्ववित्त्वेन कल्पितस्य, तथा चोपदेशात्प्राक् तत्त्वज्ञाने तदैव मोक्षापत्तिः,' उपदेशवैयर्थ्यं च, न चैवं स्वप्नेऽपि तुल्यम्; तदा हि शब्दविशेषवक्तृत्वेनैव गुरुकल्पना, न तूपदेशसाध्यज्ञान-विषयविशेषवित्त्वेनेति विशेषादिति—चेत् ॥१७॥

---

१६—एकजीवादे उपदेष्टृव्यजीवभिन्नस्य उपदेष्टुरभावाद् उपदेशाभावाच्च न तत्त्वज्ञानोदय इति शङ्कते—न च 'आचार्यवान् पुरुषो वेद' इति श्रुतेरुपदेशं विना जीवस्य तत्त्वज्ञानमनुपपन्नम्। उपदेष्टृव्याद्यस्य चैतन्यस्या-भावाच्च नोपदेशो युज्यते इति वाच्यम्। छान्दोग्योपनिषदि 'आचार्यवान् पुरुषो वेदे'ति आम्नायते, तेन च आचार्योपदेशादेव तत्त्वज्ञानं जायते इति निश्चीयते; एकजीववादे उपदेष्टृव्यजीवादन्यस्य उपदेष्टुर्जीवस्याभावाद् उपदेशा-सम्भवस्तथा च न तत्त्वज्ञानोदय इति भावः ॥१६॥

१७—कल्पितोपदेष्टुः सम्भवात् नैवमिति परिहरति सिद्धान्ती—स्वप्ने इव उपदेष्टुः कल्पितस्य सम्भवात्। उक्तञ्च चित्सुखाचार्यैः—न च अविद्या-निर्मितस्य गुरोः कल्पितत्वेन विद्यावत्त्वानुपपत्तिः; स्वप्ने इव विद्यावत्त्वैव-कल्पनोपपत्तेः।

स्वप्ने इव कल्पितस्य गुरोरुपदेष्टृत्वासम्भवादिति शङ्कते—ननु उपदेष्टृत्वं न कल्पितमात्रस्य किन्तु तत्त्ववित्त्वेन कल्पितस्य तथा च उपदेशात् प्राक् तत्त्वज्ञाने तदैव मोक्षापत्तिः उपदेशवैयर्थ्यञ्च। न चैवं स्वप्नेऽपि तुल्यं तदा हि शब्दविशेषवक्तृत्वेनैव गुरुकल्पना न तूपदेशसाध्यज्ञानविषयविशेषवित्त्वेन इति विशेषाद् इति चेत्। कल्पितमात्रस्य न उपदेष्टृत्वम् अतिप्रसंगात्, किन्तु तत्त्ववित्त्वेन कल्पितस्य उपदेष्टृत्वं तथा च उपदेष्टुः उपदेशात् प्राक् तत्त्वज्ञाने तदैव मोक्षापत्त्या सर्वप्रपञ्चोच्छेदे उपदेशस्यापि असम्भवाद् उपदेश्यस्यापि अभावात्। न च

न; अत्रापि तद्वदेव वाक्यविशेषवक्तृत्वेनैव तत्कल्पनसंभवात् ।

ननु—तर्हि 'यदेव भगवान्वेद तदेव मे ब्रूही' त्यादिश्रुतिः 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन' इत्यादिस्मृतिश्चायुक्ता स्यादिति—चेत् ॥१८॥

न; सामान्यतो मोक्षोपयोगिज्ञानविषयवित्त्वेनाज्ञाततत्त्ववित्त्वेन

---

स्वप्नकल्पितगुरूपदेशेऽपि एतत् तुल्यं स्वप्नकल्पितगुरोरपि उपदेशात् प्राक् तत्त्वज्ञाने प्रपञ्चोच्छेदाद् उपदेशानुपपत्तिः । स्वप्नकल्पितगुरुपदेशस्तु अनुभवसिद्धः तस्यापलापः कथं स्यादित्यत आह पूर्वपक्षी—स्वप्ने हि शब्दविशेषवक्तृत्वेनैव गुरोः कल्पना न तु तत्त्ववित्त्वेन इत्येव जाग्रत्कल्पितस्वप्नकल्पितयोरुपदेष्ट्रोर्विशेषात् । स्वाप्नगुरोस्तत्त्ववित्त्वं नास्ति जाग्रत्कल्पितगुरोस्तु तदस्तीति विशेषात् ॥१७॥

१८—स्वप्नकल्पितगुरुतुल्यत्वमेव जाग्रत्कल्पितगुरोरिति परिहरति—न, अत्रापि तद्वदेव वाक्यविशेषवक्तृत्वेनैव तत्कल्पनसम्भवात् । जाग्रत्कालेऽपि स्वप्नकल्पितगुरुवदेव वाक्यविशेषवक्तृत्वेनैव गुरोः कल्पनात् तत्त्ववित्त्वेन न गुरोः कल्पनेति न प्रदर्शितदोषशङ्काऽपीति भावः ।

जाग्रत्कल्पितगुरोस्तत्त्ववित्त्वाभावे श्रुतिः स्मृतिश्च विरुद्धयेत इति शङ्कते—ननु 'तर्हि यदेव भगवान् वेद तदेव मे ब्रूही'त्यादिश्रुतिः, 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इत्यादिस्मृतिश्चायुक्ता स्यादिति चेत् । बृहदारण्यके मैत्रेयीब्राह्मणे याज्ञवल्क्यं प्रति मैत्रेय्या इयमुक्तिः । हे याज्ञवल्क्य ! यदेव तत्त्वं त्वं जानासि तदेव तत्त्वं मह्यमुपदिशेति । एतेन याज्ञवल्क्यस्य तत्त्ववित्त्वं सिद्ध्यति न केवलं वाक्यविशेषवक्तृत्वमात्रम् । गीतास्मृतावपि तत्त्वदर्शिनः उपदेष्टृत्वकथनाद् उपदेष्टुस्तत्त्वज्ञत्वं सिद्ध्यति । तथा च जाग्रत्कल्पितगुरोः वाक्यविशेषवक्तृत्वमात्राङ्गीकारे प्रदर्शितश्रुतिः स्मृतिश्च अयुक्ता स्यादिति भावः ॥१८॥

१९—जाग्रतकल्पितगुरोः सामान्यतो मोक्षोपयोगिज्ञानविषयवित्त्वेनाप्युपदेष्टृत्वोपपत्त्या विशेषतो मोक्षोपयोगिज्ञानविषयवित्त्वम् उपदेष्टृत्वाय नापेक्ष्यते

तत्त्वमस्यादिवाक्यवक्तृत्वेन वा कल्पितस्य उपदेष्टृत्वसंभवेन उदाहृत-वाक्याविरोधात्। अन्यथा त्वन्मतेऽपि मते तत्त्ववित्त्वेन प्रमित एवा-चार्यत्वेनानुसरणीय इति प्रथमत एव तत्त्वज्ञाने तत्कालमोक्षापत्त्यु-पदेशवैयर्थ्यादिकं च स्यात् ॥१९॥

एतेन—'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यमि'त्यादिविधिरपि भावितत्त्वज्ञानिकल्पकचेतनं प्रत्येव, न च तस्य शिष्यः स्वाज्ञानकल्पित इति ज्ञानतस्तन्मोक्षार्थं प्रवचने प्रवृत्तिर्युक्ता; न च स्वप्नवत् कल्पि-तत्वाज्ञानात्प्रवृत्तिः; तत्त्वविदस्तदज्ञानानुपपत्तेरिति—निरस्तम्; स्व-प्नगुरुवत् कल्पितत्वेन गुरोरपर्यनुयोज्यत्वात् ॥२०॥

---

इति परिहरति—न, सामान्यतो मोक्षोपयोगिज्ञानविषयवित्त्वेन, अज्ञात-तत्त्ववित्त्वेन तत्त्वमस्यादिवाक्यवक्तृत्वेन वा कल्पितस्य उपदेष्टृत्व-सम्भवेन उदाहृतवाक्याविरोधात्। अन्यथा तवापि मते तत्त्ववित्त्वेन प्रमित एव आचार्यत्वेनानुसरणीय इति प्रथमत एव तत्त्वज्ञाने तत्कालमोक्षापत्त्युपदेशवैयर्थ्यादिकञ्च स्यात्। मोक्षोपयोगिज्ञानविषयस्य सामान्यतो ज्ञानेऽपि उपदेष्टृत्वसम्भवात्, अथ वा अज्ञाततत्त्ववित्त्वेनापि उपदेष्टृत्व-सम्भवात्, अथ वा तत्त्वमस्यादिवाक्यवक्तृत्वेनापि उपदेष्टृत्वसम्भवात्, उदाहृतश्रुति-स्मृतिवाक्ययोरविरोधात्। यदि उपदेष्टुः विशेषतो मोक्षोपयोगिज्ञानविषयवित्त्वम् अपेक्ष्यते तर्हि पूर्वपक्षिणोऽपि अगतिः स्यादित्याह—तवापि मते इति। तत्त्ववित्त्वेन प्रमित आचार्य एव आचार्यत्वेन यदि अनुसरणीयः स्यात् तदा आचार्यस्य तत्त्वज्ञाने सिद्धे तत्त्वज्ञानकाले एव आचार्यस्य मोक्षापत्त्या तस्य उपदेष्टृत्वमेव न स्यात्। मुक्तस्य अशरीरस्य उपदेष्टृत्वाभावाद् इति भावः। मदुक्तसमाधानमेव सर्वैरङ्गीकरणीयम् अन्यथा तत्त्वविदो गुरोर्मुक्तत्वाद् उपदेष्टृत्वा-भावात् ॥१९॥

२०—एतेन 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यमि'त्यादि-विधिरपि भावितत्त्वज्ञानिकल्पकचेतनं प्रत्येव न च तस्य शिष्यः स्वाज्ञानकल्पित इति जानतस्तन्मोक्षार्थं प्रवचने प्रवृत्तिर्युक्ता। न च स्वप्नवत् कल्पितत्वाज्ञानात् प्रवृत्तिस्तत्त्वविदस्तदज्ञानानुपपत्तेरिति

नच—तत्त्वज्ञानहेतुत्वेन वेदस्य मीमांस्यत्ववत् गुरोरपि पर्यनुयोज्यत्वमिति—वाच्यम्; तर्केण वेद इव तत्तद्रूपकल्पनया गुरावपि तत्परिहारात्। न च—कथास्वपि सदुत्तरापरिस्फूर्तावहं त्वत्कल्पितो न पर्यनुयोज्य इत्युत्तरं स्यादिति—वाच्यम् ॥२१॥

---

निरस्तम्। स्वप्नगुरुवत् कल्पितत्वेन गुरोरपर्यनुयोज्यत्वात्। तैत्तिरीयोपनिषदि शिक्षावल्ल्यामेकादशेऽनुवाके आम्नायते—वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति—'सत्यं वद' धर्मं चर, स्वाध्यायान्मा प्रमद, अनन्तरं 'स्वाध्यायप्रवचनाभ्यां न प्रमिदितव्यमि'ति। शिष्यं प्रति आचार्यस्य इदमनुशासनम्। एकजीववादे स्वाज्ञानकल्पितं शिष्यं जानतः तं प्रति कल्पितशिष्यमोक्षार्थं गुरोः प्रवचने प्रवृत्तिर्न सम्भवति; अथ च इदमनुशासनं शिष्यं प्रत्येव गुरोः, तथा च तादृश एव शिष्यो वक्तव्यः यः भावितत्त्वज्ञानिगुरोः कल्पको भवेत्। शिष्यकल्पितभावितत्त्वज्ञानिगुरोरिदमनुशासनं वक्तव्यम्, न तु गुरुकल्पितशिष्यं प्रति गुरोरुपदेशो युज्यते। तथा च अकल्पितगुरोर्नेदमनुशासनं भवितुमर्हति। यथाश्रुतश्रुत्यक्षरालोचने तु अकल्पितगुरोरेवानुशासनं प्रतीयते, तथा च एकजीववादिनां श्रुतिकदर्थनमेव स्यात्। यदि एकजीववादी ब्रूयाद् अकल्पितगुरोरेव स्वाज्ञानकल्पितं शिष्यं प्रति इदमनुशासनम्, किन्तु स्वप्नदृष्टपुरुषमिव स्वाज्ञानकल्पितत्वाज्ञानात् स्वाज्ञानकल्पितेऽपि शिष्ये गुरोः प्रवृत्तिरिति तन्न युक्तम्; गुरोस्तत्त्ववित्त्वात्, तत्त्वविदोऽज्ञानकल्पनाऽसम्भवात्। एतेन इत्यस्य निरस्तमित्यनेनान्वयः। एतेन पूर्वपक्ष्युक्तं निरस्तम्; कुतः इति चेत्? स्वप्नगुरुवद् अनुशासनकर्तुर्गुरोः शिष्यकल्पितत्वात् स्वप्नवत् कल्पिते गुरौ पर्यनुयोगायोगात्, कथमयं गुरुः स्वाज्ञानकल्पितं शिष्यमनुशास्तीति। स्वप्नगुरुवद् अस्यापि गुरोः कल्पितत्वादिति भावः ॥२०॥

२१—कल्पितत्वेन गुरोरपर्यनुयोज्यत्वमिति सिद्धान्तिना यदुक्तं तदसहमानः पूर्वपक्षी गुरोः पर्यनुयोज्यत्वं समर्थयन्नाह—न च तत्त्वज्ञानहेतुत्वेन वेदस्य मीमांस्यत्ववत् गुरोरपि पर्यनुयोज्यत्वमिति वाच्यम्। अमीमांसिताद् वेदाज्जायमानं ज्ञानं न तत्त्वज्ञानं न च तन्मुक्तिनिबन्धनम् अतो मुक्तिनिबन्धनतत्त्वज्ञानहेतुत्वाद् यथा वेदो मीमांस्यते विचार्यते इत्यर्थः तद्वत्

कथायाः कल्पितत्वानिश्चयकालीनत्वेन समयबन्धविशेष-निबन्धनत्वेन च तादृगुत्तरानवकाशात्। तस्माच्छिष्यवत् गुरोरपि कल्पितत्वात्, स्वप्नवत्सर्वव्यवस्थोपपत्तिः। अथ—कल्पको न

---

गुरोरपि तत्त्वज्ञानहेतुत्वात् विचार्यत्वमेव। अतो यदुक्तं सिद्धान्तिना स्वप्नगुरुवत् कल्पितत्वेन गुरोरपर्यनुयोज्यत्वादिति तन्निरस्तम्।

समाधत्ते सिद्धान्ती—**तर्केण वेदे इव तत्तद्रूपकल्पनया गुरावपि तत्परिहारात्।** तर्केण वेदे किञ्चिद्रूपान्तरं नोत्पाद्यते, किन्तु ग्रहीतृपुरुषापराधनिरासायैव तर्क उपयुज्यते। अन्यथा तर्कसहकृतस्य वेदस्य बोधकत्वे अनपेक्षत्वलक्षणं प्रामाण्यं वेदस्य हीयेत। उक्तञ्च संक्षेपशारीरके—'पुरुषापराधविनिवृत्तिफलः सकलो विचार इति वेदविदः। अनपेक्षतामनुपरुध्य गिरः' इति [संक्षेपशारीरकम्, १।१६]। तथा च पुरुषापराधनिवृत्तये यथा वेदे तर्कापेक्षा एवमेव गुरावपि पुरुषापराधनिवृत्तये विचारापेक्षा, पुरुषापराधादेव तत्त्वविदं गुरुमतत्त्वविदं मन्यन्ते। यावता विचारेण पुरुषापराधविगमो भवति तावान् विचारोऽपेक्ष्यते। विचारेण गुरौ समारोपितदोषाणां निवृत्त्या शिष्य एव गुरोः श्रद्धाशीलो भवति। कल्पितेऽपि गुरौ स्वाप्नगुरुवदेव तर्केण समारोपितदोषनिवृत्त्या गुरौ शिष्यः सश्रद्धो भवति। अतो गुरोः पर्यनुयोज्यत्वेऽपि न काचित् क्षतिरिति भावः।

कल्पितत्वेन अपर्यनुयोज्यत्वे कथाया व्यवस्था न स्यादिति पूर्वपक्षी शङ्कते—**न च कथास्वपि सदुत्तरापरिस्फूर्तौ अहं त्वत्कल्पितो न पर्यनुयोज्यः इत्युत्तरं स्यादिति वाच्यम्।** कल्पितस्य अपर्यनुयोज्यत्वे कथासु प्रदर्शिता दुरवस्था स्यात्। तिस्रः कथा भवन्ति—वादो जल्पो वितण्डा च। कथासु—वादजल्पवितण्डासु इत्यर्थः ॥२१॥

२२ – कथायाः कल्पितत्वानिश्चयकालीनत्वेन प्रदर्शिता व्यवस्था न भवतीत्याह सिद्धान्ती—**कथायाः कल्पितत्वानिश्चयकालीनत्वेन समयबन्धविशेषनिबन्धनत्वेन च तादृगुत्तरानवकाशात्। तस्मात् शिष्यवत् गुरोरपि कल्पितत्वात् स्वप्नवत् सर्वव्यवस्थोपपत्तिः।** कथायाः कल्पितत्वानिश्चयकालीनत्वेन त्वत्कल्पितोऽहं न त्वया पर्यनुयोज्यः इत्युत्तरानवकाशात्। यथा स्वप्ने कल्पितत्वाप्रतिसन्धानात् स्वप्नदृष्टः पुरुषः पर्यनुयोज्यते

निश्चिताद्वैतः; शास्त्रप्रणयनवैयर्थ्यात्, नाप्यनिश्चिताद्वैतः; शास्त्रस्य प्रमामूलकत्वाभावप्रसङ्गादिति--चेत् ॥२२॥

न, प्रमामूलकत्वाभावेऽप्यबाधितविषयत्वेन शास्त्रप्रामाण्योपपत्तेरन्त्यपक्षाभ्युपगमात्। न चामुकः स इत्यनिश्चये बह्वायाससाध्यमोक्षार्थप्रवृत्त्ययोगः; प्रतिशरीरमहमहमिकया 'बद्धोऽहमि'ति निश्चयस्य स्वानुभवसाक्षिकत्वेन प्रवृत्तिसंभवात्, एकेनैव जीवेन

---

एवं प्रकृतेऽपीति। किञ्च कथायाः समयबन्धविशेषनिबन्धनत्वादपि तादृगुत्तरानवकाशात्। कथायाः समयबन्धविशेषनिबन्धनत्वं ग्रन्थारम्भ एव आचार्येणोक्तम्—तस्मात् समयबन्धादिवत् स्वकर्त्तव्यतानिर्वाहाय मध्यस्थेनादौ विप्रतिपत्तिः प्रदर्शनीयैव तत्रैव समयबन्धोऽस्माभिर्विवृतः। कथायाः समयबन्धानुसारित्वेन च तादृगुत्तरानवकाशादिति। शिष्याज्ञानेन यथा गुरुः कल्पितः तथा गुर्वज्ञानेन शिष्योऽपि कल्पितः स्वप्नवत्। स्वप्ने यथा स्वप्नद्रष्टुरज्ञानेन कल्पितैः पुरुषैः तत्कालीनाबाधितव्यवहाराः भवन्ति, तथा प्रकृतेऽपि। वस्तुतस्तु एकजीववादस्य बुद्ध्यारोहाय स्वप्न एव प्रथमो दृष्टान्तः।

एकजीववादे कल्पको निश्चिताद्वैतो न वा? प्रथमे शास्त्रप्रणयनवैयर्थ्यम्; द्वितीये शास्त्रस्य प्रमामूलकत्वाभावप्रसंग इति शङ्कते पूर्वपक्षी—अथ कल्पको न निश्चिताद्वैतः; शास्त्रप्रणयनवैयर्थ्यात्। नाप्यनिश्चिताद्वैतः; शास्त्रस्य प्रमामूलकत्वाभावप्रसंगादिति चेत्। एकजीववादे कल्पको जीवः एक एव स न निश्चिताद्वैतः तथात्वे अद्वैतबोधनाय शास्त्रप्रणयनवैयर्थ्यात्। शास्त्रेण यस्य बोधः सम्पाद्यः स निष्पन्नबोध एव कस्य कृते शास्त्रप्रणयनमिति भावः। कल्पकस्य अनिश्चिताद्वैतत्वे तस्य अद्वैतविषयिण्याः प्रमाया अभावात् तत्प्रणीतशास्त्रस्य प्रमापूर्वकत्वाभावप्रसंग इति एकजीववादिन उभयतः पाशरज्जुरिति भावः ॥२२॥

२३—शास्त्रस्य प्रमामूलकत्वाभावेऽपि अबाधितविषयकत्वेन शास्त्रप्रामाण्योपपत्तेरिति समाधत्ते—न, प्रमामूलकत्वाभावेऽपि अबाधितविषयत्वेन शास्त्रप्रामाण्योपपत्तेरन्त्यपक्षाभ्युपगमात्। न चामुक स इत्यनिश्चये बह्वायाससाध्यमोक्षार्थप्रवृत्त्ययोगः प्रतिशरीरमहमहमि-

चैत्रमैत्रादिशरीराणां सजीवत्वसंभवस्य प्रागेवोक्तत्वात्। किंच चैत्र-मैत्रादिषु 'कोऽसावि'ति प्रश्नस्य किं केनचित् क्रोडीकृतं चैतन्यं विषयः, किं वा निरस्तसमस्तभेदम्। नाद्यः; तस्य कल्पितत्वेना-कल्पकत्वात्। न द्वितीयः; तस्यैकत्वेन तदनिश्चयासिद्धेः। शुद्धचित एकत्वेन वस्तुतोऽसंसारित्वेऽपि आवरणविक्षेपशक्तिद्वयशालिस्वाश्रिता-विद्यावशात् संसारित्वकल्पकत्वमोक्षार्थयतमानत्वाद्युपपत्तिः ॥२३॥

---

कथा बद्धोऽहमिति निश्चयस्य स्वानुभवसाक्षिकत्वेन प्रवृत्तिसम्भवात्। एकेनैव जीवेन चैत्रमैत्रादिशरीराणां सजीवत्वसम्भवस्य प्रागेवोक्तत्वात्। किञ्च चैत्रमैत्रादिषु कोऽसौ इति प्रश्नस्य किं केनचित् क्रोडीकृतं चैतन्यं विषयः ? किं वा निरस्तसमस्तभेदम् ? नाद्यः, तस्य कल्पितत्वेनाकल्पकत्वात्। न द्वितीयः, तस्य एकत्वेन तदनिश्चया-सिद्धेः। शुद्धचित एकत्वेन वस्तुतोऽसंसारित्वेऽपि आवरणविक्षेप-शक्तिद्वयशालिस्वाश्रिताविद्यावशात् संसारित्वकल्पकत्वमोक्षार्थयत-मानत्वाद्युपपत्तिः। अनिश्चिताद्वैत एव शास्त्रप्रणेता इत्यन्त्यपक्षाभ्युपगमात् शास्त्रस्य प्रमामूलकत्वाभावेऽपि अबाधितविषयकत्वेन शास्त्रप्रामाण्योपपत्तेः। उक्तञ्च खण्डने—

पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः।
विरोधादुपजीव्येन बिभेति न मनागपि ॥ इति।

अबाधितविषयप्रमापकत्वेनैव शास्त्रप्रामाण्यात्। न च स एवायं कल्पको जीवस्तेन च प्रणीतं शास्त्रं तदनुसृत्य वयं मोक्षं प्राप्स्याम इत्यनिश्चये मुमुक्षूणां मोक्षार्थप्रवृत्त्ययोग इति वाच्यम्। 'अहं बद्धो विमुक्तः स्याम्' इति निश्चयवत एव मोक्षार्थप्रवृत्तिसम्भवात्। शास्त्रस्य अबाधितार्थकत्वनिश्चये तत्प्रणेतुरनिश्चयेऽपि तादृशशास्त्रदर्शितमार्गेण मोक्षाय प्रवृत्तेरुपपत्तेः। देहात्मत्व-भ्रान्त्यैव शरीरभेदेन जीवभेदं मन्यन्ते; येषां देहात्मत्वभ्रान्तिर्नास्ति तेषां देहभेदाद् आत्मभेदप्रतीतिर्न भवति। देहात्मत्वप्रतीतिश्चार्वाकाणाम्। चार्वाकमतमनुसृत्यैव देहभेदाद् आत्मभेदभ्रान्तिः। देहात्मत्वप्रतीतेरभावे देहभेदेऽपि आत्मनो भेदः न प्रतीयते। अतः चैत्रमैत्रादिशरीरभेदेऽपि जीवनानात्वं न प्रतीयते। अतः

ननु--अनादौ संसारे कस्यचित्तत्वज्ञानं मुक्तिश्चाभून्न वा, आद्ये इदानीं संसारोपलब्धिर्न स्यात्; जीवस्यैकत्वात्। अन्त्ये संप्रदायासंभवेन तत्त्वज्ञानासंभव इति—चेत् ॥२४॥

---

एकेनैव जीवेन नानाशरीराणां संजीवत्वादिति भावः। एकजीववादे कोऽसौ जीवः कल्पक इति प्रश्नस्य केनचित् परिच्छेदेन परिच्छिन्नं चैतन्यं पृच्छते, अथ वा निरस्तभेदं चिन्मात्रम्? चैत्रमैत्रादिशरीरपरिच्छिन्नं चैतन्यं वा कल्पकत्वेन पृच्छते? चिन्मात्रं वा कल्पकत्वेन पृच्छते नाद्यः, परिच्छिन्नस्य कल्पितत्वेन कल्पकत्वायोगात्; कल्पितस्य कल्पकत्वे तस्यापि कल्पकापेक्षायामनवस्थानात। कल्पितकल्पकयोः कल्पितत्वेन तुल्यत्वे कल्पकत्वव्यवस्था न स्यात्। नापि द्वितीयः, निरस्तसमस्तभेदचिन्मात्रस्य एकत्वेन तदनिश्चयासम्भवात्; निश्चये च पृच्छाया असम्भवात्। शुद्धचैतन्यस्य एकत्वेन संसारित्वासंसारित्वभेदाभावेऽपि आवरणविक्षेपशक्तिद्वयविशिष्टायाः चिन्मात्राश्रितया अविद्यया चैतन्यस्य संसारित्वं प्रपञ्चकल्पकत्वं मोक्षार्थयतमानत्वाद्युपपद्यते। स्वतश्चैतन्यस्य अकल्पकत्वेऽपि अविद्यावशात् कल्पकत्वमुपपद्यते इति भावः ॥२३॥

२४—एकजीववादे अद्यपर्यन्तं कस्यचित् तत्त्वज्ञानं मुक्तिश्च अभून्न वा? आद्ये, संसारानुपलम्भः, द्वितीये, सम्प्रदायासम्भवात् कस्यापि तत्त्वज्ञानासम्भव-इति पूर्वपक्षी शङ्कते—**ननु अनादौ संसारे कस्यचित् तत्त्वज्ञानं मुक्तिश्च अभून्न वा? आद्ये, इदानीं संसारोपलब्धिर्न स्यात्, जीवस्य एकत्वात्। अन्ते सम्प्रदायासम्भवेन तत्त्वज्ञानासम्भव इति चेत्।** अनादौ संसारे अद्यपर्यन्तं कस्यापि मुक्तिस्तत्त्वज्ञानञ्च नाभूदिति कथयितुं न युज्यते; तथात्वे अग्रे भविष्यतीति प्रत्याशाया असम्भवात्, मुक्त्यर्थिप्रवृत्तिरेवोच्छिद्येत। कस्यचित्तत्त्वज्ञानिनोऽभावे गुरुशिष्यसम्प्रदायोच्छेदः स्यात्। कस्यचिन्मुक्तौ अभ्युपगम्यमानायां जीवस्य एकत्वात् तन्मुक्तौ सर्वसंसारोच्छेदः स्यात्; तथा च इदानीं संसारानुपलम्भ एव स्यात् ॥२४॥

२५—एकजीववादे इदानीं संसारोपलम्भात् अद्यपर्यन्तं कस्यापि मुक्तिर्नाभूदिति अस्मदिष्टमेव कस्यापि तत्त्वज्ञत्वाभावे गुरुशिष्यसम्प्रदायाभावात,

न; नह्यसाम्प्रदायिकत्वमुत्पत्तिविरोधि; अपूर्वजातीयानुत्पत्तिप्रसङ्गात्, किंतु कारणासत्त्वम्; तन्नेदानीमुपदेष्टृत्वादिकारणस्य कल्पनासुदृढस्य सत्त्वात्। जीवैक्यस्य प्रमाणसिद्धत्वे संसारोपलम्भ एवातः पूर्वं तत्त्वज्ञानानुत्पत्तौ प्रमाणम्॥२५॥

---

अग्रे तत्त्वज्ञानं न स्याद् इति वक्तुं न युज्यते—उपदेष्टृत्वादिकं तत्त्वज्ञानोत्पत्तौ कारणम्, तच्च कल्पितमस्त्येवेति न तत्त्वज्ञानानुत्पाद इति परिहरति सिद्धान्ती—न हि असाम्प्रदायिकत्वम् उत्पत्तिविरोधि, अपूर्वजातीयानुत्पत्तिप्रसंगात्। किन्तु कारणासत्त्वं तन्न इदानीम् उपदेष्टृत्वादिकारणस्य कल्पनासुदृढस्य सत्त्वात्। जीवैक्यस्य प्रमाणसिद्धत्वे संसारोपलम्भ एव अतः पूर्वं तत्त्वज्ञानानुत्पत्तौ प्रमाणम्। यस्य सम्प्रदायो नास्ति तन्नोत्पद्यते इति नियमो न सम्भवति तथात्वे कस्यचिद् अपूर्वजातीयस्य अनुत्पत्तिप्रसंगात्। यदि असाम्प्रदायिकं नोत्पद्येत तर्हि इदानीं व्योमयानादीनामुत्पत्तिरेव न स्यात् न स्याच्च माध्वादिमतानाम् उत्पत्तिः। अतो असाम्प्रदायिकत्वं नोत्पत्तिविरोधि किन्तु कारणासत्त्वमेव उत्पत्तिविरोधि, यस्य कारणं नास्ति तन्नोत्पद्यते। तत्त्वज्ञानोत्पत्तौ कारणन्तु उपदेष्टृत्वादिकम्, तच्च मन्मते कल्पितस्य सुदृढस्य सत्वान्न तत्त्वज्ञानानुत्पादाशङ्का। जीवनानात्वे प्रमाणाभावात् जीवैकत्वे च 'यदा जीवः प्रबुध्यते' इत्यादिश्रुतेरेव प्रमाणत्वात्, इदानीं संसारोपलम्भ एव अतः पूर्वं कस्यापि तत्त्वज्ञानानुत्पत्तौ प्रमाणम्। जीवनानात्वेऽपि किमिति एतावता कालेन सर्वमोक्षो नाभूत्, एकैकस्मिन् कल्पे यद्येकैकोऽपि अपवृज्येत तथापि उच्छिन्नः संसारः स्यात्, अतीतकल्पानामनन्तत्वात्। तवापि अतीतेषु अनन्तेषु कल्पेषु तत्त्वज्ञानं मुक्तिश्च नाभूत्, तवापि अग्रे भविष्यतीति का प्रत्याशा; यदनन्तेषु कल्पेषु नाभूत् तदग्रेऽपि न भविष्यतीति निश्चित्य मोक्षमार्गानुसरणं त्यज्यताम्; कृष्यादिकं वा समाश्रियताम्। अनन्तेषु कल्पेषु तत्त्वज्ञानस्यानुत्पादेऽपि अग्रे उत्पत्स्यते इति यदि तव प्रत्याशा सा ममापि समा अन्यत्राभिनिवेशादिति॥२५॥

२६—तत्त्ववित्त्वेन श्रुत्यादिप्रसिद्धानां वामदेवादीनां मुक्तिर्नाभूत्, मम भविष्यतीति का प्रत्याशा, अस्मदादीनां मुक्तेराशैव यदि न स्यात् तर्हि

न च—तत्त्ववित्त्वेन श्रुत्यादिसिद्धानां शुकवामदेवादीनां मुक्तिर्माभूत्, मम तु भविष्यतीति कथं श्रद्दध्यादिति—वाच्यम्; शास्त्रप्रामाण्यदार्ढ्यादिति गृहाण। अन्यथा तेषां महानुभावानां मुक्तत्वेऽपि मम भविष्यति न वेति शङ्कापिशाच्याप्रवृत्तिप्रतिबन्धापत्तेः॥२६॥

ननु—तर्हि श्रुतिप्रामाण्यबलादेव तत्सिद्धौ जीवभेदः; पूर्वमपि केषांचिन्मोक्षश्चाभ्युपेयताम्। श्रूयते हि—'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्', 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः', 'नित्यो नित्यानां चेतनश्चेतनानाम्', इत्यादि। स्मर्यते च—

'बहवो ज्ञानतपसा पूता मद्भावमाश्रिताः।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः॥'

इत्यादीति—चेत्॥२७॥

---

मोक्षमार्गानुसरणं व्यर्थं स्यादिति पूर्वपक्षी शङ्कते—न च तत्त्ववित्त्वेन श्रुत्यादिप्रसिद्धानां शुकवामदेवादीनां मुक्तिर्माभूत् मम तु भविष्यतीति कथं श्रद्दध्यादिति वाच्यम्। अतिरोहितमेतत् महानुभावानां वामदेवादीनां मुक्तिरभूत्, मम तु रङ्कस्य कथं स्यादिति शङ्कापिशाच्या प्रवृत्तिप्रतिबन्धापत्तेः शास्त्रप्रामाण्यदार्ढ्यादेव तवापि शङ्कानिवारणं वक्तव्यं समं ममापि इति समाधत्ते—शास्त्रप्रामाण्यदार्ढ्यादिति गृहाण। अन्यथा तेषां महानुभावानां मुक्तत्वेऽपि मम भविष्यति न वेति शङ्कापिशाच्या प्रवृत्तिप्रतिबन्धापत्तेः। शास्त्रं हि तत्त्वज्ञानस्य मोक्षसाधनत्वं प्रतिपादयति। ज्ञानत्वादेवमुच्यते सर्वपाशैरित्यादि। शास्त्रं हि अनाशङ्कितप्रामाण्यं तत एव तत्त्वज्ञानस्य मोक्षसाधनत्वप्रतीतेरिति। ऋज्वर्थमन्यत्॥२६॥

२७—शास्त्रप्रामाण्याच्चेत् तत्त्वज्ञानस्य मोक्षसाधनत्वावगमः, तर्हि शास्त्रप्रामाण्यादेव जीवभेदोऽपि सिध्येत्, न हि शास्त्रम् एकत्र प्रमाणम् अप्रमाणमन्यत्र भवितुमर्हतीति शङ्कते पूर्वपक्षी—ननु तर्हि श्रुतिप्रामाण्यबलादेव तत्सिद्धौ जीवभेदः, पूर्वमपि केषाञ्चित् मोक्षश्च अभ्युपेयताम्, श्रूयते हि—'तद् यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत् तदर्षीणां तथा मनुष्याणाम्।' 'अजो ह्येको जुषमाणोऽनु शेते जहत्येनां भुक्तभोगामजोऽन्यः'। 'नित्योऽ-

न, उक्तवाक्यानां सार्वलौकिकभ्रमसिद्धभेदानुवादकत्वेन तत्परत्वाभावात्, जीवैक्यबोधकवाक्यानां च मानान्तराप्राप्तस्वार्थपरत्वात्, स्वप्नन्यायेन भेदस्य कल्पितत्वोपपत्तेश्च। ज्ञानस्तुतिपराणि वाक्यानि नात्मभेदं प्रमातुं शक्नुवन्ति; तात्पर्यवद्वाक्याविरोधेनातात्पर्यवद्वाक्यानां गुणवादत्वोपपत्तेः।

अतीतानागताश्चैव यावन्तः सहिताः क्षणाः।
ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक्॥

इत्यादिस्मृतिरपि जीवोपाधिभेदानुवादकतया व्याख्येया। तस्मादविद्योपाधिको जीव एक एवेति सिद्धम् ॥२८॥

इत्यद्वैतसिद्धौ एकजीवाज्ञानकल्पितत्वोपपत्तिः।

---

नित्यानां चेतनश्चेतनानामि'त्यादि स्मर्यते च 'बहवो ज्ञानतपसा पूता मद्भावमागताः [माश्रिताः]'; 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'। इत्यादीति चेत्। श्रुतिस्मृतिबलादेव जीवभेदोऽपि सिद्ध्येदिति श्रुतीः स्मृतीश्च उदाहरति—तद् यो यो देवानामिति। श्रुतिस्मृतिबलादेव केषांचिद् वामदेवादीनां मोक्षश्च अभ्युपेयः। अन्यथा जीवभेदप्रतिपादकशास्त्रस्य अप्रामाण्यं स्यादिति ॥२७॥

२८—जीवभेदप्रतिपादकशास्त्रस्य सार्वलौकिकभ्रमसिद्धभेदानुवादकत्वेन जीवभेदपरत्वाभावादिति समाधत्ते सिद्धान्ती—न, उक्तवाक्यानां सार्वलौकिकभ्रमसिद्धभेदानुवादकत्वेन तत्परत्वाभावात्। जीवैक्यबोधकवाक्यानाञ्च मानान्तराप्राप्तस्वार्थपरत्वात्, स्वप्नन्यायेन भेदस्य कल्पितत्वोपपत्तेश्च ज्ञानस्तुतिपराणि वाक्यानि नात्मभेदं प्रमातुं शक्नुवन्ति। तात्पर्यवद्वाक्यविरोधेन अतात्पर्यवद्वाक्यानां गुणवादत्वोपपत्तेः।

अतीतानागताश्चैव यावन्तः सहिताः क्षणाः।
ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक्॥

इत्यादिस्मृतिरपि जीवोपाधिभेदानुवादकतया व्याख्येया। तस्मादविद्योपाधिको जीव एक एवेति सिद्धम्।

देहतादात्म्याध्यासेन भ्रान्ताः अध्यस्तदेहभेदेन जीवभेदं मन्यन्ते।

देहात्मत्वबुद्धिरेव जीवभेदभ्रान्तेर्निदानम्। सा च बुद्धिः सार्वलौकिकीति सार्वलौकिकभ्रमसिद्धो जीवभेदः। भ्रमसिद्धजीवभेदमनुवदन्ति प्रदर्शितानि शास्त्राणि, न तानि जीवभेदप्रतिपादनपराणि; अपूर्वत्वस्य तात्पर्यनिर्णायकलिङ्गस्य तत्राभावात्। भेदमात्रस्य अविद्याप्रयुक्तत्वेन कुत्रापि शास्त्रस्य भेदप्रमापकत्वाभावात्। स्वप्नदृष्टपुरुषाणां भेदप्रतीतिवत् जाग्रद्दृष्टभेदस्यापि कल्पितत्वोपपत्तेश्च; भेदखण्डनप्रकरणे एतत् स्पष्टयिष्यते। वामदेवादिमुक्तिप्रतिपादकवाक्यानि तत्त्वज्ञानस्तुतिपराणि न आत्मभेदप्रमापकानि। अनधिगतार्थप्रतिपादकतया जीवैक्यप्रतिपादकवाक्यानि तात्पर्यवन्ति, तद्विरोधेन अतात्पर्यवद् वाक्यानां गुणवादत्वोपपत्तेः। जीवानन्त्यप्रतिपादकस्मृतिरपि जीवोपाधीनामनन्तत्वात् तदनुवादकतया उपपन्नेति न स्मृत्यापि जीवभेदः सिध्यतीति भावः। तस्मात् जीवभेदे प्रमाणाभावाद् अविद्योपाधिको जीव एक एवेति सिद्धम् ॥२८॥

## इत्यद्वैतसिद्धौ एकजीवाज्ञानकल्पितत्वोपपत्तिः।

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासि-
श्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां
बालबोधिन्यामेकजीववादविवरणम्।

## अथाज्ञानवादेऽज्ञानलक्षणनिरुक्तिः ।

अथ—केयमविद्या ? न तावदनादिभावरूपत्वे सति ज्ञाननिवर्त्या सेति ; सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञानेऽव्याप्तेः, तस्यानादित्वाभावात् । [1]अभावोपादानाज्ञाने च भावत्वाभावात्तत्राव्याप्तिः, अभावस्य भावोपादानकत्वे असत्यस्यापि सत्योपादानकत्वं स्यात्, अज्ञानानुपादानकत्वे तस्य ज्ञानान्निवृत्तिर्न स्यात्—इति

---

१—एकजीववादपर्यवसाने उक्तं सिद्धान्तिना तस्मादविद्योपाधिको जीव एक एवेति तदुपश्रुत्य कर्कशाशयः पूर्वपक्षी पृच्छति—अथ केयमविद्या ? न तावदनादिभावरूपत्वे सति ज्ञाननिवर्त्या सेति सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञानेऽव्याप्तेः । तस्य अनादित्वाभावात् । आरोपिताभावोपादानाज्ञाने च भावत्वाभावात् तत्राव्याप्तिः । अभावस्य भावोपादानकत्वे असत्यस्यापि सत्योपादानकत्वं स्यात् । अज्ञानानुपादानकत्वे तस्य ज्ञानान्निवृत्तिर्न स्यादिति । दूषयितुं चित्सुखीयमविद्यालक्षणमनुवदति—न तावदनादिभावरूपत्वे सतीति । चित्सुखाचार्यैस्तावदविद्यालक्षणमिदमुक्तम्—

अनादिभावरूपं यद्विज्ञानेन विलीयते ।
तदज्ञानमिति प्राज्ञलक्षणं सम्प्रचक्षते ॥ इति

उत्तरज्ञाननिवर्त्यपूर्वज्ञाने लक्षणस्य अतिव्याप्तिवारणाय अनादीति । पूर्वज्ञानस्य सादित्वान्नातिव्याप्तिः । अनादिज्ञानप्रागभावेऽतिव्याप्तिवारणाय भावरूपमित्युक्तम् । अनादिभावरूपे आत्मनि अतिव्याप्तिवारणाय 'विज्ञानेन विलीयते—अर्थात् ज्ञाननिवर्त्यत्वमुक्तम्, आत्मनोऽनिवर्त्यत्वान्नातिव्याप्तिरिति । अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वमित्यविद्यालक्षणम्; प्रथमतोऽव्याप्त्या लक्षणं दूषयन्नाह पूर्वपक्षी—सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञाने अव्याप्तिः । शुद्धचैतन्यावरकाज्ञानस्य अनादित्वसम्भवेऽपि सादिशुक्त्याद्यवच्छिन्नचैतन्यस्य सादि-

अत्र ब्रूमः, रूप्योपादानाज्ञानमप्यनादिचैतन्याश्रितत्वादनाद्येव, उदीच्यं शुक्त्यादिकं तु तदवच्छेदकमिति न तत्राव्याप्तिः। भावत्वं

त्वात् तदावरकाज्ञानस्यापि सादित्वमेव। तथा च अनादित्वघटिताविद्यालक्षणस्य तस्मिन्नज्ञानेऽव्याप्तिरेव। अविद्याऽज्ञानयोरभेदात्। शुक्तौ हि यातायां चैतन्यं शुक्त्यवच्छिन्नं भवति; चैतन्यस्य अनादित्वेऽपि शुक्त्यवच्छिन्नं चैतन्यं स्यादेव तदावरकस्याज्ञानस्य अनादित्वासम्भवात्; न हि 'आवरणीयं नास्ति अस्ति तु आवरणमिति सम्भवतीति भावः। किञ्च घटवति भूतलादौ घटाभावस्य प्रात्यक्षिक-भ्रमेऽनुपादानकस्य अनिर्वचनीयघटाभावस्य उत्पत्तिरङ्गीकर्तव्या; आरोपिताभावो-पादानेऽज्ञाने भावत्वं न सम्भवति। तथात्वे भावोपादानकत्वेन अभावस्यापि भावत्वापत्तिः स्यात्। अतो भावत्वघटिताविद्यालक्षणस्य अव्याप्तिरेव। ननु अनारोपिताभावमुत्सृज्य आरोपिताभावानुसरणं किमर्थमिति चेत्? शृणु, अना-रोपिताभावस्य निरुपादानत्वात्, तदुपादानत्वशङ्कैवाज्ञानस्य न स्यात्, अज्ञानस्य जगदुपादानत्वेऽपि सोपादानस्यैव जगतः आज्ञानोपादानकत्वं न तु निरुपादानस्य इति आरोपिताभावानुधावनं कृतम्। आरोपितमात्रस्य अज्ञानोपादानकत्व-नियमात्। आरोपिताभावोपादाने अज्ञानलक्षणस्य अव्याप्तिः सुदृढैव इति भावः। उपादानोपादेययोः साजात्यमपेक्षितम्, 'प्रकृत्या सह सारूप्यं विकाराणामवस्थित मि'ति नियमात्, साजात्याभावेऽपि उपादानोपादेयभावाङ्गीकारे भावरूपाज्ञानस्य अभावोपादानत्वं स्यादपि एवमेव सत्यस्य ब्रह्मण एव असत्यप्रपञ्चोपादानत्वमपि स्यात्, तथा च गतमज्ञानेन। अज्ञानकल्पनाया अवसर एव न स्यात्। असत्य-प्रपञ्चोपादानतयैव असत्यमज्ञानं सिद्धान्तिभिः कल्प्यते। उपादानोपादेययोः साजात्यनिममात् तदनङ्गीकारे अज्ञानस्य सिद्धिरेव न स्यादिति भावः। किञ्च आरोपिताभावस्य अज्ञानानुपादानकत्वे तस्य आरोपिताभावस्य अधिष्ठानतत्त्व-साक्षात्कारान्निवृत्तिरपि न स्यात्। तत्त्वज्ञानेन आरोपितोपादानाज्ञाननिवृत्त्या उपादेयं निवर्त्यते। अन्यथा ज्ञानात् अरोपितनिवृत्तिर्न स्यात् इति भावः ॥१॥

२—प्रातिभासिकरजतोपादानमज्ञानमप्यनाद्येव, शुक्त्यवच्छिन्नचैतन्यविषय-कमज्ञानं चिन्मात्रविषयम्, शुक्तिस्तु चिन्निष्ठाज्ञानविषयताया अवच्छेदिका न विषयः, अतोऽज्ञानस्य न सादित्वापत्तिरिति समाधत्ते—अत्र ब्रूमः रूप्यो-पादानाज्ञानमपि अनादिचैतन्याश्रितत्वात् अनाद्येव, उदीच्यं शुक्त्या-

चात्राभावविलक्षणत्वमात्रं विवक्षितम्, अतः आरोपिताभावोपादानाज्ञानेऽप्यभावविलक्षणत्वस्वीकाराान्नाव्याप्तिः। न च—सजातीयोपादानकत्वनियमः; अन्यथा असत्यस्यापि सत्यमुपादानं स्यादिति—वाच्यम्; सर्वथा साजात्ये सर्वथा वैजात्ये वोपादानोपादेयभावादर्शनेन तथा साजात्यस्य वैजात्यस्य वा आपादयितुमशक्यत्वात्। न हि कार्याकारकारणाकारतोऽप्यभेदे कार्यकारणभावः; सत्यस्य त्वसत्योपादानत्वे सत्यस्य निवृत्त्यसंभवेन तदुपादेयस्यासत्यस्यापि निवृत्तिर्न स्यात्, उपादाननिवृत्तिमन्तरेणोपादेयानिवृत्तेः, अतो न सत्यमसत्यस्योपादानम्; सत्यस्यापरिणामित्वाच्च। विवर्ताधिष्ठानत्वं त्वभ्युपेयत एव ॥१॥

---

दिकं तु तदवच्छेदकामिति न तत्राव्याप्तिः। भावत्वञ्च अत्र अभावविलक्षणत्वमात्रं विवक्षितम्, अतः आरोपिताभावोपादा[नाज्ञा]नेऽप्यभावविलक्षणत्वस्वीकारात् नाव्याप्तिः। न च सजातीयोपादानकत्वनियमः अन्यथा असत्यस्यापि सत्यमुपादानं स्यादिति वाच्यम्। सर्वथा साजात्ये सर्वथा वैजात्ये वा उपादानोपादेयभावादर्शनेन तथा साजात्यस्य वैजात्यस्य वा आपादयितुमशक्यत्वात्। न हि कार्याकारकारणाकारतोऽप्यभेदे कार्यकारणभावः। सत्यस्य तु असत्योपादानत्वे सत्यस्य निवृत्त्यसम्भवेन तदुपादेयस्य असत्यस्यापि निवृत्तिर्न स्यात्। उपादाननिवृत्तिमन्तरेण उपादेयानिवृत्तेः। अतो न सत्यम् असत्यस्योपादानम्। सत्यस्यापरिणामित्वात् च विवर्ताधिष्ठानत्वं तु उपेयत[अभ्युपेयत] एव। 'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवले'ति संक्षेपशारीरकवचनात्, अज्ञानस्य शुद्धचिन्मात्राश्रयविषयत्वमेव; अतः रजतोपादानमप्यज्ञानम् अनादिशुद्धचैतन्याश्रितत्वाद् अनाद्येव, अज्ञानाश्रयत्वं विषयत्वञ्च जडे नास्त्येव; अज्ञानोत्तरकालीनं शुक्त्यादि जडवस्तु अज्ञानविषयताया अवच्छेदकमेव नाज्ञानविषयः। शुद्धचैतन्याश्रितानाद्यज्ञानं यदा शुक्त्यादिरूपेण परिणमते तदा शुक्त्यादिकमपि अज्ञानोपहितचैतन्ये अभेदेन अध्यस्तं भवति। अज्ञानविषयता चैतन्ये वर्तते तत्रैव शुक्त्यादिकमपि; अतोऽ-

ज्ञानविषयतासमानाधिकरणं शुक्त्यादि अज्ञानविषयतायां अवच्छेदकमेव । न शुक्त्यादि अज्ञानस्य विषयः, जडेऽज्ञानविषयत्वाभावात् । अतो रजतोपादानाज्ञानस्य न सादित्वं किन्तु अनादित्वमेव । अनादिचिन्मात्राश्रितत्वादिति । अतोऽनादित्वघटिताज्ञानलक्षणस्य रजतोपादानाज्ञाने न अव्याप्तिरिति भावः । भावत्वघटिताज्ञानलक्षणस्य आरोपिताभावोपादानाज्ञानेऽपि नाव्याप्तिरित्याह— भावत्वञ्च अत्र अभावविलक्षणत्वमात्रं विवक्षितमिति । भावत्वेनाभावत्वेन च निर्वक्तुमशक्यमनिर्वचनीयमज्ञानम्, तत्र भावत्वोक्तिरभावविलक्षणत्वमात्रेण न वैशेषिकसम्मतं भावत्वमज्ञाने वर्तते । अन्यथा अज्ञानस्य अनिर्वचनीयत्वं न स्यात् । आरोपिताभावोपादानेऽज्ञानेऽभावविलक्षणत्वस्वीकारान्नाव्याप्तिः । तदज्ञानं भावविलक्षणमपि, अतोऽभावाज्ञानयोर्भावविलक्षणत्वेन साजात्याद् उपादानोपादेयभावः सम्भवति । नचाभावविलक्षणस्याज्ञानस्य अभावोपादानत्वं कथम्—'प्रकृत्या सह सारूप्यं विकाराणामवस्थितमि'ति नियमात् सजातीययोरेव उपादानोपादेयत्वभावः । विजातीयादज्ञानात् कथमारोपिताभावस्योत्पत्तिः, विजातीययोरप्युपादानोपादेयभावेऽज्ञानसिद्धिरेव न स्यात् । असत्यस्यापि प्रपञ्चस्य सत्यब्रह्मण एवोपादानत्वसम्भवादिति वाच्यम् , सर्वथा साजात्ये सर्वथा वैजात्ये वा उपादानोपादेयभावादर्शनेन सर्वथा साजात्यस्याभावाज्ञानयोरापादयितुमशक्यत्वात् । प्रपञ्चितं चैतत्, "न विलक्षणत्वाधिकरणे" "दृश्यते तु" इत्यत्र [ब्र०सू० २।१।६] । विवृतश्चैतत् भाष्यकारादिभिः, पूर्वपक्षिणापि एतत्सूत्रानुरोधेन विजातीययोरपि कार्यकारणभावो अभ्युपगन्तव्यः, अन्यथा सूत्रासङ्गतेः । कार्याकारकारणाकारयोः अभेदे कार्यकारणभाव एव न स्यात् । यच्चोक्तं साजात्याभावेऽपि उपादानोपादेयभावे सत्यात् ब्रह्मणः असत्यप्रपञ्चस्य उत्पत्तिः स्यादिति तदतितुच्छम् । उक्तञ्च ब्रह्मवित्प्रकाण्डैर्भर्तृहरिभिः—

शुद्धतत्त्वं प्रपञ्चस्य न हेतुरनिवृत्तितः ।<br>
ज्ञानज्ञेयादिरूपस्य मायैव जननी ततः ॥

एतदेवोक्तमाचार्येण सत्यस्य तु असत्योपादानत्वे उपादेयस्य सत्योपादानत्वे सत्यस्योपादानस्य निवृत्त्यसम्भवात्, असत्योपादेयस्यापि निवृत्तिर्न स्यात् । उपादाननिवृत्तिमन्तरेण उपादेयानिवृत्तेः । सत्यस्य अपरिणामित्वादपि नोपादानत्वसम्भवः । सत्यं कस्यापि परिणाम्युपादानं न भवति । अतः परिणाम्यु-

न च—ब्रह्माज्ञाने ब्रह्मणो वृत्त्यव्याप्यत्वपक्षेऽव्याप्तिः, तस्य ज्ञानानिवर्त्यत्वादिति—वाच्यम्; स्वरूपसदुपाधिमत्तद्विषयकज्ञाननि-

पादानमसत्यमज्ञानमेव। सत्यस्य परिणामित्वाभावेऽपि विवर्ताधिष्ठानत्वम् अस्त्येवेति कृत्वा 'यतो वा' इत्यादिश्रुतेः, 'जन्माद्यस्य यतः' इत्यादिसूत्रस्य च सङ्गतिः। विवर्ताधिष्ठानत्वं तु विवर्तोपादानाज्ञानविषयत्वम्। यदज्ञानं वियदादि-प्रपञ्चरूपेण परिणमते तदज्ञानविषयत्वमेव सत्यस्य ब्रह्मणोऽधिष्ठानत्वम्। यच्च केनचिदुक्तं यथा सत्यमपि दुग्धादिवस्तु दध्यादिरूपेण परिणमते, तथा सत्यं ब्रह्म जगदाकारेण परिणंस्यते तदतिमन्दम्। दुग्धादेः सत्यत्वासिद्धेः, दृश्यत्व-परिच्छिन्नत्वजडत्वादिभ्यो दुग्धादिना मिथ्यात्वसिद्धेः। यदपि सत्यं वस्तु अपि विनश्यति, समवाय्यादिकारणनाशद्वारा तस्य विनाशात् तदपि असंगतम्, नाश्य-त्वस्य मिथ्यात्वव्याप्यत्वात्। यन्मिथ्या न भवति तन्न नश्यति, यथा सत्यं ब्रह्म यथा वा असद् वन्ध्यापुत्रादि। अतो नाश्यत्वेनैव मिथ्यात्वमनुमीयते। अतो जन्यमिथ्यावस्तुमात्रस्य अज्ञानमेव परिणाम्युपादानम्। अतोऽज्ञानं परिणाम्यु-पादानत्वेन कल्पनीयमेव। अनादित्वभावत्वघटिताज्ञानलक्षणस्य प्रदर्शिता व्याप्तिर्निरस्ता ॥१॥

२—इदानीमव्याप्तिनिरसनमसहमानः पूर्वपक्षी अज्ञानलक्षणे विशेष्यांशं ज्ञान-निवर्त्यत्वमादाय लक्षणस्याव्याप्तिं शङ्कते। वाचस्पतिमते शुद्धब्रह्मणो ज्ञानविषयत्वा-भावात् ब्रह्मविषयकाखण्डाकारवृत्तिदशायां तयैव वृत्त्या ब्रह्मण उपहितत्वात् शुद्धत्वं न वर्तते। अतः शुद्धब्रह्मविषयकाज्ञानस्य ब्रह्मज्ञानान्निवृत्तिर्न स्यात्, समानविषय-त्वेनैव ज्ञानाज्ञानयोर्निवर्तकनिवर्त्यभावात्, उपहितब्रह्मविषयकज्ञानात् शुद्धब्रह्म-विषयकाज्ञानस्य निवृत्तिर्न भवितुमर्हति। अतो भामतीमते ब्रह्मविषयकाज्ञानस्य ब्रह्मज्ञाननिवर्त्यत्वाभावात् ज्ञाननिवर्त्यत्वघटितमज्ञानलक्षणं शुद्धब्रह्मविषयका-ज्ञानेऽव्याप्तमित्याह पूर्वपक्षी—न च ब्रह्माज्ञाने ब्रह्मणोवृत्त्यव्याप्यत्वपक्षेऽ-व्याप्तिस्तस्य ज्ञानानिवर्त्यत्वादिति वाच्यम्। भामतीमते वृत्तिव्याप्यत्वमेव दृश्यत्वम्। शुद्धब्रह्मविषयकाखण्डाकारवृत्तिदशायां ब्रह्मणो वृत्तिव्याप्यत्वेन मिथ्या-त्वमेव। तथा च मिथ्याब्रह्मविषयकज्ञानात् सत्यब्रह्मविषयकाज्ञानस्य निवृत्तिर्न भवितुमर्हति विषयभेदात्। शुद्धं ब्रह्म वृत्तिव्याप्यमपि नेति भामतीसिद्धान्तः।

वर्त्यत्वस्य तन्मतेऽपि भावात्। उपपादितं चैतत् दृश्यत्व-हेतूपपादने। अथ—औपाधिकभ्रमोपादानाज्ञाने ब्रह्मसाक्षात्कारानन्तर-विद्यमानजीवन्मुक्ताज्ञाने च ज्ञाननिवर्त्यत्वाभावादव्याप्तिः; तयोर्ज्ञान-निवर्त्यत्वे उपाधिकालजीवन्मुक्तिकालयोरेव ज्ञानप्रागभाववत्तन्नि-वृत्त्यापत्तिरिति—चेत् ॥२॥

---

शुद्धगोचरवृत्तिदशायां वृत्त्युपहितत्वेन तस्य शुद्धत्वं न स्यात्। उपहितं न शुद्धमिति भावः। यथा अखण्डाकारवृत्तिदशायां ब्रह्म तयैव वृत्त्या उपहितं भवति तथा ब्रह्मगोचराज्ञानदशायां तेनैवाज्ञानेन ब्रह्म उपहितं भवति। अज्ञानोपहितत्वात् अज्ञानविषयस्य ब्रह्मणः शुद्धत्वमेव नास्ति। अतः उपहित-विषयकमज्ञानमुपहितविषयकज्ञानान्निवर्तते, ज्ञानाज्ञानयोः समानविषयत्वात्, अतो भामतीमतेऽज्ञानलक्षणस्य नाव्याप्तिः इति समाधत्ते—स्वरूपसत् उपाधिमत्तद् विषयकज्ञाननिवर्त्यत्वस्य तन्मतेऽपि भावात्। उपपादितं चैतद् दृश्य-त्वहेतूपपादने। अखण्डाकारवृत्तिदशायां ब्रह्म तयैव वृत्त्या उपहितं भवति। शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः वस्तुगत्या तयैव वृत्त्या उपहितं ब्रह्म विषयी-करोति। वृत्तेरविषयीभूता अपि वृत्तिः ब्रह्म उपहितं करोति, वृत्तेः स्वरूप-सत्तामात्रेण ब्रह्मण उपाधित्वम् न तु वृत्तिज्ञानभास्यतया वृत्तेरपि वृत्तिज्ञानविषयत्वे स्वात्मनि वृत्तिविरोधः, वृत्तेरखण्डाकारत्वभंगश्च। अतः स्वरूपसत्या एव वृत्त्या उपहितं ब्रह्म वृत्तेर्विषयः, तया वृत्त्या अज्ञानोपहितब्रह्मविषयकमज्ञानं निवर्त्यते। न हि अज्ञानं सत्त्वदशायां ब्रह्म अज्ञानानुपहितं भवितुमर्हति। ब्रह्मण्यध्यस्ततयैव अज्ञानस्य सिद्धिः, अनध्यस्ताज्ञानसद्भावे मानाभावात्। एतत् सर्वं दृश्यत्वहेतु-निर्वचनप्रसंगेऽतिस्फुटमभिहितम्। पुनरपि ज्ञाननिवर्त्यत्वघटिताज्ञानलक्षणस्या-व्याप्तिं शङ्कते—अथ औपाधिकभ्रमोपादानाज्ञाने ब्रह्मसाक्षात्कारानन्तर-विद्यमानजीवन्मुक्ताज्ञाने च ज्ञाननिवर्त्यत्वाभावादव्याप्तिः। तयोर्ज्ञान-निवर्त्यत्वे उपाधिकालजीवन्मुक्त[क्ति] कालयोरेव ज्ञानप्रागभाववत् तन्निवृत्त्यापत्तिरिति चेत्। प्रतिबिम्बादिभ्रमः औपाधिकभ्रमः। तथा च तडागादितीरस्थवृक्षादीनां तडागजलेऽधोऽग्रत्वरूपेण प्रतिबिम्बो जायते अयमौपाधि-को भ्रमः। तडागजलोपाधिसम्बन्धात् तडागतीरस्थवृक्षादीनां तडागजलेऽधोऽ-

न, उपाधिप्रारब्धकर्मणोः प्रतिबन्धकयोरभावविलम्बेन निवृत्ति-विलम्बेऽपि तयोर्ज्ञाननिवर्त्यत्वानपायात्। न हि क्वचिदविलम्बेन जनकस्य क्वचित् प्रतिबन्धेन विलम्बे जनकताऽपैति। न च तर्हि

---

ग्रत्वेन प्रतिबिम्बनं भवति। अस्मिन् प्रतिबिम्बाध्यासे तडागतीरस्थवृक्षादिरधिष्ठानं तडागजलमुपाधिः, अस्य प्रतिबिम्बाध्यासस्य अधिष्ठानभूतो यो वृक्षादिः तस्य ऊर्ध्वाग्रत्वादितत्त्वं तत्साक्षात्कारे सत्यपि प्रतिबिम्बाध्यासोपादानस्य अज्ञानस्य अनिवृत्तत्वात्। अधिष्ठानतत्त्वसाक्षात्कारेण अज्ञाननिवृत्तौ प्रतिबिम्बविभ्रमानुवृत्तिरेव न स्यात्। अतस्तस्मिन् अज्ञाने ज्ञाननिवर्त्यत्वाभावात् लक्षणस्य अव्याप्तिरेव। जीवन्मुक्त्यनुवृत्ताज्ञाने च अव्याप्तिमाह—ब्रह्मसाक्षात्कारानन्तरेति। न हि ब्रह्मसाक्षात्कारेण ब्रह्माज्ञाननिवृत्तिः जीवन्मुक्त्यनुवृत्त्याज्ञानस्य ब्रह्मसाक्षात्कार-निवर्त्यत्वेऽज्ञानकार्यैः प्रारब्धकर्मभिः सह अज्ञानस्य निवृत्तत्वात्, जीवन्मुक्तिरेव न स्यात्, जीवन्मुक्तस्य शास्त्रोपदेष्टृत्वं न स्यात्; भिक्षाटनादौ प्रवृत्तिरपि न स्यात्; ब्रह्मसाक्षात्कारमात्रेण सद्योमोक्षापातात्। न च सोपाधिकभ्रमोपादान-मज्ञानमुपाधिनिवृत्तिः सचिवतत्त्वज्ञाननिवर्त्यम्, ज्ञानस्य स्वप्रागभावं प्रतीव अज्ञानं प्रत्यपि अन्यनिरपेक्षस्यैव निवर्तकत्वात् इत्याह—ज्ञानप्रागभाववत् तन्निवृत्त्या-पत्तिरिति। अज्ञानस्य ज्ञानप्रागभावभिन्नत्वेऽपि ज्ञानप्रागभावतुल्ययोगक्षेमत्वादिति भावः ॥२॥

३—अप्रतिबद्धं कारणं कार्यजनकम्, प्रतिबन्धकवशेन क्वचित् कार्यानुदयेऽपि कारणत्वानपायादिति समाधत्ते—न, उपाधिप्रारब्धकर्मणोः प्रतिबन्धकयोरभावविलम्बेन निवृत्तिविलम्बेऽपि तयोर्ज्ञाननिवर्त्य-त्वानपायात्। न हि क्वचिदविलम्बेन जनकस्य क्वचित् प्रतिबन्धेन विलम्बे जनकताऽपैति। उपाधिसत्त्वैव औपाधिकभ्रमनिवृत्तेः प्रतिबन्धकः, एवं प्रारब्धकर्मैव अज्ञाननिवृत्तेः प्रतिबन्धकः; सति प्रतिबन्धके कारणात् कार्या-नुदयोऽपि प्रतिबन्धकविगमे कारणं कार्यं जनयत्येव। औपाधिकभ्रमोपादानाज्ञानस्य जीवन्मुक्ताज्ञानस्य च प्रतिबन्धकसत्त्वदशायां ज्ञाननिवर्त्यत्वाभावेऽपि प्रतिबन्ध-कविगमे तयोरज्ञानयोः ज्ञाननिवर्त्यत्वात् लक्षणस्य नाव्याप्तिः; क्वचित् प्रतिबन्धका-भावदशायाम् अविलम्बेन कार्यजनकस्य क्वचित् प्रतिबन्धकसत्त्वे प्रतिबन्धक-

ज्ञातेऽपि तत्राज्ञात इति व्यवहारापत्तिः; तादृग्व्यवहारे आवरणशक्तिमदज्ञानस्य कारणत्वेन तदावरणशक्त्यभावादेव ईदृग्व्यवहारानापत्तेः। यथा चैतत्तथोपपादयिष्यते। न चाविद्याचैतन्यसम्बन्धेऽतिव्याप्तिः ॥३॥

---

विगमपर्यन्तं कार्यमजनयतः कारणस्य कारणत्वं नापैति। प्रतिबन्धकवशात् ज्ञानेन यदि अज्ञानं नापनीयते तर्हि विषयविषयकज्ञाने जातेऽपि तस्य विषयस्य अज्ञातत्वेन व्यवहारः स्यादिति शङ्कते—**न च तर्हिज्ञातेऽपि तत्राज्ञात इति व्यवहारापत्तिः** कृतविवरणमेतत्। उत्पन्नेनापि ज्ञानेन यदि अज्ञानं न निवर्त्यते, तर्हि "ज्ञातेऽपि अज्ञात इति व्यवहारः स्यात्; तथा च अनुभवविरोधः। ज्ञानेन अज्ञानगतावरणशक्तेर्नाशात् ज्ञातस्य नाज्ञातत्वेन व्यवहारः स्यात्। ज्ञानस्य अज्ञानगतावरणशक्त्यैव विरोधः न अज्ञानगतविक्षेपशक्त्या; तथा च औपाधिकभ्रमे ज्ञानेन अज्ञानगतावरणशक्तेर्नाशेऽपि विक्षेपशक्तेः प्रतिबन्धकवशतोऽनाशात् भ्रमानुवृत्तिरिति समाधत्ते—**तादृग्व्यवहारे आवरणशक्तिमदज्ञानस्य कारणत्वेन तदावरणशक्त्यभावादेव ईदृग्व्यवहारानापत्तेः। यथा चैतत् तथोपपादयिष्यते।** अज्ञातत्वेन व्यवहारे आवरणशक्तिमदज्ञानस्य कारणत्वात्, ज्ञानेन आवरणशक्तिमदज्ञानस्य नाशात्, ज्ञातेऽज्ञातत्वव्यवहारो न स्यात्। एतच्च अज्ञानस्य विषयनिरूपणावसरे उपपादयिष्यते। अज्ञानस्य ज्ञानप्रागभावसमानयोगक्षेमत्वं यदस्माभिरिष्यते, तदपि अज्ञानस्य आवरणशक्तिमभिप्रेत्यैव। ज्ञाने जाते अज्ञानस्य आवरणशक्तिः विनश्यति, ज्ञानप्रागभाववत्। ज्ञाने जाते यथा ज्ञानप्रागभावो नश्यति एवमावरणशक्तिरपि नश्यति; अज्ञानस्य विक्षेपशक्त्या सह ज्ञानस्य साक्षात् विरोधो नास्ति। अत एव जीवन्मुक्तस्य विक्षेपशक्तिमदज्ञानमनुवर्तते। अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वमिति लक्षणस्य अविद्याचैतन्यसम्बन्धेऽतिव्याप्तिं शङ्कते पूर्वपक्षी—**न च अविद्याचैतन्यसम्बन्धे अतिव्याप्तिः।** अव्याप्त्या लक्षणं दूषयितुमशक्नुवन् इदानीमतिव्याप्त्या लक्षणं दूषयितुमाह—**अविद्याचैतन्यसम्बन्धे** इति। 'षडस्माकमनादय' इत्यभ्युपगमात् अनादौ अविद्याचित्सम्बन्धे भावरूपे ज्ञाननिवर्त्ये च अविद्यालक्षणस्य अतिव्याप्तिरित्यर्थः ॥३॥

साक्षाज्ज्ञाननिवर्त्यत्वस्य विवक्षितत्वात्, तस्याप्यविद्यात्मकत्वाद्वा। न च विशेषणान्तरवैयर्थ्यम्; अनादिपदस्योत्तरज्ञाननिवर्त्ये पूर्वज्ञाने भावपदस्य ज्ञानप्रागभावे ज्ञानजन्यकार्यप्रागभावे चातिव्याप्तिवारकत्वेन सार्थकत्वात्। ज्ञानत्वेन साक्षात्तन्निवर्त्यत्वं तु भवति लक्षणान्तरम् ॥४॥

---

४—विद्यया अविद्यानिवृत्त्या अविद्याचित्सम्बन्धो निवर्तते, न साक्षाद् विद्यया अविद्याचित्सम्बन्धो निवर्त्यते, अतः साक्षान्निवर्त्यत्वं लक्षणे विवक्षितमित्याह सिद्धान्ती—**साक्षाज्ज्ञाननिवर्त्यत्वस्य विवक्षितत्वात्। तस्याप्यविद्यात्मकत्वाद् वा।** ज्ञानमज्ञानस्यैव निवर्तकमिति पञ्चपादिकावचनात् ज्ञानेन अज्ञानमेव निवर्त्यते, अज्ञाननिवृत्तिद्वारा अज्ञानप्रयुक्तमपि निवर्त्यते। तथा ज्ञानेन अज्ञानस्यैव साक्षान्निवृत्तिः, अविद्याचैतन्यसम्बन्धस्य च अविद्यानिवृत्तिद्वारा निवृत्तिर्न साक्षयादिति नातिव्याप्तिः। किञ्च अविद्याचैतन्यसम्बन्धे लक्षणस्य अतिव्याप्तिसङ्कैव नास्ति, तस्यापि लक्ष्यत्वादित्याह—**तस्यापि अविद्यात्मकत्वादिति।** अविद्यया सह चैतन्यस्य संयोगसमवायादीनामसम्भवात् स्वरूपसम्बन्ध एव वाच्यः; स्वरूपसम्बन्धश्च सम्बन्ध्यनतिरिक्तः, अतोऽविद्यासम्बन्धोऽविद्यास्वरूपमेवेति नातिव्याप्तिशङ्काऽपीति भावः। ज्ञानसाक्ष्यान्निवर्त्यत्वविवक्षणे लक्षणेऽनादिपदं व्यर्थं स्यात्, सादि शुक्तिरजतादीनां ज्ञाननिवर्त्यत्वेऽपि तत्र लक्षणस्यातिव्याप्तिवारणायैव अनादिपदमुपात्तम्; साक्षान्निवर्त्यत्वविवक्षणे शुक्तिरजतादीनां साक्षाज्ज्ञाननिवर्त्यत्वाभावादेव शुक्तिरजते लक्षणस्य अतिव्याप्तिर्न स्यात्। ज्ञानेन शुक्तिरजतोपादानाज्ञाननिवृत्तिद्वारैव शुक्तिरजतनिवृत्तिर्भवति; अतोऽनादिपदं व्यर्थं स्यादिति शङ्कते—**न च विशेषणान्तरवैयर्थ्यम्।** अज्ञानलक्षणे विशेषणान्तरमनादिपदं व्यर्थमित्यर्थः। उत्तरज्ञाननिवर्त्यपूर्वज्ञानेऽतिव्याप्तिवारणाय अनादिपदं सार्थकमिति परिहरति—**अनादिपदस्य उत्तरज्ञाननिवर्त्यपूर्वज्ञाने, भावपदस्य [ज्ञान] प्रागभावे ज्ञानजन्येच्छाप्रागभावे चातिव्याप्तिवारकत्वेन सार्थकत्वात्। ज्ञानत्वेन साक्षात्तन्निवर्त्यत्वं तु भवति लक्षणान्तरम्।** उत्तरज्ञाननिवर्त्ये सादिपूर्वज्ञाने लक्षणस्य अतिव्याप्तिवारणाय

ननु—असंभवः, कल्पितत्वेन दोषजन्यधीमात्रशरीरस्याज्ञानस्य

---

अनादिपदमुपात्तम्। प्रसंगात् भावपदस्यापि अतिव्याप्तिवारकत्वं दर्शयति। लक्षणे भावपदानुपादाने ज्ञानप्रागभावे साक्षाज्ज्ञाननिवर्त्ये अतिव्याप्तिः स्यात्। प्रागभावो न प्रतियोगिनिवर्त्यः किन्तु प्रागभावनिवृत्तिरेव प्रतियोगीति मते प्रागभावस्य प्रतियोगी निवर्त्यत्वाभावात् नायमतिव्यातिपरिहारः सङ्गच्छते; अत आह—ज्ञानजन्येच्छाप्रागभावे इति इच्छाप्रागभावस्य प्रतियोगिनीच्छा, तज्जनिका सामग्री ज्ञानम्, तदेव इच्छाप्रागभावनिवर्तकम्; प्रतियोगिजनकसामग्री-निवर्त्यत्वं प्रागभावे वर्तते। प्रागभावस्य प्रतियोगिनिवर्त्यत्वाभावेऽपि प्रतियोगि-जनकसामग्रीनिवर्त्यत्वं प्रागभावे वर्तते। अतो ज्ञानसाक्षान्निवर्त्ये इच्छाप्रागभावे अतिव्याप्तिवारणाय अविद्यालक्षणे भावपदमुपात्तम्। इच्छाप्रागभावोऽपि अनादिः, साक्षाज्ज्ञाननिवर्त्यः, किन्तु प्रागभावो न भाव इति भावपदोपादाने नातिव्याप्ति-परिहारः। ज्ञानजन्येति शब्दस्य ज्ञानस्य प्रतियोगिजनकत्वप्रदर्शनाय उपादानम् ज्ञानत्वेन साक्षाज्ज्ञाननिवर्त्यत्वं अज्ञानस्य लक्षणान्तरम्। ज्ञानत्वेन साक्षाज्ज्ञान-निवर्त्यमज्ञानमेव। न च पूर्वज्ञानस्य उत्तरज्ञानेन, इच्छायाः स्वविषयज्ञानेन, शोकस्य सुहृद्दर्शनेन, पापस्य सेतुदर्शनेन, विषस्य गरुडध्यानेन, प्रवृत्ति-प्रागभावस्य प्रवर्तकज्ञानेन, निवृत्तिदर्शनान्नायं नियमः इति चेन्न, ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्य विवक्षितत्वात्; उत्तरज्ञानादेस्तु विरोधिगुणत्वेन, सिद्धत्वेन, सुहृज्ज्ञानत्वेन, विहितक्रियात्वेन, प्रवृत्तिसामग्रीत्वेन यथायथं निवर्तकत्वात् लक्षणान्तरमपि निर्दोषम्। [संक्षेपशारीरकम्, पृ०,५७।५८] अस्मिन् लक्षणान्तरे अनादित्वभावत्वयोरपेक्षा नास्ति; किन्तु ज्ञाननिवर्त्यत्वमेव लक्षणम्, तच्च ज्ञानत्वेन साक्षाज्ज्ञाननिवर्त्यत्वम्। इच्छाप्रागभावनिवर्तकत्वं यज्ज्ञानस्य तत् प्रतियोगिजनक-सामग्रीत्वेन न ज्ञानत्वेन ज्ञानस्य निवर्तकत्वमिति भावः। ज्ञानस्य स्वप्रागभाव-निवर्तकत्वेऽपि प्रतियोगित्वेनैव ज्ञानस्य स्वप्रागभावनिवर्तकत्वं न ज्ञानत्वेनेति। एकस्मिन् लक्ष्ये नानालक्षणसद्भावो न दूषणमिति ॥४॥

५—अस्मिन् अविद्यालक्षणेऽव्याप्त्यतिव्याप्ती परिहृते, इदानीं पूर्वपक्षी असम्भवदोषेण इदं लक्षणं दूषयन्नाह—**ननु असम्भवः, कल्पितत्वेन दोष-**

ज्ञाननिवर्त्यस्याभावविलक्षणस्य च रूप्यवदनादित्वायोगादिति—चेत् ॥५॥

न; कल्पितत्वमात्रं हि न दोषजन्यधीमात्रशरीरत्वे सादित्वे वा तन्त्रम्, किन्तु प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वम्, सादिकल्पकवत्त्वम्, विद्याऽनिवृत्त्यप्रयुक्तनिवृत्तिप्रतियोगित्वम्, प्रागभावप्रतियोगित्वं वा तन्त्रम्। न च तत् प्रकृतेऽस्ति। ज्ञाननिवर्त्यत्वसमानाधिकरणाभावविलक्षणत्वेनाविद्यायाः सादित्वसाधने 'अजामेकाम्'

---

जन्यधीमात्रशरीरस्याज्ञानस्य ज्ञाननिवर्त्यस्याभावविलक्षणस्य च रूप्यवदनादित्वायोगात् इति चेत्। लक्ष्यावृत्तित्वादेव लक्षणस्य अव्याप्तिरसम्भवश्च। तत्र यत्किञ्चिल्लक्ष्यावृत्तित्वात् लक्षणस्य अव्याप्तिः, यावल्लक्ष्यावृत्तित्वाल्लक्षणस्य असंभवो दोषः। अव्याप्तिरविद्याविशेषे प्रदर्शिता, इदानीमविद्यामात्रे लक्षणस्य अवृत्तित्वादसम्भवो दोषः स्यादित्याह—पूर्वपक्षी ननु असम्भव इति। कथमसम्भव इति पृच्छायामाह—कल्पितत्वेनेत्यादि। अविद्यायाः शुक्तिरजतवत् कल्पितत्वं सिद्धान्तिसम्मतम्। यत् कल्पितं तद् दोषजन्यधीमात्रशरीरं यथा शुक्तिरजतादिः। दोषजन्या या धीस्तन्मात्रशरीरं तद्धीकालमात्रवृत्ति, तद्धीकालान्यकालावृत्ति इत्यर्थः; तच्च शुक्तिरजतवदेव ज्ञाननिवर्त्यमभावविलक्षणञ्च भवति। कल्पिताया अविद्यायाः कल्पितशुक्तिरजतसमानयोगक्षेमत्वात्; अविद्याशुक्तिरजतवदेव आदिमती स्यात्; तस्या अनादित्वायोगात्। अनादित्वघटिताविद्यालक्षणस्य कस्यामपि अविद्यायाम् अवृत्तित्वाल्लक्षणस्यास्य असम्भवः स्यादिति ॥५॥

६—दोषजन्यधीमात्रशरीरत्वसादित्वयोः कल्पितत्वं न व्याप्यम्, येन कल्पितत्वेनैव तयोः सिद्धिः स्यादिति परिहरति सिद्धान्ती— न, कल्पितत्वमात्रं हि न दोषजन्यधीमात्रशरीरत्वे सादित्वे वा तन्त्रं किन्तु प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वम्, सादिकल्पकवत्त्वम्, विद्या अनिवृत्त्यप्रयुक्तनिवृत्तिप्रतियोगित्वं प्रागभावप्रतियोगित्वं वा तन्त्रम्। नच तत् प्रकृतेऽस्ति। ज्ञाननिवर्त्यत्वसमानाधिकरणाभावविल-

'अनादिमायये' त्यादिशास्त्रविरोधः, अनादित्वसाधकेन ज्ञाननिवर्त्यत्वे सति भावविलक्षणत्वेन सत्प्रतिपक्षश्च, भावत्वस्योपाधित्वं च ॥६॥

---

क्षणत्वेन अविद्यायाः सादित्वसाधने 'अजामेकाम्,' 'अनादिमायया' इत्यादि शास्त्रविरोधः। अनादित्वसाधकेन ज्ञाननिवर्त्यत्वे सति भावविलक्षणत्वेन सत्प्रतिपक्षश्च, भावत्वस्योपाधित्वञ्च। यच्च पूर्वपक्षिणोक्तमविद्यायाः कल्पितत्वे शुक्तिरजतवत् सादित्वं स्यादिति तत्तदैव सम्भाव्यते यदि कल्पितत्वं सादित्वस्य व्याप्यं स्यात्, किन्तु कल्पितत्वं सादित्वव्याप्यं न भवति। एवमेव कल्पितत्वेन दोषजन्यधीमात्रशरीरत्वमपि न सिद्ध्यति, कल्पितत्वस्य तद्व्याप्यत्वाभावात्। कल्पितत्वं यदि दोषजन्यधीमात्रशरीरत्वसादित्वयोर्न व्याप्यं तर्हि तयोः किं व्याप्यं येन तयोः सिद्धिः स्यादिति पृच्छायामाह—[१] प्रतिभासंकल्पकसमानकालीनकल्पकवत्त्वम्, [२] आदिकल्पकवत्त्वम्, [३] विद्याऽनिवृत्त्यप्रयुक्तनिवृत्तिप्रतियोगित्वम्, [४] प्रागभावप्रतियोगित्वं तयोस्तन्त्रम् अर्थात् तयोर्व्याप्यमिति। प्रदर्शितानां चतुर्णां व्याप्यानां मध्ये येन केनापि व्याप्येन तयोः साधयितुं शक्यत्वात्। दोषजन्यधीमात्रशरीरत्वसादित्वयोर्व्याप्यत्वेन उपन्यस्तानां चतुर्णां धर्माणामेकस्यापि अविद्यायां सत्त्वाभावात् न अविद्यायाः दोषजन्यधीमात्रशरीरत्वं सादित्वं वा सिद्ध्यतीति भावः। एतदेवोक्तं मूले—न च तत् प्रकृतेऽस्ति इति। प्रकृतेऽविद्यायां तत् प्रदर्शितरूपचतुष्टयं नास्ति। अत्र कल्पितमात्रस्य दोषजन्यधीमात्रशरीरत्वे कल्पितमात्रं प्रातिभासिकं स्यात्। तथा हि कल्पितमात्रस्य अज्ञातसत्त्वाभावे व्यावहारिकाणामुच्छेदः स्यात्। व्यावहारिकाणामज्ञातसत्त्वाभ्युपगमात्। एवमविद्याया अपि दोषजन्यधीमात्रशरीरत्वे प्रलयदशायामपि अविद्यागोचराविद्यावृत्तेः सत्त्वापातात्। एवमेव कल्पितमात्रस्य सादित्वेऽविद्यातत्सम्बन्धादीनामपि सादित्वापातात्, 'षडस्माकमनादय' इति सिद्धान्तोऽपि भज्येत, अनादित्वघटितमविद्यालक्षणमपि असङ्गतं स्यात्। तथा चास्य लक्षणस्य असम्भव एव स्यात्। दोषजन्यधीमात्रशरीरत्वसादित्वयोः व्याप्यत्वेन स्वाभिप्रेतं प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वं च इत्थम्। कल्पितस्य यः प्रतिभासः ज्ञानं तस्य यः कल्पकः तत्समानकालीनकल्पकवत्त्वं यस्य कल्पितस्य, तत् कल्पितं वस्तु दोषजन्यधीमात्रशरीरं

स्यात्, आदिमदपि स्यात्। कल्पितस्य शुक्तिरजतादेः प्रतिभासोऽविद्यावृत्तिः, तस्य कल्पको द्रष्टा। कल्पितस्य प्रातिभासिकस्य वस्तुनः कल्पकः, कल्पितस्य निर्माता न भवितुमर्हति, किन्तु द्रष्टा। शुक्तिरजतादीनां द्रष्टैव शुक्तिरजतादीनां कल्पकः। अत्र शुक्तिरजतादीनां कल्पकः साक्षी न तु प्रमाता। शुक्तिरजतप्रतिभासस्य अविद्यावृत्तिरूपस्य कल्पको द्रष्टा रजताकाराविद्यावृत्त्युपहितं चैतन्यम्, तदेव चैतन्यं शुक्तिरजतस्यापि कल्पकम्। अविद्याकल्पितरजततज्ज्ञानाभासयोः एक एव साक्षी द्रष्टा कल्पकः। तथा च प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वं शुक्तिरजते वर्तते। शुक्तिरजतं च दोषजन्यधीमात्रशरीरं सादि च भवति। दोषजन्यधीमात्रशरीरत्वसादित्वयोः व्याप्तिः शुक्तिरजतादौ प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वे गृहीता। प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वं च अविद्यायां नास्ति। अतस्तस्याः दोषजन्यप्रतिभासमात्रशरीरत्वं सादित्वञ्च न सिद्ध्यतीति लक्षणस्य नासम्भवो दोषः, अविद्यायां प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वं कुतो नास्ति? अविद्यायाः कल्पकम् अविद्योपहितं चैतन्यम्, तच्च अनादिसाक्षिरूपं सर्वदैवास्ति। किन्तु अविद्यायाः प्रतिभासः सर्वदा नास्ति। अविद्यायाः प्रतिभासोऽविद्याविषयिणी अविद्यावृत्तिः, सा च यद्यपि सुषुप्तावस्ति तथापि प्रलयकाले नास्ति। सुप्तोत्थितस्य अविद्यास्मरणात् सौषुप्तौ अनुभवः कल्प्यते, यः संस्कारद्वारा स्मरणं जनयति। मूढोऽहम् अस्वाप्सम् इति हि सुप्तोत्थितस्य अविद्यास्मरणम्। अतो दोषजन्या अविद्याकारा अविद्यावृत्तिः सुषुप्तौ जायते। प्रलयानन्तरं सृष्ट्यादौ जीवानाम् एतत् स्मरणं न भवति; अतः प्रलयेऽविद्याकारा अविद्यावृत्तिरपि न स्वीक्रियते। अतः प्रलयेऽविद्याकारा अविद्यावृत्तिरूपस्य अविद्याप्रतिभासस्य अभावाद् अविद्याकल्पकः साक्षी अविद्योपहितं चैतन्यमित्यर्थः न अविद्याप्रतिभासकल्पकसमानकालीनः। प्रलयेऽविद्याप्रतिभासस्यैवाभावात्। अतोविद्यायां प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वाभावात् न अविद्याया दोषजन्यप्रतिभासशरीरत्वं सादित्वं वा सिद्ध्यति; एतयोः प्रयोजकस्य ज्ञापकस्य वाऽभावात्। किञ्च अविद्याकल्पितेति कृत्वा कल्पितशुक्तिरजतवत् आदिमती भविष्यतीति पूर्वपक्ष्युक्तं न युक्तम्, कल्पितवस्तुमात्रं न सादि किन्तु तदेव कल्पितं सादि यत् सादिकल्पकवत् भवति।

शुक्तिरजतादिकं सादिकल्पकवदिति कृत्वा तेषां सादित्वं सिद्ध्यति । अविद्यायास्तु सादिकल्पकवत्त्वाभावात् न सादित्वं सेद्धुमर्हति । अविद्यायाः कल्पकमविद्योपहितं चैतन्यम् । एतत् चैतन्यमविद्याकल्पकमनाद्येव, अविद्या चैतन्ययोर्द्वयोरेवानादित्वात् । अतोऽविद्यायां सादिकल्पकवत्त्वं नास्ति । शुक्तिरजतादीनां तु कल्पकमादिमदेव । शुक्तिरजतादीनामधिष्ठानज्ञानवदेव तेषां कल्पकम् । अधिष्ठानज्ञानञ्च सादि । अतः शुक्ति रजतादीनां कल्पकमपि सादि । सादिकल्पकवत्त्वतस्य यस्य कल्पको द्रष्टा आदिमान्, तदेव सादि कल्पकवत् इत्युक्तम् । एतस्यान्योऽप्यर्थः सम्भाव्यते । सादिकल्पनाया विषयत्वमेव सादिकल्पकवत्त्वम् । आविद्याकल्पना च अविद्योपहितं चैतन्यम्, तच्चानादि । अतोऽविद्याया अनादिकल्पनाविषयत्वात् सादिकल्पनाविषयत्वं नास्ति । शुक्तिरजतादीनां तु सादिकल्पनाविषयत्वमेव । शुक्तिरजतादीनां कल्पनादोषजन्या रजताकारा अविद्यावृत्तिः, सा चादिमत्येव । अत्रेदं वक्तव्यम्—ये तु प्रलयेऽपि जन्याऽविद्यावृत्तिं स्वीकुर्वन्ति तेषां मते प्रतिभासकल्पकसमानकालीनकल्पकवत्त्वं सादिकल्पकवत्त्वं चाविद्यायामस्त्येव । अतोऽविद्यायाः सादित्वापातात् अनादित्वघटितलक्षणस्यासम्भवदोषः सुदृढ एवेत्यालोच्य तृतीयं प्रयोजकमुक्तं मूलकृता— **विद्या अनिवृत्त्यप्रयुक्तनिवृत्तिप्रतियोगित्वमिति ।** अस्यार्थः—विद्यायाः अनिवृत्तिविद्यासम्बन्धः इत्यर्थः । विद्यासम्बन्धाप्रयुक्तनिवृत्तिप्रतियोगित्वं सादित्वादीनां प्रयोजकम् । शुक्तिरजतादीनां या निवृत्तिः सा विद्यासम्बन्धाप्रयुक्तैव, किन्तु शुक्तिरजतोपादानाज्ञाननिवृत्तिप्रयुक्ता । आविद्यकवस्तुमात्रस्य निवृत्तिः विद्यासम्बन्धाप्रयुक्तैव, किन्तु सोपादानाज्ञाननिवृत्तिप्रयुक्ता । निरुपादानाया अविद्याया निवृत्तिस्तु विद्यासम्बन्धप्रयुक्तैव । अतो विद्यासम्बन्धाप्रयुक्तनिवृत्ति प्रतियोगित्वं सादिकल्पितवस्तुमात्रेऽस्ति, अविद्याया निवृत्तिस्तु नैवम्, किन्तु विद्यासम्बन्धप्रयुक्तैव । अनादिजीवेश्वरभेदादीनां निवृत्तिरपि अविद्यानिवृत्तिरिव विद्यासम्बन्धप्रयुक्तैव । अविद्याकार्यसादिशुक्तिरजतादीनां यथा स्वोपादानीभूताज्ञाननिवृत्ति प्रयुक्ता निवृत्तिर्नैवमविद्याया जीवेश्वरभेदादीनां च निवृत्तिः अतोऽविद्याकल्पिताऽपि यथा अनादिः तथा कल्पितजीवेश्वरभेदादयोऽप्यनादयः ।

यदि जीवेश्वरभेदादीनामपि अविद्यानिवृत्तिप्रयुक्तनिवृत्तिरेव स्वीक्रियते तदा कल्पितजीवेश्वरभेदादीनामपि सादित्वं स्यात् इत्यत आह मूलकारः—**प्रागभाव-**

प्रतियोगित्वं वा। प्रागभावप्रतियोगित्वमेव सादित्वप्रयोजकम्। अविद्याकार्य-शुक्तिरजतादीनां प्रागभावप्रतियोगित्वसत्त्वात् तेषां सादित्वमेव सिद्ध्यति। अविद्यायां वा जीवेश्वरभेदादौ वा सादित्वप्रयोजकप्रागभावप्रतियोगित्वाभावात् तेषां सादित्वं न सिद्ध्यति। अतोऽविद्यायां सादित्वाभावात् अनादित्वघटितम-ज्ञानलक्षणं नासम्भवदोषदुष्टम्।]

अद्वैतवादिनः ज्ञाननिवर्त्याया अभावविलक्षणाया अविद्याया अनादित्वं स्वीकुर्वन्ति। किन्तु तन्न संगतम्। यज्ज्ञाननिवर्त्यमभावविलक्षणञ्च तत्साद्येव भवति, यथा शुक्तिरजतादि। अत्र पूर्वपक्षी एवमनुमानं प्रमाणयति—अविद्या आदिमती ज्ञाननिवर्त्यत्वसमानाधिकरणाभावविलक्षणत्वात् शुक्तिरजतवत्। पूर्वपक्षिणा प्रदर्शितमेतदनुमानं न संगतम्। यत एतदनुमानमागमविरोधि। यदनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इति वात्स्यायनभाष्यवचनात्। अतो नेदं सदनुमानम्, किन्तु अनुमानाभासः। "अजामेकां लोहितशुक्लकृष्णाम्" [श्वेताश्वतर, ४।५], एवम् "अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते" [गौडपादकारिका, १।१६] इत्याद्यागमेन अविद्याया अनादित्वप्रदर्शनात्, तद्विरोध्यनुमानमनुमानाभास एव। न केवलमागमविरोधः। पूर्वपक्ष्यनुमाने सत्प्रतिपक्षोऽपि। तथा हि—अविद्या अनादिर्ज्ञाननिवर्त्यत्वसमानाधिकरणभाव-विलक्षणत्वात् ज्ञानप्रागभाववत्। न केवलं पूर्वपक्ष्यनुमानं सत् प्रतिपक्षितं किन्तु सोपाधिकमपि। पूर्वपक्षिप्रदर्शितानुमाने भावत्वमुपाधिः। शुक्तिरजतदृष्टान्ते भावत्वं वर्तते। पक्षीकृतायामविद्यायां भावत्वं नास्ति। अतः उपाधेः सपक्षे सत्त्वात् साध्यव्यापकत्वम्, पक्षे असत्त्वात् साधनाव्यापकत्वञ्च। अत्र नृसिंहाश्रम-श्रीचरणास्तु आहुः—नापि कल्पितत्वादज्ञानस्य अनादित्वासंभवः। स्वसमानाधि-करणस्वसमानकालीनात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वस्यानादित्वेनाविरोधात्। ननु कल्पितस्य दोषजन्यत्वमिति चेत्, तर्हि परमार्थस्यापि गुणजन्यत्वं नियतमिति तव तद्विरहात् नित्यमात्रविलोपप्रसंगः। ननु कार्यं कारणजन्यम्, तन्निवृत्तौ निवर्तते। पारमार्थिकञ्च सर्वं न कार्यम्, किन्तु यथाप्रमाणं किञ्चिदेवेति चेत्, तर्हि कल्पितमपि सर्वं दोषजन्यमिति न नियमः, किन्तु यथानुभवं कार्यमेव कल्पितं दोषजन्यमिति तुल्यम्। दोषजन्यत्वाभावेऽपि कल्पितत्वे किमात्मापि

न च—अभावविलक्षणाविद्यादौ भावविलक्षणत्वमसंभवि, परस्परविरोधादिति—वाच्यम् ; . भावत्वाभावत्वयोर्बाधक-

---

कल्पितो न भवेदिति चेत्, परमार्थस्यापि जन्यत्वे किमित्यात्मापि जन्यो न भवेदिति समम्। किञ्च, कल्पितत्वे हि जडत्वं प्रयोजकम्, तच्च दोषाजन्यत्वेऽपि अज्ञानादेरक्षतम्। न च वैपरीत्यम्, आत्मनः सत्यज्ञानाद्यात्मतया श्रुत्यादिभिः प्रमितत्वात्। आत्मनोऽपि कल्पितत्वे जगदान्ध्यप्रसंगात्। जगदवभासस्यात्म-स्वरूपत्वात्। तथा च श्रुतिः—'तस्य भासा सर्वमिदं विभाती'ति आत्मनोऽपि कल्पितत्वे तदधिष्ठानानिरूपणात्, सर्वभ्रमाधिष्ठानचिद्रूपस्यैव आत्मत्वात्। कल्पितस्य बाधनियमात्, आत्मनश्च तदभावात। प्रत्युत, सर्वभ्रमबाधावधित्वात्। तथा च श्रुतिः—'अथात आदेशो नेति नेति नह्येतस्मादि'ति। नेत्यन्यत् परमस्तीति। कल्पिताज्ञानस्य अनादित्वे किं प्रमाणमिति चेत्, न, ब्रह्मविषयम-ज्ञानमनादि, सर्गाद्यकार्योपादानत्वात्। कार्यस्य सर्गाद्यकालीनकार्योपादानत्वा-संभवात् नाप्रयोजकत्वम्। उपादानत्वञ्च परिणामितया अज्ञानस्य ब्रह्मणश्च कार्यसत्तादिप्रदत्वेन जडस्य सत्यानृतोभयात्मकत्वाद् उभयमपि उपादानमिति नासिद्धिर्न वा साध्यविकलो दृष्टान्तः। [अद्वैतदीपिका, द्वितीयपरिच्छेदः, २५२ २५७ पृ०] ॥६॥

७—भावत्वाभावत्वयोः परस्परविरोधान्न भावाभावविलक्षणाविद्या सेद्धुमर्हतीति पूर्वपक्षी शङ्कते—**न च अभावविलक्षणाविद्यादौ भावविलक्षणत्वमसम्भवि, परस्परविरोधादिति वाच्यम्।** इतः प्राक् पूर्वपक्षिणा अविद्या, सादिः ज्ञाननिवर्त्यत्वसमानाधिकरणाभावविलक्षणत्वात्, शुक्तिरजतवद् इत्यनुमानेन अवि-द्यायाः सादित्वे प्रदर्शिते सिद्धान्तिना भावत्वोपाध्युद्भावनेन तदनुमानं दूषितम्, तदसहमानः पूर्वपक्षी प्रदर्शितोपाधेः साधनव्यापकत्वप्रदर्शनाय पक्षीकृतायाम् अवि-द्यायां भावत्वम् एव वर्तते; पक्षे उपाधेः सत्त्वाद् उपाधिः साधनव्यापकस्तथा च न भावत्वस्योपाधित्वमिति प्रदर्शनाय अविद्या न भावविलक्षणा भवितुमर्हति, अवि-द्याया अभावविलक्षणत्वात; अभावविलक्षणाऽविद्या भावरूपैव तथा च भावत्वं नोपाधिः। भावत्वाभावत्वयोः परस्परविरोधात्। 'परस्परविरोधे हि न प्रकारा-न्तरस्थितिरि'ति न्यायात् भावाभावविलक्षणाऽविद्या न भवितुमर्हतीति भावः।

सत्त्वेन तृतीयप्रकारत्वसिद्धौ परस्परविरहव्यापकत्वरूपविरोधासिद्धेः, परस्परविरहव्याप्यत्वरूपस्तु विरोधो नैकविरहेणापरमाक्षिपति। नहि गोत्वविरहोऽश्वत्वमाक्षिपतीत्युक्तम् ॥७॥

---

अभावविलक्षणस्यापि भाववैलक्षण्यस्वीकारे व्याघातः स्यादित्यभिप्रायः। अस्य व्याघातस्य प्रथममिथ्यात्वलक्षणे एव परिहृतत्वान्नैवमिति परिहरति सिद्धान्ती—

**भावत्वाभावत्वयोर्बाधकसत्त्वेन तृतीयप्रकारत्वसिद्धौ परस्परविरहव्यापकत्वरूपविरोधासिद्धेः। परस्परविरहव्याप्यत्वरूपस्तु विरोधो नैकविरहेणापरमाक्षिपति। न हि गोत्वविरहोऽश्वत्वमाक्षिपतीत्युक्तम्।**

अविद्याया भावत्वेऽभावत्वे च बाधकसत्त्वात् अविद्याभावाभावविलक्षणा तृतीयप्रकाराविद्याया भावत्वे बाधकमिदमेव अविद्याया ज्ञाननाश्यत्वात् अविद्याविनाशिनी, अतो विनाशिनी अविद्या यदि भावरूपा स्यात् आदिमती स्यात् विनाशिभावस्य सादित्वनियमाद् घटादिवत्। किन्तु अविद्या अनादिः अविद्याया अनादित्वम् 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' 'अजामेकामि'त्यादिशास्त्रसिद्धम्। अतो विनाशिभाववस्तुनः सादित्वनियम एव अनाद्यविद्याया भावत्वबाधकः। एवम् अविद्याया अभावत्वेऽपि बाधकमिदं यदविद्या जगदुपादानभूता, अभावस्तु न कस्याप्युपादानं भवितुमर्हति। जगतः परिणाम्युपादानत्वेनैव अविद्या सिद्ध्यति। अत उपादानत्वमेव अविद्याया अभावत्वे बाधकम्। अतो बाधकादेव अविद्या भावाभावविलक्षणा तृतीयप्रकारा सिद्ध्यति। भावत्वाभावत्वयोः परस्परविरहव्यापकत्वमेव नास्ति। यत्र यत्र भावत्वाभावः तत्राभावत्वम्, यत्र यत्राभावत्वं नास्ति तत्र भावत्वमिति परस्परविरहव्यापकत्वं नास्त्येव। भावत्वाभावत्वयोः परस्परविरहव्याप्यत्वे परस्परविरहव्याप्ययोः गोत्वाश्वत्वयोरेकत्र उष्ट्रादौ अभावोपलम्भात्, न भावत्वाभावत्वयोरेकत्र विरहो विरुद्ध्यते। एकविरहेण—गोत्वविरहेण नाश्वत्वमाक्षिपति, नाप्यश्वत्वविरहेण गोत्वमाक्षिपति। उष्ट्रमहिषादौ द्वयोरेवाभावोपगमात्, एतच्च सर्वं प्रथममिथ्यात्वलक्षणे एवाचार्येण व्युत्पादितम्। उक्तञ्च तत्रैव—"न च व्याहतिः, सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया वा? परस्परविरहव्याप्यतया वा? तत्र नाद्यः, तदनङ्गीकारात्। तथा ह्यत्र त्रिकालाबाध्यत्वरूपसत्त्वविरहो नासत्त्वम्, किन्तु

न चात्मवदनादेरभावविलक्षणस्यानिवर्त्यत्वम्; आत्मत्वस्यैवोपाधित्वात्। न चात्यन्ताभावान्योन्याभावयोः साध्याव्याप्तिः,

---

क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्। तद्व्यतिरेकश्च साध्यत्वेन विवक्षित इत्यादि।" अत एवोक्तमाचार्येण—नहि गोत्वविरहोऽश्वत्वमाक्षिपतीत्युक्तम्। प्रथममिथ्यात्वलक्षणे इति शेषः। "गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोः उष्ट्रादौ एकत्र सहोपलम्भादि" त्यनेन उक्तम्। अत्र यदपि केनचिदुक्तम्—सद्वैलक्षण्यासद्वैलक्षण्ययोः परस्परविरुद्धत्वात् तद्वैलक्षण्यद्वयमेकत्र स्थातुं नार्हति। वयन्तु पूर्वपक्षिणः सदसच्चेति राशिद्वयं स्वीकुर्मः। किन्तु सदसद्विलक्षणोऽपि कश्चिद्राशिरस्तीति न स्वीकुर्मः। अद्वैतवादिनस्तु सदसद्वैलक्षण्ययोर्धर्मयोः विरोधं न स्वीकुर्वन्ति। ते तु भावाभावविलक्षणमपि वस्तु स्वीकुर्वन्ति तत्तु असम्भवि। भावाभावविलक्षणं किञ्चिद्वस्तु नैव भवितुमर्हति। अद्वैतवादिनः भावाभाववैलक्षण्ययोः विरोधमनङ्गीकुर्वन्त एव भावाभावविलक्षणं तृतीयं प्रकारं स्वीकुर्वन्ति। एतस्मिन्नद्वैतवादिमते अयमेव सुस्पष्टो दोषः यत् तृतीयप्रकारवस्तुसिद्धौ सदसद्वैलक्षण्ययोः धर्मयोरविरोधः सिद्ध्यति। प्रदर्शितविरुद्धधर्मयोरविरोधसिद्धौ तृतीयप्रकारं वस्तु सिद्ध्यति। अतस्तृतीयप्रकारवस्तुसिद्धौ अविरोधसिद्धिः, अविरोधसिद्धौ च तृतीयप्रकारसिद्धिः। अतः सुदृढोऽन्योन्याश्रयदोषः। एतन्न संगतम्, धर्मयोरविरोधसिद्ध्या तृतीयप्रकारवस्तुनः सिद्धिर्यदि स्यात्, स्यादन्योन्याश्रयो दोषः, किन्तु तन्न। सत्त्वासत्त्वयोः भावत्वाभावत्वयोश्च धर्मयोरविद्यायां बाधकं वर्तते। बाधकादेव अविद्यायां भावत्वाभावत्वयोरभावः सिद्ध्यति। बाधकन्तु प्रागेवोक्तम्। भावत्वेऽनादित्वं न स्यात्, अभावत्वे उपादानत्वं न स्यादित्यादिना। अतः पूर्वपक्षिप्रदर्शितस्यान्योन्याश्रयस्यावसरो नास्ति ॥७॥

८—इदानीं पूर्वपक्षी—अविद्या यदि अनाद्यभावविलक्षणा स्यात्, ज्ञाननिवर्त्या न स्यात्, अनाद्यभावविलक्षणस्य वस्तुनः निवर्त्यत्वादर्शनात्, यथात्माऽनाद्यभावविलक्षणः, न च निवर्तते। एवमेवाविद्यापि न निवर्तिष्यते इति शङ्कते—नचात्मवदनादेः अभावविलक्षणस्यानिवर्त्यत्वम्। अयम्भावः—अविद्या ज्ञाननिवर्त्या न भवितुमर्हति, अनादित्वे सत्यभावविलक्षण-

अधिकरणातिरिक्तस्यानिवर्त्यस्यात्यन्ताभावादेरनभ्युपगमात्। न च तुच्छे साध्याव्याप्तिः, अभावविलक्षणत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वोपपत्तेः। किञ्च, सादित्वमनादित्वं वा न निवर्त्यत्वानिवर्त्यत्वयोः प्रयोजकम्; ध्वंसप्रागभावयोस्तदभावात्। नापि भावत्वविशेषितं तत् तथा; अभावे तदसत्त्वेन भिन्नभिन्नप्रयोजककल्पनापत्तेः, भावनिवृत्त्यनिवृत्त्योरेव तयोः प्रयोजकत्वे च भावविलक्षणाविद्यादौ, ताभ्यां तयोरनापादनात्। तस्मान्नाशसामग्रीसन्निपातासन्निपातावेव निवर्त्यत्वानिवर्त्यत्वयोः प्रयोजकाविति मन्तव्यम्। तौ च फलबलकल्प्याविति न कोऽपि दोषः ॥८॥

---

त्वादात्मवत् इत्यनुमानं पर्यवसितम्। अतो ज्ञाननिवर्त्यघटिताविद्यालक्षणस्य अविद्यामात्रेऽभावात् लक्षणस्य पुनरसम्भवो दोषः समायातः सोपाधिकत्वाद् अयमनुमानाभासः न स्वाभिप्रेतसाधकः इति समाधत्ते सिद्धान्ती—आत्मत्वस्यैवोपाधित्वात्। न चात्यन्ताभावान्योन्याभावयोः साध्याव्याप्तिः, अधिकरणातिरिक्तस्य अनिवर्त्यस्य अत्यन्ताभावादेरभ्युपगमात्। न च तुच्छे साध्याव्याप्तिः, अभावविलक्षणत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वोपपत्तेः। किञ्च, सादित्वमनादित्वं वा न निवर्त्यत्वानिवर्त्यत्वयोः प्रयोजकम्। ध्वंसप्रागभावयोस्तदभावात्। नापि भावत्वविशेषितं तत्तथा। अभावे तदसत्त्वेन भिन्न-भिन्न प्रयोजककल्पनापत्तेः। भावनिवृत्त्यनिवृत्त्योरेव तयोः प्रयोजकत्वे च भावविलक्षणाविद्यादौ, ताभ्यां तयोरनापादनात्। तस्मान्नाशसामग्रीसन्निपातासन्निपातावेव निवर्त्यत्वानिवर्त्यत्वयोः प्रयोजकाविति मन्तव्यम्। तौ च फलबलकल्प्यौ इति न कोऽपि दोषः। प्रदर्शिते पूर्वपक्ष्यनुमाने आत्मत्वमेवोपाधिः। आत्मत्वञ्च दृष्टान्ते आत्मन्यस्ति इत्युपाधेः साध्यव्यापकत्वम् पक्षीकृतायामविद्यायां नास्तीति उपाधेः साधनाव्यापकत्वञ्च। प्रदर्शितमुपाधिमुद्धर्तुमाह—न चात्यन्ताभावान्योन्याभावयोरिति। अत्यन्ताभावान्योन्याभावयोर्नित्ययोरवर्त्यत्वं साध्यं वर्तते, किन्तु आत्मत्वमुपाधिर्न वर्तते। अतः उपाधेः साध्यव्यापकत्वं नास्ति, अत आत्मत्वं नोपाधिः।

सिद्धान्तमाह—अधिकरणातिरिक्तस्येति। अत्यन्ताभावान्योन्याभावयोरधिकरणातिरिक्तयोरनिवर्त्यत्वानभ्युपगमात्। आत्माधिकरणकौ यौ अत्यन्ताभावान्योन्याभावौ तौ आत्मस्वरूपतयैव अनिवर्त्यौ। अतिरिक्तत्वे तयोरपि निवर्त्यत्वात्। न हि अत्यन्ताभावोऽन्योन्याभावो वा ? अनिवर्त्यतया सिद्धान्ते स्वीक्रियते। तयोरनिवर्त्यत्वन्तु, तयोरधिकरणरूपतया अधिकरणानिवर्त्यत्वात् बोध्यम्। तयोरधिरणातिरिक्तत्वपक्षे निवर्त्यत्वमेव। अधिकरणातिरिक्तात्यन्ताभावान्योन्याभावयोः अनिवर्त्यत्वस्यास्माभिरनङ्गीकारात्। अभावस्याधिकरणात्मकत्वं प्राभाकरैरपि अङ्गीक्रियते। अत्यन्ताभावान्योन्याभावयोः अधिकरणानतिरिक्ततया तत्रोपाधेः साध्याव्यापकत्वासम्भवेऽपि तुच्छे शशविशाणादौ उपाधेः साध्याव्यापकत्वमेव। तुच्छे शशविषाणादौ अनिवर्त्यत्वरूपं साध्यमस्ति किन्तु तत्र आत्मत्वरूपोपाधिर्नास्ति। अतस्तुच्छे साध्यवति उपाधेरभावात् उपाधेः साध्याव्यापकत्वमेव। एतत्समाधानायाह—उपाधेः शुद्धसाध्याव्यापकत्वेऽपि साधनावच्छिन्नसाध्यव्यापकत्वं वर्तत एव। अभावविलक्षणत्वसमानाधिकरणानिवर्त्यत्वस्य आत्मन्येव सम्भवात् तत्र आत्मत्वस्य सत्त्वादुपाधेः साधनावच्छिन्नसाध्यव्यापकत्वं निष्प्रत्यूहम्।

[ पूर्वपक्षी शङ्कते—सिद्धान्तिना अविद्यायाः ज्ञाननाश्यत्वमभ्युपगम्यते। ज्ञाननाश्यभाववस्तुनः अनादित्वे ज्ञाननाश्यत्वमेव न स्यात्, भावत्वसमानाधिकरणसादित्वमेव विनाशित्वप्रयोजकम्। यत्र भावत्वसमानाधिकरणसादित्वमस्ति तत्रैव विनाशित्वं सिद्ध्यति। एवमेव भावत्वसमानाधिकरणमनादित्वमविनाशित्वप्रयोजकम्। यथा भावत्वसमानाधिकरणानादिरात्मा न विनश्यति। ]

किञ्च न सादित्वमात्रं विनाशित्वप्रयोजकम्, न वा अनादित्वमविनाशित्वप्रयोजकम्। यत् सादि तदेव विनश्यति, यदनादि तन्न विनश्यतीति नियमो न भवितुमर्हति। ध्वंसस्य सादित्वेऽपि अविनाशित्वात्। प्रागभावस्यानादित्वेऽपि विनाशित्वात्। अतः सादित्वमनादित्वं वा न निवर्त्यत्वानिवर्त्यत्वयोः प्रयोजकम्। भावत्वसमानाधिकरणसादित्वं ध्वंसे नास्ति, अतो ध्वंसो न विनश्यति, एवमेव भावत्वसमानाधिकरणानादित्वं प्रागभावे नास्ति, अतः प्रागभावो नश्यति। अतः सिद्धान्तिना यदुक्तं ध्वंसप्राग-

भावयोस्तदभावादिति तदयुक्तम्। भावत्वसमानाधिकरणसादित्वस्य विनाशित्वे भावत्वसमानाधिकरणानादित्वस्य अविनाशित्वे प्रयोजकत्वात्। पूर्वपक्षिकृतमिदं समाधानमतितुच्छम्; तथात्वे भावाभावयोर्विनाशित्वाविनाशित्वयोर्भिन्नप्रयोजककल्पनापातात्। भाववस्तुनो विनाशित्वेऽविनाशित्वे च प्रयोजकौ यौ धर्मौ अभावस्य विनाशित्वेऽविनाशित्वे च तौ धर्मौ न प्रयोजकौ भवतः। अतोऽभाववस्तुनः विनाशित्वेऽविनाशित्वे च प्रयोजकधर्मान्तरमङ्गीकरणीयम्, एवं भाववस्तुनोऽपि विनाशित्वाविनाशित्वयोः प्रयोजकं धर्मान्तरं कल्पनीयम्। तथा च भाववस्तुनः विनाशित्वाविनाशित्वयोः प्रयोजकौ यौ धर्मौ तद्भिन्नौ धर्मौ अभाववस्तुनो विनाशित्वाविनाशित्वयोः प्रयोजकौ कल्प्यौ। तथा च प्रयोजकधर्मान्तरकल्पनागौरवम्। एकरूपेण भावाभावयोर्विनाशित्वाविनाशित्वयोः प्रयोजककल्पना असंभवात्। किञ्च, अनादिप्रागभावोऽपि न निवर्तितुमर्हति। प्रागभावो न निवर्तते, अनाद्यभावत्वात्, अत्यन्ताभाववत्, अन्योन्याभाववच्च। अत्र यदि पूर्वपक्षी ब्रूयात्—अनादिप्रागभावस्यानिवृत्तौ प्रतियोगिन उत्पत्तिरेव न स्यात्, तथा चानुभवादिविरोधः, एवञ्चेत् अनाद्यज्ञानस्यानिवृत्तौ ज्ञानस्याप्युत्पत्तिर्न स्यात्। तथा चानुभवविरोधः मत्पक्षेऽपि समान एव, अन्यत्राभिनिवेशात्।

किञ्च भाववस्तुनः एव विनाशित्वाविनाशित्वयोः प्रयोजकौ यौ धर्मौ पूर्वपक्षिणा प्रदर्शितौ तथात्वेऽपि भावविलक्षणा-विद्यादीनां विनाशाविनाशयोरापत्तिर्न भवितुमर्हति। भावत्वसमानाधिकरणानादित्वं भाववस्तुनोऽविनाशित्वे प्रयोजकमपि भावविलक्षणाया अविद्याया अविनाशित्वे तत् प्रयोजकं न भवितुमर्हति। भाववस्तुनो विनाशित्वाविनाशित्वयोः प्रयोजकाभ्यामभावविलक्षणाविद्यादीनां विनाशित्वाविनाशित्वयोरापादनासम्भवात्। अतः पूर्वपक्षिणापि भावाभावसाधारणविनाशित्वाविनाशित्वयोः प्रयोजकौ तं नाशकसामग्रीसन्निपातासन्निपातावेव वक्तव्यौ। यस्य नाशकसामग्रीसन्निपातो वर्तते तन्नश्यति, यस्य नास्ति तन्न नश्यति। उक्तञ्च किरणावल्यामुदयनेन—आदिमती प्रदीपसन्ततिर्निवर्तते। दुःखसन्ततिस्तु अनादिरियमनुवर्तिष्यत इति चेन्न, मूलोच्छेदानुवृत्त्योः प्रयोजकत्वात्। मूलोच्छेदाद्धि सन्ततेरुच्छेदः,

मूलानुवृत्तौ चानुवृत्तिः। अन्यथा आदिमत्त्वाविशेषेऽपि कालनियमो न स्यात्। [किरणावली, पृ० १०] नाशकसामग्रीसन्निपातासन्निपातौ च फलबलकल्प्यौ। यस्य नाशो भवति, तत्र नाशकसामग्रीसन्निपातो वर्तते; यत्र नाशो नास्ति, तत्र न वर्तते। अत्र नृसिंहाश्रमश्रीचरणाः—"ननु सादित्वमनादित्वं वा विनाशाविनाशयोर्न निमित्तम्, किन्तु विरोधिसन्निपातासन्निपातौ। किञ्च, अनादिभावो न निवर्तते इति सामान्यव्याप्तेः अज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्तिर्बलीयसी। अभाववैलक्षण्यादात्मवदनिवृत्तौ भाववैलक्षण्यात् प्रागभावनिवृत्तिः किं न स्यात् इति चेन्न, अज्ञानं न विरोधिसंसर्गी, अनादिभावत्वात् आत्मवदित्यनुमानात्। यः पर्वतः सोऽनग्निकः इति विशेषव्याप्तिप्रसंगात्। त्वदभिमताज्ञानस्यासिद्धेः विशेषव्याप्त्यभावात् भाववैलक्षण्यान्निवृत्तौ ध्वंसात्यन्ताभावादेरपि निवृत्त्यापातात्।" [अद्वैतदीपिका, द्वितीयपरिच्छेदः, पृ० २०९, २६२] पूर्वपक्षिप्रदर्शितमनुमानं स्वानुभवविरुद्धम्, श्रुतिविरुद्धमनुमानविरुद्धञ्च। स्वानुभवविरुद्धं तावदज्ञानप्रत्यक्षप्रकरणे न जानामीति साक्षिप्रत्यक्षमेव अज्ञानसाधकम् न जानामीति प्रतीतिः सर्वानुभवसिद्धा। न जानामीति प्रतीतौ ज्ञानविरुद्धरूपेणैवाज्ञानं भासते। अहमज्ञ इत्यादिसाक्षिप्रत्यक्षमेव अज्ञानरूपस्य धर्मिणः साधकम्, येन साक्षिप्रत्यक्षेण अज्ञानस्य सिद्धिस्तेनैव ज्ञानविरोधित्वरूपेण अज्ञानस्य सिद्धिः। ज्ञानविरोधित्वरूपेण अज्ञानग्राहकसाक्षिप्रत्यक्षं सर्वानुभवसिद्धम्। सर्वानुभवसिद्धप्रतीतौ विद्यमानायाम् अज्ञानं विरोधिसंसृष्टं न भवतीत्यनुमानमनुभवविरुद्धं धर्मिग्राहकमानविरुद्धञ्च। ज्ञानमेवाज्ञानविरोधि, अज्ञानं यदि विरोधिसंसृष्टं न स्यात्, तर्हि ज्ञानमेव नोत्पद्येत। ज्ञानेनाज्ञानं नष्टमिति प्रतीतिः सर्वेषामेवास्ति। अतोऽज्ञानं विरोधिसंसर्गि न भवतीत्यनुमानं सर्वथा अनुभवविरुद्धम्। किञ्च, ज्ञानविरोध्येवाज्ञानशब्दस्यार्थः। अज्ञानशब्दार्थानुधावनेऽपि कृतेऽज्ञानविरोधि किमपि नास्ति, अथ वा अज्ञानं विरोधिसंसर्गि न भवति इत्यनुमानमेव नोदेतुमर्हति। ज्ञानविरोधि अभावविलक्षणवस्तु एवाज्ञानम्। ज्ञानविरोधी ज्ञानप्रागभावोऽपि वर्तते इति तु सर्वथा असंगतः। यतः प्रागभाव एव सर्वथा असिद्धः। असिद्धे ज्ञानप्रागभावे ज्ञानविरुद्धत्वमेव नास्ति। प्रगभावस्वीकारेऽपि ज्ञानं यत् ज्ञानप्रागभावविरोधि तत् प्रतियोगित्वेनैव, किन्तु ज्ञानत्वरूपेण ज्ञानं ज्ञानप्रागभावविरोधि न भवति,

अपि च यद्यविद्यादेरभावविलक्षणत्वसमानाधिकरणानादित्वेनात्मवदनिवर्त्यत्वं साध्यते, तर्हि भावविलक्षणत्वेन प्रागभाववन्निवर्त्यत्वमेव किं न साध्यते ? न च ध्वंसात्यन्तान्योन्याभावेषु व्यभिचारः; अधिकरणातिरेके तेषामपि निवर्त्यत्वाभ्युपगमात् ॥९॥

---

अथ च ज्ञानत्वरूपेण ज्ञानविरोधित्वमेव अज्ञानपदस्यार्थः। किञ्च, "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" इति गीतावाक्यात [भगवद्गीता, ५।१६] अपि अज्ञानं यत् स्वविरोधिज्ञानद्वारा विनश्यति तत् सिद्ध्यति। अतोऽज्ञानं विरोधिज्ञानसंसर्गि न भवतीत्यनुमानं गीतावाक्यविरुद्धम्। न केवलं गीतावाक्यविरुद्धम् किन्तु भगवत्प्रत्यक्षविरुद्धमपि। एतस्माद् भगवद्वाक्यादेतत्समानार्थकभगवत्प्रत्यक्षमप्यनुमीयते। अतो भगवद्वाक्यानुमितंभगवत्प्रत्यक्षमपि प्रदर्शितानुमानविरोधि। 'भूयश्चान्ते विश्वमायानिवृत्तिरि'त्यादिश्वेताश्वतरश्रुतावपि [श्वेताश्वतर०, १।१०] अज्ञानं ज्ञाननाश्यमित्युक्तम्। ज्ञानमज्ञानस्य नाशकमिति श्रुत्यादिसिद्धम्। नाशकमेव विरोधि, अतः पूर्वपक्ष्यनुमानमसङ्गतम्। अज्ञानं यत् भावरूपं तदपि गीतावाक्येन प्रतिपादितम्। "अज्ञानेनावृतं ज्ञानम्" [भगवद्गीता० ५।१५] इत्युक्त्या अज्ञानस्य भावरूपत्वमेव सिद्धम्, अभावस्य आवरकत्वायोगात्। "एवमनादिमायया सुप्तः" [गौडपादकारिका १।१६] इत्यादि शास्त्रेऽपि मायाया अनादित्वमुक्तम्। माया अविद्या अज्ञानमित्यर्थान्तरम् "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते" इत्यादिविष्णुपुराणवाक्यादपि विरोधिज्ञानेनैवाज्ञानस्य निवृत्तिः प्रतिपादिता। अतोऽज्ञानं विरोधिसंसर्गि न भवतीत्यनुमानं तुच्छम् ॥८॥

९—अपि च यदि अविद्यादेरभावविलक्षणत्वसमानाधिकरणानादित्वेनात्मवदनिवर्त्यत्वं साध्यते तर्हि भावविलक्षणत्वेन प्रागभाववन्निवर्त्यत्वमेव किं न साध्यते। न च ध्वंसात्यन्तान्योन्याभावेषु व्यभिचारः, अधिकरणातिरेके तेषामपि निवर्त्यत्वाभ्युपगमात्।

पूर्वपक्षिमतमाशङ्क्य समाधत्ते—अविद्या न विनश्यति, अभावविलक्षणत्वसमानाधिकरणनादित्वात् आत्मवत्। आत्मा यथा अभावविलक्षणत्वसमानाधिकरणानादित्वात् न निवर्तते, एवमविद्यापि न निवर्तिष्यते। पूर्वपक्षिणा यदि प्रदर्शितेनानुमानेन

**न च—अज्ञानस्य यावत्स्वविषयधीरूपसाक्षिसत्त्वमनुवृत्तिनियमेन निवृत्त्ययोग इति—वाच्यम् ॥१०॥**

---

अविद्याया अनिवर्त्यत्वं साध्यते, तर्हि अस्माभिरपि अनुमानान्तरेण अविद्यायाः निवर्त्यत्वं साधयिष्यते। तथाहि—अविद्या निवर्तते, भावविलक्षणत्वे सति अनादित्वात्, प्रागभाववत्। भावविलक्षणः अनादिः प्रागभावो यथा निवर्तते, तथा अविद्याऽपि निवर्तिष्यते। प्रदर्शितेऽनुमाने पूर्वपक्षी व्यभिचारं शङ्कते—भावविलक्षणत्वे सति अनादित्वादिति हेतोरत्यन्ताभावान्योन्याभावयोर्व्यभिचारः। यदि अनादित्वमपहाय भावविलक्षणत्वमेव हेतुत्वेनोपादीयते तदा ध्वंसेऽपि व्यभिचारः। अत एवोक्तं मूले—ध्वंसात्यन्तान्योन्याभावेषु इति। प्रदर्शितं व्यभिचारमुद्धरति सिद्धान्ती—ध्वंसादीनामधिकरणातिरेके तेषामपि निवर्त्यत्वाभ्युपगमादिति। उक्तञ्च वेदान्तपरिभाषायाम्—"ध्वंसस्य स्वाधिकरणकपालनाशे नाश एव। न च घटोन्मज्जनापत्तिः, घटध्वंसध्वंसस्यापि घटप्रतियोगिकध्वंसत्वात्। अन्यथा प्रागभावध्वंसात्मकघटस्य नाशे प्रागभावोन्मज्जनापत्तिः। न चैवमपि यत्र ध्वंसाधिकरणं नित्यं तत्र कथं ध्वंशनाश इति वाच्यम्, तादृशमधिकरणं यदि चैतन्यव्यतिरिक्तं तदा तस्य नित्यत्वमसिद्धम्, यदि च ध्वंसाधिकरणं चैतन्यं तदा असिद्धिः। आरोपितप्रतियोगिकध्वंसस्याधिष्ठाने प्रतीयमानस्याधिकरणमात्रत्वात्।" [अनुपलब्धिपरिच्छेदः]। ब्रह्मातिरिक्तं सर्वं भावात्मकमभावात्मकं वा ब्रह्मण्येव वाविद्ययाकल्पितम्। तच्च ब्रह्मज्ञानेनैव निवर्तते। अतोऽनिवर्त्यात्यन्ताभावादिर्ब्रह्मातिरिक्तः सिद्धान्तेनैव सम्भाव्यते ॥९॥

१०—अनादिनिधनस्य अज्ञानसाक्षिणः सत्त्वेऽज्ञानस्य विनाशानुपपत्तिः। यथा प्रातिभासिकरजतादिसाक्षिणः सत्त्वे रजतं न विनश्यति। प्रतिभासकालमात्रस्थायित्वात् प्रातिभासिकस्य। अज्ञानप्रतिभासे साक्षिणि विद्यमानेऽज्ञानं न विनष्टुमर्हतीति पूर्वपक्षी शङ्कते—**न चाज्ञानस्य यावत् स्वविषयधीरूपसाक्षिसत्त्वमनुवृत्तिनियमेन निवृत्त्ययोग इति वाच्यम्**। सिद्धान्तेऽज्ञानस्य प्रमाणसिद्धत्वाभावात्तस्य साक्षिभास्यत्वमङ्गीकरणीयम्। साक्षिभास्यानां यावत् साक्षिसत्त्वमविनाश्यत्वं स्वीकार्यम्। प्रतिभासे विद्यमाने प्रतिभास्यं न विनष्टुमर्हति। अविद्योपहितचैतन्यस्य अविद्यासाक्षिणः अनादिनिधनत्वात् साक्षिणि विद्यमाने

दुःखशुक्तिरूप्यादेः स्वभासके साक्षिणि सत्येव निवृत्त्यभ्युपगमेन साक्षिभास्यानां यावत्साक्षिसत्त्वमवस्थाननियमानभ्युपगमात्। किं च केवलचिन्मात्रं न साक्षि, किंत्वविद्यावृत्त्युपहितम्। तथा चास्थिराविद्यावृत्त्युपहितस्य साक्षिणोऽप्यस्थिरत्वेन तत्सत्त्वपर्यन्तमवस्थानेऽप्यविद्यादेर्निवृत्तिरुपपद्यते। न च वृत्त्यनुपधानदशायामविद्यादेः शुक्तिरूप्यवदसत्त्वापत्तिः; सादिपदार्थ एवैतादृङ्नियमात्, धारावाहिकाविद्यावृत्तिपरम्पराया अतिसूक्ष्माया अभ्युपगमाच्चेति शिवम्॥११॥

---

कथं साक्ष्यमज्ञानं विनश्येत्। तथा चाज्ञानस्य ज्ञाननिवर्त्यत्वानुपपत्त्याऽव्याप्तिरसंभवो वा लक्षणस्य ॥१०॥

११—साक्षिभास्यानां यावत् साक्षिसत्यमवस्थाननियमाभावात् नायं दोष इति समाधत्ते सिद्धान्ती—दुःखशुक्तिरूप्यादेः स्वभासके साक्षिणि सत्येव निवृत्त्यभ्युपगमेन साक्षिभास्यानां यावत् साक्षिसत्त्वमवस्थाननियमानभ्युपगमात्। किञ्च, केवलचिन्मात्रं न साक्षि किन्तु अविद्यावृत्त्युपहितम्। तथा चास्थिराविद्या वृत्त्युपहितस्य साक्षिणोऽपि अस्थिरत्वेन तत्सत्त्वपर्यन्तमवस्थानेऽपि अविद्यादेर्निवृत्तिरुपपद्यते। न च वृत्त्यनुपधानदशायामविद्यादेः शुक्तिरूप्यवदसत्त्वापत्तिः, सादिपदार्थे एव एतादृङ् नियमात्। धारावाहिकाविद्यावृत्तिपरम्पराया अतिसूक्ष्माया अभ्युपगमाच्चेति शिवम्।

यद्यत् साक्षिभास्यं तद् यावत् साक्षिसत्त्वमवतिष्ठते इति नियमो नास्त्येव। साक्षिभास्यानां दुःखादीनां शुक्तिरजतादीनाञ्च स्वभासके साक्षिणि विद्यमाने एव निवृत्तिदर्शनेन प्रदर्शितनियमो न सिद्ध्यति। प्रदर्शितनियममनभ्युपगम्य समाधानमुक्त्वा नियममभ्युपगम्यापि समाधानमाह—किञ्च, केवलचिन्मात्रं न साक्षीति। साक्षिभास्यानां शुक्तिरजतादीनां तदाकाराविद्यावृत्त्युपहितचैतन्यं तत्साक्षि, न शुद्धचैतन्यं साक्षि। शुद्धचैतन्यस्यासङ्गत्वात् अविद्यावृत्तिं विना प्रातिभासिकशुक्तिरजतादिभिः सह साक्षिणोऽसम्बन्धात् साक्षिणा सम्बन्धाय अविद्यावृत्तिरपेक्षिता। उक्तञ्च संक्षेपशारीरकटीकायामाचार्येण—"चैतन्यं हि यदाकारवृत्तौ प्रतिबिम्बते तद्भासयति, प्रतिबिम्बाश्रयं च वृत्त्यादिकं तथा दर्शनात्।

यद्वा भ्रमोपादनत्वमज्ञानलक्षणम्। इदं च लक्षणम्। विश्वभ्रमोपादानमायाधिष्ठानं ब्रह्मेति पक्षे, न तु ब्रह्ममात्रोपादानत्वपक्षे,

---

सर्वजडप्रतिभासानुगतं हि चैतन्याकारत्वमेव प्रयोजकत्वं ब्रूमः। चैतन्यं यदाकारं भवति तत् प्रतिभासते इत्यर्थः। चैतन्यस्य तदाकारत्वं न स्वतोऽसंगत्वात्।" [संक्षेपशारीरकम्, पृ० ३७ का० सं०]। तथा चाविद्यासाक्षी अविद्याकाराविद्यावृत्त्युपहिता चित्। अविद्याकाराविद्यावृत्तिस्तु कादाचित्की अस्थिरा। अतोऽविद्यावृत्तेरस्थिरत्वेन तत्साक्षिणोऽप्यस्थिरत्वम्। साक्षिणोऽस्थिरत्वात् साक्षिसत्त्वपर्यन्तमविद्याया अवस्थानेऽपि अविद्यादेर्निवृत्तिरुपपद्यते। न च अविद्याकाराविद्यावृत्त्युपहितचैतन्यस्याविद्यासाक्षित्वेऽविद्यावृत्त्यनुपधानदशायामविद्याकाराया अविद्यावृत्तेरनुत्पाददशायां शुक्तिरूप्यवदविद्याया असत्त्वापत्तिः, तथा चाविद्याया असत्त्वे मोक्षापत्तिः; अविद्यासाक्षिणोऽभावादित्यर्थः। साक्षिभास्यानां यावत् साक्षिसत्त्वमवस्थानाभ्युपगमादिति वाच्यम्, सादिशुक्तिरजतादिपदार्थे एव एतादृशनियमस्वीकारात्। अनाद्यविद्यापदार्थे नायं नियमः। अतो न शुक्तिरूप्यवदविद्याया असत्त्वापत्तिः। साक्षिभास्यानां सादीनामनादीनाञ्च यावत् साक्षिसत्त्वमवस्थाननियमाभ्युपगमेऽपि धारावाहिकाविद्यावृत्तिपरम्पराया अतिसूक्ष्माया अभ्युपगमाच्च धारावाहिकाविद्यापरम्पराया अभ्युपगमे सर्वदाविद्याप्रतिभासापत्तिः इत्यत आह—अति सूक्ष्माया इति। अति सूक्ष्माविद्यावृत्तिः सर्वदा न प्रतिसन्धीयत इत्यर्थः। एवञ्च प्रथममविद्यालक्षणं सर्वदूषणास्पृष्टमनाविलमिति शिवम्॥११॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासि-
श्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां
बालबोधिन्यामविद्यायाः प्रथमलक्षण-
विवरण सम्पूर्णम्।

## अथ द्वितीयलक्षणम्

१२—अज्ञानस्य प्रथमलक्षणं सर्वदोषैरनाघ्रातमिति प्रसाध्य अज्ञानस्य द्वितीयं लक्षणं दर्शयितुमाह—यद्वा भ्रमोपादानत्वमज्ञानलक्षणम्। इदं च लक्षणं विश्वभ्रमोपादानमायाधिष्ठानं ब्रह्मेति पक्षे, न तु ब्रह्ममात्रोपादान-

ब्रह्मसहिताविद्योपादानत्वपक्षे वा; अतो ब्रह्मणि नातिव्याप्तिः, इतरत्र तु पक्षे परिणामित्वेनाचेतनत्वेन वा भ्रमोपादानं विशेषणीयमिति न दोषः; न वाऽभावारोपनिवर्तकप्रमानिवर्त्येऽव्याप्तिः; तस्यापि भ्रमोपादानत्वात् ॥१२॥

---

[त्व]पक्षे, ब्रह्मसहिताविद्योपादानत्वपक्षे वा। अतो ब्रह्मणि नातिव्याप्तिरितरत्र तु पक्षे परिणामित्वेन अचेतनत्वेन वा भ्रमोपादानं विशेषणीयमिति न दोषः। न वा अभावारोपनिवर्तकप्रमानिवर्त्येऽव्याप्तिः, तस्यापि भ्रमोपादानत्वात्। अध्यासभाष्ये भाष्यकृता मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य इत्याद्युक्तम्। तद्व्याख्यानावसरे, पञ्चपादिकायामुक्तम्—मिथ्याऽज्ञानमिति। मिथ्या च तदज्ञानञ्च मिथ्याऽज्ञानम्। मिथ्येत्यनिर्वचनीयता उच्यते। अज्ञानमिति च जडात्मिकाऽविद्याशक्तिः ज्ञानपर्युदासेनोच्यते। तन्निमित्तस्तदुपादान इत्यर्थः। भाष्यपञ्चपादिकयोरनिर्वचनीयमज्ञानमिवाध्यासोपादानमुक्तम्। विवरणकारस्तु तदाक्षिप्य समाधत्ते—ननु कथं मिथ्या अज्ञानमध्यासस्योपादानम्? तस्मिन् सति अध्यासस्योदयात्, असति चानुदयादिति ब्रूमः। पञ्चपादिकाविवरणग्रन्थालोचनयाऽनिर्वचनीयाविद्यायाः भ्रमोपादानत्वं ज्ञायते। तदनुसृत्याहाचार्यः—द्वितीयं लक्षणमवतारयति यद्वा भ्रमोपादानत्वमज्ञानलक्षणमिति। एतत् द्वितीयलक्षणं भाष्यादिसम्मतमेव। भ्रमोपादानत्वमेवाविद्यात्वम्, विश्वभ्रमोपादानं माया। मायाविषयीकृतं ब्रह्म अधिष्ठानं न तु उपादानम्। एतदेवाभिप्रेत्योक्तं मूले—इदं च द्वितीयं लक्षणं विश्वभ्रमोपादानमायाधिष्ठानं ब्रह्मेति पक्षे बोद्धव्यम्। प्रपञ्चोपादानत्वमविद्यायामेव। सा चाविद्या ब्रह्मण्यनाध्यस्ता। तथा च ब्रह्मणः भ्रमोपादानाज्ञानविषयत्वेनाधिष्ठानत्वमेव, न तु उपादानत्वम्। उपादानत्वं तु मायायामेव। यदि विश्वभ्रमोपादानत्वं ब्रह्मण्येवाङ्गीक्रियते ब्रह्मसहिताविद्यायां वा अङ्गीक्रियते तर्हि नेदं लक्षणं सङ्गच्छते। उपादानत्वस्य ब्रह्मण्यपि सत्त्वात् ब्रह्मणि लक्षणस्यातिव्याप्तिः स्यात्। अविद्यायामेव उपादानत्वमिति पक्षे तु ब्रह्मण्युपादानत्वाभावात् लक्षणस्य नातिव्याप्तिशङ्कापि। ब्रह्मण एवोपादानत्वमिति पक्षे ब्रह्मसहिताविद्याया उपादानत्वमिति वा पक्षे यद्यपीदं लक्षणमतिव्याप्तं तथापि अतिव्याप्तिपरिहाराय परिणामित्वेन भ्रमोपादानत्वम-

ननु भ्रमे भावविलक्षणाज्ञानोपादानकत्वं न घटते; भ्रमस्य भावविलक्षणत्वे उपादेयत्वायोगात्, भावत्वे च भावोपादानकत्वनियमादिति—चेत्। न; अज्ञानस्य भ्रमस्य च भावविलक्षणत्वेऽप्युपादानोपादेयभावोपपत्तेः। नहि भावत्वमुपादानत्वे उपादेयत्वे वा प्रयोजकम्;

---

चेतनत्वेन वा भ्रमोपादानत्वं वक्तव्यम्। भ्रमोपादानत्वलक्षणं परिणामित्वेनाचेतनत्वेन वा विशेषणीयम्। कूटस्थब्रह्मण उपादानत्वेऽपि तस्य परिणामित्वेनोपादानत्वं नास्तीति नातिव्याप्तिः। एवमेव चिद्रूपस्य ब्रह्मणः जडत्वेनोपादानत्वं नास्तीति नातिव्याप्तिः। अत्र पूर्वपक्ष्युक्तमाशङ्क्य समाधत्ते—अभावभ्रमोपादानं भावरूपमज्ञानं न भवितुमर्हति। भावाभावयोः सारूप्याभावात्। असति सारूप्ये उपादानोपादेयभावाभावात्। अतः अभावभ्रमोपादानत्वं भावरूपाज्ञाने नास्तीति कृत्वा भ्रमोपादानत्वरूपमज्ञानलक्षणमभावभ्रमोपादाने नास्तीति अव्याप्तिः। अव्याप्तिं समाधत्ते—तस्यापि भ्रमोपादानत्वादिति। अयम्भावः—अभावभ्रमनिवर्तिका प्रमा अवश्यमङ्गीकार्या। प्रमाज्ञानं चाज्ञानस्यैव निवर्तकम्। ज्ञानमज्ञानस्यैव निवर्तकमिति पञ्चपादिकावचनात्। अतः प्रमानिवर्त्याभावभ्रमस्याज्ञानोपादानत्वमनिच्छताऽपि पूर्वपक्षिणाऽङ्गीकरणीयम्। अन्यथा अभावभ्रमस्य प्रमानिवर्त्यत्वाभावप्रसंगात्, भ्रमस्य भावत्वमङ्गीकरणीयम् ॥१२॥

१३—भावविलक्षणत्वे भ्रमस्योपादेयत्वायोगात्। अतो भावरूपभ्रमस्य भावविलक्षणाऽज्ञानोपादानत्वं न घटते इति शङ्कते पूर्वपक्षी—**ननु भ्रमे भावविलक्षणाऽज्ञानोपादानकत्वं न घटते, भ्रमस्य भावविलक्षणत्वे उपादेयत्वायोगात्। भावत्वे च भावोपादानकत्वनियमादिति चेत्।** भ्रमस्य भावविलक्षणत्वे भ्रमस्य उपादेयत्वासम्भवात् भ्रमस्य भावत्वमङ्गीकरणीयम्। भ्रमस्य भावत्वे च भावस्य भावोपादानकत्वनियमात् भावविलक्षणमज्ञानं भ्रमोपादानं न भवितुमर्हतीति द्वितीयलक्षणस्यासम्भवो दोषः। भावत्वं नोपादानत्वोपादेयत्वयोर्व्याप्यम्। यो यो भावस्तदुपादेयमुपादानं वा भवतीति नियमो नास्ति। शुद्धे आत्मनि भावत्वे सत्यपि उपादेयत्वोपादानत्वयोरभावात्। अतो भावत्वं नोपादानत्वोपादेयत्वयोः प्रयोजकमित्याह सिद्धान्ती—**न अज्ञानस्य भ्रमस्य च भावविलक्षणत्वेऽप्युपादानोपादेयभावोपपत्तेः न हि**

आत्मनि तददर्शनात्। किन्त्वन्वयिकारणत्वमुपादानत्वे तन्त्रम्; सादित्वमुपादेयत्वे, तदुभयं च न भावत्वनियतम्। अत उपादानोपादेयभावोऽपि न भावत्वनियतः। न चैवं ध्वंसस्याप्युपादेयत्वापत्तिः; इष्टापत्तेः ॥१३॥

---

भावत्वमुपादानत्वे उपादेयत्वे वा प्रयोजकम्, आत्मनि तददर्शनात्। किन्तु अन्वयिकारणत्वमुपादानत्वे तन्त्रम्, सादित्वमुपादेयत्वे, तदुभयञ्च न भावत्वनियतम्। अत उपादानोपादेयभावोऽपि न भावत्वनियतः। न चैवं ध्वंसस्यापि उपादेयत्वापत्तिः; इष्टापत्तेः। यदि भावत्वमुपादानत्वोपादेयत्वयोर्न व्याप्यं तर्हि उपादानत्वस्य वा किं प्रयोजकमुपादेयत्वस्य वा किमिति पृच्छायामाह—अन्वयिकारणत्वमुपादानत्वे तन्त्रम्। यत् कारणं कार्येऽप्यनुगच्छति तदन्वयिकारणम्। यद् यदभावानुरक्तबुद्धिबोध्यं तत्तदन्वयिकारणकम्। यथा मृद्भावानुरक्तबुद्धिबोध्यं घटादि मृदन्वयिकारणकं भवति। निमित्तकारणं तु न कार्येऽनुगच्छति। एवं सादित्वमेवोपादेयत्वे प्रयोजकम्। यद्यत् सादि तदुपादेयम्। उपादानत्वोपादेयत्वयोर्यत् प्रयोजकत्वमुक्तं तयोरेकमपि न भावत्वव्याप्यम्। अत उपादानत्वोपादेयत्वेऽपि न भावत्वव्याप्ये। यत्र भावत्वं नास्ति तत्रोपादानत्वं नास्ति, उपादेयत्वं वा नास्तीति न। अतः अज्ञाने भावत्वाभावेऽपि अर्थादज्ञानस्य भावविलक्षणत्वेऽपि तत्रोपादानत्वसत्त्वे न कोऽपि दोषः।

अत पूर्वपक्षी शङ्कते—भावत्वरहितमपि वस्तु यदि उपादेयं भवितुमर्हति, सादित्वमात्रेण उपादेयत्वात् तर्हि भावत्वरहितः सादिध्वंसोऽपि उपादेयः स्यात्। सिद्धान्तिना तु सादित्वस्यैव उपादेयत्वे प्रयोजकत्वमुक्तम्। ध्वंसस्तु आदिमान्। अतो ध्वंसोऽपि उपादेयो भवतु इत्यापत्तिः स्यादेव। किन्तु केवलनिमित्तकारणजन्यो ध्वंसः, ध्वंसस्याभावत्वेन निरुपादानत्वात्। समाधास्यन्नाह सिद्धान्ती—इष्टापत्तेरिति। प्रदर्शितापत्तिर्न अनिष्टा, किन्तु इष्टैव। सिद्धान्ते अभावमात्रस्यैवाधिकरणस्वरूपत्वात् ॥१३॥

१४—भावविलक्षणस्यैवाज्ञानस्य यदि भ्रमोपादानत्वमङ्गीक्रियते तर्हि ज्ञानप्रागभावस्यैव भावविलक्षणस्य क्लृप्तस्य भ्रमोपादानत्वमस्तु। किं भावविलक्षणा-

न चैवं—ज्ञानप्रागभावस्यैव भ्रमोपादानत्वमस्तु, किमभावविलक्षणाज्ञानोपादानकल्पनेनेति—वाच्यम्; प्रागभावस्य प्रतियोगिमात्रजनकत्वनियमेन भ्रमं प्रति जनकत्वस्याप्यसिद्धेः, तद्विशेषरूपोपादानत्वस्यैव दूरनिरस्तत्वात्। अतः सद्विलक्षणयोरज्ञानभ्रमयोर्युक्त उपादानोपादेयभावः। भ्रमस्य च सद्विलक्षणत्वमुक्तम्। वक्ष्यते च ॥१४॥

न च—एवमज्ञानानुविद्धतया भ्रमस्य प्रतीत्यापत्तिः, मृदनुविद्धतया घटस्येवेति—वाच्यम्; यत् यदुपादानकम्, तत्

---

ज्ञानोपादानकल्पनया? इति शङ्कते—न चैवं ज्ञानप्रागभावस्यैव भ्रमोपादानत्वमस्तु। किं भावविलक्षणाज्ञानकल्पनयेति वाच्यम्। ऋज्वर्थमेतत्। प्रागभावस्य प्रतियोगिमात्रजनकत्वेन भ्रमजनकत्वमेवासिद्धम्, दूरे भ्रमोपादानत्वमिति समाधत्ते—प्रागभावस्य प्रतियोगिमात्रजनकत्वनियमेन भ्रमं प्रति जनकत्वस्याप्यसिद्धेः तद्विशेषरूपोपादानत्वस्यैव दूरनिरस्तत्वात्। अतः सद्विलक्षणयोरज्ञानभ्रमयोः युक्त उपादानोपादेयभावः। भ्रमस्य [च] सद्विलक्षणत्वमुक्तम्, वक्ष्यते च। प्रागभावस्तु धर्मिग्राहकमानेन प्रतियोगिमात्रजनकत्वेनैव सिद्धः। प्रागभावस्य एतद् रूपं धर्मिग्राहकमानसिद्धम्। अतः प्रागभावः तदप्रतियोगिनो भ्रमस्य जनक एव न भवति, उपादानत्वं तु जनकत्वविशेषरूपम्। कारणत्वे सत्यन्वयित्वमुपादानत्वम्। यत् कारणमेव न भवति तस्योपादानत्वशङ्कैव नास्ति। अतः सद्विलक्षणयोरज्ञानभ्रमयोः सारूप्यादुपादानोपादेयभावः सङ्गच्छते। भ्रमस्य च सद्विलक्षणत्वमुक्तम् अज्ञानप्रथमलक्षणनिरूपणे, उपपादयिष्यते चानिर्वचनीयतावादे ख्यातिबाधान्यथानुपपत्तिप्रकरणे च। भ्रमस्याज्ञानोपादानत्वे उपादानाज्ञानानुविद्धतया सर्वत्र भ्रमस्य प्रतीत्यापत्तिः स्यात् ॥१४॥

१५—यथा मृदुपादानकघटस्य सर्वत्र मृदनुविद्धतया प्रतीतिर्भवति, एवं भ्रमेऽपि स्यादिति शङ्कते पूर्वपक्षी—न चा [नचैवम] ज्ञानानुविद्धतया भ्रमस्य प्रतीत्यापत्तिः, मृदनुविद्धतया घटस्येवेति वाच्यम्। अतिरोहितमेतत् पूर्वपक्षिप्रदर्शितनियमोऽसिद्ध इति समाधत्ते सिद्धान्ती—

तदनुविद्धतयैव प्रतीयत इति व्याप्त्यसिद्धेः। न हि घटोपादानकं रूपं घट इति प्रतीयते, प्रकृतिद्व्यणुकाद्यनुविद्धतया प्रतीतेः परैरप्यनभ्युपगमात्, केनचिद्धर्मेण तदनुवेधस्तु प्रकृतेऽपीष्ट एव ॥१५॥

न च यावन्ति ज्ञानानि तावन्त्यज्ञानानीति पक्षे भ्रमापूर्वक-

---

यद्यदुपादानकं तत् तदनुविद्धतयैव प्रतीयत इति व्याप्त्यसिद्धेः। न हि घटोपादानकं रूपं घट इति प्रतीयते। प्रकृतिद्व्यणुकाद्यनुविद्धतया प्रतीतेः परैरप्यनभ्युपगमात्। केनचिद्धर्मेण तदनुवेधस्तु, प्रकृतेऽपीष्ट एव। यद् यदुपादानकं तत् तदनुविद्धतयैव प्रतीयत इति व्याप्तेरसिद्धेः। कुतोऽसिद्धिरित्यत आह—न हि घटोपादानकं रूपमिति। घटीयरूपस्योपादानं घटः। उपादानोपादेययोः तादात्म्यात् सर्वत्र रूपं घट इति प्रतीत्यापत्तिः। अथ च कुत्रापि रूपं घट इति प्रतीतिर्न भवति। अत उपादानाभिन्नतया उपादेयं प्रतीयत इति नियमो नास्ति। अन्येषामपि दार्शनिकानां मते अयं नियमोऽसिद्ध एवेत्याह—प्रकृतिद्व्यणुकादीति। सांख्यमते प्रकृतिर्महत उपादानम्। अथ च प्रकृतिर्महान् इति प्रकृत्यभेदेन महतः प्रतीतिर्न भवति। एवं वैशेषिकमते द्व्यणुकत्रयं त्र्यणुकस्योपादानम्। अथ च द्व्यणुकं त्र्यणुकमित्यभेदेन प्रतीतिर्न भवति। सांख्यवैशेषिकाभ्यामनभ्युपगमाच्च। अत्र पूर्वपक्षी शङ्कते—रूपं घट इति प्रतीत्यभावेऽपि नीलो घटः, शुक्लो घट इति प्रात्यक्षिकी प्रतीतिर्विद्यत एव। अत्रेदं वक्तव्यम्—घटीयरूपस्य घट एवोपादानम्। घटीयं रूपमुपादेयम्। उपादेयतावच्छेदकरूपेणोपादेयम्, उपादानतावच्छेदकेन उपादानेन सह अभिन्नतया न प्रतीयते इति तु सिद्धमेव। अनुपादानतावच्छेदकरूपेण उपादानस्य उपादेयानुविद्धतया प्रतीतिश्चेत्तर्हि तत् प्रकृतेऽपि अस्ति इत्यत आह—केनचिद्धर्मेण तदनुवेधस्तु। अनुपादेयताव-च्छेदकेन केनचिद्रूपेण प्रतीतिस्तु प्रकृतेऽपि वर्तते। अज्ञानभ्रमयोर्द्वयोर्जाड्यात् अज्ञानं भ्रम इति प्रतीत्यभावेऽपि जडो भ्रम इति प्रतीतिर्वर्तत एव ॥१५॥

१६—इदानीं पूर्वपक्षी अस्मिन् लक्षणे अव्याप्तिदोषमाशङ्कते। इष्टसिद्धि-कारमते 'यावन्ति ज्ञानानि तावन्ति अज्ञानानि' इति स्वीकारात् ज्ञानप्राग-भाववत् अज्ञानस्यापि ज्ञानसमसंख्यकत्वात् भ्रमापूर्वकाज्ञाने भ्रमानिवर्त्ये

प्रमानिवर्त्येऽज्ञाने अव्याप्तिः; भ्रमोपादानतायोग्यत्वस्य विवक्षितत्वात्, सहकारिवैकल्यात् कार्यानुदयेऽपि योग्यतानपायात्। अथ योग्यतावच्छेदकरूपपरिचये कथं तद्ग्रहणम्? प्रथमलक्षणस्यैव योग्यतावच्छेदकत्वात्। एकमेवाज्ञानमिति पक्षे तु तत्र भ्रमोपादानत्वमक्षतमेव। न चैवं शुक्तिज्ञानेनैवाज्ञाननाशे मोक्षापत्तिः; तस्यावस्थाविशेषनाशकत्वाङ्गीकारात्। व्युत्पादितं चैतदस्माभिः सिद्धान्तबिन्दौ। ज्ञानत्वेन

---

लक्षणस्यास्य अव्याप्तिः। तदज्ञानस्य भ्रमानुपादानत्वादिति शङ्कते—न च यावन्ति ज्ञानानि तावन्ति अज्ञानानीति पक्षे भ्रमापूर्वकप्रमानिवर्त्येऽज्ञानेऽव्याप्तिः। न हि सर्वमज्ञानं भ्रममुत्पाद्यैव प्रमया निवर्त्यते। प्रथमत एव घटप्रमया घटाज्ञानस्य निवृत्तौ तदज्ञानस्य भ्रमोपादानत्वाभावात् तदज्ञाने भ्रमोपादानत्वलक्षणस्याव्याप्तिः। रजतभ्रममनुत्पादयदपि शुक्तिविषयकमज्ञानं शुक्तिप्रमया निवर्त्यते। तदज्ञाने लक्षणस्याव्याप्तिः। यावन्ति ज्ञानानि तावन्ति अज्ञानानि इतीष्टसिद्धिकारमते भ्रमोपादानत्वयोग्यत्वमेवाज्ञानलक्षणम्। तथा च नाव्याप्तिरिति परिहरति—भ्रमोपादानत्वयोग्यत्वस्य विवक्षितत्वात्। सहकारिवैकल्यात् कार्यानुदयेऽपि योग्यतानपायात्। अथ च योग्यतावच्छेदकरूपापरिचये कथं तद्ग्रहणम्, प्रथमलक्षणस्यैव योग्यतावच्छेदकत्वात्। एकमेवाज्ञानमिति पक्षे तु तत्र भ्रमोपादानत्वमक्षतमेव। न चैवं शुक्तिज्ञानेनैवाज्ञाननाशे मोक्षापत्तिः, तस्यावस्थाविशेषनाशकत्वाङ्गीकारात्। व्युत्पादितश्चैतद् अस्माभिः सिद्धान्तबिन्दौ। भ्रमापूर्वकप्रमानिवर्त्याज्ञाने यद्यपि भ्रमोपादानत्वं नास्ति तथापि तस्मिन्नपि अज्ञाने भ्रमोपादानत्वयोग्यत्वमस्त्येव। तद् ज्ञानं सहकारिविधुरं सत् भ्रमरूपं फलं न जनयति। अतस्तादृशेऽज्ञाने भ्रमोपादानत्वस्वरूपयोग्यत्वं वर्तत एव, केवलं सहकारिवैकल्यात् फलानुपपादनम्। अतो भ्रमोपादानयोग्यत्वमेव इष्टसिद्धिकृन्मते अज्ञानलक्षणं निर्दोषम्। ये तु ज्ञानसमसंख्यकानि अज्ञानानि नाभ्युपगच्छन्ति तेषां मते लक्षणे योग्यत्वनिवेशे प्रयोजनं नास्ति। अत्र पूर्वपक्षी शङ्कते—भ्रमोपादानतायोग्यत्वं यदि अज्ञानलक्षणं तर्हि योग्यतावच्छेदकरूपापरिचये योग्यतावधारणमेव न भवितुमर्हति इति योग्यतावच्छेदकमवश्यं

रूपेण साक्षाज्ज्ञाननिवर्त्यत्वं वा तल्लक्षणमिति च प्रागुक्तमेव; तस्मान्नाविद्यालक्षणासंभव इति सर्वमवदातम् ॥१६॥

इत्यद्वैतसिद्धावविद्यालक्षणोपपत्तिः ॥

---

वक्तव्यम्। तत्किमिति पृच्छ्यते। तत्राह सिद्धान्ती—प्रथमलक्षणस्यैव योग्यतावच्छेदकत्वादिति। अज्ञाने या भ्रमोपादानयोग्यता तस्या अवच्छेदको धर्मो, अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वम्। अज्ञानस्य एकत्वपक्षे भ्रमोपादानत्वमेवाज्ञानस्य द्वितीयं लक्षणम्। अज्ञानस्य एकत्वपक्षे सद्यो मोक्षापत्तिं शङ्कते पूर्वपक्षी। शुक्तिविषयकज्ञानेनैव अज्ञाननिवृत्तौ मोक्षापत्तिः स्यात्। अज्ञानस्य एकत्वात्। तस्य च शुक्तिज्ञानेनैव निवृत्तत्वात्। 'अविद्यास्तमयो मोक्ष' इति अद्वैतसिद्धान्तात्। समाधत्ते सिद्धन्ती—एकाज्ञानपक्षेऽपि शुक्तिज्ञानमात्रेण मोक्षापत्तिर्न स्यात्। शुद्धचैतन्यविषयकमज्ञानमेव शुद्धचैतन्यविषयकज्ञानेनैव निवर्त्यते, न शुक्तिविषयकज्ञानेन। समानविषयकज्ञानाज्ञानयोरेव निवर्त्यनिवर्त्तकभावात्। शुक्तिज्ञानेन शुद्धचैतन्यविषयकाज्ञानस्यानिवृत्तावपि मूलाज्ञानस्यावस्थारूपमज्ञानं शुक्तिज्ञानेन निवर्त्यते। अद्वैतवेदान्ते अज्ञानस्य प्रकारभेदा वर्तन्ते। यथा मूलाज्ञानम, तूलाज्ञानम, मूलाज्ञानस्यावस्थारूपमज्ञानं च। तेषां परिचयस्तु प्रागुक्तोऽप्यत्रापि उच्यते। शुद्धब्रह्मावरकमज्ञानमेव मूलाज्ञानम्, आवरणविक्षेपशक्तिद्वययुक्तञ्च, ब्रह्मज्ञानमात्रनाश्यं च। आवरणविक्षेपशक्तिद्वययुक्तं ब्रह्मज्ञानान्यज्ञाननाश्यं मूलाज्ञानेन तादात्म्यानापन्नमज्ञानमेव तूलाज्ञानम्। अवस्थाज्ञानञ्च आवरणविक्षेपशक्तिद्वययुक्तं ब्रह्मज्ञानान्यज्ञाननाश्यं मूलाज्ञानेन तादात्म्यापन्नं च। एतत्सर्वं लघुचन्द्रिकायाम् [लघुचन्द्रिका, पृ०, ४८७] उक्तम्।

ये तु मूलाज्ञानस्य अवस्थाविशेषान् नाङ्गीकुर्वन्ति तेषां मते शुक्तिज्ञानेन अज्ञाननाशात् मोक्षापत्तिः कथं वारणीया ? इत्यत आह मूलकारः—व्युत्पादितञ्चैतदस्माभिः सिद्धान्तविन्दौ। सिद्धान्तविन्दावेवमुक्तम्—शुक्तिप्रमाविरहविशिष्टमूलाज्ञानमेव शुक्तिर्न भातीत्यादिव्यवहारनियामकम्। शुक्तिप्रमायामुत्पन्नायां मूलाज्ञानस्य विद्यमानत्वेऽपि शुक्तिर्न भातीति व्यवहारो न भवति। अतः शुक्तिप्रमा शुक्तिर्न भातीति व्यवहारस्य निवर्तिका भवति। शुक्तिप्रमा मूलाज्ञानस्य निवर्तिका न भवति। अतो शुक्तिप्रमया मूलाज्ञानेऽनिवृत्ते न सद्यो मोक्षापत्तिः। एवञ्चाविद्याया द्वितीयलक्षणमपि निर्दोषमेव।

## अथ तृतीयलक्षणम्

**ज्ञानत्वेन रूपेण साक्षाज्ज्ञाननिवर्त्यत्वं वा तल्लक्षणमिति च प्रागुक्तमेव। तस्मान्न अविद्यालक्षणासम्भव इति सर्वमवदातम्।**

**इत्यद्वैतसिद्धौ अविद्यालक्षणोपपत्तिः।**

ज्ञानत्वेन रूपेण साक्षाज्ज्ञाननिवर्त्यत्वमेव अविद्यायास्तृतीयं लक्षणम्। एतत्तृतीयलक्षणविवरणं प्रथमलक्षणविवरणप्रसङ्गे पूर्वमेव सुविशदं विवृतम्। अतो न्यायामृतकृता यत् प्रागुक्तमासीत् अविद्याया लक्षणमेव न सम्भाव्यत इति तदसङ्गतमेव।

यद्यपि एतत्तृतीयलक्षणं नवीनाद्वैतवेदान्तिसम्मतमित्युक्तं तथापि एतल्लक्षणं विवरणाचार्यस्यापि सम्मतम्। उक्तञ्च विवरणे—"ज्ञाननिवर्त्यस्य च अज्ञानत्वात्।" [विवरणम्, पृ०, १६, काशी सं०]। विवरणवाक्यस्यायमर्थः—ज्ञानत्वेन रूपेण साक्षाज्ज्ञाननिवर्त्यत्वमेव अज्ञानत्वम्। एवमज्ञानस्य द्वितीयलक्षणमपि विवरणाचार्यसम्मतमेव। अद्वैतसिद्धिग्रन्थे अविद्याप्रकरणे यत् किमप्यालोचितम् तत्सर्वं प्रायः [समस्तमेव] विवरणवाक्यानामेव विस्तृतविवरणारूपं बोद्धव्यम् ॥१६॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यामविद्यायाः लक्षणोपपत्तिविवरणम् समाप्तम्।

## अज्ञानवादे तत्र प्रत्यक्षप्रमाणोपपत्तिः ।

तत्र चाज्ञाने 'अहमज्ञो मामन्यं च न जानामी'ति प्रत्यक्षम्, 'त्वदुक्तमर्थं न जानामी'ति विशेषतः प्रत्यक्षम्। 'एतावन्तं कालं सुखमहमस्वाप्सं न किंचिदवेदिषमि'ति परामर्शसिद्धं सौषुप्तप्रत्यक्षं च प्रमाणम् ॥१॥

---

१—अध्यासोपादानमज्ञानमित्युक्तम्। लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति सिद्धान्तमनुसृत्य अज्ञानस्य लक्षणमुक्त्वा इदानीन्तत्र प्रमाणमुपन्यस्यति। उक्तञ्च पञ्चपादिकायाम्—'अवश्यमेषा अविद्याशक्तिर्बाह्याध्यात्मिकेषु वस्तुषु तत्स्वरूप-सत्तामात्रानुबन्धिनी अभ्युपगन्तव्या।' विवृतञ्चैतत् विवरणकृद्भिः—अवश्यमिति एषेति च प्रमाणद्वयवत्तामाह। विवृतञ्च तत्त्वदीपने—अवश्यमिति पदादनुमानं सूचितम्, एषेति प्रत्यक्षमिति प्रमाणद्वयवत्तामाह। उक्तञ्च विवरणे—प्रत्यक्षं तावत् अहमज्ञः, मामन्यञ्च न जानामीत्यपरोक्षावभासदर्शनात्। ननु ज्ञानाभाव-विषयोऽयमवभासः, न, अपरोक्षावभासत्वादहं सुखीतिवत्। अभावस्य च षष्ठप्रमाणगोचरत्वात्। प्रत्यक्षाभाववादिनोऽपि नात्मनि विज्ञानाभावावगमः सम्भवति; नहि ज्ञानं नास्तीति प्रतिपत्तौ आत्मनि धर्मिणि प्रतियोगिनि चावगते तत्र ज्ञानसद्भावात् ज्ञानाभावप्रतिपत्त्ययोगात्। अनवगतेऽपि धर्म्यादौ सुतरामभावा-नवगमात्। षष्ठप्रमाणगोचरे फललिङ्गाभावानुमेयेऽपि ज्ञानाभावे आत्मादौ अवगते-ऽनवगतेऽपि आत्मनि ज्ञानाभावप्रतिपत्त्ययोगात्। इह च त्वदुक्तमर्थं संख्यां वा शास्त्रार्थं वा न जानामीति विषयव्यावृत्तमज्ञानमनुभूय तच्छ्रवणादौ प्रवर्तत इत्यादि। उक्तञ्च चित्सुखाचार्यैः—'त्वदुक्तमर्थं न जानामी'ति व्यवहारान्यथानुपपत्तिरपि भावरूपाज्ञानसद्भावे मानम्। एतत् सर्वमुपजीव्य उक्तं कल्पतरौ—त्वदुक्तमर्थं न जानामीति व्यवहारान्यथानुपपत्तिश्च मानम्। एतत् सर्वं पूर्वाचार्यभाषितमुपजीव्य अज्ञाने साक्षिप्रत्यक्षमज्ञानसाधकमुपन्यस्यत्याचार्यः—तत्र चाज्ञाने अहमज्ञो मामन्यं च न जानामीति प्रत्यक्षं त्वदुक्तमर्थं न जानामीति च विशेषतः प्रत्यक्षम्। एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति परामर्शसिद्धं सौषुप्तप्रत्यक्षं च प्रमाणम्। तत्र च लक्षणैर्लक्षितेऽज्ञाने

साक्षिप्रत्यक्षं प्रमाणम् । प्रमाणमिति साधकमिति अर्थः । त्रिविधं साक्षिप्रत्यक्षं ज्ञानसाधकत्वेनाचार्येणोपन्यस्तम् । सामान्यतः साक्षिप्रत्यक्षमहमज्ञ इत्यादि । विशेषतः साक्षिप्रत्यक्षं त्वदुक्तमर्थं न जानामीति । सुखमहमस्वाप्समित्यादि-सौषुप्तसाक्षिप्रत्यक्षञ्च । प्रमाणेन प्रमेयं यथा सिद्ध्यति साक्षिणापि साक्ष्यं वस्तु तथैव सिद्ध्यति । प्रमाणसाक्षिणोरिदं वैलक्षण्यम्—प्रमाणेनाज्ञातार्थसिद्धिर्भवति, साक्षिणा तु अज्ञातं वस्तु अज्ञाततयैव, ज्ञातं वस्तु ज्ञाततया सिद्ध्यति । प्रमात्व-ज्ञाननिवर्तिका, साक्षिप्रत्यक्षं नाज्ञाननिवर्तकम् । अज्ञानसाधकस्य साक्षिणः अज्ञान-निवर्तकत्वायोगात् । आचार्येण यद्यपि त्रिभिर्लक्षणैर्लक्षिते भावरूपाज्ञाने प्रमाणमे-वोपन्यस्तम् इत्युक्तं तत्र प्रमाणपदस्य साधकमित्यर्थः । प्रमाणमज्ञातार्थनिश्चय-जनकम्, साक्षिप्रत्यक्षं तु नैवम् । प्रमाणेन प्रमेयं प्रमितं भवति, साक्षिणा तु साक्ष्यं सिद्धं भवतीत्येव, न तु प्रमितम् । प्रमाणोपन्यासकथनमात्रेण अज्ञानं प्रमाणैः प्रमितमिति न भ्रमितव्यम् । प्रमितत्वे अज्ञानस्य ज्ञाननिवर्त्यत्वाभाव-प्रसङ्गात् । उक्तञ्चाद्वैतदीपिकायां नृसिंहाश्रमश्रीचरणैः—येन विना यस्यासत्त्वशङ्का न निवर्तते, सति च तस्मिन् निवर्तते, तत्तस्मिन् प्रमाणम् । यथा रूपे चक्षुः, धर्मब्रह्मणोर्वेदः । अन्यथा अतिप्रसङ्गात् । अज्ञानस्य चासत्त्वशङ्का 'अहमज्ञ' इत्यादिप्रत्यक्षेणैव निवर्तते इति प्रत्यक्षमेव साक्ष्यात्मकं तत्र प्रमाणम् । नानुमानम्, तेन विनापि तन्निवृत्तेः । अज्ञानस्य अभावव्यावृत्तयेऽपि नानुमानस्य अत्यन्तमपेक्षा । इत्याह अभावव्यावृत्तिरपि यद्यपि उपपत्तिसहितसाक्षिप्रत्यक्षेण विषयीक्रियते तथापि साक्षिप्रत्यक्षेण सहकार्य्युपपत्त्यप्रतिपत्तिदशायामज्ञानमात्रे सा न निवर्तते इति प्रत्यक्षमात्रं तत्र न प्रमाणं किन्तु अनुमानादि इति । [अद्वैतदीपिका, पृ०, ४०३-४०४] । एतदेवाभिप्रेत्य आचार्येण सौषुप्तं प्रत्यक्षं च तत्र मानमित्युक्तम् । एतेन अज्ञानस्य स्वातन्त्र्येण अदृष्टवदनुमित्यादिप्रमाण-गोचरत्वात् प्रामाणिकत्वमिति निरस्तम् । अज्ञानस्य स्वातन्त्र्येण अनुमानादि-प्रमाणगोचरत्वाभावात् । तत्र 'अहमज्ञ' इति साक्षिप्रत्यक्षमज्ञानस्यात्माश्रयत्वे प्रमाणम् । तावन्मात्रेण चाज्ञानस्यात्मविषयत्वासिद्धेः, अज्ञानस्यात्मविषयत्वे प्रमाणमाह—मामन्यं चेति । मामन्यं च न जानामीति आत्मानात्मकर्मका-ज्ञानाश्रयत्वेन आत्मनि अपरोक्षप्रतीतिदर्शनात् अज्ञानस्य सत्त्वम्, अनात्मनस्तु

अज्ञानकर्मत्वं लौकिकानुभवमवलम्ब्य विवरणकृता उक्तम्, न तु वस्तुतः। सिद्धान्ते अनात्मनो अज्ञानविषयत्वाभावात्। विषयविशेषविशेषिताज्ञानसद्भावे साक्षिप्रत्यक्षं दर्शयति—त्वदुक्तमर्थमिति। उक्तञ्च विवरणाचार्य्येण—इह च त्वदुक्तमर्थं संख्यां वा शास्त्रार्थं वा न जानामीति विषयव्यावृत्तमज्ञानमनुभूय एव तच्छ्रवणादौ प्रवर्तते। अर्थेन सह अनुभूयमानत्वात् अज्ञानं न ज्ञानाभाव इत्याह—इहेति। लोके त्वदुक्तमर्थं न जानामीति विषयविशेषविशेषितमज्ञानमनुभूय प्रवर्तते। अर्थे विज्ञातेऽपि अर्थगतसंख्याज्ञानाभिप्रायेण न जानामीति व्यपदेशसम्भव इत्याशंक्य निदर्शनान्तरमाह—संख्यामिति। संख्यायां संख्यान्तराभावात् संख्यां न जानामीति उक्तेः संख्याज्ञानाभावविषयत्वं विरुद्धम्। तत्रापि परोक्षतया ज्ञाते अपरोक्षज्ञानाभावाभिप्रायेण व्यपदेशोपपत्तिमाशंक्य नित्यपरोक्षधर्मादौ व्यपदेशस्य अपरोक्षज्ञानाभावाभिप्रायत्वानुपपत्तेर्नैवमित्याह—शास्त्रार्थेति। जानन्नेव न जानामीति ब्रूते परीक्षार्थम्, न तु अज्ञानसम्भवादित्याशंक्य श्रवणगुरुशुश्रूषाद्यनुपपत्त्या तत्राज्ञानं कल्प्यते इत्याह—तच्छ्रवणादौ इति। एतावन्तं कालमिति—उक्तञ्च पञ्चपादिकायाम्, "सुखमहमस्वाप्समिति सुप्तोत्थितस्य स्वापसुखानुभवपरामर्शदर्शनात्"। अनन्तरमुक्तं पञ्चपादिकायाम्, "स्वापे सुखावमर्शो दुःखाभावनिमित्तः। कथम्? स्वप्ने तावदस्त्येव दुःखानुभवः, सुषुप्ते तु तदभावात् सुखव्यपदेशः"। विवृतञ्चैतद्विवरणे—"सुषुप्तौ दुःखाभावो विद्यमानोऽपि नानुभवितुं शक्यते, प्रतियोगिस्मरणाभावात्। सम्भवति च मुख्य एव स्वरूपानन्दानुभवः। ननु तदपि सुखमविद्यावृतम्, न प्रकाशमर्हति, न, अनावृतसाक्षिचैतन्यसुखांशस्य प्रकाशोपपत्तेः। जागरणे तर्हि किमिति नावभासते, भासते एव परमप्रेमास्पदत्वलक्षणं सुखम्, तीव्रवायुविक्षिप्तप्रदीपप्रभावत् मिथ्याज्ञानविक्षिप्ततया न स्पष्टमवभासते। सुषुप्तौ तु तदभावाधिकं व्यज्यते" इति। [विवरणम्, पृ०, ३२२-३२४, मेट्रोपलिटन मुद्रणालय सं०]। एतदेव सर्वं विवरणीयवाक्यमभिप्रेत्य त्रिविधं साक्षिप्रत्यक्षमाचार्य्येणोपन्यस्तम्। सिद्धान्ते शुद्धचैतन्यस्याज्ञानाश्रयत्वात्। अहमर्थस्याज्ञानाश्रयत्वाभावात् अहमज्ञ इति प्रतीतौ ज्ञानाभाव एव भासत इत्यङ्गीकर्तव्यम्। तथा चाहमज्ञ इति साक्षिप्रत्यक्षेण न भावरूपमज्ञानं सेद्धुमर्हति इति न च वाच्यम्। यस्मिन्नेव चैतन्ये

न च—अहमर्थं स्याज्ञानानाश्रयत्वेन कथमयं प्रत्ययो भावरूपाज्ञानपक्षे उपपद्यत इति—वाच्यम्; अज्ञानाश्रयीभूतचैतन्ये अन्तःकरणतादात्म्याध्यासेन एकाश्रयत्वसंबन्धेनोपपत्तेः। एत एव जडे आवरणकृत्याभावात्। 'घटं न जानामी' त्यादिप्रतीतेर्ज्ञानाभावविषयत्वे प्रकृतेऽपि तथास्त्विति—निरस्तम्; तत्तदवच्छिन्नचैतन्यस्यैवाज्ञानाश्रयत्वे तत्रापि तद्व्यवहारोपपत्तेः ॥२॥

---

अज्ञानमध्यस्तमज्ञानावच्छेदेन तस्मिन्नेव चैतन्ये अहमर्थोऽपि अध्यस्तः। तथा च सामानाधिकरण्यसम्बन्धेन अज्ञानमहमर्थसम्बन्धितया भासते, न तु अज्ञानमहमर्थाश्रितम्। एतच्च सर्वमज्ञानाश्रयत्वनिरूपणप्रकरणे स्फुटीभविष्यति। विवरणे च 'ननु किमाश्रयेयमविद्या' इत्यादिग्रन्थेन अहमर्थस्य अज्ञानाश्रयत्वं निराकृत्य शुद्धचैतन्यस्यैव अज्ञानाश्रयत्वं प्रसाधितम्। [विवरणम्,पृ०, २७२, मेट्रोपलिटनमुद्रणालय सं०] उक्तञ्च विवरणे 'एवमज्ञानान्तःकरणयोरेकात्मसम्बन्धात् अहमज्ञः इत्यवभासः नान्तःकरणस्याज्ञानसम्बन्धादिति'। [विवरणम्, पृ०, २७२, मेट्रोपलिटनमुद्रणालय सं०] ॥१॥

२—अहमज्ञ इति साक्षिप्रत्यक्षे अहमर्थस्याज्ञानाश्रयत्वेन भानात् अयं साक्षिप्रत्ययः भावरूपाज्ञानाश्रयत्वं न विषयीकर्तुमर्हति, सिद्धान्ते भावरूपाज्ञानस्य शुद्धचिन्मात्राश्रयत्वादिति शंकते पूर्वपक्षी—न चाहमर्थस्य अज्ञानानाश्रयत्वेन—कथमयं प्रत्ययो भावरूपाज्ञानपक्षे उपपद्यत इति वाच्यम्। अस्याः शङ्कायाः विवरणमितः प्रागेव कृतम्। विवरणग्रन्थे एवास्य पूर्वपक्षस्य समाहितत्वात् कथं पुनरयं पूर्वः पक्षः पूर्वपक्षिणा उत्थापित इति न विद्मः। विवरणीयसिद्धान्तमेवानुसृत्य उत्तरपक्षमाह सिद्धान्ती—अज्ञानाश्रयीभूतचैतन्येऽन्तःकरणतादात्म्याध्यासेन एकाश्रयत्वसम्बन्धेनोपपत्तेः। अत एव जडे आवरणकृत्याभावात् घटं न जानामीत्यादिप्रतीतेर्ज्ञानाभावविषयत्वे प्रकृतेऽपि तथा अस्तु इति निरस्तम्। तत्तदवच्छिन्नचैतन्यस्यैवाज्ञानाश्रयत्वेन तत्रापि तद्व्यवहारोपपत्तेः। उक्तञ्च विवरणे—अज्ञानान्तःकरणयोरेकात्मसम्बन्धात् अहमज्ञ इत्यवभासः। अज्ञानान्तःकरणयोरेकात्मसम्बन्धोक्त्या एकाश्रयत्वसम्बन्ध एव उक्तः। तदेवोक्तं मूले—

न च—साक्षिवेद्ये सुखदुःखाज्ञानादौ प्रातिभासिके च भावरूपाज्ञानाभावेन तत्र न जानामीति प्रतीतिः कथमुपपद्यत इति—वाच्यम्; स्वस्मिन्विद्यमाने साक्षिवेद्ये सुखादौ स्वभ्रमसिद्धे रूप्यादौ च 'न जानामी'ति व्यवहारासंभवात्, परसुखादौ 'न जानामी'ति व्यवहारस्य परोक्षज्ञाननिवर्त्येन प्रमातृगताज्ञानेनैवोपपत्तेः'। अत एव—परोक्षज्ञानेन

---

एकाश्रयत्वसम्बन्धेनोपपत्तेरिति। अहमज्ञ इति प्रतीतिर्न भावरूपाज्ञानसाधिका भवितुमर्हतीति प्रदर्शयितुं सिद्धान्ते जडे आवरणाभावात् घटं न जानामीत्यादिप्रतीतिः घटविषयकज्ञानाभावविषयिण्येव वक्तव्या, न घटविषयकाज्ञानविषयिणी। एवञ्च घटं न जानामीति प्रतीतिः घटविषयकज्ञानाभावविषयिण्येव सिद्धान्तिना यद्यङ्गीकरणीया तदाऽहमज्ञ इति प्रतीतिरपि ज्ञानाभावविषयिण्येवास्तु को दोषः ? इति पूर्वपक्षिशङ्कामत एवेत्यादिनानूद्य निरस्यति—तत्तदवच्छिन्नचैतन्यस्येति। घटं न जानामीति प्रतीतौ घटावच्छिन्नं चैतन्यमेव अज्ञानेनावृतम्। अतो घटाधिष्ठानीभूतं चैतन्यं नाभिव्यक्तम्। घटादिविषयकप्रमाणवृत्तेरभावदशायां घटावच्छेदेन चैतन्यमज्ञानावृतं तिष्ठति, तच्चावरकमज्ञानं साक्षिणा भास्यते। एवञ्च घटं न जानामीति प्रतीतिरपि घटावच्छिन्नचैतन्यावरणाज्ञानसाक्षिरूपा, किन्तु इयं प्रतीतिर्घटविषयकज्ञानाभावरूपा न भवितुमर्हति। 'तद्व्यवहारोपपत्तेरिति। घटं न जानामीति व्यवहारोपपत्तेरित्यर्थः ॥२॥

३—भावरूपमज्ञानमादायैव यदि सर्वत्र न जानामीति प्रतीतेरुपपत्तिः सिद्धान्तिसम्मता तर्हि साक्षिवेद्ये सुखदुःखादौ प्रातिभासिके च शुक्तिरजतादौ आवरकाज्ञानाभावात् तेषु न जानामीति प्रतीतिः कथं स्यात् ? इति पूर्वपक्षी शङ्कते—न च साक्षिवेद्ये सुखदुःखादौ प्रतिभासिके च भावरूपाज्ञानाभावेन तत्र न जानामीति प्रतीतिः कथमुपपद्येत इति वाच्यम्। साक्षिभास्यवस्तुविषयकभावरूपाज्ञानमेवासिद्धम्। अतः साक्षिभास्येऽपि वस्तुनि सुखदुःखादौ न जानामीति कादाचित्की प्रतीतिः सर्वानुभवसिद्धा कथमुपपद्येत सिद्धान्तिमते इति शङ्कितुराशयः। साक्षिवेद्ये वस्तुनि विद्यमाने न जानामीति प्रतीतिरेवासिद्धा। परकीयसुखादावपि न जानामीति प्रतीतिः परोक्षज्ञाननिवर्त्येन प्रमातृगताज्ञानेनैवोपपन्ना इति समाधत्ते सिद्धान्ती—स्वस्मिन् विद्यमाने साक्षिवेद्ये सुखादौ स्वभ्रमसिद्धे रूप्यादौ

प्रमातृगताज्ञाने नाशितेऽपि विषयगताज्ञानसत्त्वेन 'न जानामी'ति व्यवहारापत्तिरिति—निरस्तम् ; प्रमातृगताज्ञानकार्यस्य 'न जानामी'ति व्यवहारस्य विषयगताज्ञानेनापादयितुमशक्यत्वात् ॥ ३ ॥

---

च न जानामीति व्यवहारासम्भवात्। परसुखादौ न जानामीति व्यवहारस्य परोक्षज्ञाननिवर्त्येन प्रमातृगताज्ञानेनैवोपपत्तेः। अत एव परोक्षज्ञानेन प्रमातृगताज्ञाने नाशितेऽपि विषयगताज्ञानसत्त्वेन न जानामीति व्यवहारापत्तिरिति निरस्तम्। प्रमातृगताज्ञानकार्यस्य न जानामीति व्यवहारस्य' विषयगताज्ञानेन आपादयितुमशक्यत्वात्।
साक्षिवेद्यसुखादौ न जानामीति व्यवहारः कदा सम्भवति। स्वगतसुखदुःखादौ विद्यमाने तस्यैव पुरुषस्य किं न जानामीति व्यवहारः, परकीयसुखदुःखादौ वा विद्यमाने न जानामीति व्यवहारः ? स्वगतसुखदुःखादीनां विद्यमानतादशायां न जानामीति व्यवहारोऽप्रसिद्ध एव। एवमेव यस्य पुरुषस्य शुक्तौ रजतभ्रान्तिस्तस्मिन्नेव भ्रान्तिसमये शुक्तिरजतं न जानामीति व्यवहारोऽप्रसिद्ध एव। परकीयसुखदुःखादीनां परपुरुषस्य न जानामीति व्यवहारस्तु तादृशव्यवहारकर्तुः प्रमातुः स्वगताज्ञाननिबन्धन एव। सिद्धान्ते अज्ञानं द्विविधम्—किञ्चित् प्रमातृचैतन्याश्रितम्, किञ्चित् विषयावच्छिन्नचैतन्याश्रितम्। एतदेव असत्त्वापादकमज्ञानम् अभानापादकमज्ञानमिति च गीयते। प्रमातृचैतन्याश्रितमज्ञानं—परोक्षापरोक्षसाधारणज्ञानमात्रनिवर्त्यम्। विषयावच्छिन्नचैतन्यनिष्ठमज्ञानन्तु अपरोक्षज्ञानमात्रनिवर्त्यम् यदा परपुरुषस्य परपुरुषीयसुखदुःखादिविषयकानुमित्यादिरूपं परोक्षज्ञानं नोत्पन्नं तदा प्रमातृगताज्ञानानिवृत्त्या न जानामीति व्यवहारः स्यात्। अनुमित्यादिरूपपरोक्षज्ञानोदये तु परपुरुषीयसुखदुःखं जानामीत्येव व्यवहारः। अत्र पूर्वपक्षी शंकते—परोक्षज्ञानेन प्रमातृगताज्ञाननिवृत्तावपि विषयगताज्ञानस्यानाशात् विषयगताज्ञानेनैव परोक्षज्ञानकालेऽपि न जानामीति व्यवहारः स्यादेव। तत्राह आचार्यः—द्विविधमज्ञानमुक्तम्, द्विविधाज्ञानयोः कार्यमपि द्विविधमेव। प्रमातृगताज्ञानेन न जानामीति व्यवहारः, विषयगताज्ञानेन च विषयो न भातीति व्यवहारः। परोक्षज्ञानेन प्रमातृगताज्ञाने निवृत्ते न जानामीति व्यवहारो न भवितुमर्हति। विषयगताज्ञानं न जानामीति व्यवहारजनकमेव न

ननु—भावरूपाज्ञानविषयत्वेनाभिमतस्य 'अहमज्ञ' इति प्रत्ययस्य 'मयि ज्ञानं नास्ती'ति ज्ञानाभावविषयात् प्रत्ययात् 'अघटं भूतलमि'ति प्रत्ययस्य 'घटो नास्ती'ति प्रत्ययादिव विशेषणविशेष्य-भावव्यात्यासं विना इच्छाद्वेषाभावज्ञानयोरिव विषयभेदाप्रतीतेरिति—चेत्; सत्यम्, धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां ज्ञानसामान्याभावज्ञानस्य व्याहतत्वेन 'मयि ज्ञानं नास्ती' त्यस्यापि भावरूपाज्ञानविषयत्वेन विषयभेदाप्रतीतेर्युक्तत्वात्। तथा हि—'मयि ज्ञानं नास्ती'ति प्रतीतिः 'वायौ रूपं नास्ती'ति प्रतीतिवद्यावद्विशेषाभावान्यसामान्याभाव-

---

भवति। न जानामीति व्यवहाराजनकेन विषयगताज्ञानेन परोक्षज्ञानसत्त्वदशायां न जानामीति व्यवहारापादनस्यासम्भवात्। विषयगताज्ञानेन विषयो न भातीत्येव व्यवहारो जन्यते। अतः पूर्वपक्षिप्रदर्शितदोषस्य नावसरः। भावरूपाज्ञानस्वीकारेऽपि ज्ञानाभावोऽवश्यमङ्गीकरणीयः, घटज्ञानं नास्तीत्यादिप्रत्ययोदयात्। तथा च अहमज्ञ इति प्रतीतेः भावरूपाज्ञानविषयत्वेऽपि मयि ज्ञानं नास्तीति प्रत्ययस्य ज्ञानाभावविषयत्वमेवाङ्गीकर्तव्यम् ॥३॥

४—केवलमहमज्ञ इति प्रतीतौ ज्ञानाभावस्य विशेषणतया, मयि ज्ञानं नास्तीति प्रतीतौ ज्ञानाभावस्य विशेष्यतया भानात्। विशेष्यविशेषणभाववैलक्षण्यं विना द्वयोः प्रतीत्योः किमपि विषयवैलक्षण्यं नास्ति, यथा अघटं भूतलम्, भूतले घटो नास्तीति प्रतीत्योः। यथा इच्छामि, न द्वेष्मि इति ज्ञानयोः विषयवैलक्षण्यं वर्तते इच्छाद्वेषाभावयोर्भावाभावरूपत्वेन वैलक्षण्यात्, नैवं प्रकृते इति शङ्कते पूर्वपक्षी—ननु भावरूपाज्ञानविषयत्वेनाभिमतस्य अहमज्ञ इति प्रत्ययस्य मयि ज्ञानं नास्तीति ज्ञानाभावविषयात् प्रत्ययात् अघटं भूतलमिति प्रत्ययस्य [भूतले] घटो नास्तीति प्रत्ययादिव विशेषणविशेष्यभावव्यत्यासं विना इच्छाद्वेषाभावज्ञानयोरिव विषयभेदाप्रतीतेरिति चेत्। कृतविवरणमेतत्। यदुक्तं पूर्वपक्षिणा अहमज्ञः, मयि ज्ञानं नास्तीति प्रतीत्योः विषयवैलक्षण्यं नास्तीति तत् सत्यमेव। उभयत्रैव भावरूपाज्ञानविषयकत्वेन विषयवैलक्षण्याभावादिति समाधत्ते सिद्धान्ती—सत्यम्, धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां ज्ञानसामान्याभावज्ञानस्य व्याहतत्वेन मयि ज्ञानं नास्तीत्य-

विषया, सामान्यावच्छिन्नप्रतियोगिताकयावद्विशेषाभावविषया वा अभ्युपेया। तथा च तत्कारणीभूतधर्मिप्रतियोगिज्ञानाज्ञानाभ्यां कथं न व्याघातः? यत्किंचिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वाभावात्, अभावज्ञाने प्रतियोग्यंशे प्रकारीभूतधर्मस्यैव प्रतियोगितावच्छेदकत्वात्। अन्यथा सामान्याभावसिद्धिर्न स्यात्। यावद्विशेषाभावान्यसामान्याभावानभ्युपगमेऽप्ययं दोषः। यत्किंचिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे 'घटवत्यपि भूतले 'निर्घटं भूतलमि'ति प्रतीतिः स्यात्, 'वायौ रूपं नास्ति' 'पुरोदेशे रजतं नास्ती'त्याद्याप्तवाक्यजन्यप्रतीत्यनन्तरमपि तत्तत्संशयनिवृत्तिर्न स्यात्; एकविशेषाभावबोधनेऽपि विशेषान्तरमादाय संशयोपपत्तेः ॥४॥

---

स्यापि भावरूपाज्ञानविषयत्वेन विषयभेदाप्रतीतेर्युक्तत्वात्। तथा हि—मयि ज्ञानं नास्तीति प्रतीतिः वायौ रूपं नास्तीति प्रतीतिवत् यावत्विशेषाभावान्यसामान्याभावविषया, सामान्यावच्छिन्नप्रतियोगिताकयावद्विशेषाभावविषया वाऽभ्युपेया। तथा च तत्कारणीभूतधर्मिप्रतियोगिज्ञानाज्ञानाभ्यां कथं न व्याघातः। यत्किञ्चिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वाभावात्। अभावज्ञाने प्रतियोग्यंशे प्रकारीभूतधर्मस्यैव प्रतियोगितावच्छेदकत्वात्। अन्यथा सामान्याभावसिद्धिर्न स्यात्। यावद्विशेषाभावान्यसामान्याभावानभ्युपगमेऽपि अयं दोषः। यत्किञ्चिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे घटवत्यपि भूतले निर्घटं भूतलमिति प्रतीतिः स्यात्। वायौ रूपं नास्ति, पुरोदेशे रजतं नास्तीत्याद्याप्तवाक्यजन्यप्रतीत्यनन्तरमपि तत्तत्संशयनिवृत्तिर्न स्यात्। एकविशेषाभावबोधनेऽपि विशेषान्तरमादाय संशयोपपत्तेः। यदुक्तं पूर्वपक्षिणा "अहमज्ञः", "मयि ज्ञानं नास्ती"ति प्रतीत्योः विषयवैलक्षण्यं नास्तीति तत् सिद्धान्तिनोऽपि सम्मतम्। पूर्वपक्षिणा मयि ज्ञानं नास्तीति प्रतीतेर्ज्ञानाभावविषयकत्वनिश्चयेन तत्तुल्यविषयमहमज्ञ इति प्रतीतेरपि ज्ञानाभावविषयकत्वमभ्युपगन्तव्यम्। तथा च अहमज्ञ इति प्रतीतिः न भावरूपाज्ञानसाधिका। सिद्धान्ती तु व्याघातादेव

मयि ज्ञानं नास्तीति प्रतीतेर्ज्ञानाभावविषयकत्वं न सम्भवति, अतो व्याघात-परिहाराय पूर्वपक्षिणाऽपि मयि ज्ञानं नास्तीति प्रतीतेः भावरूपाज्ञानाविषयकत्वं वक्तव्यमिति अभिप्रैति। तथा च 'मयि ज्ञानं नास्ति', 'अहमज्ञ' इति प्रतीत्योः भावरूपाज्ञानविषयकत्वेन तुल्यविषयकत्वमेव इत्यभिप्रेत्य सत्यमित्युक्तम्। पूर्वपक्षिणा द्वयोः प्रतीत्योर्यत्तुल्यविषयकत्वमुक्तं तत् सत्यम्, सिद्धान्त्यभिप्रेतमेवे-त्यर्थः। पूर्वपक्षिणा ज्ञानाभावविषयकत्वेन द्वयोः प्रतीत्योस्तुल्यविषयकत्वमुक्तम्, सिद्धान्तिना तु भावरूपाज्ञानविषयकत्वेन। मयि ज्ञानं नास्तीति प्रतीतेः भावरूपाज्ञानविषयकत्वं कुतोऽङ्गीकर्तव्यमिति प्रदर्शयितुमाह सिद्धान्ती—वायौ रूपं नास्तीति प्रतीतौ यावद्रूपविशेषाभावकूटव्यतिरिक्तरूपसामान्याभावविषयकत्वं वक्तव्यम्। सामान्याभावप्रतीतिस्तु द्विधा संभवति। यावद्विशेषाभावव्यतिरिक्तः सामान्यधर्मावच्छिन्नप्रतियोगिताकः एकोऽभाव इति यावद्विशेषाभावान्यसामान्या-भावविषयेति मूलसन्दर्भस्यार्थः। अथ वा यावद्विशेषाभावा वा सामान्यधर्मावच्छिन्न-प्रतियोगिताका इति द्वितीयसन्दर्भस्यार्थः। यावद्विशेषाभावेषु सामान्य-धर्मावच्छिन्नप्रतियोगिताकत्वं व्यासज्य वर्तते इत्यङ्गीकरणीयम्। एतत्प्रकारद्वया-तिरिक्तस्तृतीयः प्रकारो न संभवति। अर्थात् यत्किंचिद्विशेषाभावसामान्यधर्मा-वच्छिन्नप्रतियोगिताको न संभवति इत्याह—वायौ रूपं नास्तीति प्रतीति-वदिति। अस्यां प्रतीतौ यावद्रूपविशेषाभावकूटव्यतिरिक्तः रूपत्वावच्छिन्नप्रति-योगिताकः एकोऽभावो भासते, यावद्रूपविशेषाभावा वा रूपत्वावच्छिन्न-प्रतियोगिताका भासन्ते। प्रदर्शितप्रकारद्वयात् तृतीयः प्रकारो न सम्भवति। तथा च ज्ञानसामान्याभावप्रतीतावपि प्रदर्शितयोः प्रकारयोः एकतरोऽवश्य-मङ्गीकर्तव्यः। तथा च यत्किंचिद्विशेषाभावः सामान्यधर्मावच्छिनप्रतियोगिताको न भवितुमर्हति। एवं च ज्ञानसामान्याभावप्रतीतौ अभावप्रत्यक्षकारणीभूतयोः धर्मिप्रतियोगिज्ञानयोः सत्त्वे कथं न व्याघातः? अभावप्रत्यक्षकारणीभूतयोः धर्मिप्रति-योगिज्ञानयोः सत्त्वे सामान्याभावो न स्थातुमर्हति। सामान्याभावसत्त्वे वा धर्मिप्रति-योगिज्ञानयोरसत्त्वात् कथं ज्ञानसामान्याभावस्य प्रत्यक्षत्वमिति ज्ञानसामान्याभाव-प्रत्यक्षे अभ्युपगम्यमाने व्याघातः स्यादेव। ज्ञानसामान्याभावस्य तत्प्रत्यक्षकारणयोः धर्मिप्रतियोगिताज्ञानयोश्च एकदा समावेशाभावात्। यत्किंचिद्विशेषज्ञानाभावस्य

सामान्यावच्छिन्नप्रतियोगिताकत्वासम्भवात्। कुतोऽसम्भवः? इत्यत आह— अभावज्ञाने प्रतियोग्यंशे इति। अभावज्ञाने अभावीयप्रतियोगी येन रूपेण भासते तद्रूपं प्रतियोगितावच्छेदकम्। यथा घटाभावज्ञाने अभावीयप्रतियोगी घटः घटत्वेन भासते। अतो घटत्वं प्रतियोगितावच्छेदकम्। प्रतियोग्यंशे प्रकारीभूतो धर्मस्तु येन रूपेण प्रतियोगी भासते तद्रूपम्। प्रतियोग्यंशे प्रकारीभूतधर्मस्य प्रतियोगितानवच्छेदकत्वे सामान्याभावसिद्धिर्न स्यात्। सामान्याभावे प्रतियोगी सामान्यधर्मप्रकारेणैव भासते, विशेषाभात्रे तु प्रतियोगी विशेषधर्मरूपेणैव भासते। अतः प्रकारीभूतधर्मभेदात् सामान्याभावस्य विशेषाभावेभ्यो भेदः सिद्ध्यति। विशेषाभावेषु प्रतियोगिनः विशेषधर्मरूपेणैव भासन्ते। सामान्याभावे पुनः सामान्यधर्मपुरस्कारेणैव भासन्ते। अतो विशेषाभावव्यतिरिक्तः सामान्याभावः सिद्ध्यति। यावद् विशेषाभावा अन्ये, सामान्याभावस्तु तेभ्योऽन्यः इति सामान्याभावस्यातिरिक्तत्वपक्षे इयं रीतिः प्रदर्शिता। यावद् विशेषाभावेभ्यः सामान्याभावस्यातिरिक्तत्वानभ्युपगमेऽपि यावत् विशेषाभावा एव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वेन भासन्ते इति द्वितीयपक्षाभ्युपगमे अपि अयं दोषः, प्रदर्शितो व्याघाताख्यो दोषः। यावद्विशेषाभावप्रत्यक्षे कारणीभूतयोः धर्मिप्रतियोगिज्ञानयोः सत्त्वे यावद्विशेषाभावकूट एव स्थातुं नार्हति। यावद्विशेषाभावकूटसत्त्वे तत्प्रत्यक्षकारणीभूतयोः धर्मिप्रतियोगिज्ञानयोरसत्त्वम्, तयोः सत्त्वे तु यावज्ज्ञानविशेषाभावकूट एव न तिष्ठेदिति व्याघात एव। यदि पूर्वपक्षिणा 'मयि ज्ञानं नास्ती'ति प्रतीतेः उपपादनाय यत्किञ्चिज्ज्ञानविशेषाभाव एव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वेन भातीति अङ्गीक्रियते तर्हि घटवत्यपि भूतले यत्किचिद् घटविशेषाभावात् निर्घटं भूतलमिति प्रमारूपा प्रतीतिः स्यात्। घटवत्यपि भूतले निर्घटं भूतलमिति प्रतीतेरपि प्रमात्वं स्यात्। किं च, वायौ रूपं नास्ति, पुरोदेशे रजतं नास्तीत्याप्तवाक्यात् वायौ रूपसामान्याभावस्य पुरोदेशे रजतसामान्याभावस्य प्रतीत्यनन्तरमपि वायुः रूपवान् न वा, पुरोदेशः रजतवान् न वेति संशयस्य निवृत्तिर्न स्यात्। यत्किंचिद्रूपविशेषाभावस्यापि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वेन भानसंभवात्। एवमेव रजतवत्यपि पुरोदेशे यत्किंचिद्रजताभावस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकस्य भान-

अथ—अभावबोधे प्रकारीभूतधर्मस्यावच्छेदकत्वं पूर्वानुपस्थितमपि संसर्गमर्यादया शाब्दबोधे अन्यत्र च भासते, न ह्यवच्छेदकत्वस्य स्वरूपसंबन्धविशेषस्य ग्रहे अन्या सामग्री क्लृप्ता; तथा च तत्तद्विशेषाभावानां तत्तद्विशेषावच्छिन्नप्रतियोगिताकत्वात् सामान्यावच्छिन्नप्रतियोगिताकत्वं यावद्विशेषाभावकूटे वा व्यासज्यवृत्तिः तदतिरिक्तसामान्याभावे वा प्रत्येकंविश्रान्तमिति तादृगभावप्रतीतेर्यावद्विशेषप्रतीतिविरोधित्वात् कुतो विशेषसंशयादिरिति—चेत्, सत्यम्; प्रकृतेऽपि ज्ञानत्वसामान्यावच्छिन्नप्रतियोगिताकाभावप्रतीतिर्यावज्ज्ञानविशेषविरोधिनीति कथं तत्तत्कारणत्वाभिमतज्ञानविशेषे सति सा न

---

सम्भवात् तादृशाप्तवाक्यजन्यप्रतीत्यनन्तरमपि तत्तत्संशयनिवृत्तिर्न स्यात्। अथ च तादृशाप्तवाक्यजन्यप्रतीत्यनन्तरं तत्तत्संशयनिवृत्तिः सर्वानुभवसिद्धैव। किन्तु पूर्वपक्षिमते तन्न स्यात्। सामान्यधर्मपुरस्कारेण एकविशेषाभावबोधनेऽपि विशेषान्तरमादाय संशयानिवृत्तिः स्यात्। एतेन ये तु 'मयि ज्ञानं नास्ती'ति प्रतीतिमुपपादयितुमशक्नुवन्तः इमाम् प्रतीतिमेवापलपन्ति, यत्किंचिद् विशेषाभावो वा सामान्यधर्मावच्छिन्नप्रतियोगिताकतया भासते इत्यङ्गीकुर्वन्ति ते निरस्ताः वेदितव्याः। सर्वानुभवसिद्धप्रतीतेरनङ्गीकारे कथावाह्यत्वापातात् ॥४॥

५—पूर्वपक्षी सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावबोधस्य यावद्विशेषप्रतीतिविरोधित्वात् यत्र कुत्रचित् सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावबोधोत्तरं यत्किंचिद् विशेषस्य तत्र संशयानुवृत्तिर्न भवितुमर्हतीति स्वीकुर्वन्नाह—अथ अभावबोधे प्रकारीभूतधर्मस्य अवच्छेदकत्वं पूर्वानुपस्थितमपि संसर्गमर्यादया शाब्दबोधेऽन्यत्र च भासते। नह्यवच्छेदकत्वस्य स्वरूपसम्बन्धविशेषस्य ग्रहेऽन्या सामग्री क्लृप्ता। तथा च तत्तद्विशेषाभावानां तत्तद्विशेषावच्छिन्नप्रतियोगिताकत्वात् सामान्यावच्छिन्नप्रतियोगिताकत्वं यावत् विशेषाभावकूटे व्यासज्यवृत्तिः, तदतिरिक्तसामान्याभावे वा प्रत्येकविश्रान्तमिति तादृगभावप्रतीतेः यावद्विशेषप्रतीतिविरोधित्वात् कुतो विशेषसंशयादिरिति चेत्, सत्यम्, प्रकृतेऽपि ज्ञानत्वसामान्यावच्छिन्नप्रतियोगिताकाभावप्रतीतिः याव-

व्याहन्यते। तथा च क्लृप्ताभावप्रतीतिवैलक्षण्येऽवश्यकल्पे लाघवाद्विषयस्यैवाभाववैलक्षण्यं कल्पयितुमुचितम्; विषयावैलक्षण्ये प्रतीतिवैलक्षण्यायोगात्। विषयाज्ञानमनुभूय च पुरुषस्तन्निवृत्त्यर्थं विचारे प्रवर्तत इति सर्वानुभवसिद्धम् तद्यदि ज्ञानविशेषाभावो 'न जानामी'ति प्रतीतेर्विषयः, तदा ज्ञातेऽपि तथा प्रतीत्यापातः; तद्विचारार्थं च प्रवृत्तिः स्यात्। सामान्याभावे च बाधकमुक्तमेव। तस्मादभावविलक्षणमेवाज्ञानं 'मयि ज्ञानं नास्त्यहमज्ञ' इत्यादिधीविषय इति सिद्धम्।

---

ज्ज्ञानविशेषविरोधिनीति कथं तत्तत्कारणत्वाभिमतज्ञानविशेषे सति सा न व्याहन्येत। तथा च क्लृप्ताभावप्रतीतिवैलक्षण्येऽवश्यकल्प्ये लाघवादविषयस्यैवाभाववैलक्षण्यं कल्पयितुमुचितम्। विषयावैलक्षण्ये प्रतीतिवैलक्षण्यायोगात्। विषयाज्ञानमनुभूय च पुरुषस्तन्निवृत्त्यर्थं विचारे प्रवर्तत इति सर्वानुभवसिद्धम्। तद्यदि ज्ञानविशेषाभावो न जानामीति प्रतीतेर्विषयस्तदा ज्ञातेऽपि तथा प्रतीत्यापातः, तद्विचारार्थं च प्रवृत्तिः स्यात्। सामान्याभावे च बाधकमुक्तमेव। तस्मादभावविलक्षणमेवाज्ञानं मयि ज्ञानं नास्ति, अहमज्ञ इत्यादिधीविषयः इति सिद्धान्तः [ सिद्धम् ]। अभावबोधे प्रतियोग्यंशे प्रकारीभूतधर्मस्यैव प्रतियोगितावच्छेदकत्वमिति प्रागुक्तम्। प्रतियोग्यंशे प्रकारीभूतधर्म एव प्रतियोगिविशेषिताभावप्रतीतौ प्रतियोगितावच्छेदकतया भासते। प्रतियोग्यंशे प्रकारीभूतधर्मे यत् प्रतियोगितावच्छेदकत्वं भासते तस्य अभावप्रतीतेः प्रागनुपस्थितत्वात् विशेषणतया भानं न संभवति, विशेषणतया भाने पूर्वोपस्थितिनियमात्। पूर्वोपस्थितस्यैव विशेषणतया भाननियमात्। अतः प्रतियोगितावच्छेदकत्वं यदुक्तप्रतीतौ भासते तत्संसर्गमर्यादया भासते इति बोद्धव्यम्, न विशेषणतया। विशेषणतया भाने पूर्वोपस्थितत्वनियमात् पूर्वानुपस्थितस्य विशेषणतया भानासम्भवात् संसर्गमर्यादया भानमङ्गीकर्तव्यम्। पूर्वानुपस्थितस्यापि संसर्गस्य शाब्दबोधादौ भानदर्शनात्। प्रतियोगितावच्छेदकधर्मे यदवच्छेदकत्वं तत् अवच्छेदकादनतिरिक्तमेव स्वरूपसम्बन्धविशेषरूपम्। अतः

अवच्छेदकधर्मग्राहिकया सामग्र्यैव तद्गतावच्छेदकत्वमपि गृह्यते। अवच्छेदकधर्मग्राहकसामग्रीतः अवच्छेदकत्वग्राहिका सामग्री अन्या न वर्तते। अवच्छेदकत्वस्य स्वरूपसम्बन्धविशेषरूपत्वात् अवच्छेदकधर्मग्राहिकया सामग्र्या एव अवच्छेदकत्वमपि गृह्यते। एवं च तत्तज्ज्ञानविशेषाभावानां तत्तज्ज्ञानत्वावच्छिन्नप्रतियोगिताकत्वात् तत्तद्विशेषाभावाः सामान्याभावतो भिन्ना एव। सामान्याभावस्य तु द्वयी गतिः प्राक् प्रदर्शिता। सैवात्र प्रदर्श्यते। यावद्विशेषाभावकूटे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्तिः अङ्गीक्रियते। इत्येकः प्रकारः सामान्याभावस्य। अन्यस्तु यावद् विशेषाभावकूटव्यतिरिक्तः एकः सामान्याभावः सामान्य धर्मावच्छिन्नप्रतियोगिताकः। सामान्याभावस्य एकत्वपक्षे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमव्यासज्यवृत्तिः। यावद्विशेषाभावकूटरूपत्वे तु यावद्विशेषाभावकूटे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्तिः अङ्गीक्रियते। धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायेन अतिरिक्तमेकं सामान्याभावमपरिकल्प्य क्लृप्तेष्वेव विशेषाभावेषु सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वरूपो धर्मो व्यासज्यवृत्तिः कल्प्यते। इत्येव द्वितीयपक्षानुसरणे बीजम्। परन्तु अस्मिन्पक्षे प्रतियोग्यंशे प्रकारीभूतो धर्मः प्रतियोगितावच्छेदकतया भातीति अनुभवस्य परित्याग एव स्यात्। तत्तद्विशेषाभावेषु तत्तद्विशेषः प्रतियोगी तत्तद्विशेषत्वेनैव भासते, अतस्तत्तद्विशेषत्वस्यैव प्रतियोगितावच्छेदकत्वमुचितम्। तत्परित्यज्य सामान्यधर्मरूपेणाभासमाना ऽपि विशेषाभावीयप्रतियोगिनः सामान्यधर्मावच्छिन्नप्रतियोगिताकाः इत्यङ्गीकरणात् प्रसिद्धानुभवस्यापलाप एव स्यात्। अतिरिक्तसामान्याभावे वा प्रत्येकविश्रान्तमित्यस्य अयमर्थः—सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं सामान्याभावस्यैकत्वपक्षे तदभावव्यक्तिमात्रविश्रान्तम्, न व्यासज्यवृत्तीति फलितोऽर्थः। यावद्विशेषाभावकूटपक्षे तु सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्ति, न प्रत्येकविशेष्याभावव्यक्तिविश्रान्तम्। तादृगभावप्रतीतेरिति—प्रकारद्वयेन सामान्याभावप्रतीतेरित्यर्थः। यावद्विशेषाभावविरोधित्वात् वायौ रूपं नास्ति, पुरोदेशे रजतं नास्तीत्याप्तवाक्यजन्यप्रतीत्यनन्तरं वायौ रूपस्य, पुरोदेशे रजतस्य संशयानुवृत्तिर्न स्यात् इत्युक्तं पूर्वपक्षिणा। पूर्वपक्ष्यङ्गीकृतमनुसृत्यैव ज्ञानसामान्याभावप्रत्यक्षे व्याहतिं योजयति प्रकृतेऽपीति।

मयि ज्ञानं नास्तीत्यत्र ज्ञानत्वसामान्यावच्छिन्नप्रतियोगिताकाभावप्रतीतिः यावज्ज्ञानविशेषविरोधिनीति पूर्वपक्षिणैव अङ्गीकृता, तथा च ज्ञानसामान्याभावे विद्यमाने ज्ञानसामान्याभावप्रत्यक्षकारणत्वेन अभिमतज्ञानविशेषे सति धर्मिप्रतियोगिज्ञानयोः सत्त्वे इत्यर्थः। कथं सा न व्याहन्येत ? सा ज्ञानसामान्याभावप्रतीतिः प्रत्यक्षरूपा कथं न व्याहन्येत। धर्मिप्रतियोगिज्ञानयोः सत्त्वे ज्ञानसामान्याभावाभावात्। ज्ञानसामान्याभावाभावे च ज्ञानसामान्याभावप्रत्यक्षकारणयोः धर्मिप्रतियोगिज्ञानयोरभावादित्यर्थः। तथा च क्लृप्ताभावप्रतीतिवैलक्षण्येऽवश्यकल्प्ये इति—अतः पूर्वपक्षिणापि घटसामान्याभावपटसामान्याभावादिप्रतीतेर्ज्ञानसामान्याभावप्रतीतौ वैलक्षण्यमवश्यमङ्गीकरणीयम्। ज्ञानसामान्याभावप्रत्यक्षप्रतीतिर्विलक्षणा अन्यसामान्याभावप्रत्यक्षप्रतीतितः। घटादिसामान्याभावप्रत्यक्षे न कापि व्याघातदोषसम्भावना। किन्तु ज्ञानसामान्याभावप्रत्यक्षप्रतीतिः न केनापि रूपेण सम्भाव्यते। ज्ञानान्यवस्तूनां सामान्याभावस्य प्रत्यक्षप्रतीतिर्यथाऽनायाससिद्धा तथैव ज्ञानसामान्याभावस्य प्रत्यक्षप्रतीतिः तथैव सर्वथाऽसिद्धा। अतः घटसामान्याभावप्रतीतितः ज्ञानसामान्याभावस्य प्रत्यक्षप्रतीतिर्विलक्षणा इत्यवश्यमेवाङ्गीकर्तव्या। प्रतीतेर्वैलक्षण्यन्तु विषयवैलक्षण्यप्रयुक्तमिति लघ्वी कल्पना। विषयवैलक्षण्यं विना प्रतीतेर्वैलक्षण्यप्रयोजककल्पना गुर्वी। अतः घटसामान्याभावप्रतीतिविलक्षणा ज्ञानाभावविषयिणी प्रतीतिः। अतः ज्ञानाभावप्रतीतेर्विषयः न ज्ञानाभावः किन्तु ज्ञानविरोधिभावभूतमज्ञानमेव विषयः। अतो मयि ज्ञानं नास्तीति प्रतीतेर्विषयोऽपि न ज्ञानसामान्याभावः। अतो भावभूताज्ञानमेवास्याः प्रतीतेर्विषय इत्यस्माभिरङ्गीक्रियते। किञ्च, ज्ञानविरोधिभावभूतमज्ञानमवश्यमेव कल्पनीयम् इत्याह सिद्धान्ती—विषयविशेषितमज्ञानं साक्षिणा अनुभूय प्रमाता विचारादौ प्रवर्तते। विषयव्यावृत्तस्याज्ञानस्याननुभवे तदज्ञाननिवृत्तये विचारादौ प्रवृत्तिर्न स्यात्। विषयव्यावृत्तमज्ञानं कथमपि प्रमाणेन ज्ञातुं न शक्यते इति प्रागेव निरूपितम्। यदि पूर्वपक्षिमते ज्ञानविशेषाभाव एव न जानामीति प्रतीतेर्विषयः स्यात्, तदा विषये ज्ञातेऽपि विषयं न जानामीति प्रतीत्यापातः। एकविशेषसत्त्वेऽपि विशेषान्तरस्याभावात्। कस्मिंश्चिद्विचार्ये विषये कस्यचिद्विशेषज्ञानस्य सत्त्वेऽपि ज्ञानविशेषान्तरस्याभावात् तदापि तस्मिन्नेव

ननु—अभावविलक्षणमप्यज्ञानं 'न जानामी'ति ज्ञानविरोधित्वेनैव भासते, मोहादिपदेऽपि प्रलयादिपदवत्तदनुल्लेखमात्रम्; उक्तं च विवरणे—'अज्ञानमिति द्वयसापेक्षज्ञानपर्युदासेनाभिधानादि'ति। [विवरणम्, पृ०, ४२ काशी सं०]। अन्यथा ज्ञानस्याज्ञान-

---

विषये न जानामीति प्रतीतिः स्यादेव, यतः पूर्वपक्षिणैवोक्तं ज्ञानविशेषाभावो न जानामीति प्रतीतेर्विषयः। तथा च ज्ञानविशेषाभावनिवृत्त्यर्थं विचारे प्रवृत्तिः स्यादेव। तथा च पूर्वपक्षिमते कस्मिन्नपि विषये इदं न जानामीति प्रतीतेर्निवृत्तिः कदापि न स्यात्। ज्ञानसामान्याभावप्रत्यक्षन्तु यथा सर्वथैव न सम्भवति तथा इतः प्रागेवोक्तं, व्याघातदोषापातात्। तस्मात् मयि ज्ञानं नास्ति, अहमज्ञ इत्यादिप्रतीतेर्विषयस्तु अभावविलक्षणमेवाज्ञानमिति सिद्धम्। यत्तु न जानामीति प्रतीतेर्विषयो भावरूपाज्ञानं न भवितुमर्हति, भावरूपाज्ञानस्यैव न जानामीति प्रतीतिविषयत्वाङ्गीकारे घटो न जानाति, अहं न जानामीति प्रतीत्योर्विषयवैलक्षण्यापातात्। घटो न जानातीति प्रतीतेर्विषयो भावरूपाज्ञानं न भवितुमर्हति। अद्वैतवादिमते चैतन्यस्यैव भावरूपाज्ञानाश्रयत्वाङ्गीकारात्। घटस्तु जडः न भावरूपाज्ञानाश्रयो भवितुमर्हति। अतो घटो न जानातीति प्रतीतेर्विषयो ज्ञानाभाव एव, किन्तु भावरूपाज्ञानं नोक्तप्रतीतेर्विषयः। अहं न जानामीति प्रतीतेर्विषयस्तु अद्वैतवेदान्तिमते भावरूपाज्ञानमेव। अतो न जानामीति, न जानातीति प्रतीत्योर्विषयवैलक्षण्यमापद्येत। किन्तु अनयोः प्रतीत्योर्विषयवैलक्षण्यं नानुभवसिद्धम्। अतो अनयोः प्रतीत्योर्विषया वैलक्षण्याय न जानामीति प्रतीतेरपि ज्ञानभावविषयत्वमङ्गीकर्तव्यम्। तथा च भावरूपाज्ञानस्यासिद्धिरेव। तन्न, प्रदर्शितयोः प्रतीत्योराकारावैलक्षण्येऽपि विषयवैलक्षण्यं सम्भवति। यथा इदमसुरम्, बलिरसुरः इति प्रतीत्योः आकारावैलक्षण्येऽपि विषयवैलक्षण्यं सर्वमतसिद्धम्। असुरमिति प्रतीतेर्विषयः सुरशून्यम्, असुर इति प्रतीतेर्विषयस्तु सुरविरोधी॥५॥

६—भावरूपाज्ञानवादेऽपि व्याघातोऽपरिहार्य एवेति शंकते पूर्वपक्षी—

ननु अभावविलक्षणमपि अज्ञानं न जानामीति ज्ञानविरोधित्वेनैव भासते, मोहादिपदेऽपि प्रलयादिपदवत् तदनुल्लेखमात्रम्। उक्तञ्च विवरणे—अज्ञानमिति द्वयसापेक्षज्ञानपर्युदासेनाभिधानात्। [विवरणम्,

विरोधित्वमप्रामाणिकं स्यात्; तथा च विरोधनिरूपकज्ञानस्य ज्ञानाज्ञानाभ्यां तवापि कथं न व्याघातः? एवं निर्विषयाज्ञानाप्रतीतेर्विषयज्ञानाज्ञानयोरपि व्याघात आपादनीयः; तथा च

'यत्रोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥'

इति न्यायेन उभयपरिहरणीयस्य व्याघातस्य ज्ञानाभावपक्ष एवापादनमनुचितमिति—चेत् ॥६॥

---

पृ०, ४३ काशीसं०]। 'अन्यथा ज्ञानस्याज्ञानविरोधित्वमप्रामाणिकं स्यात्। तथा च विरोधनिरूपकज्ञानस्य ज्ञानाज्ञानाभ्यां तवापि कथं न व्याघातः? एवं निर्विषयाज्ञानाप्रतीतेर्विषयज्ञानाज्ञानयोरपि व्याघात आपादनीयः। तथा च—

यत्रोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगार्थविचारणे ॥

इति न्यायेन उभयपरिहरणीयस्य व्याघातस्य ज्ञानाभावपक्षे एवापादनमुचितमिति चेत्। मयि ज्ञानं नास्तीति प्रतीतेर्ज्ञानाभावविषयकत्वे व्याघातदोषः सिद्धान्तिभिरापादितः। मयि ज्ञानं नास्तीति प्रतीतेर्भावरूपाज्ञानविषयकत्वेऽपि सिद्धान्तिमतेऽपि व्याघातः अपरिहार्य एव स्यात्। उक्तप्रतीतेर्विषयः भावरूपाज्ञानमपि ज्ञानविरोधित्वेनैव प्रतीयते। न जानामीति प्रतीतेरभिलापवाक्ये विरुद्धार्थबोधकनञा सह ज्ञाधात्वर्थज्ञानेन सम्बन्धात् न जानामीति वाक्यात् ज्ञानविरुद्धवानस्मि इत्येव प्रतीतिः स्यात्। ज्ञानविरोध्यज्ञाने विद्यमानस्य विरोधस्य निरूपकं ज्ञानम्। ज्ञाननिरूपितविरोध एवाज्ञाने प्रतीयते। तथा च विरोधनिरूपकज्ञानस्य ज्ञानाज्ञानाभ्यां सिद्धान्तेऽपि व्याघातः स्पष्ट एव। यदि सिद्धान्तिनैवमुच्येत — भावभूतमज्ञानं केवलं न जानामीति प्रतीत्यैव विषयीक्रियते इति न किन्तु मुग्धोऽहमस्मीति प्रतीत्यापि विषयीक्रियते। अस्याः प्रतीतेरभिलापवाक्ये नञ्पदाभावात् ज्ञानविरोधित्वमज्ञाने नियतं न भासते, अतो न प्रदर्शितो व्याघात इति सिद्धान्तिना न वाच्यम्। यतः प्रलयादिपदेषु नञः उल्लेखाभावेऽपि ध्वंसरूप एवार्थः प्रतीयते, एवमेव मोहपदेऽपि

नञ उल्लेखाभावेऽपि मोहपदेन प्रतीयमानवस्तुज्ञानविरोधित्वेनैव प्रतीयते। विवरणाचार्यवचनादपि अज्ञानपदाज्ज्ञानविरोधित्वेनैव अज्ञानस्य प्रतीतिरङ्गीकर्तव्या। उक्तञ्च विवरणे—अज्ञानमिति द्वयसापेक्षज्ञानपर्युदासेनाभिधानादिति। अस्यार्थः—आश्रयविषयसापेक्षं ज्ञानं प्रतीयते,—अस्य अस्मिन् ज्ञानमिति। एवमाश्रयविषयसापेक्ष-ज्ञान-विरोधिरूपेणैव अज्ञानमज्ञानपदादभिधीयते। यदि आश्रयविषयसापेक्षज्ञानविरोधिरूपेण अज्ञानं न प्रतीयेत तदा ज्ञानेन सह अज्ञानस्य विरोधोऽप्रामाणिक एव स्यात्। अतो ज्ञानविरोधत्वरूपेण प्रतीयमानेऽज्ञाने यो ज्ञानविरोधस्तस्य निरूपकं ज्ञानं यदि ज्ञातं न स्यात्तर्हि ज्ञानविरोधि अज्ञानमिति प्रतीतिरपि न स्यात्। यदि ज्ञातं स्यात्तर्हि अज्ञानमेव न स्यात्तदापि ज्ञानविरोधित्वेन अज्ञानं न प्रतीयेत। अयमभिप्रायः—ब्रह्म न जानामीति प्रतीतेर्विषयोऽज्ञानम्। तच्च ज्ञानविरोधिरूपेण प्रतीयते। अत्रेदमवधेयम्—यज्ज्ञानविरोधिरूपेणाज्ञानं प्रतीयते तज्ज्ञानं प्रमारूपं बोध्यम्। अतः ब्रह्मविषयकप्रमाविरोधिरूपेणैव ब्रह्मविषयकमज्ञानं प्रतीयते। अतो ब्रह्मविषयकाज्ञाननिष्ठविरोधनिरूपकं ब्रह्मज्ञानं यदि ज्ञातं न स्यात्तर्हि निरूपकाप्रतीत्या तन्निरूपितमज्ञानमपि न प्रतीयेत। विरोधनिरूपकं ब्रह्मज्ञानं यदि ज्ञातं स्यात्तर्हि ब्रह्मविषयकमज्ञानमेव न तिष्ठेत्। अतः भावभूताज्ञानस्वीकारपक्षेऽपि अद्वैतमते व्याघातदोषोऽपरिहार्य एव। किञ्च, निर्विषयकाज्ञानस्य प्रतीतिरेव न भवति। अतो विषयविशेषिताज्ञानस्यैव प्रतीतिरङ्गीकरणीया। अज्ञानव्यावर्तको विषयो यदि ज्ञातो न स्यात्तदा विषयविशेषिताज्ञानप्रतीतिरेव न स्यात्। यद्यज्ञानव्यावर्तको विषयो ज्ञातः स्यात्तदा अज्ञानमेव न तिष्ठेत्। अतोऽज्ञानव्यावर्तकविषयस्य ज्ञाने अज्ञाने वा उभयथापि अज्ञानप्रतीतिर्व्याहता। अतो व्याघातदोषस्य उभयपक्षे तुल्यत्वात् यत्र समानो दोषः, समानश्च परिहारः, तादृशार्थविचारे एकतरपक्षावलम्बिना अन्यतरः पक्षः पर्यनुयोक्तुं न शक्यते व्याघातदोषस्य उभयसमाधेयत्वात्। अतो ज्ञानाभावपक्षे एव व्याघात इति सिद्धान्तिना नापादयितुं शक्यते। भावरूपाज्ञानपक्षेऽपि व्याघातस्य विद्यमानत्वात् ॥६॥

७—अज्ञाननिष्ठविरोधनिरूपकज्ञानस्य अज्ञानविषयस्य च साक्षिवेद्यत्वाङ्गीकारात् न सिद्धान्तिमते व्याघातः। साक्षिणो अज्ञानानिवर्तकत्वात्। प्रमाणजन्य-

न, प्रमाणवृत्तिनिवर्त्यस्यापि भावरूपाज्ञानस्य साक्षिवेद्यस्य विरोधनिरूपकज्ञानतद्व्यावर्तकविषयग्राहकेण साक्षिणा तत्साधकेन तदनाशाद्व्याहत्यनुपपत्तेः। अज्ञानग्रहे विषयगोचरप्रमापेक्षायां व्याहतिः स्यादेव, सा च नास्ति। तदुक्तं विवरणे—'सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एवे'ति [विवरणम् पृ०, १३, काशी सं०] ॥७॥

न चैवं—ज्ञानाभावपक्षेऽपि विषयादिज्ञानं साक्षिरूपम्, 'न जानामो'ति धीस्तु प्रमाणवृत्त्यभावविषयेति न व्याहतिरिति—वाच्यम् ॥८॥

---

वृत्तेरेवाज्ञाननिवर्त्तकत्वात् इत्याह सिद्धान्ती—न, प्रमाणवृत्तिनिवर्त्त्यस्यापि भावरूपाज्ञानस्य साक्षिवेद्यस्य विरोधनिरूपकज्ञानतद्व्यावर्तकविषयग्राहकेण साक्षिणा तत्साधकेन तदनाशात् व्याहत्यनुपपत्तेः। अज्ञानग्रहे विषयगोचरप्रमापेक्षायां व्याहतिः स्यादेव। सा च नास्ति। तदुक्तं विवरणे—सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एव। [विवरणम्, पृ०, १३, काशीसंस्करणम्]। ज्ञानविरोधित्वेन सविषयकत्वेन च अज्ञानप्रतीतौ विरोधनिरूपकस्य ज्ञानस्य अज्ञानव्यावर्तकस्य विषयस्य च यदि प्रमाणवेद्यत्वमपेक्षितम् स्यात्तर्हि व्याघातः स्यात्। किन्तु तयोः साक्षिसिद्धत्वात् साक्षिणश्च अज्ञानानिवर्तकत्वात् प्रत्युताज्ञानसाधकत्वात् व्याघातशङ्कैव नास्ति। अज्ञानग्रहे अज्ञानविषयगोचरप्रमापेक्षायां व्याहतिः स्यात्। किन्तु प्रमापेक्षा नास्ति। उक्तञ्च विवरणे—सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव। अज्ञानव्यावर्तको विषयः साक्षिचैतन्येन अज्ञाततया सिध्यति, प्रमाव्यावर्तको विषयः साक्षिचैतन्येन ज्ञाततया सिध्यति ॥७॥

८—सिद्धान्तिना यथा भावरूपाज्ञानं साक्षिवेद्यम्, अज्ञानव्यावर्तकविषयोऽपि साक्षिवेद्य इति स्वीक्रियते तथाऽस्माभिरपि ज्ञानाभावः साक्षिवेद्यः, ज्ञानव्यावर्तकविषयोऽपि साक्षिवेद्य इत्यङ्गीकरिष्यते। ज्ञानाभावव्यतिरिक्तन्तु भावरूपमज्ञानं नास्माभिरङ्गीक्रियते इत्याह पूर्वपक्षी—न चैवं ज्ञानाभावपक्षेऽपि विषयादिज्ञानं साक्षिरूपम्। न जानामीति धीस्तु प्रमाणवृत्त्यभावविषया

भावरूपाज्ञानस्य साक्षात् साक्षिवेद्यत्वेन तदवच्छेदकविषया-देस्तद्द्वारा साक्षिवेद्यत्वसम्भवेऽपि अभावस्यानुपलब्धिगम्यत्वेन साक्षात् साक्षिवेद्यत्वाभावात् न तद्द्वारा तदवच्छेदकविषयादेः साक्षिवेद्यत्वमिति वैषम्यात्। यद्यपि ज्ञानं साक्षिवेद्यम्, तद्द्वारा तदवच्छेदको विषयश्च साक्षिवेद्यः; तथापि ज्ञानाभावो न साक्षिवेद्यः, तस्यानुपलब्धत्वात्। उत्पन्नं च ज्ञानं साक्षात् साक्षिवेद्यम्। तस्मिंश्चोत्पन्ने तद्विषयोऽपि स्फुरतीति कुतो ज्ञानाभावोऽपि ? अज्ञानविशेषणतया तु अनुत्पन्नमपि ज्ञानं साक्षिवेद्यमिति न दोषसाम्यम्।

---

इति न व्याहतिरिति वाच्यम्। भावरूपाज्ञानस्य तद्व्यावर्तकविषयस्य च यथा साक्षिवेद्यत्वं सिद्धान्तिनाङ्गीक्रियते तथा विषयविशेषितज्ञानाभावरूपाज्ञानस्य साक्षिवेद्यत्वमस्माभिरपि अङ्गीकरिष्यते। ज्ञानाभावः साक्षिवेद्यः, एवमेतदभाव-प्रतियोगिज्ञानव्यावर्तकविषयोऽपि साक्षिवेद्यः। ज्ञानस्य साक्षिवेद्यतावयोः सम्मतैव। ज्ञानस्य साक्षिवेद्यत्वे तदभावोऽपि साक्षिवेद्यः अङ्गीकर्तव्यः, प्रतियोगि-तदभावयोस्तुल्यप्रमाणवेद्यत्वात्। प्रतियोगी येन प्रमाणेन वेद्यते, तदभावोऽपि तेनैव प्रमाणेन वेद्यते। न जानामीति प्रतीतौ प्रमावृत्त्यभाव एव भासते। अतः प्रमावृत्त्यभाव एवाज्ञानम्, तच्च साक्षिवेद्यम्। यथा अभावः साक्षिवेद्यस्तथा अभावस्य प्रतियोगिरूपा प्रमावृत्तिरपि साक्षिवेद्या, प्रमावृत्तेर्विषयोऽपि साक्षिवेद्यः। अतोऽज्ञानस्य ज्ञानाभावरूपत्वेऽपि तस्य साक्षिवेद्यत्वात् सिद्धान्तिनामिवास्माकमपि मते न व्याघातः स्यात् ॥८॥

९—भावरूपाज्ञानस्य तद्व्यावर्तकविषयस्य च साक्षिवेद्यत्वसम्भवेऽपि ज्ञानाभाव-स्य षष्ठप्रमाणवेद्यस्य परोक्षज्ञानविषयस्य साक्षात् साक्षिवेद्यत्वासम्भवात् पूर्वपक्ष्युक्तं न सङ्गतमित्याह—भावरूपाज्ञानस्य साक्षात् साक्षिवेद्यत्वेन तदवच्छेदक-विषयादेस्तद्द्वारा साक्षिवेद्यत्वसम्भवेऽपि अभावस्यानुपलब्धिगम्यत्वेन साक्षात् साक्षिवेद्यत्वाभावात् न तद्द्वारा तदवच्छेदकविषयादेः साक्षिवेद्यत्वमिति वैषम्यात्, यद्यपि ज्ञानं साक्षिवेद्यं तद्द्वारा तदवच्छे-दको विषयश्च साक्षिवेद्यस्तथापि ज्ञानाभावो न साक्षिवेद्यस्तस्यानुपलब्ध-त्वात्। उत्पन्नं च ज्ञानं साक्षात् साक्षिवेद्यम्। तस्मिंश्चोत्पन्ने

तद्विषयोऽपि स्फुरतीति कुतो ज्ञानाभावोऽपि। अज्ञानविशेषणतया तु अनुत्पन्नमपि ज्ञानं साक्षिवेद्यमिति न दोषसाम्यम्। सिद्धान्ते भावरूपाज्ञानं यथा साक्षिवेद्यम्, पूर्वपक्षिमते न तथा ज्ञानाभावः साक्षिवेद्यो भवितुमर्हति। सिद्धान्ते अज्ञानं साक्षात् सक्षिवेद्यम्, अज्ञानद्वारा अज्ञानव्यावर्तकविषयोऽपि साक्षिवेद्यः तथा अज्ञाननिष्ठविरोधनिरूपिका प्रमापि साक्षिवेद्या। अत्र विरोधनिरूपकज्ञानस्यैव आदिपदेन ग्रहणम्। एवं साक्षात्परम्परया चाज्ञानमज्ञानव्यावर्तकविषयश्च साक्षिवेद्यः यथा भवितुमर्हति, न तथा ज्ञानाभावः साक्षात् साक्षिवेद्यः। अभावस्तु अनुपलब्धिप्रमाणवेद्यः। "अभावस्य षष्ठप्रमाणगोचरत्वादिति" [विवरणम्, पृ०, १२, काशी सं०]। यः प्रमाणान्तराविषयोऽपि साक्षात्स्फुरति, तस्यैव अनात्मवस्तुनः साक्षिवेद्यत्वमङ्गीक्रियते। अभावस्तु न साक्षात्स्फुरति, परोक्षज्ञानमात्रवेद्यत्वात्। अनुपलब्धिप्रमाणगम्यत्वाच्च। अतोऽभावः परोक्ष एव। अभावस्य षष्ठप्रमाणवेद्यत्वादेव परोक्षत्वमेव, न प्रत्यक्षत्वम्। यत्तु वेदान्तपरिभाषायामनुलब्धिप्रमाणवेद्यस्याभावस्य प्रत्यक्षत्वाङ्गीकारः स चाद्वैतसिद्धान्तानवबोधविजृम्भित एव। न्यायमार्गानुवर्तनलोभात् परिभाषाकृता एवमुक्तम्। ज्ञानाभावस्तु अनुलब्धिप्रमाणगम्यः परोक्षप्रतीतिवेद्यः। अतो न साक्षिगम्यः। मूले यदुत्पन्नं च ज्ञानं साक्षात् साक्षिवेद्यमित्युक्तं तस्य विद्यमानं ज्ञानं साक्षात् साक्षिवेद्यमित्यर्थः। साक्षिवेद्यज्ञानस्य विद्यमानतादशायां तत्साक्षिवेद्यज्ञानविषयोऽपि साक्षिणा एव वेद्यते। ज्ञानाभावस्तु साक्षात् साक्षिवेद्य एव न भवितुमर्हति। ज्ञानज्ञानाभावयोरेकस्य सत्त्वेऽपरस्याभावनियमाद् यत्किञ्चिज्ज्ञानस्य विद्यमानतादशायां ज्ञानाभावो न स्थातुमर्हति। अभावस्य षष्ठप्रमाणवेद्यत्वमतेऽपि अभावस्य धर्मिप्रतियोगिनो ज्ञानाभावे अभावस्य षष्ठप्रमाणवेद्यतापि न सम्भवति। अतो ज्ञानभिन्नप्रतियोगिकाभावस्य षष्ठप्रमाणवेद्यत्वसम्भवेऽपि ज्ञानाभावस्य षष्ठप्रमाणवेद्यतापि न सम्भवति। अतो यत्किञ्चिज्ज्ञानसत्त्वे ज्ञानाभावस्यासत्त्वात् अविद्यमानेन ज्ञानाभावेन सहानावृतसाक्षिणस्तादात्म्यासम्भवात् ज्ञानाभावस्य साक्षिवेद्यता नैव सम्भवति। अविद्यमानं वस्तु अनावृतसाक्षिणा सह तादात्म्यापन्नं न भवति। यस्य कस्यचिज्ज्ञानस्य विद्यमानतादशायां ज्ञानाभावस्याविद्यमानत्वात् ज्ञानाभावस्य साक्षिवेद्यत्वं न भवितुमर्हति। ज्ञानाभाव एव यदि साक्षात् साक्षिवेद्यो न भवितुमर्हति तदा

न च—अवच्छेदकस्य विषयादेः प्रागज्ञाने कथं तद्विशिष्टाज्ञानज्ञानम् ? विशेषणज्ञानाधीनत्वाद्विशिष्टज्ञानस्येति—वाच्यम्; विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वे मानाभावात्, प्रतियोगित्वा-

---

ज्ञानाभावप्रतियोगिनो ज्ञानस्य ज्ञानव्यावर्तकविषयस्य च साक्षिवेद्यत्वं न सम्भवतीति किमु वक्तव्यम् ? भावरूपमज्ञानं साक्षात् साक्षिवेद्यमिति अज्ञाननिष्ठविरोधनिरूपिका प्रमा भाविनी अविद्यमानाऽपि अज्ञानस्य विशेषणतया परम्परया साक्षिवेद्या भवति। प्रमाया व्यावर्तकविषयोऽपि परम्परया साक्षिवेद्यो भवति। अतः भावरूपाज्ञानप्रतीतौ व्याघाताभावेऽपि ज्ञानाभावप्रतीतौ व्याघातस्तु वर्तत एव। अतो न द्वयोः प्रतीत्योस्तुल्यता। मूले अज्ञानविशेषणतया तु अनुत्पन्नमपि ज्ञानमिति यदुक्तं तस्य अज्ञानविशेषणीभूता भाविनी प्रमा अनुत्पन्ना इति बोध्या। प्रमाया यदज्ञानविशेषणत्वमुक्तं मूले तस्यायमर्थः अज्ञानं नाम ज्ञानविरोधि। एतज्ज्ञानं प्रमारूपं बोध्यम्। तथा च अज्ञाननिष्ठविरोधनिरूपकं प्रमाज्ञानम् अज्ञानविशेषणविशेषणतया भवत्येवाज्ञानस्यापि विशेषणम्।

भावरूपाज्ञानं साक्षिप्रत्यक्षसिद्धमिति सिद्धान्तिनाऽभिहितम्। अत्रेयं शंका—अज्ञानस्य प्रत्यक्षं विशिष्टविषयकं प्रत्यक्षम्। विषयविशेषितमज्ञानमेव साक्षिभास्यं भवति, विषयस्तु अज्ञानस्य विशेषणम्। जन्या विशिष्टविषयिणी प्रतीतिर्विशेषणज्ञानजन्या भवति। अतो विषयविशिष्टाज्ञानप्रत्यक्षात् प्राक् अज्ञानविशेषणस्य विषयस्य ज्ञानमपेक्षितम्। जन्यविशिष्टज्ञानमात्रं विशेषणज्ञानजन्यं भवति। अतोऽज्ञानस्य विषये ज्ञातेऽज्ञानमेव न तिष्ठेत्। अतोऽज्ञानस्य प्रत्यक्षं कथं स्यात्। यदि अज्ञानस्य विशेषणं विषयः अज्ञानप्रत्यक्षात् प्राक् न ज्ञायेत तदा विशेषणज्ञानाभावादेव विशिष्टविषयकं प्रत्यक्षं न स्यात्। अज्ञानप्रत्यक्षन्तु विशिष्टविषयकं प्रत्यक्षमित्युक्तं प्राक्। विशेषणज्ञानाभावे विशिष्टविषयकं प्रत्यक्षं कथं स्यात्। अतो भावरूपाज्ञानस्वीकारेऽपि अज्ञानस्य साक्षिप्रत्यक्षं व्याघातदोषदुष्टमेवेत्याह पूर्वपक्षी—**न चावच्छेदकस्य विषयादेः प्रागज्ञाने कथं तद्विशिष्टाज्ञानज्ञानम्, विशेषणज्ञानाधीनत्वात् विशिष्टज्ञानमिति वाच्यम्।** कृतविवरणमेतत्। विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वे मानाभावात् नायं दोषः इत्याह सिद्धान्ती—**विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वे**

भावत्वयोः पूर्वानुपस्थितयोरपि तार्किकैरभावबोधे प्रकारीभूय भाना-भ्युपगमात्।

तथापि—विशेषणतावच्छेदकप्रकारकज्ञानं विना कथं विशिष्ट-वैशिष्ट्यबुद्धिरिति—चेत् ॥९॥

---

मानाभावात् प्रतियोगित्वाभावत्वयोः पूर्वानुपस्थितयोरपि तार्किकैर-भावबोधे प्रकारीभूय भानाभ्युपगमात्। विशेषणज्ञानस्य विशिष्टज्ञान-जनकत्वे प्रमाणमेव नास्ति। अतो विशिष्टज्ञानत्वं विशेषणज्ञानजन्यता-वच्छेदकमेव न भवति। विशिष्टज्ञानं विशेषणज्ञानजन्यं न भवतीति कृत्वा निर्विकल्पकप्रत्यक्षमपि न सिद्धयति। ये तु तार्किकाः विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वमङ्गीकुर्वन्ति तेऽपि अभाव-विषयकविशिष्टबोधे प्रतियोगित्वाभावत्वधर्मयोरभावबोधे विशेषणत्वेन भासमान-योरभावज्ञानात् प्राक् ज्ञातत्वं नाङ्गीकुर्वन्ति। अभावत्वादिधर्माणाम् अभावविषयक-विशिष्टबोधात् प्राक् ज्ञानं नाङ्गीकुर्वन्ति। प्रतियोगिविशेषिताभावस्य सविकल्प-कैकवेद्यतया ततः प्राक् अभावत्वविषयकं निर्विकल्पकं ज्ञानं न भवितुमर्हति। विशेषणज्ञानस्य जनकत्वेऽत्रैव व्यभिचारः। एवमेव ज्ञानादीनां मानसप्रत्यक्षेऽपि ज्ञानत्वादिना ज्ञानादि मानसप्रत्यक्षे भासते। अथ च तत्र प्रागज्ञातं ज्ञानत्वादि ज्ञानादिविषयकप्रत्यक्षे प्रकारत्वेन भासते। अनुव्यवसाये व्यवसायगतस्य रजतत्व-प्रकारकत्वरूपस्य विशेषणस्य पूर्वमज्ञातस्यैव भानाङ्गीकारात्। अतो जन्यविशिष्ट-ज्ञानत्वावच्छिन्नं प्रति विशेषणज्ञानत्वेन कारणतैवासिद्धा। अतो न व्याघातशंकापीति भावः। इदानीं पूर्वपक्षी जन्यविशिष्टज्ञानस्य विशेषणज्ञान-जनकत्वाभावेऽपि विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारक-निश्चयस्य कारणत्वात् विषयविशेषिताभावप्रत्यक्षस्य विशिष्टवैशिष्ट्यावगाहिबुद्धि-त्वात् विशेषणतावच्छेकप्रकारकनिश्चयोऽवश्यमपेक्षित एव। तथा च पूर्वोक्त-व्याघात एव पुनरापतितः इत्याह पूर्वपक्षी—[तथापि] विशेषणतावच्छेदक-प्रकारकज्ञानं विना कथं विशिष्टवैशिष्ट्यबुद्धिरिति चेत्। जन्यविशिष्ट-वैशिष्ट्यबुद्धिः विशेषणतावच्छेदकप्रकारकनिश्चयजन्या भवति। अतो विशिष्ट-वैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयः कारणम्। एवञ्चाज्ञान-

न, विशिष्टवैशिष्ट्यबुद्धित्वेन विशेषणतावच्छेदकप्रकारकज्ञानत्वेन च कार्यकारणभावे मानाभावात्, प्रत्यक्षत्वादिरूपेण पृथक् पृथक् क्लृप्तकार्यकारणभावेनैवोपपत्तेः, विशिष्टवैशिष्ट्यबुद्धित्वस्यार्थसमाजसिद्धत्वात्, इह च सामग्रीतुल्यत्वेन 'विशेष्ये विशेषणं तत्र च विशेषणान्तरमि'ति न्यायेन विशिष्टवैशिष्ट्यज्ञानसंभवात्। अन्यथा तार्किकाणामपीश्वरस्य भ्रान्तिज्ञत्वं न स्यात्। भ्रमविषयस्य स्वातन्त्र्येण

---

प्रत्यक्षे व्याघात एव स्यात्। अज्ञानप्रत्यक्षमपि विशिष्टवैशिष्ट्यविषयकमेव। ज्ञानविरोधित्वस्वविषयकत्वाभ्यां ज्ञानस्य प्रत्यक्षं भवति। ज्ञानाविरोधित्वेन निर्विषयकत्वेन वा अज्ञानस्य प्रत्यक्षं न भवितुमर्हति। प्रदर्शितविशेषणद्वय-विशिष्टज्ञानमात्मनि भासते। आत्मनि अनाश्रितज्ञानं न साक्षिगम्यम्। अतो ज्ञानविरोधित्वसविषयकत्वविशिष्टज्ञानविशिष्टात्मनः प्रत्यक्षमेवाज्ञानस्य प्रत्यक्षम्। अतो विशिष्टस्याज्ञानस्य वैशिष्ट्यमात्मनि भासते। अतोऽज्ञानस्य प्रत्यक्षं विशिष्टवैशिष्ट्यविषयकमेव। अज्ञानप्रतीतौ आत्मनि विशेष्येऽज्ञानं विशेषणम्। तस्मिन् विशेषणे ज्ञानविरोधित्वसविषयकत्वधर्मद्वयं विशेषणतावच्छेदकम्। अतोऽस्यां विशिष्टवैशिष्ट्यावगाहिबुद्धौ ज्ञानविरोधित्वसविषयकत्वप्रकारकनिश्चय एव विशेषणतावच्छेदकप्रकारकनिश्चयः। अस्य निश्चयस्य विशिष्टवैशिष्ट्यावगाहि-बुद्धेः कारणत्वात्। तस्य प्राक्सत्त्वमपेक्षितम्। अतोऽज्ञानविषयस्य अज्ञान-प्रत्यक्षात् प्राक् निश्चयेऽज्ञानमेव न तिष्ठेत् इति पूर्ववद् व्याघात एव स्यात् ॥९॥

१०—प्रदर्शितकार्यकारणभाव एव प्रमाणं नास्ति। जन्यविशिष्टवैशिष्ट्यावगाहि-बुद्धित्वं कार्यतावच्छेदकम्, विशेषणतावच्छेदकप्रकारकनिश्चयत्वं कारणतावच्छेदक-मित्येव प्रमाणासिद्धम्। अतोऽज्ञानप्रत्यक्षे प्रदर्शितव्याघातदोषो न स्यादित्याह सिद्धान्ती—न, विशिष्टवैशिष्ट्यबुद्धित्वेन विशेषणतावच्छेदकप्रकारक-ज्ञानत्वेन च कार्यकारणभावे मानाभावात्। प्रत्यक्षत्वादिरूपेणैव पृथक्पृथक् क्लृप्तकार्यकारणभावेनैवोपपत्तेः। विशिष्टवैशिष्ट्यबुद्धि-त्वस्यार्थसमाजसिद्धत्वात्। इह च सामग्रीतुल्यत्वेन विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेन विशिष्टवैशिष्ट्यज्ञानसम्भवात्,

ग्रहे भ्रान्तत्वापत्त्या भ्रमावच्छेदकतयैव तद्ग्रहणं वाच्यम्। तथा च क्व प्राक्तदवच्छेदकग्रहनियमः? ग्रहणसामग्रीतुल्यत्वं च प्रकृतेऽपि समम् ॥१०॥

---

अन्यथा तार्किकाणामपि ईश्वरस्य भ्रान्तिज्ञत्वं न स्यात्। भ्रमविषयस्य स्वातन्त्र्येण ग्रहे भ्रान्तत्वापत्त्या भ्रमावच्छेदकतयैव तद्ग्रहणं वाच्यम्। तथा च क्व प्राक् तदवच्छेदकग्रहनियमः। ग्रहणसामग्रीतुल्यत्वं च प्रकृतेऽपि समम्। यदि सिद्धान्तिना प्रदर्शित-कार्य-कारणभावो नाङ्गीक्रियते तर्हि तन्मते विशिष्टवैशिष्ट्यावगाहिबुद्धौ किं कारणम्? कारणं विना कार्यं नोत्पद्यत इति स्थितिः। तत्राह मूलकारः—तार्किकाणां मते विशिष्टवैशिष्ट्याव गाह्यनुभवश्चतुर्विधो भवितुमर्हति। प्रत्यक्षात्मकः, अनुमितिरूपः, उपमितिरूपः, शाब्दबोधरूपश्च। एतच्चतुर्विधानुभवसाधारणम् विशिष्टवैशिष्ट्यावगाहिबुद्धित्वं पृथक् कार्यतावच्छेदकम् न भवितुमर्हति। विशिष्टवैशिष्ट्यावगाहिबुद्धित्वे पृथक् कार्यतावच्छेदकत्वाङ्गीकारेऽपि प्रत्यक्षत्वमनुमितित्वमुपमितित्वं शाब्दबोधत्वमिति चतुर्णां धर्माणां पृथक् पृथक् कार्यतावच्छेदकत्वमङ्गीकर्तव्यमेव। ततः प्रत्यक्षत्वावच्छिन्नानुभवसामग्री, अनुमितित्वावच्छिन्नानुभवसामग्री पृथक्-पृथक् अङ्गीकर्तव्यैव। चतुर्विधसामग्रीत एव चतुर्विधानामनुभवानामुत्पत्तिः सम्भवति। व्याप्तिज्ञानपक्षधर्मताज्ञानाभ्यामनुमितिरुत्पद्यते अथ वा परामर्शज्ञानादनुमिति-रुत्पद्यते। सति परामर्शेऽनुमितेरुत्पत्तौ विलम्बो न भवति। सति परामर्शे विशेषणतावच्छेदकप्रकारकनिश्चयाभावादनुमित्युत्पत्तौ विलम्बो न जायते। परामर्शज्ञानमिव विशेषणतावच्छेदकप्रकारकनिश्चयोऽपि किमनुमितेः पृथक् कारणम् वक्तव्यम्। वयन्तु पश्यामः—यस्य व्याप्तिज्ञानपक्षधर्मताज्ञाने विद्येत, अथ वा परामर्शो विद्यते तस्य विशेषणतावच्छेदकप्रकारकनिश्चयाभावापराधेन अनुमित्युत्पत्तौ विलम्बो न जायते। एवमेव प्रत्यक्षत्वादिप्रमितावपि बोद्धव्यम्। पर्वतो वह्नि-मानित्यनुमितौ पर्वतो विशेष्यतया वह्निर्विशेषणतया वह्नित्वधर्मो विशेषणतावच्छेदक-तया भासते। वह्नित्वप्रकारकनिश्चयस्तु वह्न्यनुमितौ कारणमेव न भवति। अत्र वह्नित्वप्रकारकनिश्चय एव विशेषणतावच्छेदकप्रकारकनिश्चयः। अस्मिन् निश्चये अविद्यमानेऽपि वह्न्यनुमितिर्जायते एव। यद्युच्येत वह्नित्वप्रकारकनिश्च-

याभावे वह्निनिरूपितं व्याप्तिज्ञानं कथं स्यात्, वह्निनिरूपितं व्याप्तिज्ञानं तु वह्न्यनुमितेः कारणम् । यस्य वह्नित्वप्रकारकनिश्चयः तस्य वह्निनिरूपितव्याप्तिज्ञानमेव न भवितुमर्हति, व्याप्तिज्ञानाभावेऽनुमितेरप्यभावात् । अत्र वक्तव्यम्—वह्नित्वप्रकारकनिश्चयश्च वह्निनिरूपितव्याप्तिज्ञानकारणत्वेऽपि, वह्न्यनुमितेः कारणत्वं नास्ति । वह्न्यनुमितेः कारणम् व्याप्तिज्ञानम्, व्याप्तिज्ञानस्य कारणं वह्नित्वप्रकारकनिश्चयः । अतः कारणकारणस्य अन्यथासिद्धत्वमेव । अतो वह्नित्वप्रकारकनिश्चयस्य कारणकारणत्वात् न वह्न्यनुमितिकारणत्वम् । अतो अनुमितिरूपविशिष्टवैशिष्ट्यावगाहिज्ञाने विशेषणतावच्छेदकप्रकारकनिश्चयो न कारणम् । एवमेव प्रत्यक्षादिविशिष्ट [वैशिष्ट्य] ज्ञानेऽपि बोद्धव्यम् । अतः प्रत्यक्षत्वानुमितित्वादिव्यतिरिक्तं विशिष्टवैशिष्ट्यावगाहिज्ञानत्वं न पृथक् कार्यतावच्छेदकम् । यद्यपि अनुमितिर्विशिष्टवैशिष्ट्यावगाहिनी बुद्धिस्तथापि अनुमितिसामग्रीत एव एतस्या विशिष्टवैशिष्ट्यबुद्धेरु[प]त्पत्तौ न विशेषणतावच्छेदकप्रकारकनिश्चयस्य पृथक्कारणत्वम् । अतो विशिष्टवैशिष्ट्यबुद्धित्वमार्थसमाजसिद्धम्, न पृथक् कार्यतावच्छेदकम् । उक्तं च चिन्तामणौ—नीलघटत्वं तु विशिष्टं न कार्यतावच्छेदकम् । प्रत्येकानुगतप्रयोजकद्वयादेव विशिष्टसिद्धेरार्थः—समाजः । [प्रामाण्यवादः, पृ०, ३१०-३११] । विवृतं च मथुरानाथेन—प्रत्येकेति । नीलसामग्र्या नीलं घटसामग्र्या च घटः, तयोः समाजात् अर्थवशसम्पन्नं विशिष्टम् । न तु विशिष्टनिर्वाहाय नीलकपालत्वादिना तद्विशिष्टं प्रति हेतुत्वमिति । अयं भावः—प्रत्यक्षादिचतुर्विधबुद्धिव्यतिरिक्ता कांचन पञ्चमी बुद्धिर्विशिष्टवैशिष्ट्यावगाहिनी नास्ति । प्रत्यक्षादिचतुर्विधबुद्धेः पृथक् पृथक् सामग्री क्लृप्तैव । क्लृप्तसामग्रीभिरेव विशिष्टवैशिष्ट्यबुद्धेरुपपत्तौ पुनः पृथक् विशिष्टवैशिष्ट्यबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन कारणताकल्पना निष्प्रामाणिकी ।

विशिष्टवैशिष्ट्यावगाहिबोधे विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वस्वीकारेऽपि यत्र विशेषणतावच्छेदकप्रकारकनिश्चयो न सम्भवति तत्र विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या विशिष्टवैशिष्ट्यावगाहिनी प्रतीतिः सम्भवतीत्याह मूलकारः—इह च सामग्रीतुल्यत्वेनेति । उभयरीत्यापि बोधे बोधीयविषयता

भिन्नापि बोधस्याकारो न भिद्यते । यथा रक्तदण्डवान् पुरुष इति बोधः विशिष्ट-वैशिष्ट्यावगाहो भवितुमर्हति एवं विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्यापि भवितुमर्हति । उभयरीत्यापि रक्तदण्डवान् पुरुष इत्याकारो बोधः सम्भवति । रीतिभेदात् ज्ञानीयविषयतावश्यं भिद्यते, विशिष्टवैशिष्ट्यविषयक-बोधस्य यज्जनकं विशेष्ये विशेषणमिति रीत्या बोधेऽपि तदेव जनकम् । उभयविध-बोधेऽपि सामग्रीतुल्यात् । भावरूपाज्ञानबोधे भावरूपाज्ञानविषयकविशिष्टवैशिष्ट्या-वगाहिज्ञानसमानाकारः विशष्ये विशेषणमिति रीत्यापि बोधो भवितुमर्हति । किन्तु ज्ञानाभावविषयकबोधः विशेष्ये विशेषणमिति रीत्या नैव भवितुमर्हति । यतः प्रतियोगिविशेषिताभावप्रत्यक्षं विशिष्टस्य वैशिष्ट्यमिति रीत्यैव भवितुमर्हति । उक्तञ्च तार्किकैः प्रतियोगिविशेषिताभावबुद्धिर्विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते । अतो अद्वैतवेदान्तिनां मते भावरूपाज्ञानस्य प्रत्यक्षं यथा उपपद्येत न तथा अभाव-रूपाज्ञानपक्षे प्रत्यक्षमुपपद्यते । इदमत्रावधेयम्—अनाद्यविद्योपहितं चैतन्यं यदि अविद्यायाः साक्षि तदा साक्षिणोऽनादित्वात् तद्विशिष्टवैशिष्ट्यावगाह्यपि न विशेषणज्ञानजन्यम्, न वा विशेषणतावच्छेदकप्रकारकनिश्चयजन्यम् । जन्य-ज्ञानस्यैव कारणत्वेन विशेषणज्ञानादीनामपेक्षा, न अजन्यज्ञानस्य । यदि अविद्या-विषयकाविद्यावृत्तिद्वारा उपहितचैतन्यमेव अविद्यायाः साक्षीत्युच्यते तदा अविद्या-वृत्तेः सादित्वात् अविद्यावृत्त्युपहितचैतन्यमपि सादि । सादिसाक्षिप्रत्यक्षे विशेषणज्ञानादीनां जनकता सम्भाव्यते । परन्तु अद्वैतवादिभिरेषा जनकतैव नाङ्गीक्रियते । विशिष्टवैशिष्ट्यावगाहिबोधेऽपि विशेषणतावच्छेदकप्रकारकनिश्चया-भावेऽपि विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या विशिष्टवैशिष्ट्या-वगाहिबोधसमानाकारो बोध उत्पद्यते इत्येवाद्वैतसिद्धेर्निष्कर्षः । रक्तदण्डवान् पुरुष इति विशिष्टवैशिष्ट्यावगाहिबोधे दण्डो रक्तो न वेता दृशसंशयोत्तरं रक्तत्वप्रकारकनिश्चयाभावाद्विशिष्टवैशिष्ट्यावगाहिबोधो न भवितुमर्हति । किन्तु दण्डो रक्तो न वेति संशयोत्तरमपि विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या विशिष्टवैशिष्ट्यावगाहिबोधसमानाकारबोधो जायत एव । विशिष्ट-वैशिष्ट्यावगाहिबोधसमानाकारबोधोऽपि विशिष्टवैशिष्ट्यावगाहीत्युच्यते । विशिष्ट-वैशिष्ट्यावगाहिबोधस्य यद्ययमर्थः विशेष्येण सहान्वितविशेषणान्वितविशेषण-

विषयकबोध एव विशिष्टवैशिष्ट्यावगाहिबोधः, विशेष्यपुरुषेण सहान्वितदण्ड-रूपविशेषणेनान्वितरक्तत्वविशेषणविषयको बोधस्तदा विशेष्ये विशेषणमिति रीत्यापि जायते। बोधस्यैतस्याकारस्तु रक्तदण्डवान् पुरुषः। एतदभिप्रेत्यैव अद्वैतसिद्धावुक्तम्—विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति न्यायेन विशिष्टवैशिष्ट्यावगाहिज्ञानसम्भवात्। अत्र लघुचन्द्रिकायां किञ्चिदधिकमुक्तम्—भावरूपाज्ञानप्रत्यक्षं विशिष्टवैशिष्ट्यावगाह्यपि विशेषणतावच्छेदकप्रकारकनिश्चय-जन्यं न भवति। विशेषणताच्छेदकप्रकारकनिश्चयाभावेऽपि कुत्रचिद्विशेष्ये विशेषणमिति रीत्या विशिष्टवैशिष्ट्यावगाहिबोधो जायते, यथा घटवदित्यादि-प्रतीतिविशिष्टवैशिष्ट्यावगाहिनी घटत्वविशिष्टस्य घटस्य वैशिष्ट्यमुक्तबुद्धेर्विषयः। अत इयमपि विशिष्टवैशिष्ट्यावगाहिनी बुद्धिः। अथ च एतादृशविशिष्ट-वैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारनिश्चयस्य कारणता नास्ति। एतस्याः बुद्धेः प्राक् विशेषणतावच्छेदकप्रकारकनिश्चयाभावेऽपि घटवदिति विशिष्टवैशिष्ट्या-वगाहिनी बुद्धिर्जायते। अथ च रक्तो दण्डो न वेति संशयोत्तरं रक्तदण्डवानिति विशिष्टवैशिष्ट्यावगाहिनी बुद्धिर्न जायते, विशेषणतावच्छेदकप्रकारकनिश्चया-भावात्। काचित् विशिष्टवैशिष्ट्यावगाहिनी बुद्धिः विशेषणतावच्छेदकप्रकारक-निश्चयाभावेऽपि भवति, काचित् पुनर्न भवतीत्यत्र नियामकं किम्? यस्मिन् धर्मिणि विशेषणतावच्छेदकधर्मो भासते तत्र धर्मिणि यदि अन्यो धर्मो धर्मितावच्छेदकरूपेण भासते तदा विशेषणतावच्छेदकप्रकारकनिश्चयोऽपेक्षते। यदि धर्मिणि धर्मितावच्छेदकरूपेण कश्चन धर्मो न भासते तत्र विशेषण-तावच्छेदकप्रकारकनिश्चयो नापेक्षते। घटवदिति प्रतीतौ विशेषणतावच्छेदक-घटत्वधर्मस्य धर्मी घटः। अस्मिन् धर्मिणि विशेषणतावच्छेदकघटत्वधर्मव्यति-रेकेणान्यो धर्मः धर्मितावच्छेदकतया न भासते, अतोऽत्र विशेषणतावच्छेदक-प्रकारकनिश्चयस्य अपेक्षा नास्ति। किन्तु रक्तदण्डवानिति विशिष्टवैशिष्ट्याव-गाहिबुद्धौ विशेषणतावच्छेदकधर्मो रक्तत्वम्, रक्तत्वधर्मस्य धर्मी दण्डः। विशेषण-तावच्छेदकरक्तत्वधर्मव्यतिरेकेण दण्डत्वधर्मः रक्तत्वधर्मस्य धर्मितावच्छेदक-रूपेण भासते। अतोऽत्र विशेषणतावच्छेदकप्रकारकनिश्चयोऽपि अपेक्षते। दण्डे रक्तत्वदण्डत्वयोर्द्वयोर्धर्मयोर्विद्यमानत्वेऽपि रक्तत्वमेव विशेषणतावच्छेदक-

तया भासते, दण्डत्वं तु धर्मितावच्छेदकतया भासते। अतः घटवदिति विशिष्ट-वैशिष्ट्यावगाहिप्रतीतौ विशेषणतावच्छेदकप्रकारकनिश्चयस्यापेक्षा नास्ति। एवमेव विषयविशेषिताज्ञानस्य विशिष्टवैशिष्ट्यावगाहिप्रतीतौ विशेषणतावच्छेदक प्रकारकनिश्चयस्यापेक्षा नास्ति। विषयविशेषिताज्ञानस्य प्रत्यक्षे ज्ञानविरोधित्व-सविषयकत्वधर्मद्वयविशिष्टाज्ञानस्य वैशिष्ट्यं भासते। अस्यां प्रतीतौ ज्ञानविरोधित्वं सविषयकत्वं च धर्मद्वयं विशेषणतावच्छेदकरूपेणैव भासते। एतयोर्धर्म-योर्मध्ये एकस्य धर्मस्य अपरधर्मधर्मिताच्छेदकरूपेण न भानम्। ज्ञानविरोधित्वविशिष्टेऽज्ञाने धर्मिणि सविषयकत्वरूपो धर्मो विशेषणता-वच्छेकरूपेण न भासते। एवं सविषयकत्वविशिष्टेऽज्ञाने धर्मिणि ज्ञानविरोधित्वधर्मो विशेषणतावच्छेदकतया न भासते। प्रदर्शितयोर्धर्मयोः एको विशेषणतावच्छेदकतया अपरस्तु धर्मितावच्छेदकतया न भासते। किन्तु धर्मद्वयं तुल्यवदेव एकत्र द्वयमिति रीत्या वा खले कपोतन्यायेन वा एकस्मिन्नज्ञाने धर्मिणि विशेषणतावच्छेदरूपेण भासते। यथा दण्डी कुण्डली वासस्वी चैत्र इति प्रतीतौ चैत्ररूपे धर्मिणि दण्डकुण्डलादीनि विशेषणानि युगपत् तुल्यरूपेणैव भासन्ते; किन्तु दण्डविशिष्टे चैत्रे कुण्डलं विशेषणं न भवति, एवमेव ज्ञानविरोधित्वसविषयकत्व-धर्मद्वयमज्ञानरूपे धर्मिणि युगपद्विशेषणतावच्छेदकरूपेण भासते। एकस्मिन् धर्मिणि एकाधिकविशेषणस्य युगपज्ज्ञाने एकत्र द्वयमिति रीत्या प्रतीतिर्जायते। किन्तु विशेषणानां क्रमिकसम्बन्धबोधे तन्न भवति। एवमेव ज्ञानविरोधित्वं सविषय-कत्वं च धर्मद्वयमज्ञाने धर्मिणि युगपद्भासते। किन्तु एकविशेषणविशिष्टेऽपरं विशेषणतया न भासते। एकविशेषणविशिष्टेऽपरस्य विशेषणतया भाने प्राग्विशेषणत्वेन भासमानं वस्तु द्वितीयविशेषणस्य वैशिष्ट्य-प्रतीतिकाले धर्मितावच्छेदकरूपेण भासते। यथा दण्डवान् कुण्डलवान्; अत्र दण्डो धर्मितावच्छेदकतया, कुण्डलं विशेषणतया। प्रकृते च ज्ञानविरोधि-त्वसविषयकत्वधर्मयोर्मध्ये एकस्य धर्मितावच्छेदकतया अपरस्य विशेषणतावच्छेद-कतया भानं न भवति। एताभ्यां धर्माभ्यां भिन्नः कश्चन तृतीयोऽपि धर्मोऽज्ञाने धर्मितावच्छेदकरूपेण न भासते। विशेषणतावच्छेदकधर्मस्य प्रतीतौ धर्मिणि अवश्यमेव कस्यचित् धर्मस्य धर्मितावच्छेदकरूपेण प्रतीतिरपेक्षिता इत्यपि नियमो

नास्ति। अतोऽज्ञानस्य विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे विशेषणतावच्छेदक-प्रकारकनिश्चयस्यापेक्षा नास्ति।' लघुचन्द्रिकाव्याख्यानमत्र समाप्तम्। विशेषणतावच्छेदकप्रकारकनिश्चयं विनापि विशेष्ये विशेषणं तत्रापि विशेषणा-न्तरमिति रीत्या विशिष्टवैशिष्ट्यावगाहिबोधसमानाकारो बोधो जायत इत्यनभ्युप-गमे तार्किकाणामपि ईश्वरस्य भ्रान्तिज्ञत्वं न स्यात्। ईश्वरः स्वयमभ्रान्तः सन् भ्रान्तपुरुषीयां भ्रान्तिं जानाति। भ्रान्तपुरुषीयभ्रान्तिमजानन् ईश्वरः सर्वज्ञो न स्यात्। सर्वज्ञ ईश्वरः भ्रान्तपुरुषीयभ्रान्तिं जानन्नप्यभ्रान्तः। ईश्वरस्य सर्वज्ञत्वानुरोधात् भ्रान्तपुरुषीयभ्रान्तिविषयकं ज्ञानमीश्वरस्यास्तीति अभ्युपगन्तव्यम्। भ्रान्तिज्ञानमपि विषयविशेषितमेव भवति, निर्विषयभ्रान्तिज्ञानासम्भवात्। ईश्वर-ज्ञानस्य विषयः भ्रान्तिज्ञानम्, भ्रान्तिज्ञानस्य विषय इदं रजतादि। अतो विषयविशेषितभ्रान्तिज्ञानद्वारा ईश्वरज्ञानं विषयविशेषितं भवति।' विषयविशेषित-भ्रान्तिज्ञानवैशिष्ट्यमीश्वरज्ञाने भासते। अत ईश्वरस्य भ्रान्तिविषयकं ज्ञानं विशिष्टवैशिष्ट्यविषयकम्। अस्मिन् विशिष्टवैशिष्ट्यावगाहिज्ञाने भ्रमज्ञानविषय एव विशेषणतावच्छेदकः। विशेषणतावच्छेदकविषयस्य स्वातन्त्र्येण ईश्वरज्ञानविषयत्वे ईश्वरोऽपि भ्रान्तपुरुषवदेव भ्रान्तः स्यात्। यं विषयं स्वातन्त्र्येण जानन् पुरुषः भ्रान्तस्तमेव विषयं स्वतन्त्रतया जानन् ईश्वरः कथमभ्रान्तो भवेत्। यो विषयः भ्रान्तौ स्वातन्त्र्येण भासते स विषयः भ्रान्तिज्ञपुरुषीयज्ञाने न स्वातन्त्र्येण भासते किन्तु भ्रान्तिविशेषणतयैव। भ्रान्तिज्ञानविषयस्तु ईश्वरज्ञाने भ्रान्तिज्ञानद्वारैव भासते न साक्षात्। साक्षाद्भाने ईश्वरस्यापि भ्रान्तत्वापत्तिः। एवं यथा तार्किकैरङ्गीक्रियते तथा अस्मन्मतेऽपि अज्ञानस्य प्रत्यक्षे अज्ञानस्य विशेषणे अज्ञानविरोधित्वसविषयकत्वे साक्षात् साक्षिज्ञानस्य विषयतां न गच्छतः। किन्तु साक्षिभास्यज्ञानद्वारा परम्परया साक्षिज्ञानस्य विषयतां गच्छतः। ज्ञानज्ञाने प्रथमज्ञानस्य व्यावर्त्तको विषयः' स्वातन्त्र्येण ग्रहीतव्य इति नियमं तार्किका अपि नाङ्गीकुर्वन्ति, अङ्गीकारे ईश्वरस्यापि भ्रान्तत्वापत्तिः स्यात्। एवमेवाज्ञानज्ञाने अज्ञानव्यावर्तकविषयादीनां स्वातन्त्र्येण ग्रहणापेक्षा' नास्ति, अज्ञानव्यावर्तकविषयादीनां स्वातन्त्र्येण ग्रहणापेक्षायाम्, अज्ञानस्य ज्ञानमेव न भवितुमर्हति। अज्ञानं गृह्णन् साक्षी अज्ञानव्यावर्तकं

विषयमज्ञातत्वेनैव गृह्णाति । अतो भ्रान्तिज्ञपुरुषज्ञानं यदा प्रत्यक्षं भवति, तदा तत्प्रत्यक्षं विशिष्टवैशिष्ट्यावगाहि सदपि विशेषणतावच्छेदकप्रकारकनिश्चयजन्यं न भवति, किन्तु विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्यैव जायते । अज्ञानप्रत्यक्षे अज्ञानस्याश्रयः आत्मा विशेष्यतया भासते, अस्मिन् अज्ञानं विशेषणम्, अज्ञानविषयस्तु विशेषणतावच्छेदकतया भासते । भ्रान्तिज्ञः पुरुषः यथा भ्रमविषयं स्वातन्त्र्येण ग्रहीतुं न शक्नोति, एवमेवाज्ञानसाक्षी अज्ञानविषयं स्वातन्त्र्येण ग्रहीतुं न शक्नोति । अत उभयत्र विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्यैव बोधो जायते । अतो विशिष्टवैशिष्ट्यावगाहिबोधसमानाकारबोधमात्रं विशेषणतावच्छेदकप्रकारकनिश्चयसापेक्षं न भवति । विशेषणतावच्छेदकप्रकारकनिश्चयजन्यस्य विशिष्टवैशिष्ट्यावगाहिबोधस्य य आकारः, विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्यापि बोधस्य स एवाकारः । द्वयोर्ज्ञानयोर्विषयवैलक्षण्येऽपि आकारवैलक्षण्यं नास्ति । यथा पर्वतत्वसामानाधिकरण्येन वह्न्यनुमितेर्य आकारः, पर्वतत्वावच्छेदेन वह्न्यनुमितेरपि स एवाकारः । विषयतायाः भेदस्तु अवश्यं वर्तते । अतः सर्वत्र विशिष्टवैशिष्ट्यावगाहिबोधसमानाकारबोधे विशेषणतावच्छेदकप्रकारकनिश्चयापेक्षा नास्ति । विशेषणस्य विशेषणीभूतं धर्मं स्वतन्त्र्येण जानतः विशिष्टवैष्टचावगाहिबोधस्योदयो भवति, तमेव धर्मं स्वातन्त्र्येणाजानतः विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्यापि बोधोदयो भवति । अत्राद्वैतसिद्धौ ग्रहणसामग्रीतुल्यत्वन्तु प्रकृतेऽपि सममिति यदुक्तं तस्यायमर्थः—ग्रहणाकारस्य तुल्यत्वम्, न तु ग्रहणस्य कारणतुल्यत्वम् । तार्किकमते ईश्वरज्ञानस्य नित्यत्वात् तन्मते उभयविधज्ञानस्य कारणतुल्यत्वं वक्तुं न शक्यते । ईश्वरज्ञानस्य कारणमेव नास्ति । विशेषणतावच्छेदकनिश्चयादपि बोधस्य यादृश आकारः विशेष्ये विशेषणमिति रीत्यापि बोधस्य स एवाकार इति भावः । अत्रेदमवधेयम्—'मयि ज्ञानं नास्ती'त्यादि अज्ञानप्रत्यक्षं ये ज्ञानाभावविषयकमाहुः तेषां मते विशेष्ये विशेषणं तत्रापि विशेषणान्तरमितिरीत्या ज्ञानाभावस्य प्रत्यक्षं न भवितुमर्हति । अभावप्रत्यक्षमात्रं विशिष्टवैशिष्ट्यावगाहि भवतीति कृत्वा विशेषणतावच्छेदकप्रकारकनिश्चयोऽपेक्षत एव । भावरूपाज्ञानपक्षे नायं नियमः ॥१०॥

ननु श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावस्य सत्त्वेन तज्ज्ञानं त्वयापि वाच्यम्; तथा च तत्रापि व्याहतिस्तुल्येति—चेत्, न, श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानरूपस्य प्रतियोगिनो ज्ञानाज्ञानाभ्यां व्याहत्यभावात्, न हि श्रवणादिसाध्यत्वमोक्षहेतुत्वादिप्रकारकब्रह्मज्ञानज्ञानं ब्रह्मज्ञानमपि सत् श्रवणादिसाध्यम्, मोक्षहेतुर्वा; येन तस्मिन् सति तादृग्ज्ञानप्रागभावो व्याहन्येत् ॥११॥

---

११—अभावप्रत्यक्षमात्रं यदि विशिष्टवैशिष्ट्यावगाहिरीत्यैव भवितुमर्हति, नान्यथा तथा च ज्ञानाभावप्रत्यक्षे पूर्वपक्षिमते व्याघातः स्यादिति यदुक्तं सिद्धान्तिना तत्रेदं पृच्छयते—ब्रह्मसाक्षात्कारोत्पत्तेः प्राक् ब्रह्मज्ञानस्य प्रागभावः सिद्धान्तिनापि अङ्गीकर्तव्यः। एवमेतत्प्रागभावज्ञानादेव तेषां वेदान्तश्रवणादौ प्रवृत्तिः स्यान्नान्यथा, तथा च ब्रह्मज्ञानप्रागभावज्ञाने ब्रह्मज्ञानस्यापि ज्ञातत्वात् सिद्धान्तिमतेऽपि व्याघातः स्यादिति शङ्कते पूर्वपक्षी—ननु श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावस्य सत्त्वेन तज्ज्ञानं त्वयापि वाच्यम्। तथा च तत्रापि व्याहतिस्तुल्या इति चेत्। अयं भावः—ब्रह्मज्ञानोत्पत्तेः प्राक् वेदान्तवाक्यश्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानस्य प्रागभावः सिद्धान्तिनापि अङ्गीकर्तव्यः ब्रह्मज्ञानस्य प्रागभावस्य ज्ञानं सिद्धान्तिनापि अङ्गीकरणीयं ब्रह्मज्ञानप्रागभावज्ञानं वर्तत इति कृत्वैव ते ब्रह्मज्ञानाय वेदान्तश्रवणादौ प्रवृत्ता भवन्ति, किन्तु ब्रह्मज्ञानप्रागभावज्ञानं सिद्धान्तिनोऽपि न भवितुमर्हति। ब्रह्मज्ञानप्रागभावस्य ज्ञाने व्याघातः स्यात्। ब्रह्मज्ञानप्रागभावस्य ज्ञानाभावेऽपि तेषां वेदान्तश्रवणादिषु प्रवृत्तिरेव न स्यात्। ब्रह्मज्ञानप्रागभावज्ञानेऽपि व्याघातो न स्यात् नापि ब्रह्मज्ञान-प्रागभावज्ञानाभावात् वेदान्तश्रवणादावप्रवृत्तिरित्याह सिद्धान्ती—न, श्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानरूपस्य प्रतियोगिनो ज्ञानाज्ञानाभ्यां व्याहत्यभावात्। न हि श्रवणादिसाध्यत्वमोक्षहेतुत्वादिप्रकारकब्रह्मज्ञानज्ञानं ब्रह्मज्ञानमपि सत् श्रवणादिसाध्यं मोक्षहेतुर्वा येन तस्मिन् सति तादृग्ज्ञानप्रागभावो व्याहन्येत। ब्रह्मज्ञाने प्रागभावज्ञाने न व्याघातः, यतः ब्रह्मज्ञानप्रागभावस्य प्रतियोगिब्रह्मज्ञानम्। अस्य प्रतियोगिनो ज्ञानं प्रागभावज्ञानात् पूर्वमपेक्षितमिति कृत्वैव व्याघातः आपादितः पूर्वपक्षिणा। किन्तु तन्न,

नन्वेवं—'न जानामी'ति धियो ज्ञानाभावविषयत्वेऽपि न प्रतियोगिज्ञानादिना व्याहतिः; सामान्यतो विषयप्रतियोगिज्ञानेऽपि विशेषतस्तदभावसंभवात्, अन्यथा प्रागभावधीर्नं स्यात्; तत्प्रतियोगिविशेषस्य सामान्यधर्मं विना विशेषतो ज्ञातुमशक्यत्वादिति चेत् ॥१२॥

---

ब्रह्मज्ञानप्रागभावप्रतियोगिनो ब्रह्मज्ञानस्य ज्ञानाज्ञानाभ्यां न व्याघातः। यतो ब्रह्मज्ञानस्योत्पत्तिः एवं ब्रह्मज्ञानस्य ज्ञानं न एकं वस्तु। ब्रह्मज्ञानं जानामि, एतावता ज्ञातुर्न ब्रह्मज्ञानसिद्धिः। ब्रह्मज्ञानमेव श्रवणादिसाध्यं मोक्षहेतुश्च, किन्तु ब्रह्मज्ञानस्य ज्ञानं न श्रवणादिसाध्यम्, न वा मोक्षहेतुः। श्रवणादिसाध्यत्वमोक्षहेतुत्वविशिष्टब्रह्मज्ञानस्य ज्ञानं परम्परया ब्रह्मविषयकमपि तन्न साक्षात् ब्रह्मविषयकम्। साक्षाद्ब्रह्मविषयकं ज्ञानमेव मोक्षहेतुः श्रवणादिसाध्यञ्च। श्रवणादिसाध्यब्रह्मज्ञानमहं जानामि, नैतावता मम ब्रह्मज्ञानं सम्पन्नम्, न वा मम मोक्षः। ब्रह्मज्ञानज्ञानसत्त्वेऽपि ब्रह्मज्ञानप्रागभावसत्त्वे बोधो नास्ति। ब्रह्मज्ञानस्य ज्ञानमस्तीति कृत्वा ब्रह्मज्ञानस्य प्रागभावो न स्थास्यतीति न युज्यते। ब्रह्मज्ञानस्य ज्ञानसत्त्वेऽपि ब्रह्मज्ञानप्रागभावसत्त्वे बोधो नास्तीति कृत्वा व्याघातदोषस्य सम्भावनैव नास्ति ॥११॥

१२.—न जानामीति धियः ज्ञानाभावविषयत्वेऽपि न प्रतियोगिज्ञानादिना व्याहतिः। सामान्यतः प्रतियोगिज्ञाने विशेषतस्तदभावसम्भवात्। ज्ञानत्वेन रूपेण ज्ञानविशेषाभावसम्भवात्। सामान्यधर्मावच्छिन्नप्रतियोगिताकविशेषाभावस्य सम्भवान्न व्याहतिरिति शंकते—नन्वेवं न जानामीति धियो ज्ञानाभावविषयत्वेऽपि न प्रतियोगिज्ञानादिना व्याहतिः, सामान्यतो विषयप्रतियोगिज्ञानेऽपि विशेषतस्तदभावसम्भवाद्, अन्यथा प्रागभावधीर्न स्यात्। तत्प्रतियोगिविशेषस्य सामान्यधर्मं विना विशेषतो ज्ञातुमशक्यत्वात्, इति चेत्। न जानामीति प्रतीतेर्विषयः ज्ञानाभावोऽपि भवितुमर्हति, प्रदर्शितव्याघातदोषेण ज्ञानाभावप्रतीतिरेवासिद्धा इति न संगतम्। यस्य कस्यचिद् विशेषज्ञानस्याभावः न जानामीति प्रतीतेर्विषयः, किन्तु विशेषज्ञानाभावस्य प्रतियोगिविशेषज्ञानं अभावप्रतीतौ ज्ञानत्वसामान्यधर्मरूपेण भासते, अतो ज्ञानत्वसामान्यधर्मरूपेण ज्ञान-

विशेषस्य अभाव एव न जानामीति प्रतीतेर्विषयः। एवमभ्युपगमे धर्मिप्रतियोगिज्ञानयोः सत्त्वासत्त्वाभ्यां व्याघातोऽपि न स्यात्। सामान्यरूपेण प्रतियोगिनो ज्ञानसत्त्वेऽपि ज्ञानविशेषरूपप्रतियोगिन अभावः प्रतीयत एव। ज्ञानत्वसामान्यधर्मरूपेण यत्किंचिद्विशेषरूपस्याभावेऽपि यत्किंचिद्विशेषज्ञानसत्त्वे बाधकाभावात्। विशेषाभावीयप्रतियोगितापि सामान्यधर्मावच्छिन्ना भवति। एवमस्वीकारे कुत्रापि प्रागभावस्य प्रत्यक्षं न स्यात्। यथा कुत्रचिद् कपाले कस्यचिद् घटविशेषस्य प्रागभावो वर्तते। तस्य प्रागभावस्य प्रतियोगी घटविशेषः विशेषधर्मरूपेण ज्ञातुं न शक्यते। घटविशेषस्योत्पत्तेः प्राक् सं घटविशेषः विशेषधर्मरूपेण ज्ञातुं न शक्यते। अतो घटप्रागभावस्य प्रतियोगिविशेषः घटः घटत्वसामान्यरूपेणैव ज्ञायते। सामान्यधर्मरूपेण प्रतियोगिविशेषस्य ज्ञानमेवाभावप्रत्यक्षे कारणं स्वीकार्यम्। घटविशेषप्रागभावस्य प्रत्यक्षे प्रतियोगिनो घटविशेषस्य यदि विशेषरूपेण ज्ञानमावश्यकं स्यात् तदा घटविशेष्यप्रागभावस्य कदापि प्रत्यक्षं न स्यात्। अतः प्रागभावप्रत्यक्षे विशेषः प्रतियोगी सामान्यधर्मरूपेणैव भासते। अत एव अभिलापोऽपि—इह कपाले घटो भविष्यतीति। प्रागभावस्य प्रतियोगी विशेषघटः तद्घटत्वरूपेण भातुमशक्नुवन् शुद्धघटत्वरूपेणैव भासते। अतो न जानामीति प्रतीतेर्विषयः ज्ञानविशेषाभावः, तस्य प्रतियोगी ज्ञानविशेषोऽपि ज्ञानत्वसामान्यधर्मरूपेणैव भासते। न जानामीति प्रतीतेर्विषयस्तु यावज्ज्ञानाभावो न भवितुमर्हति। तथात्वे धर्मिप्रतियोगिज्ञानापेक्षायां यत्किंचिज्ज्ञानविशेषसत्त्वे यावद्विशेषज्ञानाभावोऽसंभावित एव स्यात्। अतो न जानामीति प्रतीतेर्विषयो न यावद्विशेषज्ञानाभावः, किंतु यत्किञ्चित्विशेषज्ञानाभावः अर्थात् ब्रह्मज्ञानाभाव इत्यर्थः। अस्याभावस्य प्रतियोगिविशेषज्ञानं सामान्यज्ञानत्वधर्मरूपेण भासते। सुतरां यत्किंचिज्ज्ञानसत्त्वे यत्किंचिज्ज्ञानस्याभावः प्रत्यक्षे बाधो नास्ति। एतादृशनियमानभ्युपगमे कुत्रापि प्रागभावप्रत्यक्षं न स्यात्। यतः प्रागभावप्रतियोगिनः समवायिकारणे एव भाववस्तुनः प्रागभावो वर्तते। प्रतियोग्युत्पत्तेः प्राक् प्रतियोगिनः समवायिकारणे प्रागभावप्रत्यक्षं जायते। प्रतियोगिनः उत्पत्तेः प्राक् प्रतियोगिनो विशेषरूपेण ज्ञानं न भवितुमुचितमिति। अतः प्रागभावप्रतियोगिनो ज्ञानस्यापेक्षितत्वेऽपि सामान्यरूपेण

न, विशेषज्ञानाभावे हि विशेषज्ञानत्वावच्छिन्नं प्रतियोगीति तस्य ज्ञाने स विशेषोऽपि ज्ञात एवेति विशेषज्ञानाभावव्याघातात् यत्किंचिद्विशेषाभावश्च न सामान्यावच्छिन्नप्रतियोगिताक इत्युक्तम्। प्रतियोगितावच्छेदकप्रकारकज्ञानाभावेन प्रागभावप्रतीतिरसिद्धैव ॥१३॥

---

प्रतियोगिनो ज्ञानमेवापेक्ष्यते। अतः प्रागभावप्रत्यक्षानुरोधेन सिद्धान्तिनापि एतदङ्गीकरणीयं—यत् सामान्यधर्मपुरस्कारेण 'प्रतियोगिविशेषस्य ज्ञानात् सामान्यधर्मपुरस्कारेण विशेषप्रतियोगिनः अभावस्य प्रत्यक्षं जायते। अतो मयि ज्ञानं नास्ति इति प्रत्यक्षस्यापि ज्ञानविशेषाभाव एव भवितुमर्हति ॥१२॥

१३—मयि ज्ञानं नास्तीति प्रतीतिः सामान्यधर्मपुरस्कारेण ज्ञानविशेषाभावविषया न भवितुमर्हति। यदि ज्ञानविशेषाभाव एव स्यात् तर्हि प्रतियोगितावच्छेदकधर्मोऽपि विशेषज्ञानत्वमेव भवेत्, शुद्धज्ञानत्वं प्रतियोगितावच्छेदकं भवितुं नार्हति। विशेषज्ञानत्वावच्छिन्नं प्रतियोगि चेत् तर्हि प्रतियोगिज्ञानाज्ञानाभ्यां व्याघात एवेति समाधत्ते सिद्धान्ती—न, विशेषज्ञानाभावे हि विशेषज्ञानत्वावच्छिन्नं प्रतियोगि इति तस्य ज्ञाने स विशेषोऽपि ज्ञात एव इति विशेषज्ञानाभावव्याघातात्। यत्किंचिद्विशेषाभावश्च न सामान्यावच्छिन्नप्रतियोगिताक इत्युक्तम्। प्रतियोगितावच्छेदकप्रकारकज्ञानाभावेन प्रागभावप्रतीतिरसिद्धैव। मयि ज्ञानं नास्तीति प्रतीतौ ज्ञानविशेषाभावस्य विषयत्वाभ्युपगमे अस्य प्रतीतिविषयस्याभावस्य प्रतियोगिविशेषज्ञानम्, विशेषज्ञानत्वं च प्रतियोगितावच्छेदकम्। विशेषज्ञानत्वावच्छिन्नप्रतियोगिनो ज्ञानमभावज्ञाने अपेक्षितमिति कृत्वा विशेषज्ञानत्वावच्छिन्नप्रतियोगिनो ज्ञाने स विशेषोऽपि ज्ञात एव। विशेषस्य ज्ञातत्वे विशेषज्ञानाभावस्य व्याहतत्वात्। विशेषज्ञानस्य सत्त्वदशायां विशेषज्ञानस्याभावो न संभवति। अतः पूर्वप्रदर्शितव्याघात एव पुनरत्राप्यापतेत्। यत्किंचिद्विशेषाभावश्च न सामान्यधर्मावच्छिन्नप्रतियोगिताकः, तथात्वे घटवत्यपि भूतले घटाभाववद् भूतलमिति प्रतीतेः प्रमात्वापातादिति प्रागेवोक्तम्। अभावप्रत्यक्षे प्रतियोगितावच्छेदकधर्मप्रकारेण प्रतियोगिज्ञानस्यापेक्षितत्वात् तदसम्भवात् प्रागभावप्रतीतिरसिद्धैव। यत्किंचिद्विशेषस्यैव प्रागभावः सम्भवति। यथा तत्कपाले तद्घटप्रागभावो वर्तते,' तद्घटत्वेन रूपेण तद्घटस्य

ननु—प्रतियोगितावच्छेदकप्रकारकज्ञानं नाभावज्ञाने कारणम्, किंत्वभावज्ञाने भासमानप्रतियोगिवृत्तिधर्मप्रकारकं ज्ञानम्। सामान्यलक्षणाप्रत्यासत्त्यभ्युपगमे तु प्रतियोगिविषयत्वमपि तस्याधिकम्, इतरथा तु तदेव, इष्टवृत्तिसामान्यधर्मप्रकारकज्ञानमिवासिद्धव्यक्तिविषयेच्छाकृत्योः।

---

ज्ञानमेव प्रतियोगितावच्छेदकधर्मपुरस्कारेण प्रतियोगिनो ज्ञानम्। तच्च प्रतियोग्यनुत्पाददशायां न सम्भवति। प्रतियोगिनोऽनुत्पन्नत्वात्। तद्घटत्वधर्मपुरस्कारेण तद्घटस्य प्रतियोगिनो ज्ञानासम्भवात् तद्घटप्रागभावप्रतीतिर्नैव भवितुमर्हति। सामान्यधर्मपुरस्कारेण तु विशेषप्रतियोगिनो ज्ञानमभावप्रत्यक्षेऽनपेक्षितमेव। यतस्तत्र विशेषधर्मपुरस्कारेण प्रतियोगिविशेषाभावप्रतीतौ कारणम्। अतः प्रागभावप्रतीतिरसिद्धैव। इमं सिद्धान्तरहस्यमजानन्तः एव उत्तानाशयाः घटविशेषप्रागभावप्रतिपादनाय घटो भविष्यतीत्यभिलापवाक्यं प्रयुञ्जते, सामान्यधर्मपुरस्कारेण विशेषस्याभावं व्यवहर्तुम् ॥ १३ ॥

१४—इदानीं पूर्वपक्षी प्रतियोगितावच्छेदकप्रकारकज्ञानं नभावज्ञाने कारणाम्, किन्तु अभावज्ञाने भासमानं प्रतियोगिवृत्तिधर्मप्रकारकं ज्ञानं कारणम्, प्रतियोगितावच्छेदकधर्मप्रकारकज्ञानाभावेऽपि प्रतियोगिवृत्तिधर्मप्रकारकज्ञानेनैव अभावज्ञानं भवितुमर्हतीति शङ्कते—**ननु प्रतियोगितावच्छेदकप्रकारकज्ञानं नाभावज्ञाने कारणम्, किन्तु अभावज्ञाने भासमानप्रतियोगिवृत्तिधर्मप्रकारकं ज्ञानम्। सामान्यलक्षणप्रत्यासत्त्यभ्युपगमे तु प्रतियोगिविषयत्वमपि तस्याधिकम्। इतरथा तु तदेव। इष्टवृत्तिसामान्यधर्मप्रकारकज्ञानमिव असिद्धव्यक्तिविषयेच्छाकृत्योः।** सामान्यप्रत्यासत्त्यनभ्युपगमे अभावज्ञाने प्रतियोगिज्ञानं न कारणम्, किन्तु प्रतियोगितावच्छेदकप्रकारकज्ञानमेव कारणमिति चेत् सिद्धान्तिभिरुक्तं तन्न संगतम्। प्रागभावप्रत्यक्षे प्रतियोगितावच्छेदकप्रकारकज्ञानस्यैव असम्भवात्। किन्तु प्रतियोगिवृत्तिधर्मप्रकारकं ज्ञानं कारणम्। घटप्रागभावप्रतीतावपि प्रागभावप्रतियोगिनि घटे विद्यमानधर्मप्रकारकं ज्ञानं कारणम्, तेन घटत्वप्रकारकज्ञानात् घटप्रागभावप्रतीतेरुपपत्तिः। घटत्वमपि घटप्रागभावप्रतियोगिवृत्तिधर्म एव। प्रतियोगितावच्छेदकप्रकारकज्ञानं तु प्रागभाव-

न च—प्रतियोगितानवच्छेदकधर्मेण कथं प्रतियोगिता गृह्यतामिति—वाच्यम्।

---

प्रतीतौ न संभवतीति प्रागेव उक्तम्। सामान्यप्रत्यासत्त्यभ्युपगमे तु घटत्वसामान्यप्रत्यासत्त्या घटप्रागभावप्रतियोगिनोऽपि घटत्वेन ज्ञानं संभवति। अतः प्रतियोगिवृत्तिधर्मप्रकारकप्रतियोगिज्ञानमेव प्रागभावप्रतीतौ कारणम्। एतदेवाधिकं प्रतियोगिवृत्तिधर्मप्रकारकज्ञानादधिकं प्रतियोगिविषयकमपि ज्ञानं कारणम्। सामान्यलक्षणाया अनभ्युपगमे तु प्रागुक्तमेव बोध्यम्। एतदेवोक्तं मूले—**इतरथा तु तदेव**। इतरथा—सामान्यलक्षणाया अनभ्युपगमे। तदेव—प्रतियोगिवृत्तिधर्मप्रकारकज्ञानमेव। स्वोक्तं दृष्टान्तेन समर्थयन्नाह पूर्वपक्षी—**इष्टवृत्तिसामान्यधर्मप्रकारकज्ञानमेवेति**। असिद्धविषयिण्येव इच्छा कृतिश्च भवति। इष्टविषयिण्यामिच्छायां कृतिसाध्यविषयिण्यां कृतौ च इच्छाकृत्योर्विषयज्ञानम् इच्छाकृतिकारणत्वेन अपेक्ष्यते, अज्ञाते इच्छाकृत्योरभावात्। असिद्धविषयिणी इच्छा कृतिश्च असिद्धविषयकज्ञानजन्या। इच्छाविषयविषयकं ज्ञानमिच्छायाः कारणम्। इच्छाविषयस्यासिद्धत्वात् इष्टतावच्छेदकप्रकारेण इष्टज्ञानं न संभवति। अत इष्टवृत्तिधर्मप्रकारकज्ञानमेव असिद्धविषयिण्या इच्छायाः कारणम्। अत्र यथा इष्टतावच्छेदकरूपेण इष्टज्ञानाभावेऽपि इष्टवृत्तिधर्मप्रकारकज्ञानात् इच्छा जायते, तथैव प्रतियोगितावच्छेदकप्रकारकज्ञानाभावेऽपि प्रतियोगिवृत्तिधर्मप्रकारकज्ञानात् प्रागभावप्रतीतिर्भवति। असिद्धा तद्घटव्यक्तिरेव इच्छाविषयीभूता इष्टा। तस्याः घटव्यक्तेस्तद्घटत्वेन रूपेण ज्ञानं नैव सम्भाव्यते। ज्ञानकाले तद्घटव्यक्तेरेवासत्त्वात्। अत इष्टतद्घटव्यक्तिनिष्ठघटत्वधर्मोऽपि इष्टवृत्तिधर्म एव। अतो घटत्वरूपेण ज्ञानात् असिद्धघटविषयिणी इच्छा भवतीत्येव वक्तव्यम्। एतच्च प्रकृतेऽपि समम्। प्रतियोगितावच्छेदकधर्मस्य ग्रहणं विना प्रतियोगिवृत्तिधर्ममात्रग्रहणेन प्रतियोगितैव न ग्रहीतुं शक्यते, प्रतियोगिताग्रहणाय एव प्रतियोगितावच्छेदकधर्मस्यापि ग्रहणं वक्तव्यम्। अवच्छेदकस्य प्रतियोगिताव्याप्यत्वात्। व्याप्यधर्मग्रहणेन व्यापकधर्मोऽपि गृह्यत एव। प्रतियोगिवृत्तिधर्मस्य तु प्रतियोगितायाः अव्याप्यत्वात् तेन प्रतियोगितैव न ग्रहीतुं शक्यत इत्याह सिद्धान्ती—न च

विशेषावच्छिन्नाया व्याप्तेरिव सामान्येन ग्रहणसंभवात्। तथा हि—'इदमभिधेयवत्, प्रमेयादि'त्यनुमाने 'यत्र प्रमेयं तत्राभिधेयमि'ति व्याप्तिग्रहणसमये वृत्तिमत्प्रमेयत्वावच्छेदेनैव सामानाधिकरण्यरूपव्याप्तिसत्त्वेऽपि तस्याः प्रमेयत्वरूपेणैव ग्रहणम्; न तु वृत्तिमत्प्रमेयत्वेन; गौरवात्, वृत्तिमत्त्वविशेषणस्य व्यभिचारावारकत्वेन वैयर्थ्याच्च, अवृत्तिषु साध्यसामानाधिकरण्यरूपव्याप्त्यभाववत् साध्याभावसामानाधिकरण्यरूपव्यभिचारस्याप्यभावात्, व्यर्थविशेषणत्वरहितत्वे सति व्यभिचारिव्यावृत्तत्वमात्रेणैव व्याप्यतावच्छेदकत्वसंभवाच्च। तथा च यथा वृत्तिमत्प्रमेयगतापि व्याप्तिः प्रमेयत्वेनैव गृह्यते, तथा तत्तन्नीलादिव्यक्तिगता प्रतियोगिता नीलत्वादिरूपेण गृह्यत इति न

---

प्रतियोगितानवच्छेदकधर्मेण कथं प्रतियोगिता गृह्यतामिति वाच्यम्। सिद्धान्तिमतमाशंक्य पूर्वपक्षी निराचष्टे। आशङ्का तु इत्थम्। प्रतियोगितावच्छेदकधर्मस्य प्रतियोगितायाः व्याप्यत्वात्, तेन ज्ञातेन प्रतियोगितापि ज्ञातुं शक्या, नान्यथा। प्रतियोगिवृत्तिधर्मश्च न प्रतियोगितायाः व्याप्यः, तेनाव्याप्येन ज्ञातेन कथं व्यापकीभूता प्रतियोगिता ज्ञातुं शक्या। नहि प्रतियोगिता नाम काचन विग्रहवती येन अवच्छेदकरूपापरिचयेऽपि परिचीयेत। अतः प्रतियोगिताग्रहाय तदवच्छेदकग्रहणस्य ध्रौव्यात् इति न च सिद्धान्तिना वाच्यम्। कुतो न वाच्यम्? इत्याह पूर्वपक्षी—विशेषावच्छिन्नायाः व्याप्तेरिव सामान्येन ग्रहणसम्भवात्। तथा हि इदमभिधेयवत् प्रमेयादित्यनुमाने यत्र प्रमेयं तत्राभिधेयमिति व्याप्तिग्रहणसमये वृत्तिमत्प्रमेयत्वावच्छेदेनैव सामानाधिकरण्यरूपव्याप्तिसत्त्वेऽपि तस्याः प्रमेयत्वरूपेणैव ग्रहणम्। न तु वृत्तिमत्प्रमेयत्वेन, गौरवात्। वृत्तिमत्त्वविशेषणस्य व्यभिचारावारकत्वेन वैयर्थ्याच्च। अवृत्तिषु साध्यसामानाधिकरण्यरूपव्याप्त्यभाववत्। साध्याभावसामानाधिकरण्यरूपव्यभिचारस्यापि अभावात्। व्यर्थविशेषणत्वरहितत्वे सति व्यभिचारिव्यावृत्तत्वमात्रेणैव व्याप्यतावच्छेदकत्वसंभवाच्च। तथा च यथा वृत्तिमत्प्रमेयगतापि व्याप्तिः प्रमेयत्वेनैव गृह्यते तथा तत्तन्नीलादिव्यक्ति-

काचिदनुपपत्तिः। एवं च 'इहेदानीं घटो नास्ती'ति प्रतीतिरिव घटोपादानगततत्प्रागभावविषया 'मयि ज्ञानं नास्ती'ति प्रतीतिरपि प्रमातृगततत्प्रागभावविषयेति न काप्यनुपपत्तिरिति--चेत् ॥१४॥

---

गता प्रतियोगिता नीलत्वादिरूपेण गृह्यते इति न काचिदनुपपत्तिः। एवं चेहेदानीं घटो नास्तीति प्रतीतिरिव घटोपादानगततत्प्रागभावविषया मयि ज्ञानं नास्तीति प्रतीतिरपि प्रमातृगततत्प्रागभावविषयेति न काप्यनुपपत्तिरिति चेत्। प्रतियोगितायाः व्याप्येन प्रतियोगितावच्छेदकधर्मेणैव गृहीतेन प्रतियोगिता ग्रहीतुं शक्यते, नान्यथा इति यत्सिद्धान्तिनोक्तं तद्व्याप्यतानवच्छेदकेनैव गृहीतेन व्याप्यताया ग्रहणसम्भवात् नायं नियमः सम्भवति। विशेषावच्छिन्ना व्याप्यता सामान्यधर्मेणापि गृहीतेन गृह्यते इति प्रदर्शयन्नाह पूर्वपक्षी—तथा हीति। इदमभिधेयवत् प्रमेयादित्यनुमाने यत्र प्रमेयं तत्राभिधेयमिति व्याप्तिग्रहणकाले अभिधेयनिरूपिता व्याप्तिर्या प्रमेये गृह्यते सा वृत्तिमत्प्रमेयत्वावच्छेदेनैव। अवृत्तिप्रमेये गगनादौ इयं व्याप्तिर्नास्ति। वृत्तिमत्प्रमेयेष्वेव इयं व्याप्तिर्वर्तते इति कृत्वा वृत्तिमत् प्रमेयत्वमेव व्याप्यतावच्छेदकम्, न तु शुद्धप्रमेयत्वम्। सामानाधिकरण्यरूपाया व्याप्तेरवृत्तिगगनादिष्वसम्भवात् वृत्तिमत्स्वेव प्रमेयेषु सम्भवात्। वृत्तिमत् प्रमेयत्वमेव व्याप्यतावच्छेदकं भवितुं युक्तम्। तथाप्यस्या व्याप्तेः प्रमेयत्वरूपेणैव ग्रहणम्, न तु वृत्तिमत्प्रमेयत्वेन, प्रमेयत्वापेक्षया वृत्तिमत्प्रमेयत्वस्य गुरुशरीरत्वात्। न केवलं गुरुशरीरत्वं व्यभिचारावारकत्वेन वृत्तिमत्त्वविशेषणस्य व्यर्थत्वाच्च। न च शुद्धप्रमेयत्वेन प्रमेये व्याप्तिग्रहणे अवृत्तिगगनादिषु सामानाधिकरण्यरूपव्याप्तेरभावात् कथं प्रमेयत्वं व्याप्यतावच्छेदकमिति वाच्यम्। अवृत्तिगगनादिषु यथा सामानाधिकरण्यरूपा व्याप्तिर्नास्ति तथा साध्याभावसामानाधिकरण्यरूपव्यभिचारोऽपि अवृत्तिगगनादिषु नास्त्येव। अतो वृत्तिमत्त्वविशेषणं व्यभिचारावारकतया व्यर्थमेव। तथा च व्याप्यतायाः किमवच्छेदकमिति निरूपणावसरे एतदेव वक्तव्यम्—तदेव व्याप्यताया अवच्छेदकं यद् व्यर्थविशेषणत्वरहितत्वेऽपि व्यभिचारिण्यावृत्तम्। तादृशस्यैव व्याप्यतावच्छेदकत्वसम्भवात्। तथा च वस्तुगत्या वृत्तिमत्प्रमेयेषु स्थिता व्याप्तिः

न, अभावज्ञाने प्रतियोग्यंशे भासमानस्य धर्मस्यैव प्रतियोगितावच्छेदकतया यत्किंचिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे घटवत्यपि भूतले 'निर्घटं भूतलमि'ति घटज्ञानवत्यपि स्वस्मिन्'मयि घटज्ञानं नास्ती'ति च प्रतीतेरापत्तेः पूर्वोक्तदोषात्। यत्किंचिद्घटज्ञानं घटाभावज्ञाने प्रतिबन्धकमिति तु ज्ञानज्ञानेऽपि तुल्यम्, उदाहृतव्याप्तिग्रहणे तु बाधकाभावात् सामान्यावच्छेदेऽपि न दोषः ॥१५॥

---

प्रमेयत्वेनैवावच्छिद्यते, न तु वृत्तिमत्प्रमेयत्वेन तथा च यथा विशेषनिष्ठा व्याप्तिः सामान्यधर्मेणैवावच्छिद्यते तथा तत्तन्नीलादिव्यक्तिः प्रागभावे तत्तन्नीलादिव्यक्तिगता प्रागभावीयप्रतियोगिता तत्तन्नीलत्वादिना नावच्छिद्यते, किन्तु शुद्धनीलत्वादिनैवावच्छिद्यते। एवमेव तत्तत्कपाले तत्तद्घटप्रागभावीयप्रतियोगितापि शुद्धघटत्वेनैवावच्छिद्यते इति न प्रागभावप्रतीतेरनुपपत्तिः। यदि विशेषधर्मेणैव प्रागभावप्रतियोगितावच्छिद्येत इति नियमः सिद्ध्येत्, स्यात् प्रागभावप्रतीतेरनुपपत्तिः, तदभावात् न प्रागभावप्रतीत्यनुपपत्तिरित्याह मूलकारः—न काचिदनुपपत्तिः। एवं च "इहेदानीं घटो नास्ती"ति प्रतीतिः घटोपादानगततत्तद्घटप्रागभावविषया यथा उपपन्ना। एवं मयि ज्ञानं नास्तीति प्रतीतिरपि प्रमातृगततत्तद्प्रमाप्रागभावविषया इति न काप्यनुपपत्तिः तत्तद्घटाभावीयप्रतियोगिता यथा शुद्धघटत्वेनैवावच्छिद्यते, तथा तत्तत्प्रमाप्रागभावीयप्रतियोगिता प्रमात्वेनैवावच्छिद्यते। विशेषधर्मावच्छिन्नप्रतियोगितापि सामान्यधर्मेणैव ज्ञातुं शक्येति भावः ॥१४॥

१५—विशेषाभावीयप्रतियोगिता न सामान्यधर्मेणावच्छेत्तुं शक्यते इत्याह सिद्धान्ती—न, अभावज्ञाने प्रतियोग्यंशे भासमानस्य धर्मस्यैव प्रतियोगितावच्छेदकतया यत्किंचिद्विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे घटवत्यपि भूतले निर्घटं भूतलमिति, घटवत्यपि स्वस्मिन् मयि घटज्ञानं नास्तीति च प्रतीतेरापत्तेः पूर्वोक्तदोषात्। यत्किंचिद् घटज्ञानं घटाभावज्ञाने प्रतिबन्धकमिति तु ज्ञानज्ञानेऽपि तुल्यम्। उदाहृतव्याप्तिग्रहणे तु बाधकाभावात् सामान्यावच्छेदेऽपि न दोषः। यत्किंचिद्विशेषप्रतियोगिकोऽभावः सामान्यधर्मावच्छिन्नप्रतियोगिताको

न भवितुमर्हति, अन्यथा घटवत्यपि भूतले यत्किचिद्घटाभावसत्त्वेन निर्घटं भूतलमिति प्रतीतेः प्रमात्वापत्तिः स्यात् । यद्किंचिद्विशेषाभावो यदि सामान्यधर्मावच्छिन्नप्रतियोगिताकतया भासेत तर्हि घटज्ञानवत्यपि मयि घटज्ञानस्य यस्य कस्यचिदभावेन मयि घटज्ञानं नास्तीति प्रतीतेः प्रमात्वापत्तेश्च । यथा घटस्य प्रत्यक्षज्ञानवतो मयि घटस्यानुमितिर्नास्ति, घटस्य स्मृतिर्वा नास्ति, एवं सम्भाव्यत एव, घटानुमितिस्मृत्यादीनामभावो यदि शुद्धज्ञानत्वावच्छिन्न-प्रतियोकिताकत्वेन भायात्तर्हि घटप्रत्यक्षज्ञानवत्यपि मयि घटज्ञानं नास्तीति प्रतीतेः प्रमात्वापत्तिश्च स्यात् । घटाभावज्ञाने यस्य कस्यचिद् घटज्ञानस्य प्रतिबन्धकत्वे ज्ञानाभावज्ञाने अपि यस्य कस्यचिद् ज्ञानस्य प्रतिबन्धकत्वात् यत्किंचिज्ज्ञानसत्त्वे मयि ज्ञानं नास्तीति प्रतीतिर्न स्यादेव, यस्य कस्यचिद् ज्ञानस्य प्रतिबन्धकस्य सत्त्वात् । **ज्ञानज्ञानेऽपि तुल्यमिति** मूलं ज्ञाना-भावज्ञानेऽपि तुल्यमित्यर्थकम् । यच्चोक्तम् पूर्वपक्षिणा विशेषधर्मावच्छिन्ना व्याप्तिः सामान्यधर्मावच्छिन्नतया कथं गृहीता, यदि विशेषाभावीयप्रतियोगिता सामान्यधर्मावच्छिन्ना नैव स्यात् ? तत्राह—**उदाहृतव्याप्तिग्रहणे तु इति** । विशेषधर्मावच्छिन्नतया व्याप्तेः सामान्यधर्मावच्छिन्नतया ग्रहणे बाधकप्रमाणाभावात् तत्र तथास्तु, प्रकृते तु बाधकप्रमाणसत्त्वात् नैवं भवितुमर्हति । बाधकाभावे यद्भवितुमर्हति बाधकसत्त्वेऽपि तदेव भवितुमर्हतीति न युज्यते । अत्र सामान्या-वच्छेदेऽपि न दोष इति मूलेऽपिकारोपादानात् अत्रापि सामान्यावच्छेदो मूलकारस्य नाभिप्रेत इति ज्ञायते । प्रदर्शिता व्याप्तिः गगनादिप्रमेयेऽवृत्तिमति नित्यद्रव्ये नास्त्येव । अतः शुद्धप्रमेयत्वं व्याप्तेरवच्छेदकं न भवितुमर्हति । व्याप्तेः सम-नियतधर्म एव व्याप्तेरवच्छेदको भवति, अतिप्रसक्तो धर्मो नावच्छेदकः । वृत्तिम-त्प्रमेयमात्रेऽवस्थिता व्याप्तिः वृत्तिमत्प्रमयत्वेनैवावच्छिद्यते, न शुद्धप्रमेयत्वेन । प्रदर्शिता व्याप्तिः वृत्तिमत्प्रमेयत्वेन ग्रहीतुं शक्यत एव । अतो न व्यर्थविशेष-णत्वदोषः । यद्यस्यां व्याप्तौ वृत्तिमत् प्रमेयत्वावच्छिन्नत्वं धर्मो वर्तते तदा तेन रूपेण ग्रहणे न कोऽपि दोषः । यदि तस्यां व्याप्तौ वृत्तिमत्प्रमेयत्व-धर्मावाच्छिन्नत्वं न वर्तते तदा यत्र यो न वर्तते तत्र तस्य ग्रहे भ्रम एव स्यात् । इत्यद्वैतसिद्धिटीकायां लघुचन्द्रिकायामुक्तम् । अपि शब्दप्रयोगे आचार्यस्य एतादृशं तात्पर्यमुद्घाटितम् गौडब्रह्मानन्देन । ॥१५॥

अथैवं प्रागभावप्रतीतिरेव न स्यात्, न स्यादेव; 'घटो भविष्यती'ति प्रतीतेः धात्वर्थभविष्यत्ताविषयत्वेन प्रागभावाविषयत्वात्। अन्यथा दिनान्तरोत्पत्स्यमानघटे एतद्दिनवृत्तिप्रागभावप्रतियोगित्वेन 'अद्य घटो भविष्यती'ति धीप्रसङ्गः। भविष्यत्त्वं च प्रतियोगितद्ध्वंसानाधारकालसंबन्धित्वम्। ध्वंसत्वं च प्रागभावानङ्गीकर्तृमते कादाचित्काभावत्वमेव। तदङ्गीकर्तृमतेऽपि प्रतियोग्यजनककादाचित्काभावत्वम्। जनकत्वं च स्वरूपसंबन्धविशेषः, न प्रागभावघटितः; प्रागभावस्याजनकत्वापत्तेः, अन्यथात्माश्रयात्। अतः प्रागभावमङ्गीकुर्वतोऽपि तत्प्रत्यक्षत्वं दुर्लभम्, तमनङ्गीकुर्वतस्तु न कापि हानिः ॥१६॥

---

१६—यदि विशेषाभावीयप्रतियोगिता सामान्यधर्मेण नैवावच्छिद्येत तर्हि प्रागभावप्रतीतिरेव न स्यात् इत्याशङ्क्य समाधत्ते सिद्धान्ती—अथैवं प्रागभावप्रतीतिरेव न स्यात्। न स्यादेव, घटो भविष्यतीति प्रतीतेः धात्वर्थभविष्यत्ताविषयत्वेन प्रागभावाविषयत्वात्। अन्यथा दिनान्तरोत्पत्स्यमानघटे एतद्दिनवृत्तिप्रागभावप्रतियोगित्वेन अद्य घटो भविष्यतीति धीप्रसङ्गः। भविष्यत्त्वं च प्रतियोगितद्ध्वंसानाधारकालसम्बन्धित्वम्। ध्वंसत्वञ्च प्रागभावानङ्गीकर्तृमते कादाचित्काभावत्वमेव। तदङ्गीकर्तृमतेऽपि प्रतियोग्यजनककादाचित्काभावत्वम्। जनकत्वं च स्वरूपसम्बन्धविशेषः न प्रागभावघटितः, प्रागभावस्याजनकत्वापत्तेः, अन्यथा आत्माश्रयात्। अतः प्रागभावमङ्गीकुर्वतोऽपि तत्प्रत्यक्षत्वं दुर्लभम्। तमनङ्गीकुर्वतस्तु न कापि हानिः। विशेषाभावीयप्रतियोगिता यदि सामान्यधर्मेण नावच्छिद्येत तर्हि प्रागभावप्रतीतिरेव न स्यात्। कपाले तद्घटप्रागभावप्रतीतौ कपालनिष्ठतद्घटप्रागभावीयप्रतियोगिता न तद्घटत्वेनावच्छिद्यते, किन्तु शुद्धघटत्वेनैव। अत एव कपाले तद्घटो भविष्यतीति न प्रतीतिः, किन्तु घटो भविष्यतीति। सामान्यधर्मानवच्छिन्नत्वे सा न स्यात्। इति पूर्वपक्षिशङ्कायामिष्टापत्तिमाह—न स्यादेवेति। प्रागभावप्रतीतिरेवासिद्धा इति भावः। प्रागभावप्रतीतेरसिद्धत्वे घटो भविष्यतीति प्रतीतिः कं विषयमालम्बतामिति पृच्छायामाह—धात्वर्थभविष्यत्ता-

विषयत्वेन प्रागभावाविषयत्वादिति । भविष्यतीति प्रतीतिर्न प्रागभावविषयिणी, किंतु भूधात्वर्थभविष्यत्ताविषयिणी । उत्पत्त्यर्थकत्वात् भूधातोः उत्पत्तिभविष्यत्त्वमवगाहते प्रतीतिः । भविष्यतीति प्रतीतेः प्रागभावविषयत्वे प्रागभावस्य प्रतियोगिनाश्यत्वात् प्रतियोग्युत्पत्तेः पूर्वं प्रागभावस्तिष्ठति, तथा च दिनान्तरोत्पत्स्यमाने घटे, यो घटो दिनान्तरे उत्पत्स्यते तस्य घटस्य एतद्दिनवृत्तिप्रागभावप्रतियोगित्वेन अद्य घटो भविष्यतीति धीप्रसङ्गः । एतद्दिनवृत्तिप्रागभावप्रतियोगित्वाद् घटस्य । प्रागभावानङ्गीकारे भविष्यत्त्वमेव दुर्निरूपमित्यत आह सिद्धान्ती— भविष्यत्त्वं च प्रतियोगितद्ध्वंसानाधारकालसम्बन्धित्वम्, न प्रागभावाधिकरणकालत्वम् । यः कालः प्रतियोगिनस्तद्ध्वंसस्य चानाधारः तत्कालसम्बन्धित्वमेव भविष्यत्त्वम् । प्रतियोग्याधारः कालो वर्तमानः, ध्वंसाधारः कालः अतीतः, तथा च वर्तमानातीतकालभिन्नः कालो भविष्यन् इत्येव निर्वचनम् । प्रागभावानङ्गीकारे ध्वंसत्वमेव दुर्निरूपम्, प्रागभावप्रतियोग्यभावत्वमेव ध्वंसत्वमित्यत आह मूलकारः—ध्वंसत्वं नोक्तरूपं किंतु प्रागभावानङ्गीकर्तृमते कादाचित्काभावत्वमेव ध्वंसत्वम् । कादाचित्कत्वं नाम कदाचिद्वृत्तित्वम् यद् वस्तु कदाचित् वर्तते तत्कादाचित्कम् । योऽभावः कालत्वव्यापको न भवति, स एवाभावः कादाचित्क इत्यर्थः । अथ वा कादाचित्कत्वमखण्डोपाधिः । किन्तु प्रागभावप्रतियोग्यभावो ध्वंस इति न कदापि भवितुमर्हति प्रागभावस्यानङ्गीकारात् । प्रागभावाङ्गीकर्तृमतेऽपि प्रतियोग्यजनककादाचित्काभावत्वमेव ध्वंसत्वम् । प्रागभावोऽपि कादाचित्क एव, तथापि प्रागभावस्य प्रतियोगिजनकत्वात् ध्वंसस्य च प्रतियोगिजन्यत्वात् प्रतियोग्यजनककादाचित्काभावो ध्वंस एव । प्रतियोग्यजनककादाचित्काभावस्य ध्वंसत्वेऽपि जनकत्वं निर्वाच्यम् । किं तावज्जनकत्वम् ? जनकत्वानिरूपणे प्रतियोग्यजनकत्वमपि निरूपयितुमशक्यम् । अतो जनकत्वं किमिति निरूपणीयम् । कार्याव्यवहितनियतप्राक्कालवृत्ति अनन्यथासिद्धमेव जनकम् । कार्यप्राक्कालस्तु कार्यप्रागभावाधिकरणकाल एव । प्रतियोगिनः प्रागभावाधिकरणकाल एव प्रतियोगिनः पूर्वकालः । एवञ्च जनकत्वं प्रागभावघटितम्, प्रतियोगिजनकत्वरूपेणैव प्रागभावः कल्प्यते । किंतु प्रागभावकल्पनायाः पूर्वं प्रतियोगिजनकत्वमेव ज्ञातुं न शक्यते, यतो जनकत्वं प्रागभावघटितम् । अतः प्रागभावस्य ज्ञानं प्रागभावज्ञाने सापेक्षमिति

'इहेदानीं घटो नास्ती'ति प्रतीतिस्तु सामान्यधर्मावच्छिन्न-प्रतियोगिताकतत्कालावच्छिन्नयावद्विशेषाभावविषया; समयविशेष-स्याप्यभावावच्छेदकत्वात्। अन्यथा 'आद्यक्षणे घटो नीरूप' इत्यादिप्रतीतिर्न स्यात् ॥१७॥

---

कृत्वा ज्ञप्तौ आत्माश्रयः स्यात्। अतो ये प्रागभावमङ्गीकुर्वन्ति तेऽपि प्रदर्शित-प्रागभावघटितजनकत्वमङ्गीकर्तुं नार्हन्ति। अतस्तैरपि स्वरूपसम्बन्धविशेष एव जनकत्वं वक्तव्यम्। स्वरूपसम्बन्धविशेष इत्यस्यार्थस्तु जनकत्वधर्मो जनकस्वरूप-विशेषः। जनकत्वं जनकवस्तुनो नातिरिच्यते। स्वरूपसम्बन्धविशेषरूप एव जनकत्वमिति निर्वचनं तु अगतिका हीयं गतिरिति न्यायेनैव। प्रकारान्तरेण निरूपणासंभवे एव एतादृशं निरूप्यते इत्यत उक्तं मूले—जनकत्वं च स्वरूप-सम्बन्धविशेषो न प्रागभावघटितः, प्रागभावस्य अजनकत्वापत्तेः, अन्यथा आत्माश्रयात्। जनकत्वस्य प्रागभावघटितत्वात् प्रागभावस्यैव जनकत्वं न सिध्येत्। प्रागभावस्य प्रागभावघटितत्वाभावात्। प्रागभावस्य जनकत्वे तु आत्माश्रयः स्यात्। अतः प्रागभावमङ्गीकुर्वतोऽपि प्रागभावस्य प्रत्यक्षं न संभाव्यते। यथा प्रागभावस्य प्रत्यक्षत्वमसम्भवि तथा इतः प्रागेवोक्तम्। प्रागभावानङ्गीकुर्वतस्तु न कापि हानिः। नृसिंहाश्रमचरणा अद्वैतदीपिकाया द्वितीयपरिच्छेदे [अद्वैतदीपिका पृ०, २३४-२५०] तथा विवरणटीकायां भाव-प्रकाशिकायाम्, चित्सुखाचार्याः प्रत्यक्तत्त्वप्रदीपिकायाम्, मधुसूदनसरस्वतीश्रीचर णाश्च अद्वैतरत्नरक्षणे [अद्वैतरत्नरक्षणम्, पृ०, २०] प्रागभावस्यानपेक्षितत्वमाहुः कुत्राप्यनपेक्षितस्य प्रागभावस्यानङ्गीकारे न कापि हानिरित्यर्थः। कुत्रचित् अद्वैतिनां प्रागभावाभ्युपगमः परमतरीत्यैव इति बोध्यम् ॥१६॥

१७—इहेदानीं घटो भविष्यतीति प्रतीतेः प्रागभावाविषयत्वे तस्या प्रतीतेः को वा विषयः स्यादिति पृच्छायामाह सिद्धान्ती—इहेदानीं घटो नास्तीति प्रतीतिस्तु सामान्यधर्मावच्छिन्नप्रतियोगिताकतत्कालावच्छि-न्नयावद्विशेषाभावविषया, समयविशेषस्यापि अभावावच्छेदकत्वात्। अन्यथा आद्यक्षणे घटो नीरूप इत्यादिप्रतीतिर्न स्यात्। प्रदर्शितयुक्त्या एतत् स्थिरीकृतं यत्किञ्चिद्विशेषाभावः सामान्याधर्मावच्छिन्नप्रतियोगिताको

अथ—अस्मिन्पक्षे सामान्याभावो न सिद्ध्येदिति—चेत्, प्रागभावाभ्युपगमेऽपि तुल्यमेतत्, सामान्याभावप्रागभावयोः सुन्दोप-

---

न भवितुमर्हति। अत इह कपाले घटो नास्तीति प्रतीतिरपि न प्रागभावविषयिणी। किन्तु घटात्यन्ताभाव एवास्याः प्रतीतेर्विषयः। समयविशेषसम्बन्धी अत्यन्ताभाव एवोक्तप्रतीतेर्विषयः। घटत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकतत्कालावच्छिन्नयावद्विशेषाभावकूट एवोक्तप्रतीतेर्विषयः। समयविशेषावच्छिन्नसामान्यधर्मावच्छिन्नप्रतियोगिताकयावद्विशेषाभावकूट एव यद्युक्तप्रतीतेर्विषयो न स्यात्तदा आद्यक्षणे घटो नीरूप इति प्रतीतिर्न स्यात्। यदि रूप प्रागभाव एवाद्यक्षणे घटो नीरूप इति प्रतीतेर्विषयः स्यात्तदा रूपवत्यपि घटे भाविरूपप्रागभावसत्त्वात् रूपवान् घटोऽपि नीरूप इति प्रतीतेर्विषयः स्यात्। उत्पन्नं द्रव्यमेकक्षणं निर्गुणं तिष्ठतीति वैशेषिकैरभ्युपगम्यते। क्षणमगुणं भाव इति। निर्गुणद्रव्यमेवोत्पद्यते। उत्पत्तेरव्यवहितोत्तरक्षणे उत्पन्ने द्रव्ये गुणा उत्पद्यन्ते। उत्पन्नं द्रव्यं यथाऽनित्यं तद्वत् तद्गुणा अपि अनित्याः। अनित्यगुणानां समवायिकारणन्तु उत्पन्नद्रव्यमेव। कारणस्य प्राक्कालवृत्तित्वनियमात् गुणोत्पत्तेः प्राक्काले गुणसमवायिकारणञ्च द्रव्यस्य सत्ता अङ्गीकरणीया। यदि गुणैः सहितमेव द्रव्यमुत्पद्येत तदा गुणेन सहोत्पन्नस्य द्रव्यस्य गुणसमवायिकारणता न स्यात्। सहोत्पन्नयोः कार्यकारणभावासम्भवात्। अतो द्रव्येण सहोत्पन्नस्य गुणस्य द्रव्यसमवेतत्वाभावे असमवेतभावकार्यापत्तिः स्यात्। अत एव वैशेषिका आद्यक्षणे घटो नीरूप इति प्रतीतिमङ्गीकुर्वन्ति। उत्पन्नो घटः श्यामः पाके रक्तो भवति। घटोत्पत्तिदशायां यथा घटे श्यामरूपस्य प्रागभावोऽस्ति तथा रक्तरूपस्यापि प्रागभावोऽस्ति। श्यामरूपस्य प्रागभावासत्त्वात् यदि आद्यक्षणे घटो नीरूप इति प्रतीतेर्विषयः स्यात्तदा श्यामरूपविशिष्टघटेऽपि रक्तरूपप्रागभावसत्त्वात् घटो नीरूप इति प्रतीतिः कथं न स्यात्? अत आद्यक्षणे घटो नीरूप इति प्रतिपादनं प्रागभावेन न सम्भवति। अतः समयविशेषावच्छिन्नात्यन्ताभाव एवोक्तप्रतीतेर्विषयोऽङ्गीकार्यः। तथा च प्रागभावस्य सर्वथाऽसिद्धिरेव ॥१७॥

१८—आद्यक्षणे घटो नीरूप, इह कपाले इदानीं घटो नास्तीत्यदिप्रतीतिः यदि सामान्यधर्मावच्छिन्नतियोगिताकतत्कालावच्छिन्नयावद्विशेषाभावविषया स्यात्तर्हि यावद्विशेषाभावातिरिक्तः सामान्याभावो न सिध्येदिति पूर्वपक्ष्युक्तमाशंक्य समाधत्ते—अथास्मिन् पक्षे सामान्याभावो न सिध्येदिति चेत्, प्रागभा-

सुन्दयोरिव परस्परपराहतत्वात्। तथा हि—प्रागभावसिद्धौ विशेषाभावस्यापि सामान्यावच्छिन्नप्रतियोगिताकत्वात् न तावन्मात्रप्रमाणकसामान्याभावसिद्धिः, सामान्याभावसिद्धौ च विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वाभावात् कादाचित्काभावस्य च सामान्याभावत्वायोगात् न सामान्यधर्मावच्छिन्नप्रतियोगिताकविशेषप्रतीतिमात्रशरणप्रागभावसिद्धिः, इति न तदुभयमपि विपश्चितां चेतसि चमत्कारमावहति ॥१८॥

---

वाभ्युपगमेऽपि तुल्यमेतत्। सामान्याभावप्रागभावयोः सुन्दोपसुन्दयोरिव परस्परपराहतत्वात्। तथा हि—प्रागभावसिद्धौ विशेषाभावस्यापि सामान्यावच्छिन्नप्रतियोगिताकत्वात् न तावन्मात्रप्रमाणकसामान्याभावसिद्धिः। सामान्याभावसिद्धौ च विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वाभावात् कादाचित्काभावस्य च सामान्याभावत्वायोगात् न सामान्यधर्मावच्छिन्नप्रतियोगिताकविशेषप्रतीतिमात्रशरणप्रागभावसिद्धिः। इति न तदुभयमपि विपश्चितां चेतसि चमत्कारमावहति। अस्मिन् पक्षे सामान्याभावो न सिध्येदिति कृतविवरणमेतत्। न केवलमस्मत्पक्षे सामान्याभावस्यासिद्धिः, प्रागभावाभ्युपगन्तृग[म]तेऽपि सामान्याभावस्यासिद्धिरेव। प्रागभावसिद्धौ सामान्याभावस्यासिद्धिः, सामान्याभावसिद्धौ प्रागभावस्यासिद्धिः। अतस्तयोः सुन्दोपसुन्दयोर्भ्रात्रोरेव परस्परपराहतिरेव। सुन्दोपसुन्दभ्रातृयुगलकथा महाभारते सभापर्वणि वर्तते। परस्परपराहतिमेव दर्शयति—तथा हीति। प्रागभावसिद्धौ विशेषाभावीयप्रतियोगिता सामान्यधर्मेणावच्छिद्यत इत्यभ्युपगन्तव्यम्। प्रागभावस्तु विशेषाभाव एव, न सामान्याभाव इत्युक्तं प्राक्। विशेषाभावीयप्रतियोगितापि यदि सामान्यधर्मेणावच्छेत्तुं शक्यते तर्हि विशेषाभावातिरिक्तः सामान्याभावो न सिध्येत्। सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वेनैव 'सामान्याभावो विशेषाभावेभ्यो भिद्यते। विशेषाभावोऽपि यदि सामान्यधर्मावच्छिन्नप्रतियोगिताकः स्याचेर्हि सामान्याभावो न सिध्येत् सामान्यधर्मावच्छिन्नप्रतियोगिताकाभाव एव सामान्याभावः। अतिरिक्त-

ननु—यावद्विशेषाभावनिश्चयेऽपि 'रूपं वायुवृत्ति न वा' 'वायू रूपवान्न वे' ति रूपाभावसन्देहात् निश्चिते च संशयायोगाद्यावद्विशेषाभावान्यसामान्याभावसिद्धिः, अत एतावन्त्येव रूपाणीति निश्चयदशायामेतादृशसंशयस्याननुभूयमानत्वेन तदनिश्चयदशायामेवैतादृशः संशयो वाच्यः, तथा च 'रूपत्वं पार्थिवाप्यतैजसरूपत्रितयातिरिक्तवृत्ति भविष्यती' त्यधिकसंभावनया निश्चितेष्वेव संशयः, उक्तसंभावनाविरहसहकृतनिश्चयस्यैव प्रतिबन्धकत्वादिति—चेन्न; एवं प्रतिबन्धककल्पने मानाभावात्, उक्तसंभावनाविरहदशायामप्येतादृशसंशयदर्शनाच्च ॥१९॥

---

सामान्याभावसिद्धौ. इत्येतावन्मात्रं साधकम्, तद् यदि विशेषाभावेऽपि स्यात् कुतोऽतिरिक्तसामान्याभावसिद्धिः। सामान्याभावसिद्धौ च विशेषाभावस्य प्रागभावादेः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वाभावात् कादाचित्काभावस्य प्रागभावस्य सामान्याभावत्वायोगात्। न सामान्यधर्मावच्छिन्नप्रतियोगिताकविशेषप्रतियोगिकप्रागभावः सिध्यति। इति तु तदुभयमपि—प्रागभावसामान्याभावोभयमपि न विपश्चितां चेतसि चमत्कारमावहति। यथा प्रागभावो न सिध्यति, तथा यावद्विशेषाभावकूटव्यतिरिक्तः सामान्याभावोऽपि न सिध्यति ॥१८॥

१९—यावद्विशेषाभावातिरिक्तसामान्याभावसमर्थनाय पूर्वपक्षी शंकते—ननु यावद्विशेषाभावनिश्चयेऽपि रूपं वायुवृत्ति न वा, वायू रूपवान् न वेति रूपाभावसन्देहात् निश्चिते च संशयायोगात् यावद्विशेषाभावान्यसामान्याभावसिद्धिः। अत एतावन्त्येव रूपाणीति निश्चयदशायामेतादृशसंशयस्य अननुभूयमानत्वेन तदनिश्चयदशायामेव एतादृशः संशयो वाच्यः। तथा च रूपत्वं पार्थिवाप्यतैजसरूपत्रितयातिरिक्तवृत्ति भविष्यतीत्यधिकसम्भावनया निश्चितेष्वेव संशयः। उक्तसम्भावनाविरहसहकृतनिश्चयस्यैव प्रतिबन्धकत्वादिति चेन्न, एवं प्रतिबन्धककल्पने मानाभावात्। उक्तसम्भावनाविरहदशायामपि एतादृशसंशयदर्शनाच्च। सामान्याभाववादिपूर्वपक्षिणो वदन्ति—यावद्विशेषाभावातिरिक्तसामान्याभावोऽवश्यमेवाभ्युपेतव्यः यतो वायौ यावद्विशेषरूपाभाव-

ननु—यथा यावद्विशेषाभावेभ्योऽतिरिक्तः सामान्याभावो रूपस्य संशयकोटिः, तथा रूपसामान्यमपि यावद्विशेषेभ्योऽतिरिक्तं संशयकोटिर्नाभ्युपगन्तुं शक्यते । तथा च कथं रूपस्य संशयकोटित्वम् ? सर्वरूपा-

---

निश्चयसत्त्वेऽपि रूपं वायुवृत्ति न वा, वायू रूपवान् न वा, एतादृशरूपाभावसन्देहो जायते । निश्चिते विषये सन्देहासम्भवात् संशयोऽयं यावद्विशेषाभावातिरिक्त-सामान्याभावमवगाहते । यावद्रूपविशेषाभावातिरिक्तरूपसामान्याभावो यदि न स्यात्तर्हि प्रदर्शितरूपसामान्याभावसंशयोऽपि न स्यात् । अत्रेयं शंका—एतावन्त्येव रूपाणि इति निश्चयदशायां तत्तद्रूपाणां वायौ अभाव-निश्चये प्रदर्शितसंशयः वायू रूपवान् न वेति न स्यात् । अतः तस्यैव वायौ रूपवान् न वेति संशयः स्यात्, यस्य एतावन्ति रूपाणीति निश्चयो न विद्यते । यदि रूपाणां संख्यानिश्चयः स्यात्, निश्चितसंख्यकरूपाणां वायौ अभावनिश्चयः स्यात्तदा वायू रूपवान् न वेति संशय एव न स्यात् । एतावन्ति रूपाणि इति निश्चयस्यासत्त्वदशायामेव प्रदर्शितसंशयस्य जायमानत्वात् सन्दिग्धपुरुषस्य पार्थिवजलीयतैजसीयरूपत्रयातिरिक्तं रूपं सम्भाव्यते, रूपत्व-जातिः पार्थिवादित्रिविधरूपातिरिक्तवृत्तिः सम्भाव्यते । एवमेव क्लृप्तरूपाति-रिक्तरूपसम्भावनायामेव प्रदर्शितः संशयो जायते । यस्य क्लृप्तरूपातिरिक्त-रूपसम्भावना नास्ति, तस्य प्रदर्शितसंशयोऽपि न भवेत् । अत उक्त-सम्भावनाया अभावदशायां वायौ यावद्रूपविशेषाभावकूटनिश्चयो वायू रूपवान् न वेति संशयप्रतिबन्धकः । अतो निश्चीयते, यावद्विशेषाभावातिरिक्तः सामान्याभावो नास्तीति ॥१९॥

२०—सामान्याभाववादी समाधत्ते—एवं प्रतिबन्धककल्पने माना-भावादिति । अतिरिक्तरूपसम्भावनायामविद्यमानायामपि वायू रूपवान् न वेति संशयस्य जायमानत्वात् । अतः प्रदर्शितसंशयानुरोधेन यावद्विशेषाभाव-कूटातिरिक्तः सामान्याभावोऽङ्गीकरणीय एव । इत्यत उक्तं मूले—उक्तसम्भावना-विरहदशायामपीति । सामान्याभावप्रत्याख्यानाय यावद्विशेषाभावकूटवादी शंकते—ननु यथा यावद्विशेषाभावेभ्योऽतिरिक्तः सामान्याभावो रूपस्य संशय-कोटिः, तथा रूपसामान्यमपि यावद्विशेषेभ्योऽतिरिक्तं संशयकोटिर्ना-

भावनिश्चयात्। यदि तु नीलपीताद्यभावत्वेन निश्चयेऽपि रूपाभावत्वेनानिश्चयाद्रूपसंशय इति ब्रूषे, तदा किं सामान्याभावेन; रूपत्वावच्छिन्नप्रतियोगिताकाभावत्वेन संशयसंभवात्, धर्मिकल्पनातो धर्मकल्पनाया लघुत्वेन यावद्विशेषाभावानामेव रूपत्वावच्छिन्नप्रतियोगिताकत्वकल्पनात्, अतो न यत्किंचिदभावमादाय 'घटो नीरूप' इति प्रतीतिप्रसङ्ग इति—चेत् ॥२०॥

---

भ्युपगन्तुं शक्यते। तथा च कथं रूपस्य संशयकोटित्वम्। सर्वरूपाभावनिश्चयात्। यदि तु नीलपीताद्यभावत्वेन निश्चयेऽपि रूपाभावत्वेनानिश्चयात् रूपसंशय इति ब्रूषे तदा किं सामान्याभावेन रूपत्वावच्छिन्नप्रतियोगिताकाभावत्वेन संशयसम्भवात्। धर्मिकल्पनातो धर्मकल्पनाया लघुत्वेन यावद्विशेषाभावानामेव रूपत्वावच्छिन्नप्रतियोगिताकत्वकल्पनात्। अतो न यत्किञ्चिदभावमादाय घटो नीरूप इति प्रतीतिप्रसंग इति चेत्। यावद्विशेषाभावातिरिक्तसामान्याभावानङ्गीकर्तृपक्षः एवमालोचयति—वायौ यः संशयः प्रदर्शितस्तस्य रूपतत्सामान्याभावौ कोटिद्वयम्। वायौ यावद्रूपविशेषाभावनिश्चयेऽपि वायौ रूपं रूपसामान्याभावो वेति संशयो भवतीति अतिरिक्तसामान्याभाववादिभिरुच्यते। तेषां मते यावद्रूपविशेषाभावकूटातिरिक्तः रूपसामान्याभावः रूपसंशयस्यैका कोटिः। अस्मिन् संशये द्वितीया कोटिः का ?द्वितीया कोटिः रूपम्। तदपि किं यावद्विशेषरूपातिरिक्तं रूपम्, यथा विशेषाभावातिरिक्तः सामान्याभावः सामान्याभाववादिभिरङ्गीक्रियते, नैवं यावद्रूपविशेषातिरिक्तं रूपसामान्यमङ्गीकर्तुं शक्यते। यावद्विशेषरूपव्यतिरिक्तं सामान्यतो रूपं किमपि प्रसिद्धं नास्ति। अतः प्रदर्शितसंशये यावद्विशेषाभावातिरिक्तसामान्यभावः एका कोटिः, एवं यावद्रूपविशेषातिरिक्तसामान्यं रूपमन्या कोटिरिति कथमपि वक्तुं न शक्यते। नीलपीतादियावद्विशेषरूपव्यतिरिक्तं सामान्यरूपं सर्वथाऽप्रसिद्धम्। अप्रसिद्धं रूपसामान्यं संशयस्य द्वितीया कोटिः कथं स्यात्। अतो द्वितीयायाः कोटेरप्रसिद्धत्वात् प्रदर्शितसंशय एवानुपपन्नः। यदि सामान्याभाववादिभिरेवमुच्येत—नीलपीताद्यभावत्वेन वायौ नीलपीताद्यभावनिश्चयेऽपि रूपाभावत्वेनानिश्चयात् रूपाभावसंशयः स्यादेव, तदा यावद्विशेषा-

न, यावद्विशेषाभावेषु यद्रूपत्वावच्छिन्नप्रतियोगिताकत्वं तत् प्रत्येकं विश्रान्तं, व्यासज्यवृत्ति वा। आद्ये यत्किंचिदभावमादाय 'घटो नीरूप' इति प्रतीतिप्रसङ्गः, द्वितीये तत्तद्रूपत्वावच्छिन्न-प्रतियोगिताकत्वस्याव्यासज्यवृत्तिस्वभावत्वेन तद्व्यतिरिक्तं रूपत्वा-वच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्ति कल्पनीयम्, तद्वरं रूपत्वा-वच्छिन्नप्रतियोगिताक एक एवाभावः कल्प्यते; ममैकोऽभावः रूपत्वावच्छिन्नप्रतियोगिताकत्वं चेति वस्तुद्वयं कल्प्यम्; तव तु

---

भावातिरिक्तसामान्याभावकल्पनेनालम्। रूपत्वावच्छिन्नप्रतियोगिताकाभावत्वेन प्रद-र्शितसंशयसम्भवात्। अयं भावः—क्लृप्ते यावद्रूपविशेषाभावकूटे सामान्यधर्मावच्छिन्न-प्रतियोगिताकत्वरूपधर्म एव एकः कल्प्यताम्, धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात्। सामान्याभावकल्पने धर्मधर्मिणोः द्वयोः कल्पना स्यात्। सामान्याभाव-एको धर्मी, तस्य च सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वधर्मः। द्वयं कल्प्यं भवेत्। यावद्विशेषाभावकूटे क्लृप्ते केवलं सामान्यधर्मावच्छिन्नप्रतियोगिताकत्व-रूपो धर्म एवैकः कल्प्यताम्, धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात्। यावद्विशेषाभावकूटे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवृत्तितया कल्पनात् न प्रत्येकविशेषाभावे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं वर्तते। अतो घटे यत्किञ्चिद्रूपविशेषाभावसत्त्वेऽपि घटो नीरूप इति प्रतीतेर्न प्रसंगः। नीरूप इति प्रतीतौ व्यासज्यवृत्तिरूपत्वसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं रूपविशेषाभावकूटे भासते, नैकस्मिन् रूपविशेषाभावे। अतो न तादृश-प्रतीतिप्रसंगः ॥२०॥

२१—अतिरिक्तसामान्याभाववादी शंकते—न, यावद्विशेषाभावेषु यद् रूपत्वावच्छिन्नप्रतियोगिताकत्वं तत् प्रत्येकविश्रान्तं व्यासज्यवृत्ति वा? आद्ये, यत्किञ्चिदभावमादाय घटो नीरूप इति प्रतीतिप्रसंगः। द्वितीये, तत्तद्रूपत्वावच्छिन्नप्रतियोगिताकत्वस्य अव्यासज्यवृत्तिस्वभा-वत्वेन. तद्व्यतिरिक्तं रूपत्वावच्छिन्नप्रतियोगिताकत्वं व्यसज्यवृत्ति कल्पनीयम्। तद्वरं, रूपत्वावच्छिन्नप्रतियोगिताक एक एव अभावः कल्प्यते। मम एको अभावः रूपत्वावच्छिन्नप्रतियोगिताकत्वं चेति

रूपत्वावच्छिन्नप्रतियोगिताकत्वम्, तस्य च व्यासज्यवृत्तित्वेन बहुष्वभावेषु प्रत्येकं संबन्धा इति बहु कल्प्यम्। 'धर्मिकल्पनातो धर्मकल्पनाया लघुत्वमि'ति न्यायस्तु कल्पनीयाधिक्यापेक्षः।

---

वस्तुद्वयं कल्प्यम्। तत्र तु रूपत्वावच्छिन्नप्रतियोगिताकत्वं तस्य च व्यासज्यवृत्तित्वेन बहुषु अभावेषु प्रत्येकं सम्बन्धा इति बहुकल्प्यम्। धर्मिकल्पनातो धर्मकल्पनाया लघुत्वमिति न्यायस्तु कल्पनीयाधिक्यापेक्षः। यावद्विशेषाभावेषु यदेकं सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमङ्गीकृतं तत् किं घटत्वादिजातिवत् प्रत्येकव्यक्तिविश्रान्तं वा उभयत्वादिवत् व्यासज्यवृत्ति वा प्रत्येकव्यक्तिविश्रान्तत्वपक्षे यत्किञ्चिद्विशेषाभावेऽपि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य सत्त्वाद्घटे यत्किञ्चिद्रूपाभावात् घटो नीरूप इति प्रतीतेः प्रमात्वप्रसंगः। द्वितीये विशेषाभावेषु तत्तद्धर्मावच्छिन्नप्रतियोगिताकत्वात् प्रत्येकाभावविश्रान्तत्वात् अत एवाव्यासज्यवृत्तिरूपत्वात् अन्यदेव रूपत्वावच्छिन्नप्रतियोगिताकत्वमर्थात् सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्ति कल्पनीयम्। विशेषाभावकूटे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवृत्तिधर्मस्य कल्पनातो वरं सामान्यधर्मावच्छिन्नप्रतियोगिताक एक एव सामान्याभावः कल्प्यताम्। अतिरिक्तसामान्याभावपक्षे एकः सामान्याभावस्तत्र च सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमिति वस्तुद्वयं कल्प्यं स्यात्। विशेषाभावपक्षे विशेषाभावकूटे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं तस्य च व्यासज्यवृत्तित्वेन बहुषु विशेषाभावेषु प्रत्येकं सम्बन्धाः कल्पनीयाः इति बहु कल्प्यम्। सामान्याभाववादेऽतिरिक्तः सामान्याभावो धर्मी कल्प्यते। विशेषाभाववादे स न कल्प्यते इति कृत्वा धर्मिकल्पनातो धर्मकल्पनं लघु इति न्यायमनुसृत्यापातदृष्ट्या अतिरिक्तसामान्याभावे एव कल्पनागौरवं प्रतिभाति। किन्तु विविच्यमाने अस्य न्यायस्य कल्पनीयाधिक्ये गौरवम्, कल्पनीयाल्पत्वे लाघवमित्येव तत्त्वम्। तथा च धर्मिकल्पनायामपि कल्पनीयाल्पत्वेन लाघवम्, अतिरिक्तधर्म्यकल्पनायां कल्पनाधिक्येन गौरवमेव। तथा च धर्मिकल्पनातो धर्मकल्पनाया लघुत्वमिति न्यायः विशेषाभावपक्षे एव प्रतिकूलः, अस्मत्पक्षे तु अनुकूल एव ॥२१॥

२२—यावद्विशेषाभावेषु एकाधिकरणवृत्तित्वंविशेषणमपि देयं यदतीव

किं च घटद्वये यावद्विशेषाभावसत्त्वेऽपि रूपसामान्याभावबुद्धयनुदयात् ऐकाधिकरण्यावच्छेदेनाप्यभावा विशेषणीयाः; तथा चातिगौरवम्। अपि च व्यासज्यवृत्तिधर्मग्रहे यावदाश्रयग्रहस्तद्भेदग्रहश्च हेतुः; अगृहीतेषु भिन्नतया वाऽगृहीतेषु वस्त्रादिषु द्वित्वादिबुद्धयनुदयात्, तथा च यावदभावतद्भेदाग्रहे प्रथमत एव नीरूप इति धीर्न स्यात्; व्यासज्यवृत्तिसामान्यप्रतियोगिताकत्वस्याग्रहणात्। अतः सामान्याभावस्य प्रामाणिकत्वात् कथं तत्पराहतिरिति—चेत् ॥२२॥

गौरवापादकमित्याशयेन शंकते सामान्याभाववादी—किञ्च घटद्वये यावद्विशेषाभावसत्त्वेऽपि रूपसामान्याभावबुद्धयनुदयात् एकाधिकरण्यावच्छेदेनापि अभावा विशेषणीयाः, तथा चातिगौरवम्। अपि च व्यासज्यवृत्तिधर्मग्रहे यावदाश्रयग्रहस्तदभेदग्रहश्च हेतुः, अगृहीतेषु भिन्नतया वा अगृहीतेषु वस्त्रादिषु द्वित्वादिबुद्धयनुदयात्। तथा च यावदभावतद्भेदाग्रहे प्रथमत एव नीरूप इति धीर्न स्यात्, व्यासज्यवृत्तिसामान्यप्रतियोगिताकत्वस्याग्रहणाद्। अतः सामान्याभावस्य प्रामाणिकत्वात् कथं तत्पराहतिरिति चेत्। घटद्वये यावद्रूपविशेषाभावसत्त्वेऽपि[1] रूपसामान्याभावबुद्धिर्न भवति। नानाधिकरणेषु यावद्रूपविशेषाभावेऽपि रूपसामान्याभावबुद्धिर्न भवति, तत्कारणं किमिति चेत्। एकाधिकरणवृत्तितया गृहीतेषु यावत्स्वाभावेषु सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं ग्रहीतुं शक्येतापि नानाधिकरणेषु तन्न स्यात्। अतो द्वयोर्घटयोर्यावद्रूपविशेषाभावसत्त्वेऽपि नैकस्मिन् घटे रूपसामान्याभावबुद्धिः। अतो विशेषाभाववादिनां मते विशेषाभावेषु एकाधिकरणवृत्तित्वं विशेषणं देयम्। तथा च एकाधिकरणवृत्तित्वविशिष्टयावद्विशेषाभावकूट एवं सामान्यधर्मावच्छिन्नप्रतियोगिताकः इत्येव वक्तव्यम्। तथा चातिगौरवं विशेषाभाववादिनाम्। न केवलमेतत् एव गौरवम्, अन्यदपि। व्यासज्यवृत्तिधर्मप्रत्यक्षे व्यासज्यवृत्तिधर्माश्रयाणां सर्वेषां ग्रहणम-

१. घटद्वये यावद्रूपविशेषाभावश्चेत्थम्—घटद्वये घटद्वयावृत्तिरूपाणामभावास्तु वर्तन्त एव। घटद्वयेऽपि एकस्य घटस्य रूपस्याभावोऽन्यस्मिन् घटे, तथा अन्यघटीयरूपाभावोऽपि एतस्मिन् घटे इति कृत्वा घटद्वये यावद्रूपविशेषाभावा वर्तन्ते।

अत्र ब्रूमः—एवं तर्हि सामान्यप्रकारेण विशेषाभावाप्रतीतेर्ज्ञानविशेषप्रागभावो न जानामीति धियो ज्ञानत्वावच्छिन्नप्रतियोगिताको न विषय इति सिद्धं नः समीहितम्। न हि प्रागभावोऽपि कश्चित्सामान्याभावोऽस्ति; येन तत्प्रतियोगिता सामान्यधर्मेणावच्छिद्येत, विशेषाभावप्रतियोगिता तु तत्तद्घटत्वादिना विशेषेणावच्छिद्यते। न च तेन तेन रूपेण भविष्यद्घटादि ज्ञातुं शक्यम्। तज्जन्मानन्तरं

---

पेक्षितम्। व्यासज्यवृत्तिधर्माश्रयाणां सर्वेषां परस्परं भेदग्रहोऽप्यपेक्षितः। यथा वस्त्रादिषु द्वित्वत्रित्वादीनां व्यासज्यवृत्तिधर्माणां ग्रहे वस्त्रयोर्वस्त्राणाञ्च ग्रहणमपेक्षितम्, तथा वस्त्रयोः वस्त्राणाञ्च परस्परं भेदग्रहोऽप्यपेक्षितः। वस्त्राग्रहणे वस्त्रभेदाग्रहणे वा वस्तुगतद्वित्वादिधर्माणां व्यासज्यवृत्तीनां ग्रहणं न भवेत्। तथा च यावद्रूपविशेषाभावाग्रहे ग्रहेऽपि वा तद्भेदाग्रहे नीरूप इति बुद्धिर्न स्यात्। तेषु विशेषाभावेषु व्यासज्यवृत्तिसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्याग्रहात्। अतः व्यासज्यवृत्तिसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य यावद्विशेषाभावेषु ग्रहणमिति दुर्घटम्। अतः सामान्याभावस्यातिरिक्तस्यैव प्रामाणिकत्वमङ्गीकरणीयम्। नीरूप इति बुद्ध्यनुरोधेन सामान्याभावस्य प्रमाणसिद्धत्वान्न प्रागभावप्रतीत्या सामान्याभावप्रतीतिपराहतिः। सामान्याभावस्य प्रमाणसिद्धत्वात् तेनैव प्रागभावप्रतीतेरसिद्धिः स्यात्, न तु प्रागभावप्रतीत्यनुरोधेन सामान्याभावस्य प्रमाणसिद्धस्य परित्यागो भवितुमर्हतीत्याशयः। अतो यावद्विशेषाभावातिरिक्तः सामान्याभाव एवाङ्गीकरणीयः ॥२२॥

२३—सामान्याभाववादिना विशेषाभावस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं न सम्भवतीति महता आडम्बरेण प्रसाधितम्। तेन चास्माकमिष्टमेव प्रसाधितमित्याह—अत्र ब्रूमः। एवं तर्हि सामान्या[न्यप्र]कारेण विशेषाभावाप्रतीतेः ज्ञानविशेषप्रागभावो न जानामीति धियो ज्ञानत्वावच्छिन्नप्रतियोगिताको न विषयः इति सिद्धं नः समीहितम्। न हि प्रागभावोऽपि कश्चित् सामान्याभावोऽस्ति, येन तत्प्रतियोगिता सामान्यधर्मेणावच्छिद्येत। विशेषाभावप्रतियोगिता तु तत्तद्घटत्वादिना विशेषेणावच्छिद्यते न च तेन तेन रूपेण भविष्यद्घटादि ज्ञातुं शक्यम्।

तु तत्तद्रूपेण तज्ज्ञानसंभवेऽपि न प्रागभावधीः प्रत्यक्षा स्यात् ; तदानीं प्रागभावासत्त्वात्, प्रत्यक्षस्य विषयजन्यत्वात्। सामान्यप्रकारकज्ञानं च न विशेषाभावज्ञाने हेतुरित्युक्तम् ; प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावत्वप्रकारकाभावज्ञाने हेतुत्वात्, तस्यानुमानगम्यत्वेऽपि 'न जानामी'ति धियः अपरोक्षायास्तद्विषयत्वायोगात्। अव्यभिचारिलिङ्गाद्यभावात्तदनुमानमपि दूरनिरस्तमेव ॥२३॥

---

तज्जन्मानन्तरं तु तत्तद्रूपेण तज्ज्ञानसम्भवेऽपि न प्रागभावधीः प्रत्यक्षा स्यात्। तदानीं प्रागभावस्य असत्त्वात्। प्रत्यक्षस्य विषयजन्यत्वात्। सामान्यप्रकारकज्ञानं च न विशेषाभावज्ञाने हेतुरित्युक्तम्। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावत्वप्रकारकाभावज्ञाने हेतुत्वात् तस्यानुमानगम्यत्वेऽपि न जानामीति धियोऽपरोक्षायाः तद्विषयत्वायोगात्। अव्यभिचारिलिंगाद्यभावात्तदनुमानमपि दूरनिरस्तमेव। न जानामीति धियो भावरूपाज्ञानविषयकत्वमस्माभिरुच्यते। माध्ववैशेषिकादिभिर्ज्ञानविशेषाभावो न जानामीति प्रतीतेर्विषय इत्युच्यते। ज्ञानविशेषाभावो न शुद्धज्ञानत्वावच्छिन्नप्रतियोगिताको भवितुमर्हतीति एतावता प्रबन्धेन प्रसाधितम्। न केवलं ज्ञानविशेषाभावः किन्तु ज्ञानविशेषाभाव एव न जानामीति प्रतीतेर्विषयतया माध्वादिभिरुच्यते। ज्ञानविशेषप्रागभावो न यथा ज्ञानत्वसामान्यावच्छिन्नप्रतियोगिताको भवितुमर्हति, तथोक्तमितः प्रागेव। तथा च न जानामीति प्रतीतेर्विषयः ज्ञानविशेषात्यन्ताभावो वा ज्ञानविशेषप्रागभावो वा न भवितुमर्हति, अतोऽगत्या भावरूपाज्ञानविषयिण्येव सा प्रतीतिर्वाच्या इत्यत उक्तं—सिद्धं नः समीहितमिति। न जानामीति प्रतीतेर्विषयः ज्ञानविशेषप्रागभावस्तु कथमपि न भवितुमर्हति, यतो न जानामीति प्रतीतिः सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावविषयिणी। प्रागभावस्तु सामान्यधर्मावच्छिन्नप्रतियोगिताकः कथमपि न सम्भवति। प्रागभावमात्रमेव नियमेन विशेषाभावरूपमेव भवति, कदापि सामान्याभावरूपं भवितुं नार्हति। जन्यभावस्य समवायिदेशे एव प्रागभावः प्रतीयते, नान्यत्र। प्रतियोगिजनकाभाव एव प्रागभावः। प्रागभावमात्रं कस्यचिद्विशेषस्य जनकम्, न सामान्यस्य। नापि कश्चन प्रागभावः यावद्विशेषस्य जनकः।

ननु—'इदं मा भूदि'तीच्छाविषयतया तत्सिद्धिः, न; प्रागभावस्य स्वरूपतोऽसाध्यत्वेन प्रतियोगिजनकविघटनेन तत्संबन्धस्येवात्यन्ताभावसंबन्धस्यापि साध्यत्वात्तेनैवान्यथासिद्धेः ॥२४॥

---

अतः सामान्यधर्मावच्छिन्नप्रतियोगिताकः प्रागभावो नास्त्येव। तत्तद्विशेषवस्तुनः प्रागभावीयप्रतियोगिता तु तत्तद्व्यक्तित्वादिना विशेषधर्मेणैवावच्छिद्यते। प्रतियोगिविशेषिताभावप्रत्यक्षे प्रतियोग्यंशे प्रकारीभूतो धर्म एव प्रतियोगितावच्छेदकतया भाति। अतस्तद्घटो भविष्यतीति न तद्घटप्रागभावप्रत्यक्षं भवितुमर्हति। तद्घटत्वेन तद्घटस्य उत्पत्तेः प्राग् ज्ञातुमशक्यत्वात्। प्रागभावसत्त्वदशायां प्रतियोगितावच्छेदकधर्मरूपेण प्रतियोगिनोऽज्ञानात् न प्रागभावस्य प्रत्यक्षम्, प्रतियोग्युत्पत्तेरनन्तरं प्रतियोगितावच्छेदकरूपेण प्रतियोगिनो ज्ञानसम्भवेऽपि तदानीं प्रागभावस्यैवासत्त्वात तदापि न प्रागभावप्रत्यक्षसम्भवः। प्रत्यक्षस्य विषयजन्यत्वात्। सामान्यधर्मरूपेण प्रतियोगिनो ज्ञानं विशेषाभावग्रहे कारणमिति प्रागेवोक्तम्। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य अभावत्वप्रकारकाभावज्ञाने हेतुत्वात् प्रागभावस्य प्रत्यक्षं कदापि न भवितुमर्हति। अतो न जानामीति प्रत्यक्षं यत्किञ्चिज्ज्ञानविशेषप्रागभावविषयकं कदापि न भवितुमर्हति। प्रागभावस्य अप्रत्यक्षत्वेऽपि तस्यानुमानगम्यत्वं सम्भवतीति चेत्, तथापि न जानामीति प्रतीतेः प्रत्यक्षत्वात् नित्यानुमेयप्रागभावस्य तद्विषयत्वायोगात्। किञ्च प्रागभावस्य यथा न प्रत्यक्षत्वं तथाऽनुमानगम्यत्वमपि नास्ति इत्याह—**अव्यभिचारिलिंगाद्यभावादिति।** प्रागभावानुमापकाव्यभिचारिलिंगाभावात् प्रागभावस्यानुमानगम्यत्वमपि न भवितुमर्हति। अतः प्रागभावोऽसिद्ध एव ॥२३॥

२४—युक्त्यन्तरेण प्रागभावं साधयितुं प्रागभाववादी शंकते—**ननु इदं माभूदितीच्छाविषयतया तत्सिद्धिः।** सर्वेषामेव अनिष्टं माभूदिति स्वारसिकी इच्छा वर्तते अस्या इच्छायाः विषयस्तु अनिष्टवस्तुना प्रागभाव एव अज्ञाते इच्छाया असम्भवात् प्रागभावज्ञानमपि स्वीकर्तव्यम् प्रागभावज्ञानं विना प्रागभावविषयिणी इच्छैव न स्यात् प्रागभावविषयिणी इच्छा तु सर्वानुभवसिद्धत्वान्नापलपितुं शक्यते अतः प्रागभावाऽसिद्ध एव इति यदुक्तं तन्न संगतम्। प्रागभावस्य अनादित्वेन असाध्य-

अथ—उत्पन्नस्य द्वितीयक्षणे पुनरुत्पत्त्यभावात्तत्पूर्वक्षणे सामग्र्य-भावो वाच्यः; स च प्रागभावाभावादेव, अन्यहेतूनां सत्त्वादिति—चेत् ॥२५॥

---

त्वान्नेयमिच्छा प्रागभावविषयिणी किन्तु प्रागभावपरिपालनविषयिणी वक्तव्या तद्वत् अत्यन्ताभावसम्बन्धस्यापि कालान्तरविषयत्वेन इच्छा सम्भवतीति न प्राग-भावविषयिणी इच्छा सिध्यतीत्याह सिद्धान्ती—न, प्रागभावस्य स्वरूपतोऽ-साध्यत्वेन प्रतियोगिजनकविघटनेन तत्सम्बन्धस्यैव अत्यन्ताभाव-सम्बन्धस्यापि साध्यत्वात् तेनैवान्यथासिद्धेः । अनादिप्रागभावस्य स्वरूप-तोऽसाध्यत्वात् साध्यविषयिण्या इच्छाया विषयत्वासम्भवात् सिद्धे नेच्छा किन्तु साध्ये एव । अतः प्रागभाववादिना इयमिच्छा प्रागभावपरिपालनविषयिणी वक्तव्या, प्रागभावसम्बन्धविषयिणीयम् इच्छा । प्रतियोगिनि उत्पन्ने प्रागभावो नश्यति अतः प्रागभावसम्बन्धोऽपि नश्यति । एवञ्च अनिष्टवस्तुनः प्रागभाव-सम्बन्धोऽग्रेऽपि कालान्तरेऽपि अनुवर्तताम् इत्येवं रूपा इच्छा वक्तव्या । प्राग-भावप्रतियोगिनो जनकविघटने कृते प्रतियोगी नोत्पद्येत ततस्तत्प्रागभावसम्बन्धोऽपि कालान्तरेऽनुवर्तिष्यते । प्रागभावस्य कालान्तरसम्बन्धः प्रागभावप्रतियोगिनो जनकविघटनाधीनः तज्जनकविघटनन्तु साध्यमेव अतस्तत्र इच्छाकृत्योः सम्भवात् प्रदर्शितरीत्या अनिष्टवस्तुनः प्रागभावः परम्परया इच्छाया विषयो भवति न साक्षात् असाध्यप्रागभावविषयिणी इच्छा भवितुमर्हतीति प्रागभाववादिनापि स्वीकर्तव्यम् । एवमेव अत्यन्ताभावसम्बन्धस्यापि साध्यत्वात् नेयमिच्छा प्रागभावसम्बन्धविषयिणी किन्तु अत्यन्ताभावसम्बन्धविषयिणी भविष्यति । अत्यन्ताभावस्य कालान्तरसम्बन्धस्यापि साध्यत्वात् कालान्तरे अत्यन्ताभावप्रतियोगिनः सम्बन्धे अत्यन्ताभावसम्बन्धो न स्यात् । अतः काला-न्तरेऽत्यन्ताभावसम्बन्धस्य परिपालनाय कालान्तरे प्रतियोगिसम्बन्धो विघटयि-तव्यः । प्रतियोगिसम्बन्धविघटनं साध्यं वस्तु, अतस्तद्विषयिणी इच्छा सम्भवतीति नेयमिच्छा प्रागभावविषयिणीति भावः ॥२४॥

२५—उत्पन्नस्य पुनरुत्पादवारणाय प्रागभावोऽवश्यमङ्गीकार्यं इति प्रागभाववादी शंकते—अथ उत्पन्नस्य द्वितीयक्षणे पुनरुत्पत्त्यभावात्

न सामयिकात्यन्ताभावेनैवान्यथासिद्धेः, उत्पन्नस्यैव स्वोत्पत्तिविरोधित्वाच्च । अपि च सामग्री कार्यसत्त्वे प्रयोजिका, न तु तस्याद्यकालसंबन्धरूपोत्पत्तावपि । आद्यकालसंबन्धो हि स्वसमानकालीनपदार्थध्वंसानाधारकालाधारत्वम् । तत्र सामग्री कार्यस्य कालाधारत्वांशमात्रे प्रयोजिका, न तु विशेषणांशेऽपि; तस्य तादृक्पदार्थध्वंससामग्रीविरहादेव सिद्धेः ॥२६॥

---

तत्पूर्वक्षणे सामग्र्यभावो वाच्यः, स च प्रागभावाभावादेव अन्यहेतूनां सत्त्वादिति चेत् ।. प्रागभाववादिनो वदन्ति कार्योत्पत्तेर्द्वितीयक्षणे तत्कार्यं पुनः कथं नोत्पद्येत, कार्योत्पत्तेः प्राक् या सामग्री आसीत् सा कार्योत्पत्तिक्षणेऽपि अस्त्येव । कार्योत्पत्तिक्षणेऽपि सैव सामग्री विद्यमाना कथं तत्कार्यं पुनर्न जनयति । अथ च उत्पन्नं कार्यं उत्पत्तेर्द्वितीयक्षणे पुनर्नोत्पद्यते अतोऽवश्यमुत्पत्तेः प्राक् कालीना सामग्री उत्पत्तिकाले नास्तीति वक्तव्यम् सामग्रीभेदाय, प्रागभावसत्त्वासत्त्वमेव वक्तव्यम् । कार्योत्पत्तेः प्राक् कार्यस्य प्रागभाव आसीत् कार्योत्पत्तिकाले स प्रागभावो नष्ट इत्येव सामग्रीभेदात् उत्पन्नस्य न पुनरुत्पादापत्तिः प्राग्भावानङ्गीकारे इयमापत्तिः दुष्परिहरेति भावः । प्रतियोगिनः प्रागभावनाशरूपत्वाङ्गीकारे एव इयमापत्तिः सुपरिहरा । प्रतियोगिनः प्रागभावनाशकत्वे तु उत्पन्नस्य पुनरुत्पत्त्यापत्तिः स्यादेव । अतः प्रतियोग्येव प्रागभावनाशरूप इति सिद्धान्तः । प्रतियोग्युत्पत्तिकालेऽपि प्रागभावसत्त्वे तस्य कालस्य प्रतियोगिवर्तमानकालत्वमिव प्रतियोगिभविष्यत्कालत्वमपि स्यात् । तथा च व्यवहारो विप्लुतः स्यात् इत्यपि दोषो बोध्यः ॥२५॥

२६—सामयिकात्यन्ताभावेनैव प्रागभावोऽन्यथासिद्ध इति परिहरति सिद्धान्ती—न सामयिकात्यन्ताभावेनैव अन्यथासिद्धेः । उत्पन्नस्यैव स्वोत्पत्तिविरोधाच्च । अपि च सामग्रीकार्यसत्त्वे प्रयोजिका न तु तस्य आद्यकालसम्बन्धरूपोत्पत्तावपि । आद्यकालसम्बन्धो हि स्वसमानकालीनपदार्थध्वंसानाधारकालाधारत्वं तत्र सामग्रीकार्यस्य कालाधारत्वांशमात्रे प्रयोजिका न तु विशेषणांशेऽपि तस्य तादृग्पदार्थध्वंससामग्रीविरहादेव सिद्धेः । येऽपि प्रागभावमङ्गीकुर्वन्ति ते अत्यन्ता-

भावमपि अङ्गीकुर्वन्ति; अनाद्यत्यन्ताभावस्य देशविशेषवत् कालविशेषोऽपि अवच्छेदकः ; देशविशेषे अत्यन्ताभावो यथा अनुभवसिद्धः तथा कालविशेषेऽपि । अतः कालविशेषे अधिकरणसंसर्गिणा अत्यन्ताभावेनैव प्रागभावस्वीकारफलं सेत्स्यति । अतः प्रागभावाङ्गीकारो मुधा; अतः अयम् अत्यन्ताभावः सामयिकात्यन्ताभाव उच्यते । सामयिकात्यन्ताभावेनैव प्रागभावोऽन्यथासिद्ध इति भावः । तथा चात्यन्ताभावातिरिक्तः प्रागभावो नाङ्गीकर्तव्यः । किञ्च, उत्पन्नवस्त्वेव स्वोत्पत्तिविरोधी । न च स्वस्य स्वोत्पत्तिप्रतिबन्धकत्वे प्रतिबन्धकाभावस्य कारणत्वात् प्रागभावस्य कारणत्वं बलादापततीति वाच्यम्, उत्तेजकाभावविशिष्टस्य हि प्रतिबन्धकस्याभावः कार्योपयोगी । प्रागभावश्च न विशिष्टप्रतियोगिक इति न प्रागभावस्य प्रतिबन्धकाभावतया कारणत्वम् । वस्तुतस्तु कारणीभूताभावप्रतियोगित्वं न प्रतिबन्धकत्वम् । किन्तु सामग्रीकालीनकार्यानुत्पादप्रयोजकत्वं हि प्रतिबन्धकत्वम् । सामग्रीकालीनो यः कार्यानुत्पादस्तत्प्रयोजकत्वं तद्व्याप्यत्वं प्रतिबन्धकलक्षणम् । इदञ्च लक्षणं प्रतिबन्धकाभावस्य कारणत्वेऽनुपपन्नम् । प्रतिबन्धकाभावघटितसामग्र्यां सत्यां कार्यानुत्पादायोगेन तत्प्रयोजकत्वस्याप्यनुपपत्तेः । किञ्च, सामग्री कार्यस्य कालाधारत्वांशमात्रे प्रयोजिका, न तूत्पत्तौ । उत्पत्तिर्नाम कार्यस्याद्यकालसम्बन्धः । आद्यकालसम्बन्धो हि लीलावतीप्रकाशे [लीलावतीप्रकाशः, पृ०, ५६८] एवमुक्तः—स्वसमानकालीनपदार्थध्वंसानाधारकालाधारत्वम् । प्रतिक्षणं कस्यचिदुत्पत्तिः, कस्यचिद् ध्वंसश्च इति नियममभ्युपगम्यैव एतदुत्पत्तिपदार्थनिर्वचनं कृतं प्रकाशकृता । स्वपदं कार्यपरम्, कार्यसमानकालीना ये पदार्थास्तेषां न कस्यचिदपि ध्वंसः तस्मिन् काले भवितुमर्हति । नहि स्वस्य आधारकाले स्वस्य ध्वंसः सम्भवति । अतः ध्वंसानाधारकाल एव आद्यक्षणः । तत्सम्बन्धः एव स्वसमानकालीनपदार्थध्वंसानाधारकालाधारत्वम् । द्वितीयक्षणे कार्यसमानकालीनपदार्थस्य कस्यचित् ध्वंसोऽवश्यमेव भविष्यति । अतो द्वितीयक्षण आद्यक्षणो न भवितुमर्हति । सामग्री तु कार्यस्य कालाधारत्वांशमात्रे एव प्रयोजिका । न तु स्वसमानकालीनपदार्थध्वंसानाधारत्वरूपविशेषणांशे प्रयोजिका । कार्याधारीभूतकाले यो विशेषणांशः तत्प्रयोजिका सामग्री न भवितुमर्हति । कुतः

पाकजरूपादिभेदोऽप्यग्निसंयोगभेदात् पूर्वरूपादिध्वंसभेदाद्वा, न तु प्रागभावभेदात्, प्रतियोगिभेदं विना प्रागभावभेदायोगाच्च ॥ २७॥

---

सामग्री न प्रयोजिका ? स्वसमानाधिकरणपदार्थध्वंससामग्रीविरहादेव विशेषणांशस्य सिद्धेः । अतः कार्योत्पत्तिक्षणे सामग्री वर्तत इति कृत्वा कार्यस्य पुनरुत्पत्तिः स्यादित्यापत्तिरेव न संभवति । यतः कार्यसामग्री न कार्योत्पत्तौ प्रयोजिका । किन्तु कार्यस्य कालाधारत्वांशमात्रे एव सामग्री प्रयोजिका । अतः पुनरुत्पत्त्यापत्तिर्न संभवति । एकस्मादेवाग्निसंयोगात् पार्थिववस्तुनः रूपरसगन्धस्पर्शानां पाकजानामुत्पत्तिर्भवति । न ह्येकस्मादग्निसंयोगात् विभिन्नानि कार्याणि भवितुमर्हन्ति, कारणभेदाभावे कार्यभेदाभावात् । अतस्तत्र कारणभेदोऽङ्गीकर्तव्यः । अतोऽगत्या रूपरसादिचतुर्विधानां कार्याणां चत्वारः प्रागभावा अङ्गीकर्तव्याः ॥२६॥

२७—रूपरसादिप्रागभावभेदाद् भिन्नाः पाकजरूपरसादय उत्पद्यन्ते इति प्रागभाववादिशङ्कां प्रदर्श्य समाधत्ते सिद्धान्ती—**पाकजरूपादिभेदोऽपि अग्निसंयोगभेदात्, पूर्वरूपादिध्वंसभेदाद्वा, न तु प्रागभावभेदात् । प्रतियोगिभेदं विना प्रागभावभेदायोगाच्च ।** पाकजरूपादीनां भेदोऽपि न प्रागभावभेदात् सिद्ध्यति, किन्तु अग्निसंयोगभेदादेव । रूपरसादिजनकोऽग्निसंयोगो न एकः, किन्तु भिन्नः । अयं भावः—पार्थिववस्तुघटादिभिः सहाग्निसंयोगे जाते पार्थिवघटादौ विभिन्नरूपरसादीनामुत्पत्तिर्जायते । आपाततदृष्ट्या यद्यपि एक एवाग्निसंयोगः प्रतीयते तथापि नात्र एकोऽग्निसंयोगः । यतः अग्नित्वजातिरवयवावयविवृत्तिः अन्त्यवयवे तदवयवेऽपि अग्नित्वजातिरस्ति । अतो यत्रैक एवाग्निसंयोग इति प्रतीयते तत्रापि अग्निसंयोगाः बहव एव । वैशेषिकमते, अवयवावयविनोर्भेदात् घटादिभिः सहाग्निसंयोगे जाते तत्र बहवोऽग्निसंयोगा वर्तन्ते इत्यङ्गीकर्तव्यम् । अग्निसंयोगनानात्वात् रूपरसादिकार्याणामपि नानात्वम् । अत्रेदमवधेयम्—पार्थिवपरमाणौ तेजःपरमाणुसंयोगात् पार्थिवपरमाणौ पाकजा रूपरसादयः उत्पद्यन्ते । एकेन पार्थिवपरमाणुना एकस्य तेजःपरमाणोः संयोग एक एव । यतः परमाणुः निरवयवः । अतस्तत्र रूपरसादिकार्यभेदाय रूपरसादिप्रागभावा अङ्गीकर्तव्याः । "अत्र परमाणुप्रक्रियाया

नाप्युपादानत्वव्यवस्था तत्र मानम्; तन्तुत्वादिनैव तत्सिद्धेः। अन्यथा प्रागभावस्य संबन्धिविशेषोऽपि कुतः सिद्ध्येत्? न च तदत्यन्ताभाववतः कथं तदुपादानत्वम्? संबन्धान्तरेण त्वयाप्यभ्युपगमात्समयावच्छेदतदनवच्छेदाभ्यां वैलक्षण्याभ्युपगमाच्चेत्यलमतिविस्तरेण। ॥२८॥

---

अनङ्गीकार एव उत्तरम्। यदि परमाणुप्रक्रिया प्रमाणसिद्धा तदा पूर्वरूपादिध्वंसभेदाद्वा इत्येवोत्तरम्। यत्र पाकजरूपादिकमुत्पद्यते तत्र पूर्वरूपादीनां विनाशादेव पाकजे रूपादीनामुत्पत्तिः। अतो रूपविनाशात् रूपस्य, रसविनाशात् रसस्य उत्पत्तिः वक्तव्या। तथा च पूर्वरूपादिध्वंसभेदादेव पाकजरूपादीनां भेदः, न तु प्रागभावभेदात्। पाकजरूपादीनां भेदासिद्धौ प्रागभावभेदोऽपि न सिद्ध्येत्। प्रतियोगिभेदं विना प्रागभावभेदायोगात्। अतः प्रागभावभेदाय प्रतियोगिभेदः अवश्यमपेक्षितः। तथा चान्योन्याश्रयः—रूपरसादीनां भेदसिद्धौ प्रागभावभेदसिद्धिः, प्रागभावभेदसिद्धौ च रूपरसादिभेदसिद्धिरिति ॥२७॥

२८—उपादानत्वव्यवस्थासिद्ध्यै प्रागभावोऽङ्गीकर्तव्य इति प्रागभावादिमतमाशङ्क्य समाधत्ते—नापि उपादानत्वव्यवस्था तत्र मानं तन्तुत्वादिनैव तत्सिद्धेः अन्यथा प्रागभावस्य सम्बन्धिविशेषोऽपि कुतः सिद्ध्येत्। न च तदत्यन्ताभाववतः कथं तदुपादानत्वं सम्बन्धान्तरेण त्वयाप्यभ्युपगमात्। समयावच्छेदतदनवच्छेदाभ्यां वैलक्षण्याभ्युपगमाच्चेत्यलमतिविस्तरेण। प्रागभाववादिनो वदन्ति कस्यचिद् कार्यस्य किंचिदेवोपादानं भवति, न सर्वस्य सर्वमित्युपादानत्वव्यवस्था सर्वैरेवाङ्गीकरणीया। अस्या व्यवस्थाया व्यवस्थापकनिरूपणे कर्तव्ये एतदेवायाति यस्मिन्वस्तुनि यस्य प्रागभावो वर्तते तदेव तस्योपादानम्; यत्र यस्य प्रागभावो न वर्तते न तत् तस्योपादानमिति; कपाले घटस्य प्रागभावो वर्तते, न पटस्य। अतः कपालं घटस्योपादानं भवति, न पटस्य इति उपादानत्वव्यवस्थायै प्रागभावोऽवश्यम् अङ्गीकर्तव्यः। अन्यथा उपादानत्वव्यवस्थैव न स्यात्। अत्राह सिद्धान्ती—न प्रागभावेन उपादानत्वव्यवस्थासिद्धिः। कपाले घटप्रागभावो वर्तते इति कपालं घटस्योपादानमिति न, किन्तु कपाले कपालत्वं वर्तते, अतः कपालत्वेनैव घटोपादानत्वव्यवस्था

एवं सामान्याभावोऽपि गौरवपराहत एव। तथाहि—सामान्यावच्छिन्नप्रतियोगिताकत्वम्, अभावः तस्य च तत्तदधिकरणसंबन्धा

---

सिद्ध्यति; एवं तन्तुष्वपि पटप्रागभावो वर्तते इति कृत्वा तन्तवः पटस्योपादानमिति न, किन्तु तन्तुषु तन्तुत्वं वर्तते इति तन्तुत्वेनैव पटोपादानत्वव्यवस्था सिध्यति। अन्यथा तन्तुत्वादीनां पटाद्युपादानत्वव्यवस्थापकत्वानङ्गीकारे, पटप्रागभावस्तन्तुष्वेव, घटप्रागभावः कपाले एव इति प्रागभावसम्बन्धिव्यवस्थापि कुतः सिध्येत्?. अतः प्रागभावव्यवस्थायै तन्तुत्वादीनामेव व्यवस्थापकत्वाङ्गीकारे तेनैव उपादानत्वव्यवस्थायां: सम्भवात् कृतम् अन्तर्गडुना प्रागभावेन इति भावः। न च प्रागभावानङ्गीकारे कार्योत्पत्तेः प्राक् उपादाने कार्यस्य अभावो अवश्यम् अङ्गीकरणीयः। स च अभावः त्वया अत्यन्ताभाव एव वक्तव्यः, स च न संभवति तदत्यन्ताभाववतः तदुपादानत्वाभावात्। अतः प्रागभावोऽङ्गीकरणीय इति वाच्यम्। प्रागभाववादिनापि कपाले घटस्य संयोगादिसम्बन्धेन अत्यन्ताभावस्य, तन्तुषु च पटस्य संयोगादिसम्बन्धेन अत्यन्ताभावस्य अभ्युपगमात् न तदत्यन्ताभाववत्त्वं तदुपादानत्वविरोधि कार्योत्पत्तेः प्राक् कार्योपादाने कार्यात्यन्ताभावसत्त्वेऽपि कार्यकाले उपादाने कार्यात्यन्ताभावो न वर्तते समयविशेषे उपादाने अत्यन्ताभावसत्त्वेऽपि, समयविशेषे उपादाने अत्यन्ताभावो न वर्तते। घटोत्पत्तेः प्राक् कपाले घटात्यन्ताभावः समयविशेषावच्छिन्नः, किन्तु कपाले पटात्यन्ताभावः समयविशेषानवच्छिन्नः। तथा च अत्यन्ताभावस्य समयविशेषावच्छिन्नत्वानवच्छिन्नत्वाभ्यां वैलक्षण्यात् समयविशेषानवच्छिन्नात्यन्ताभावः उपादानत्वविरोधी, समयविशेषावच्छिन्नात्यन्ताभाववत्तु नोपादानत्वविरोधि। अतः प्रागभावस्वीकारे प्रयोजनाभावात् प्रागभावस्य निष्प्रामाणिकत्वाच्च प्रागभावो नाङ्गीकरणीयः; अलम् प्रागभावालोचनाविस्तरेण इति। प्रागभावालोचनविस्तरस्तु नृसिंहाश्रमप्रणीताद्वैतदीपिकायां द्वितीयपरिच्छेदे २३४ पृष्ठतः २५० पृष्ठे विवरणभावप्रकाशिकायां प्रत्यक्तत्त्वप्रदीपिकायाम्, २७४ पृष्ठे, आचार्यप्रणीताद्वैतरत्नरक्षणे २० पृष्ठे द्रष्टव्यः ॥२८॥

२९—प्रसंगतः यावद्विशेषाभावातिरिक्तसामान्याभावखण्डनं प्रस्तूयते—एवं सामान्याभावोऽपि गौरवपराहत एव। तथा हि सामान्यावच्छिन्नप्रतियोगिताकत्वम्, अभावः, तस्य च तत्तदधिकरणसम्बन्धा इति

इति त्रयं वा कल्प्यताम् ? क्लृप्ततत्तदधिकरणसंबन्धानामेकाधिकरण-वृत्तित्वावच्छेदेन सिद्धानामभावानां सामान्यावच्छिन्नप्रतियोगिताकत्वम्, तस्य च व्यासज्यवृत्तित्वमिति द्वयं वा कल्प्यताम्। तत्रोत्तरः पक्ष एव प्रेक्षावद्भ्यो रोचते; आद्यक्षणे 'घटो नीरूप' इति प्रतीतेः सर्वसिद्धत्वात्, यावदाश्रयतद्भेदग्रहस्य द्वित्वादिग्रहे हेतुत्वेऽपि उक्तप्रतियोगिताग्रहे हेतुत्वानभ्युपगमात्, कार्योन्नेयधर्माणां यथाकार्य-मुन्नयनात् ॥२९॥

---

त्रयं वा कल्प्यताम् क्लृप्ततत्तदधिकरणसम्बन्धानामेकाधिकरणवृत्तित्वावच्छेदेन सिद्धानामभावानां सामान्यावच्छिन्नप्रतियोगिताकत्वम्, तस्य च व्यासजयवृत्तित्वमिति उभयं वा कल्प्यताम्। तत्रोत्तरः पक्ष एव प्रेक्षावद्भ्यो रोचते। आद्यक्षणे घटो नीरूप इति प्रतीतेः सर्वसिद्धत्वात् यावदाश्रयतद्भेदग्रहस्य द्वित्वादिग्रहे हेतुत्वेऽपि उक्तप्रतियोगिताग्रहे हेतुत्वस्यानभ्युपगमात्। कार्योन्नेयधर्माणां यथा कार्यमुन्नयनात्। यावद्विशेषाभावानां सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वकल्पने लाघवात् यावद्-विशेषाभावातिरिक्तसामान्याभावकल्पने गौरवात् अतिरिक्तः सामान्याभावो गौरवपराहत एव। अतिरिक्तसामान्याभावकल्पने कल्पनागौरवं दर्शयन्नाह—तथा हीति। अतिरिक्तसामान्याभाववादिमते त्रयं कल्पनीयम्; अतिरिक्त-सामान्याभावानङ्गीकर्तृमते द्वयं कल्पनीयमिति सामान्याभाववादिमते कल्पनागौरवम्। गौरवमेवाह—[१] सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वम्, [२] अभावः—सामान्याभावो धर्मी, [३] तस्य च सामान्याभावस्य तत्तदधिकरणसम्बन्धाः इति त्रयं कल्पनीयम्। अतिरिक्तसामान्याभाव-स्वीकारेऽपि यावद्विशेषाभावा अवश्यमेवाङ्गीकर्तव्याः, तेषां प्रतीतिसिद्धत्वात्। प्रतीतिसिद्धयावद्विशेषाभावातिरिक्तः एकः सामान्याभावो धर्मी कल्पनीयः। विशेषाभावानां तत्तद्विशेषधर्मावच्छिन्नप्रतियोगिताकत्वस्य सिद्धत्वेऽपि सामान्य-धर्मावच्छिन्नप्रतियोगिताकत्वरूपो धर्मः सामान्याभावे धर्मिणि अतिरिक्तः कल्पनीयः। तस्य च अतिरिक्तस्य सामान्याभावस्य कल्पितस्य तत्तदधिकरणसम्बन्धाः कल्पनीयाः। अतिरिक्तसामान्याभावकल्पनेऽपि तत्तद्विशेषाभावकूटः अभाव-

कूटस्य एकाधिकरणवृत्तित्वं च अवश्यं कल्पनीयम्। क्लृप्ते तत्तद्विशेषाभावकूटे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वरूपो धर्म एकः कल्पनीयः सामान्याभावानङ्गीकर्तृमते। तस्य च धर्मस्य नानाऽभावव्यक्तिषु व्यासज्यवृत्तित्वरूपोऽपरो धर्मः कल्पनीयः। अतिरिक्तसामान्याभावानङ्गीकर्तृमते धर्मद्वयमेव कल्प्यम्। तथा च कल्पनालाघवात् उत्तरः पक्षः यावद्विशेषाभावकूटरूपः प्रेक्षावद्भ्यो रोचते। कल्पनागौरवात् न पूर्वः पक्षः इत्यर्थादायाति। अतिरिक्तसामान्याभावरूपः पक्षः प्रेक्ष्यावद्भ्यो न रोचते इत्यर्थः। अत्र केचिदाहुः—यावद्विशेषाभावकूटे व्यासज्यवृत्तिसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वधर्मः पर्याप्तिसम्बन्धेन स्थातुं नार्हति। यतः प्रतियोगितायाः निरूपकत्वधर्मो यस्मिन् अभावे तिष्ठति तदभावस्वरूप एव स धर्मोऽङ्गीकार्यः, अतिरिक्तत्वे प्रमाणाभावात्। तथा च अव्यासज्यवृत्तिषु तत्तद्विशेषाभावेषु सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वरूपो धर्मः व्यासज्यवृत्तिः कथमङ्गीक्रियते व्यासज्यवृत्तिधर्मस्य अव्यासज्यवृत्तिधर्मिस्वरूपत्वासंभवादिति। अत्रेदमालोचनीयम्—आत्मतत्त्वविवेकटीकायां [पृ०, ५१५] दीधितिकृद्भिः ज्ञानीयविषयताज्ञानादतिरिक्तेति निरूप्य एवं प्रतियोगित्वानुयोगित्वादयोऽपि अतिरिक्ताः पदार्थाः इति व्यवस्थापितम्। अनुयोगित्वं यदि अनुयोगिनो व्यतिरिच्येत तदा समान्यधर्मावच्छिन्नप्रतियोगितानिरूपकत्वधर्मोऽपि तदाश्रयविशेषाभावेभ्यः व्यतिरिक्त एव। यतः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं प्रतियोगितायाः निरूपकत्वम्, प्रतियोगितायाः निरूपकता तदनुयोगिनि वर्तते। अतो निरूपकत्वमभावनिष्ठानुयोगिताविशेष एव, अनुयोगित्वधर्मः अनुयोगितो व्यतिरिक्त एव इति दीधितिकृद्भिरेव निरूपितम्। अतो अनुयोगिताया आश्रयो विशेषाभावोऽव्यासज्यवृत्तिरपि ततो भिन्नः अभाववृत्तिधर्मोऽनुयोगित्वं व्यासज्यवृत्ति भवितुमर्हतीति नानुपपत्तिः। अनुयोगित्वं यदि अभावस्वरूपं स्यात् तदा प्रदर्शिता अनुपपत्तिः स्यात्, तच्च नेति नानुपपत्तिरिति भावः। यावद्विशेषाभावकूटे व्यासज्यवृत्तिसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं पर्याप्तिसम्बन्धेन स्थातुमर्हतीति, अतिरिक्तः सामान्याभावोऽसिद्ध एव। अत एवोक्तं मूले—उत्तरः पक्षः प्रेक्षावद्भ्यो रोचते इति। द्वित्वत्रित्वादीनां व्यासज्यवृत्तिधर्माणां प्रत्यक्षे व्यासज्यवृत्तिधर्मस्य यावदाश्रयप्रत्यक्षम्, आश्रयाणां परस्परभेदप्रत्यक्षं कारणमपि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वरूपव्यासज्यवृत्तिधर्मस्य प्रत्यक्षे तन्न

न चैवमतिलाघवात् क्लृप्तानामधिकरणानामेवाभावधीहेतुत्वमस्तु, किं विशेषाभावैरपीति—वाच्यम्; अस्माकमिष्टापत्तेः, घटाभावो नेत्यादावतिरिक्ताभावस्य त्वयाप्यनभ्युपगमेन भावस्याप्यभावत्वप्रकारकप्रमाहेतुत्वस्योभयवादिसिद्धत्वात् ॥३०॥

---

कारणम्। यतो आद्यक्षणे घटो नीरूपः इति प्रतीतेः सर्वसिद्धत्वात् उत्पत्तिक्षणावच्छिन्नं द्रव्यमगुणमिति सिद्धान्तात्। अस्याः प्रतीतेरतिरिक्तरूपसामान्याभावो विषयो न भवितुमर्हति, रूपसामान्यात्यन्ताभावो नास्याः प्रतीतेर्विषयो भवितुमर्हति। यतः उत्पत्तिक्षणे घटे यद्यद्रूपस्य प्रागभावाः वर्तन्ते, तेषां रूपाणाम् अत्यन्ताभावस्तस्मिन्घटे न स्वीकर्तुं शक्यते। तत्प्रागभावाधिकरणे तदत्यन्ताभावाभावात् जनिष्यमाणरूपाणाम् अत्यन्ताभावः आद्यक्षणे घटे नास्ति अत्यन्ताभावस्य त्रैकालिकत्वात्। घटे जनिष्यमाणरूपाणि बहूनि, अतो घटे तत्तद्रूपाभावसमुदायः रूपत्वसामान्यधर्मावच्छिन्नप्रतियोगिताकः, 'आद्यक्षणे घटो नीरूप' इति प्रत्यक्षप्रतीतौ भासते। अत्र यदि यावद्रूपविशेषज्ञानं तेषां रूपाणां परस्परभेदज्ञानम् उक्तप्रत्यक्षप्रतीतौ अपेक्षितं स्यात्, आद्यक्षणे घटो नीरूप इति प्रतीतिरेवानुपपन्ना स्यात्। अस्याः प्रतीतेरुपपत्तये सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वधर्मो व्यासज्यवृत्तिरपि तत्प्रत्यक्षे यावदाश्रयप्रत्यक्षस्य यावदाश्रयभेदप्रत्यक्षस्य अपेक्षा नास्ति; कार्योन्नेयधर्मस्य यथाकार्यमुन्नयनादिति भावः ॥२९॥

३०—अभावानामधिकरणात्मकत्वस्वीकारे अतिलाघवमिति सामान्याभाववादिशङ्कां प्रदर्श्य इष्टापत्त्या परिहरति सिद्धान्ती—न चैवम् अतिलाघवात् क्लृप्तानामधिकरणामेव अभावधीहेतुत्वमस्तु किं विशेषाभावैरपीति वाच्यम्, अस्माकमिष्टापत्तेः। घटाभावो न इत्यादौ अतिरिक्ताभावस्य त्वयापि अनभ्युपगमेन भावस्यापि अभावत्वप्रकारकप्रमाहेतुत्वस्य उभयवादिसिद्धत्वात्। अतिरिक्तसामान्याभाववादिनो वदन्ति—यदि लाघवं विचार्य सामान्याभावो नाङ्गीक्रियते तदा अतिलाघवं प्रतिसन्धाय विशेषाभावोऽपि नाङ्गीक्रियताम्। विशेषाभावाङ्गीकारेऽपि विशेषाभावस्य अधिकरणमवश्यमेव स्वीकार्यम्। अतः क्लृप्तानां विशेषाभावाधिकरणानाम् एव विशेषाभावधीहेतुत्व-

यदपि कश्चिदाह—प्रतियोगितावच्छेदकभेदस्याभावभेदनियामकत्वाद्विशेषाभावान्यसामान्याभावसिद्धिः, अन्यथा अभावभेदासिद्धेः; प्रतियोगिभेदस्याभावभेदकत्वे एकघटप्रतियोगिकस्य प्रागभावादिचतुष्टयस्याभेदप्रसङ्गात्, अवच्छेदकभेदात्तु तद्भेदे न कोऽपि दोषः; क्वचित्तादात्म्यस्य क्वचित्संसर्गस्य क्वचित् पूर्वापरकालीनतद् घटत्वादेश्च भेदात् —इति ॥३१॥

---

मस्तु किं विशेषाभावस्यापि अङ्गीकारेण इति सामान्याभाववादिना न वाच्यम्; अस्माकं सिद्धान्तिनामिष्टापत्तेः। यद्युच्येत अभावाधिकरणं भाववस्तु, भाववस्तु नः अभावप्रतीतिविषयत्वं कथं स्यात्, भावाभावयोर्वैलक्षण्यात्; तत्राह सिद्धान्ती सामान्याभाववादिनापि घटाभावस्याभावः अतिरिक्ताभावो न सामान्याभाववादिनापि स्वीक्रियते; किन्तु घटाभावाभावो घट एव भावरूप इति स्वीक्रियते; अतो भावोऽपि अभावत्वप्रकारकप्रमाप्रतीतेर्विषयो भवतीति उभयवादिसिद्धम्। अतो अभावाधिकरणमपि भाववस्तु अभावत्वप्रकारकप्रमाप्रतीतेर्विषयो भवितुमर्हतीति अभावमात्रानङ्गीकारे अतिलाघवमेव ॥३०॥

३१—सामान्याभावसमर्थनाय कश्चित् प्रतियोगितावच्छेदकभेदस्य अभावभेदनियामकत्वमभ्युपगच्छन्नाह—यदपि कश्चिदाह प्रतियोगितावच्छेदकभेदस्याभावभेदनियामकत्वाद् विशेषाभावान्यसामान्याभावसिद्धिः अन्यथा अभावाभेदासिद्धेः। प्रतियोगिभेदस्य अभावभेदकत्वे एकघटप्रतियोगिकस्य प्रागभावादिचतुष्टयस्याभेदप्रसंगात्। अवच्छेदकभेदात्तु तदभेदे न कोऽपि दोषः। क्वचित्तादात्म्यस्य क्वचित्संसर्गस्य क्वचित्पूर्वापरकालीनघटत्वादेश्च भेदादिति। अभावाभेदे अभावीयप्रतियोगितावच्छेदकभेद एव नियामकः। प्रतियोगितावच्छेदकभेदाभावे अभावभेदो न सिद्ध्येत्। अतो विशेषाभावात् सामान्याभावस्य भेदोऽवश्यं स्वीकरणीयः। विशेषाभावस्य प्रतियोगितावच्छेदकः विशेषधर्मः, एवं सामान्याभावस्य प्रतियोगितावच्छेदकः सामान्यधर्मः। विशेषधर्मसामान्यधर्मयोः भेदात्; सामान्याभावविशेषाभावयोर्भेदसिद्धिः। प्रतियोगितावच्छेदकधर्मभेदादेव सामान्याभावो विशेषाभावाद् भिद्यते। प्रतियोगितावच्छेदकधर्मभेदं

तन्न; संसर्गप्रतियोगिविशेषणसाधारणस्यैकस्यावच्छेदकत्वस्य दुर्वचत्वात्, तादात्म्यादेश्च प्रतियोगितावच्छेदकत्वे मानाभावात्। भेदसिद्धिस्तु भाववदभावस्यापि विरुद्धधर्माध्यासादेव। अवच्छेदकभेद-

---

विना अभावभेद एव न सिद्ध्यति। यतः प्रतियोगिभेदादभावो न भिद्यते। यदि प्रतियोगिभेदादेवाभावो भिद्येत, प्रतियोगिभेदोऽपि यदि अभावभेदज्ञापको भवेत्तर्हि एकस्यैव घटस्य प्रागभावध्वंसात्यन्ताभावान्योन्याभावानां परस्परभिन्नानां भेदोऽपि न सिध्येत्। चतुर्णामभावानां प्रतियोगिन एकत्वात्। अतः प्रतियोगितावच्छेदकभेदादेव चतुर्णां प्रदर्शितानामभावानां भेदो वाच्यः। तद्घटप्रागभावे प्रतियोगितावच्छेदको धर्मः पूर्वकालीनतद्घटत्वम्। तद्घटध्वंसस्य प्रतियोगितावच्छेदको धर्मः अपरकालीनतद्घटत्वम्। तद्घटात्यन्ताभावस्य प्रतियोगितावच्छेदकः सम्बन्धसंयोगादिः, एवं तद्घटान्योन्याभावस्य प्रतियोगितावच्छेदकसम्बन्धः तादात्म्यम्। एवं रूपेण प्रतियोगितावच्छेदकधर्मस्य वा प्रतियोगितावच्छेदकसम्बन्धस्य वा भेदादेव एकघटप्रतियोगिकानां चतुर्णामभावानां भेदसिद्धिः। एतेषां चतुर्णामभावानां प्रतियोगिन एकत्वात् न प्रतियोगिभेदाच्चत्वारोऽभावाः परस्परं भिद्यन्ते। प्रतियोगितावच्छेदकभेदात्तु अभावभेदेऽभ्युपगम्यमाने न कश्चिद्दोषः। अन्योन्याभावे तादात्म्यस्य प्रतियोगितावच्छेदकसम्बन्धस्य, अत्यन्ताभावे प्रतियोगितावच्छेदकसंयोगादिसंसर्गस्य, प्रागभावे पूर्वकालीनघटत्वस्य, ध्वंसे अपरकालीनघटत्वस्य प्रतियोगितावच्छेदकानां भेदात् एकघटप्रतियोगिकानां चतुर्णामभावानां भेदः सिध्यति। अतः सामान्याभावविशेषाभावयोः प्रतियोगितावच्छेदकधर्मभेदात् विशेषाभावातिरिक्तः सामान्याभावः सिध्यति ॥३१॥

३२—धर्मसंसर्गसाधारणप्रतियोगितावच्छेदकत्वस्य एकस्य दुर्निरूपत्वात् नेदं प्रयोजकं साधीयः इत्याह सिद्धान्ती—तन्न, संसर्गप्रतियोगिविशेषणसाधारणस्य एकस्यावच्छेदकत्वस्य दुर्वचत्वात्। तादात्म्यादेश्च प्रतियोगितावच्छेदकत्वे मानाभावात्। भेदसिद्धिस्तु भाववदभावस्यापि विरुद्धधर्माध्यासादेव। अवच्छेदकभेदस्य अभावभेदनियामकत्वं

स्याभावभेदनियामकत्वं लिङ्गविधया तज्ज्ञापकत्वमेव वाच्यम्, न तु तज्जनकत्वम्। तच्च न; विपक्षबाधकतर्काभावेन सामानाधिकरण्याभावेन च व्याप्तेरेवासिद्धेः। अत एव—तदितरधर्मावच्छिन्नप्रतियोगिताकत्वं तदवच्छिन्नप्रतियोगिताकान्यत्वव्याप्यमित्यपि—निरस्तम्; एवं चावृत्तीनां गगनादीनां समनियतानां वाऽन्येषां धर्माणामेक एवात्यन्ताभावः; युगपद्विनष्टानामुत्पन्नानां वा समानदेशानामसति बाधके एक एव ध्वंसः प्रागभावो वा; व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽपि चेदभावः प्रामाणिकः, तदा तस्यैकस्यैव प्रतियोगिताः सर्वैरेव व्यधिकरणैः सर्वैश्च समानाधिकरणैः संबन्धैरेवावच्छिद्यन्ताम्, आकाशाभाव एव वा तथाऽस्ताम्; एकेनैवोपपत्तावभावभेदकल्पने मानाभावात् ॥३२॥

---

लिङ्गविधया तज्ज्ञापकत्वमेव वाच्यम्, न तु तज्जनकत्वम्। तच्च न, विपक्षबाधकतर्काभावेन सामानाधिकरण्याभावेन च व्याप्तेरेवासिद्धेः। अत एव तदितरधर्मावच्छिन्नप्रतियोगिताकत्वं तदवच्छिन्नप्रतियोगिताकान्यत्वव्याप्यमित्यपि निरस्तम्। एवञ्चावृत्तीनां गगनादीनां समनियतानां वा अन्येषां धर्माणामेक एवात्यन्ताभावः, युगपद्विनष्टानामुत्पन्नानां वा समानदेशानामसति बाधके एक एव ध्वंसः प्रागभावो वा। व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽपि चेदभावः प्रामाणिकस्तदा तस्य एकस्यैव प्रतियोगिताः सर्वैरेव व्यधिकरणैः सर्वैश्च समानाधिकरणैः सम्बन्धैरवच्छिद्यन्ताम्। आकाशाभाव एव वा तथा आस्ताम्। एकेनैवोपपत्तौ अभावभेदकल्पने मानाभावात्। प्रतियोगितावच्छेदकभेदाभावभेदं येऽङ्गीकुर्वन्ति ते संसर्गस्य प्रतियोगिविशेषणधर्मस्य च प्रतियोगितावच्छेदकत्वमङ्गीकुर्वन्ति। संसर्गप्रतियोगिविशेषणधर्मसाधारणस्य एकस्यावच्छेदकत्वस्य निरूपयितुमशक्यत्वात्। प्रतियोगिताया न्यूनवृत्तेरधिकवृत्तेर्वा प्रतियोगिविशेषणस्य प्रतियोगितानवच्छेदकत्वम्। प्रतियोगिताया न्यूनाधिकवृत्तिसंसर्गस्य प्रतियोगितावच्छेदकत्वमङ्गीक्रियते। समवायेन घटो नास्तीति प्रतीतौ घटाभावीयप्रतियोगिताया न समनियतः समवायः, समवायस्य

एकत्वात् पटादावपि सत्त्वात्। अतो धर्मसंसर्गसाधारणी एकाऽवच्छेदकता निरूपयितुं न शक्यते। भेदीयप्रतियोगिता तादात्म्येनावच्छिद्यते, ध्वंसप्रागभावीय-प्रतियोगिता तु तत्तद्व्यक्तित्वेनावच्छिद्यते इत्यत्रापि कस्यचित् प्रमाणस्याभावात्, तादात्म्यस्य तत्तद्व्यक्तित्वरूपधर्मस्य च प्रतियोगितावच्छेदकत्वमसिद्धमेव। अभावानां भेदसिद्धिस्तु न प्रतियोगितावच्छेदकभेदात् किन्तु भावभेदसिद्धिवत् विरुद्धधर्माध्यासादेव। यद्विरुद्धधर्माध्यस्तं तन्नाना, यथा शीतोष्णे। उक्तञ्च बौद्धैरपि—अयमेव भेदो भेदहेतुर्वा योऽयं विरुद्धधर्माध्यासः, कारणभेदश्च। तथा च विरुद्धधर्माध्यासादेव भाववदभावानां भेदसिद्धौ प्रतियोगितावच्छेदकभेदस्य नियामकमसिद्धमेव। ये तु प्रतियोगितावच्छेदकभेदेन अभावभेदमभ्युपगच्छन्ति, तेऽपि नैवं कथयितुं शक्नुयुः, प्रतियोगितावच्छेदकभेदाद् अभावभेद उत्पद्यते इति, भेदस्यानादित्वात् स न उत्पद्यते। भेदस्य जनक एवाप्रसिद्धः। अतस्तैरेवं वक्तव्यम्—अवच्छेदकभेदोऽभावभेदस्य ज्ञापकः। यथा व्याप्यं लिङ्गं व्यापक-साध्यस्यानुमापकं भवति एवमेव भेदस्य व्याप्योऽवच्छेदकभेदः अभावभेदस्य ज्ञापकोऽनुमापक इत्यर्थः। अवच्छेदकभेदो यदि अभावभेदस्य व्याप्यो न भवेत्तर्हि अवच्छेदकभेदोऽभावभेदस्य ज्ञापको न भवेत्। अतोऽवच्छेदकभेदे अभावभेदनिरूपिता व्याप्तिर्वर्तते इति स्वीकर्तव्यम्। किन्तु अस्या व्याप्तेः विपक्षबाधकतर्काभावात् भेदयोः सामानाधिकरण्याभावाच्च प्रदर्शिता व्याप्तिरेवा-सिद्धा। तथा हि—अवच्छेदकभेदादभावभेदेऽभ्युपगम्यमाने अस्या व्याप्तेरभावे एव व्यभिचारः। स चेत्थं—भूतले संयोगेन घटो नास्तीत्यभावप्रतीतौ अस्या-भावस्य प्रतियोगितावच्छेदकधर्मसंसर्गयोर्भेदो वर्तते, अभावस्तु न भिद्यते। अतः प्रतीते अभावे एव अस्या व्याप्तेर्व्यभिचारः। अवच्छेदकनानात्वादभाव-नानात्वमित्युक्तौ अवच्छेदकनानात्वमवच्छेदके वर्तते; अभावनानात्वञ्चाभावे वर्तते; तथा च द्वयोर्नानात्वयोर्वैयधिकरण्यात् सामानाधिकरण्यरूपाया व्याप्तेरेवासिद्धेः। ज्ञाप्यज्ञापकयोर्वैयधिकरण्यात् यदि अवच्छेदकभेदेन अभावभेदो न सिद्ध्येत् तर्हि ज्ञाप्यज्ञापकयोः सामानाधिकरण्य एवं वाच्यम् यस्मिन् अभावे तदितरधर्मावच्छिन्नप्रतियोगिताकत्वं वर्तते तत्राभावे तदवच्छिन्न-प्रतियोगिताकाभावभेदो वर्तते। तथा च तदितरधर्मावच्छिन्नप्रतियोगिताकत्वं

तदवच्छिन्नप्रतियोगिताकाभावभेदव्याप्यम्; यथा घटत्वेतरधर्मावच्छिन्नप्रतियोगिताकाभावः पटाभावः स च घटत्वेतरपटत्वधर्मावच्छिन्नप्रतियोगिताकः अस्मिन् अभावे घटत्वधर्मावच्छिन्नप्रतियोगिताकाभावभेदोऽपि वर्तते। अतः तदितरधर्मावच्छिन्नप्रतियोगिताकत्वं तदवच्छिन्नप्रतियोगिताकाभावभेदव्याप्यमिति नियमः सिध्यति। अत्र ज्ञाप्यज्ञापकयोः सामानाधिकरण्यात् न व्याप्तेरसिद्धिः। पूर्वपक्षिप्रदर्शितस्य अस्यापि नियमस्य असिद्धिरेव। असिद्धिमेव प्रदर्शयितुमुक्तं मूले—**अत एव** इति। कुतोऽसिद्धिरत आह—**अवृत्तीनां गगनादीनामिति**। अयम्भावः—गगनात्मदिक्परमाणूनाम् अवृत्तिद्रव्याणाम् अत्यन्ताभाव एक एव। अवृत्तिद्रव्यप्रतियोगिकानामभावानां भेदो नास्ति। अतस्तेषामभावः एक एव। गगनादिद्रव्याणि कुत्रापि न वर्तन्ते, अतस्तेषामभावः सर्वत्रैव वर्तते; अतो गगनादीनामभावा न भिद्यन्ते। तेषामभावानां समनियतत्वात् समनियतानामभावानां भेदकाभावात्, तेऽभावा एक एव इति तार्किकैरपि अङ्गीक्रियन्ते। प्रतियोगितावच्छेदकभेदाद् यदि अभावा भिद्येरन् तर्हि गगनादीनामवृत्तिद्रव्याणां अभावा अपि भिन्नाः स्युः। गगनाद्यभावाः केवलान्वयिनः सर्वत्र वर्तन्ते। समनियतानामभावानां भेदो नास्तीति भावः एवमेव समनियतानां धर्माणाम् एक एव अत्यन्ताभावः, भेदज्ञापकप्रमाणाभावात्। प्रतियोगितावच्छेदकभेदाद् यदि अभावाः भिन्नाः स्युः समनियतधर्माणामपि अत्यन्ताभावा भिन्नाः भवेयुरथ च ते न भिद्यन्ते; अतोऽवच्छेदकभेदात् अभावभेदो न भवतीति भावः। दर्शितरीत्या न केवलम् अत्यन्ताभावा एव न भिद्यन्ते किन्तु ध्वंसाः प्रागभावाश्च न भिद्यन्ते इत्याह—**युगपद्विनष्टानामिति**। एकदेशवृत्तीनां युगपद्विनष्टानां युगपदुत्पन्नानाञ्च वस्तुनां ध्वंसाः प्रागभावाश्च न भिद्यन्ते। परन्तु तेषां ध्वंसः प्रागभावश्च एक एव। अतः प्रतियोगितावच्छेदकभेदादभावा भिद्यन्ते इति रिक्तं वचः। ध्वंसानां प्रागभावानाञ्च समनैयत्येन विरुद्धधर्मसंसर्गाभावात् भेदो नास्तीति भावः। असति बाधके इति ध्वंसानां प्रागभावानां ऐक्यबाधके विद्यमाने सति ते भिद्यन्ते एव, अतोऽसति बाधके इत्युक्तम्। यत्र ऐक्ये बाधकं नास्ति तत्र ते भिद्यन्ते। अपि च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावो यदि प्रामाणिकः तर्हि तादृशस्य एकस्यैवाभावस्य प्रतियोगिताः सर्वैः समानाधिकरणसम्बन्धैः सर्वैः

न च—एवमेक एव जगतीतले भवत्वभावः, स एव तत्तदवच्छेदकदेशकालादिभेदेन तत्तद्व्यवहारभेदं जनयिष्यतीति किमधिककल्पनयेति—वाच्यम्; उपपद्यते चेदस्तु। प्रकृते तु न बाधकं किंचित्। अत एव वैशेषिकाणां स्वाभ्युपगतकालपदार्थस्यैव सर्वव्यवहारहेतुत्वोपपत्तौ न पदार्थान्तरसिद्धिरित्यद्वैतवादिनो वदन्ति। तदेवं 'अहमज्ञ' इति ज्ञानस्याभावज्ञानसामग्री विलक्षणसामग्रीजन्यत्वादभावविलक्षणविषयत्वं सिद्धम् ॥ ३३॥

---

व्यधिकरणसम्बन्धैश्च अवच्छिद्यन्ताम्। अवच्छेदकसम्बन्धभेदात् अभावो न भिद्यते इति भावः। एक एव गगनाभावः सर्वविधसम्बन्धावच्छिन्नप्रतियोगिताकः स्वीकर्तुं शक्यते; एवं सर्वविधव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽपि स्वीकर्तुं शक्यते। अतः सर्वे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाः एक एव गगनात्यन्ताभावो भवितुमर्हन्ति। अतः प्रतियोगितावच्छेदकभेदादभावा न भिद्यन्ते इति सिद्धम्। एकेनैव गगनात्यन्ताभावेन उपपत्तौ अनेके व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावा न कल्प्यन्ते, कल्पनालाघवात्; अन्यथा कल्पनागौरवप्रसङ्गादिति भावः ॥३२॥

३३—प्रदर्शितरीत्या अभावानाम् एकत्वे जगति एक एव अभावोऽस्तु इति प्रतियोगितावच्छेदकभेदेनाभावभेदाङ्गीकर्तॄणां मतमाशंक्य इष्टापत्त्या परिहरति सिद्धान्ती—न चैवं एक एव जगतीतले भवत्वभावः स एव तत्तदवच्छेदकदेशकालादिभेदेन तत्तद्व्यवहारभेदं जनयिष्यतीति किमधिककल्पनयेति वाच्यम्; उपपद्यते चेदस्तु प्रकृते तु न बाधकं किञ्चित्। अत एव वैशेषिकाणां स्वाभ्युपगतकालपदार्थस्यैव सर्वव्यवहारहेतुत्वोपपत्तौ न पदार्थान्तरसिद्धिरित्यद्वैतवादिनो वदन्ति। तदेवं अहमज्ञ इति ज्ञानस्य अभावज्ञानसामग्रीविलक्षणसामग्रीजन्यत्वात् अभावविलक्षणविषयत्वंसिद्धम्। प्रदर्शितरीत्या अभावभेदखण्डनमसहिष्णुः पूर्वपक्षी अनिष्टमापादयन्नाह—एवं 'रीत्या' अभावभेदखण्डने जगतीतले एक एव अभावोऽस्तु, किमधिककल्पनया; एक एव अभावः तत्तद्देशकालाद्यवच्छेदकभेदेन अभावभेदव्यवहारं जनयिष्यति; तथा च अतिलघ्वी कल्पना स्यात्। इष्टापत्त्या परिहरन्नाह सिद्धान्ती—एकनैवाभावेन यदि अभावभेदव्यवहाराः सर्वे उप-

पद्यन्ते तर्हि एक एव अभावोऽस्तु किन्तु; प्रतियोगितावच्छेदकभेदात् अभावो न भिद्यते इति स्थितम्; तत्र न बाधकं किञ्चिदपीति अवृत्तिगगनादीनामभावा अपि न भिद्यन्ते तत्रापि बाधकाभावात्। लाघवकल्पनया न केवलं अभावा एव न भिद्यन्ते, किन्तु भावा अपि इत्याह—अत एव वैशेषिकाणामिति। वैशेषिकैः सर्वाधारः कालपदार्थोऽङ्गीक्रियते, तस्यैव कालस्य चिद्रूपत्वाङ्गीकारे एकेनैव चिद्रूपकालपदार्थेन सर्वो व्यवहार उपपद्यते। कालातिरिक्तपदार्थस्वीकारे आवश्यकतैव न स्यात्। कालातिरिक्ताः सर्वे चिद्रूपकालेनैव भास्यन्ते, चिद्भास्यम्, वस्तुमात्रमेव मिथ्या यथा शुक्तिरजतम्। अतो वैशेषिकमतसिद्धस्य कालस्य चिद्रूपताङ्गीकारे कालातिरिक्ताः पदार्थाः नाङ्गीकार्याः स्युः। एवं च अतिलाघवं स्यात् इत्यत्र वक्तव्यमेव नास्तीति। एवञ्च अहमज्ञः इति साक्षिप्रत्यक्षम् अभावप्रत्यक्षसामग्रीतो विलक्षणसामग्रीजन्यम् इत्यवश्यं स्वीकार्यम्; अभावप्रत्यक्षसामग्रीविलक्षणसामग्रीजन्यस्य अहमज्ञ इति साक्षिप्रत्यक्षस्य विषयोऽपि अभावविलक्षणः। अतः अहमज्ञ इति साक्षिप्रत्यक्षम् अभावविलक्षणाज्ञाने मानमिति सिद्धम्। अत्रेदमवधेयम्—सिद्धिकृता सर्वेषु प्रकरणेषु न्यायामृतकृदुक्तिं निरस्य अद्वैतसिद्धान्तस्य निर्दोषत्वं प्रदर्शितम्। किन्तु कुत्रचित् न्यायमृताकृता अनुद्भावितमपि पूर्वपक्षमुपन्यस्य तस्य निरसनं कृतम्; यथा प्रागभावसामान्याभावयोर्मण्डनं खण्डनं च इतः प्रागेव महताडम्बरेण कृतम्। प्रागभावसामान्याभावयोर्मण्डनं न न्यायामृतग्रन्थे दृश्यते। अतो वैशेषिकादितन्त्रेभ्यः पूर्वपक्षं संगृह्य अद्वैतसिद्धौ तत्खण्डनं प्रदर्शितम्। एवमन्यत्रापि दृश्यते। अतो ग्रन्थसामाप्तौ सिद्धिकृता यदुक्तम्—

"गुरूणां महात्म्यान्निजविविधविद्यापरिचयात्,  
श्रुतेर्जन्मे सम्यङ्मननपरिनिष्पन्नमभवत्।  
परब्रह्मानन्दस्फुरणमखिलानर्थशमनम्,  
तदेतस्मिन् ग्रन्थे निखिलमतियत्नेन निहितम्॥"

विविधविद्यानुशीलनेन यद्यत्तत्त्वं मया अधिगतं तत् अस्मिन्ग्रन्थे अतियत्नेन सन्निवेशितम्॥३२॥

अज्ञानवादे अज्ञाने साक्षिप्रत्यक्षप्रदर्शने अहमज्ञ इति  
साक्षिप्रत्यक्षविवरणं समाप्तम्।

## एवं 'त्वदुक्तमर्थं न जानामी'ति प्रत्यक्षस्यापि ।

### भावरूपाज्ञानसाधकं प्रत्यक्षम् ।

३४—यथा अहमज्ञः इति साक्षिप्रत्यक्षं भावरूपाज्ञानसाधकमेवं त्वदुक्तमर्थं न जानामीति द्वितीयं साक्षिप्रत्यक्षमपि भावरूपाज्ञानसाधकम् इत्याह मूलकारः—**एवं त्वदुक्तमर्थं न जानामीति प्रत्यक्षस्यापि ।** उक्तं च विवरणे—इह च त्वदुक्तमर्थं संख्यां वा शास्त्रार्थं वा न जानामीति विषयव्यावृत्तमज्ञानमनुभूय तच्छ्रवणादौ प्रवर्तते । [विवरणम् , पृ०, १२, काशीविजयनगरसंस्करणम्] । त्वदुक्तमर्थं न जानामीति साक्षिप्रत्यक्षस्यापि अभावविलक्षणाज्ञानसाधकत्वं वर्तते । अत एव मूले प्रत्यक्षस्यापि इत्यनेन षष्ठ्यन्ततया साक्षिप्रत्यक्षस्य निर्देशः । अभावविलक्षणाज्ञानसाधकत्वमिति शेषः । विवरणोक्तं साक्षिप्रत्यक्षमेव अत्र भावरूपाज्ञानसाधकतया मूले उक्तम् । विवरणवाक्यस्यायमभिप्रायः—विषयविशेषितमज्ञानमनुभूय एव अज्ञाननिवृत्तये लोकः प्रवर्तते । अज्ञाननिवृत्तिश्च ज्ञानादेव इति ज्ञानसम्पादनायैव यतते । विषयविशेषिताज्ञानानुभवे कोऽपि विषयविषयकज्ञानसम्पादनाय न प्रवर्तेत । विषयज्ञानोत्पत्तेः प्राक् तस्मिन् विषये अज्ञानं सर्वानुभवसिद्धमेव । [बौद्धजैन] मीमांसकादयो दार्शनिकाः अनधिगतविषयकज्ञानमेव प्रमेति वदन्ति । अनधिगतविषयस्याधिगतये प्रामाणिकाः प्रमाणान्वेषणं कुर्वन्ति । अयं विषयो ममानधिगत इति ज्ञात्वैव प्रामाणिकाः तस्मिन् विषये ज्ञानसम्पादनाय प्रवर्तन्ते । विषयविशेषितमज्ञानं साक्षिवेद्यम् । साक्षिणा अज्ञाने गृहीते अज्ञानव्यावर्तकविषयोऽपि साक्षिणैव गृह्यते । अज्ञानव्यावर्तकविषयोऽपि अज्ञातत्वेनैव साक्षिणा गृह्यते । एतत् साक्षिसिद्धमज्ञानं यदि ज्ञानाभावरूपं स्यात्तदा विषयविशेषितज्ञानस्याभावः साक्षिसिद्ध इत्येव वक्तव्यम् । पूर्वपक्षिणो माध्वा एवमेवाङ्गीकुर्वन्ति, किंतु विषयविशेषितज्ञानस्याभावः साक्षिणा ग्रहीतुं न शक्यते इत्येवाद्वैतवेदान्तसिद्धान्तः । अभावप्रतियोगिनो ज्ञानाभावे अभावज्ञानमेव न भवितुमर्हति । अस्मिन् ज्ञानाभावे विषयविशेषितज्ञानं प्रतियोगि । विषयविशेषितज्ञानं यदि ज्ञातं स्यात् तर्हि तद्विषयोऽपि ज्ञातः स्यात् । विषये ज्ञाते ज्ञानाभावः कथं तिष्ठेत् । विषयस्य अज्ञानमेव यदि न स्यात्, कस्य निवृत्तये प्रामाणिकाः प्रमाणान्वेषणं कुर्युः । अतो विषयविशेषितमज्ञानं ज्ञानाभावविलक्षणमित्येवाङ्गीकार्यम् ।

अतस्त्वदुक्तमर्थं न जानामीति साक्षिप्रत्यक्षसिद्धं भावरूपमज्ञानम् । तच्चाज्ञानं ज्ञानाभावविलक्षणं साक्षिसिद्धम् । एतदनङ्गीकारे प्रामाणिकानां प्रमाणसम्पादनप्रयासो व्यर्थ एव स्यात् । एतदेव स्पष्टमुक्तं सुरेश्वरवार्तिके—

सर्वतीर्थदृशां सिद्धिः स्वाभिप्रेतस्य वस्तुनः ।
यदभ्युपगमादेव तत्सिद्धिर्वार्यते कुतः ॥

[बृ० भाष्यवार्तिकम्, ४।३।१५६ श्लो०] अज्ञानव्यावर्तकविषयः साक्षिणा अज्ञातत्वरूपेणैव सिध्यति । अज्ञातत्वरूपेण सिद्धस्य वस्तुनः ज्ञातत्वसम्पादनायैव प्रामाणिकाः प्रमाणसन्धाने प्रवर्तन्ते । अज्ञानव्यावर्तकविषयो यदि प्रमाणेन सिद्धः स्यात् तदा स विषयो ज्ञातत्वेनैव सिद्धः स्यात् । प्रमाणप्रवृत्तेः प्राक् विषयस्य ज्ञातत्वरूपेण सिद्धौ प्रमाणसम्पादनं व्यर्थमेव । केवलं साक्षिणैव विषयोऽज्ञातत्वरूपेण सिध्यति । अज्ञातत्वरूपेण विषयसिद्धिः न प्रमाणाद् भवितुमर्हति । एतच्च स्पष्टमुक्तं विवरणे—सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एव । [विवरणम्, पृ०, १३, काशी विजयनगर सं०] यद्यत्र कश्चिदेवं मन्वीत—'त्वदुक्तमर्थं न जानामी'ति प्रतीतेर्विषयस्तु त्वदुक्तार्थविषयकज्ञानस्य अभावो न, किन्तु त्वदुक्तार्थगतसंख्यामहं न जानामि । त्वदुक्तोऽर्थः कतिसंख्यकः इति न जानामि । अर्थगतसंख्याविषयकज्ञानाभाव एव त्वदुक्तमर्थं न जानामीति प्रतीतेर्विषयः । तन्न, अर्थ एवाज्ञातत्वेन प्रतीयते, नत्वर्थगतसंख्या । अर्थस्तु ज्ञातः, तद्गतसंख्या तु न ज्ञाता इति न प्रतीयते । उक्तप्रतीतेरेवं विषयकल्पनेऽपि त्वदुक्तसंख्यां न जानामीति प्रतीतेः का गतिः ? संख्याविषयकज्ञानाभावस्तु वक्तुं न शक्यते, संख्यायाः उल्लिख्यमानत्वात् । अतोऽत्र संख्यागतसंख्यां न जानामीति वक्तव्यम् । तच्च न संभवति, संख्यायाः गुणत्वात्, गुणे गुणान्तराभावात् । अतस्त्वदुक्तार्थगतसंख्यां न जानामीति' प्रतीतेरनिर्वाह एव । यदि केनचिद् एवमुच्येत त्वदुक्तमर्थं न जानामीति प्रतीतेर्विषयः त्वदुक्तार्थविषयकप्रत्यक्षज्ञानस्याभावः । त्वदुक्तार्थविषयकपरोक्षज्ञानं मम वर्तते, प्रत्यक्षज्ञानं तु मे नास्ति, अतः प्रत्यक्षज्ञानाभाव एव त्वदुक्तमर्थं न जानामीति प्रतीतेर्विषयः । अतोऽभावविलक्षणमज्ञानं न सेद्धुमर्हति ।

ननु—साक्षात्त्वदुक्तार्थविषयं प्रमाणज्ञानं मयि नास्तीत्येतद्विषयकमुदाहृतज्ञानम्, तच्च न साक्षादर्थविषयम्; प्रमाणज्ञानावच्छेदकतयार्थस्य भानात्, अतो न व्याघात इति—चेत् ।

---

अत्रेदं वक्तव्यं—त्वदुक्तार्थविषयकप्रत्यक्षज्ञानाभावस्य प्रत्यक्षे वक्तव्ये प्रतियोगिज्ञानमपेक्षितम् । अतस्त्वदुक्तार्थविषयकप्रत्यक्षज्ञानस्य ज्ञानं वक्तव्यम् । प्रत्यक्षज्ञानं यदि ज्ञातं स्यात्तर्हि प्रत्यक्षज्ञानविषयोऽपि ज्ञातः स्यात् । तथा च ज्ञानाभावोऽसिद्ध एव । किं च, यस्य विषयस्य प्रत्यक्षज्ञानमेवासिद्धम् तत्र का गतिः ? यथा त्वदुक्तं धर्मं न जानामि, त्वदुक्तमधर्मं न जानामीत्यादिप्रतीतेः त्वदुक्तधर्माधर्मविषयकप्रत्यक्षज्ञानाभाव एव विषयो वक्तव्यः । स च न संभवति । धर्माधर्मयोरतीन्द्रियत्वात् । अतीन्द्रियवस्तुविषयकप्रत्यक्षज्ञानमलीकमेव । अतोऽलीकप्रतियोगिकाभावज्ञानमेव न भवितुमर्हति । यदि केनचिदुच्येत—त्वदुक्तमर्थं न जानामीति वक्तुः नायमभिप्रायः—यद् त्वदुक्तार्थविषयकज्ञानमेव मम नास्ति । किन्तु त्वदुक्तार्थं जानन्नपि अन्यस्य परीक्षणार्थं जानन्नेव न जानामीति ब्रवीति । अत्र वक्तव्यम्—ब्रह्मविषयकमज्ञानमनुभूय एव शिष्यः गुरुशुश्रूषादिपूर्वकगुरुवाक्यश्रवणे प्रवर्तते । शिष्यः न कथमपि गुरुं प्रतारयितुं जानन्नेव न जानामीति वक्तुमर्हति । नापि परप्रतारणाय न कोऽपि गुरुशुश्रूषादिक्लेशं दीर्घकालं ब्रह्मचर्यं वा अङ्गीकर्तुमर्हति । नह्येतावतो दुःखराशेः परप्रतारणसुखं गरीयः । अतो परप्रतारणाय जानन्नेव न जानामीति यदि ब्रूयात् तदा तस्य गुरुशुश्रूषादिपूर्वकगुरुवाक्यश्रवणे अप्रवृत्तिरेव स्यात् । उक्तं च कुसुमाञ्जलावुदयनेन—विप्रलम्भोऽपि नेदृशः [कुसुमाञ्जलिः, १।७] । एतत्सर्वं प्रतिसन्धायैव अद्वैतवेदान्तिनः ज्ञानाभावविलक्षणमज्ञानं स्वीकुर्वन्ति । प्रपञ्चितं चैतत् तत्त्वदीपने [तत्त्वदीपनम्, पृ०, ९८ कलिकातासंस्कृतसिरीज] । साक्षात् त्वदुक्तार्थविषयकज्ञानाभावेऽपि परम्परया त्वदुक्तार्थविषयकज्ञानसंभवात् परम्परया त्वदुक्तमर्थं जानतोऽपि साक्षात् त्वदुक्तार्थज्ञानाभावविषयकं त्वदुक्तमर्थं न जानामीति प्रत्यक्षं संभवति, अतो न व्याघातः इति पूर्वपक्षी शङ्कते—ननु साक्षात्त्वदुक्तार्थविषयं प्रमाणज्ञानं मयि नास्तीत्येतद्विषयकम् उदाहृतज्ञानं तच्च न साक्षादर्थविषयं प्रमाणज्ञानावच्छेदकतया

न, साक्षात्त्वदुक्तार्थमवेत्य हि तदभावो ग्राह्यः। तज्ज्ञानं च न साक्षिणा; स्वस्मिंस्तादृक्प्रमाणज्ञानाभावात्। अन्यनिष्ठं तु शब्दादिना ग्राह्यम्। शब्दादिश्च त्वदुक्तार्थं बोधयन्नेव तद्विषयत्वं ज्ञाने बोधयेत्। तथा च प्रथमतस्त्वदुक्तार्थविषयकं साक्षादेव ज्ञानमागतमिति तन्निषेधे न कुतो व्याघातः? ॥३४॥

---

अर्थस्य भानात् अतो न व्याघात इति चेत्। त्वदुक्तार्थं न जानामीति प्रतीतेर्विषयस्तु साक्षात् त्वदुक्तार्थविषयकस्य प्रमाज्ञानस्य अभावः। साक्षात् त्वदुक्तार्थविषयकं प्रमाज्ञानं मयि नास्तीत्येतद्विषयकं उदाहृतं प्रत्यक्षं साक्षाद् त्वदुक्तार्थविषयकप्रमाज्ञानस्य अभाव एव प्रदर्शितप्रत्यक्षस्य विषयः न तु भावरूपमज्ञानम्। ज्ञानाभावप्रत्यक्षे अभावप्रतियोगिनो ज्ञानम् अपेक्षितं तच्च प्रकृते प्रतियोगिज्ञानस्य ज्ञानम्, द्वितीयं ज्ञानं स्वविषयप्रथमज्ञानद्वारा त्वदुक्तार्थविषयकमपि न साक्षात् त्वदुक्तार्थविषयकं किन्तु परम्परया। यथा अनुव्यवसायज्ञानस्य साक्षात् विषयो व्यवसायज्ञानम्; व्यवसायज्ञानविषयोऽपि व्यवसायज्ञानद्वारा अनुव्यवसायविषयो भवति, न तु साक्षात् व्यवसायविषयो अनुव्यवसायविषयो भवति। व्यवसायविषयम् अनुव्यवसायः साक्षान्न गृह्णाति किन्तु परम्परया, एवमेव त्वादुक्तार्थविषयकप्रमाज्ञानज्ञानं न साक्षात् त्वदुक्तार्थविषयकम्। त्वदुक्तार्थस्य साक्षाज्ज्ञानं मयि नास्ति किन्तु त्वदुक्तार्थविषयकज्ञानस्य ज्ञानं तु मयि वर्तत एव। ज्ञानविषयीभूतज्ञानस्य व्यावर्तकतया विषये भासमानेऽपि ज्ञानज्ञानस्य साक्षात् व्यावर्तकतया विषयो न भासते। अतः परम्परया त्वदुक्तार्थविषयज्ञानसत्त्वेऽपि साक्षात् त्वदुक्तार्थविषयज्ञानाभावात् न ज्ञानाभावप्रत्यक्षे व्याघातः। त्वदुक्तार्थविषयस्य प्रमाज्ञानावच्छेदकतया प्रमाज्ञानस्य साक्षात् विषयत्वेऽपि प्रमाज्ञानविषयकज्ञानेऽर्थस्य साक्षाद् विषयत्वं नास्तीति न व्याघातः। साक्षात् त्वदुक्तार्थविषयकप्रमाज्ञानाभावे साक्षात् कर्तव्ये अभावप्रतियोगिज्ञानस्यापि ज्ञानमपेक्षितम्, प्रतियोगिज्ञानं च साक्षात् त्वदुक्तार्थविषयकम्। विषयविशेषितज्ञाने गृह्यमाणे विशेषणीभूतविषयोऽपि साक्षात् ग्रहीतव्यः; विशेषणाज्ञाने विशेषणविशेषितस्य ग्रहणासम्भवात्, अतो व्याघातः स्यादेव इत्याह सिद्धान्ती—न, 'साक्षात् त्वदुक्तार्थमवेत्य हि तदभावो ग्राह्यः तज्ज्ञानञ्च 'न साक्षिणा स्वस्मिन्

अत एव —विशेषस्य स्वरूपतो ज्ञानेऽपि विशेषप्रकारकज्ञानाभावो न व्याहत—इत्यपास्तम् ॥ ३५॥

---

तादृक्प्रमाणज्ञानाभावात्। अन्यनिष्ठं तु शब्दादिना ग्राह्यं शब्दादिश्च त्वदुक्तार्थं बोधयन्नेव तद्विषयं ज्ञानं बोधयेत्। तथा च प्रथमतस्त्वदुक्तार्थविषयकं साक्षादेव ज्ञानमागतमिति तन्निषेधे न कुतो व्याघातः। साक्षात्त्वदुक्तार्थविषयकं प्रमाज्ञानमवेत्यैव तादृक्प्रमाज्ञानाभावो ग्राह्यः; तादृक्प्रमायाः साक्षिणा ग्रहणं न संभवति, तादृक्प्रमायाः स्वस्मिन्नभावात्। अन्यनिष्ठं तादृक्प्रमाज्ञानं शब्दादिप्रमाणेन ग्रहीतव्यम्, तादृक्प्रमाज्ञानं गृह्णत् शब्दादिप्रमाणं प्रमाविशेषणं अर्थमपि गृह्णीयात्, विशेषणमगृहीत्वा विशिष्टं ग्रहीतुं न शक्नुयात्। अतः शब्दादिप्रमाणं त्वदुक्तार्थं बोधयदेव त्वदुक्तार्थविषयकत्वं ज्ञाने बोधयेत्। विशेषणाबोधने विशिष्टबोधनासंभवात्। अतः अभावप्रतियोगिप्रमां ग्रहीतुं प्रमायाः व्यावर्तकं विशेषणं त्वदुक्तार्थं विषयमपि गृह्णीयादेव। अतः प्रथमत एव त्वदुक्तार्थविषयकं साक्षाज्ज्ञानमागतम् इति कुतो न व्याघातः। व्यवसायेन विषयं साक्षाज्ज्ञात्वैव विषयविशेषितं व्यवसायं अनुव्यवसायो गृह्णाति, नान्यथा; प्रकृते च विषयस्य साक्षाद्ग्रहणे व्याघात एव ॥३४॥

३५—अत एव विशेषस्य स्वरूपतो ज्ञानेऽपि विशेषप्रकारकज्ञानाभावो न व्याहत इत्यपास्तम्। न्यायामृतकृता एवं वक्तुमभिलष्यते त्वदुक्तमर्थं न जानामीत्यस्य त्वदुक्तार्थगतविशेषं न जानामीति; त्वदुक्तार्थगतविशेषं स्वरूपतो जानामि, किन्तु विशेषप्रकारेण न जानामीति; विशेषस्य स्वरूपतो ज्ञानमेव प्रतियोगिज्ञानम्; ततो विशेषप्रकारकज्ञानाभावो गृह्यते इति। त्वदुक्तार्थग्रहणे त्वदुक्तार्थविषयकज्ञानाभावो न ग्रहीतुं शक्यते इति विचार्यैव न्यायामृतकृता एवमुक्तम्। स्वरूपतो विशेषविषयकज्ञानसत्त्वेऽपि विशेषप्रकारकज्ञानस्य असत्त्वं न व्याहन्यते इति तस्याभिप्रायः। अत्र ब्रूमः—यस्य पुरुषस्य यद्गतविशेषप्रकारकं ज्ञानमेवाप्रसिद्धं तेन पुरुषेण तद्गतविशेषप्रकारकज्ञानाभावोऽपि न ग्रहीतुं शक्यते। प्रतियोगिनोऽप्रसिद्धत्वादिति भावः। किं च, विशेषस्य स्वरूपतो ज्ञानं स्वीकुर्वन् एव विशेषप्रकारकं ज्ञानं न स्वीकरोति चेत्, तत्रेयं पृच्छा—अत्र विशेषपदस्यं कोऽर्थः? विशेषवस्तु किं व्यक्तिरूपम्? अथ वा व्याप्य-

करतलामलकज्ञाने स्वविषयव्यावर्तकधर्मविषयत्वं प्रसिद्धमिह निषिध्यत इत्यपि न; त्वदुक्तत्वस्यापि मदुक्ताद्व्यावर्तकत्वेन सामान्यतो व्यावर्तकधर्मविषयत्वस्य निषेद्धुमशक्यत्वात् ॥३६॥

---

जातिरूपम् ? किं वा व्यञ्जकासाधारणधर्मरूपम् ? नाद्यः, विशेषस्य अज्ञानं व्यक्तेरज्ञानं स्यात् तन्न संभवति सामान्यतो ज्ञानेऽपि सामान्याश्रयव्यक्तेरपि ज्ञानं वाच्यम् । व्यक्तेरज्ञाने न सामान्यस्य ज्ञानं संभवति, सामान्यतो ज्ञानाभावे विशेषतो अज्ञानस्य कः प्रसङ्गः । न द्वितीयः, सामान्यविशेषसमवायाभावाः निःसामान्याः तेषु परापरजातीनामभावात्, अतः एतेषां पदार्थानामज्ञानमप्रसिद्धमेव स्यात् । सामान्यं न जानामि विशेषं न जानामीति अनुभवः सर्वसिद्ध एव; अथ च अत्र पूर्वपक्षिणा सामान्यगतमपरसामान्यं न जानामि विशेषगतमपरसामान्यं न जानामीति वाच्यम्, तच्च न संभवति, सामान्याधिगतमपरसामान्यं सर्वथा अलीकमेव । नापि तृतीयः, व्यञ्जकासाधारणधर्मस्य विशेषत्वे व्याप्यत्वमेव विशेषत्वं वाच्यम् , यो यस्य विशेषः स तस्य व्याप्यः । व्याप्याज्ञानमेव व्यापकाज्ञानं वाच्यम्; तच्च प्रतीतिविरुद्धं वह्निं न जानामीति प्रतीतेः वह्निव्याप्यं धूमं न जानामीति विषयः स्यात् । व्याप्याज्ञानमेव व्यापकाज्ञानं स्यात् । यच्च न्यायामृतकृतोक्तम् त्वदुक्तार्थगतविशेषस्य स्वरूपतो ज्ञानेऽपि विशेषप्रकारकज्ञानस्य अभावोऽस्तीति; अत्र विशेषप्रकारकज्ञानाभावोऽपि प्रागभावः अत्यन्ताभावो वा वाच्यः । तत्र प्रागभावो न संभवति । यस्य पुरुषस्य यस्मिन् विषये कदापि विशेषप्रकारकं ज्ञानं नोत्पत्स्यति तस्य पुरुषस्य तस्मिन् विषये विशेषप्रकारकज्ञानप्रागभावो असम्भावित एव । यथा दक्षिणापथवासिनां उष्ट्रविषयकप्रत्यक्षज्ञानप्रागभावो नाङ्गीक्रियते । तेषामस्मिन् जन्मनि कदापि उष्ट्रसाक्षात्कारो न भविष्यति; अतः विशेषप्रकारकज्ञानप्रागभावो न त्वदुक्तार्थं न जानामीति प्रतीतेर्विषयः । एवमत्यन्ताभावोऽपि न भवितुमर्हति । यद्येवमुच्येत अन्यपुरुषस्य उष्ट्रविषयकप्रत्यक्षज्ञानं प्रसिद्धं तस्य प्रसिद्धप्रत्यक्षस्य अत्यन्ताभावो दक्षिणापथवासिपुरुषे उष्ट्रं न जानामीति प्रतीतेर्विषयः स्यात्; तदतितुच्छम्, देवदत्तादिनिष्ठप्रत्यक्षज्ञानस्य अत्यन्ताभावः सर्वज्ञेश्वरे सर्वज्ञयोगिष्वपि वर्तते । तेन ईश्वरादीनामपि न जानामीति प्रतीतेरापत्तिःस्यात् ॥३५॥

३६—अत्र किंचित् नूतनमाशङ्क्य समाधत्ते सिद्धान्ती—करतलामलकज्ञाने

ननु—अवच्छेदकतया विशेषज्ञाने जातेऽपि न व्याहृतिः। तथा हि—न हि विशेषज्ञानाभावस्त्वदुक्तार्थविषयकज्ञानाभावो वात्र

---

स्वविषयव्यावर्तकधर्मविषयत्वं प्रसिद्धम् इह निषिध्यते इत्यपि न, त्वदुक्तत्वस्यापि मदुक्ताद् व्यावर्तकत्वेन सामान्यतो व्यावर्तकधर्मविषयत्वस्य निषेद्धुमशक्यत्वात्। त्वदुक्तमर्थं न जानामीति प्रतीतेरुपपत्तये अन्या काचन रीतिरवलब्यते। त्वदुक्तमर्थं न जानामीति प्रतीतेर्विषयो नार्थज्ञानाभावः किन्तु करतलस्थितामलकादिविषयकज्ञाने असाधारणधर्मविषयकत्वं प्रसिद्धम्; तदेव त्वदुक्तमर्थं न जानामीति ज्ञाने निषिध्यते। मूले "करतलामलकज्ञाने स्वविषयव्यावर्तकधर्मविषयत्वं प्रसिद्धमि"त्युक्तम्, तस्यायमर्थः स्वपदस्य करतलामलकज्ञानम् अर्थः, तस्य विषयः करतलस्थितामलकम्; तत्र स्थिता या घटादिव्यावृत्तयः तासां व्यावृत्तीनामनुमापको धर्मः आमलकत्वम्, तदेव स्वविषयव्यावर्तको धर्मः, अयं धर्मः करतलस्थितामलकज्ञानविषयीभूतः; स एव त्वदुक्तार्थं न जानामीति ज्ञाने निषिध्यते। तन्न सामान्यतो व्यावर्तकधर्मविषयकत्वस्य त्वदुक्तार्थं न जानामीति ज्ञाने निषेद्धुमशक्यत्वात्। व्यावर्तकधर्मसामान्यस्य अभावो नास्मिन् ज्ञाने वर्तते। यत्किञ्चिद्व्यावर्तकधर्मविषयकत्वाभावो नास्मिन् ज्ञाने पूर्वपक्षिसम्मतः; किन्तु व्यावर्तकधर्मविषयकत्वस्य सामान्याभाव एव उक्तप्रतीतेर्विषय इति; किन्तु तन्न संगच्छते—त्वदुक्तमर्थं न जानामीति प्रतीतौ मदुक्ताद् व्यावर्तकत्वदुक्तत्वस्य विषयत्वात् व्यावर्तकधर्मविषयकत्वं त्वदुक्तमर्थं न जानामीति प्रतीतेर्वर्तते। तथा च व्यावर्तकधर्मविषयकत्वसामान्याभावो त्वदुक्तार्थं न जानामीति प्रतीतौ नास्ति। यत्किञ्चिद्विशेषसत्त्वे सामान्याभावासम्भवादिति। किञ्च स्वविषयव्यावर्तको धर्मः कश्चिदनुगतो न सम्भवति। स्वत्वस्यैव अननुगमात्, अननुगतस्वत्वघटितत्वेन धर्मस्यापि अननुगम एव, अननुगतधर्माणां ज्ञानासम्भवात् स्वविषयव्यावर्तकधर्मस्य अज्ञानदशायां स्वविषयव्यावर्तकधर्मविषयकत्वरूपप्रतियोग्येव निषेधस्य अप्रसिद्धम्, अप्रसिद्धप्रतियोगिकनिषेधस्यापि असम्भवादिति भावः ॥३६॥

३७—प्रदर्शितव्याघातदोषस्य समाधानाय नूतनं किञ्चित् शङ्कते पूर्वपक्षी। शङ्केयं न्यायामृतग्रन्थे न वर्तते, सिद्धान्तिनैव उद्भाव्य निरस्यते।.ननु अवच्छेदकतया विशेषज्ञाने जातेऽपि न व्याहतिः। तथा हि—नहि विशेष-

प्रतीयते, किन्तु त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानाभावः, तत्र च त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानत्वेन प्रतियोगिज्ञानेऽपि तादृक्प्रकारकतद्विशेष्यकज्ञानाभावसंभवः; अस्य ज्ञानस्य ज्ञाने विशेष्ये विशेषप्रकारकत्वप्रकारकत्वात्, यत्रापि त्वदुक्तविशेषं न जानामीत्यभिलापः, तत्राप्येवमेव व्याहत्यभाव कथंचिदुन्नेयः ॥३७॥

---

ज्ञानाभावः त्वदुक्तार्थविषयकज्ञानाभावो वाऽत्र प्रतीयते। किन्तु त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानाभावः। तत्र च त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानत्वेन प्रतियोगिनो ज्ञानस्य ज्ञानेऽपि तादृक्प्रकारकतद्विशेष्यकज्ञानाभावसम्भवः। अस्य ज्ञानस्य ज्ञाने विशेष्ये विशेषप्रकारकत्वप्रकारकत्वात्। यत्रापि त्वदुक्तविशेषं न जानामीत्यभिलापस्तत्राप्येवमेव व्याहत्यभावः कथञ्चिदुन्नेयः। त्वदुक्तमर्थं न जानामीति प्रत्यक्षे त्वदुक्तार्थविषयकज्ञानमभावे प्रतियोगितया भासते। त्वदुक्तोऽर्थः प्रतियोगिज्ञानांशे अवच्छेदकतया भासते। प्रतियोगितावच्छेदकत्वदुक्तार्थस्य अवच्छेदकतया विशेषज्ञाने जातेऽपि न व्याहतिः। तथा हि—त्वदुक्तार्थं न जानामीति प्रतीतौ विशेषविषयकज्ञानाभावो वा त्वदुक्तार्थविषयकज्ञानाभावो वा भासते। किन्तु त्वदुक्तार्थं न जानामीति ज्ञानाभावप्रत्यक्षे ज्ञानं प्रतियोगि। अतः प्रतियोगिनो ज्ञानमपेक्षितम्। प्रतियोगिज्ञानस्य ज्ञानं तु त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानत्वेन प्रतियोगिनो ज्ञानस्य ज्ञानं भवति। प्रतियोगिनो ज्ञानस्य ज्ञाने विषयीभूतं प्रतियोगिज्ञानं विशेष्यत्वेन भासते। तच्च त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानत्वेन प्रतियोगिज्ञानं विशेष्यतया प्रतियोगिज्ञानज्ञाने भासते। तादृग्ज्ञानज्ञानेऽपि तादृक्प्रकारकतद्विशेष्यकज्ञानाभावसम्भवः। तादृशज्ञानस्य वस्तुगत्या आत्मनि अभावेऽपि तस्य ज्ञानं सम्भवति। ज्ञानं नास्ति, किन्तु ज्ञानज्ञानं वर्तते। तथा च न विरोधः। यत्रापि त्वदुक्तविशेषं न जानामीत्यभिलापः तत्रापि एवमेव व्याहत्यभावः कथञ्चिदुन्नेयः। अयम्भावः—त्वदुक्तार्थं न जानामीति प्रत्यक्षे प्रत्यक्षप्रतीतिविषयाभावस्य प्रतियोगिज्ञानम्। तच्च विशेषप्रकारकं ज्ञानम्। विशेषप्रकारकज्ञानाभाव एव त्वदुक्तार्थं न जानामीति प्रतीतेर्विषयः। त्वदुक्तमर्थं न जानामीति प्रतीतेरुपपादनाय यदि ज्ञानाभाववादी

न च—यत्रोक्तप्रतियोग्यप्रसिद्धिः, तत्र कथमभावप्रतीतिरिति—वाच्यम्; समवेतवाच्यत्वं नास्तीत्यत्रेव विशेष्ये विशेषणाभावविषयत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावविषयत्वेन वोपपत्तेरिति—चेत् ॥३८॥

---

पूर्वपक्षी विशेषप्रकारकज्ञानपर्यन्तमनुधावेत्; यं विशेषं त्वदुक्तमर्थं न जानामीति प्रतीतिरेव न स्पृशति, तर्हि त्वदुक्तं विशेषं न जानामीति प्रतीतेर्विषयः पूर्वपक्षिमते को वा स्यात्? त्वदुक्तमर्थं न जानामीति प्रतीतिविषयाभावस्य प्रतियोगिज्ञानं यदि विशेषप्रकारकं स्यात्तदा विशेषं न जानामीति प्रतीतेर्विषयस्याभावस्य प्रतियोगिनः ज्ञानस्य को वा विषयः स्यात्? विशेषस्य विशेषान्तरधर्माभावात्। अतोऽस्मिन् स्थले विशेषविषयकज्ञानाभाव एव वक्तव्यः। तत्र च विशेषविषयकज्ञानस्य ज्ञानमपेक्षितम्, विशेषविषयकज्ञानज्ञानं विशेषविषयकमेव। अतः स्पष्टो व्याघातः। अतस्तत्समाधानाय पूर्वपक्षी कथयति—तत्रापि व्याहत्यभावः कथञ्चिदुन्नेयः। उन्नयनरीतिस्तु विशेषत्वरूपेण विशेषस्य ज्ञानमेव प्रतियोगिज्ञानम्। एतज्ज्ञानमेव अभावबुद्धेः कारणम्। अभावबुद्धेर्विषयस्तु शुद्धविशेषविषयकज्ञानाभावः। विशेषत्वरूपेण विशेषस्य ज्ञानात् शुद्धविशेषविषयकज्ञानाभावः स्यात्। स एव त्वदुक्तं विशेषं न जानामीति प्रतीतेर्विषयः। प्रतियोगिज्ञानं स्वप्रकारकज्ञानम्। एवं त्वदुक्तं विशेषं न जानामीति प्रतीतेर्विषयस्तु शुद्धविशेषविषयकज्ञानाभावः। स्वप्रकारकविशेषज्ञानद्वारा शुद्धविशेषविषयकज्ञानाभावः प्रतीयते इत्येव कथञ्चिदुक्तेस्तात्पर्यम् ॥३७॥

३८—अत्रेयं शंका—विशेषे विशेषधर्मान्तराभावात् तादृशविशेषस्य ज्ञानं विशेषत्वप्रकारकं न सम्भवति। विशेषत्वप्रकारकज्ञानसम्भवे प्रतियोगिज्ञानमप्रसिद्धम्। अतोऽप्रसिद्धप्रतियोगिकाभावस्य प्रतीतिरेव न संम्भवति। अस्या आपत्तेः समाधानाय आह पूर्वपक्षी—न च यत्र उक्तप्रतियोग्यप्रसिद्धिः, तत्र कथमभावप्रतीतिरिति वाच्यम्। समवेतवाच्यत्वम् नास्तीत्यत्र इव विशेष्ये विशेषणाभावविषयत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावविषयत्वेन वा उपपत्तेरिति चेत्। अप्रसिद्धप्रतियोगिकाभावप्रतीतौ रीतिद्वयं सम्भवति। विशेष्ये विशेषणाभावविषयत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिता-

काभावविषयत्वेन वा अप्रसिद्धप्रतियोगिकाभावप्रतीतेरुपपत्तिः । यत्र विशिष्टः प्रतीयोगी सर्वत्रैव अप्रसिद्धः, तत्र विशिष्टप्रतियोगिकाभावो विशेष्ये विशेषण-प्रतियोगिकाभाव एव । यथा समवेतवाच्यत्वं नास्ति इत्यभावस्तु अप्रसिद्धविशिष्ट-प्रतियोगिकः । शब्दशक्यत्वरूपे वाच्यत्वे कुत्रापि समवेतत्वं नास्ति । वाच्यत्वं धर्मः कुत्रापि समवायसम्बन्धेन न वर्तते । अतोऽत्र वाच्यत्वे समवेतत्वं नास्तीति विशेषणाभाव एव अप्रसिद्धविशिष्टप्रतियोगिकाभावः । एवमेव शशशृंगं नास्तीत्य-त्रापि शृंगे शशीयत्वाभाव एव उक्ताभावप्रतीतेर्विषयः । अतः प्रकृते विशेषे विशेषान्तराप्रसिद्धावपि अन्यत्र प्रसिद्धस्य विशेषस्य विशेषान्तरे अभाव एव विशेषं न जानामीति प्रतीतेर्विषयः भवेत् । अथ वा विशेषं न जानामीति प्रतीतेरभावो विषयः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव एव । विशेषे विशेषान्तराभावेऽपि व्यधि-करणधर्मावच्छिन्नप्रतियोगिताकविशेषाभाव एव त्वदुक्तं न जानामीति प्रतीते-र्विषयो भविष्यति । शशविषाणमप्रसिद्धमिति अप्रसिद्धप्रतियोगिकशशविषाणाभावः कथं प्रतीयेत । शशविषाणं नास्तीति प्रतीतेर्विषयाभावस्य प्रतियोगिकः ? इत्य-पेक्षायां विशेष्ये विशेषणाभावः एव, विषाणे शशीयत्वाभाव एव शशविषाणं नास्तीति प्रतीतेर्विषयः । अस्मिन् मते व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावो नाङ्गीक्रियते । ये तु समवेतवाच्यत्वं नास्तीत्याद्यप्रसिद्धप्रतियोगिकाभावप्रतीतेर्विषयस्तु विशेष्ये विशेषणाभावो न भवितुमर्हति अनुभवविरोधादिति वदन्ति तेषां मते व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव एवाङ्गीकार्य. । विशेष्ये विशेषणा-भावाङ्गीकारे विशिष्टप्रतियोगिताभावप्रतीतिरेव विरुध्यते । तथा हि—समवेतत्वेन वाच्यत्वं नास्तीत्यत्र वाच्यत्वाभाव एवानुभवस्य विषयः, न तु वाच्यत्वे समवेतत्वा-भावः । व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाङ्गीकारे तु नानुभवविरोधः । अत्रापि प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वाभावात् अनुभवविरोधस्तदवस्थ एव । सत्यम् ; अप्रसिद्धप्रतियोगिकाभावप्रतीतिर्दुर्घटैव । यौ द्वौ प्रकारौ प्रदर्शितौ तयोरुभयोरपि प्रकारयोरनुभवविरोधोऽपरिहार्य एव । अनन्यगत्या अप्रसिद्धप्रतियो-गिकाभावप्रतीतिस्थले प्रदर्शितयोः प्रकारयोः एकं प्रकारमाचार्या अभ्युपगच्छन्ति । अतो मूलग्रन्थेऽपि पूर्वपक्षे प्रदर्शितप्रकारद्वयमेव प्रदर्शितम् । चिन्तामणिकृतस्तु—व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावं नाङ्गीकुर्वन्ति । अतस्तदुक्तविशेषं न

न, अनुभवविरोधात्। विशेषज्ञानाभावस्य त्वदुक्तार्थज्ञानाभावस्य वाऽनभ्युपगमे तद्विषयज्ञानसत्त्वेन तद्व्यवहारापत्तेश्च। न चैवं दृश्यते। स्वतःप्रामाण्यमते तु तत्प्रकारकत्वे तद्विशेष्यकत्वे च गृह्यमाणे तद्वत्त्वग्रहणस्यावश्यकतया तदंशे तत्प्रकारकतद्विशेष्यकत्वस्य तादृशप्रतियोगिज्ञाने संभवात् स्पष्ट एव व्याघातः। भावरूपाज्ञानपक्षे तु सर्वस्यापि साक्षिवेद्यतया न व्याघात इत्युक्तम्। तदेवं 'त्वदुक्तमर्थं न जानामी'ति प्रत्यक्षभावरूपाज्ञानविषयमिति सिद्धम् ॥३९॥

---

जानामीति प्रतीतिं ज्ञानाभावेनोपपादयतो व्याघातः एवापरिहार्यः। पूर्वपक्षिमते विशेष्ये विशेषणाभावः, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताभावो वा त्वदुक्तं विशेषं न जानामीति प्रतीतेर्विषय इति तेषामभिप्रायः ॥३८॥

३९—अनुभवविरोधेन पूर्वपक्षिमतं निरस्यति सिद्धान्ती—न, अनुभवविरोधात्। विशेषज्ञानाभावस्य त्वदुक्तार्थज्ञानाभावस्य वा अनभ्युपगमे तद्विषयज्ञानसत्त्वेन तद्व्यवहारापत्तेश्च। न चैवं दृश्यते। स्वतः प्रामाण्यमते तु तत्प्रकारकत्वे तद्विशेष्यकत्वे च गृह्यमाणे तद्वत्त्वग्रहस्यावश्यकतया तदंशे तत्प्रकारकतद्विशेष्यकत्वस्य तादृशप्रतियोगिज्ञाने संभवात् स्पष्ट एव व्याघातः। भावरूपाज्ञानपक्षे तु सर्वस्यापि साक्षिवेद्यतया न व्याघात इत्युक्तम्। तदेवं त्वदुक्तमर्थं न जानामीति प्रत्यक्षं भावरूपाज्ञानविषयमिति सिद्धम्। व्याघातभयेन विशेषज्ञानाभावस्य, त्वदुक्तार्थज्ञानाभावस्य वा प्रत्यक्षविषयत्वमनभ्युपगम्य विशेष्ये विशेषणाभावः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावो वा त्वदुक्तं विशेषं न जानामि, त्वदुक्तार्थं न जानामीति प्रत्यक्षस्य विषय इत्यभ्युगमे अनुभवविरोधः स्यात्। अनुभवविरोधमेव दर्शयति—विशेषज्ञानाभावस्येति। त्वदुक्तं विशेषं न जानामीति प्रत्यक्षस्य विशेषज्ञानाभावविषयकत्वानभ्युपगमे, त्वदुक्तार्थं न जानामीति प्रत्यक्षस्य त्वदुक्तार्थज्ञानाभावविषयकत्वानभ्युपगमे विशेषज्ञानस्य, त्वदुक्तार्थज्ञानस्य च सत्त्वेन तज्ज्ञानजन्यतदर्थव्यवहारस्यापि आपत्तेः। त्वदुक्तार्थविषयज्ञानाभावसत्त्वे त्वदुक्तार्थविषयकज्ञानं स्थास्यति, त्वदुक्तार्थविषयकज्ञानसत्त्वे त्वदुक्तार्थविषयस्य व्यवहारोऽपि स्थास्यति। ततो यस्य

त्वदुक्तार्थं न जानामीति प्रत्यक्षं वर्तते तस्यैव त्वदुक्तार्थविषयकज्ञानं त्वदुक्तार्थव्यवहारश्च आपद्येते। अतः तादृशज्ञानव्यवहारयोश्च पूर्वपक्षिस्वीकार्य्यत्वापत्त्या अनुभवविरोधः स्यादेव। तथा च त्वदुक्तार्थविषयकज्ञानस्वीकारे अनुभवविरोधः। त्वदुक्तार्थविषयकज्ञानाभावस्वीकारे व्याघातोऽपरिहार्यः स्यात्। एवं त्वदुक्तविशेषं जानामीति प्रत्यक्षेऽपि बोध्यम्।

प्रमात्वस्य स्वतो ग्राह्यत्वमते पूर्वोत्तरमीमांसकमते इत्यर्थः। यस्मिन् ज्ञाने तत्प्रकारकत्वं तद्विशेष्यकत्वं गृह्यते तस्मिन् ज्ञाने तद्विशेष्ये तत्प्रकारकधर्मवत्त्वविषयकत्वमपि गृह्यते। साक्षिणा अनुव्यवसायेन अनुमित्या वा ज्ञाने गृह्यमाणे ज्ञानगतप्रमात्वमपि ज्ञानग्राहकेणैव गृह्यते अनुभवस्य याथार्थ्यमेव प्रमात्वं 'यथार्थानुभवः प्रमा' इति कुसुमाञ्जलौ उदयनवचनात् [कुसु०, ४।१] तच्च याथार्थ्यं तद्वति तत्प्रकारकत्वमेव। सप्रकारकं ज्ञानं किञ्चित्प्रकारकं किञ्चिद्विशेष्यकं भवति। अनुव्यवसायादिभिर्ज्ञाने गृह्यमाणे गृह्यमाणं ज्ञानं किञ्चिद्धर्मप्रकारकं प्रकारीभूतधर्मवद्विशेष्यकमेव गृह्यते। सप्रकारकज्ञानमात्रं वैशिष्ट्यविषयकं भवति। विशेष्ये प्रकारीभूतधर्मस्य वैशिष्ट्यविषयकं भवति। सप्रकारकं ज्ञानं यदा अनुव्यवसायादिना गृह्यते, तदा ग्राह्यज्ञानगतं सप्रकारकत्वसविशेष्यकत्वयोरिव विशेष्ये प्रकारीभूतधर्मवैशिष्ट्यविषयकत्वमपि यद् ग्राह्यज्ञाने वर्तते तदपि ज्ञानग्राहकेणैव साक्ष्यादिना गृह्यते इति स्वतःप्रमात्ववादिनां मतम्।

परतःप्रमात्ववादिनो नैयायिकवैशेषिकादयः पुनर्ज्ञाने गृह्यमाणेऽपि कदाचित्प्रमात्वसंशयस्य अनुभवसिद्धत्वात् इदं ज्ञानं प्रमा न वेति संशयस्य कदाचित् जायमानत्वात् ज्ञानग्राहकेण अनुव्यवसायादिना ग्राह्यज्ञानस्य किंचिद्धर्मप्रकारकत्वं किञ्चिद्विशेष्यकत्वं नियमेनैव गृह्यते। किंतु विशेष्ये प्रकारीभूतधर्मस्य वैशिष्ट्यविषयकत्वं यद् ग्राह्यज्ञाने वर्तते तन्न गृह्यते। ज्ञानग्राहके वैशिष्ट्यविषयकत्वस्यापि गृह्यमाणे ज्ञानस्य प्रमात्वमपि गृहीतं स्यादिति ज्ञाने कदापि प्रमात्वसंशयो न स्यात्। अतो ज्ञानग्राहकाणां वैशिष्ट्यविषयकत्वरूपप्रमात्वग्रहणे सामर्थ्यं नास्तीति मन्यन्ते।

प्रकृते पूर्वपक्षिणा यदुक्तं—त्वदुक्तमर्थं न जानामीति प्रत्यक्षे त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानस्य अभाव एव विषयः अतो न व्याघात इति किंतु

एवमेतावन्तं कालं न किंचिदवेदिषमिति परामर्शसिद्धं सौषुप्तं प्रत्यक्षमपि भावरूपाज्ञानविषयमेव । ननु— परामर्शः किमनुमानम् , किं

---

तत्रापि स्वतः प्रमात्ववादिमते व्याघातः स्पष्ट एव । प्रदर्शितज्ञानाभावप्रत्यक्षे अभावप्रतियोगिज्ञानं प्रतियोगिनो ज्ञानस्य ज्ञानम् अभावप्रत्यक्षे कारणम् , अभावप्रतियोगिज्ञानं तु त्वदुक्तार्थविशेष्यकं विशेषप्रकारकम् । एतस्य प्रतियोगिनो ज्ञानस्य यथा त्वदुक्तार्थविशेष्यकत्वं विशेषप्रकारकत्वं तथैव विशेष्ये प्रकारीभूतविशेषधर्मस्य वैशिष्ट्यविषयकत्वमपि वर्तते । अर्थात् त्वदुक्तार्थरूपविशेष्ये प्रकारीभूतविशेषरूपधर्मस्य वैशिष्ट्यविषयकत्वमपि वर्तते । एवं प्रतियोगिज्ञानं उत्तरज्ञानेन ग्रहीतव्यम् । तथा च विशेषधर्मविशिष्टत्वदुक्तार्थविशेष्यकज्ञानज्ञाने विद्यमाने त्वदुक्तार्थविशेष्यकविशेषप्रकारकज्ञानाभावो न स्थातुमर्हति, अवस्थाने व्याघातः स्यात् । एतदेव सिद्धिकृतोक्तं स्वतःप्रामाण्यमते स्पष्टं एव व्याघातः । अतः त्वदुक्तार्थं न जानामीति प्रत्यक्षं कदापि ज्ञानाभावविषयकं न भवितुमर्हति; ज्ञानाभावरूपाज्ञानप्रतीतौ अभ्युपगम्यमानायां व्याघातः स्यात् । उक्तप्रत्यक्षस्य भावरूपाज्ञानं विषय इत्यभ्युपगमे न कोऽपि दोषः । भावरूपाज्ञानं तद्व्यावर्तकविषयः, अज्ञाने प्रमाविरोधित्वं धर्मः, विरोधनिरूपकं प्रमाज्ञानं सर्वं साक्षिभास्यम् । अतो नास्मिन्पक्षे व्याघातसंभावनापि । अज्ञानव्यावर्तकविषयस्य प्रमाणवेद्यत्वाभ्युपगमे एव व्याघातः स्यात् । अज्ञानव्यावर्तकविषयस्य प्रमाणवेद्यत्वाभ्युपगमे अज्ञानमेव न तिष्ठेत् । प्रमाज्ञानम् अज्ञानं निवर्तयद् एव विषयं प्रकाशयति । साक्षी तु अज्ञानसाधकः; अतः साक्षिणा अज्ञानव्यावर्तके विषये अज्ञातत्वेन भासितेऽपि नाज्ञानस्य निवृत्तिः । अतः त्वदुक्तमर्थं न जानामीति साक्षिप्रत्यक्षं भावरूपाज्ञानसाधकमिति शिवम् ॥३९॥

अज्ञानवादे अज्ञाने साक्षिप्रत्यक्षप्रदर्शने त्वदुक्तमर्थं न जानामीति साक्षिप्रत्यक्षविवरणं समाप्तम् ॥

४०—एतत्प्रकरणारम्भे उक्तम् आचार्येण—एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषम् इति परामर्शसिद्धं सौषुप्तं प्रत्यक्षं च प्रमाणमिति तदेव इदानीमुपपादयन् आह—एवमेतावन्तं कालं न किञ्चिदवेदिषमिति परामर्शसिद्धं सौषुप्तं प्रत्यक्षमपि १ भावरूपाज्ञानविषयमेव । उक्तञ्च विवरणे—

वा स्मरणम्। आद्ये ज्ञानाभाव एवानुमीयताम्, किं भावरूपाज्ञानेन ? तथा हि—संप्रतिपन्नोदयास्तमयकालवद्विवादपदयोरप्युदयास्तमययोरन्तरालकालमनुमाय तत्कालमहं ज्ञानाभाववान्, अवस्थाविशेषवत्त्वात्, ज्ञानसामग्रीविरहवत्त्वात्, तुल्ययोगक्षेम आत्मादौ स्मर्यमाणेऽपि तद्वत्तया नियमेनास्मर्यमाणत्वाद्वेति प्रयोगसम्भवात् ॥४०॥

---

एवमुत्थितस्य ज्ञानाभावपरामर्शोऽपि ज्ञानविरोधिनो अज्ञानस्य अनुभूततया स्मर्यमाणस्य अनुपपत्त्यैव प्रमीयते नानुस्मर्यते इति [विवरणम्, पृ०, ३२४, मैट्रो पालिटन मुद्रणालयसंस्करणम्] सुप्तोत्थितपुरुषस्य एतादृशः परामर्शो जायते एतावन्तं कालं न किञ्चिदवेदिषमिति। सुप्तोत्थितपुरुषस्य एतादृशः परामर्शः सर्वानुभवसिद्ध एव। एतत्परामर्शकल्पनीयसौषुप्तिकानुभवः साक्षिप्रत्यक्षरूपः भावरूपाज्ञानविषयकः। भावरूपाज्ञानमेव सुषुप्तौ साक्षिभास्यं भवति। सुषुप्तिदशायां भावरूपाज्ञानम् अनुभूतमिति सुप्तोत्थितस्य एतावन्तं कालं न किञ्चिदवेदिषमिति परामर्शो जायते। सुषुप्तौ भावरूपाज्ञानस्य अननुभवे सुप्तोत्थितस्य प्रदर्शितः परामर्शो न स्यात्। अतः सुप्तोत्थितस्य परामर्शेन कल्प्यं सौषुप्ताज्ञानप्रत्यक्षं भावरूपाज्ञानसाधकम्।

कोऽयं परामर्शः ? येन सौषुप्तं भावरूपाज्ञानप्रत्यक्षं कल्प्यते; परामर्शः किमनुमानं स्मरणं वेति विकल्प्य दूषयति पूर्वपक्षी—ननु परामर्शः किमनुमानम् ? किं वा स्मरणम् ? आद्ये ज्ञानाभाव एव अनुमीयतां किं भावरूपाज्ञानेन। तथा हि सम्प्रतिपन्नोदयास्तमयकालवद् विवादपदयोरप्युदयास्तमययोरन्तरालकालमनुमाय तत्कालम् अहं ज्ञानाभाववान् अवस्थाविशेषवत्त्वात्, ज्ञानसामग्रीविरहवत्त्वात्, तुल्ययोगक्षेमे आत्मादौ स्मर्यमाणेऽपि तद्वत्तया नियमेन अस्मर्यमाणत्वाद्वेति प्रयोगसम्भवात्। सौषुप्तसाक्षिप्रत्यक्षकल्पकतया यः परामर्शः प्रदर्शितः, स किम् अनुमानम् ? स्मरणं वा ? सुप्तोत्थितपुरुषस्य परामर्शेन सुषुप्तिकालीनाज्ञानानुभवो अनुमीयते स्मर्यते वा इति विकल्पार्थः। आद्ये—सुषुप्तिकालीनाज्ञानानुभवे अनुमीयमाने ज्ञानाभावो अनुमीयतां किं भावरूपाज्ञानानुमानेन ? ज्ञानाभावस्य प्रसिद्धत्वात् स एवानुमीयतां किमप्रसिद्धभावरूपाज्ञानानुमानेन इति भावः।

परामर्शेन अर्थात् अनुमानेन सुषुप्तिकालीनज्ञानाभाव एव अनुमीयताम्, ततो न भावरूपाज्ञानं सिध्यति। सिद्धान्ते यथा भावरूपाज्ञानं साक्षिसिद्धम्। एवं पूर्वपक्षिमतेऽपि ज्ञानाभावः साक्षिसिद्धः। तथा च सुषुप्तौ ज्ञानाभावः साक्षिणैव गृह्यते। ज्ञानाभावो यदि साक्षिसिद्धः स्यात् तदा भावरूपाज्ञानं न सिध्येत् इति पूर्वपक्षिणो भावः। सुप्तोत्थितपुरुषस्य सुषुप्तिकालीनज्ञानाभावानुमानम् इत्थम्—सुषुप्तिकालीनोऽहम्, ज्ञानाभाववान्, अवस्थाविशेषवत्त्वात्; अवस्थाविशेषश्च सुषुप्त्यवस्थैव। तिस्रोऽवस्था भवन्ति—जाग्रदवस्था, स्वप्नावस्था, सुषुप्त्यवस्था चेति। जाग्रत्स्वप्नावस्थयोरभावकाले सुषुप्त्यवस्थैव तिष्ठति। सुषुप्तिकालीनज्ञानाभावानुमापको द्वितीयो हेतुः ज्ञानसामग्रीविरहः। सुषुप्तिकालीनोऽहं ज्ञानाभाववान्, ज्ञानसामग्रीविरहवत्त्वात्—हेत्वभावे फलाभावादिति; ज्ञानसामग्र्यभावात् ज्ञानाभावः सिध्यति। ज्ञानाभावानुमापकस्तृतीयो हेतुः ज्ञानवत्तया नियमेनास्मर्यमाणत्वम्। सुषुप्तिकालीनोऽहं ज्ञानाभाववान् ज्ञानवत्तया सर्वदा अस्मर्यमाणत्वात्। यद्वस्तु यद्विशिष्टरूपेण नियमेन अस्मर्यमाणं तत् तदभाववत्। सुषुप्तिकालीनात्मापि सर्वदा ज्ञानवत्तया अस्मर्यमाणः; अतः सुषुप्तिकालीनात्मा ज्ञानाभाववान्। तृतीयहेतुप्रदर्शनसमये मूलग्रन्थे 'तुल्ययोगक्षेमे आत्मादौ स्मर्यमाणेऽपि, इति यदुक्तं तन्न हेतुविशेषतया हेतुशरीरप्रविष्टम्। किन्तु तर्कप्रदर्शनाय एतदुक्तम्। तर्कश्चायम्—सुषुप्तिकाले यद्यहं ज्ञानवान् स्याम् तदा अहं ज्ञानवत्तया स्मर्यमाणः स्याम्। अतः तुल्ययोगक्षेमे इत्यंशः न हेतुशरीरप्रविष्टः, किन्तु तर्कप्रदर्शनार्थः। हेतुस्तु ज्ञानवत्तया नियमेन अस्मर्यमाणत्वमेव। एतावदेव हेतुशरीरम्। सुषुप्तिकालीने आत्मनि ज्ञानाभावानुमानाय पूर्वपक्षिणा त्रयो हेतवः उपन्यस्ताः। अवस्थाविशेषवत्त्वात्, ज्ञानसामग्रीविरहवत्त्वात्, ज्ञानवत्तया नियमेन अस्मर्यमाणत्वादिति। अत्र पूर्वपक्षिणा सुषुप्तिकालीनोऽहम् इति पक्षनिर्देशः कृतः, सुषुप्त्यधिकरणीभूतः कालः पक्षविशेषणम्। पक्षविशेषणस्य सिद्धये मूले पूर्वपक्षे सम्प्रतिपन्नोदयास्तमयेत्याद्युक्तम्। सूर्योदयास्तमययोरन्तरालकालः दिवाभागः सर्वानुभवसिद्धः। कदाचिद् कश्चिद् दिवाभागे एव सुप्तः पुनरुत्थाय सूर्योदयास्तमयमध्यवर्तिकालम् अनायासेनैव अनुमातुं शक्नुयात्। यतस्तस्य कालस्य बहुधा अनुभूतत्वात्। अतः उदयास्त-

द्वितीये तु नास्त्युपपत्तिः; संस्कारासंभवात्। विनश्यदेव हि ज्ञानं संस्कारं जनयति; विना व्यापारं व्यवहितकार्यंजननाक्षमत्वात्, अविनश्यता तु तेन स्वयमेव तत्कार्यस्य जनयितुं शक्यत्वात् किमिति संस्कारो जन्येत? न हि संस्कारोऽपि प्रत्यक्षः, येन कार्यान्यथानुपपत्ति-मन्तरेणापि अभ्युपेयते; सौषुप्तं चानाद्यज्ञानोपरक्तं साक्षिचैतन्यरूपं ज्ञानंस्वतो वा उपाधितो वा न विनश्यतीति संस्कारं कथं जनयेत? तदभावात् कथं स्मर्येत, अस्मर्यमाणं वा कथं प्रमाणत्वेनोदाह्रियेतेति — चेत्;

---

मथान्तरालकालानुमानम् इत्थं भवति—विवादगोचरौ उदयास्तमयौ अन्तरालकालवन्तौ उदयास्तमयत्वात् सम्प्रतिपन्नोदयास्तमयवत्। अनया रीत्या उदयास्तमययोरन्तरालकालमनुमायानुमानसिद्धकालेन विशेषित आत्माज्ञानाभावानु-माने पक्षत्वेन निर्दिश्यते, सुषुप्तिकालीनोऽहमिति। मूले पूर्वपक्षे सुषुप्त्यधिकरणी-भूतकालसिद्धये यदनुमानं प्रदर्शितं तेन सुषुप्त्यधिकरणीभूतः कालो दिवाभाग एव सिध्यति, न तु सुषुप्त्यधिकरणीभूतो रात्रिकालः। सुषुप्त्यधिकरणीभूतो रात्रिकाल एव प्रसिद्धः; प्रसिद्धयतिक्रमे इदमेव कारणम् उदयास्तमयान्तरालकालः सर्वानुभवसिद्धः। अतस्तदनुमानम् अनायाससाध्यम्। यदि सुषुप्त्यधिकरणीभूत-रात्रिकाल एव अभिप्रेयते, तदा इत्थं तदनुमानं विवादगोचरापन्नौ अस्तोदयौ अन्तरालकालवन्तौ अस्तोदयत्वात् सम्प्रतिपन्नास्तोदयवत्। तथा च सुषुप्ति-कालीनोऽहं ज्ञानाभाववान् अवस्थाविशेषवत्त्वात्, ज्ञानसामग्रीविरहवत्त्वात्, ज्ञानवत्त्वया नियमेन अस्मर्यमाणत्वदिति अनुमानत्रयम् पूर्वपक्षिणा प्रयुक्तम्॥४०॥

४१—परामर्शो यदि अनुमानं तदा ज्ञानाभावानुमानमेव स्यादित्युक्तम्, परामर्शो यदि स्मरणमभिप्रेतम्, तत्राह पूर्वपक्षी—द्वितीये तु नास्त्युपपत्तिः। संस्कारासम्भवात्। विनश्यदेव हि ज्ञानं संस्कारं जनयति। विना व्यापारं व्यवहितकार्यजननाक्षमत्वात्। अविनश्यता तु तेन स्वयमेव तत्कार्यस्य जनयितुं शक्यत्वात् किमिति संस्कारो जन्येत। न हि संस्कारः प्रत्यक्षः येन कार्यान्यथानुपपत्तिमन्तरेणापि अभ्यु-पेयते। सौषुप्तश्च अनाद्यज्ञानोपरक्तं साक्षिचैतन्यरूपं ज्ञानं स्वतो वा

न, न तावदनुमानं तत्र संभवति। हेतोः पक्षविशेषणस्य चाज्ञानात्। न हि ज्ञानाभावमन्तरेणावस्थायां विशेषो वक्तुं शक्यः।

---

उपाधितो वा न विनश्यतीति संस्कारं कथं जनयेत्। तदभावात् कथं स्मर्येत, अस्मर्यमाणं वा कथं प्रमाणत्वेन उदाह्रियेत इति चेत्। सुप्तोत्थितपुरुषस्य परामर्शो यदि स्मृतिस्तदा तथा न सौषुप्तं भावरूपाज्ञान-विषयकं साक्षिप्रत्यक्षं सिध्यति। नित्यस्य साक्षिप्रत्यक्षस्य संस्काराजनकत्वात्; संस्काराभावे च स्मरणासम्भवादित्याह पूर्वपक्षी—द्वितीये तु नास्त्युपपत्तिरिति। कुत उपपत्तिर्नास्तीत्याह संस्कारासम्भवात्। साक्षिप्रत्यक्षं नित्यम् अज्ञानोपहितं चैतन्यमेव साक्षीति सिद्धान्तिनो मतम्, तच्च नित्यमेव अज्ञानचैतन्ययोर्द्वयोरेवानादित्वात् अज्ञानचैतन्यतत्सम्बन्धानामनादित्वात्। विनश्यदेव हि ज्ञानमिति अनित्यं ज्ञानं संस्काररूपं फलमुत्पाद्य विनश्यति, ज्ञानस्य फलनाश्यत्वात्। विनश्यदनुभवो हि स्वजन्यसंस्कारद्वारा कालान्तरे स्मरणं जनयति। अनुभवेन स्मरणे जनयितव्ये संस्कारोऽनुभवव्यापारः। विना व्यापारम् अनुभवस्य व्यवहितस्मरणरूपकार्यस्य अजनकत्वात्। कार्याव्यवहितप्राक्काले व्यापार-व्यापारिणोरन्यतरस्यापि असत्त्वे अकारणत्वप्रसंगात्। अतः स्मरणाव्यवहित-प्राक्काले अतीतानुभवजन्यसंस्कारो व्यापारो वर्तते इत्यवश्यमङ्गीकार्यम्; अन्यथा अनुभवस्य स्मरणजनकत्वमेव न स्यात्। नित्यस्तु अनुभवः कालान्तरे स्वयमेव विद्यमानः विषयं प्रकाशयेत्, कालान्तरे विषयप्रकाशनाय न स्मरणापेक्षा, स्मरणानपेक्षायां तत्कारणतया संस्कारस्यापि नापेक्षा इति नित्योऽनुभवः संस्कारं न जनयति। संस्कारजनने अनुभवस्य नित्यत्वमेव न स्यात्, अनुभवस्य फलनाश्यत्वनियमात्। अत एव वैशेषिका ईश्वरज्ञानस्य नित्यस्य न संस्कार-जनकत्वमाहुः। एवमेव ईश्वरस्य स्मरणमपि अप्रसिद्धम्। एवञ्च सौषुप्तं साक्षिप्रत्यक्षम् अनाद्यज्ञानोपहितं चैतन्यं न स्वतो विनश्यति, चैतन्यस्य नित्यत्वात्। उपाधिरूपमपि अनाद्यज्ञानं ब्रह्मसाक्षात्कारैकनिवर्त्यं न सुषुप्तिकाले विनष्टुमर्हति। अतः कथं सौषुप्तं साक्षिप्रत्यक्षं संस्कारं जनयेत्। संस्काराभावे वा कथं स्मरणम्। स्मरणाभावे वा कथं तेन भावरूपाज्ञानस्य साक्षिप्रत्यक्षं सुषुप्तौ सिध्येदिति।

ज्ञानसामग्रीविरहश्च ज्ञानाभावानुमेयत्वेनान्योन्याश्रयग्रस्तः। न चेदानीन्तनेनेन्द्रियप्रसादेन पूर्वकालीनं तदुपरममनुमाय सामग्रीविरहानुमानम्; इन्द्रियप्रसादस्य सुखानुभवहेतुकस्य तदुपरमहेतुकत्वासिद्धेः। नियमेनास्मर्यमाणत्वं च यथाश्रुतं वा सुषुप्तिकालावच्छेदेनेति वा। आद्ये असिद्धिः। द्वितीये तूपेक्षणीयज्ञानाभावो न सिद्ध्येत्, तत्रैव व्यभिचारश्च।

---

सुप्तोत्थितस्य अनुमानात् सुषुप्तिकालीनज्ञानाभावोऽनुमीयते इति यदुक्तं पूर्वपक्षिणा तदनुमानासंम्भवादेव न संगच्छते इत्याह सिद्धान्ती—न तावदनुमानं सम्भवति हेतोः पक्षविशेषणस्य च अज्ञानात्। नहि ज्ञानाभावमन्तरेण अवस्थायां विशेषो वक्तुं शक्यः। ज्ञानसामग्रीविरहश्च ज्ञानाभावानुमेयत्वेन अन्योन्याश्रयग्रस्तः। न च इदानीन्तनेन इन्द्रियप्रसादेन पूर्वकालीनं तदुपरममनुमाय सामग्रीविरहानुमानम्। इन्द्रियप्रसादस्य सुखानुभवहेतुकस्य तदुपरमहेतुकत्वासिद्धेः। नियमेनास्मर्यमाणत्वं च यथाश्रुतं वा ? सुषुप्तिकालावच्छेदेनेति वा ? आद्ये असिद्धिः। द्वितीये तु उपेक्षणीयज्ञानाभावो न सिध्येत् तत्रैव व्यभिचारश्च। पूर्वपक्षिणा सुषुप्तिकालीनोऽहं ज्ञानाभाववान् अवस्थाविशेषवत्त्वात्, ज्ञानसामग्रीविरहवत्त्वात, ज्ञानवत्तया नियमेनास्मर्यमाणत्वात् इति अनुमानं सुषुप्तिकालीनज्ञानाभावसिद्धये प्रदर्शितम्, प्रदर्शितानुमानं न सम्भवतीत्याह सिद्धान्ती, हेतोरज्ञानात्—पक्षविशेषणस्य अज्ञानात् नेदमनुमानं सम्भवति। पूर्वपक्षिणा अवस्थाविशेषवत्त्वमेव प्रथमहेतुतया उक्तम्, सुषुप्तपुरुषस्य अवस्थाविशेषवत्त्वं ज्ञानाभावव्यतिरेकेण निरूपयितुमशक्यम्; ज्ञानाभाव एव सुषुप्तपुरुषस्य अवस्थाविशेषः नान्यः। ज्ञानाभावस्तु प्रकृतानुमाने साध्यमेव। साध्यानुमितेः प्राक् अस्य हेतोर्ज्ञानमेव न सम्भवति। हेतुज्ञानात् साध्यानुमितिः साध्यानुमितौ हेतोर्ज्ञानमिति परस्परसापेक्षतया हेतोर्ज्ञानमेव न सिध्येत्। तथा च कथमनुमितिः ? पक्षविशेषणमपि अनुमितेः प्राक् ज्ञातुं न शक्यते इत्याह पक्षविशेषणस्य च इति। यद्यपि अद्वैतसिद्धौ पक्षविशेषणं ज्ञातुं न शक्यते इत्येवोक्तम्, तथापि विशेषविवेचनं न कृतम्। विवेचनं तु अद्वैतदीपिकादौ कृतम्,

तदित्थम्—सुषुप्तिकालीनाहमर्थस्य पक्षत्वे सुषुप्तेर्निखिलज्ञानाभावरूपायाः पूर्वमसिद्धत्वात्। अनुमितेः पूर्वं पक्षविशेषणाज्ञानात् तद्विशिष्टपक्ष एवासिद्धः। सुषुप्त्यधिकरणकालसिद्धये यदनुमानं प्रदर्शितं तेन उदयास्तमयान्तरालकालसिद्धौ अपि तस्य सुषुप्त्यधिकरणत्वं न सिद्धम्। निखिलज्ञानाभावरूपा सुषुप्तिः; सुषुप्तिकालीनोऽहम् इत्यस्य निखिलज्ञानाभावकालीनोऽहम् इत्यर्थः। एवंरूपपक्षनिर्देशो न भवितुमर्हति निखिलज्ञानाभावस्यैव साध्यत्वात्, साध्यसिद्धेः प्राक् पक्षविशेषणज्ञानासम्भवात्। मूले पक्षविशेषणस्य अज्ञानादिति यदुक्तं तेन अनुमितेः प्राक् साध्यस्यापि अज्ञानं सूचितम्, साध्यस्यापि पक्षविशेषणत्वात्, निखिलज्ञानाभावरूपसाध्यस्य अनुमितेः प्राक् असिद्धौ व्याप्तिग्रहस्थलाभावात्; व्याप्तिग्रह एव न सम्भवति, तेन अनुमानासम्भव एव। पक्षविशेषणपदेन साध्यमपि सूचितं मूले, सुषुप्तिनिखिलज्ञानाभावयोरेकत्वादिति भावः। द्वितीयहेतुरपि असिद्ध एव इत्याह—**ज्ञानसामग्रीविरहश्चेति**। सुषुप्तौ ज्ञानसामग्रीविरहः ज्ञानाभावेनैव अनुमातुं शक्यते नान्यथा योग्यायोग्यपदार्थघटिताज्ञानसामग्री अनुमानेन विना न निरूपयितुं शक्यते अनुमानमपि ज्ञानाभावलिंगेनैव। तथा च सुदृढोऽन्योन्याश्रयः। सुषुप्तौ ज्ञानाभावानुमितौ तेनानुमितेन ज्ञानाभावेन ज्ञानसामग्रीविरहस्य अनुमितिः अनुमितेन ज्ञानसामग्रीविरहेण ज्ञानाभावानुमितिरिति। ज्ञप्तौ अन्योन्याश्रयदोषपरिहाराय पूर्वपक्षी शंकते—**न च. इदानीन्तनेन इन्द्रियप्रसादेनेति**। ज्ञानाभावानुमितेः प्रागपि प्रकारान्तरेण ज्ञानसामग्र्यभावः अनुमातुं शक्यते सुप्तोत्थितस्य इन्द्रियग्रामः प्रसीदति इति स्वानुभवसिद्धम्। सुप्तोत्थितस्य इदानीन्तनेन्द्रियप्रसादेन सुप्तस्य इन्द्रियग्रामलयोऽनुमीयते, पूर्वम् इन्द्रियाणां लयादेव सुप्तोत्थितस्य इन्द्रियग्रामः प्रसीदति। तेन इन्द्रियप्रसादकार्येण कारणम् इन्द्रियलयोऽनुमीयते। अनुमितेन इन्द्रियलयेन ज्ञानसामग्र्यभावोऽनुमीयते। अनुमितात् ज्ञानसामग्र्यभावात् ज्ञानाभावोऽनुमीयते तथा च क्व अन्योन्याश्रयः इति। दूषयति सिद्धान्ती—**इन्द्रियप्रसादस्य सुखानुभवहेतुकस्येति**। इन्द्रियप्रसादोऽपि नेन्द्रियोपरमहेतुकः किन्तु सुषुप्तौ साक्षिस्वरूपसुखानुभवहेतुकः उक्तञ्च विवरणे "सम्भवति च मुख्य एव स्वरूपानन्दानुभवः। अनावृतसाक्षिचैतन्यसुखांशस्य प्रकाशोपपत्तेः। [विवरणम्,

पृ०, ३२३ मे?ोपालिटनमुद्रणालयसंस्करणम् ] विवृतञ्च तत्त्वदीपने—अज्ञान-साधकतया साक्षिणः प्रकाशमानत्वात् तत्स्वरूपसुखानुभवो युक्त इति। इन्द्रियाणा-मतीन्द्रियत्वेन परमते तत्प्रसादोऽपि दुर्विज्ञेय इत्यपि प्रष्टव्यम्। सुखानुभवहेतु-कस्य इन्द्रियप्रसादस्य इन्द्रियलयहेतुकत्वासिद्धेः। यदि इन्द्रियोपरम एव इन्द्रिय-प्रसादस्य हेतुः स्यात् तथा समाध्युत्तरकाले मनसोऽव्यग्रताकाले इन्द्रियाणाम-नुपरमात् इन्द्रियप्रसादो न स्यादिति भावः। नियमेनास्मर्यमाणत्वरूपतृतीयहेतुरपि असंगत एव इत्याह—नियमेनास्मर्यमाणत्वं चेति। नियमेनास्मर्यमाणत्वं च एवं न सम्भवति यत् सर्वदैव आत्माज्ञानविशिष्टतया न स्मर्यते, ज्ञानविशिष्ट-तया आत्मनः स्मरणं सर्वानुभवसिद्धम्; अतः उक्तं मूले—आद्येऽसिद्धिः। सर्वदैव ज्ञानविशिष्टतया आत्मनोऽस्मरणमसिद्धम्। सुषुप्तिकालावच्छेदेन आत्मनः ज्ञान-विशिष्टतया नियमेनास्मर्यमाणत्वं हेतुर्व्यभिचारीत्याह—उपेक्षणीयज्ञानाभावो न सिध्येत् तत्रैव व्यभिचारश्चेति; आत्मन उपेक्षात्मकज्ञानेऽपि उपेक्षात्मकज्ञानवत्तया आत्मा कदापि न स्मर्यते। उपेक्षात्मकज्ञानस्य संस्काराजनकत्वात्; तथा च उपेक्षात्मकज्ञानवत्तया नियमेनास्मर्यमाणेऽपि आत्मनि उपेक्षात्मकज्ञानाभावो न सिध्येत्। उपेक्षात्मकं ज्ञानं न स्मरणयोग्यम्, अयोग्यस्य अस्मरणेन न अयोग्यस्या-भावः सिध्यति; स्मरणयोग्यस्य नियमेन अस्मरणादभावः सिध्यति न तु स्मरणायोग्यस्य तथा च उपेक्षात्मकज्ञानवत्त्वया नियमेन अस्मर्यमाणेऽपि आत्मनि उपेक्षात्मकज्ञानाभावः न सिध्यतीति अस्मर्यमाणोपेक्षाज्ञानस्य सत्त्वात् तत्रैवायं हेतुर्व्यभिचारीति भावः। किञ्च सुषुप्तिकालीनात्माऽपि भ्रान्त्या कदाचित् ज्ञानविशिष्टतया स्मर्यते इति नियमेनास्मर्यमाणत्वं हेतुरसिद्ध एव। नियमेन अस्मर्यमाणत्वहेतुना यदि ज्ञानाभावो नानुमीयेत—तर्हि प्रातरनुभूतचत्वरे इदानीं गजाभावज्ञानं कथं स्यादिति पूर्वपक्षी शंकते—न च तर्हि प्रातरनु-भूतचत्वरे गजज्ञानाभावज्ञानं कथमिति वाच्यम्। प्रातर्मया चत्वरं दृष्टं किन्तु तदा मम हस्तिज्ञानं नासीत्, तदापि यदि मम हस्तिज्ञानं आसीत् तदा इदानीं चत्वरवदेव गजज्ञानं स्मर्येत; न च स्मर्यते। अतो गजज्ञानं तदा मम नासीदिति गजज्ञानाभावः सिध्यति; अन्यथा न सिध्येत्। अतो योग्यास्मरणात् योग्यस्मर्यमाणस्याभावः सिध्यत्येव। यथा उपलभ्यभावात्

नच—तर्हि प्रातरनुभूतचत्वरे गजज्ञानाभावज्ञानं कथमिति—वाच्यम्; ज्ञानानुपलब्ध्यैवेत्यवेहि। अनुपलब्धिज्ञानं च भावरूपाज्ञानेन लिङ्गेन। तथा हि—पूर्वकालेऽहं, गजज्ञानाभाववान्, गजाज्ञानवत्त्वात्, यन्नैवं तन्नैवम्, यथा गजज्ञानवानहमिति, एवं सर्वत्राज्ञानस्य ज्ञानाभावव्याप्यत्वेन तदनुमापकत्वम्।

---

उपलभ्याभावः सिध्यति एवं स्मरणाभावादपि स्मर्यमाणाभावः सिध्यत्येव। अत एव वेदे कर्तुरस्मरणात् वेदकर्तुरभावः सिध्यतीति मीमांसकाः। साक्षिसिद्धेन भावरूपाज्ञानेन ज्ञानाभावानुमानान्नैवमित्याह सिद्धान्ती—ज्ञानानुपलब्ध्यैवेत्यवेहि। अनुपलब्धिज्ञानञ्च भावरूपाज्ञानेन लिंगेन। तथा हि—पूर्वकालेऽहं गजज्ञानाभाववान्, गजाज्ञानवत्त्वात् यन्नैवं तन्नैवं यथा गजज्ञानवानहमिति। एवं सर्वत्र अज्ञानस्य ज्ञानाभावव्याप्यत्वेन तदनुमापकत्वम्। नियमेन अस्मर्यमाणत्वेन हेतुना गजज्ञानाभावो नानुमीयते किन्तु ज्ञानानुपलब्ध्यैव ज्ञानाभावः सिध्यति। अनुपलब्धिरेवात्र अभावग्राहिका। अनुपलब्धिर्नाम उपलब्धेरभावः। उपलब्ध्यभावज्ञानात् उपलभ्यमानाभावः सिध्यति। योग्यानुपलब्धिरेवाभावग्राहिका। उपलब्ध्यभावरूपाया अनुपलब्धेर्ज्ञानं साक्षिसिद्धभावरूपाज्ञानात्। साक्षिसिद्धभावरूपाज्ञानेन ज्ञानाभावोऽनुमीयते। भावरूपाज्ञानं ज्ञानाभावव्याप्यम्। अयमभिप्रायः—भावरूपाज्ञानं साक्षिसिद्धमिति सिद्धान्तिनः। ज्ञानाभावो न प्रत्यक्षगम्यः, किन्तु षष्ठप्रमाणवेद्यः। अतोऽभावप्रतीतिः परोक्षा। अनुपलब्ध्या परोक्षज्ञानमेव भवति, अभावस्य परोक्षानुभवे अनुपलब्धिः प्रमाणम्। अनुपलब्धिः किं ज्ञाता करणम् उत अज्ञाता स्वरूपसती, आद्ये अनवस्था अनुपलब्धिरपि उपलब्ध्यभावः; तस्य ज्ञानाय अनुपलब्ध्यन्तरं स्वीकार्यम् एवं तस्य तस्यापीति अनवस्था। यदि अनुपलब्धिः स्वरूपसती अभावग्राहिका तदा अज्ञातकरणकत्वेन अभावप्रतीतेरपरोक्षत्वं स्यात्; तथा च अनुपलब्ध्या अभावप्रतीतिः परोक्षेति मीमांसकसिद्धान्तो भज्येत। अत्र अद्वैतवेदान्तिनः आहुः—ज्ञाता अनुपलब्धिरेवाभावग्राहिका; न च प्रदर्शिता अनवस्था, उपलब्धेरभावो हि अनुपलब्धिः, प्रतियोगिनी उपलब्धिरपि सविषयिकैव वाच्या, निर्विषया उपलब्धि-

नच सुषुप्तिकाले ज्ञानाभावानुमानार्थं भावरूपाज्ञानमिव रागाभावानुमानार्थं द्वेषोऽपि स्वीकरणीयः, तद्विरोधिपदार्थानुभवं विना तदभावानुमानायोगादिति—वाच्यम्; भावरूपाज्ञानेन

---

रेवाप्रसिद्धाः; अत उपलब्धेर्विषयविषयकं भावभूतम् अज्ञानं साक्षिसिद्धम्; साक्षिसिद्धेन अज्ञानेन उपलब्धेरभावोऽनुमीयते इति न अनवस्थागन्धोऽपि। साक्षिसिद्धेन भावभूताज्ञानेन अनुमित उपलब्ध्यभावः उपलभ्याभावं बोधयति। स च बोधः परोक्षरूप एव। विवरणकृतापि ज्ञानाभावस्य परोक्षत्वमेवोक्तम् "ननु ज्ञानाभावविषयोऽयमवभासः न अपरोक्षावभासत्वात्" [विवरणम् पृ०, १२ काशी' विजयनगरसंस्करणम् ] अज्ञानं साक्षिप्रत्यक्षसिद्धम्, ज्ञानाभावस्तु अनुपलब्धिप्रमाणगम्यः परोक्षः। यदुक्तं प्रातरनुभूतचत्वरे गजाभावज्ञानं कथम् तत्राह—ज्ञानानुपलब्ध्यैव इत्यवेहीति। अनुपलब्धिप्रमाणेन चत्वरे गजाभावज्ञानं परोक्षं जायते अनुपलब्धेर्ज्ञानं साक्षिसिद्धभावरूपाज्ञानेन लिंगेन। भावरूपाज्ञानं ज्ञानाभावव्याप्यमित्युक्तमेव। भावारूपाज्ञानेन ज्ञानाभावानुमानप्रयोगं दर्शयति "पूर्वकाले प्रातरित्यर्थः, प्रातःकालीनोऽहम्, गजज्ञानाभाववान्, गजाज्ञानवत्त्वात्"। ज्ञानाभावव्याप्याज्ञानवत्त्वादित्यर्थः। अन्वयव्याप्तेरसंभवात् व्यतिरेकव्याप्तिं दर्शयति—यन्नैवं तन्नैवमिति। यदा मयि साध्यं नास्ति तदा हेतुरपि नास्ति, यथा गजज्ञानवति मयीति। यदाऽहं गजज्ञानवान् तदा मयि साध्याभावो गजज्ञानाभावाभावो वर्तते एवं हेत्वभावोऽपि गजाज्ञानाभावोऽपि वर्तते। साध्याभावव्यापकीभूतहेत्वभावप्रतियोगित्वरूपा व्यतिरेकव्याप्तिः हेतौ वर्तते। अतः सर्वत्र भावभूताज्ञानेन व्याप्येन ज्ञानाभावस्य व्यापकस्य अनुमितिर्भवतीति भावः। एवञ्च ज्ञानानुपलब्धेरभावग्राहकत्वे न कोऽपि दोषः। नानवस्था, न वा अभावप्रतीतेरपरोक्षत्वमिति। वेदान्तसिद्धान्तरहस्यमेतदजानता वेदान्तपरिभाषाकृता अनुपलब्धिपरिच्छेदे यदुक्तं तद्धेयम्। सुषुप्तिकालीनज्ञानाभावानुमानाय यदि ज्ञानविरोधि अज्ञानमङ्गीकार्यम् तर्हि सुषुप्तौ इच्छाभावानुमानाय इच्छाविरोधिद्वेषोऽपि सुषुप्तौ अङ्गीकर्तव्य इति पूर्वपक्षी शङ्कते—न च सुषुप्तिकाले ज्ञानाभावानुमानार्थं भावरूपाज्ञानमिव रागाभावानुमानार्थं द्वेषोऽपि स्वीकरणीयः। तद्विरोधिपदार्थानुभवं विना तदभावानुमानायोगादिति

ज्ञानाभावेन वा रागाभावानुमानसंभवात्, तस्यापि तद्विरोधित्वात्। अथापरोक्षतो ज्ञातेऽज्ञानाभावात् कथं परोक्षज्ञानाभावानुमानम्? सामग्रीविरहादिनेति गृहाण न चात्राप्यन्योन्याश्रयः;

---

वाच्यम्। ज्ञानविरोध्यज्ञानानुभवाभावे यदि ज्ञानाभावो नानुमातुं शक्यते तर्हि सुषुप्तौ इच्छाभावानुमानाय इच्छाविरोधिद्वेषोऽपि सुषुप्तौ अङ्गीकार्यः स्यात्; तथा च अनुभवविरोधो दुर्वार इति।

भावभूतज्ञानं यथा ज्ञानविरोधि एवमिच्छाद्वेषादीनामपि विरोधि; तथा च साक्षिसिद्धेन ज्ञानेच्छादिविरोधिनाऽज्ञानेन ज्ञानाभाव इव इच्छादीनामभावोऽपि अनुमीयते; अतो न विरोध्यन्तरं कल्पनीयमिति समाधत्ते सिद्धान्ती—भावरूपाज्ञानेन ज्ञानाभावेन वा रागाभावानुमानसम्भवात् तस्यापि तद्विरोधित्वात्। भावरूपमज्ञानं यथा ज्ञानाभावव्याप्यमेवं रागाद्यभावस्यापि व्याप्यम् अतोऽज्ञानेन यथा ज्ञानाभावोऽनुमीयते, एवं रागाद्यभावोऽपि अनुमीयते। अतो रागाद्यभावानुमानाय रागादिविरोधिपदार्थान्तरं न कल्प्यम्। अथ वा भावरूपाज्ञानेन ज्ञानाभावमनुमाय अनुमितेन ज्ञानाभावेन रागाद्यभावोऽनुमीयते। अज्ञाते रागाद्यसम्भवात् ज्ञानं रागादीनां कारणम्, कारणाभावात् कार्याभावोऽनुमीयते; कारणाभावस्य कार्याभावव्याप्यत्वात्। तस्यापि तद्विरोधित्वादिति। तस्यापि—भावरूपाज्ञानस्यापि; तद्विरोधित्वात्—रागादिविरोधित्वात्; अज्ञानेन विरोधिना रागाद्यभावानुमानादिति भावः।

साक्षिसिद्धेन अज्ञानेन यदि ज्ञानाभावोऽनुमीयते तर्हि अपरोक्षतो ज्ञातेऽज्ञानाभावात्, कथं परोक्षज्ञानाभावानुमानमित्याशङ्क्य समाधत्ते सिद्धान्ती—अथापरोक्षतो ज्ञातेऽज्ञानाभावात् कथं परोक्षज्ञानाभावानुमानम्? सामग्रीविरहादिति गृहाण। यस्य वस्तुनः यदा प्रत्यक्षज्ञानं वर्तते किन्तु तस्य परोक्षज्ञानं नास्ति तदा परोक्षज्ञानाभावः कथमनुमीयेत, ज्ञानाभावानुमापकाज्ञानस्य प्रत्यक्षज्ञानेनैव विनष्टत्वात्, परोक्षज्ञानाभावसाधकमानाभावात्, परोक्षज्ञानाभावो न सिध्येत्; तत्राह परोक्षज्ञानसामग्र्यभावेन परोक्षज्ञानाभावोऽनुमानेनैव सिद्ध्यतीति न परोक्षज्ञानाभावस्य असिद्धिः। कारणाभावस्य कार्याभावव्याप्यत्वादिति भावः।

शब्दादीनां योग्यानां योग्यानुपलब्ध्या अभावनिश्चयेन परोक्षज्ञान-विरहज्ञानं विनैव सामग्रीविरहनिश्चयात्, सुषुप्तिकाले चेन्द्रियादि-घटितसामग्रीविरहस्य फलाभावं विना ज्ञातुमशक्यत्वेनान्योन्याश्रयोक्तेः।

---

ज्ञानसामग्रीविरहेण ज्ञानाभावानुमाने सिद्धान्तिनैव अन्योन्याश्रयदोषः प्रदर्शितः; अत्र पुनः सिद्धान्तिनैव परोक्षज्ञानसामग्रीविरहेण परोक्षज्ञानाभावानुमानमङ्गीकृतम् अत्रापि अन्योन्याश्रयदोषः कथं न स्यादिति पूर्वपक्षिमतमाशङ्क्य समाधत्ते— न च अत्रापि अन्योन्याश्रयः, शब्दादीनां योग्यानुपलब्ध्या अभावनिश्चयेन परोक्षज्ञानविरहज्ञानं विनैव सामग्रीविरहनिश्चयात्। सुषुप्तिकाले च इन्द्रियादिघटितसामग्रीविरहस्य फलाभावं विना ज्ञातुमशक्यत्वेन अन्योन्याश्रयोक्तिः। परोक्षज्ञानसामग्रीविरहात् परोक्षज्ञानाभावानुमानं परोक्षज्ञानाभावात् परोक्षज्ञानसामग्रीविरहानुमानमित्यन्योन्याश्रयः पूर्वपक्षिणा प्रदर्शयितुं न शक्यते। फलाभावनिश्चयं विनैव परोक्षज्ञानसामग्रीविरहो योग्यानुपलब्ध्यैव निश्चीयते; शब्दलिङ्गादीनां योग्यानां परोक्षज्ञानसामग्रीत्वेन योग्यानुपलब्ध्यैव सामग्रीविरहो निश्चीयते; न फलाभावनिश्चयो सामग्रीविरहनिश्चयेऽपेक्ष्यते। अतोऽत्र नान्योन्याश्रयः। ज्ञानसामग्रीविरहनिश्चयस्तु फलाभावनिश्चयं विना योग्यानुपलब्ध्या न सम्भवति। ज्ञानसामग्र्यन्तर्गतानामिन्द्रियादीनामतीन्द्रियत्वेन अयोग्यत्वात्, न योग्यानुपलब्ध्या ज्ञानसामग्रीविरहनिश्चयो भवितुमर्हति। अतः सुषुप्तौ ज्ञानाभावनिश्चयं विना ज्ञानसामग्र्यभावनिश्चयो न भवितुमर्हति, अतस्तत्र अन्योन्याश्रयः न तथा अत्र अन्योन्याश्रयः सम्भवतीति भावः। तथा च सुषुप्तौ ज्ञानाभावानुमानासम्भवात् साक्षिसिद्धेन भावरूपाज्ञानेनैव ज्ञानाभावानुमानं कर्तव्यमिति सुषुप्तौ भावरूपाज्ञानं साक्षिसिद्धं तेनैव सुप्तोत्थितस्य ज्ञानाभावानुमानं सिद्ध्यतीति, सुप्तोत्थितस्य परामर्शसिद्धं सौषुप्तं प्रत्यक्षं भावरूपाज्ञानविषयकमेव। परामर्शोऽत्रानुमानमेव, साक्षिसिद्धेन भावरूपाज्ञानेनैव यथा सौषुप्तज्ञानाभावोऽनुमीयते तथा प्रदर्शितम्; साक्षिसिद्धभावरूपाज्ञानं विना स्वातन्त्र्येण यथा सुषुप्तौ ज्ञानाभावोऽनुमातुं न शक्यते तथा प्रदर्शितम्। भावरूपाज्ञानमनभ्युपगम्य ज्ञानाभावानुमानप्रयासः कुप्रयास एव, कथमपि ज्ञानाभावोऽनुमातुं न शक्यते। अतः सिद्धमनुमानरूपपरामर्शसिद्धं सौषुप्तं भावरूपाज्ञानम्।

न च स्मरणपक्षे संस्कारानुपपत्तिः; अज्ञानस्याज्ञानवृत्तिप्रतिविम्बितसाक्षिभास्यत्वेन वृत्तिनाशादेव संस्कारोपपत्तेः, अज्ञानवृत्तिप्रतिबिम्बितचैतन्यस्यैव साक्षिपदार्थत्वात् ॥४१॥

---

इदानीं स्मरणरूपपरामर्शसिद्धमपि भावरूपाज्ञानविषयकं सौषुप्तप्रत्यक्षं साधयितुं पूर्वपक्षं प्रदर्शयति—अज्ञानस्य साक्षिप्रत्यक्षं नित्यम्, नित्यज्ञानस्य संस्काराजनकत्वात् संस्काराभावे स्मरणानुपपत्तिरिति आशंक्य समाधत्ते सिद्धान्ती—न च स्मरणपक्षे संस्कारानुपपत्तिः । अज्ञानस्य अज्ञानवृत्तिप्रतिबिम्बितसाक्षिभास्यत्वेन वृत्तिनाशादेव संस्कारोपपत्तेः । अज्ञानवृत्तिप्रतिबिम्बितचैतन्यस्यैव साक्षिपदार्थत्वात् । उक्तञ्च विवरणे "ननु अज्ञानसुखानुभवयोः साक्षिचैतन्यस्य च अविनाशिनः संस्काराभावे कथमुत्थितस्य त्रयाणामनुस्मरणं स्यात्? उच्यते, अज्ञानगतचैतन्याभासजन्योपाधित्वात् अज्ञानसुखसाक्षिविकल्पानुभवस्य, अज्ञानावस्थाभेदेन चैतन्याभासानां भिन्नत्वात् तद्विनाशसंस्कारजस्मरणम् अज्ञानसुखसाक्षिचैतन्याकारम् अज्ञानविशिष्टात्माश्रयमेव सम्भाव्यते । नान्तःकरणाश्रयमिति" ! [विवरणम् पृ०, ३१५, मेट्रोपलिटनमुद्रणालयसंस्करणम् ] विवृतं चैतत् तत्त्वदीपने—सुषुप्तौ अज्ञानाद्यनुभवकल्पकाभावात् न तद्बलादनुभवसिद्धिरिति चोदयति—नन्विति । स्मरणमेवानुभवकल्पकमित्यत्राह—अज्ञानेति । अज्ञानसुखानुभवयोः साक्षिबोधकचैतन्यस्थ च संस्काराभाव इति सम्बन्धः । तत्र हेतुः अविनाशिन इति; च शब्दात् साक्ष्यनुभववदज्ञानसुखानुभवयोरप्यविनाशित्वं सूचयति । अनुभवनाशजसंस्कारस्य स्मृतिमूलत्वात् अज्ञानादिसाधकसाक्षिणश्च अविनाशात् कथं स्मरणमित्यर्थः । चैतन्यस्य स्वरूपेण नित्यत्वेऽपि वैशिष्ट्यस्यानित्यत्वात् स्मरणं युक्तमित्याह—उच्यते इति । अज्ञानादेर्नित्यत्वात् वैशिष्ट्यमपि तथेत्याशङ्क्याह—अज्ञानेति । अज्ञानं स्वसुखसाक्ष्याकारेण परिणमते, तत्र च परिणताज्ञाने चैतन्याभास उपजायते, तस्माच्चाज्ञानादिविक्षेपानुभवः इत्यर्थः । चैतन्याभासस्यैक्यात् कथमाकारविकल्पजानि तत्राह—अज्ञानेति । परिणामो अवस्थाशब्दार्थः [विवरणम्, पृ०, ३१५, मेट्रोपलिटनमुद्रणालयसंस्करणम् ] विवरणोक्तं शंकैव पूर्वपक्षिणा प्रदर्शिता । विवरणसिद्धान्तमेवानुसृत्य पूर्वपक्षिशंका समाहिता ।

न च—जागरेऽप्यज्ञानस्य वृत्तिवेद्यत्वे वृत्त्यभावदशायां संशयाद्यापत्तिरिति—वाच्यम्; अज्ञानविषयाज्ञानाभावेन तदयोगात्, संशयादेस्तत्कारणीभूताज्ञानसमानविषयत्वनियमात्। भावत्वादिना संशये त्विष्टापत्तिरेव; भावत्वादेः साक्षिवेद्यत्वाभावेनाज्ञानविषयत्वात्, अज्ञानस्य स्वरूपेणैव साक्षिवेद्यत्वात्। ननु—तदा ज्ञानाभावोऽपि

---

अज्ञानादिगोचराज्ञानवृत्तिर्विवरणकृतैव प्रदर्शिता। अज्ञानादिगोचरा अज्ञानवृत्तिरनित्या अतोऽनादिगोचराज्ञानवृत्तिप्रतिबिम्बितं चैतन्यम् अज्ञानादिसाक्षि अज्ञानवृत्तेरनित्यत्वात् तत्प्रतिबिम्बितं चैतन्यमपि अनित्यमेव तदविनाशात् संस्कारः संस्कारात् स्मरणमिति अज्ञानादीनां स्मरणं नानुपपन्नमित्यर्थः ॥४१॥

४२—अज्ञानस्य कादाचित्काज्ञानवृत्तिवेद्यत्वे जागरणेऽज्ञानगोचराज्ञानवृत्त्यभावदशायामज्ञानगोचरसंशयाद्यापत्तिरित्याशंक्य समाधत्ते—न च जागरणेऽपि [अज्ञानस्य] वृत्तिवेद्यत्वे वृत्त्यभावदशायां संशयाद्यापत्तिरिति वाच्यम्, अज्ञानविषयाज्ञानाभावेन तदयोगात्। संशयादेस्तत्कारणीभूताज्ञानसमानविषयत्वनियमात्। भावत्वादिना संशये त्विष्टापत्तिरेव। भावत्वादेः साक्षिवेद्यत्वाभावेनाज्ञानविषयत्वात्। अज्ञानस्य स्वरूपेणैव साक्षिवेद्यत्वात्। कादाचित्काज्ञानवृत्तिप्रतिबिम्बित· चैतन्यस्य अज्ञानसाक्षित्वे जागरणे कदाचित् अज्ञानाकाराज्ञानवृत्तेरभावदशायाम् अज्ञानगोचरसंशयविपर्यययोरापत्तिः स्यादिति न च वाच्यम्, साक्षिसिद्धे वस्तुनि अज्ञानाभावात् अज्ञानगोचराज्ञानमेवाप्रसिद्धम्। नहि भवति अज्ञानमज्ञातमिति। संशयविपर्यययोरुपादानमज्ञानमेव यस्मिन् नास्ति तत्र उपादानाभावात् कथं संशयादयः स्युरिति। भ्रमोपादानत्वमेव हि अज्ञानलक्षणं प्रागुक्तम्। अज्ञानविषयविषयको हि भ्रमः अज्ञानाविषये भ्रमसम्भावनैव नास्तीति भावः। अज्ञानस्य स्वरूपतः साक्षिवेद्यत्वेऽपि अज्ञानगताः भावत्वानादित्वादिधर्मा न साक्षिवेद्याः, किन्तु प्रमाणवेद्याः। प्रमाणवेद्ये संशयादयो भवितुमर्हन्ति। प्रमाणवेद्यस्य वेदनात् प्रागज्ञातत्वात् अज्ञानोपादानकाः संशयादयो भवितुमर्हन्ति। अज्ञानस्य भावत्वानादित्वादिसिद्ध्यै अनुमानादिप्रमाणोपन्यासो अग्रे करिष्यते इति।

स्वरूपेणैव भासताम्, सप्रतियोगिकत्वेनाभावज्ञान एव प्रतियोगिज्ञानस्य हेतुत्वात्, अन्यथा 'प्रमेयमि'त्ति ज्ञानेऽप्यभावो न भासेतेति—चेत् ॥४२॥

न, साक्षिणा तावन्न स्वरूपेणाभावावगाहनम्; तस्य साक्षात्साक्ष्य-वेद्यत्वात्। नापि शब्दादिना तदानीं तेषामभावात्। नाप्यनुपलब्ध्या; तस्याः प्रतियोगिज्ञाननिरपेक्षाया अजनकत्वात् ॥४३॥

---

भावत्वादिना अज्ञानस्य साक्षिवेद्यत्वाभावेऽपि यथा स्वरूपतोऽज्ञानं साक्षिवेद्यं सिद्धान्तिना अङ्गीक्रियते तथा अस्माभिरपि ज्ञानाभावः स्वरूपतः साक्षिवेद्यः इत्यङ्गीकरिष्यते; अभावस्तु सप्रतियोगिकत्वेन न साक्षिवेद्यो भवति, किन्तु स्वरूपतः; तथा च न भावरूपाज्ञानं सुषुप्तौ सिध्येदिति शंकते—

ननु तदा ज्ञानाभावोऽपि स्वरूपणैव भासताम्, सप्रतियोगिकत्वेन अभावज्ञाने एव प्रतियोगिज्ञानस्य हेतुत्वात्, अन्यथा प्रमेयमिति ज्ञानेऽपि अभावो न भासेत इति चेत्। सुषुप्तिदशायां यथा भावरूपाज्ञानं स्वरूपतः साक्षिवेद्यं भवति तथा सुषुप्तौ ज्ञानाभावोऽपि स्वरूपतः साक्षिणा वेद्यताम्, स्वरूपतोऽज्ञानं साक्षिवेद्यं न तु स्वरूपतो ज्ञानाभावः साक्षिवेद्य इत्यत्र नियामकाभावात् सुषुप्तौ ज्ञानाभाव एव स्वरूपतः साक्षिवेद्यः, सप्रति-योगिकत्वेन अभावभाने एव प्रतियोगिज्ञानस्य हेतुत्वात् न स्वरूपतो भाने। प्रति-योगिज्ञानं विना यद्यभावः स्वरूपतोऽपि न भासेत, तर्हि प्रमेयमितिज्ञाने स्वरूप-तोऽभावो न भासेत; न च इष्टापत्तिः अभावस्यापि प्रमेयत्वात् ॥४२॥

४३—सप्रतियोगिकत्वं विनैव यदि स्वरूपतोऽभावस्य भानं स्यात् तदा न इत्येव अभावो भायात्, तादृशभानं सर्वथा अप्रसिद्धमिति सिद्धान्ती समाधत्ते—

न साक्षिणा तावत् न स्वरूपेण अभावावगाहनं तस्य साक्षात् साक्ष्य-वेद्यत्वात्। नापि शब्दादिना तदानीं तेषामभावात्, नाप्यनुपलब्ध्या तस्याः प्रतियोगिज्ञाननिरपेक्षाया अजनकत्वात्। अभावः साक्षात् साक्षि-वेद्य एव न भवति। यद्यभावः प्रतियोगिज्ञाननैरपेक्ष्येण स्वरूपतः साक्षिवेद्यो भवेत् तदा तादृशाभावप्रतीतेराकारः कीदृशः स्यात्; न इत्येव स्यात्। घटो न, पटो न, इत्येवाभावप्रतीतेराकारः प्रसिद्धः; न इत्येतावन्मात्राकारा प्रतीतिः सर्वथा अप्रसिद्धैव। अत उक्तं तस्य साक्षात् साक्षिवेद्यत्वाभावादिति। नापि सुषुप्तौ

न च—दृष्टाभावान्तरविलक्षणस्वभाव एवायमभाव इति स्वरूपेण साक्षिवेद्योऽस्त्विति—वाच्यम्; निर्विकल्पकबुद्धिवेद्यत्वे भावत्वस्यैवौचित्यात्, अन्यथा परिभाषामात्रापत्तेः। ननु ज्ञानविरोधित्वादेस्तदाननुभवेन 'नावेदिषमि'ति तेनाकारेण कथं परामर्शः? न; द्रष्टुर्ह्यन्तः

---

शब्दादिना ज्ञानाभावप्रतीतिः सम्भवति, सुषुप्तौ शब्दादीनामेवाभावात्। नापि सुषुप्तौ अनुपलब्ध्या ज्ञानाभावप्रतीतिः सम्भवति, प्रतियोगिज्ञाननिरपेक्षाया अनुपलब्धेरभावप्रतीत्यजनकत्वात्। नैयायिका यत्र अभावप्रत्यक्षतां स्वीकुर्वन्ति तत्र वयम् अनुपलब्ध्या अभावप्रतीतिमङ्गीकुर्मः। सुषुप्तौ ज्ञानाभावस्य प्रत्यक्षता ते नाङ्गीकुर्वन्ति। अतो वयमपि तत्रानुपलब्ध्या ज्ञानाभावप्रतीतिं नाङ्गीकुर्मः ॥४३॥

४४—इदानीं विरुद्धगतिः पूर्वपक्षी प्रसिद्धाभावविलक्षण एवायं ज्ञानाभावः स्वरूपेणैव साक्षिवेद्यो भवितुमर्हतीति शंकते— न च दृष्टाभावान्तरविलक्षणस्वभाव एवायमभाव इति स्वरूपेण साक्षिवेद्योऽस्तु इति वाच्यम्। अतिरोहितमेतत्। सुषुप्तौ सविकल्पकज्ञानाभावात् निर्विकल्पकबुद्धिवेद्यत्वे भावत्वस्यैव सिद्धेरभावस्य निर्विकल्पकबुद्धिवेद्यत्वाभावादिति समाधत्ते सिद्धान्ती— निर्विकल्पकबुद्धिवेद्यत्वे भावत्वस्यैवौचित्यात्। अन्यथा परिभाषामात्रत्वापत्तेः। जाग्रत्स्वप्नयोरन्तःकरणसत्ताप्रयुक्तमेव सविकल्पकज्ञानं जायते, सुषुप्तौ अन्तःकरणस्य विलीनत्वात् सविकल्पकज्ञानासम्भवात्। अतो ज्ञानाभावस्य सुषुप्तौ निर्विकल्पकबुद्धिवेद्यत्वं वाच्यम्; तथात्वे भावत्वस्यैवापत्तेः; अन्यथा परिभाषामात्रत्वापत्तेः। निर्विकल्पकबुद्धिबोध्यस्य भावस्य अभावनाम्ना व्यवहारात्, भावे अभावनाम्नः परिभाषामात्रं स्यात्; परिभाषामात्रेण वस्तुवैलक्षण्यं न स्यादिति भावः।

अन्तःकरणस्य विलये सुषुप्तौ यदि सविकल्पकं ज्ञानमेव न सम्भवेत्, तर्हि अज्ञानमपि ज्ञानविरोधित्वादिना नानुभूयेत, तेन रूपेण अनुभवाभावे सुप्तोत्थितस्य न किञ्चिदवेदिषमिति सविकल्पकं स्मरणमपि न स्यादिति पूर्वपक्षी शंकते— ननु ज्ञानविरोधित्वादेः तदा अननुभवेन नावेदिषमिति तेनाकारेण कथं परामर्शः। सुषुप्तौ अज्ञानं निर्विकल्पकबुद्धिवेद्यं यदि स्यात् तर्हि तदा

करणतादात्म्येनाहमुल्लेखस्येव ज्ञानविरोधित्वादेरपि तदैवानुभूयमानत्वेन तदंशे परामर्शत्वानभ्युपगमात्, सुषुप्तिकालीनस्य द्रष्टुरेव परामृष्टत्वात् ॥४४॥

नन्वज्ञानवृत्तिप्रतिबिम्बितचैतन्यरूपस्याज्ञानानुभवस्य जाग्रत्यपि विद्यमानत्वात् कथमज्ञानस्मरणम्? न हि धारावाहिकेषु अनुभवेषु तुल्यसामग्रीकेषु स्मरणव्यवहारः; तथा च धारावाहिकोऽज्ञानानुभव इति वक्तव्यम्, न तु परामर्श इति ॥४५॥

---

अज्ञाने ज्ञानविरोधित्वस्य सविषयकत्वस्य च अभानात् सुप्तोत्थितस्य ज्ञानविरोधित्वादिना अज्ञानस्य स्मरणमपि न स्यात्। स्मृत्यनुभवयोः समानविषयत्वनियमात्। सुप्तोत्थितस्य सविकल्पकं स्मरणं सर्वलोकप्रसिद्धिं बाध्येत इति।

अहमुल्लेखस्य यथा तदानीमनुभूयमानत्वं तथैव ज्ञानविरोधित्वादेरपि तदानीमनुभूयमानत्वेन स्मर्यमाणत्वाभावादित्याह सिद्धान्ती—न द्रष्टुर्हि अन्तःकरणतादात्म्येन अहमुल्लेखस्येव ज्ञानविरोधित्वादेरपि तदैवानुभूयमानत्वेन तदंशे परामर्शत्वानभ्युपगमात्। सुषुप्तिकालीनस्य द्रष्टुरेव परामृष्टत्वात्। सुप्तोत्थितस्य स्मरणमपि निर्विकल्पमेव। सौषुप्तनिर्विकल्पकानुभवजन्यत्वात् सुषुप्तौ यो द्रष्टा साक्षी तत्रैव अन्तःकरणतादात्म्याध्यासेन जागरणे अहमर्थः संवृत्तः। अतोऽहमर्थः न स्मर्यमाणः किन्तु सुप्तोत्थितस्य अनुभूयमान एव। अहं न किञ्चिदवेदिषमिति स्मृतौ अहमंशे यथा न स्मृतित्वं किन्तु अनुभवत्वमेव एवमेव स्मर्यमाणाज्ञानस्वरूपे ज्ञानविरोधित्वादेरपि अनुभूयमानत्वमेव न स्मर्यमाणत्वं सुषुप्तौ ज्ञानविरोधित्वादेरननुभवात्। सुषुप्तिकालीनसाक्ष्याकाराऽविद्यावृत्त्या द्रष्टैवानुभूतः, स एव स्मर्यते, न तु अहमर्थः। सुषुप्तौ अहमर्थस्याननुभवात्। सुषुप्तौ अनुभूतमेव स्मर्यते, अनुभूतं तु तदानीमेवानुभूयते न स्मर्यते इत्यर्थः ॥४४॥

४५—अज्ञानाकाराज्ञानवृत्तिप्रतिबिम्बितचैतन्यमेव अज्ञानानुभवः तस्य जाग्रत्यपि विद्यमानत्वात् कथम् अज्ञानस्मरणमिति पूर्वपक्षी शंकते—ननु अज्ञानवृत्तिप्रतिबिम्बितचैतन्यरूपस्य अज्ञा[ना]नुभवस्य जाग्रत्यपि विद्यमानत्वात् कथमज्ञानस्मरणम्, नहि धारावाहिकेषु अनुभवेषु तुल्यसामग्री

सत्यम्; सुषुप्त्याख्यायास्तामस्या अज्ञानवृत्तेर्नाशे जाग्रति तद्विशिष्टाज्ञानस्य साक्षिणाऽनुभूयमानत्वाभावेन. संस्कारजन्याविद्यावृत्त्यैव सुषुप्तिविशिष्टाज्ञानभानात् परामर्शत्वोपपत्तेः, केवलाज्ञानांशे तु तुल्यसामग्रीकत्वाद्धारावाहिकत्वमेवं; अत एव कार्योपाधिविनाशसंस्कृतम-

---

केषु स्मरणव्यवहारः; तथा च धारावाहिकोऽज्ञानानुभव इति वक्तव्यं न तु परामर्श इति। सुषुप्तिकालीनाज्ञानानुभवतुल्यसामग्रीकोऽज्ञानानुभवः जाग्रत्यपि वर्तते, जाग्रत्यपि अज्ञोऽहमित्यनुभवात्। तथा च अज्ञानाकाराज्ञानवृत्तौ तुल्यसामग्रीकतया अनुवर्तमानायां धारावाहिकोऽज्ञानानुभव एव वक्तव्यः, न तु स्मृतिरूपपरामर्शः। नहिं घटादीनां धारावाहिकानुभवकाले घटस्मरणव्यवहारः कस्यापि भवति; तथा च स्मरणरूपपरामर्शसिद्धः सौषुप्ताज्ञानानुभव इति रिक्तं वचः इति भावः ॥४५॥

४६—जागरणे अज्ञानानुभवस्य विद्यमानत्वेऽपि निद्राख्यवृत्तिविशिष्टाज्ञानस्य जागरणे अभावात् तादृशाज्ञानस्य सुषुप्तौ अनुभवात् ततः संस्कारद्वारा निद्रावृत्तिविशिष्टाज्ञानस्मरणं सुप्तोत्थितस्य युक्तमेव इति समाधत्ते सिद्धान्ती—सत्यं सुषुप्त्याख्यायास्तामस्या अज्ञानवृत्तेर्नाशे जाग्रति तद्विशिष्टाज्ञानस्य साक्षिणा अनुभूयमानत्वाभावेन संस्कारजन्याविद्यावृत्त्यैव सुषुप्तिविशिष्टाज्ञानभानात् परामर्शत्वोपपत्तेः। केवलाज्ञानांशे तु तुल्यसामग्रीकत्वाद्धारावहिकत्वमेव। जागरणेऽज्ञानानुभवोऽनुवर्तते इति यदुक्तं तदिष्टमेवेति आह सिद्धान्ती—सत्यमिति। जागरणे अज्ञा[ना]नुभवात् विलक्षणः सौषुप्तानुभवः संस्कारद्वारा सुप्तोत्थितस्य स्मरणं जनयतीत्याह—सुषुप्त्याख्यायास्तामस्या इति। प्रमाणविपर्ययविकल्पनिद्रास्मृतयः पञ्चवृत्तयः पातञ्जले प्रदर्शिताः पातञ्जलसिद्धान्तमनुस्मृत्य विवरणकाराः सुप्तोत्थितस्य सुषुप्तिकालानुभूताज्ञानविषयकं स्मरणं प्रदर्शयन्तः स्मरणरूपपरामर्शसिद्धं भावरूपाज्ञानविषयकं सौषुप्तप्रत्यक्षमाहुः। अभावप्रत्ययालम्बनावृत्तिर्निद्रेति पातञ्जलसूत्रात् तमःप्रत्यालम्बना चित्तवृत्तिर्निद्रेति गम्यते। सिद्धान्ते सुषुप्तौ चित्तस्य लयात् न तदा चित्तवृत्तिर्भवितुमर्हति इति अविद्यावृत्तिः अज्ञानालम्बना इत्युक्ता। जागरणे निद्राख्याया वृत्तेर्नाशात् निद्रावृत्तिविशिष्टमज्ञानं जागरणे साक्षिणा नानुभवितुं शक्यते। साक्षिसंसृष्टं

ज्ञानमात्रमेव प्रलयोपमं सुषुप्तिरित्यभिप्रेत्य वार्तिककारपादैः सौषुप्ताज्ञान-स्मरणमपाकृतम् ।

---

विद्यमानमेव साक्षिणा गृह्यते नाविद्यमानम् । अतः सुषुप्तौ निद्रावृत्तिविशिष्टम-ज्ञानं यत् साक्षिणा अनुभूतं तदेवाज्ञानं सुप्तोत्थितेन स्मर्यते । संस्कारजन्या स्मृतिरपि सिद्धान्ते अविद्यावृत्तिरेव । स्मृतेरप्रमात्वात् अप्रमाणवृत्तिमात्रस्य उपादान-मज्ञानमेव । प्रमावृत्तेरुपादानम् अन्तःकरणम् । उक्तञ्च अन्यथाख्यातिभङ्गे रङ्ग-रजते इति तु स्मृतिरूपमविद्यावृत्त्यात्मकमनिर्वचनीयत्वादिति । उक्तञ्च लघु-चन्द्रिकायाम् अज्ञानप्रतीत्युपपत्तिप्रकरणे स्मरणरूपाविद्यावृत्तौ तु उद्बोधकानामेव दोषत्वमिति । यदपि विट्ठलेशेन "सुखमहमस्वाप्समिति-स्मृतिरपि मनोवृत्तिरेवेति" उक्तम् [अद्वैतसिद्धिः, पृ०, २३४] तत् सिद्धान्तविस्मरणनिबन्धनं बोध्यम् अत्रापि आर्येण स्पष्टमुक्तम् संस्कारजन्याविद्यावृत्त्यैवेति विशिष्टाज्ञानस्य स्मर्यमाणत्वेऽपि केवलाज्ञानस्य अनुभूयमानत्वमेव । जागरणे धारावाहिको अज्ञानानुभव एव स्वीक्रियते । अहमज्ञः इति प्रत्ययबलादिति । सुषुप्त्याख्यायास्तामस्या वृत्तेरिति यदुक्तं तत् पातञ्जलसिद्धान्तानुसारेण तम आलम्बनत्वेन वृत्तेस्तामसत्वम्, न तु वृत्तिः तमःपरिणामरूपा, पातञ्जलोक्तवृत्तीनां ज्ञानरूपत्वात् सत्त्वात् सञ्जायते ज्ञानमिति स्मृत्या ज्ञानमात्रस्यैव सत्त्वगुणपरिणामत्वनिश्चयात् । अविद्यावृत्तिरूपज्ञान-स्यापि त्रिगुणात्मिकाया अविद्यायाः सत्त्वांशपरिणामत्वं बोध्यम् अन्यथा सत्त्वात् सञ्जायते ज्ञानमिति स्मृतिव्याकोपप्रसंगात् ।

अज्ञानस्य सदा अनुभूयमानत्वादेव वार्तिककारपादैः प्रलयोपमं सुषुप्ति-रित्यभ्युपेत्य सौषुप्ताज्ञानस्मरणमपाकृतमिति वार्तिककारपादसिद्धान्तं दर्शयितु-माह—अत एव **कार्योपाधिविनाशसंस्कृतमज्ञानमात्रमेव प्रलयोपमं सुषुप्तिरित्यभ्युपेत्य वार्तिककारपादैः सौषुप्ताज्ञानस्मरणमपाकृतम् ।** प्रलये साक्षिणा अनुभूतमप्यज्ञानं प्रलयात्परं सृष्टौ प्रलये अनुभूतमज्ञानं न स्मर्यते । अतः प्रलये अज्ञानाकारा अज्ञानवृत्तिरपि नाङ्गीक्रियते; अज्ञानस्य स्मरणो-पपत्तये एव अज्ञानाकाराज्ञानवृत्तेरङ्गीकारः । यत्र स्मरणमप्रसिद्धं तत्राज्ञानवृत्तेरपि अनङ्गीकारः । अज्ञा[ना]नुभवस्तु अज्ञानोपहितेन साक्षिणैव सिध्यति । कार्योपाधि-रन्तःकरणम्, कार्योपाधिरयं जीव इति सिद्धान्तात्; अज्ञानोपादानकान्तःकरण-

तथा चोक्तम्—

'न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः ।
कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् ॥
न भूतकालस्पृक्प्रत्यक् न चागामिस्पृगीक्षते ।
स्वार्थदेशः परार्थोऽर्थो विकल्पस्तेन स स्मृतः ॥'

इत्याद्यव्याकृतप्रक्रियायाम् ॥४६॥

---

नाशसंस्कृतम् अज्ञानमात्रं प्रलयोपमं सुषुप्तिरिति सिद्धान्तादरे प्रलयसुषुप्त्योरैकरूप्ये अज्ञानाकाराज्ञानवृत्तेरनभ्युपगमात्, सौषुप्ताज्ञानस्मरणमपि न भवति । यथा प्रलयानुभूताज्ञानस्मरणाभावः एवं सुप्तोत्थितस्यापि ।

उक्तञ्च वार्तिककारपादैः बृहदारण्यकभाष्यवार्तिके—तथा चोक्तम्—

न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः ।
कालाद्यव्यवधानत्वात् न ह्यात्मस्थमतीतभाक् ॥
न भूतकालस्पृक्प्रत्यक् न चागामिस्पृगिष्यते ।
स्वार्थदेशः परार्थोऽर्थो विकल्पस्तेन स स्मृतः ॥

बृहदारण्यकभाष्यवार्तिकम् ; [१।४।३००-३०१ श्लो०] इत्याद्यव्याकृतप्रक्रियायाम् । तद्धेदं तर्हि अव्याकृतमासीत" [बृहदा० १।४] इति बृहदाण्यकवाक्यविवरणप्रसंगे वार्तिककारपादैरेतदुक्तम् । वार्तिककृद्भिः सौषुप्तवृत्तेर्जन्यरूपायाः प्रत्याख्यानं कृतम् । अतः सुप्तोत्थितपुरुषस्य सुषुप्तिकालानुभूताज्ञानस्य स्मरणमपि प्रत्याख्यातम् । प्रलयात् परं यथा अनुभूताज्ञानं न स्मर्यते एवं सुषुप्तेः परमुत्थानेऽपि अनुभूतमज्ञानं न स्मर्यते । सुप्तोत्थितस्यापि अज्ञानमनुभूयते एव । "न सुषुप्तिगविज्ञानं" सुषुप्तिकालमात्रस्थायिनी एका अविद्यावृत्तिर्न अङ्गीक्रियते इत्यर्थः । अतो सुप्तोत्थितस्य अहं किञ्चित् नाज्ञासिषमिति स्मृतिरपि न भवति । जन्यानुभवाभावे ततः स्मरणासम्भवादित्यर्थः । 'न सुषुप्तिगविज्ञानमि'त्यत्र विज्ञानपदस्य जन्यं ज्ञानमित्यर्थः । प्रलयकालवदेव सुषुप्तिकाले जन्या अविद्यावृत्तिर्नाङ्गीक्रियते इति भावः । स्मृत्यभावे कारणमाह—कालाद्यव्यवधानत्वादिति । सुषुप्तिकालजाग्रत्कालयोः संस्कारकालेन व्यवधानाभावात् । सुषुप्तिजाग्रत्कालयोर्मध्ये यदि अज्ञानविषयकसंस्कारकालः तृतीयः स्यात्, तर्हि तयोर्व्यवधानं स्यात्, संस्कारकालाभावात् तयोरव्यवधानात् ।

अनुभवस्मरणकालौ संस्कारकालेन व्यवहितौ भवतः संस्कारकालेन व्यवधानाभावात् न स्मरणं सम्भवतीत्यर्थः। कालादीत्यादिपदात् वृत्त्यज्ञानयोर्नाशपरिग्रहः सुप्तिजागरान्तराले सुप्तिवृत्तिर्न नश्यति सौषुप्ताज्ञानमपि न नश्यतीत्यर्थः। सुषुप्तिकालमात्रस्थायिजन्य-ज्ञानाभावेऽपि स्मरणं सम्भवति। यथा सुखसाक्षात्कारे सुखाकारविद्यावृत्तेर्जन्याया अनङ्गीकारेऽपि सुखनाशादेव सुखावच्छिन्नचैतन्यमपि नश्यति। सुखावच्छिन्नचैतन्यमेव सुखज्ञानम्, तन्नाशे संस्कारात् सुखस्मरणं जायते, एवमत्रापि स्यादित्याशंक्य वार्तिककार आह—न ह्यात्मस्थमतीतभाक् इति। आत्मस्थं सुखं विनश्यत् अतीतत्वभाक् यथा भवति नैवम् अज्ञानम् आत्मस्थमपि ब्रह्मज्ञानं विना न नश्यति। अतोऽज्ञानं न अतीतत्वभाक् भवति। अतीतपदस्य भावप्रधाननिर्देशः। तेन अतीतभाक् इत्यस्य अतीतत्वभाक् अर्थो बोध्यः। अज्ञानसाक्षिणोर्द्वयोर्विद्यमानत्वात् न संस्कारसम्भवः; ततो न स्मरणमित्यर्थः। अतीतमज्ञानं साक्षी न स्पृशतीत्याह—न भूतकालस्पृक् प्रत्यगिति। प्रत्यगात्मा अज्ञानोपहितं चैतन्यं विद्यमानाज्ञानमेव चैतन्योपाधिः, प्रत्यक् चैतन्यं भूतकालं भविष्यत्कालं वा न स्पृशति न प्रकाशयतीत्यर्थः। साक्षिप्रत्यक्चैतन्यं संसृष्टविद्यमानमेव प्रकाशयति, भूतभविष्यतोरज्ञानयोर्विद्यमानत्वाभावात्, तन्न प्रकाशयति। अतो नावेदिषमिति सुप्तोत्थितस्य प्रत्ययः विकल्परूपानुभव एव न निर्विकल्पिका स्मृतिः। अन्तःकरणस्य अविद्यमानतादशायां साक्षिज्ञानं निर्विकल्पकमेव भवति, अतः सुप्तौ अज्ञानानुभवो निर्विकल्पक एव भवति; निर्विकल्पकानुभवात् सविकल्पकस्मृतिः कदापि न भवितुमर्हति। नावेदिषमिति अनुभवः ज्ञानाविरोधित्वसविषयकत्वाभ्याम् अज्ञानं विषयीकरोति अतोऽयं नावेदिषमिति अनुभवः सप्रकारकानुभव एव न निर्विकल्पिका स्मृतिः। अयमनुभवः सविकल्पक एव इति दर्शयितुं वार्तिककार आह—सः—नावेदिषमिति प्रत्ययः। नावेदिषमिति प्रत्ययस्य स्वार्थः विषयः अज्ञानम्। तस्मिन् अज्ञानदेशे—आज्ञानरूपे अधिकरणे अज्ञानात् परः—अज्ञानभिन्नः ज्ञानविरोधित्वादिधर्मः नावेदिषमिति अनुभवस्य विषयो भवति। अतः अनुभवः सविकल्पक एव न निर्विकल्पस्मृतिरूपः अव्याकृतप्रक्रियायां वार्तिककारेण सुषुप्तौ जन्या अविद्यावृत्तिर्नाङ्गीकृते[ति] तन्मतमुपदर्शितं प्रसंगतः पूर्वपक्षिसन्तोषाय। पूर्वपक्षिणापि अज्ञा[ना]नुभवस्य

विवरणकारैस्तु—'अभावप्रत्ययालम्बना वृत्तिर्निद्रे'ति योगसूत्रानुसारेण तमोगुणात्मकावरणमात्रालम्बना काचिद् वृत्तिः सुषुप्तिरित्यभिप्रेत्य तदुपरक्तचैतन्यस्य तन्नाशेनैव नाशात्तत्कालीनाज्ञानानुभवजनितसंस्कारवशेन न किंचिदवेदिषमि'ति 'स्मरणमभ्युपेतमि'ति वार्तिकविवरणयोरप्यविरोधः ।

---

जाग्रत्यपि विद्यमानत्वात् कथमज्ञानस्मरणमित्युक्तम् तदस्मदिष्टमेव । वार्तिककृता तथैव क्वचित् प्रतिपादनादिति भावः ॥४६॥

४७—प्रकृतस्तु ग्रन्थो नैतद्वार्तिकानुसारी किन्तु विवरणानुसारी इत्याह—विवरणकारैस्तु अभावप्रत्ययालम्बनावृत्तिनिद्रेति योगसूत्रानुसारेण तमोगुणात्मकावरणमात्रालम्बना काचिद् वृत्तिः सुषुप्तिरित्यभिप्रेत्य तदुपरक्तचैतन्यस्य तन्नाशेनैव नाशात्तत्कालीनाज्ञानानुभवजनितसंस्कारवशेन न किञ्चिदवेदिषमिति स्मरणमभ्युपेतमिति वार्त्तिकविवरणयोरविरोधः । सुषुप्तिप्रलययोः साम्यमभिप्रेत्य अव्याकृतप्रक्रियायां एतद्वचनं वार्तिककृद्भिरुक्तम् । विवरणाचार्यास्तु सुषुप्तिप्रलययोर्वैलक्षण्यमभिप्रेत्य पातञ्जलसूत्रानुसारेण सुप्तोत्थितस्य स्मरणेन भावभूताज्ञानविषयकं सौषुप्तं प्रत्यक्षं तादृशाज्ञाने प्रमाणमित्युक्तम्; तदेवात्र प्रकृतमिति विवरणाचार्याभिप्रायं दर्शयति—विवरणकारैस्तु इति । अभावप्रत्ययालम्बना वृत्तिर्निद्रेति [पा० सू० १।१०] पातञ्जलसूत्रस्य व्यासभाष्ये—सा च सम्प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः कथं सुखमहमस्वाप्समित्यादि स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्यादसति प्रत्ययानुभवे । तदाश्रिताः स्मृतयश्च तद्विषया न स्युः तस्मात् प्रत्ययविशेषो निद्रा इत्युक्तम् । विवृतञ्च तत्त्ववैशारद्याम्—जाग्रत्स्वप्नवृत्तीनामभावस्तस्य प्रत्ययः कारणं बुद्धिसत्त्वाच्छादकं तमस्तदेवालम्बनं विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा । सा च सुषुप्तिकालमात्रस्थायिनी । आच्छादकत्वसाम्येन अज्ञानस्यैव तमःपदेन निर्देशः कृतः । त्रिगुणात्मिकायाः प्रकृतेर्गुणद्वयात् विविच्य तमोगुणमात्रस्य ग्रहणमशक्यम् । विषयाकारवृत्त्युपरक्तं चैतन्यमेव विषयज्ञानम् उपरञ्जकवृत्तेर्नाशे उपरक्तचैतन्यमपि नश्यति तथा च निद्राख्यायाः वृत्तेर्नाशे तदुपरक्तं चैतन्यमपि नश्यति; वृत्तेर्नाशे

अत एवोक्तं वार्तिककारैरुषस्तिब्राह्मणे—'न चेदनुभवव्याप्तिः सुषुप्तस्याभ्युपेयते। नावेदिषं'सुषुप्तोऽहमिति धीः किं बलाद्भवेत् ॥'
[बृह० वा० ३।४।१०३ श्लो०]
इत्यादि। अभिप्रायस्तु वर्णितः। एवं च साक्ष्यज्ञानसुखाकारास्तिस्रोऽविद्यावृत्तयः सुषुप्ताख्यैकैव वा वृत्तिरित्यन्यदेतत्। निर्विकल्पकस्यापि स्मरणजनकत्वम्। अहंकारोपरागकालीनत्वाभावेन तत्तानुल्लेख इत्यादि सर्वमुपपादितमस्माभिः सिद्धान्तबिन्दौ। तस्मात् सौषुप्तानुभवोऽपि भावरूपाज्ञानविषय इति सिद्धम् ॥४७॥

इत्यद्वैतसिद्धौ अज्ञानप्रत्यक्षत्वोपपत्तिः।

---

नाम कारणात्मना अव्यक्तरूपेणवस्थानम्; स एव संस्कारः; संस्कारात् स्मरणम्; तथा च सुषुप्तौ अज्ञानानुभवात् वृत्तेर्नाशे अनुभवनाशात् संस्कारः ततः स्मरणम्। तथा च पातञ्जलमतमभ्युपेत्य विवरणकृद्भिः सुप्तोत्थितस्य स्मरणं प्रदर्शितम्। अतो न वार्तिकविवरणयोर्विरोधः, उभयोर्दृष्टिवैलक्षण्यात्।

वार्तिककृद्भिरपि पातञ्जलमतमनुसृत्य निद्राख्या वृत्तिरन्यत्राङ्गीकृता, तेन वार्तिकविवरणयोः सर्वथा अविरोध एव इत्याह मूले—अत एवोक्तं वार्तिककारैरुषस्तब्राह्मणे—

"न चेदनुभवव्याप्तिः सुषुप्तस्याभ्युपेयते।
नावेदिषं सुषुप्तोऽहमिति धीः किं बलाद् भवेत्।
[बृह० वा० ३।४।१०३ श्लो०]

इत्यादि अभिप्रायस्तु वर्णित एव। एवञ्च साक्ष्यज्ञानसुखाकारास्तिस्रोऽविद्यावृत्तयः सुषुप्ताख्या एकैव वा वृत्तिरित्यन्यदेतत्। निर्विकल्पकस्यापि स्मरणजनकत्वम्। अहंकारोपरागकालीनत्वाभावेन तत्तानुल्लेख इत्यादि सर्वमुपपादितमस्माभिः सिद्धान्तबिन्दौ। तस्मात् सौषुप्तानुभवोऽपि भावरूपाज्ञानविषय इति सिद्धम्।

इत्यद्वैतसिद्धौ अज्ञानप्रत्यक्षत्वोपपत्तिः।

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ इत्यादि बृहदारण्यके तृतीयाध्याये चतुर्थब्राह्मणे आम्नातम्; तत्रत्यभाष्यवार्तिके न चेदनुभवव्याप्तिरित्युक्तम्

[भाष्यवार्तिकम्, १०३ श्लो०]। सुप्तोऽहं न किञ्चिदवेदिषम् इति धीः अज्ञानांशे स्मृतित्वेनानुभूयमाना धीः स्मरणमित्यर्थः। सुषुप्तौ निद्रावृत्तेरननुभवे प्रदर्शितं स्मरणं न स्यात्। सुषुप्तस्य यदि निद्राया अनुभवव्याप्तिर्न स्यात्, अनुभूयमाना न स्यात्, तदा सुप्तोत्थितस्य न किञ्चिदवेदिषमितिस्मरणं लोकसिद्धं किं बलाद् भवेत्, न स्यादित्यर्थः; अनुभवाभावे स्मरणमपि न स्यादित्यर्थः। सुप्तोत्थितस्य स्मरणोपपत्तये निद्रावृत्तिरङ्गीकरणीयैव। वार्तिककृतो निद्रावृत्तेरङ्गीकारानङ्गीकारयोरयमाशयः—उपनिषत्पुराणादिषु सुषुप्तेर्दैनन्दिनप्रलयत्वेन व्यवहारो वर्तते। अतः सुषुप्तेः प्रलयसाम्यं रक्षितुं कुत्रचित् निद्रावृत्तेरनङ्गीकारो वार्तिककृतः। लौकिकानुभवस्वारस्यरक्षणार्थं निद्रावृत्तेरङ्गीकारोऽपि वार्तिककारस्य युज्यते। अत एवोक्तम्, अभिप्रायस्तु वार्तिककारस्य वर्णित एव। उक्तञ्च विवरणकृता अज्ञानगतचैतन्याभासजन्मोपाधित्वात् अज्ञानसुखसाक्षिविकल्पानुभवस्य। [विवरणम्, पृ०, ३२५, मेट्रोपलिटनमुद्रणालयसंस्करणम्]। विवृतञ्चैतत् तत्त्वदीपने—अज्ञानं स्वसुखसाक्ष्याकारेण परिणमते। तत्र च परिणताज्ञाने चैतन्याभास उपजायते इति विवरणमतमनुसृत्यैवाचार्येण सुषुप्तौ साक्ष्याकारा अज्ञानाकारा सुखाकारा तिस्रोऽविद्यावृत्तयो अङ्गीकृताः। लाघवात् पातञ्जलसिद्धान्तमनुसृत्य सुषुप्त्याख्या एकैव वा समूहालम्बनात्मिका वृत्तिरित्युक्तम्। सुषुप्तौ अन्तःकरणाभावात् सविकल्पकवृत्तिर्न भवितुमर्हति। अतोऽज्ञानविषयकः निर्विकल्पकोऽनुभवस्तदा जातः। निर्विकल्पकानुभवस्य च संस्कारानाधायकत्वेन स्मरणाजनकत्वात्। कथं सौषुप्तानुभवजन्य-स्वरूपतोऽज्ञानस्य स्मरणमिह प्रदर्शितम्? तत्राह—निर्विकल्पकस्यापि स्मरणजनकत्वम्। उक्तञ्च तत्त्वचिन्तामणौ—शुद्धाकाशशक्तत्वरूपेण ज्ञातात् आकाशपदात् शुद्धाकाशस्यैव निर्विकल्पकं स्मरणं भवति। उक्तञ्च शक्तिवादे गदाधरभट्टाचार्येण—अस्तु वा पदादपि निर्विकल्पकमिति। अतो निर्विकल्पकस्मृतिः मणिकारादीनामपि सम्मता। निर्विकल्पकानुभवस्य सविकल्पकानुभवस्येव स्मृतिजनकत्वे बाधकाभावः। सप्रकारकज्ञानं प्रति अहंकारस्य हेतुत्वात् सुषुप्तौ तदभावात् सौषुप्तज्ञाने तद्देशकालसम्बन्धरूपतत्ताप्रकारकत्वाभावात् तज्जन्यस्मृतावपि न तत्तोल्लेखः। एतत् सर्वमुपादितं सिद्धान्तबिन्दाविति दशश्लोकीटीकायां "सिद्धान्तबिन्दौ अष्टमश्लोक-

विवरणे मधुसूदनसरस्वतीश्रीचरणैः सुप्तोत्थितस्य स्मरणे तत्तानुल्लेखादिकं सर्वं सप्रपञ्चं निरूपितम्। सिद्धान्तविन्दौ सुप्तोत्थितस्य स्मरणे तत्तानुल्लेखस्य कारणमेतदुक्तम्—अन्तःकरणोपरागकाले अर्थात् अन्तःकरणस्य विद्यमानतादशायां योऽनुभवो जायते तज्जन्यस्मृतावेव तत्तोल्लेखः। सुषुप्तौ अन्तःकरणस्य विलयात् सुषुप्तिकालीनोऽनुभवः नान्तःकरणोपरागकालीनः। अतः सौषुप्तानुभवजन्यस्मृतौ तत्ताया अनुल्लेखो भवति। तस्मात् सौषुप्तानुभवोऽपि भावरूपाज्ञानविषय इति सिद्धम् ॥४७॥

इतिश्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यामज्ञानप्रत्यक्षत्वोपपत्तिविवरणम्।

## अथ अज्ञानवादे अनुमानोपपत्तिः ।

अनुमानमपि तत्र विवरणोक्तं प्रमाणम्। 'विवादपदं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्,

१—अनाद्यज्ञानं भावरूपं ज्ञाननिवर्त्यं स्वरूपतः साक्षिप्रत्यक्षसिद्धमित्युक्तम् । विवरणाचार्येण तादृशस्याज्ञानस्य साक्षिसिद्धत्वं प्रदर्श्य पुनस्तादृशाज्ञानसिद्धये अनुमानार्थापत्त्यागमप्रमाणानि प्रदर्शितानि । तादृशाज्ञानं यदि अनुमानादिप्रमाणसिद्धं स्यात्तदा अज्ञानस्य पारमार्थिकत्वापत्तिर्भवेत्, यथा आत्मा प्रमाणसिद्धत्वात् पारमार्थिकः, एवमज्ञानमपि पारमार्थिकं भवेत् पारमार्थिकस्याज्ञानस्य विनाशासम्भवात् शास्त्रारम्भवैयर्थ्यम् । एतस्याः शंकायाः समाधानमविद्यायाः प्रतीत्युपपत्तिप्रकरणे सुविशदं प्रतिपादयिष्यते । वस्तुतस्तु अज्ञानस्वरूपमेव साक्षिमात्रसिद्धं न तु प्रमाणसिद्धम् । अज्ञानस्वरूपं यत् साक्षिमात्रसिद्धं तदुक्तमेव प्राक् । इदानीमज्ञाने अनुमानप्रमाणं प्रदर्श्यते । अनेनानुमानेन अज्ञानस्वरूपं न सिद्ध्यति । अज्ञानस्वरूपं तु साक्षिमात्रसिद्धम् । साक्षिसिद्धेऽपि अज्ञाने अनुमानादिप्रमाणोपन्यासस्यायमभिप्रायः—यत् साक्षिणाऽज्ञानस्वरूपं सिद्धमपि तस्मिन् साक्षिसिद्धेऽज्ञाने अभावभिन्नत्वानादित्वज्ञाननिवर्त्यत्वादीनां न साक्षिसिद्धत्वम् । साक्षिसिद्धाज्ञानस्य अनादित्वादिसिद्धये अनुमानादिप्रमाणानामुपन्यासः । अनुमानादिप्रमाणानि यथा न अज्ञानस्वरूपसाधकानि तदुक्तं विवरणे [विवरणम्, पृ०, ४३, विजयनगरसंस्करणम्] वार्तिककारा अपि—

"अविद्याया अविद्यात्वे इदमेव तु लक्षणम् ।
मानापातासहिष्णुत्वमसाधारणमिष्यते ॥"

[सम्बन्धवार्तिकम् पृ०, ५७, १८१ श्लो०] मानापातासहिष्णुत्वं प्रमाणविषयत्वमिति यावत् । प्रमाणमज्ञातज्ञापकं भवति । अज्ञानस्य साक्षिवेद्यत्वात् तस्याज्ञातसत्ता नास्ति । यथा साक्षिभास्यसुखादीनामज्ञातसत्ता नास्ति अज्ञानस्य ये धर्मा अभावविलक्षणत्वादयस्ते साक्षिणा न सिध्यन्ति, अतस्तेऽज्ञाता । अतोऽज्ञाताज्ञानधर्माणां सिद्धये अज्ञातज्ञापकं प्रमाणमुपन्यस्यते इत्याह—अनुमानमपि तत्र विवरणोक्तं प्रमाणम् ।

अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदि'ति। अत्र प्रमाणपदं प्रमाणवृत्तेरेव पक्षत्वेन सुखादिप्रमायां साक्षिचैतन्यरूपायामज्ञानानिवर्तिकायां बाधवारणाय। धर्म्यंशप्रमाणवृत्तेरिदमित्याकाराया अज्ञानानिवर्तिकायाः पक्षबहिर्भावाय विवादपदमिति विशेषणम्। विशेषाकारप्रमाणवृत्तिरिति फलितोऽर्थः ॥१॥

---

विवरणाचार्यैस्तु "अविद्यासिद्धये एवमनुमानं प्रदर्शितम्—विवादपदं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्; अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति। [विवरणम्, पृ०, १३, विजयनगर सं०]। अस्मिन् अनुमानप्रयोगे विवादपदं प्रमाणज्ञानमिति पक्षः, स्वप्रागभावव्यतिरिक्तेत्यादि साध्यम्, अप्रकाशितार्थप्रकाशकत्वादिति हेतुः, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति दृष्टान्तः। अनेन अनुमानेन प्रमाज्ञानमात्रम् अज्ञाननिवर्तकमिति सिध्यति। प्रमाज्ञानं स्वप्रागभावस्यापि निवर्तकम्, ज्ञानप्रागभावोऽपि अज्ञानपदेनैवोच्यते। अतः प्रमायाः स्वप्रागभावरूपाज्ञाननिवर्तकत्वसिद्धावपि अद्वैतवाद्यभिमतभावरूपाज्ञानं न सिध्यति। अतः साध्ये प्रागभावव्यतिरिक्तेति विशेषणम्। प्रदर्शितसाध्ये यानि विशेषणानि उपात्तानि तान्यद्वैतवाद्यभिप्रेताज्ञानसिद्धये एवोपात्तानि। अद्वैतमते अज्ञानस्य ज्ञानप्रागभावभिन्नत्वात्, एवमज्ञानस्य प्रमाज्ञानविषयावरणरूपत्वात्; प्रमाज्ञाने उत्पन्ने प्रमाविषयावरकमज्ञानं निवृत्तं भवति। अतः अज्ञानं स्वसमानविषयकं प्रमाज्ञाननिवर्त्यं भवति। प्रमाज्ञानं यत्र उत्पद्यते, प्रमोत्पत्तेः प्राक् तत्रैवाज्ञानं तिष्ठति। अतो अज्ञानं प्रमासमानविषयकं समानदेशञ्च सिध्यति। एतादृशाज्ञानसिद्धये साध्यविशेषणान्युपात्तानि।

अत्र प्रमाणपदं प्रमाणवृत्तेरेव पक्षत्वेन सुखादिप्रमायां साक्षिचैतन्यरूपायामज्ञानानिवर्तिकायां बाधवारणाय। धर्म्यंशप्रमाणवृत्तेरिदमित्याकाराया अज्ञानानिवर्तिकायाः पक्षबहिर्भावाय विवादपदमिति विशेषणम्। विशेषाकारप्रमाणवृत्तिरिति फलितोऽर्थः। ज्ञानमित्येवपक्षनिर्देशमकृत्वा प्रमाणज्ञानस्यैव पक्षत्वेन निर्देशे कारणमाह—अत्र प्रमाणपद-

मिति । अत्र प्रमाणपदं भाववाच्ये निष्पन्नम्, ततः प्रमाज्ञानमित्येव पक्षः । प्रमावृत्तेरेव पक्षत्वेन निर्देशस्तु सुखादिप्रमायां 'साक्षिचैतन्यरूपायाम् अज्ञाना-निवर्तिकायाम् अंशतो बाधवारणाय । प्रमामात्रस्य पक्षत्वेन सुखादिप्रमापि पक्षान्तर्गता । सुखादिप्रमा तु साक्षिचैतन्यरूपा । साक्षिणोऽज्ञाननिवर्तकतया साक्षिभास्येऽज्ञानासम्भवाच्च सुखादिप्रमा अज्ञाननिवर्तिका न भवति । अतः सुखादिप्रमायामज्ञाननिवर्तकत्वरूपसाध्याभावादंशतो बाधः स्यात् । अतः प्रमाण जन्यान्तःकरणवृत्तिरूपा प्रमाऽत्र पक्षत्वेन निर्दिश्यते । सुखादिप्रमा तु न प्रमाण-जन्यान्तःकरणवृत्तिरूपा, किन्तु नित्यसाक्षिचैतन्यरूपा । अतः सुखादिप्रमायाः पक्ष-बहिर्भावाय प्रमाणजन्यान्तःकरणवृत्तेरेव पक्षत्वेन निर्देशः । सुखादिप्रमाया अज्ञानानि-वर्तकत्वे तस्याः प्रमात्वं कुत इति चेत्, अबाधितार्थकत्वेनेति गृहाण । यथा शुक्तौ रजतज्ञानं बाधितार्थकम्, नैवं सुखादिज्ञानं व्यवहारदशायां बाधितविषयकं भवति । अतोऽबाधितविषयकत्वेन सुखादिज्ञानस्य प्रमात्वे न व्यवहारः ।

प्रमामात्रमज्ञातविषयकमिति न वेदान्तिनां दुराग्रहमात्रम् । भगवता जैमिनि-नापि "अर्थेऽनुपलब्धेः" [जैमिनिसूत्रम् १।१।५७] इति सूत्रेण अज्ञातविषयज्ञान-स्यैव प्रमात्वमुक्तम् । अज्ञातविषयकज्ञानस्य प्रमात्वं न केवलं पूर्वमीमांसकसम्मतं किन्तु बादरायणस्यापि सम्मतम्, यतस्तस्मिन्नेव सूत्रे जैमिनिना "बादरायणस्यान-पेक्षत्वादि"ति [जैमिनिसूत्रम्, १।१।५] उक्तम् । अतः, अद्वैतवेदान्तिनोऽपि अज्ञातविषयकज्ञानस्यैव प्रमात्वमभ्युपगच्छन्ति । ज्ञानस्य अज्ञातविषयकत्वं विषयविषयकाज्ञाननिवर्तकत्वमित्यर्थः । पक्षे विवादपदमिति विशेषणोपादानफल-माह—धर्म्यंशेति । शुक्तिरजतादिभ्रमेऽधिष्ठानशुक्त्यादिगतसामान्यांशगोचरा इदमाकारा अन्तःकरणवृत्तिः प्रमारूपा जायते । रजताद्याकारा अविद्यावृत्तिरिति शुक्तिरजतादिभ्रमे वृत्तिद्वयं जायते इति स्थितिः । तत्रेदमाकाराया अपि वृत्तेः प्रमात्वेऽपि तस्या अज्ञाननिवर्तकत्वं नास्ति । धर्मिणि सर्वमभ्रान्तप्रकारे तु विपर्ययः इति स्थितेः । धर्मिमात्रगोचरभ्रमसंशययोरभावेन धर्मिमात्रगोचरमज्ञानमेवाप्रसिद्धम् । अतो भ्रमे धर्म्यंशप्रमाणवृत्तेरिदमाकारोया अज्ञानानिवर्तकत्वात् । प्रमाणज्ञानपदेन तस्या अपि पक्षत्वेन ग्रहणे अंशतो बाधः स्यादतो विवादपदं पक्षविशेषणमुपात्तम् । अज्ञाननिवर्तकत्वानिवर्तकत्वाभ्यां विवादास्पदं यत् प्रमाणज्ञानं तदेव पक्षत्वेनाभि-

परोक्षप्रमाया अप्यसत्त्वावरणरूपप्रमातृगताज्ञाननिवर्तकत्वात् न तदंशेऽपि बाधः। नन्विदमिति प्रमाणवृत्तेरज्ञानानिवर्तकत्वे अज्ञातज्ञापकत्वरूपप्रमात्वेन व्यवहारो न स्यात्, न; इदमाकारभ्रमसंशया-

---

प्रेतम्। अमे धर्म्यंशप्रमाणवृत्तेरज्ञानानिवर्तकत्वं वादिप्रतिवादिनोर्द्वयोरेव सम्मतमिति न तादृशं प्रमाणज्ञानं विवादपदम्; अतो धर्म्यंशप्रमाणज्ञानस्य पक्षबहिर्भावाय विवादपदमिति पक्षविशेषणम्; अन्यथा अंशतो बाधः स्यादित्यर्थः। कीदृशं प्रमाणज्ञानम् अस्मिन्ननुमाने पक्षत्वेन निर्दिष्टमिति जिज्ञासायां तन्निष्कृष्य दर्शयति—विशेषाकारप्रमाणवृत्तिरिति फलितोऽर्थः। सामान्याकारप्रमाणवृत्तिभिन्ने-त्यर्थः। विशेषविषयिणी प्रमामात्रम् अज्ञाननिवर्तकमिति कृत्वा तदेव अस्मिन्ननुमाने पक्षत्वेन निर्दिष्टम् ॥१॥

२—प्रमाणज्ञानमात्रस्य पक्षत्वे परोक्षप्रमायाम् अज्ञानानिवर्तिकायां पुनरपि बाधः स्यादिति पूर्वपक्षिशंकायाः समाधानायाह—**परोक्षप्रमाया अपि असत्त्वावरणरूपप्रमातृगताज्ञाननिवर्तकत्वात् न तदंशेऽपि बाधः।** परोक्षप्रमाया विषयगताभानापादकाज्ञानानिवर्तकत्वेऽपि प्रमातृगतासत्त्वापादकाज्ञाननिवर्तकत्वात् न अंशतो बाधः। अयं भावः—अज्ञानं द्विविधं विषयस्य असत्त्वापादकमज्ञानं प्रमातृचैतन्यगतम्, विषयस्य नास्तीति व्यावहारजनकम्। एवं विषयं न जानामीति व्यवहारस्यापि। अन्यदज्ञानं पुनर्विषयस्य अभानापादकं विषयावच्छिन्नचैतन्यगतम्। विषयो न भाति न स्फुरतीति व्यवहारजनकम्। परोक्षप्रमया आद्यमज्ञानं निवर्तते। प्रत्यक्षप्रमया तु द्विविधमपि अज्ञानं निवर्त्यते। अतः परोक्षप्रमाया अपि अज्ञान-निवर्तकत्वात् नांशतो बाधः।

धर्म्यंशप्रमाणवृत्तेरिदमाकाराया अज्ञानानिवर्तकत्वे प्रमात्वेन व्यवहारो न स्यात्, अज्ञातार्थविषयिण्या एव चित्तवृत्तेः प्रमात्वादिति शंकते—**नन्विदमिति प्रमाणवृत्तेरज्ञानानिवर्तकत्वेऽज्ञातज्ञापकत्वरूपप्रमात्वेन व्यवहारो न स्यात्।** अज्ञानं निवर्तयदेव ज्ञानं प्रमा स्यात्, अज्ञानानिवर्तकज्ञानस्य ज्ञानत्वमपि दुर्लभम्, ज्ञानविशेषरूपप्रमात्वं तु सुदुर्लभम्। अतः अज्ञानानिवर्तकेदं वृत्तेः प्रमात्वेन व्यवहारो न स्यात्। न च इष्टापत्तिर्दोषाजन्यत्वेन तस्याः वृत्तेः प्रमात्वस्य सर्वसम्मतत्वादिति।

दर्शनेन तद्गोचराज्ञानकल्पने मानाभावेन तत्र सुखादिज्ञानवद्यथार्थत्व-मात्रेण प्रमात्वव्यवहारोपपत्तेः। यदाहुः—'धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्ययः' इति ॥२॥

यदि तु भ्रमसंशयाजनकमपि तदाकारमज्ञानमनुभवबलादास्थीयेत, तर्हि सापि पक्षेऽन्तर्भवतु प्रमाणवृत्तित्वावच्छेदेनैवाज्ञाननिवर्तकत्वान-पायात्, तदा च विवादपदमिति विशेषणमनादेयम्। एतस्मिन् पक्षे

---

भ्रमोपादानत्वमज्ञानस्य द्वितीयलक्षणमुक्तम्; सामान्यमात्रविषयकभ्रमसंशय-योरदर्शनेन सामान्यमात्रविषयकाज्ञाने प्रमाणाभावाद् इदमाकारवृत्तेरज्ञाननाशकत्वा-भावेऽपि, यथार्थत्वमात्रेण प्रमात्वव्यवहारादित्याह—न इदमाकारभ्रमसंशया-दर्शनेन तद्गोचराज्ञानकल्पने मानाभावेन तत्र सुखादिज्ञानवद् यथार्थ-त्वमात्रेण प्रमात्वव्यवहारोपपत्तेः यदाहुः—धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्ययः इति। धर्मिमात्रगोचरभ्रमसंशययोरभावात् तदुपादानत्वेन धर्मिमात्र-गोचरम् अज्ञानं न कल्प्यं मानाभावात्। अत एव तार्किकाः धर्मिज्ञानस्य स्वतः प्रमात्वमाहुः। धर्म्यंशे भ्रमस्यापि यथार्थत्वमन्यथाख्यातिवादिभिरप्यभ्युपगम्यते [परिशुद्धिप्रकाशे, पृ०,४१७] इत्युक्तम्। सुखादिप्रत्यक्षं साक्षिरूपमिति साक्षिभास्ये सुखादौ, अज्ञानासम्भवेऽपि यथार्थत्वमात्रेण सुखसाक्षात्कारस्य प्रमात्वव्यवहारवत् इदमाकारधर्मिज्ञानस्यापि यथार्थत्वेन प्रमात्वव्यवहारः; वस्तुतस्तु अज्ञानानिवर्तक-ज्ञानस्य प्रमात्वं नास्त्येव इति भावः। तथा च गौणोऽयं प्रमात्वव्यवहार इति न्यायलीलावत्युक्त्या स्वपक्षं द्रढयन्नाह—धर्म्यंशे इति। धर्म्यंशे स्वतः प्रमात्वस्य[मुद्रितन्यायपरिशुद्धौ ११९ पृष्ठे] तत्त्वप्रदीपिकायाम्, १२५ पृष्ठे, स्पष्टत्वात् ॥२॥

३—यदि तु भ्रमोपादानत्वयोग्यत्वमेवाज्ञानलक्षणम् अङ्गीक्रियते तदा धर्मि-विषयकाज्ञानस्य संशयाद्यजनकत्वेऽपि भ्रमजननयोग्यत्वमस्त्येव इति धर्मिविषयका-ज्ञानाभ्युपगमेऽपि न दोषः इदमज्ञातमिदं ज्ञातमिति व्यवहारदर्शनाच्च धर्मिविषय-कमज्ञानं स्वीक्रियते एव, तदा विवादपदं पक्षविशेषणमनुपादेयमेव इत्याह—यदि तु भ्रमसंशयाजनकमपि तदाकारमज्ञानमनुभवबलादास्थीयेत, तर्हि सापि पक्षेऽन्तर्भवतु प्रमाणवृत्तित्वावच्छेदेनैव अज्ञाननिवर्तकत्वा-

भ्रमोपादानत्वयोग्यत्वमविद्यालक्षणं द्रष्टव्यम्; भ्रमोपादानत्वस्य धर्म्यंशज्ञाननिवर्त्याज्ञानेऽव्याप्तेरित्यवधेयम् ॥३॥

धारावाहिकबुद्धीनां च तत्तत्कालावच्छिन्नार्थविषयत्वेनाज्ञातज्ञापकत्वमस्त्येव; कालस्य सर्वप्रमाणवेद्यत्वाभ्युपगमात्। अनात्माकारप्रमाणवृत्तीनां च तत्तदवच्छिन्नचैतन्यविषयत्वेन स्वविषयावरणनिवर्तकत्वमस्त्येव; चित्त्वेनैव प्रकाशप्रसक्तेः; न त्वनवच्छिन्नचित्त्वेन, गौरवात्; 'एतावन्तं कालं मया न ज्ञातोऽयमिदानीं ज्ञात' इत्यनु-

---

नपायात्। तदा च विवादपदमिति विशेषणमनादेयम् एतस्मिन् पक्षे भ्रमोपादानत्वयोग्यत्वमविद्यालक्षणं द्रष्टव्यम्। भ्रमोपादानत्वस्य धर्म्यंशज्ञाननिवर्त्याज्ञानेऽव्याप्तेरित्यवधेयम्। [यदि] इदमज्ञातमित्यनुभवबलात् इदं विषयकमज्ञानं भ्रमाद्यजनकमपि अङ्गीक्रियेत तर्हि इदमकारा अन्तःकरणवृत्तिः प्रमारूपा अस्मिन्ननुमाने पक्षेऽन्तर्भवतु। नास्मिन्नंशे बाधशंकापि इदमाकाराया प्रमावृत्तेरपि अज्ञाननिवर्तकत्वाङ्गीकारात्। तथा च सर्वापि प्रमावृत्तिरज्ञाननिवर्तिकेति इदमाकारान्तःकरणवृत्तेः पक्षबहिर्भावाय विवादपदमिति पक्षविशेषणमनादेयम्। धर्मिविषयकप्रमाया अज्ञाननिवर्तकत्वपक्षे तदज्ञानं भ्रमानुपादानमपि भ्रमोपादानत्वयोग्यं भवत्येव। सहकारिविरहप्रयुक्तफलानुपधायकत्वात्। भ्रमोपादानाज्ञाने विद्यमानेऽपि भ्रमस्य सहकारिकारणान्तरासम्मेलनात् भ्रमरूपफलस्य अनुदय इति भावः। योग्यतामनुक्त्वा भ्रमोपादानत्वमेव यदि अज्ञानलक्षणं स्यात्तर्हि धर्मिगोचराज्ञानाभ्युपगमपक्षे अस्मिन् अज्ञाने लक्षणस्य अव्याप्तिरेव स्यात्। अत एतस्मिन् पक्षे भ्रमोपादानत्वयोग्यत्वमेव अज्ञानलक्षणं बोध्यम् ॥३॥

४—धारावाहिकप्रत्यक्षप्रमायाम् अंशतो बाधवारणाय तत्तज्ज्ञानोत्पत्त्यधिकरणकालावच्छिन्नविषयकत्वेन धाराप्रत्यक्षस्यापि अज्ञाननिवर्तकत्वमस्त्येव इत्याह—

धारावाहिकबुद्धीनाञ्च तत्तत्कालावच्छिन्नार्थविषयकत्वेन अज्ञातज्ञापकत्वमस्त्येव। कालस्य सर्वप्रमाणवेद्यत्वाभ्युपगमात्। अनात्माकारप्रमाणवृत्तीनां च तत्तदवच्छिन्नचैतन्यविषयत्वेन स्वविषयावरणनिवर्तकत्वंमस्त्येव। चित्त्वेनैव प्रकाशप्रसक्तेः। न तु अनवच्छिन्नचित्त्वेन गौरवात् एतावन्तं कालं मया न ज्ञातोऽयमिदानीं ज्ञात

भवाच्च। रूपादिहीनस्यापि तत्तदवच्छिन्नचैतन्यस्य प्रत्यक्षादिविषयत्व-मुक्तं प्राक्। प्रतिकर्मव्यवस्थामभ्युपगम्य चेदमनुमानम्, न तु दृष्टि-सृष्टिपक्ष इति ध्येयम्। साध्ये चाद्यं विशेषणम्, प्रतियोग्यतिरिक्ता

---

इत्यनुभवाच्च। रूपादिहीनस्यापि तत्तदवच्छिन्नचैतन्यस्य प्रत्यक्षादि-विषयत्वमुक्तं प्राक्। प्रतिकर्मव्यवस्थामभ्युपगम्य चेदमनुमानं न तु दृष्टिसृष्टिपक्षे इति ध्येयम्। धारावाहिकप्रत्यक्षप्रमायाम् अंशतो बाधवारणाय धाराबुद्धीनाम् अगृहीतग्राहित्वं साधयति तत्तत्कालावच्छिन्नविषयकत्वेनेति। परोक्षज्ञानस्य धारा न सम्भवति, परोक्षज्ञानकरणस्य ज्ञानस्य आशुतरविनाशित्वात्। अतः प्रत्यक्षस्यैव धारा अङ्गीकरणीया। सन्निकर्षस्य कदाचित् स्थिरत्वसम्भवात्। ज्ञानं स्वसामग्रीमहिम्नैव स्वोत्पत्त्यधिकरणकालावच्छिन्नं वस्तु विषयीकरोति। न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते इति मीमांसकस्थितेः नैयायिका अपि इमं सिद्धान्तं सहस्तयति। उक्तञ्च परिशुद्धिप्रकाशे वर्धमानोपाध्यायैः— अस्मत्पितृचरणास्तु इत्युक्त्वा प्रतीतेः समयविशेषविषयत्वनियमात्। ज्ञानसामग्री-महिम्ना च अननुभूतेऽपि समयांशे स्मृतिर्न तत्र संस्कारो व्यापारोऽन्यथासिद्ध-त्वादिति परिशुद्धिप्रकाशः, पृ०, १६४। तथा च धारावाहिकद्वितीयादि-ज्ञानानामपि तत्तज्ज्ञानोत्पत्त्यधिकरणक्षणावच्छिन्नविषयकत्वेन अज्ञातज्ञापकत्वात् प्रमात्वम्। कालस्य सर्वज्ञानवेद्यत्वनियमात्। प्रमाज्ञानस्य अत्र प्रकृतत्वात् सर्वप्रमाणवेद्यत्वं कालस्योक्तम्। भ्रमज्ञानवेद्यत्वमपि कालस्य वर्तते। अन्यथा शुक्तौ रजतानुभववत् रजतस्य वर्तमानत्वसंशये प्रवृत्तिर्न स्यात्। जडस्य अज्ञानविषयत्वानभ्युपगमात् जडविषयकप्रमाणाम् अज्ञाननिवर्तकत्वं न स्यात्। उक्तश्च विवरणे अज्ञानं जडं नावृणोति; किन्तु चैतन्यमेव प्रसक्तप्रकाशमिति। तथा च जडविषयकप्रमायाः पक्षत्वेन तत्रांशतो बाधः स्यादिति आशंक्य अनात्माकारप्रमाणवृत्तीनां वेति उक्तम्; अनात्माकारप्रमाणवृत्तीनां जडविषयक-प्रमावृत्तीनामित्यर्थः। तत्तज्जडावच्छिन्नचैतन्यविषयकत्वेन चैतन्यस्य अज्ञानावृत-त्वात् जडवृत्तीनामपि जडावच्छिन्नचैतन्यावरकाज्ञाननिवर्तकत्वमस्त्येव इति नांशतो बाधः। न च अनवच्छिन्नचैतन्यमेवाज्ञानावृतम्, न अवच्छिन्नचैतन्यमिति वाच्यम्; अवच्छिन्नानवच्छिन्नसाधारणचैतन्यमात्रस्य प्रसक्तप्रकाशस्य अज्ञानावृतत्वात्

चिन्मात्रमेव प्रसक्तप्रकाशं तद् यदि अज्ञानावृतं न स्यात् सर्वदा प्रकाशेत। चित्त्वेन अज्ञानावृतत्वमपरिकल्प्य अनवच्छिन्नचित्त्वेन अज्ञानावृतत्वकल्पने गौरवात्। अनवच्छिन्नत्वविशेषणं वृथा गौरवकरमुपात्तं स्यादिति। न च कालस्य सर्वज्ञानवेद्यत्वेऽपि क्षणलवादयः सूक्ष्मकालांशा न ज्ञानवेद्याः इति वाच्यम्; एतस्मिन्नेव क्षणे मया अयं ज्ञात इति सर्वानुभवसिद्धत्वात् क्षणोऽपि ज्ञानवेद्य एव। उक्तञ्च शास्त्रदीपिकायाम्—सन्नपि कालभेदो अति सूक्ष्मत्वात् न परामृश्यते इति चेत् अहो सूक्ष्मदर्शी देवानां प्रियः, यो हि समानविषयया विज्ञानधारया चिरमवस्थाय अपरतः सोऽनन्तरक्षणसम्बन्धितया अर्थं स्मरति• किमत्र घटोऽवस्थितः इति पृष्टः कथयति अस्मिन् क्षणे मया उपलब्ध इति [शास्त्रदीपिका, पृ०, २९, काशी मेडिकेलहॉलप्रेससंस्करणम्] रूपादिहीनस्यापि तत्तज्जडावच्छिन्नचैतन्यस्य प्रत्यक्षत्वविषयत्वमुक्तं प्राक्—सन् घट इति प्रत्यक्षेऽधिष्ठानानुवेधप्रकरणे—न च चाक्षुषादिज्ञाने रूपादिहीनस्य ब्रह्मणः कथं स्फुरणमिति वाच्यम्, रूपादिहीनस्यापि कालादिन्यायेन स्फुरणस्य प्रागेवोक्तत्वादिति। [अ०सि०, पृ०, ३५२, निर्णयसागरसंस्करणम्] उक्तञ्च परिच्छिन्नत्वहेतूपपादने "कालस्य च रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमात्" इत्यादिना; पुनश्च तत्रैव "यद्वा द्रव्यग्रहे चक्षुषो रूपापेक्षा न तु अन्यग्रहे, ब्रह्म तु न द्रव्यं अस्थूलमनण्वह्रस्वमदीर्घमिति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात्" इत्यादिना [अ०सि०, पृ०, ३१८] रूपादिहीनस्यापि ब्रह्मणः सर्वेन्द्रियवेद्यत्वेन रूपाद्यपेक्षाया अभावात् नियतेन्द्रियवेद्यद्रव्यस्यैव प्रत्यक्षे रूपस्पर्शयोरपेक्षा न तु सर्वेन्द्रियवेद्ये ब्रह्मणीति भावः। विषयस्य अज्ञातसत्त्वमभ्युपगम्य प्रतिकर्मव्यवस्था प्रदर्शिता। न दृष्टिसृष्टिपक्षे इत्युक्तं तत्रैव। इदमपि अनुमानं प्रतिकर्मव्यवस्थाभ्युपगमपक्षे बोध्यम्, न दृष्टिसृष्टिपक्षे। एतत्पक्षे दृश्यमात्रस्य प्रातीतिकत्वेन अज्ञातसत्त्वाभावात्। न दृश्यस्य मानगम्यत्वं प्रातीतिकरजतादिवत् अतो दृष्टिसृष्टिपक्षे कस्यापि दृश्यस्य सिद्धये प्रमाणोपन्यास एव न स्यादिति भावः।

समाप्तम् अविद्यानुमाने विवरणीये पक्षनिर्वचनविवरणम्।

## विवरणीयाविद्यानुमाने साध्यनिर्वचनम्।

साध्यं तु स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्वदेशगत-

प्रागभावनिवृत्तिरिति मते प्रागभावेनार्थान्तरवारणाय। तदुदीच्यध्वंसादिकमादाय नार्थान्तरप्रसक्तिः, किंतु पूर्ववृत्त्यभावमादायेति वस्तुगतिमनुरुध्य प्राक्पदम्। अवैयर्थ्यं च प्रतियोगिविशेषणत्वेनाखण्डाभावसंपादकतया ॥४॥

---

वस्त्वन्तरपूर्वकमिति विशेषणचतुष्टयसमन्वितं वेदान्त्यभिमताज्ञानमन्येषां मते अप्रसिद्धमिति अज्ञानपदेन साध्यनिर्देशासम्भवात्; निर्देशेऽपि अर्थान्तरत्वप्रसङ्गाव; साध्ये विशेषणप्रक्षेपेण अर्थान्तरवारणद्वारा स्वाभिप्रेताज्ञानसिद्धिरित्यभिप्रेत्य अर्थान्तरवारकाणि चत्वारि विशेषणानि साध्ये निवेशितानि विवरणकृद्भिः। स्वप्रागभावव्यतिरिक्तेति विशेषणानुपादाने प्रमाप्रागभावमादाय अर्थान्तरता स्यात, तन्निवृत्त्यर्थम् आद्यं साध्यविशेषणम्। स्वविषयावरणेति द्वितीयविशेषणानुपादाने प्रमोत्पादकादृष्टमादाय अर्थान्तरता स्यात्; तन्निवृत्त्यर्थं साध्ये द्वितीयं विशेषणम्। एवं स्वनिवर्त्येति तृतीयविशेषणानुपादाने प्रमोत्पत्तिप्रतिबन्धकीभूतादृष्टमादाय अर्थान्तरता स्यात्; तन्निवृत्त्यर्थं साध्ये तृतीयं विशेषणम्। एवं स्वदेशगतेति चतुर्थविशेषणानुपादाने विषयगताज्ञातत्वधर्ममादाय अर्थान्तरता स्यात्, तन्निवृत्त्यर्थं साध्ये चतुर्थविशेषणम्। वस्त्वन्तरपदं प्रमानिवर्त्यजन्यभ्रममादाय अर्थान्तरतावारणाय। अन्यद् वस्त्विति वस्त्वन्तरम्, अत्र वस्तुपदेन जन्यभ्रमस्य ग्रहणम् तद्भिन्नम् वस्तु स्वाभिमतमज्ञानमित्यर्थः। विवरणाचार्येण भावाभावसाधारणमावरणमभ्युपेत्य इदमेकं साध्यं प्रदर्शितम्। अभावो यदि न विषयावरणं तदा अस्य साध्यस्य साध्यद्वये पर्यवसानं बोध्यम् स्वप्रागभावव्यतिरिक्तेतिविशेषणोपादाने स्वविषयावरणेति विशेषणं न देयम्। स्वविषयावरणेतिविशेषणोपादाने स्वप्रागभावव्यतिरिक्तेति विशेषणं न देयम्। एतत्सर्वं विशेषणकृत्यम् अग्रे स्फुटीभविष्यति; केवलं शिष्यबुद्धिसमाधानाय मया प्रागेव संकलितम्।

साध्यविशेषणानां कृत्यं दर्शयिष्यन् प्रथमतः प्रागभावव्यतिरिक्तेति विशेषणस्य प्रयोजनमाह—साध्ये चाद्यं विशेषणं प्रतियोग्यतिरिक्ता प्रागभावनिवृत्तिरिति मते प्रागभावेन अर्थान्तरवारणाय। तदुदीच्यध्वंसादिकमादाय नार्थान्तरप्रसक्तिः किन्तु पूर्ववृत्त्यभावमादायेति वस्तुगतिमनुरुध्य प्राक्पदम्। अवैयर्थ्यं च प्रतियोगिविशेषणत्वेन अखण्डाभाव-

संपादकतया। पूर्वपक्षी अस्य प्रथमविशेषणस्य वैयर्थ्यमाह स्वनिवर्तेति तृतीयविशेषणेनैव प्रागभावस्य व्यावृत्तत्वात् तद्वारकविशेषणमनुपादेयम्। यतः प्रतियोगी न प्रागभावस्य निवर्तकः, किन्तु प्रतियोग्येव प्रागभावस्य निवृत्तिरूपः। प्रमानिवर्त्यमज्ञानं प्रमाप्रागभावस्तु न प्रमानिवर्त्यः किन्तु प्रमैव प्रमाप्रागभावनिवृत्तिरूपेति तृतीयविशेषणेनैव प्रागभावस्य व्यावृत्तत्वात्, आद्यं विशेषणमनुपादेयमित्यत आह—प्रतियोग्यतिरिक्तेति। प्रतियोगी प्रागभावस्य निवर्तकः प्रागभावनिवृत्तिरूपो वेति मतद्वयं शास्त्रकृतां संमतम्। अतः प्रतियोगी स्वप्रागभावनिवर्तकः प्रतियोगी निवर्त्यः स्वप्रागभाव इति ये अभ्युपगच्छन्ति तन्मते स्वनिवर्त्यं प्रागभावमादाय अर्थान्तरं स्यात्; अतो अर्थान्तरता निवृत्तये आद्यं विशेषणम्। पूर्वपक्षी शंकते—प्रागभावस्य प्रतियोगिनिवर्त्यत्वेऽपि प्रागभावे अर्थान्तरतानिवृत्तये प्रागभावव्यतिरिक्तेत्यनुक्त्वा अभावव्यतिरिक्तेत्युक्तौ फलतः प्रागभावव्यावृत्तिसिद्धेः प्राक्पदं व्यर्थम्। समाधत्ते—तदुदीच्यध्वंसादिकमिति। प्रतियोग्युत्तरकालीनप्रतियोगिध्वंसादिकमादाय अर्थान्तरताप्रसक्तिरेव नास्ति। न हि प्रतियोग्युत्तरकालीनौ ध्वंसात्यन्ताभावौ प्रतियोगिनिवर्त्यौ संभवतः। किन्तु प्रतियोगिपूर्वकालीनं प्रतियोगिप्रागभावमादायैव अर्थान्तरता स्यादिति प्रतियोगिप्राक्कालीने एवाभावे अर्थान्तरतायाः प्रसक्तिरिति वस्तुस्थितिं बोधयितुमेव प्राक्पदं उपात्तम्। वस्तुस्थितिबोधनाय उपात्तं प्राक्पदं न व्यर्थम्, यतो अभावत्ववत् प्रागभावत्वस्यापि अखण्डोपाधित्वात् अखण्डोपाधेर्जातिवत् निरंशत्वात्, अंशविशेषवैयर्थ्यशङ्कैव नास्ति। प्रागभावप्रतियोगीत्यत्र प्रतियोगिविशेषणस्य अभावस्य प्रागभावरूपाखण्डाभावत्वसम्पादकतया प्राक्पदं सार्थकम्। अत्र प्रागर्थविशेषितो अभावो न निवेश्यते। किन्तु अखण्डोपाधिरूपं प्रागभावत्वं तदाश्रयः प्रागभावोऽत्र निवेशितः। वस्तुतस्तु हेतौ व्यर्थविशेषणसत्त्वे यथा व्याप्यत्वासिद्धिर्नैवं साध्ये व्यर्थविशेषणसत्त्वे, स्वाभिमतसिद्धये एव साध्ये विशेषणोपादानं तच्च प्रकृते अस्त्येव। प्रागभावत्वस्य अखण्डत्वादपि न व्यर्थविशेषणत्वशंकापीति। पूर्वपक्षी मन्यते तत्त्वनिर्णयफलकवादकथायां लघुनिर्देशेनैव स्वाभिप्रेतसिद्धौ गुरुनिर्देशो न युक्त इति सिद्धान्ती मन्यते—अभावत्वप्रागभावत्वयोर्द्वयोरेवाखण्डोपाधित्वात् लघुगुरुभाव एवात्र न संभवतीति भावः ॥४॥

एतेन—यतो ज्ञानमज्ञानस्यैव निवर्तकमिति नियमस्तस्मात् स्वनिवर्त्यपदेनैव प्रागभावव्युदासे किमाद्यविशेषणेनेति—निरस्तम्; प्रमात्वेन ज्ञाननिवर्त्यत्वमन्येषां नेत्यत्र तात्पर्यात्। न च स्वविषयावरणपदेनैव तद्व्युदासः; 'अस्ति प्रकाशत' इति व्यवहारविरोधित्वरूपस्यावरणत्वस्य भावाभावसाधारणत्वात्। वृत्तिजनकादृष्टेनार्थान्तरवारणाय तु विशेषणमिदम् ॥५॥

---

५—यतो ज्ञानमज्ञानस्यैव निवर्तकमिति पंचपादिकावचनात्। [पञ्चपादिका, पृ०, ११२, काशीविजयनगरसं०] प्रमायाः स्वप्रागभावनिवर्तकत्वशङ्कैव नास्ति। अतः स्वप्रागभावव्यतिरिक्तेति विशेषणं व्यर्थमित्याशङ्क्य समाधत्ते—एतेन यतो ज्ञानमज्ञानस्यैव निवर्तकमिति नियमस्तस्मात् स्वनिवर्त्यपदेनैव प्रागभावव्युदासे किमाद्यविशेषणेनेति निरस्तम्। प्रमात्वेन ज्ञाननिवर्त्यत्वमन्येषां न इत्यत्र तात्पर्यात्। प्रमास्वविषयकाज्ञानस्यैव निवर्तिका, नान्यस्य अज्ञानस्य प्रमानिवर्त्यत्वसिद्धये साध्ये तृतीयं विशेषणं स्वनिवर्त्येति उपात्तमेव; तेनैव प्रमाप्रागभावव्युदासे सिद्धे पुनः स्वप्रागभावव्यतिरिक्तेति साध्यविशेषणं व्यर्थमिति पूर्वपक्षिणा न वाच्यम्। यतः पूर्वपक्षिणा पंचपादिकावचनस्य अभिप्रायो नावधारितः; पञ्चपादिकाकृद्भिः ज्ञानं न स्वप्रागभावस्य न निवर्तकमिति नोक्तम्; किन्तु प्रमात्वेन ज्ञानं नान्यस्य निवर्तकमित्युक्तम्। ज्ञाने प्रमात्वमिव स्वाभावमपेक्ष्य प्रतियोगित्वमपि वर्तते; प्रतियोगित्वेन ज्ञानं स्वप्रागभावनिवर्तकमपि प्रमात्वेन ज्ञानम् अज्ञानस्यैव न अन्यस्य निवर्तकमित्यभिप्रायः। तथा च प्रमाज्ञानस्य प्रतियोगित्वेन स्वप्रागभावनिवर्तकत्वात् स्वप्रागभावमादाय अर्थान्तरता स्यात्, तन्निवृत्तये आद्यं विशेषणमिति।

स्वविषयावरणेति द्वितीयविशेषणेनैव स्वप्रागभावव्यावृत्तिसंभवे स्वप्रागभावव्यतिरिक्तेति विशेषणं व्यर्थमित्याशङ्क्य समाधत्ते सिद्धान्ती—न च स्वविषयावरणपदेनैव तद्व्युदासः, 'अस्ति प्रकाशत इति व्यवहारविरोधित्वरूपस्यावरणत्वस्य भावाभावसाधारणत्वात्। वृत्तिजनकादृष्टेन अर्थान्तरवारणाय तु विशेषणमिदम्। स्वविषयावरणेति द्वितीयविशेषणेनैव स्वप्रागभावव्यावृत्तिसंभवात् स्वप्रागभावेति विशेषणं व्यर्थं प्रमाप्रागभावस्य प्रमाविषयावरकत्वा-

न चावरणपदेनैव तद्व्युदासे स्वविषयेति व्यर्थम्; यददृष्टं

संभवात्। अभावो नावरणम् इत्यनुभवात्। समाधत्ते सिद्धान्ती भावाभावसाधारण-मावरणत्वमभ्युपेत्य इदं विवरणीयमनुमानं बोध्यम्। भावाभावसाधारणमावरणत्वं च अस्ति प्रकाशते इति व्यवहारविरोधित्वरूपमावरणत्वम्; तच्च प्रमाप्रागभावे अप्यस्ति। प्रमाप्रागभावे सति प्रमाविषयोऽस्ति प्रकाशते इति व्यवहारयोग्यो न भवति। अतः प्रमाप्रागभावः प्रमाविषयावरको भवत्येव। अतो द्वितीयविशेषणो-पादानेऽपि प्रमाप्रागभावमादाय अर्थान्तरता स्यात्; तद्वारणाय आद्यं विशेषणम्। व्यवहारविरोधित्वं नाम व्यवहारप्रतिबन्धकत्वम्। तच्च मीमांसकमते पुष्कलकारणे सति अर्थात् सामग्र्यां सत्यां कार्यानुत्पादप्रयोजकत्वम्, कार्यानुत्पत्तिव्याप्यत्वं प्रतिबन्धकत्वम्। नैयायिकमतं तु अन्यत्। अस्ति प्रकाशते इति व्यवहारपुष्कल-कारणे सति तद्व्यवहारानुत्पत्तिव्याप्यत्वं प्रतिबन्धकत्वं प्रमाविषयावरकत्वं प्रमाप्राग-भावेऽपि अस्ति। प्रमाप्रागभावे विद्यमाने प्रमाविषये अस्ति प्रकाशते इति व्यवहारो न भवति। परोक्षज्ञानात् अस्तीति व्यवहारः, अपरोक्षज्ञानात् अस्ति भातीति व्यवहारः। अतः उभयव्यवहारप्रतिबन्धकत्वम् अभानापादकाज्ञाने प्रत्यक्ष-प्रमाप्रागभावे च अस्ति इति प्रमाप्रागभावस्य प्रमाविषयावरकत्वं सुस्थितम्। परोक्षप्रमोदये अस्तीति अबाधितव्यवहारः प्रत्यक्षप्रमोदये अस्तीति भातीति च अबाधितव्यवहारो जायते।

प्रथमविशेषणसार्थक्यप्रदर्शनं समाप्तम्

स्वविषयावरणेति द्वितीयविशेषणं वृत्तिजनकादृष्टेन अर्थान्तरवारणाय द्वितीयविशेषणानुपादाने वृत्तिजनकादृष्टमादाय अर्थान्तरं स्यात्। द्वितीयविशेषणानु-पादाने "स्वप्रागभावव्यतिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्" इत्येव साध्यं पर्यवसितं भवेत्। वृत्तिजनकादृष्टं च वृत्तिप्रागभावव्यतिरिक्तम् अदृष्टस्य फलनाश्यत्वात् वृत्त्युदये वृत्तिजनकादृष्टनाशात् अदृष्टस्य वृत्तिनिवर्त्यत्वमस्त्येव; वृत्तिजनकादृष्टमपि वृत्तिदेशगतमेव। तददृष्टं वस्त्वन्तरमपि वस्तुपदेन जन्यभ्रमस्य प्रतिपादनात् इत्यपि प्रागेवोक्तम्। इत्यभिप्रेत्याह मूले—**वृत्तिजनकादृष्टेनार्था-न्तरवारणाय तु विशेषणमिदम्।** इदम्—द्वितीयं विशेषणं स्वविषयावरण-रूपमित्यर्थः ॥५१॥

स्वविषयज्ञानजनकं विषयान्तरज्ञानप्रतिबन्धकतया तदावरकम्, तादृशादृष्टपूर्वकत्वेनार्थान्तरवारकत्वात्। न च—जडे अज्ञानस्यानङ्गीकाराच्चितश्चाज्ञानादिसाक्षितया भासमानत्वात् क्वावरणमिति—वाच्यम् ॥६॥

आज्ञानादिसाक्षितया चितः प्रकाशमानत्वेऽपि 'अस्ति प्रकाशत' इति व्यवहाराभावेन तदंशेऽज्ञानावरणस्यावश्यकत्वात्। वक्ष्यते

---

६—स्वविषयावरणेत्यनुक्त्वा आवरणमात्रोक्तावपि अनावरणस्य वृत्तिजनकादृष्टस्य व्यावृत्तिसंभवे स्वविषयेत्यंशो व्यर्थ इत्याशङ्क्य समाधत्ते—न च आवरणपदेनैव तद्व्युदासे स्वविषयेति व्यर्थम्। यददृष्टं स्वविषयकज्ञानजनकं विषयान्तरज्ञानप्रतिबन्धकतया तदावरकं तादृशादृष्टपूर्वकत्वेनार्थान्तरवारकत्वात्। घटप्रमावृत्तिजनकमदृष्टं वृत्तिविषयस्य घटस्य यद्यपि नावरकम्, तथापि तदेवादृष्टं परप्रमावृत्तेः प्रतिबन्धकमपि तथा च तददृष्टं पटरूपस्य विषयस्य आवरकं तथा च आवरणमात्रोक्तौ तददृष्टमादाय अर्थान्तरं स्यादेवेति स्वविषयेति आवरणविशेषणमुपात्तम्।

जडे अज्ञानावरणाभावात् चितश्च अज्ञानसाक्षितया भासमानत्वात् आव्रियमाणस्यैवाभावात् अज्ञानावरणमेवामनुपपन्नम् आवरणमात्रम् आव्रियमाणव्याप्यं व्यापकाव्रियमाणाभावे व्याप्यावरणस्यापि अभावात् स्वविषयावरणेति विशेषणं व्यर्थमिति शङ्कते पूर्वपक्षी—न च जडे अज्ञानस्यानङ्गीकाराच्चितश्च अज्ञानादिसाक्षितया भासमानत्वात् क्वावरणमिति वाच्यम्। आव्रियमाणं वस्तु जडं वा? चैतन्यगतविशेषधर्मो वा? शुद्धचैतन्यं वा? न प्रथमः, जडे अज्ञानानङ्गीकारात्। न द्वितीयः, चैतन्ये विशेषधर्मस्यानङ्गीकारात्। न तृतीयः, शुद्धचैतन्यम् अज्ञानस्य अज्ञानपरिणामशुक्तिरजतादेश्च साक्षिरूपं भासमानं न अज्ञानावृतम्; तथा च आव्रियमाणाभावात् आवरणमसंगतमेवेति द्वितीयविशेषणं व्यर्थमित्यर्थः ॥६॥

७—अज्ञानादिसाक्षिरूपेण भासमानेऽपि येन रूपेण अस्ति भातीति न व्यवह्रियते तद्रूपेण आवृतमित्यङ्गीकर्तव्यम्। साक्षिचैतन्यमस्ति साक्षिचैतन्यं भातीति कस्यापि व्यवहाराभावात् तद्रूपेण अज्ञानावृतमेवेति समाधत्ते सिद्धान्ती—

चैतत्। स्वनिवर्त्येति च विशेषणं वृत्तिप्रतिबन्धकादृष्टेनार्थान्तरवारणाय। न च—चरमसाक्षात्कारोत्पत्तिप्रतिबन्धकादृष्टस्य तदनिवर्त्यत्वे मिथ्यात्वासिद्धिः, तन्निवर्त्यत्वे तद्व्युदसनमशक्यमिति—वाच्यम्; प्रतिबन्धका-

---

अज्ञानादिसाक्षितया चितः प्रकाशमानत्वेऽपि अस्ति प्रकाशते इति व्यवहाराभावेन तदंशे अज्ञानावरणस्यावश्यकत्वात् वक्ष्यते चैतत्। साक्षिचैतन्यं यदि अस्ति भातीति रूपेण व्यवह्रियेत तर्हि नास्ति साक्षीति वदन्तः तार्किकाः अस्मत्प्रतिकूला न स्युः। अतस्तादृशव्यवहारप्रतिबन्धकमज्ञानमवश्यं स्वीकार्यम्। अज्ञानस्य विषयनिरूपणप्रसंगे एतत् निपुणतरमुपपादयिष्यते इति।

द्वितीयविशेषणसार्थक्यप्रदर्शनं समाप्तम्.

स्वनिवर्त्येति तृतीयविशेषणानुपादाने स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वदेशगतवस्त्वन्तरपूर्वकमिति साध्यं व्यवस्थितं भवेत्; ततः प्रमावृत्तेः प्रतिबन्धकादृष्टमादाय अर्थान्तरता स्यात्; तददृष्टं प्रागभावव्यतिरिक्तं प्रमाविषयावरणं प्रमादेशगतं जन्यभ्रमव्यतिरिक्तं वस्त्वन्तरम्। तथा च अज्ञानसाधनाय प्रवृत्तमनुमानं प्रमाप्रतिबन्धकीभूतम् अदृष्टमादाय पर्यवस्येत् इत्याह ·सिद्धान्ती—स्वनिवर्त्येति च विशेषणंवृत्तिप्रतिबन्धकादृष्टेन अर्थान्तरवारणाय। कृतविवरणञ्चैतत्।

तृतीयविशेषणोपादानेऽपि प्रदर्शितार्थान्तरता न निवार्यते, यतः चरमसाक्षात्काररूपप्रमापि पक्षान्तर्गता; यतः प्रमाज्ञानमात्रं पक्षः। चरमसाक्षात्कारोत्पत्तिप्रतिबन्धकीभूतम्। अदृष्टं चरमसाक्षात्कारनिवर्त्यं न वा? यदि न निवर्त्यं तर्हि प्रतिबन्धकादृष्टस्य ज्ञाननिवर्त्यत्वाभावात् तस्य मिथ्यात्वं न सिध्येत्; निवर्त्यत्वे एतद्विशेषणोपादानेऽपि तद्व्युदसनमशक्यम्। अतोऽदृष्टस्य मिथ्यात्वाय प्रतिबन्धकादृष्टस्य चरमज्ञाननिवर्त्यत्वं वाच्यम्; तथा च स्वनिवर्त्यत्वविशेषणोपादानेऽपि चरमसाक्षात्कारप्रतिबन्धकीभूतमदृष्टं स्वप्रागभावव्यतिरिक्तेत्यादिविशेषणयुक्तमेव। एवञ्च प्रतिबन्धकादृष्टमादाय अर्थान्तरता सुदृढैवेति शंकते पूर्वपक्षी—न च चरमसाक्षात्कारोत्पत्तिप्रतिबन्धकादृष्टस्य तदनिवर्त्यत्वे मिथ्यात्वासिद्धिः, तन्निवर्त्यत्वे तद्व्युदसनमशक्यम् इति वाच्यम्। प्रतिबन्धकादृष्टस्य चरमसाक्षात्कारानिवर्त्यत्वे मिथ्यात्वासिद्धिः,

दृष्टे विद्यमाने न ज्ञानोत्पत्तिरिति प्रथमं तन्निवृत्तेः कारणात्मना स्थितस्य ज्ञाननिवर्त्यत्वाच्च मिथ्यात्वम्। न चैवमपि स्वनिवर्त्यत्वमव्याहतम्; स्वनिवर्त्यस्वरूपत्वे तात्पर्यात्।

---

निवर्त्यत्वे सुदृढमर्थान्तरमिति। तृतीयविशेषणदानेऽपि प्रतिबन्धकादृष्टस्य व्यावर्तनमशक्यमिति भावः।

कारणान्तरात् प्रतिबन्धकादृष्टे निवृत्ते चरमसाक्षात्कारोत्पत्तेर्न प्रतिबन्धकादृष्टं चरमसाक्षात्कारनिवर्त्यम्; न च मिथ्यात्वासिद्धिः कारणात्मना अवस्थितस्य ज्ञाननिवर्त्यत्वेन मिथ्यात्वसिद्धेरिति समाधत्ते सिद्धान्ती—प्रतिबन्धकादृष्टे विद्यमाने न ज्ञानोत्पत्तिरिति प्रथमं तन्निवृत्तेः कारणात्मना अवस्थितस्य ज्ञाननिवर्त्यत्वाच्च मिथ्यात्वम्। न चैवमपि स्वनिवर्त्यत्वमव्याहतम्। स्वनिवर्त्यस्वरूपत्वे तात्पर्यात्। चरमतत्त्वज्ञानप्रतिबन्धकीभूतमदृष्टं यावद् तिष्ठेत् न तावत् चरमतत्त्वज्ञानोत्पत्तिरिति कारणान्तरात् प्रतिबन्धकादृष्टनिवृत्तौ चरमसाक्षात्कारोत्पत्तिरिति न प्रतिबन्धकादृष्टं चरमतत्त्वज्ञाननिवर्तनीयम्। अतः स्वनिवर्त्यविशेषणेन प्रतिबन्धकादृष्टव्यावृत्तिः; एतद्विशेषणानुपादाने प्रतिबन्धकादृष्टमादाय अर्थान्तरता स्यादेव।

यदुच्यते कारणान्तरनिवर्तनीयप्रतिबन्धकादृष्टस्य चरमज्ञानानिवर्तनीयत्वे तस्य ज्ञाननिवर्त्यत्वाभावात्, मिथ्यात्वासिद्धिरित्यपि न युक्तम्। यतः मुद्गरप्रहारनिवर्त्यघटादेर्ज्ञाननिवर्त्यत्वाभावात्, मुद्गरनिवर्तनीयघटादेर्ज्ञाननिवर्त्यत्वसिद्धये तृतीयमिथ्यात्वलक्षणे ज्ञानप्रयुक्तावस्थितिः सामान्यविरहप्रतियोगित्वमेव ज्ञाननिवर्त्यत्वमुक्तम्। मुद्गरप्रहारेण घटस्य स्थूलरूपनिवृत्तावपि घटस्य सूक्ष्मं रूपम् उपादानकारणात्मकं मुद्गरप्रहारेण न निवर्तते; कार्यं वस्तु स्थूलरूपेण सूक्ष्मरूपेण च अवतिष्ठते। यद् वस्तु स्थूलरूपेण विनश्यदपि सूक्ष्मरूपेण अवतिष्ठते, तस्य वस्तुनोऽवस्थितिसामान्यविरहो न भवति। स्थूलरूपेण सूक्ष्मरूपेण च अवस्थितिविरहे अवस्थितिसामान्यविरहो भवति। अवस्थितिसामान्यविरहस्तु ज्ञानप्रयुक्त एव। स्थूलसूक्ष्मरूपयोस्तादात्म्यात् स्थूलरूपेण वस्तुनो विरहेऽपि सूक्ष्मरूपेण अवस्थाने वस्तुनो न अवस्थितिसामान्यविरहः; अवस्थितिसामान्यविरहस्तु ज्ञानप्रयुक्त एव इत्येतत् तृतीय-

अन्धकारेणार्थान्तरवारणार्थमिदमिति—केचित्। तन्न; स्वदेशगतेत्यनेनैव तद्व्युदासात्। यथा च वृत्तिप्रतिबिम्बितचैतन्यस्य विषया-

---

मिथ्यात्वलक्षणे सुविशदं वर्णितम्। अतः प्रतिबन्धकादृष्टं कारणान्तरेण स्वरूपतो निवृत्तमपि कारणात्मना तिष्ठत्येव, कारणात्मना स्थितस्य प्रतिबन्धकादृष्टस्य निवृत्तिस्तु चरमसाक्षात्कारादेव; स्थूलसूक्ष्मरूपयोस्तादात्म्यात् सूक्ष्मरूपेण निवृत्तिस्तु चरमतत्त्वज्ञानादेवेति अदृष्टस्य ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वमप्युपपन्नम्। पूर्वपक्षी शंकते—कारणात्मना स्थितस्य प्रतिबन्धकादृष्टस्य चरमज्ञाननिवर्त्यत्वे प्रतिबन्धकादृष्टस्य स्वनिवर्त्यत्वम् प्रमानिवर्त्यत्वमक्षतमिति स्वनिवर्त्येति विशेषणोपादानेऽपि प्रतिबन्धकादृष्टमादाय अर्थान्तरमपरिहार्यमेव इत्याह—न चैवमपि स्वनिवर्त्त्यत्वमव्याहतमिति। समाधत्ते स्वनिवर्त्यस्वरूपत्वे तात्पर्यात्। अयं भावः अस्मिन् अविद्यानुमाने साध्ये यत् तृतीयं विशेषणं स्वनिवर्त्यमिति तस्यायमर्थः, स्वनिवर्त्यस्वरूपमात्रम्—स्वजन्यनाशप्रतियोगित्वमात्रमेव स्वनिवर्त्यत्वम्। अविद्यानुमाने प्रमाज्ञानं पक्षस्तस्मिन् स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वं साध्यम् स्वनिवर्त्यस्वरूपं यद्वस्त्वन्तरं तत् पूर्वकत्वं साध्यम्। प्रमाज्ञाननिवर्त्यमज्ञानम् अज्ञानस्य अनादित्वात् तस्य स्थूलसूक्ष्मरूपद्वयं नास्ति, सोपादानस्यैव रूपद्वयवत्त्वात्। ज्ञानेन अज्ञाने स्वरूपतो निवृत्तेऽपि सूक्ष्मरूपेण घटादिनिवृत्तितोऽज्ञानं स्थास्यतीति वक्तुमशक्यत्वात्। घटादिकार्यं सोपादानमिति स्वरूपतो निवृत्तेऽपि सूक्ष्मरूपेण तिष्ठतीति घटादिनिवृत्तितोऽविद्यानिवृत्तेर्वैलक्षण्यात्। निरुपादानाज्ञानस्य स्वरूपतो निवृत्तिरेव वस्तुतोऽज्ञानस्य निवृत्तिः। स्वजन्यनाशप्रतियोगित्वमात्रमेव स्वनिवर्त्यत्वं चरमसाक्षात्कारजन्यनाशप्रतियोगित्वं प्रतिबन्धकादृष्टे नास्ति। कारणान्तरात् प्रतिबन्धकादृष्टनाशं विना चरमसाक्षात्कारस्य उत्पत्तिरेव न स्यात्। अतः प्रतिबन्धकादृष्टस्वरूपस्य चरमसाक्षात्कारनिवर्त्यत्वाभावात् न प्रतिबन्धकादृष्टमादाय अर्थान्तरता; अविद्यास्वरूपमेव प्रमानिवर्त्यम्। अदृष्टादिकार्यं वस्तु न प्रमानिवर्त्यस्वरूपम्; किन्तु कारणान्तरजन्यनाशप्रतियोगिस्वरूपम् इति प्रतिबन्धकादृष्टमादाय न अर्थान्तरमिति केषाञ्चिन्मतमाशंक्य समाधत्ते—अन्धकारेणार्थान्तरवारणार्थम् इदमिति केचित्। तन्न स्वदेशगतेत्यनेनैव तद्व्युदासात्। यथा च वृत्तिप्रति-

वच्छिन्नचैतन्येन सहैकलोलीभावादज्ञाननिवर्तकत्वम्, तथोक्तं प्राक् ॥७॥

स्वदेशगतेति च विशेषणं विषयगताज्ञातत्वेनार्थान्तरवारणाय ।

---

बिम्बितचैतन्यस्य विषयावच्छिन्नचैतन्येन सह एकलोलीभावादज्ञान-निवर्तकत्वं तथोक्तं प्राक् । केचित्तु साध्ये स्वनिवर्त्येति विशेषणानुक्तौ अन्धकारमादाय अर्थान्तरं स्यात् तद्वारणार्थं तृतीयं विशेषणमिति । अन्धकारस्यापि स्वप्रागभावव्यतिरिक्तत्वे सति स्वविषयावरणत्वादिति; तन्न, स्वदेशगतेति चतुर्थ-विशेषणेनैव अन्धकारस्य व्यावृत्तत्वात् । अन्धकारस्तु प्रमाविषयदेशगतोऽपि न प्रमादेशगत इति । प्रमाधिकरणे अन्धकारो न वर्तते । पूर्वपक्षी शंकते तृतीय-विशेषणोपादानेन अर्थान्तरदोषनिवृत्तावपि बाधः दोषः स्यात् । अस्य विशेषण-स्यानुपादाने अर्थान्तरता, उपादाने च बाधः, सेयमुभयतः पाशा रज्जुरित्याह पूर्वपक्षी, बाधदोषश्चेत्थम्—प्रमारूपान्तःकरणवृत्तिरेव पक्षः, प्रमावृत्तेर्फलं त्रिविधमद्वैतवादिनोऽङ्गीकुर्वन्ति—आवरणाभिभवार्था वृत्तिः, अभेदाभिव्यक्त्यर्था वृत्तिः, चिदुपरागार्था वृत्तिश्चेति । वृत्तेश्चिदुपरागार्थत्वपक्षे वृत्तेरज्ञानानिवर्तकत्वात् प्रमावृत्तिमात्रम् अज्ञाननिवर्तकमिति न सिध्येत् । तथा च प्रमावृत्तेरज्ञानानिवर्तकत्वे बाधः स्यादेवेति भावः । यदि घटाकारवृत्त्या वृत्तिप्रतिबिम्बितचैतन्येन वा घटाधिष्ठानीभूतं चैतन्यमभिव्यज्यते इत्युच्यते, तदेव घटज्ञानमिति मतेऽपि वृत्त्या, वृत्तिप्रतिबिम्बितचैतन्येन वा घटाधिष्ठानीभूतचैतन्यावरणनाशेऽपि यद् घटज्ञानं तेन नावरणं विनाश्यते, येन विनाश्यते तन्न घटज्ञानम् । वृत्तेः वृत्तिप्रतिबिम्बितचैतन्यस्य वा घटज्ञानत्वे ज्ञानस्य अज्ञाननाशकत्वेऽपि ज्ञाने ज्ञेय-मध्यस्तमिति सिद्धान्तो भज्येत । न हि वृत्तौ वृत्त्यभिव्यक्ते चैतन्ये वा घटादिकम-ध्यस्तम्, अध्यस्तन्तु स्वाधिष्ठानीभूतचैतन्ये । यस्मिन् चैतन्ये अध्यस्तं घटादि स्फुरति तदेव चैतन्यं घटादिज्ञानम्, तन्न अज्ञाननिवर्तकम्, यच्च अज्ञाननिवर्तकं तत्र घटादि नाध्यस्तमिति अत्रापि पुनरुभयतः पाशैव रज्जुरिति । समाधत्ते सिद्धान्ती यथा वृत्तेश्चिदुपरागार्थत्वपक्षेऽपि वृत्तेरज्ञाननिवर्तकत्वमस्त्येव तथोप-पादितं प्रतिकर्मव्यवस्थाप्रकरणे । "अत एव एकवृत्त्युपारूढलक्षणैकलोलीभावापन्नं प्रमातृप्रमाणप्रमेयचैतन्यम् भवति, ततस्तदवच्छेदेन अज्ञाननिवृत्त्या भासमानं प्रमेयचैतन्यम् अपरोक्षं फलमित्युच्यते" । विवृतञ्च लघुचन्द्रिकायाम्,

अज्ञाननिवृत्त्या—अनभिव्यक्तिनिवृत्त्या तेन वृत्तेः प्रमातृचिदुपरागार्थत्वपक्षस्यापि संग्रहः, अनुपरागस्याप्यनभिव्यक्तित्वात् । [लघुचन्द्रिका, पृ० ४९० निर्णयसागर संस्करणम् ] वृत्तेश्चिदुपरागार्थत्वपक्षेऽपि अज्ञानावरणनिवर्तकत्वात् न बाधः । प्रमावृत्त्या अभिव्यक्तं विषयाधिष्ठानीभूतं चैतन्यमेव विषयप्रमाज्ञानम् । तथा च अभिव्यक्ताधिष्ठानीभूतचैतन्ये विषयोऽभेदेन अध्यस्तः, इति ज्ञाने ज्ञेयमध्यस्तमिति सिद्धान्तोऽपि निर्दोषः । उक्तं प्रतिकर्मव्यवस्थायाम्—एकवृत्त्युपारूढानाम् प्रमातृप्रमाण प्रमेयचैतन्यानाम् एकलोलीभावापन्नानां विषयावच्छेदेन चैतन्यावरकाज्ञाननिवर्तकत्वादिति । मूले यत् प्रागित्युक्तं तत् प्रतिकर्मव्यवस्थायां प्रागुक्तमिति बोध्यम् । विषयावच्छेदेन चैतन्ये अज्ञाननिवृत्त्या भासमानं प्रमेयचैतन्यम्, अपरोक्षं विषयाधिष्ठानीभूतं चैतन्यं प्रमाणफलम्, एतदेव प्रमितिचैतन्यमित्युच्यते । एतदेव चतुर्थं चैतन्यमिति । तथा च तृतीयं विशेषणं निर्दोषमिति ॥७॥

तृतीयविशेषणसार्थक्यनिरूपणं समाप्तम्

८—स्वदेशगतेति चतुर्थविशेषणं विषयगताज्ञातत्वमादाय अर्थान्तरवारणायेति सिद्धान्ती स्वमतमाह—**स्वदेशगतेति च विशेषणं विषयगताज्ञातत्वेन अर्थान्तरवारणाय** । स्वदेशगतेति साध्यविशेषणानुपादाने स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्वकमिति साध्यं पर्यवसितं स्यात् । तथा च विषयगताज्ञातत्वे स्वप्रागभावव्यतिरिक्तत्वस्वविषयावरणस्वप्रमानिवर्त्यत्ववस्त्वन्तरपूर्वकत्वमस्तीति अज्ञानसिद्धये प्रवृत्तमनुमानं विषयगताज्ञातत्वमादाय पर्यवस्यतीति अर्थान्तरता स्यात्; तन्निवृत्तये स्वदेशगतेति विशेषणमुपात्तम् । विषयगताज्ञातत्वं विषयरूपे देशे वर्तते न प्रमादेशे प्रमादेशस्तु प्रमाता इति स्वदेशगतेति विशेषणात् विषयगताज्ञातत्वस्य व्यावृत्तिः सिध्यतीति भावः ।

अत्र पूर्वपक्षी पृच्छति—कोऽयं विषयगताज्ञातत्वधर्मः ? स किं विषयविषयकज्ञानाभावो वा ? विषये अज्ञानविषयत्वं वेति द्विविधो भवितुमर्हति । तत्र प्रथमः पक्षोऽसंगतः विषयविषयकज्ञानप्रागभावो वा, विषयविषयकज्ञानात्यन्ताभावो वा, विषयविषयकज्ञानाभावोऽभिमतः । यदि प्रागभावः, तस्य स्वप्रागभावव्यतिरिक्तेति विशेषणेनैव व्यावृत्तिः सिद्धा इति न तदर्थं विशेषणान्तरापेक्षा; प्रागभावस्य प्रतियोगिसमानदेशत्वनियमात्; स्वदेशगतेति विशेषणेन प्रागभाव-

यद्यप्यविद्याविषयत्वरूपमज्ञातत्वमसिद्धम्, ज्ञातत्वाभावरूपं तु प्रथमविशेषणेनैव परास्तम्; तथापि प्रथमेन प्रागभावव्युदासादत्यन्ताभावव्युदासाय चतुर्थमिति द्रष्टव्यम् ॥८॥

---

व्यावृत्तिरपि नैव सम्भवतीति यदि विषयविषयकज्ञानात्यन्ताभावो अभिमतस्तर्हि तादृशाज्ञातत्वस्य व्यावृत्तये विशेषणान्तरापेक्षैव नास्ति। प्रथमविशेषणेनैव तद्व्यावृत्तिसिद्धेः; प्रथमविशेषणे प्राक्पदमदत्त्वा स्वाभावव्यतिरिक्तेत्युक्त्यैव अत्यन्ताभावव्यावृत्तिसिद्धेः। यदि अज्ञानविषयत्वमेव विषयगतमज्ञातत्वमिष्येत तर्हि अस्मदनुमानादज्ञानसिद्धेः प्राक् अज्ञानस्यैव असिद्धत्वात्, असिद्धाज्ञानविषयत्वमादाय अर्थान्तरत्वशंकैव न स्यात्, यद्व्यावृत्तये चतुर्थं विशेषणमपेक्षितं स्यात्। यदि अस्मदनुमानाद् प्रागेव अज्ञानं सिद्धमित्युच्येत, तर्हि अस्यानुमानस्य गृहीतग्राहित्वेन प्रामाण्यमेव न सिध्येत्; अप्रमाणीभूतानुमाने अर्थान्तरत्वं किं करिष्यति, अत इदं चतुर्थं विशेषणं निष्प्रयोजनमेव इति पूर्वपक्षिशंकामनूद्य समाधत्ते सिद्धान्ती—यद्यपि अविद्याविषयत्वरूपमज्ञातत्वमसिद्धम्, ज्ञातत्वाभावरूपं तु प्रथमविशेषणेनैव परास्तं तथापि प्रथमेन प्रागभावव्युदासात् अत्यन्ताभावव्युदासाय चतुर्थमिति द्रष्टव्यम्। अस्मादनुमानात् प्राक् अज्ञानमेवासिद्धमिति पूर्वपक्षिमतमभ्युपगम्य तुष्यतु दुर्जनन्यायेन सिद्धान्तमाह— अविद्याविषयत्वरूपाज्ञातत्वव्यावृत्तये नेदं विशेषणमुपात्तम्। तथापि ज्ञानात्यन्ताभावरूपमज्ञातत्वं व्यावर्तयितुम् इदं विशेषणम्। ज्ञानप्रागभावरूपमज्ञातत्वं प्रथमविशेषणेनैव व्यावृत्तम्। यद्यपि ज्ञानात्यन्ताभावो ज्ञानानिवर्त्यत्वात् स्वनिवर्त्यविशेषणेनैव व्यावृत्तः, तथापि ये प्रतियोगिनाश्यसामयिकात्यन्ताभावमङ्गीकुर्वन्ति, तन्मते प्रतियोगिनाश्यं सामयिकात्यन्ताभावमादाय अर्थान्तरता स्यात्; तन्निवृत्तये इदं विशेषणम्। तद्विषयकज्ञानस्य सामयिकात्यन्ताभाव एव तद्विषयगतमज्ञातत्वम्। इदम् अज्ञातत्वं स्वप्रागभावव्यतिरिक्तं स्वविषयावरणं स्वनिवर्त्यञ्च। अतस्तादृशमज्ञातत्वमादाय अर्थान्तरता स्यात्; तन्निवृत्तये स्वदेशगतेति विशेषणम्। विषयगतमज्ञातत्वं ज्ञानस्य सामयिकात्यन्ताभावरूपं प्रतियोगिनाश्यं न प्रमादेशगतमिति स्वदेशगतविशेषणेनैव तद्व्यावृत्तिरिति।

यच्चोक्तं पूर्वपक्षिणा स्वप्रागभावेत्युक्त्या स्वाभावव्यतिरिक्तेति विशेषणेनैव

ननु—कथं ज्ञानाश्रयगतत्वमज्ञानस्य ? वृत्त्यादिरूपस्य ज्ञानस्याज्ञानाश्रयचिदनाश्रितत्वादिति—चेन्न; अन्तःकरणस्य चिदाश्रितत्वेन तद्वृत्तेस्तत्प्रतिफलितचैतन्यस्य वा ज्ञानस्य चिदाश्रितत्वसंभवात्,

---

अर्थान्तरवारणसंभवात् स्वदेशगतेति विशेषणं व्यर्थमिति, तन्न, स्वाभिप्रेतसिद्धये साध्ये विशेषणं योजयन्ति वादिनः। यदि पूर्वपक्षिमतमनुसृत्य साध्यं निर्दिश्येत तर्हि स्वाभिप्रेतसिद्धिर्न स्यात्। स्वाभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्वकमिति साध्यस्य सिद्धावपि स्वाभिप्रेतमज्ञानं न सिध्येत्। अज्ञानस्य ज्ञानसमानाश्रयत्वं न सिध्येत्। अभिप्रेतञ्चैतत्। स्वाभिप्रेतसिद्धये उपात्तं विशेषणं ज्ञानस्य सामयिकात्यन्ताभावमपि व्यावर्तयति। इदमिहावधातव्यम्—विषयगताज्ञातत्वव्यावृत्तये इदं चतुर्थं विशेषणमिति तत्त्वदीपनेऽपि उक्तम्। विषयगताज्ञातत्वम् अज्ञानविषयत्वमित्यभ्युपगमेऽपि दोषाभावः। यच्चोक्तं पूर्वपक्षिणा, अस्मादनुमानात् प्राक् अज्ञानमेवासिद्धम्, तदपि मन्दम्। यद्यपि सिद्धिकृता एतदभ्युपगम्यैव परिहारोऽभिहितः, अभ्युपगमस्तु तुष्यतु दुर्जनन्यायेनैव। यतोऽज्ञानस्वरूपं साक्षिसिद्धं न प्रमाणसिद्धमित्युक्तं प्राक्। साक्षिसिद्धस्य अज्ञानस्य विषयत्वमादाय अर्थान्तरतावारणाय चतुर्थं विशेषणमित्येव रमणीयम्। साक्षिणापि अज्ञानं सविषयत्वेन ज्ञानविरोधित्वेनैव सिध्यति, निर्विषयत्वेन ज्ञानाविरोधित्वेन वा अज्ञानं न साक्षिणा सेद्धुमर्हति। प्रमिणोमीति साक्षिप्रत्यक्षं यथा प्रमात्वेन प्रमां गृह्णाति, प्रमात्वञ्च अज्ञातविषयकत्वादिरूपम्; अतः प्रमिणोमीति साक्षिप्रत्यक्षम् अज्ञानविरोधित्वेनैव प्रमां गृह्णाति, एवं सविषयकत्वेनापि निर्विषयकप्रमाया असम्भवात्। एवं अज्ञानस्य साक्षिप्रत्यक्षमपि प्रमाविरोधित्वेन सविषयकत्वेनैव अज्ञानं गृह्णाति। अतो विषयगतमज्ञातत्वव्यावृत्तये चतुर्थं विशेषणमिति इत्येव युक्तमिति ॥८॥

९—तथापि, चतुर्थं विशेषणमसंगतमेव; अज्ञानं न प्रमादेशगतं भवितुमर्हति। अज्ञानं शुद्धचैतन्याश्रितम्। प्रमाज्ञानं अन्तःकरणवृत्तिरूपं वा, वृत्तिप्रतिबिम्बितचैतन्यरूपं वा, वृत्तिप्रतिबिम्बितचैतन्याभिव्यक्ताधिष्ठानचैतन्यं वा, न शुद्धचैतन्याश्रितम्। अतो नाज्ञानं प्रमादेशगतम् इत्याशंक्य समाधत्ते सिद्धान्ती—

ननु कथं ज्ञानाश्रयगतत्वमज्ञानस्य ? वृत्त्यादिरूपस्य ज्ञानस्य अज्ञानाश्रयचिदनाश्रितत्वात् इति चेन्न, अन्तःकरणस्य चिदाश्रितत्वेन

किंचिदवाच्छिन्नतदाश्रितस्यापि तदाश्रितत्वानपायात्, कर्णशष्कुल्य-वच्छिन्नाकाशाश्रितस्य शब्दस्याकाशाश्रितत्ववत्।

एवं च भावाभावसाधारणमावरणमिति मतेन साध्यमुपपादितम्।

---

तद्वृत्तेस्तत्प्रतिफलितचैतन्यस्य वा ज्ञानस्य चिदाश्रितत्वसंभवात्। किंचिदवच्छिन्नतदाश्रितस्यापि तदाश्रितत्वानपायात्। कर्णशष्कुल्य-वच्छिन्नाकाशाश्रितस्य शब्दस्य आकाशाश्रितत्ववत्। प्रमाणजन्यान्तः-करणवृत्तिः प्रमावृत्तिः, अन्तःकरणं चैतन्याश्रितम्—चैतन्ये अध्यस्तम् चैतन्या-श्रितान्तःकरणवृत्तिः वृत्तिप्रतिबिम्बितचैतन्यं वा प्रमाज्ञानं चैतन्याश्रितमेव। यदि तु शुद्धचैतन्याश्रितमज्ञानम् अन्तःकरणावच्छिन्नचैतन्ये आश्रितं प्रमाज्ञानम् इति न अज्ञानाश्रयाश्रितं प्रमाज्ञानमित्युच्येत [च्यते] तन्न, किंचिदवच्छिन्नचैतन्याश्रित-मपि प्रमाज्ञानं चैतन्याश्रितमेव। यदवच्छिन्नचैतन्याश्रितं तन्न चैतन्याश्रितमिति वक्तुं न युक्तम्; कर्णशष्कुल्यवच्छिन्नाकाशे आश्रितः शब्दः आकाशे एव आश्रितः; अन्यथा महाकाशः निःशब्द एव स्यात्; तथा च महाकाशस्यासिद्धिरेव स्यात्। यदप्युक्तं नाज्ञानस्य ज्ञानसमानदेशत्वमिति विषयस्याज्ञानमेव विषयावरकम् प्रमाज्ञानं तु न विषयस्थमिति, तन्न, जडविषयस्तु नाज्ञानस्याश्रयः; अतो नाज्ञानस्य विषयः; जडविषयावच्छिन्नचैतन्यमेव अज्ञानस्य आश्रयो विषयश्च। अज्ञानेन जडावच्छिन्न-चैतन्यावृरणे कृते जडस्य अप्रकाशः सिध्यति। जडस्याप्रकाशाय जडविषयक-मज्ञानमनपेक्षितमेव। अतः चैतन्याश्रितमज्ञानं ज्ञानसमानदेशमेवेति सिद्धम्। भावाभावसाधारणमावरणमित्यभ्युपगम्य विवरणाचार्यैरिदमनुमानं प्रदर्शितम्; वस्तु-तस्तु अभ्युपगमवादेनैव ज्ञानाभावस्य आवरणत्वमङ्गीकृतम्। ज्ञानाभावो न चैत-न्यावरणम्; किन्तु भावरूपमज्ञानमेव चैतन्यावरणम् भावरूपाज्ञानम् अद्वैतवादि-भिरवश्यमङ्गीकरणीयम्। तेनैवाज्ञानेन अस्ति प्रकाशते इत्यादिव्यवहारप्रतिबन्धन-रूपावरणं सिध्यतीति ज्ञानाभावस्य चैतन्यावरणत्वं कथमपि नाङ्गीकारार्हम्। अज्ञान-त्वजात्यपेक्षया ज्ञानाभावत्वरूपधर्मस्य गुरुशरीरत्वात् न तेन रूपेण ज्ञानाभावस्य आवरणत्वं स्वीकर्तुमुचितम्। अतः अद्वैतसिद्धान्ते ज्ञानाभावस्य नावरणत्वम्; केवलम् अभ्युपगमवादेनैव विवरणाचार्यैः प्रदर्शितरूपम् एकं साध्यं प्रदर्शित-

अभावो नावरक इति सिद्धान्ते तु साध्यद्वये तात्पर्यम्। स्वप्रागभावाति-रिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकम्। स्वविषयावरण-(स्वनिवर्त्यस्वदेशगतवस्त्वन्तर) पूर्वकमित्यपरमिति न किंचिद-समञ्जसम् ॥९॥

---

मित्याह—एवञ्च भावाभावसाधारणमावरणमिति मतेन साध्यमुपपादि-तम्। अभावो नावरक इति सिद्धान्ते तु साध्यद्वये तात्पर्यम्। स्वप्राग-भावव्यतिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकम्। स्वविषया-वरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्यपरमीति न किञ्चिदसम-ञ्जसम्। भावाभावसाधारणमावरणमिति मतेन अविद्यानुमाने एकं साध्यं प्रतिकूलयुक्तिनिरासेन उपपादितम्। अभावो नावरक इत्येव मुख्यो वेदान्त-सिद्धान्तः। मुख्यसिद्धान्तानुसारेण प्रदर्शितसाध्यप्रतिपादकवाक्यस्य साध्यद्वये तात्पर्यं विवरणकृतामिति साध्यद्वयं प्रदर्शयति स्वप्रागभावव्यतिरिक्तेति। स्वप्रागभाव-व्यतिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकं साध्यम्; अस्मिन् साध्ये स्वविषयावरणेति विशेषणं परित्यक्तम्। स्वप्रागभावव्यतिरिक्तेति विशेषणं परित्यज्य स्वविषयावरणेति विशेषणमुपादाय द्वितीयं साध्यं निर्दिशति स्वविषया-वरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमिति द्वितीयं साध्यम्। प्रमाज्ञानरूपे पक्षे द्वयोः साध्ययोरेकस्यापि सिद्धौ अद्वैतवाद्यभिमता अविद्या सिद्धा भविष्यति। प्रथमसाध्ये प्रमाप्रागभावव्यतिरिक्तप्रमानिवर्त्यप्रमादेशगतवस्त्वन्तरम् अद्वैतवाद्यभि-मताज्ञानमेव स्यात् नान्यत् किंचन। प्रमामात्रमेव एतादृशाज्ञानरूपवस्त्वन्तरपूर्वकं भवति। द्वितीयसाध्येऽपि प्रमामात्रं प्रमाविषयावरणप्रमानिवर्त्यप्रमादेशगतवस्त्वन्तर-पूर्वकं भवति। तच्च वस्त्वन्तरमद्वैतवाद्यभिमताज्ञानमेव भवति नान्यत्। द्वयोः साध्ययोः यद्वस्त्वन्तरपदमुपात्तं तस्य प्रमानिवर्त्यजन्यभ्रमाद् भिन्नमर्थः। अन्यद् वस्त्विति वस्त्वन्तरम्। वस्तुपदेन प्रमानिवर्त्यजन्यभ्रमो गृह्यते। ततो भिन्न-मज्ञानमेव वस्त्वन्तरम्। वस्त्वन्तरदलस्यानुपादाने प्रमाप्रागभावव्यतिरिक्तप्रमानिवर्त्य-प्रमादेशगतपूर्वकमिति साध्यं पर्य्यवसितं स्यात्। ततश्च प्रमामात्रस्य प्रमाविषय-विषयकभ्रमपूर्वकत्वसिद्ध्या अर्थान्तरं स्यात्; प्रमाया अज्ञानपूर्वकत्वासिद्ध्याभ्रमपूर्व-कत्वसिद्धिः स्यात्, तद्वारणाय वस्त्वन्तरमिति। द्वितीयेऽपि साध्ये वस्त्वन्तर-पदस्य इदमेव प्रयोजनम् ॥९॥

हेतौ च प्रकाशकत्वं प्रकाशकपदवाच्यत्वम्, अप्रकाशविरोधित्वं वा ज्ञानालोकयोः साधारणम् ॥१०॥

यद्यपि प्रकाशकपदवाच्यत्वं नामकरणवशात् कस्मिंश्चित् पुरुषेऽप्यस्ति; तथापि; प्रकाशकशब्देन शास्त्रे सर्वदेशकालयोर्वा व्यवह्रिय-

---

अविद्यानुमाने साध्यांशविवरणं समाप्तम् ।

१०—अस्मिन्नविद्यानुमाने साध्यप्रतिपादकवाक्यस्य अर्थं निरूप्य हेतुप्रतिपादकवाक्यस्य अर्थं निरूपयितुमाह—हेतौ च प्रकाशकत्वं प्रकाशकपदवाच्यत्वम् अप्रकाशविरोधित्वं वा ज्ञनालोकयोः साधारणम् । अप्रकाशितार्थप्रकाशकत्वादित्यविद्यानुमाने हेतुः; योऽर्थः प्रमोत्पत्तेः प्राक् अप्रकाशित आसीत् तदर्थप्रकाशकत्वमेव हेतुः । हेतोर्विशेष्यभागस्यार्थं प्रथमतो विवृण्वन्नाह—हेतौ च प्रकाशकत्वमिति[1] । पूर्वपक्षिणा किं तावत् प्रकाशकत्वं ज्ञानत्वं वा, ज्ञानहेतुत्वं वा, साक्षात् परम्परया व्यवहारहेतुत्वं वेति सप्तधा विकल्प्य दूषितम् । पूर्वपक्षिणैव सप्तमे विकल्पे प्रकाशकशब्दवाच्यत्वं वेति उक्तम्; तदेव सिद्धान्तयन्नाह—प्रकाशकपदवाच्यत्वं प्रकाशकत्वमिति । अत्र पूर्वपक्षी शंकते—यद्यपि पक्षदृष्टान्तयोः प्रमालोकयोः प्रकाशकपदवाच्यत्वमस्ति, तथापि शब्दमात्रसाम्येनानुमानप्रवृत्तौ बहुविप्लवः स्यात् । उक्तं च तेन—

पक्षदृष्टान्तानुगतं प्रकाशत्वं न विद्यते ।
शब्दसाम्येन चेत् पृथ्व्या गोत्वात् शृङ्गं समापतेत् ॥ इति ।

शंकायाः समाधानं मूलकृतैव अग्रे करिष्यते; अविद्यानुमाने अनुकूलतर्कसत्त्वात् गोशब्दवाच्यत्वेन पृथिव्याः शृङ्गानुमाने अनुकूलतर्काभावात् द्वयोर्वैषम्यात् । "एतेन गोशब्दवाच्यत्वेन पृथिव्या अपि शृङ्गित्वानुमानापातो अपास्त इति" इत्युक्त्या समाधास्यमानत्वात् । प्रकाशकत्वशब्दस्य एकमर्थं प्रदर्श्य द्वितीयमर्थमाह—अप्रकाशविरोधित्वं वेति । अप्रकाशविरोधित्वं पक्षदृष्टान्तयोः प्रमालोकयोः साधारणम्; प्रमा अप्रकाशितविषयप्रकाशिकेति विषयाप्रकाशविरोधिनी । आलोकः अन्धकारावृतवस्तुनः प्रकाशक इति वस्तुनो अप्रकाशविरोधीति अप्रकाशविरोधित्वं हेतुः[1] । प्रकाशकत्वशब्दस्य प्रदर्शितम् अर्थद्वयमपि निर्दोषम् ॥१०॥

---

१. अस्मिन् द्वितीये पक्षे अप्रकाशितार्थेति विशेषणं न देयम् प्रयोजनाभावात् । इदं विशेषणं प्रथमपक्षे एव, एतच्चाग्रे मूले एव स्पष्टं भविष्यतीति बोध्यम् ।

माणत्वं तद्विवक्षितम्। अथवास्तु साधारणम्। अप्रकाशितार्थगोचरेति विशेषणात् व्यभिचारव्युदासः।

अप्रकाशितत्वं च 'न प्रकाशते' इति व्यवहारगोचरत्वम्, तच्च स्वप्रकाशचैतन्येऽप्यस्तीत्युपपादितम्। एवं निरुक्ताप्रकाशविरोधित्वमपि

---

११—पूर्वपक्षिणा अप्रदर्शितां कांचनाभिनवां शङ्कां प्रदर्श्य समाधत्ते—यद्यपि प्रकाशकपदवाच्यत्वं नाम करणवशात् कस्मिंश्चित् पुरुषेऽपि अस्ति तथापि प्रकाशकशब्देन शास्त्रे सर्वदेशकालयोर्वा व्यवह्रियमाणत्वं तद् विवक्षितम्। अथ वा अस्तु साधारणम् अप्रकाशितार्थगोचरेति विशेषणात् व्यभिचारव्युदासः। प्रकाशकपदवाच्यत्वं प्रकाशकत्वमित्युक्तौ व्यभिचारः स्यात्; पित्रादिभिर्नामकरणवशात् कस्मिंश्चित पुरुषेऽपि प्रकाशकपदवाच्यत्वात् तत्र च प्रागभावव्यतिरिक्तेत्यादिसाध्याभावात् व्यभिचारः। अत्र यद्यपि एषा शङ्का संभवति तथापि प्रकाशकपदवाच्यत्वं शास्त्रे सर्वदेशकालयोर्वा व्यवह्रियमाणत्वमेव प्रकाशकपदवाच्यत्वमत्र विवक्षितम्। प्रकाशकपदेन अनादिसंकेतितत्वमेव प्रकाशकपदवाच्यत्वम्, पित्र्यादिसंकेतस्तु सादिरिति न व्यभिचारः। अथ वा प्रकाशकपदवाच्यत्वं प्रमालोकपुरुषसाधारणमस्तु।

न च प्रदर्शितव्यभिचार इति वाच्यम्; यतः प्रकाशकत्वमात्रं न हेतुः, अप्रकाशितार्थगोचरेति विशेषणविशेषित[तः] हेतुः। पुरुषे अप्रकाशितगोचरत्वाभावात, हेतोरसत्त्वान्न व्यभिचारः।

यदुक्तम् अप्रकाशितार्थगोचरेति विशेषणादिति तत्र किमप्रकाशितत्वमिति तन्निरूपणायाह—अप्रकाशितत्वं च न प्रकाशते इति व्यवहारगोचरत्वं तच्च स्वप्रकाशचैतन्येऽपि अस्तीत्युपपादितम्। पक्षदृष्टान्तसाधारणम् अप्रकाशितार्थप्रकाशकत्वं हेतुत्वेनोक्तम्। प्रमया आलोकेन च अप्रकाशितोऽर्थः प्रकाश्यते, प्रमालोकाभ्यां प्रकाशितत्वं नैकरूपम्, अज्ञानान्धकाराभ्याम् अप्रकाशितत्वस्य वैलक्षण्यात। अतः उभयसाधारण्यायाह—अप्रकाशितत्वं चेति। न प्रकाशते इति व्यवहारगोचरत्वम् अप्रकाशितत्वम्। अज्ञानावृतविषयस्यापि न प्रकाशते इति व्यवहारविषयत्वम् अन्धकारावृतस्यापि न प्रकाशते इति व्यवहारविषयत्वम्। अतः पक्षदृष्टान्तोभयसाधारणमप्रकाशितत्वं

ज्ञानालोकयोः प्रत्यक्षसिद्धम् । उक्तं च विवरणे—'ज्ञानप्रकाश्यत्वादज्ञानविरोधित्वादन्यदेव आलोकप्रकाश्यत्वं तमोविरोधित्वं नामे'ति ॥११॥

---

न प्रकाशते इति व्यवहारविषयत्वमेव । निरुक्तरूपमप्रकाशितत्वं स्वप्रकाशचैतन्येऽप्यस्ति; स्वप्रकाशचैतन्यमपि अज्ञानावृतत्वादेव स्वप्रकाशचैतन्यं न प्रकाशते इति व्यवहारविषयो भवति । अज्ञानप्रत्यक्षपरिच्छेदे एतदुपपादितम् । प्रकाशविरोधिवस्तुनोः आश्रय एव न प्रकाशते इति व्यवहारविषयो भवति । अज्ञानतमसोः प्रकाशविरोधिनोराश्रय एव न प्रकाशते इति व्यवहारविषयो भवति ।

एवं ज्ञानालोकयोरप्रकाशविरोधित्वमपि सर्वानुभवसिद्धम् इत्याह—एवं निरुक्ताप्रकाशविरोधित्वमपि ज्ञानालोकयोः प्रत्यक्षसिद्धम् । उक्तं च विवरणे ज्ञानप्रकाश्यत्वादज्ञानविरोधित्वादन्यदेव आलोकप्रकाश्यत्वं तमोविरोधित्वं नामेति । उक्तं प्राक् प्रकाशकत्वं प्रकाशकपदवाच्यत्वम् अप्रकाशविरोधित्वं वेति; तत्र प्रकाशपदवाच्यत्वमुपपाद्य अप्रकाशविरोधित्वमपि उपपादयन्नाह निरुक्ताप्रकाशविरोधित्वमपीति । प्रमालोकयोः पक्षदृष्टान्तयोर्यदि अप्रकाशितार्थप्रकाशकत्वम् एकमेकजातीयं वा भवेत् तर्हि तस्य हेतुत्वं स्यात्; विजातीयत्वे तु न स्यात्; प्रमारूपे पक्षे अप्रकाशितार्थप्रकाशकत्वात्, अत्यन्तविजातीयं दृष्टान्ते आलोके अप्रकाशितार्थप्रकाशकत्वम् । अतो अप्रकाशितार्थप्रकाशकत्वं न हेतुः पक्षदृष्टान्तसाधारण्याभावात् आलोके प्रमाज्ञाने च प्रकाशकत्वमत्यन्तविलक्षणमित्युक्तं विवरणे ज्ञानप्रकाश्यत्वादज्ञानविरोधिनो अन्यदेव आलोकप्रकाश्यत्वं तमोविरोधितया प्रसिद्धम् । [ विवरणम्, पृ०, ५२, काशीविजयनगरसंस्करणम् ] प्रमाज्ञाने अज्ञानविरोधित्वम् आलोके तमोविरोधित्वम् अत्यन्तं भिन्नम्; अतः पक्षदृष्टान्तयोः अप्रकाशितार्थप्रकाशकत्वम् अत्यन्तविजातीयमिति तन्न हेतुरिति पूर्वपक्षिशंकां समादधान आह—अप्रकाशविरोधित्वमिति पक्षदृष्टान्तयोः प्रकाशकत्ववैलक्षण्येऽपि अप्रकाशविरोधित्वरूपप्रकाशकत्वस्य उभयसाधारण्यान्न दोष इत्याह—अप्रकाशविरोधित्वरूपं प्रकाशकत्वमत्र विवरणाभिप्रेतम् । कुत्रचिद् विवरणे प्रकाशकत्वं विलक्षणमिति यदुक्तं तज्ज्ञानालोकविनाश्ययोरज्ञानतमसोः स्वरूपवैलक्षण्यमभिप्रेत्य; अत्र पुनः अप्रकाशविरोधित्वरूपं प्रकाशकत्वं पक्षदृष्टान्तोभयसाधारणमेवेति न दोषः ।

अत उभयोरेव साक्षादप्रकाशविरोधित्वसंभवान्नेन्द्रियसन्निकर्षादौ व्यभिचारः। एवं चाप्रकाशितार्थगोचरत्वे सति प्रकाशशब्द-

---

यथा अपोहवादिमते घटत्वम् अघटव्यावृत्तिरूपम् एवमेव प्रकाशकत्वम् अप्रकाशविरोधित्वरूपं बोध्यम्। आलोके प्रमाज्ञाने च प्रकाशकत्वं विलक्षणमिति विवरणवाक्यमेव प्रकृतानुमाने अनुकूलयितुं सिद्धिकृता प्रकाशकत्वम् अप्रकाश-विरोधित्वमित्यङ्गीकृतम्। अन्यथा विवरणवाक्यं यथाश्रुतार्थकं प्रकृतानुमान-प्रतिकूलं स्यात्। पूर्वपक्षिणा एतदनुमानप्रतिकूलतयैव एतद्विवरणवाक्यमत्रोद्धृतम्; सिद्धिकृता व्याख्याकौशलेन तदेव विवरणवाक्यं प्रकृतानुमाने अनुकूलं कृतमिति बोध्यम्। अत्रेदमवधेयम्—नृसिंहाश्रमश्रीचरणैः पक्षीभूतप्रमादृष्टान्तीभूतालोकयो-रन्यतरत्वं हेतुरित्युक्तम् अद्वैतदीपिकायाम् [अद्वैतदीपिका, द्वितीयपरि०,पृ०,२२३] अद्वैतदीपिकायां जन्यसविकल्पकाजन्यचाक्षुषघटप्रमाज्ञानम् अस्मिन् अनुमाने पक्षत्वेन निर्दिष्टम्। एतद्विवृतं नारायणाश्रमश्रीचरणैः अन्यतरत्वस्य तदुभयानु-गताखण्डधर्मत्वान्न व्याप्यतावच्छेदकगौरवम्। संगृहीतञ्चैतत् लघुचन्द्रिकायाम्—तावता च पक्षीभूतप्रमादृष्टान्तीभूतालोकयोरन्यतरत्वञ्च हेतुरित्यपि सूचितम्। [अद्वैतदीपिका, पृ०, ५६५] उक्तं च विवरणटीकायां भावप्रकाशिकायां नृसिंहाश्रमश्रीचरणैः—अथ वा परमते संस्कारत्ववत् बाह्याबाह्यवृत्तिप्रकाशत्व-जातिरस्तु तस्य बाधकाभावात् अस्मन्मतेऽपि अनिर्वचनीयः कश्चिदुभयवृत्ति-रखण्डो धर्मः प्रकाशत्वमिति नोक्तदोषः [भावप्रकाशिका, पृ०, ६०।२ ह्वोसाइटी पु०; अस्मत्पुस्तके, पृ०,२०८] किंच यथा वैशेषिकमते भावनाख्यवेगाख्यस्थिति-स्थापकाख्येषु त्रिविधेषु संस्कारेषु बाह्याबाह्यवृत्तिषु एका संस्कारत्वजातिः कल्प्यते एवं अस्माभिरपि बाह्यप्रकाशप्रमायाम् अबाह्यप्रकाशप्रमायाम् एका प्रकाशत्वजातिर-खण्डोपाधिर्वा कल्प्यते। संस्कारत्वजातेरिव प्रकाशत्वजातेरखण्डोपाधेर्वा अङ्गीकारे पूर्वपक्षिप्रदर्शिता सर्वविधापत्तिर्निरस्ता वेदितव्या ॥११॥

१२—अप्रकाशविरोधित्वं हेतुरित्युक्तं तच्च इन्द्रिये इन्द्रियसन्निकर्षे च वर्तते तत्र साध्याभावात् व्यभिचारः स्यादित्याशंक्याह—अतः उभयोरेव साक्षाद-प्रकाशविरोधित्वसंभवात् न इन्द्रियसन्निकर्षादौ व्यभिचारः। अप्रकाश-विरोधित्वं साक्षादप्रकाशविरोधित्वं बोध्यम्, तेन परम्परया अप्रकाशविरोधिनि

वाच्यत्वात् अप्रकाशविरोधिप्रकाशत्वादिति वा हेतुः पर्यवसितः। विपर्ययविषयस्तु नाज्ञातः; विपर्ययान्यकालासत्त्वेन तस्यानिर्वचनीयस्य मानगोचरत्वाभावेन प्रकाशप्राक्कालसत्त्वघटिताप्रकाशितत्वासंभवात्, अत एव स नाप्रकाशविरोधी; स्वविषये अप्रकाशाभावात्; अधिष्ठाना-प्रकाशस्तु तस्य जनक एव। स्मरणे च व्यभिचाराभावः स्पष्टः।

---

इन्द्रिये इन्द्रियसन्निकर्षे न व्यभिचारः। इन्द्रियं सन्निकर्षद्वारा ज्ञानमुत्पाद्य अप्रकाशविरोधि भवति; सन्निकर्षश्च ज्ञानद्वारा अप्रकाशविरोधी भवति न साक्षात्; अतस्तत्र साध्याभावेन न व्यभिचारः। प्रमाप्रमयोरुभयोरेव साक्षाद-प्रकाशविरोधित्वात्, न स्वरूपासिद्धिसाधनवैकल्ये इति भावः।

बहुवादान्तरितत्वात् पुनः पर्यवसितम् साधनस्वरूपं दर्शयन्, संभावितान् दोषान्निरस्यति सिद्धान्ती—एवञ्च अप्रकाशितार्थगोचरत्वे सति प्रकाशशब्दवाच्यत्वात्, अप्रकाशविरोधित्वादिति वा हेतुः पर्यवसितः। विपर्ययविषयस्तु नाज्ञातः। विपर्ययान्यकालासत्त्वेन तस्यानिर्वचनीयस्य मानगोचरत्वाभावेन प्रकाशप्राक्कालसत्त्वघटिताप्रकाशितत्वासंभवात्। अत एव स नाप्रकाशविरोधी। स्वविषये अप्रकाशाभावात् अधिष्ठान-प्रकाशस्तु तस्य जनक एव। स्मरणे च व्यभिचाराभावः स्पष्टः। एवं चेति पर्यवसितहेतुस्वरूपद्वयं दर्शयति—अप्रकाशितार्थगोचरत्वे सति प्रकाशशब्दवाच्यत्वात। अप्रकाशविरोधित्वादिति वा इति। द्वितीये हेतौ सत्यन्तं विशेषणं नोपादेयम्, प्रयोजनाभावात्। पक्षे प्रमाज्ञाने अप्रकाशितार्थप्रकाशकत्वं हेतुर्वर्तते। किन्तु भ्रमज्ञाने अप्रकाशितार्थप्रकाशकत्वं हेतुर्नास्ति। भ्रमज्ञानं प्रकाशपदवाच्यमपि न अप्रकाशितार्थविषयकम्। अतः प्रथमहेतुर्भ्रमज्ञाने नास्तीति न व्यभिचारः। प्रकाशपदवाच्यत्वमात्रस्य हेतुत्वे भ्रमज्ञाने हेतोः सत्त्वात् व्यभिचारः स्यात्। भ्रमज्ञाने व्यभिचारवारणाय हेतौ सत्यन्तं विशेषण-मुपात्तम्। सत्यन्तविशेषणोपादानेऽपि भ्रमज्ञाने कथं व्यभिचारवारणमिति प्रदर्शयन्नाह—विपर्ययविषयस्तु नाज्ञात इति। विपर्ययज्ञानं तद्विषयस्तु एकाज्ञानोपादानकत्वात् युगपदेवोत्पद्येते, युगपदेव विनश्यतः; अतो विपर्यय-विषयस्य नाज्ञातसत्त्वं संभवति। विपर्ययकालात् प्रागसत्त्वात् तदेवाह—विपर्यय-

अनुकूलतर्कश्च 'त्वदुक्तमर्थं न जानामी'ति प्रतीत्यन्यथानुपपत्त्यादिरूपः प्रागुक्त एव। एतेन गोशब्दवाच्यत्वेन पृथिव्या अपि शृङ्गित्वानुमानापातोऽपास्तः; तत्रानुकूलतर्काभावात्। अज्ञानस्य स्वरूपेणाज्ञानाविषयत्वेऽपि तद्भावत्वादिकमज्ञानविषयो भवत्येव; तस्याज्ञानग्राहकसाक्ष्यग्राह्यत्वात्। अन्यथा तत्र विवादो न स्यात्। एवं प्रमायाः स्वविषयावरणभावपूर्वकत्वमपि न प्रमास्वरूपग्राहकसाक्षिग्राह्यम्।

---

कालान्यकालासत्त्वेनेति विपर्ययज्ञानविषयस्य विपर्ययकालान्यकालासत्त्वेन तस्य अज्ञातसत्त्वाभावात्। विपर्ययविषयस्य अज्ञानोपादानकत्वेन अनिर्वचनीयत्वात् साक्षिसिद्धत्वेन प्रमाणगोचरत्वाभावात्, अज्ञातज्ञापकत्वं हि मानलक्षणं मानगोचरस्यैव मानोत्पत्तेः प्राक् अज्ञातसत्त्वमवश्यं स्वीकार्यम्, अज्ञातस्य साक्षिसिद्धत्वात्। विपर्ययविषयस्य अज्ञानोपादानकस्य अनिर्वचनीयस्य विपर्ययज्ञानोत्पत्तेः प्रागसत्त्वेन विपर्ययज्ञानोत्पत्तेः प्रागज्ञातसत्त्वाभावात् अज्ञाताविषयकत्वेन विपर्ययस्य न अप्रकाशविरोधित्वम्; अप्रकाशो अज्ञानम्, विपर्ययस्य अज्ञातविषयकत्वाभावेन न तस्य अज्ञानविरोधित्वम्। अज्ञानविषयकत्वेन प्रमाया एवाज्ञानविरोधित्वमित्यर्थः। अतः विपर्ययविषये अप्रकाशाभावात् अज्ञानाभावादित्यर्थः। सामान्येन अधिष्ठानांशस्फुरणम् अध्यासजनकमेव, सामान्यतोऽधिष्ठानस्फुरणे अध्यासस्य अनुदयात्। अत एव सम्प्रयोगदोषसंस्काराणां त्रयाणम् अध्यासकारणत्वमुक्तं विवरणे। स्मरणे व्यभिचाराभावः स्पष्ट इति स्मरणस्य गृहीतग्राहित्वात्, अतः समृतिर्न अप्रकाशितार्थविषयिणी, नापि अप्रकाशविरोधिनीति हेतुद्वयमेव स्मृतौ नास्तीति न व्यभिचारशंकापीति भावः। नियतगृहीतग्राहित्वेन स्मृतौ साध्याभावोऽपि स्पष्ट एव अत एव प्रमाज्ञानं पक्षत्वेन निर्दिष्टम्।

हेतोर्व्यभिचारशङ्कानिवारकं तर्कं दर्शयितुमाह—अनुकूलतर्कश्च त्वदुक्तमर्थं न जानामीति प्रतीत्यन्यथानुपपत्तिरूपः प्रागुक्त एव। एतेन गोशब्दवाच्यत्वेन पृथिव्या अपि शृङ्गित्वानुमानापातोऽपास्तः। तत्र अनुतुलतर्काभावात्। अज्ञानस्य स्वरूपेण अज्ञानाविषयत्वेऽपि तद्भावत्वादिकमज्ञानविषयो भवत्येव तस्याज्ञानग्राहकसाक्ष्यग्राह्यत्वात् अन्यथा तत्र विवादो न स्यात्। एवं प्रमायाः स्वविषयावरणभाव-

तथा च तद्ग्राहिकाया एतस्या अनुमितेः साध्यसाधनोभयाधिकरणत्वात् न कोऽपि दोषः ॥१२॥

---

पूर्वकत्वमपि न प्रमास्वरूपग्राहकसाक्षिग्राह्यम् । तथा च तद्ग्राहिकाया एतस्यानुमितेः साध्यसाधनोभयाधिकरणत्वात् न कोऽपि दोषः । उक्तं च कल्पतरौ त्वदुक्तमर्थं न जानामीति व्यवहारान्यथानुपपत्तिश्च मानम् । [ब्र० सू० १।३।३०] विवृतञ्चैतत् परिमले—यद्यपि त्वदुक्तमर्थं न जानामीति प्रत्यक्षमप्यज्ञाने अस्ति तथापि तस्य स्वमते साक्षिरूपत्वेन प्रमाणत्वाभावात् साक्षिसिद्धाज्ञाने अभावत्वशङ्काव्यावृत्त्यर्थं प्रमाणोपन्यासस्य प्रस्तुतत्वात् विवदमानस्य परस्य प्रत्यक्षेण तुष्ट्यभावाच्च तथाभूतव्यवहारान्यथानुपपत्तिरूपम् अर्थापत्तिप्रमाणमुदाहृतमिति । पक्षे हेतुमति साध्याभावशङ्कायाम् अनिष्टप्रसंजनं विना हेतोरगमकत्वात् व्यभिचारशङ्कोत्सारकस्तर्क आवश्यकः; व्यभिचारशङ्कोत्सारकतर्काभावे अप्रयोजको हेतुर्न साध्यसाधक इति हेतोर्विपक्षवृत्तित्वशङ्कानिवारकं तर्कमाह—त्वदुक्तमर्थं न जानामीति । त्वदुक्तमर्थं न जानामीति प्रतीतिः साक्षिरूपा अज्ञानप्रत्यक्षवादे प्रागेवोदाहृता । त्वदुक्तार्थगोचरं भावरूपाज्ञानं विना एपा साक्षिरूपा प्रतीतिरनुपपन्ना स्यात् । यदि त्वदुक्तार्थगोचरं भावरूपमज्ञानं न स्यात्तर्हि त्वदुक्तार्थं न जानामीति साक्षिरूपा प्रतीतिर्न स्यात्, अस्ति च सा प्रतीतिः सर्वानुभवसिद्धा । ज्ञानाभावमादाय यथा सा प्रतीतिरुपपादयितुं न शक्यते, तथा निपुणतरमुपपादितमधस्तात्, अज्ञानस्य साक्षिप्रत्यक्षनिरूपणप्रकरणे । अत एव मूले प्रागुक्त एव इत्युक्तम् । प्रदर्शिततर्कसनाथीकृतोऽयं हेतुः साध्यस्य साधकः । अनुकूलतर्करहितं पूर्वपक्षिप्रदर्शितमनुमानमाभास एव । यथा पृथिवी श्रृङ्गादिमती गोशब्दवाच्यत्वात् प्रसिद्धगोवृषभादिवदिति; अयं हेतुर्विपक्षवृत्तित्वबाधकतर्काभावात् साध्यासाधक एव । अत एवोक्तम् अनुमानापातोऽपास्त एवेति । श्रृंगादिरहितमपि यदि गोशब्दवाच्यं स्यात्तर्हि का हानिः स्यात् इत्यत्र कस्याश्चित् हानेरभावात् नायं हेतुः साध्यसाधक इति । पूर्वपक्षी शङ्कते—इयमविद्यानुमितिः पक्षे अन्तर्भवति वा ? न वा ? यदि अन्तर्भवति तर्हि अविद्यागोचराविद्याया अभावात् पक्षे साध्याभावात् अंशतो बाधः स्यात् । इयमविद्यानुमितिरेव अज्ञानपूर्विका न भवतीति । यदि इयम् अनुमितिः पक्षानन्तर्भूता तर्हि तत्र

अप्रकाशितार्थप्रकाशकत्वस्य हेतोः सत्त्वात् तत्र साध्याभावात् व्यभिचारः। एवं रीत्या बाधव्यभिचारौ अपरिहार्यौ भवतः। इदमेव दूषणं रामानुजभाष्ये महता आडम्बरेण प्रदर्शितम्। तत्राकृतबुद्धयो भ्राम्यन्ति; कृतबुद्धयस्तु स्मेरानना [हसन्तो] वर्तन्ते। आचार्यस्तु विवरणाचार्योक्तिमेव पंक्तिद्वयेन संगृह्णन् अनायासेन इमामाशङ्कां परिहरन्नाह—अज्ञानस्य स्वरूपेण अज्ञानाविषयत्वेऽपीति। अज्ञानस्वरूपं साक्षिसिद्धम्, साक्षिभास्ये अज्ञानाभावात् भावे वा तद्भास्यमेव न स्यात्। साक्षिणो अज्ञानसाधकत्वेनाज्ञानबाधकत्वाभावात्। यद्यपि अज्ञानस्वरूपमेव साक्षिसिद्धं तथापि तस्मिन्नज्ञाने भावत्वादिकं न साक्षिभास्यम्, आदिपदात् ज्ञाननिवर्त्यत्वादिकं ग्राह्यम्। अज्ञानगतो यो धर्मो न साक्षिणा गृह्यते स धर्मोऽज्ञानावृत एव वर्तते, तदावरकाज्ञाननिवृत्तये प्रमाणं प्रवर्तते; अतोऽज्ञाने ये धर्माः साक्षिणा न गृह्यन्ते तत्र अनुमानं प्रवर्तते। अनुमानेन ये अज्ञानधर्माः सिध्यन्ति न ते साक्षिणा गृह्यन्ते। अतो बाधव्यभिचारयोः शङ्का निर्मूलैव। वेदान्तसिद्धान्तानवबोधविजृंभिता बोध्या। चित्रमिदं यस्याः शङ्कायाः समाधानं विवरणकृतैव कण्ठरवेण कृतं तद् दृष्ट्वापि रामानुजमध्वादिभिः कण्ठकोलाहलः कृतः इति अज्ञानगतं भावत्वादिकं यदि साक्षिणैव गृहीतं स्यात्तर्हि तत्र वादिनां विवादो न भवेत्। यथाऽज्ञानस्वरूपमेव साक्षिग्राह्यम् एवं प्रमास्वरूपमपीति प्रमायाः स्वरूपतः साक्षिग्राह्यत्वेऽपि अज्ञातार्थविषयकत्वरूपप्रमात्वस्यापि साक्षिग्राह्यत्वात् यद्यपि अज्ञानमपि प्रमात्वघटकतया साक्षिग्राह्यमेव तथापि अज्ञानावृतं भावत्वं न साक्षिणा ग्रहीतुं शक्यते। यथा अज्ञानग्राहकेण साक्षिणा अज्ञानगतं भावत्वादिकं ग्रहीतुं न शक्यते तथा प्रमात्वघटकाज्ञाने साक्षिणा गृहीतेऽपि अज्ञानगतं भावत्वादिकं साक्षिणा ग्रहीतुं न शक्यते। अज्ञानगतभावत्वादेः साक्षिग्राह्यत्वे तत्र विवादो न स्यात्। अज्ञानगतभावत्वादेर्विवादास्पदत्वादेव न तस्य साक्षिग्राह्यत्वमिति प्रमाणेन तन्निर्णीयते इति नाज्ञाने प्रमाणोपन्यासो दोषः। उक्तं च विवरणे "अत्र च साक्षिवेद्यस्य अज्ञानस्य प्रमाणैरभावव्यावृत्तिः प्रदर्श्यते इति न तस्य प्रमाणवेद्यत्वप्रसङ्गः" [विवरणम्, पृ०, ४३ काशीविजयनगरसं०] अज्ञानस्य यद्रूपं विवादास्पदं तन्न साक्षिवेद्यं किन्तु प्रमाणवेद्यमेव तत्। तथा च अज्ञाने साक्षिसिद्धेऽपि

दृष्टान्ते चान्धकाराव्यवहितोत्पत्तिकत्वं विशेषणम्। तेन न प्रथमपदवैयर्थ्यं न वा द्वितीयादिप्रभायां साध्यसाधनवैकल्यम्। विस्तरेण चान्यत्र व्युत्पादितमिदमस्माभिः ॥१३॥

---

अज्ञानगताभावव्यावृत्त्यादेः साक्ष्यग्राह्यत्वात् तत्सिद्धये अनुमानप्रमाणोपन्यासात्। तथा च अज्ञानगताभावव्यावृत्त्यादेः ग्राहिकाया एतस्या अनुमितेस्तादृशवस्त्वन्तरपूर्वकत्वम् अप्रकाशितार्थप्रकाशकत्वं साध्यं साधनं च द्वयमस्तीति न कोऽपि दोषः। न बाधव्यभिचारौ दोषौ संभवतः इत्यर्थः। पूर्वपक्षिणा एतावेव दोषौ शंकितौ द्यस्माभिरपि प्रदर्शितौ तौ दोषौ न संभवत इत्यत आह—न कोऽपि दोषः। अविद्यानुमाने एतस्या अनुमितेः पक्षान्तर्भावे पक्षबहिर्भावे च एतौ दोषौ पूर्वपक्षिणा शङ्कितौ ॥१२॥

अविद्यानुमाने साधनांशविवरणं समाप्तम्।

१३—अविद्यानुमाने उदाहरणवाक्यं विवृण्वन्नाह—दृष्टान्ते च अन्धकाराव्यवहितोत्पत्तिकत्वं विशेषणम्। तेन न प्रथमपदवैयर्थ्यम्। न वा द्वितीयादिप्रभायां साध्यसाधनवैकल्यम्। विस्तरेण च अन्यत्र व्युत्पादितमस्माभिः। अन्धकारोत्पन्नप्रदीपप्रभाया एव दृष्टान्तत्वसम्भवे अन्धकारे प्रथमोन्नेति प्रथमपदं व्यर्थमिति पूर्वपक्षिशंकासमाधानाय आह—अन्धकाराव्यवहितोत्पत्तिकत्वं विशेषणमिति। अयं भावः—अविद्यानुमाने प्रदीपप्रभैव दृष्टान्तः। किन्तु सूर्यकिरणवितते देशे विद्यमानायां प्रदीपप्रभायां साध्यसाधनयोर्वैकल्यं स्यात्, तादृशप्रदीपप्रभायां साध्यं साधनं च न स्त इति दृष्टान्ते साध्यसाधनवैकल्यपरिहाराय अन्धकाराव्यवहितोत्पत्तिकत्वं प्रदीपप्रभायां विशेषणं देयम्। अन्धकाराव्यवहितोत्पत्तिकप्रदीपप्रभा न दृष्टान्त इत्यर्थः। प्रदीपप्रभाया अन्धकाराव्यवहितोत्पत्तिकत्वबोधनाय प्रथमपदमुपात्तम्। प्रथमपदेन प्रदीपप्रभाया अन्धकाराव्यवहितोत्पत्तिकत्वं बोधितमिति न प्रथमपदं व्यर्थमित्यर्थः। प्रदीपप्रभाया उत्पत्तेः प्राथम्यबोधनाय न प्रथमपदमुपात्तम्, येन व्यर्थं स्यात्; किन्तु प्रभाया अन्धकाराव्यवहितोत्पत्तिकत्वबोधनाय, अतो न प्रथमपदं व्यर्थमिति भावः। अत्र पूर्वपक्षिणा दृष्टिसृष्टिप्रक्रियामवलम्ब्य प्रदीपप्रभायां दृष्टान्ते साध्यसाधनवैकल्यं प्रदर्शितम्। तत् अद्वैतसिद्धान्तानवबोधविजृम्भितमिति आचार्येणोपेक्षितम्।

ननु—अनादित्वे सति भावत्वमभावविलक्षणत्वं वा, न निवर्त्य-निष्ठम्, अनादिभावमात्रवृत्तिधर्मत्वात्, अनाद्यभावविलक्षणमात्रवृत्ति-त्वाद्वा, आत्मत्ववत्।

---

अस्मिन्नेव प्रकरणे उक्तमाचार्येण प्रतिकर्मव्यवस्थामभ्युपगम्य चेदमनुमानं न तु दृष्टिसृष्टिपक्षे इति ध्येयम्। दृष्टिसृष्टिपक्षे विषयस्य अज्ञातसत्त्वाभावात् न प्रतिकर्मव्यवस्थोपपद्यते। विषयस्य अज्ञातसत्त्वमभ्युपगम्यैव यथा प्रतिकर्म-व्यवस्था तथा इदमविद्यानुमानमिति।

अविद्यानुमाने दृष्टान्तवाक्यविवरणं समाप्तम्।

सोपाधिकत्वेन इदमनुमानमसङ्गतमित्युक्तं तरङ्गिणीकृता। अस्मिन्ननुमाने अन्धकारनिवर्तकत्वमुपाधिः। अयमुपाधिः दृष्टान्तप्रदीपप्रभायां वर्तते, अतः साध्य-व्यापकः पक्षीकृतप्रमायां न वर्तते इति साधनाव्यापक इति तन्न, अनुकूलेन तर्केण हेतौ साध्यव्याप्तेरवधारणे हेत्वव्यापक उपाधिः साध्यस्य व्यापको न भवितुमर्हति। साध्यव्यापकोपाधिव्यभिचारित्वेन हेतोः साध्यव्यभिचारित्वं स्यात्। व्यभिचार-स्यानुमानमुपाधेस्तु प्रयोजनमित्यभियुक्तोक्तेः। हेतोः साध्यव्यभिचारित्वानुमानं न संभवति, अनुकूलतर्केण हेतोः साध्याव्यभिचारित्वस्य अवधृतत्वादिति। अयं-मुपाधिर्न साध्यव्यापकः, साध्यव्याप्यहेतोरव्यापकत्वात्, व्याप्याव्यापकस्य व्यापकाव्यापकत्वनियमादिति ॥१३॥

अस्मिन्ननुमाने प्रतिरोधानुमानप्रदर्शनम्।

१४—अस्मिनविद्यानुमाने षट् प्रतिरोधानुमानानि प्रदर्शितानि पूर्वपक्षिणा। स्थापनानुमाने यः पक्षः स एव प्रतिरोधानुमानेऽपि इति नियमाभावात् एवं स्थाप-नानुमाने यत् साध्यं तदभाव एव प्रतिरोधानुमाने साध्यमित्यस्यापि नियमस्याभावात् केवलं स्थापनानुमानविरोधिप्रमेयसाधकानुमानमेव प्रतिरोधानुमानमित्यभिप्रेत्य पूर्वपक्षी प्रतिरोधानुमानानि दर्शयति—ननु अनादित्वे सति भावत्वम् अभावविलक्षणत्वं वा, न निवर्त्यनिष्ठम्, अनादिभावमात्रवृत्तिधर्मत्वात् अनाद्यभावविलक्षणमात्रवृत्तिधर्मत्वात् आत्मत्ववत्। विवरणाचार्यप्रदर्शित-मेतदनुमानम् अनादिभावरूपज्ञाननिवर्त्याज्ञानसिद्धये प्रवृत्तम्; यदि अनादिभावरूप-मज्ञानं ज्ञाननिवर्त्यं न भवतीति अनुमानान्तरेण साध्यते तदा ज्ञाननिवर्त्यत्वघटित-साध्यविरोधिनः साधनात् भवत्येव प्रतिरोधानुमानमित्यभिप्रेत्य न्यायामृतकृता

अनादित्वे सति भावत्वं न निवर्त्यनिष्ठम् अनादिभावमात्रवृत्तित्वात् आत्मत्ववत् इत्येकं प्रतिरोधानुमानं प्रदर्शितम्। अविद्याया भावत्वपक्षे प्रथममनुमानम्। अविद्याया न भावत्वं किन्तु अभावविलक्षणत्वमेव। अभाववैलक्षण्यादेव अज्ञानस्य भावपदेन निर्देशादिति सिद्धान्तिमतमाशङ्क्य द्वितीयमनुमानम्—अनादित्वे सति अभाव-विलक्षणत्वम्, न निवर्त्यनिष्ठम्, अनाद्यभावविलक्षणमात्रवृत्तिधर्मत्वात् आत्मत्ववदिति द्वितीयम् अनुमानं प्रदर्शितम्, अज्ञानम् अनादिभावरूपं ज्ञाननिवर्त्यञ्च इति अद्वैतवादिनो वदन्ति। प्रदर्शितानुमानेनापि तादृशमज्ञानं साधयन्ति; अस्यानुमानस्य प्रतिरोधाय अस्मिन्ननुमाने यत् साध्यं तद्विरुद्धधर्मस्य सिद्धये प्रतिरोधानुमानं न्यायामृतकृता प्रदर्शितम्। अनादिभावमात्रवृत्तिधर्मो यदि निवर्त्यनिष्ठो न भवेदिति अनुमीयेत तदा अविद्यानुमानस्य प्रतिरोधो भवेत्। अनादिभावमात्रवृत्तिधर्मो आत्मत्वं तच्च कदापि निवर्त्यनिष्ठं न भवतीति उभयसम्मतमेव। एवमनादित्वे सति भावत्वमपि अनादिभावमात्रवृत्तिधर्मत्वात् निवर्त्यनिष्ठं न भवेत् अज्ञानेऽपि अनादित्वे सति भावत्वं वर्तते, तद् यदि अनादिभावमात्रवृत्तित्वेन निवर्त्यनिष्ठं न भवेत् तदा सिद्धान्त्यभिमताज्ञानस्य असिद्धिरेव स्यात्। अज्ञानत्वमपि आत्मत्ववदेव अनादिभाव-मात्रवृत्तिधर्मत्वेन निवर्त्यनिष्ठं न स्यात्। अज्ञानत्वस्य निवर्त्यावृत्तित्वे अज्ञानस्य ज्ञाननिवर्त्यत्वमेव न स्यादिति भावः। अनादिभाव आत्मा यथा कदापि न निवर्तते एवमनादिभावरूपमज्ञानमपि कदापि न निवर्तिष्यते इति पूर्वपक्षि-णोऽभिप्रायः। सर्वेषां द्वैतवादिनामपि अयमेवाभिप्रायः। अनादिभावरूपस्य अज्ञानस्य आत्मवदेव निवृत्तिर्न भवितुमर्हतीति। अनादिभावमात्रवृत्तिधर्मत्वादिति हेतौ भावपदानुपादाने प्रागभावत्वे व्यभिचारः स्यात् प्रागभावस्य प्रतियोगि-निवर्त्यत्वात् प्रागभाववत्वं निवर्त्यनिष्ठमेव। अतः साध्याभाववति हेतोर्वृत्तेर्व्यभि-चारः स्यात्, तद्वारणाय हेतौ भावपदमुपात्तम्। हेतौ अनादिपदानुपादाने घटत्वादौ व्यभिचारः स्यात्, घटत्वादीनां भावमात्रवृत्तिधर्मत्वात् निवर्त्यनिष्ठत्वाच्च। तद्वार-णाय हेतौ अनादिपदस्य उपादानम्। हेतौ मात्रपदानुपादाने प्रमेयत्वादिधर्मे व्यभिचारः स्यात्, प्रमेयत्वादिधर्मो अनादिभाववृत्तिरपि निवर्त्यघटादिनिष्ठोऽपीति व्यभिचारः स्यात् तद्वारणाय मात्रपदमुपात्तम्। द्वितीयं तु अनादित्वे सति अभावविलक्षणत्वं न निवर्त्यनिष्ठम् अनाद्यभावविलक्षणमात्रवृत्तिधर्मत्वात् आत्मत्ववत्। अद्वैतिमते अज्ञाने यद्भावत्वमुक्तं तदभाववैलक्षण्यमेव अभावविलक्षणत्वादेव

निवर्त्यत्वं वा, नानादिभावनिष्ठम्, अनाद्यभावविलक्षणनिष्ठं नेति वा, निवर्त्यमात्रवृत्तित्वात्, प्रागभावत्ववत्। अनादित्वं वा, नावरण-निष्ठम्, अनादिमात्रवृत्तित्वात्, प्रागभावत्ववत्। प्रमाणज्ञानं वा अनाद्यभावान्यानाद्यनिवर्तकम्, ज्ञानत्वात्; भ्रमवदित्यादिना सत्प्रति-पक्षता; कृत्यभावमात्रेणाकृतस्य कृतिवत् पूर्वप्रकाशाभावमात्रेणा-प्रकाशितस्य प्रकाशोपपत्तेरप्रयोजकत्वं चेति—चेत् ॥१४॥

---

अज्ञानस्य भावत्वमुक्तम्, न तु अज्ञाने भावत्वधर्मोऽङ्गीक्रियते; अज्ञानस्य भावा-भाववैलक्षण्येन अनिर्वचनीयत्वादिति अद्वैतिमतमभिप्रेत्य द्वितीयं प्रतिरोधानुमानं प्रदर्शितम्। अनादित्वे सति अभावविलक्षणत्वं यदि निवर्त्यनिष्ठं न भवेत्, तर्हि अनाद्यभावविलक्षणज्ञाननिवर्त्यमज्ञानं न सिध्येत इत्यभिप्रायः, द्वितीयानुमानस्य भावस्तु पूर्ववत्। प्रतिरोधान्तरं शङ्कते—निवर्त्यत्वं वा नानादिभावनिष्ठम् अनाद्यभावविलक्षणनिष्ठं नेति वा निवर्त्यमात्रवृत्तित्वात् प्रागभावत्व-वत्। अनादित्वं वा नावरणनिष्ठम् अनादिमात्रवृत्तित्वात् प्रागभावत्व-वत्। प्रमाणज्ञानं वा अनाद्यभावान्यानाद्यनिवर्तकं ज्ञानात् भ्रमवत् इत्यादिना सत्प्रतिपक्षता। कृत्यभावमात्रेणाकृतस्य कृतिवत् पूर्वप्रकाशा-भावमात्रेण अप्रकाशितस्य प्रकाशोपपत्तेः अप्रयोजकत्वञ्च इति चेत्। निवर्त्यत्वं न अनादिभावनिष्ठं निवर्त्यमात्रवृत्तित्वात् प्रागभावत्ववत् इत्येकं प्रतिरोधानुमानम्। द्वितीयञ्च—निवर्त्यत्वं न अनाद्यभावविलक्षणनिष्ठं निवर्त्यमात्रवृत्तित्वात् प्रागभावत्ववदिति। अत्र प्रथमप्रयोगस्य अयमाशयः—यो निवर्त्यमात्रवृत्तिधर्मः स अनादिभावनिष्ठो न भवति यथा प्रागभावत्वम्। प्रागभावमात्रं निवर्त्यम् अनिवर्त्यप्रागभावे प्रमाणाभावात्। अतो विनाश्यभावत्वं प्रागभावलक्षणं वदन्ति। अतः प्रागभावत्वं निवर्त्यमात्रवृत्ति भवति। निवर्त्य-मात्रवृत्तिप्रागभावत्वं यथा अनादिभावनिष्ठं न भवति। एवं निवर्त्यत्वमपि निवर्त्यमात्रवृत्तित्वात् न अनादिभावनिष्ठं भवेत्। निवर्त्यत्वं यदि अनादिभा-वनिष्ठं न भवेत् तर्हि अनादिभावभूतज्ञाननिवर्त्यमज्ञानं न सिध्येत् यदज्ञानानुमानेन सिषाधयिषितं सिद्धान्तिना। अतः प्रथमानुमानम् अज्ञानानुमानस्य प्रतिरोधरूपं संवृत्तम्। अज्ञानस्य न भावत्वं किन्तु अभाववैलक्षण्यमेवेति सिद्धान्तिमतमभिप्रेत्य

द्वितीयं प्रतिरोधानुमानम् । द्वितीयानुमानस्य भावस्तु पूर्ववत् । प्रथमानुमानाद् द्वितीयानुमानस्य यद्वैलक्षण्यं तदुक्तमेव । पञ्चमं प्रतिरोधानुमानमाह—अनादित्वं वा नावरणनिष्ठमिति । अनादित्वम् अनादिमात्रवृत्ति, सादिवस्तुनि अनादित्वं न वर्तते । यद् यदनादिमात्रवृत्ति तन्नावरणनिष्ठम्, यथा प्रागभावत्वम् अनादिप्रागभावमात्रवृत्ति, तन्नावरणनिष्ठम् अनाद्यावरणस्याभावात्, प्रागभावस्यापि अनावरणत्वात्, प्रागभावस्य अनावरणत्वं सिद्धान्तिनोऽपि अभिप्रेतम् । अत एव विवरणीयसाध्यस्य साध्यद्वये तात्पर्यमुक्तम् । अतो अनाद्यावरणासिद्धौ अनाद्यावरणमज्ञानमपि न सिध्येदित्यभिप्रायः । स्थापनानुमानस्य विरोधिप्रमेयसाधकानुमानमेव प्रतिरोधानुमानमित्यभिप्रेत्य प्रतिरोधपञ्चकं प्रदर्शितम् पूर्वपक्षिणा । स्थापनानुमाने यः पक्षः स एव प्रतिरोधानुमानेऽपीति नियमाभावात्; एवं स्थापनानुमाने यत् साध्यं तदभाव एव प्रतिरोधानुमाने साध्यमित्यस्यापि नियमस्याभावात्, प्रतिरोधपञ्चकं पूर्वपक्षिणा प्रदर्शितम् । यदि स्थापनानुनाने यत् साध्यं तदभाव प्रव प्रतिरोधानुमाने साध्यमिति नियमः स्यात्तर्हि केवलान्वयिसाध्यकानुमाने असत्प्रतिपक्षितत्वरूपं न स्यात् । शब्दोऽभिधेयः प्रमेयत्वादिति केवलान्वयिसाध्यकानुमाने साध्याभावस्य अप्रसिद्धत्वात् सत्प्रतिपक्षानुमानस्यैवासम्भवात् । अतोऽस्मिन् केवलान्वयिसाध्यकानुमाने अभिधेयत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वात् रूपवदिति प्रतिपक्षप्रसक्तिः मणिकृतापि अङ्गीकृता । अतस्तन्मतमनुसृत्यैव अत्र प्रतिपक्षानुमानपञ्चकं प्रदर्शितम् । यदि प्रतिपक्षानुमानेऽपि समानधर्मिकत्वादिनियम आवश्यक इत्युच्येत, तदापि प्रतिपक्षानुमानमत्र सम्भवति तदेवाह—प्रमाणज्ञानं वेति । प्रमाणज्ञानम्, अभावान्यानाद्यनिवर्तकम्, ज्ञानत्वात्, भ्रमवदिति । स्थापनानुमाने प्रमाणज्ञानमेव पक्षः, तदेव षष्ठप्रतिरोधानुमानेऽपि; स्थापनानुमाने प्रागभावव्यतिरिक्तानादिनिवर्तकत्वं साध्यम्, अस्मिन् प्रतिरोधानुमाने तस्य निवर्तकत्वस्याभावः साध्यम् । अस्मिन् साध्ये अभावान्येत्यनुपादाने बाधः स्यात् । प्रमाणज्ञानस्य अनादिस्वप्रागभावनिवर्तकत्वात्, अतो बाधवारणाय अभावान्येति विशेषणम् । सिद्धान्ते स्वप्रागभावव्यतिरिक्तानादिनिवर्तकत्वं साध्यम्, तदभावोऽत्र साध्यते इति भवत्येवैतत् सत्प्रतिपक्षानुमानमिति । अस्मिन्ननुमाने भ्रमज्ञानं दृष्टान्तः, तच्च

न, अनुकूलतर्काभावेनाप्रयोजकत्वात्, सिद्धान्तिहेतोश्चानुकूलतर्कसद्भावेन साध्यव्याप्यत्वे निश्चिते सत्प्रतिपक्षाप्रयोजकत्वादीनामनवकाशात्। अनादिभावत्वस्य निवर्त्यावृत्तित्वेऽप्यविद्याया भाव-

---

स्वप्रागभावव्यतिरिनिक्तानादिनिवर्तकं न भवति। भ्रमस्य अनाद्यज्ञानानिवर्तकत्वात्। भ्रमज्ञानमपि ज्ञानमेव; तथा च यद्यज्ज्ञानं तत् स्वप्रागभावव्यतिरिक्तानाद्यनिवर्तकं यथा भ्रमज्ञानमिति। प्रमाणज्ञानस्यापि स्वप्रागभावव्यतिरिक्तानाद्यनिवर्तकत्वे सिद्धे अनाद्यज्ञानस्य असिद्धिरेवेति भवत्येतत् सत्प्रतिपक्षानुमानमिति एतदविद्यानुमानमप्रयोजकमपीत्याह पूर्वपक्षी—कृत्यभावमात्रेण अकृतस्येति। प्रमाणज्ञानस्य अप्रकाशितार्थप्रकाशकत्वाय प्रमाज्ञानोत्पत्तेः प्राक् प्रमाविषयप्रकाशाभावादेव अप्रकाशितार्थप्रकाशोपपत्तौ न तदर्थं प्रमाविपयविषयकं भावरूपाज्ञानमपेक्षितम्। येन हेतुना भावरूपम् अज्ञानं सिध्यतीति सिद्धान्ती मन्यते, तेन हेतुना ज्ञानाभावसिद्धिरेव वा स्यात् न भावरूपाज्ञानस्य। प्रमोत्पत्तेः प्राक् ज्ञानाभावसत्त्वेनापि अप्रकाशितार्थप्रकाशकत्वस्य उपपत्तेर्नायं हेतुर्भावरूपाज्ञानमपेक्षते। अतः साध्यागमकत्वादयं हेतुरप्रयोजकः। यथा घटविषयककृतेः प्राक् कृतेरभावादेव अकृतघटस्य करणमुपपद्यते। अकृतघटस्य करणाय न भावरूपा अकृतिरपेक्ष्यते, न वा केनचित् तथा स्वीक्रियते; एवम् अज्ञातविषयज्ञानाय ज्ञानाभावोऽपेक्ष्यते; न तु भावरूपमज्ञानम्; अन्यथा भावरूपा अकृतिरपि अङ्गीकार्या स्यात्। एवम् अस्मृतस्मृतावपि बोध्यम्; स्मृत्यभावमात्रेण अस्मृतत्वोपपत्तौ न तदर्थं भावरूपमस्मरणमङ्गीकरणीयम्; एवं प्रकृतेऽपीति भावः ॥१४॥

१५—अनुकूलतर्कसद्भावेन सत्प्रतिपक्षाप्रयोजकत्वयोरनवकाश इत्याह सिद्धान्ती—न, अनुकूलतर्काभावेन अप्रयोजकत्वात् सिद्धान्तिहेतोश्च अनुकूलतर्कसद्भावेन साध्यव्याप्यत्वे निश्चिते सत्प्रतिपक्षाप्रयोजकत्वादीनामनवकाशात्। प्रदर्शितदोषान् सामान्यत उद्धरिष्यन्नाह—नेति। पूर्वपक्षिप्रदर्शित प्रतिरोधानुमानानां साध्यव्याप्तिग्राहकानुकूलतर्काभावेन अप्रयोजकत्वात्—साध्यागमकत्वात्; अतस्तानि दुर्बलानीत्यर्थः। सिद्धान्तिसम्मताविद्यासाधकहेतोश्च 'प्रदर्शितानुकूलतर्कसद्भावेन हेतोः साध्यव्याप्यत्वे अवधृते प्रतिरोधानुमानानाम् अनवकाशात्। हेतुमिति पक्षे साध्याभावज्ञापकहेतूनामनवकाशात् सिद्धान्तसम्मतहेतोश्च अनुकूल-

विलक्षणायाः निवर्त्यत्वोपपत्तेराद्यानुमानेनाविरोधश्च । द्वितीये त्वनाश्रितमात्रवृत्तित्वमुपाधिः । तृतीयचतुर्थयोः सकलनिवर्त्यावृत्तित्वमुपाधिः । पञ्चमे सकलानाद्यवृत्तित्वमुपाधिः । षष्ठे प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरिति च दूषणानि । तत्त्वप्रदीपिकोक्तं च—चैत्रप्रमा, चैत्रगत-

---

तर्कः प्रागेव प्रदर्शितः । अनुकूलतर्कसत्त्वादेव हेतोरप्रयोजकत्वमपि नास्ति; अनुकूलतर्कविरहदशायामेव अप्रयोजकत्वं स्यादिति भावः ।

प्रातिस्विकरूपेण प्रतिरोधानुमानानि दूषयन्नाह—अनादिभावत्वस्य निवर्त्यावृत्तित्वेऽपि अविद्याया भावविलक्षणायाः निवर्त्यत्वोपपत्तेराद्यानुमानेनाविरोधश्च । द्वितीये तु अनाश्रितमात्रवृत्तित्वमुपाधिः । तृतीयचतुर्थयोः सकलनिवर्त्यावृत्तित्वमुपाधिः । पञ्चमे सकलनाद्यवृत्तित्वमुपाधिः । षष्ठे प्रतियोग्यप्रसिद्ध्या साध्याऽप्रसिद्धिरिति च दूषणानि । प्रथमं प्रतिरोधानुमानं नाविद्यानुमानविरोधीत्याह—अनादिभावत्वस्येति । अनादिभावत्वं यदि निवर्त्यानिष्ठं भवेत् तथापि प्रकृते न दोषः, अविद्या न अनादिभावरूपा, अविद्यायाम् अनादिभावत्वधर्मो नास्ति । अविद्याया विद्यानिवर्त्यत्वेऽपि तत्र अनादिभावत्वधर्मोऽस्माभिर्नाङ्गीक्रियते । अतो न प्रथमप्रतिरोधानुमानेन अविद्यानुमानप्रतिरोधः सम्भवति अविरोधादिति भावः । द्वितीयप्रतिरोधानुमानमपि असंगतम् अनाश्रितमात्रवृत्तित्वस्योपाधित्वात् । अस्मिन् द्वितीयानुमाने आत्मत्वं दृष्टान्तः । अनादित्वे सति अभावविलक्षणत्वं पक्षः । आत्मत्वस्य आत्ममात्रवृत्तित्वाद् आत्मनोऽनाश्रितत्वाद् आत्मत्वे दृष्टान्ते अनाश्रितमात्रवृत्तित्वमुपाधिर्वर्तते । अनादित्वे सति अभावविलक्षणत्वरूपे पक्षे अनाश्रितमात्रवृत्तित्वम् उपाधिर्न वर्तते । अनादित्वे सति अभावविलक्षणत्वं घटादिजातौ वर्तते । घटत्वादिजातिगताभावविलक्षणत्वे पक्षे अनाश्रितमात्रवृत्तित्वरूपोपाधिर्न वर्तते, घटत्वादेराश्रितत्वात् । दृष्टान्ते उपाधेः सत्त्वाद् उपाधेः साध्यव्यापकतापक्षे उपाधेरसत्त्वाद उपाधेः साधनाव्यापकता च सिद्धा भवति । साध्यव्यापकसाधनाव्यापकस्यैव उपाधित्वात् । उक्तञ्च मानमेयोदये—

तस्मादुपाधिमिच्छद्भिः पक्षभूमिमवाप्नुवन् ।
सपक्षान् व्याप्नुवन् धर्मो मृग्यतामिति संग्रहः ॥ इति

प्रमाप्रागभावातिरिक्तानादिनिवर्तिका, प्रमात्वान्मैत्रप्रमावत् ; विगीतो विभ्रमः, एतज्जनकाबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, संमतवदिति।

---

तृतीयचतुर्थप्रतिरोधानुमानयोः उपाधिमाह—**तृतीयचतुर्थयोरिति**। सकलनिवर्त्यावृत्तित्वमुपाधिः। तृतीयचतुर्थानुमानयोः निवर्त्यत्वं पक्षः प्रागभावत्वं दृष्टान्तः। प्रागभावत्वस्य निवर्त्यप्रागभाववृत्तित्वेऽपि घटादिसकलनिवर्त्यावृत्तित्वात् प्रागभावत्वे दृष्टान्ते सकलनिवर्त्यावृत्तित्वम् उपाधिर्वर्तते। निवर्त्यत्वे पक्षे सकलनिवर्त्यवृत्तित्वात् सकलनिवर्त्यावृत्तित्वरूपोपाधिर्न वर्तते। अतः पूर्वोक्तदिशा सकलनिवर्त्यावृत्तित्वं भवत्येवात्र उपाधिः। पञ्चमे प्रतिरोधानुमानेऽपि उपाधिमाह—**सकलानाद्यवृत्तित्वमुपाधिरिति**। अस्मिन् पञ्चमे प्रतिरोधानुमाने अनादित्वं पक्षः, प्रागभावत्वं दृष्टान्तः प्रागभावत्वस्य अनादिप्रागभाववृत्तित्वेऽपि सकलानाद्यवृत्तित्वात् दृष्टान्ते उपाधिर्वर्तते। अनादित्वस्य पक्षस्य सकलानादिवृत्तित्वात् तत्र सकलानाद्यवृत्तित्वरूपोपाधिर्न वर्तते। अत उपाधेर्दृष्टान्तवृत्तित्वात् साध्यव्यापकत्वम्, पक्षे अवृत्तित्वात् साधनाव्यापकत्वञ्चेति अत्र सकलानाद्यवृत्तित्वम् अत्र भवत्येवोपाधिरिति। षष्ठप्रतिरोधानुमानखण्डनाय आह सिद्धान्ती—**षष्ठे च प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरिति**। षष्ठानुमाने अनाद्यभावान्यानाद्यनिवर्तकत्वं साध्यं तच्च अनाद्यभावान्यानादिनिवर्तकत्वाभावः। पूर्वपक्षिमते प्रमाज्ञानस्य अनादिस्वप्रागभावान्यानादेर्निवर्तकत्वस्य अप्रसिद्ध्या तदभावोऽपि अप्रसिद्धः। असिद्धप्रतियोगिकाभावस्यापि असिद्धेरिति। अतः प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरेव दूषणम्। माध्वमते अप्रसिद्धप्रतियोगिकाभावाङ्गीकारेऽपि सिद्धान्तिना तदनङ्गीकारात् सिद्धान्तिमतदूषणाय न भवतीति भावः।

विवरणाचार्यसम्मताविद्यानुमानविवरणं समाप्तम्।

चित्सुखाचार्यविरचिततत्त्वप्रदीपिकोक्तानुमानद्वयम् 'अविद्यायां मानमाह—तत्त्वप्रदीपिकोक्तञ्च—**[१] चैत्रगप्रमा[१], चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका प्रमात्वात् मैत्रप्रमावत्। [२] विगीतो विभ्रमः एतज्जनकाबाध्यातिरिक्तोपादानकः; विभ्रमत्वात् सम्मतवदिति।**

---

१. प्रमाप्रागभावातिरिक्तानादिप्रमानिवर्त्यत्वमेव अज्ञानलक्षणमभिप्रेत्य इदं प्रथमानुमानं बोध्यम्।

अत्राद्ये सुखादिज्ञानेषु न बाधः; अन्तःकरणवृत्तेरेव प्रमादेनोक्तेः। चैत्रगतत्वं च नानादेर्विशेषणम्; मैत्रप्रमायाश्चैत्रनिष्ठानादिनिवर्तकत्वाभावेन दृष्टान्ते साध्यवैकल्यापातात्, किंतु प्रमातदभावयोरन्यतरस्य; प्रमायाश्चात्मगतत्वं प्राग्व्याख्यातम्, साध्ये तु प्रमापदमुपरञ्जकमेव। यदि त्वभावे प्रागिति विशेषणं नास्ति, तदा भावरूपाज्ञानस्यापि स्वाभावाभावत्वेन तदतिरिक्तानादिनिवर्तकत्वे बाधवारणाय ॥१५॥

---

तत्राद्ये सुखादिज्ञानेषु न बाधः अन्तःकरणवृत्तेरेव प्रमापदेनोक्तेः। चैत्रगतत्वं च नानादेर्विशेषणं मैत्रप्रमायाश्चैत्रनिष्ठानादिनिवर्तकत्वाभावेन दृष्टान्ते साध्यवैकल्यापातात्। किंतु प्रमातदभावयोरन्यतरस्य। प्रमायाश्च आत्मगतत्वं प्राग् व्याख्यातम्। साध्ये तु प्रमापदमुपरञ्जकमेव। यदि तु अभावे प्रागिति विशेषणं नास्ति तदा भावरूपाज्ञानस्यापि स्वाभावाभावत्वेन तदतिरिक्तानादिनिवर्तकत्वे बाधवारणाय। चित्सुखीयप्रथमानुमानेन यथा सिद्धान्त्यभिमता अविद्या सिध्यति तथा प्रदर्श्यते—प्रथमानुमाने चैत्रप्रमापक्षः। चैत्रगतेत्यादिसाध्यं प्रमात्वं हेतुः मैत्रप्रमादृष्टान्तः। दृष्टान्ते मैत्रप्रमायां चैत्रप्रभाप्रागभावातिरिक्तस्य अनादेर्मैत्रप्रमाप्रागभावस्य निवर्तकत्वमस्ति। अतो दृष्टान्ते साध्यमस्ति। प्रमात्वहेतुरपि दृष्टान्ते मैत्रप्रमायाम् अस्ति। पक्षे चैत्रप्रमायां प्रमात्वहेतुना साध्यसिद्धौ बलात् अनाद्यविद्यायाः सिद्धिः स्यात्। चैत्रप्रमा यदि चैत्रप्रमाप्रागभावातिरिक्तानादिनिवर्तिका स्यात्तर्हि चैत्रप्रमाप्रागभावातिरिक्तानादेरविद्यायाः एव निवर्तिका स्यात्। दृष्टान्ते चैत्रप्रमाप्रागभावातिरिक्तानादेः मैत्रप्रमाप्रागभावस्य प्रसिद्धस्य निवर्तकत्वमादायैव साध्यं पर्यवस्यति। किन्तु पक्षे साध्यं सिध्यत् बलात् पूर्वपक्ष्यनभिमतं चैत्रप्रमाप्रागभावातिरिक्तस्य अनादेरज्ञानस्य निवर्तकत्वमादायैव पर्यवस्यति। प्रमादेशगतप्रमानिवर्त्यप्रमाप्रागभावातिरिक्तानादिवस्तुसिद्धान्त्यभिमताज्ञानमेवेति भावः। यत्र यत्र प्रमात्वं वर्तते पक्षातिरिक्ते सर्वत्र साध्यमपि वर्तते; अतः हेतौ साध्यव्यभिचारशङ्कैव नास्ति। साध्याव्यभिचारिहेतुना पक्षे यदि साध्यं न सिध्येत् तर्हि अनुमानमात्रमुच्छिद्येत। पक्षे पुनः साध्यं सिध्यत् सिद्धान्त्यभिमतमज्ञानमेव सिध्यतीति भावः। एतेन चित्सुखीयानुमानेन स्वप्रागभावव्यतिरिक्तस्वनिवर्त्यानाद्य-

विद्यायाः एव सिद्धिः स्यात् । प्रमाप्रागभावातिरिक्तानादिप्रमानिवर्त्यत्वमेवाविद्यालक्षणम् । भ्रमोपादानत्वमेव अज्ञानलक्षणमित्यभिप्रेत्य चित्सुखाचार्यैः द्वितीयानुमानं प्रदर्शितम् । यद्यपि अग्रे एतस्य विवरणं मूले एव दर्शितं तथाप्यत्र संक्षेपेण किंचित् लिख्यते—एतास्मिन्ननुमाने विगीतो भ्रमः पक्षः सम्मतो भ्रम इति दृष्टान्तः । विगीतसम्मतपदाभ्यां पक्षसाध्ययोर्निर्देशः कथकसम्प्रदायसिद्धः । योऽधर्मी साध्यवत्तया वादिप्रतिवादिभ्यां विप्रतिपन्नः स एव पक्षः साध्यवत्तया वादिप्रतिवादिभ्यां सम्मतो दृष्टान्तः । पक्षदृष्टान्तयोर्हेतुमत्त्वं सर्वत्रैव वादिप्रतिवादिनो सम्मत एव । एतज्जनकाबाध्यातिरिक्तोपादानकत्वं साध्यम् । अबाध्यातिरिक्तोपादानकत्वं बाध्योपादानकत्वमेव । एतज्जनकेत्यनुपादाय अबाध्यातिरिक्तोपादानकत्वे साध्ये दृष्टान्तस्य साध्यवैकल्यं स्यात्, तद्वारणाय साध्ये एतज्जनकेऽति अबाध्यविशेषणम् । पूर्वपक्षिमते भ्रमप्रमयोरुपादानम् आत्मैव स च अबाध्यः न अबध्यातिरिक्तः । एतज्जनकेति विशेषाणोपादाने एतद्भ्रमजनको योऽबाध्यस्तद्भिन्नोपादानकत्वं साध्यम् । एतद्‌पदेन पक्षीकृतभ्रमस्योपादानम् । दृष्टान्तीकृतभ्रमस्य अबाध्योपादानकत्वेऽपि पक्षीकृतभ्रमस्य यदबाध्यमुपादानं तद्भिन्नोपादानकत्वं वर्तते इति न दृष्टान्ते साध्यवैकल्यम् । पूर्वपक्षिमतेऽपि पक्षीकृतभ्रमस्य दृष्टान्तीकृतभ्रमस्य च आत्मोपादानकत्वेऽपि पक्षीकृतभ्रमस्य उपादानं य अबाध्यात्मा स न दृष्टान्तीकृतभ्रमस्य उपादानम् । एकपुरुषीयभ्रमः पक्षः अपरपुरुषीयभ्रमो दृष्टान्तः । भ्रमस्य अबाध्योपादानकत्वमादायैव दृष्टान्ते साध्यस्य पर्यवसानम् । अत्र पूर्वपक्षिणोऽपि नापाचिरिति । विभ्रमत्वं हेतुः, अयं हेतुर्न साध्यव्यभिचारी; यतः पक्षातिरिक्तभ्रमे सर्वत्र हेतुसाध्ययोः सत्त्वात् न व्यभिचारशङ्कापीति । पक्षे तु व्यभिचारो नोद्भावनीयः तथात्वे अनुमानमात्रमुच्छिद्येत । विभ्रमत्वहेतुना पक्षे साध्यं सिध्यत् भ्रमस्य बाध्योपादानकत्वमादायैव पर्यवस्यति । तत्त्वज्ञानबाध्यज्ञानमेव भ्रमोपादानं सिद्धान्तिसम्मतम् । साध्यविशेषणस्य अभावात् दृष्टान्ते साध्यासिद्धिः । पक्षे तु एतज्जनकत्वरूपसाध्यविशेषणांशस्य अभावो नैव संभाव्यते । अयं भ्रम एतज्जनकजन्यो न भवतीति कदापि न संभाव्यते । अतः साध्यविशेष्यांशस्य अबाध्यातिरिक्तस्य वस्तुनः प्रसिध्यैव प्रक्षे साध्यपर्यवसानं कर्तव्यम् ।

अबाध्यातिरिक्तस्य भ्रमोपादानस्य कस्यचित् वस्तुनोऽनङ्गीकारे पक्षे साध्यसिद्धिरेव न स्यात्। न हि सम्भवति पक्षे साध्याव्यभिचारी हेतुर्वर्तते, किन्तु साध्यं न वर्तते इति। अतः पक्षे साध्ये सिध्यति सति भ्रमस्य अबाध्यातिरिक्तं किञ्चिदुपादानमादायैव सिध्यतीति भ्रमस्य बाध्यमुपादानमेवाविद्या। नन्वद्वयगर्भसाध्यानुपादाने दृष्टान्ते साध्यवैकल्यं स्यात्। अतः बाध्योपादानकत्वमनुक्त्वा अबाध्यातिरिक्तोपादानकत्वमुक्तम् इति संक्षेपः। प्रपञ्चस्तु अग्रे भविष्यति। प्रथमानुमाने बाधमाशङ्क्य परिहरति—तत्राद्ये सुखादिज्ञानेषु न बाध इति चैत्रीयसुखादिप्रमायां न बाध इत्यर्थः। चैत्रप्रमायाः पक्षत्वेन निर्देशात् चैत्रीयसुखादिप्रमापि पक्षकोटिप्रविष्टा, सुखादिप्रमा सुखादिसाक्षिरूपा, साक्षिभास्यविषयकमज्ञानं नास्ति। अतः सुखादिप्रमाया अज्ञानानिवर्तकत्वात् बाधः स्याद् इति पूर्वपक्षिशंकायाः समाधानायाह—"अन्तःकरणवृत्तेरेव प्रमापदेनोक्तेः"। प्रमाणजन्यान्तःकरणवृत्तेरेव पक्षत्वेन निर्देशात् साक्षिरूपायाः प्रमायाः पक्षबहिर्भावात् न प्रदर्शितो बाध इत्यर्थः। अज्ञानानिवर्तकस्य साक्षिज्ञानस्य अबाधितविषयकत्वेन प्रमात्वव्यवहारात्। चित्सुखीयप्रथमानुमाने यत् चैत्रगतत्वं साध्यविशेषणमुक्तं तत् कस्य विशेषणम्? तत्किं प्रमायाः? किं वा प्रमाप्रागभावस्य? अथ वा अनादेर्विशेषणं सिद्धान्तिसम्मतम्। न प्रथमद्वितीयौ, तथात्वे बाधः स्यात्; प्रमायाः प्रमाप्रागभावस्य च चैत्रीयान्तःकरणवृत्तित्वेन चैत्रात्मगतत्वाभावात्। चैत्रात्मगता प्रमा अप्रसिद्धा प्रतियोगिसमानदेशस्थप्रागभावस्यापि प्रमादेशगतत्वेन अन्तःकरणवृत्तेर्नात्मगतत्वं संभवति। प्रमायाः अन्तःकरणवृत्तिरूपत्वात् अन्तःकरणवृत्तिप्रतिबिम्बितचैतन्यरूपत्वाद् वा न प्रमाया आत्मगतत्वम्। यदि वृत्त्यभिव्यक्ताधिष्ठानचैतन्यमेव प्रमा तर्हि चैतन्यस्य अनाश्रितत्वात् चैत्रात्मगतत्वाभावात् पुनरपि बाध एव। प्रदर्शिता त्रिविधापि प्रमा न चैत्रात्मगतेति भावः। अतः चैत्रगतत्वम् अनादेर्विशेषणं वाच्यम्, तथात्वे च दृष्टान्तस्य साध्यवैकल्यं स्यात्। चैत्रगतत्वस्य अनादेर्विशेषणत्वे चैत्रप्रमा, चैत्रप्रमाप्रागभावातिरिक्तचैत्रगतानादिनिवर्तिका इति साध्यं पर्यवसितं स्यात्। तथात्वे च दृष्टान्ते मैत्रप्रमायां चैत्रगतानादिनिवर्तकत्वाभावात् दृष्टान्तस्य साध्यवैकल्यमेव स्यात्। मैत्रप्रमायां मैत्रगतानादिनिवर्तकत्वेऽपि चैत्रगतानादिनिवर्तकत्वाभावाद् इत्यत आह—

किन्तु प्रमा तदभावयोरन्यतरस्येति। चैत्रगतत्वं प्रमायाः विशेषणं प्रमाप्राग-भावस्य वा विशेषणम्; प्रमायाः चैत्रगतत्वं न बाधितम्। विवरणाचार्यीयाविद्यानुमाने साध्यघटकस्वदेशगतेऽतिविशेषणविवरणप्रसङ्गे प्रमायाः आत्मगतत्वमुपपादितम्। प्रमाया आत्मगतत्वे तत्प्रागभावस्यापि आत्मगतत्वं सुतरां सिद्धं प्रागभावस्य स्वप्रतियोगिदेशत्वनियमात्। अत उभयोर्विशेषणमनुक्त्वा अन्यतरस्य विशेषणमुक्तम्। प्रमाणजन्यान्तःकरणवृत्तिः वृत्तिप्रतिबिम्बितचैतन्यं वा प्रमेति मते उभयोरात्मगतत्वात् न बाधः। उक्तं च 'अन्तःकरणस्य चिदाश्रितत्वेन तद्वृत्तेस्तत्प्रतिफलितचैतन्यस्य वा ज्ञानस्य चिदाश्रितत्वसंभवात्' [पृ०,५६३।६४]। अत आह—प्रमायाश्च आत्मगतत्वं प्राग्व्याख्यातमिति। चैत्रप्रमा, प्रागभावा-तिरिक्तानादिनिवर्तिकेति साध्यनिर्देशेऽपि पक्षप्रमापदसमभिव्याहारादेव प्रमाप्राग-भावातिरिक्तत्वं लभ्यत एवेति साध्यप्रमापदप्रवेशनं निष्प्रयोजनम्। अतः प्रमापद-मधिकमिति अधिकं नाम निग्रहस्थानमापतेत् इत्याशङ्कयाह—साध्ये प्रमापद-मुपरञ्जकमेवेति। उपरञ्जकविशेषणस्य सार्थक्यम् ईश्वरानुमाने चिन्तामणिकृता अपि स्वीकृतम्। सर्वत्र विशेषणं व्यावर्तकमेव भवतीति न नियमः प्रमेयो घट इत्यादौ प्रमेयत्वविशेषणमुपरञ्जकमेव व्यावर्तकताया असम्भवात्। तादृश-विशेषणोपरक्तबुद्ध्युत्पत्तये उपरञ्जकविशेषणस्यापि सार्थक्यात् न विशेषणं व्यर्थमिति भावः। यदि तु साध्ये प्रागभावातिरिक्तेत्यनुक्त्वा अभावातिरिक्ता-नादिनिवर्तकत्वं साध्यं निर्दिश्येत तथापि सिद्धान्त्यभिमताज्ञानस्य सिद्धिर्भवेत्। अतोऽभावांशे प्राक् इति विशेषणं व्यर्थमित्याशङ्कयाह—यदि तु अभावांशे प्रागिति विशेषणं नास्ति तदेति। भावरूपाज्ञानस्यापि स्वाभावाभावरूपतया अज्ञानमपि अभावरूपम् अज्ञानाभावस्य अभावो अज्ञानमेवेति अज्ञानेऽपि अभावत्वं वर्तते। अभावातिरिक्तानादिनिवर्तकत्वे साध्ये बाध एव स्यात्। भाव-रूपाज्ञानमपि प्रदर्शितरीत्या अभावरूपमपि; अतो अभावातिरिक्तानादिनिवर्तकत्वं प्रमाज्ञाने नास्तीति बाधः स्यात्। प्रमास्वप्रागभावाज्ञानयोरेव निवर्तिका प्रागभावस्य अभावस्वरूपत्वं सर्वसिद्धम्, अज्ञानमपि स्वाभावाभावरूपतया अभावरूपम्। अतः प्रमा अभावातिरिक्तानादिनिवर्तिका न भवतीति बाधः स्यात्। अतस्तत्परिहाराय अभावांशे प्रागिति विशेषणमुपात्तम् ॥१५॥

चैत्रासमवेतत्वं चैत्रान्यसमवेतत्वं च नोपाधिः; चैत्रसुखादौ व्यभिचारेण साध्याव्यापकत्वात् ।

न च—चैत्रप्रमा, चैत्रगतस्याभावातिरिक्तस्यानादेर्निवर्तिका न, प्रमात्वात्, मैत्रप्रमादिवदिति सत्प्रतिपक्षः प्रतियोगिप्रसिद्ध्यप्रसिद्धिभ्यां व्याहतेः । चैत्रगतप्रमाभावातिरिक्ताभावनिवर्तकत्वं तु नोपाधिः; चैत्रगतप्रमाभावातिरिक्तस्य स्वजन्यव्यवहारप्रागभावस्य निवर्तकतया पक्षे साधनव्यापकत्वात् । विपक्षबाधकसत्त्वाच्च नाभाससाम्यम् ।

---

१६—चित्सुखीयप्रथमानुमाने उपाधिद्वयमाशङ्क्य परिहरति—चैत्रासमवेतत्वं चैत्रान्यसमवेतत्वं च नोपाधिः चैत्रसुखादौ व्यभिचारेण साध्याव्यापकत्वात् । न च चैत्रप्रमा, चैतगतस्याभावातिरिक्तस्यानादेर्निवर्तिका न, प्रमात्वात् मैत्रप्रमावदिति सत्प्रतिपक्षः प्रतियोगिप्रसिद्ध्यप्रसिद्धिभ्यां व्याहतेः । चैत्रगतप्रमाभावातिरिक्ताभावनिवर्तकत्वं तु नोपाधिः । चैत्रगतप्रमाभावातिरिक्तस्य स्वजन्यव्यवहारप्रागभावस्य निवर्तकतया पक्षे साधनव्यापकत्वात् । विपक्षबाधकसत्त्वाच्च नाभाससाम्यम् । इदमुपाधिद्वयं न्यायामृतकृता नोद्भावितं प्रत्यक्तत्त्वप्रदीपिकाकृद्भिरेवोद्भावितं तैरेव समाहितं च । चित्सुखाचार्यैः समाहितमिति कृत्वा मन्ये न्यायामृतकृता तदुपाधिद्वयं नाशङ्कितम् । आचार्येण पुनः चित्सुखीयसमाधानमेव संक्षिप्य लिखितम् । चित्सुखीयप्रथमानुमाने मैत्रप्रमादृष्टान्तः चैत्रप्रमापक्षः । दृष्टान्तमैत्रप्रमायां चैत्रासमवेतत्वं चैत्रान्यसमवेतत्वमिति द्वावुपाधी स्तः । मैत्रप्रमा मैत्रे एव समवेता न चैत्रे; अतः मैत्रप्रमायां चैत्रासमवेतत्वं चैत्रान्यसमवेतत्वञ्च धर्मद्वयं वर्तते । एतद्धर्मद्वयमपि पक्षे चैत्रप्रमायां नास्ति । चैत्रप्रमा चैत्रे नासमवेता नापि चैत्रान्यसमवेता । अतः प्रदर्शितधर्मद्वयम् उपाधिर्भवितुमर्हति, उपाधेः सपक्षे सत्त्वात् साध्यव्यापकत्वे पक्षे असत्त्वात् साधनाव्यापकत्वञ्च । प्रदर्शितरीत्या उपाधिद्वयमाशङ्क्य समाधत्ते—चैत्रसुखादौ व्यभिचारेण साध्याव्यापकत्वात् चैत्रसुखादौ साध्यवति उपाधिद्वयाभावात् उपाध्योः साध्याव्यापकत्वात्; चैत्रसमवेतसुखदुःखप्रयत्नेच्छाद्वेषादिषु चैत्रासमवेतत्वं चैत्रान्यसमवेतत्वं च न स्तः । अत उपाध्यभाववति चैत्रीयसुखादौ साध्यमस्ति साध्यं च चैत्रगतप्रमाप्रागभावव्यतिरि-

क्तानादिनिवर्तकत्वम्; तच्च चैत्रीयसुखादौ स्वप्रागभावनिवर्तके अस्त्येव चैत्रीयसुखादिकं स्वप्रागभावनिवर्तकम् एवं च प्रमाप्रागभावातिरिक्तानादिनिवर्तकत्वं चैत्रीयसुखादौ वर्तते। सुखादिप्रागभावोऽपि अनादिरेव; अथ च प्रमाप्रागभावातिरिक्तः। तन्निवर्तकत्वेन चैत्रीयसुखादौ साध्यमस्ति उपाधिद्वयं च नास्तीति भवति उपाधिद्वयं साध्याव्यापकमिति नास्य उपाधित्वमिति भावः। चित्सुखीयाद्यानुमाने प्रतिरोधानुमानं दर्शयितुमाह पूर्वपक्षी—न च चैत्रप्रमेति। प्रतिरोधानुमानश्चैवम्—चैत्रप्रमा, चैत्रगतस्थाभावातिरिक्तस्यानादेर्निवर्तिका न, प्रमात्वात्, मैत्रप्रमावदिति सत्प्रतिपक्ष इति। अस्मिन्ननुमाने अभावातिरिक्तस्य चैत्रगतस्य अनादेर्निवर्तकत्वाभाव एव साध्यम्। प्रागभावातिरिक्तानाद्यज्ञानस्य चैत्रगतस्य निवर्तकत्वं स्थापनानुमाने साध्यं तदभावसाधकं प्रतिरोधानुमानम्। प्रतिरोधानुमाने निवर्तकत्वाभावः साध्यम्; अस्याभावस्य प्रतियोगि अभावातिरिक्तचैत्रगतानादिनिवर्तकत्वम्; अस्य प्रतियोगिनः प्रसिद्ध्यप्रसिद्धिभ्यां व्याघातात् नेदमनुमानं संभवति। व्याघातश्चेत्थम् अस्य प्रतियोगिनः कुत्रचित् प्रसिद्धावेव तदभावानुमानं संभवति। अप्रसिद्धप्रतियोगिकाभावानुमानं नैव संभवति। अभावे प्रतियोगी विशेषणम्, विशेषणज्ञानाभावे विशिष्टस्यापि ज्ञानासंभवात्; विशिष्टस्याज्ञाने विशिष्टसाध्यनिरूपिता व्याप्तिरपि हेतौ न गृह्येत; तथा च अनुमानासंभव एव। तथा च अभावसाध्यकानुमितौ प्रतियोगिनः कुत्रचित् प्रसिद्धिरेष्टव्या; सा यदि अस्य प्रतिरोधानुमानस्य पक्षे एव स्यात् तर्हि पक्षे प्रतियोगिनः सिद्धौ तत्र तदभावानुमानमेव न स्यात्। प्रतियोगिग्राहकमानेनैव बाधः स्यात् यत्र यो धर्मः प्रमितः तत्र तदभावानुमाने अपरिहार्यो बाधः। अतः प्रतिरोधानुमाने पक्षे न प्रतियोगिनः प्रसिद्धिः संभवति; पक्षे प्रतियोगिनः प्रसिद्धौ अविद्यायाः सिद्धिः स्यात्। प्रतियोगिनः प्रसिद्धिश्च पक्षादन्यत्रासंभावितैव। पक्षे प्रतियोगिनः सिद्धावपि प्रतिरोधानुमित्या तस्या भ्रमत्वं कल्प्यते चेत्, दुष्परिहरः अन्योन्याश्रयः स्यात्। प्रतिरोधानुमानेन बाधात् प्रतियोगिज्ञानस्य भ्रमत्वं प्रतियोगिज्ञानस्य भ्रमत्वसिद्धौ विशेषणज्ञानजन्यविशिष्टज्ञानरूपा अनुमितिः। पूर्वपक्षिप्रदर्शितप्रतिरोधानुमानेन बाधात् चित्सुखीयानुमितेर्भ्रमत्वसिद्धिः, चित्सुखीयानुमितेर्भ्रमत्वसिद्धौ पूर्वपक्षिणः प्रतिरोधानुमितिरिति अन्योऽन्याश्रयता। अतः प्रतिरोधानुमानमकिंचित्करमेवेति।

चित्सुखीयाद्यानुमाने उपाधिमाशङ्क्य समाधत्ते—**चैत्रगतप्रमाभावातिरिक्ताभावनिवर्तकत्वं तु नोपाधिरिति।** उपाधेः पक्षवृत्तित्वे साधनव्यापकत्वेन नोपाधिः स्यात्। अतोऽस्य उपाधेः पक्षवृत्तित्वं दर्शयितुमाह—चैतगतप्रमाभावातिरिक्ताभावनिवर्तकत्वं चैत्रप्रमायां वर्तते, चैत्रप्रमैव चित्सुखीयाद्यानुमाने पक्षः। चैत्रप्रमायाः चैत्रगतप्रमाप्रागभावातिरिक्ताभावनिवर्तकत्वं वर्तते एव। चैत्रप्रमा यथा स्वप्रागभावं निवर्तयति तथा स्वजन्यव्यवहारप्रागभावमपि निवर्तयति। प्रागभावद्वयनिवर्तकत्वेन चैत्रप्रमायाः चैत्रगतप्रमाभावातिरिक्ताभावनिवर्तकत्वसत्त्वाद् उपाधेः पक्षवृत्तितया साधनव्यापकत्वेन नोपाधित्वम्। प्रतियोग्येव प्रागभावनिवृत्तिरिति मते प्रतियोग्युत्पादकसामग्री-प्रागभावनिवर्तिका। प्रमायाः व्यवहारजनकत्वात् प्रमैव व्यवहारजनिका सामग्री, सा च व्यवहारप्रागभावनिवर्तिकेति भावः। व्यवहार एव स्वप्रागभावनिवृत्तिरूपः, व्यवहारजनिका प्रमा व्यवहारप्रागभावनिवर्तिकेति बोध्यम्। पूर्वपक्षी चित्सुखीयाद्यानुमानस्य आभाससाम्यमापादयन्नाह—आभासानुमानं यथा साध्यासाधकं तथा इदमपीत्याह—चैत्रप्रमा, स्वप्रागभावातिरिक्ताभावनिवर्तिका, प्रमात्वात् मैत्रप्रमावत्। अनेन चैत्रप्रमाया अभावद्वयनिवर्तकत्वम् आयाति तत्सिद्धान्तिनो अनिष्टम्। एवं घटः स्वप्रागभावातिरिक्तानादिनिवर्तकः, घटत्वात् घटान्तरवत्। अनेनापि अनभिप्रेतसिद्धिः स्यात्। एवं चैत्रेच्छा, स्वप्रागभावातिरिक्तानादिनिवर्तिका, इच्छात्वात् मैत्रेच्छावत्। अनेनापि सर्वेषामेवानभिप्रेतस्य सिद्धिः स्यात्। एवं चैत्राप्रमा, स्वप्रागभावातिरिक्तानादिनिवर्तिका, अप्रमात्वात् मैत्राप्रमावत्। अनेनापि अनभिप्रेतसिद्धिरेव स्यादिति। चित्सुखीयाद्यानुमानस्य प्रदर्शिताभासानुमानवैषम्यं दर्शयन्नाह—**विपक्षबाधकतर्कसत्त्वाच्च नाभाससाम्यमिति।** विपक्षबाधकतर्कसत्त्वादित्येवोक्तम् सिद्धिकृता विपक्षबाधकतर्कस्तु प्रमाज्ञानं यदि स्वप्रागभावातिरिक्तानाद्यभावविलक्षणवस्तुनो न निवर्तकं स्यात् तदा प्रमाया प्रमात्वमेव न स्यात्। अज्ञातविषयकज्ञानमेव प्रमा, विषयस्य अज्ञातत्वम् अज्ञानविषयत्वमेव, न तु विषयविषयकज्ञानाभावः। त्वदुक्तमर्थं न जानामीति अनुभवः भावरूपाज्ञानं विना अनुपपन्नः। अज्ञानसाक्षिप्रत्यक्षप्रकरणे सुस्पष्टमुपपादितः। अज्ञानविषयकप्रतीतीनाम् अनुपपत्तिरेव

अत एव द्वितीयानुमानमपि सम्यक्। न च—विगीतो विभ्रमः, एतज्ज्ञानजनकबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, संमतवदिति सत्प्रतिपक्ष इति—वाच्यम्। बाध्यस्य त्वन्मते अजनकत्वात्; साध्याप्रसिद्धेः, ब्रह्माविद्योभयोपादानकत्वेनाविरोधाच्च ॥१६॥

---

विपक्षबाधकस्तर्कः। अतोऽज्ञानप्रतीत्यनुपपत्तिरेव अज्ञानानुमाने विपक्षबाधकस्तर्कः। उक्तं च अद्वैतसिद्धौ—अनुकूलस्तर्कश्च त्वदुक्तमर्थं न जानामीति प्रतीत्यन्यथानुपपत्तिरूपः प्रागुक्त एव इति [अद्वैतसिद्धिः, पृ०, ५६५]। एवम् अज्ञानस्य अनादित्वसाधकानुमानानुग्राहकतर्कश्च शुक्तौ रजतभ्रमे प्रतीयमानरजतस्य परिणाम्युपादानं किंचित् अवश्यं वाच्यम्। तच्च शुक्तिनिष्ठमेव वक्तव्यम्। शुक्तिनिष्ठं रजतोपादानं यदि सादि स्यात् तर्हि कारणपरम्पराकल्पनायां गौरवं स्यात्। अतः लाघवात् तदनाद्येव वक्तव्यम्। अतो लाघवतर्क एव अज्ञानानादित्वसाधकानुमानानुग्राहकः। 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' इति स्मृतेः ज्ञानेन अज्ञानं नष्टमित्यनुभवाच्च अज्ञानस्य ज्ञाननिवर्त्यत्वमङ्गीकरणीयम्; अन्यथा स्मृत्यनुभवयोरनुपपत्तिः स्यात्। अतः तर्कसहकृतेनानुमानेन अनादिज्ञाननिवर्त्यमभावविलक्षणम् अज्ञानं सिध्यति। विपक्षबाधकतर्काभावदेव आभासानुमानानां साध्यासाधकत्वेन अनुमानाभासत्वमेव। प्रकृतन्तु तर्कसहकृतं सदनुमानमिति चित्सुखीयमाद्यमनुमानमनाविलमिति सिद्धम्।

भ्रमोपादानत्वमज्ञानत्वमित्यज्ञानलक्षणलक्षिताज्ञानसाधनाय चित्सुखीयं द्वितीयमनुमानं निर्मलीकुर्वन्नाह—अत एव द्वितीयानुमानमपि सम्यक्। एतच्च द्वितीयमनुमानं प्रागेवोक्तं विवृतं च संक्षेपतः; एतस्मिन्द्वितीयानुमाने सत्प्रतिपक्षं दर्शयन्नाह पूर्वपक्षी—न च विगीतो विभ्रमः एतज्ज्ञानजनकबाध्यातिरिक्तोपादानकः विभ्रमत्वात् संमतवदिति सत्प्रतिपक्ष इति वाच्यम्। येनैव हेतुना सिद्धान्तिना स्वाभिमतमज्ञानं साधयितुमिष्यते तेनैव हेतुना सिद्धान्त्यनभिमतं सिध्यतीति दर्शयन्नाह—पक्षीकृतविभ्रम एव एतत्पदेन गृह्यते। एतज्ज्ञानजनकं यद् बाध्यं अज्ञानमित्यर्थः तदतिरिक्तोपादानकत्वं साध्यते। दृष्टान्ते विभ्रमान्तरे पक्षीकृतविभ्रमजनकबाध्यातिरिक्तोपादानकत्वं प्रसिद्धं पक्षदृष्टान्तविभ्रमोपादानाज्ञानयोर्भिन्नत्वात्। पक्षीकृतविभ्रमोपादानम् अज्ञानमन्यत्; दृष्टान्तीकृतविभ्रमोपादान-

नव्यास्तु विमता प्रमा, प्रमाभावातिरिक्तस्यानादेर्निवर्तिका, कार्यत्वात्, घटवत्; अमानुत्तरप्रमा, स्वाभावातिरिक्तस्वविरोधिनिवर्तिका, प्रमात्वात्, प्रमोत्तरप्रमावत्, ज्ञानत्वम्, स्वविषयावरणनिवर्तकनिष्ठम्, अप्रकाशितार्थप्रकाशवृत्तित्वात्, आलोकत्ववत्; अनित्यज्ञानम्, अभावत्वानधिकरणस्वविरोधिसमानाधिकरणम्, प्रयत्नान्यत्वे सति सविषयत्वे सत्यनित्यत्वात्, अनित्येच्छावत्;

---

मज्ञानमन्यत्। अतो दृष्टान्ते साध्यं सिद्धम्; पक्षे साध्यं सिध्यत् अज्ञानातिरिक्तमनभिमतोपादानं सिध्यतीति पूर्वपक्षिणोऽभिप्रायः। सत्प्रतिपक्षानुमानं दूषयति—बाध्यस्य त्वन्मते अजनकत्वात्। सोध्याप्रसिद्धेः। ब्रह्माविद्योभयोपादानकत्वेन अविरोधाच्च। पूर्वपक्षिमते बाध्यमसत् असतोऽजनकत्वाद् एतज्जनकबाध्यमेवाप्रसिद्धम्। सुतरां एतज्जनकबाध्यातिरिक्तोपादानकत्वं साध्यमपि अप्रसिद्धमेव। अप्रसिद्धसाध्यकसत्प्रतिपक्षानुमानमपि असङ्गतमेव। साध्यसिद्ध्यभ्युपगमेऽपि सिद्धसाधनमेवेति दर्शयन्नाह—विभ्रममात्रस्य ब्रह्माविद्योभयोपादानकत्वात्। विभ्रमस्य परिणामितया अविद्या उपादानं अधिष्ठानतया ब्रह्मैवोपादानम्। स्वात्मककार्यजनकत्वं[1] [स्वात्मनि कार्यजनिहेतुत्वम्] अधिष्ठानपरिणाम्युपादानसाधारणम् उपादानत्वं सन् घटः जडो घटः इत्युभयाकारप्रतीतेः। अतः चित्सुखीयद्वितीयानुमानमपि अनाविलम् ॥१६॥

चित्सुखीयद्वितीयानुमानविवरणं समाप्तम्।

१७—नव्यवेदान्तिनां अविद्यासाधकानि चत्वारि अनुमानान्याह—नव्यास्तु [१] विमता प्रमा, प्रमाभावातिरिक्तस्य अनादेर्निवर्तिका, कार्यत्वात्, घटवत्। [२] अमानुत्तरप्रमा, स्वाभावातिरिक्तस्वविरोधिनिवर्तिका, प्रमात्वात्, प्रमोत्तरप्रमावत्। [३] ज्ञानत्वम्, स्वविषयावरणनिवर्तकनिष्ठम्, अप्रकाशितार्थप्रकाशवृत्तित्वात्, आलोकत्ववत्। [४] अनित्यज्ञानम्, अभावत्वानधिकरणस्वविरोधिसमानाधिकरणम्, प्रयत्नान्यत्वे

---

१. स्वात्मनि कार्यजनिहेतुत्वम् अधिष्ठानपरिणाम्युपादानसाधारणमुपादानत्वम्—[सिद्धान्तलेशसंग्रहः, पृ०, ७५]

सा हि तादृग्द्वेषसमानाधिकरणा । न चैतेषु अप्रयोजकत्वशङ्का; विपक्ष-बाधकतर्कस्योक्तत्वात् । एवमन्यदप्यूहनीयम् ॥१७॥

---

सति सविषयत्वे सति अनित्यत्वात्, अनित्येच्छावत् । सा हि तादृग्-द्वेषसमानाधिकरणा । न च एतेषु अप्रयोजकत्वशङ्का विपक्षबाधकतर्क-स्योक्तत्वात् । एवम् अन्यदप्यूहनीयम् । तत्र प्रथममनुमानम् आह— विमता प्रमेति । अस्मिन्ननुमाने घटो दृष्टान्तः । कार्यत्वं हेतुः, दृष्टान्तघटे कार्यत्वहेतुर्वर्तते । प्रमाभावातिरिक्तानादिनिवर्तकत्वं साध्यमपि वर्तते । घटस्य अनादिस्वप्रागभावस्य निवर्तकत्वात् । स्वप्रागभावः प्रमाभावातिरिक्त एव । अयं कार्यत्वहेतुः अनित्यप्रमारूपे पक्षेऽपि वर्तते । अस्मिन्ननुमाने अनित्यप्रमा पक्षः; पक्षे हेतोः सत्त्वात् पक्षे साध्यस्यापि प्रमाभावातिरिक्तानादिनिवर्तकत्वस्य सिद्धिर्भ-विष्यति । प्रमाभावातिरिक्तानादिज्ञाननिवर्त्या अविद्यैव । एतल्लक्षणत्वादविद्यायाः इति भावः ।

द्वितीयानुमानमाह—भ्रमानुत्तरप्रमेति । अस्मिन्ननुमाने भ्रमोत्तर-भाविप्रमाभिन्नप्रमापक्षः । भ्रमोत्तरप्रमायाः पक्षत्वे तत्र स्वाभावातिरिक्तस्वविरोधि-निवर्तकत्वस्य साध्यस्य सिद्धौ सिद्धसाधनता स्यात् । भ्रमोत्तरप्रमायाः स्वविरोधि-भ्रमनिवर्तकत्वस्य सर्वसम्मतत्वात् । अविद्याया असाधकत्वेन अर्थान्तरता च स्यात् । अतो भ्रमानुत्तरप्रमायाः पक्षत्वेन निर्देशः । स्वाभावातिरिक्तस्वविरोधि-निवर्तकत्वं साध्यम् । स्वप्रागभावमादाय साध्यपर्यवसाने स्वाभिमताऽविद्या न सिद्ध्येदिति साध्ये स्वप्रागभावव्यतिरेक्तेति विशेषणम् । प्रमात्वं हेतुः । भ्रमोत्तर-प्रमा दृष्टान्तः । दृष्टान्ते हेतुः प्रमात्वं वर्तते, स्वाभावातिरिक्तस्वविरोधिनिवर्तकत्वं साध्यमपि वर्तते । प्रमोत्तरप्रमा पूर्ववर्तिभ्रमस्य निवर्तिका । क्रमिकज्ञानद्वये बध्यघा-तकभाव[लक्षण] विरोधस्य सद्भावादुत्तरज्ञानेन पूर्वभ्रमस्य निवृत्तिः । पूर्वात् परबलीयस्त्वन्यायेन परस्य प्राबल्यादिति भावः । दृष्टान्ते विरोधिभ्रमनिवर्तकत्व-मादाय साध्यपर्यवसानम्, तत्तु सर्वसम्मतमेव । प्रमात्वहेतुना भ्रमानुत्तरप्रमारूपे पक्षे साध्यं सिध्यदविद्याया एव सिद्धिः स्यात् । यतः भ्रमानुत्तरप्रमायाः भ्रमनिवर्तकत्व-मादाय साध्यपर्यवसानं न संभवति । अतः पक्षे साध्यसिद्धौ प्रमाविरोधिकिञ्चिद् वस्तु गृहीत्वा तस्य निवर्तकत्वमादाय साध्यपर्यवसानं भविष्यति । तेन प्रमाविरो-

धिप्रमानिवर्त्यप्रमाभावातिरिक्तभ्रमभिन्नं किंचिदवश्यं स्वीकार्यम्। तदस्वीकारे पक्षे साध्यसिद्धिरेव न स्यात्। साध्याव्यभिचारिहेतोः पक्षे सत्त्वे पक्षे साध्यं न स्यादिति वक्तुमशक्यत्वात्। तादृशं च वस्तु अविद्यैव। तल्लक्षणत्वादविद्याया इति भावः।

तृतीयमनुमानमाह—ज्ञानत्वमिति—अस्मिन्ननुमाने आलोकत्वं दृष्टान्तः, अप्रकाशितप्रकाशवृत्तित्वं हेतुः, स च दृष्टान्ते वर्तते। अन्धकारावृत-प्रकाशालोके आलोकत्वम् अप्रकाशितप्रकाशवृत्त्येव। दृष्टान्ते आलोकत्वे स्वविषयावरणनिवर्तकनिष्ठत्वं साध्यमपि वर्तते। आलोकप्रकाश्य एव आलोक-विषयः। अन्धकारस्तदावरणं तन्निवर्तक आलोकस्तन्निष्ठत्वम् आलोकत्वे दृष्टान्ते वर्तते। अतो दृष्टान्ते हेतुसाध्ययोः सामानाधिकरण्यं गृहीतम्। स च हेतुः पक्षे ज्ञानत्वे वर्तते। अप्रकाशितार्थप्रकाशे प्रमायां ज्ञानत्वस्य विद्यमानत्वात् ज्ञानत्वे अप्रकाशितार्थप्रकाशवृत्तित्वं हेतुर्वर्तते। अतः पक्षे अन्धकारनिवर्तक-वृत्तित्वासम्भवात् पक्षे साध्यं सिध्यत् ज्ञाननिवर्त्यज्ञानविषयावरणं किञ्चिदादाय पर्यवस्यति। तस्य अनङ्गीकारे पक्षे साध्यपर्यवसानं न स्यात् ज्ञाननिवर्त्य-ज्ञानविषयावरणम् अविद्यैव। ज्ञानप्रागभावस्य ज्ञानविषयावरणत्वासम्भवात् अनङ्गीकाराच्च। अभावो नावरणमिति पक्षे एतत्तृतीयानुमानं बोध्यम्।

चतुर्थमनुमानमाह—अनित्यज्ञानमिति। अस्मिन्ननुमाने अनित्येच्छा दृष्टान्तः; तत्र च प्रयत्नान्यत्वे सति सविषयत्वे सति अनित्यत्वं हेतुर्वर्तते। अनित्येच्छाया एवं रूपत्वात्। तत्र च अभावत्वानधिकरणं यत् स्वविरोधि तत्समानाधिकरणत्वरूपं साध्यमपि वर्तते। अनित्येच्छायाः स्वविरोधिद्वेष-समानाधिकरणत्वात् द्वेषस्य च भावरूपत्वेन अभावत्वानधिकरणत्वाच्च। दृष्टान्ते हेतुसाध्ययोः सामानाधिकरण्यात् हेतौ साध्यव्याप्तिर्गृहीता। अस्मिन्न-नुमाने अनित्यज्ञानं पक्षः तत्र हेतुर्वर्तते; अनित्यज्ञानस्य प्रयत्नान्यत्वे सति सविषयत्वे सति अनित्यत्वादिति। अनेन हेतुना अनित्यज्ञाने पक्षे अभावत्वानधि-करणस्वविरोधिसामानाधिकरण्यरूपं साध्यं सिध्यत् अविद्यैव सिध्यति। दृष्टान्ते द्वेषमादाय यथा साध्यपर्यवसानं न तथा पक्षे भवितुमर्हति, द्वेषस्य अनित्यज्ञाना-विरोधित्वात्। अनित्यज्ञाने पक्षे अभावातिरिक्ता नित्यज्ञानविरोधिसामान्याधि-

ज्ञानविरोधित्वम्, अनादिभावत्वसमानाधिकरणम्, सकलज्ञान-विरोधिवृत्तित्वात्, दृश्यत्ववत्। यद्वा—अनाद्यभावविलक्षणत्वं ज्ञान-विरोधिवृत्ति, अनाद्यभावविलक्षणमात्रवृत्तित्वात्, अभिधेयत्ववदिति। एवमभावविलक्षणाज्ञाने अनुमानान्यूहनीयानि ॥१८॥

इत्यद्वैतसिद्धावविद्यानुमानोपपत्तिः ॥

---

करण्यं सिध्यत् तादृशं किंचिद् गृहीत्वैव सिध्यति। तादृशं वस्तु च अविद्यैव। अनित्यज्ञानसमानाधिकरणम् अभावभिन्नम् अनित्यज्ञानविरोधि च अविद्यैवेति भावः। हेतौ प्रयत्नान्यत्वे सति विशेषणानुपादाने सविषयत्वे सति अनित्यत्वा-दित्येव हेतुशरीरं स्यात् तच्च प्रयत्नेऽपि अस्ति। किन्तु प्रयत्ने साध्याभावात् व्यभिचारः स्यात्। अभावत्वानधिकरणं यत् स्वविरोधि तत्समानाधिकरणत्वमेव साध्यम् तत्समानाधिकरणत्वं प्रयत्ने नास्तीति व्यभिचारः, तद्वारणाय प्रयत्नान्यत्वे सतीति हेतुर्विशेषणम्। न च प्रवृत्तिरूपप्रयत्नस्य स्वविरोध्यभाव-भिन्ननिवृत्तिरूपप्रयत्नसामानाधिकरण्यस्य सत्वान्न व्यभिचार इति वाच्यम्। निवृत्तिरूपः प्रयत्नो न भावः किन्तु प्रवृत्तिरूपप्रयत्नस्य अभाव एव निवृत्तिरिति सिद्धान्तादरेण प्रवृत्तिरूपप्रयत्ने हेतोर्व्यभिचारवारणाय प्रयत्नानन्यत्वे सतीति हेतु-विशेषणमुपात्तम्। निवृत्तेर्भावरूपत्वाङ्गीकारे इदं विशेषणमनुपादेयमेवेति भावः।

न्यायामृतकृता एतान्यनुमानानि प्रदर्श्य दूषतानि; अप्रयोजकत्वेन आभास-साम्येन च एतान्यनुमानानि दुष्टानीत्युक्तम्। न्यायामृतकृता त्रीण्येवानुमानानि प्रदर्शितानि सिद्धिकृता चत्वारीति। अतः एकमनुमानं सिद्धिकृतैवोद्भावितमिति मन्ये। अनुमानानाम् तत्प्रयोजकत्वशङ्कानिरासाय उक्तं मूले न च एतेषु अप्रयोज-कत्वशङ्काविपक्षबाधकतर्कस्योक्तत्वात्। त्वदुक्तमर्थं न जानामीत्यादिप्रतीतेरनुपपत्ति-रेव विपक्षबाधकस्तर्कः, स च प्रागेवोक्तः। आभासानुमानानां विपक्षबाधकतर्का-भावात् अप्रयोजकत्वमेव ॥१७॥

१८—विवरणतत्त्वप्रदीपिकोक्तानुमानानि नव्यवेदान्तिप्रदर्शितानुमानानि च निर्दुष्टतया प्रतिपाद्य इदानीं स्वयमेव अविद्यासाधकानुमानद्वयं प्रदर्शयति। एवमन्यद-प्यूहनीयमिति यदुक्तं तत्स्वयमेव अहित्वा प्रदर्शयति—[१] ज्ञानविरोधित्वम्, अनादिभावत्वसमानाधिकरणम्, सकलज्ञानविरोधिवृत्तित्वात् दृश्यत्व-

वत्। यद्वा [२] अनाद्यभावविलक्षणत्वम्, ज्ञानविरोधिवृत्ति, अनाद्यभावविलक्षणवृत्तित्वात्, अभिधेयत्ववदिति। एवमभावविलक्षणाज्ञाने अनुमानानि ऊहनीयानि।

इत्यद्वैतसिद्धौ अविद्यानुमानोपपत्तिः।

प्रथमानुमाने दृश्यत्वं दृष्टान्तः, अज्ञानं तत्प्रयुक्तवस्तुमात्रं च दृश्यम्। अज्ञानं तत्प्रयुक्तवस्तुमात्रं ज्ञाननिवर्त्यम् अतो अज्ञानम् अज्ञानप्रयुक्तवस्तुमात्रं च ज्ञानविरोधि ज्ञानम् अज्ञानस्य तत्प्रयुक्तदृश्यस्य च निवर्तकं भवति। यदज्ञानतत्प्रयुक्तभिन्नं तन्न ज्ञाननिवर्त्यम्। यथा अलीकं वन्ध्यापुत्रादि। तन्न अज्ञानं न वा अज्ञानप्रयुक्तम् अतोऽलीकं न दृश्यम् अलीकं ज्ञाननिवर्त्यमपि न भवति। अतो दृश्यत्वे दृष्टान्ते ज्ञानविरोधिसकलवृत्तित्वमस्ति। यावन्तो ज्ञानविरोधिनः ज्ञाननिवर्त्याः तद्वृत्तित्वं दृश्यत्वे वर्तते। ज्ञाननिवर्त्ययावद्वस्तुषु दृश्यत्वं वर्तते इत्यर्थः। यत्र ज्ञाननिवर्त्यं तत्र न दृश्यत्वमिति। अतो दृष्टान्ते दृश्यत्वे सकलज्ञानविरोधिवृत्तित्वं हेतुर्वर्तते। एवम् अनादिभावत्वसामान्याधिकरण्यरूपं साध्यमपि वर्तते। अविद्याचैतन्यसम्बन्धादिषु अनादिभावेषु अनादिभावत्वसामानाधिकरण्यं दृश्यत्वे वर्तते। अनादिभावस्यापि दृश्यत्वात्। अतो दृश्यत्वे दृष्टान्ते हेतुसाध्ययोः सामान्याधिकरण्येन व्याप्तिर्गृहीता हेतुव्यापकसाध्यसामानाधिकरण्यमेव हि व्याप्तिः। अस्मिन् प्रथमानुमाने ज्ञानविरोधित्वं पक्षः। अत्र पक्षे हेतुर्वर्तते। यतः ज्ञानविरोधित्वधर्मः ज्ञानविरोधी यावद् वस्तुषु वर्तते। अतो ज्ञानविरोधित्वधर्मे ज्ञानविरोधियावद्वस्तुवृत्तित्वं वर्तते। अनेन हेतुना पक्षे साध्यसिद्धौ अविद्यैव सिध्यति। ज्ञानविरोधित्वे सति अनादिभावत्वम् अविद्यायाः लक्षणम्। ज्ञानविरोधित्वरूपे पक्षे अनादिभावत्वसामानाधिकरण्यसिद्धौ निरुक्तलक्षणाविद्यैव सिध्यतीति भावः। अस्मिन्ननुमाने ज्ञानविरोधित्वं हेतुघटकं तच्च ज्ञानप्रयुक्तनाशप्रतियोगित्वरूपम्; किन्तु न साक्षाज्ज्ञाननाश्यत्वम्। अतः अस्मादनुमानात् अज्ञानसिद्धेः प्राक् दृश्यमात्रस्य साक्षाज्ज्ञाननाश्यत्वासिध्या न दृष्टान्ते साधनवैकल्यम्। अविद्यासिद्धेः प्राक् दृश्यस्य साक्षाज्ज्ञाननाश्यत्वासिद्धावपि ज्ञानप्रयुक्तनाशप्रतियोगित्वं सिद्धमेव। यतो नैयायिकादिमते अविद्याया अस्वीकारेऽपि अदृष्टादेर्ज्ञानप्रयुक्तनाशप्रतियोगित्वस्य स्वीकारात्। "दुःखजन्मप्रवृत्ति-

दोषमिथ्याज्ञानानाम् उत्तरोत्तरापाये तदनन्तरापायादपवर्ग" इत्यक्षपादसूत्रे तथैवाभिधानात् । अतः प्रवृत्त्यादेः ज्ञानप्रयुक्तनाशप्रतियोगित्वस्य सिद्धत्वात्; अतोऽविद्यासिद्धेः प्राक् ज्ञानप्रयुक्तनाशप्रतियोगित्वस्य सिद्धत्वात् न दृष्टान्ते साधनवैकल्यम् । अविद्यासाधकं द्वितीयानुमानमाह—यद्वेति । अनाद्यभावलिक्षणत्वं ज्ञानविरोधिवृत्ति, सकलानाद्यभावविलक्षणवृत्तित्वात्, अभिधेयत्ववदिति । अस्मिन्ननुमाने अभिधेयत्वं दृष्टान्तः । तच्च शब्दशक्यत्वम् । अभिधेयत्वशब्दशक्यत्ववाच्यत्व-पदार्थत्वानामभिन्नत्वात् । वैशेषिकमते अभिधेयत्वधर्मः सर्वत्र विद्यमानत्वात् केवलान्वयी । अद्वैतवेदान्तिमते नायं धर्मः केवलान्वयी, शुद्धे ब्रह्मणि अभिधेयत्वाभावात्, शुद्धं ब्रह्म न पदवाच्यम् जडवस्तुमात्रं तु अभिधेयमेव । सकलानाद्यभावविलक्षणवृत्तित्वं हेतुर्दृष्टान्ते अभिधेयत्वे वर्तते । अभिधेयत्वं सर्वत्र विद्यमानमिति कृत्वा तत्र ज्ञानविरोधिवृत्तित्वं साध्यमपि वर्तते । अतो दृष्टान्ते हेतु साध्ययोः सामानाधिकरण्यरूपा व्याप्तिर्वर्तते । अस्मिन्ननुमाने अनाद्यभावविलक्षणत्वं पक्षः, अस्मिन्पक्षे सकलानाद्यभावविलक्षणवृत्तित्वं हेतुर्वर्तते । अतो हेतोः पक्षवृत्तित्वात् साध्यमपि पक्षे सिध्यति; पक्षे साध्यसिद्धिश्च अविद्यासिद्धिरेव । यतो अनाद्यभावविलक्षणत्वं पक्षः, तच्च अनादित्वे सति अभावविलक्षणत्वम्; तत्र ज्ञानविरोधित्वरूपसाध्यसिद्धौ अनाद्यभावविलक्षणज्ञाननिवर्त्या अविद्यैव सिध्यति । एवं लक्षणत्वादविद्यायाः । एवमन्यान्यपि अविद्यासाधकानुमानानि बुद्धिमद्भिः ऊहनीयानीति ॥१८॥

इतिश्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासि-
श्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धि-
टीकायां बालबोधिन्यामज्ञानवादे अविद्यानु-
मानविवरणम् ।

## अथाज्ञानवादे श्रुत्युपपत्तिः ।

एवं श्रुतयश्च । तत्र छान्दोग्ये अष्टमाध्याये—'तद्यथापि हिरण्यं निधिनिहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन प्रत्यूढा' इति श्रुतिर्ब्रह्मज्ञानप्रतिबन्धकत्वेनानृतं ब्रुवाणा तादृगज्ञाने प्रमाणम् ॥१॥

---

१—साक्षिप्रत्यक्षे अनुमानेन च यादृशमज्ञानं सिद्धं श्रुतयोऽपि तादृशमज्ञानं प्रतिपादयन्तीति अज्ञाने श्रुतिप्रमाणं दर्शयति—एवं श्रुतयश्च । तत्र छान्दोग्ये अष्टमाध्याये तद्यथापि हिरण्य[ण्यं] निधिं[धि]निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्ति[न्त्य] एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः [छान्दो० ८।३।२] इति श्रुतिर्ब्रह्मज्ञानप्रतिबन्धकत्वेनानृतं ब्रुवाणा तादृगज्ञाने प्रमाणम् । इयं श्रुतिः प्रतिबन्धकानृतवस्तुनः प्रतिपादिका । अत इयं श्रुतिरज्ञाने प्रमाणम् । "अनृतेन हि प्रत्यूढा" इत्यत्र अनृतपदेन मिथ्यावस्तुनः प्रत्यूढपदेन अन्धीभूतस्य प्रतिपादनं कृतम् । सुषुप्तौ सर्वे जीवा ब्रह्मणा एकीभूता अपि मिथ्याऽज्ञानावरणेन अन्धीभूता भवन्ति, अस्फुरद्ब्रह्मस्वरूपा भवन्ति । ब्रह्मणोऽस्फुरणमेवात्रान्ध्यम् । सुषुप्तौ जीवा ब्रह्मस्वरूपेण न भासन्ते इत्यर्थः । अज्ञानावरणेनैव सुषुप्तौ जीवा अस्फुरद् ब्रह्मरूपास्तिष्ठन्तीत्यर्थः । अज्ञानं ब्रह्मस्फुरणप्रतिबन्धकम् । ब्रह्मणोऽस्फुरणस्य व्याप्यम् अज्ञानमिति भावः । सुषुप्तौ अज्ञानमात्रमवशिष्यते इति कृत्वा ब्रह्मस्वरूपं जीवान्प्रति न स्फुरति । जीवब्रह्मणोरैक्यं श्रुतियुक्तिसिद्धमपि जाग्रदादौ शरीरेन्द्रियान्तःकरणोपाधिप्रतिबन्धात् जीवो ब्रह्मरूपेण न स्फुरति । सुषुप्तौ जीवब्रह्मभेदकोपाधीनां शरीरेन्द्रियादीनामात्मन्यध्यस्तानां प्रविलये जीवब्रह्मणोरैक्यस्फुरणप्रतिबन्धकविगमेन जीवानां सुषुप्तौ ब्रह्मरूपेण स्फुरणं[भवितुं]युक्तमासीत्; अथ च तदानीं ब्रह्मरूपेण स्फुरणं न भवतीति ब्रह्मरूपं स्फुरणस्य प्रतिबन्धकं ब्रह्मास्फुरणव्याप्यं किंचिदवश्यं वाच्यम् । तच्चाज्ञानं मिथ्याभूतं श्रुतिरेवात्र प्रतिपाद-

न च—ऋतशब्दस्य 'ऋतं पिबन्तावि'त्यत्र सत्कर्मणि प्रयोगदर्शनात् 'ऋतं सत्यं तथा धर्म' इति स्मृतेश्च ऋतशब्दस्य सत्कर्मपरत्वादनृतशब्दस्य दुष्कर्मपरत्वमिति—वाच्यम्; उत्तरत्र 'य आत्मापहतपाप्मे'त्यादिना आत्मनोऽपहतपाप्मत्वप्रतिपादनेन दुष्कर्मप्रत्यूढत्वविरोधात्, सुषुप्तौ कर्ममात्रनाशे दुष्कर्मणोऽप्यभावात्, कारणात्मनावस्थाने चाज्ञानस्यावश्यकत्वात्, कर्मणं आवरणत्वानुपपत्तेश्च। ब्रह्मवेदनप्रतिबन्धकतया ह्यनादिब्रह्मावरकं ज्ञाननिवर्त्यं वाच्यम्। तथा च कर्मेव प्रधानमपि नानृतपदाभिधेयम्; तयोर्ज्ञानानिवर्त्यत्वात्। ज्ञाननिवर्त्यत्वे च 'भूयश्चान्ते विश्वमायानिवृत्तिरि'त्यादिश्रुतिर्मानम् ॥२॥

---

यति। सुषुप्तौ ब्रह्मस्वरूपस्फुरणप्रतिबन्धकं ब्रह्मास्फुरणव्याप्यम् अज्ञानमेवावशिष्यते। एतस्मादज्ञानावरणप्रतिबन्धादेव सुषुप्तौ जीवा ब्रह्मरूपेण न स्फुरन्तीति श्रुतेराशयः। तथा च इयं श्रुतिरज्ञाने प्रमाणमित्यर्थः ॥१॥

२—अस्यां श्रुतौ अनृतशब्दो न मिथ्यावचनः किन्तु पापप्रतिपादक इति पूर्वपक्षी शङ्कते—न च ऋतशब्दस्य "ऋतं पिबन्तौ" इत्यत्र सत्कर्मणि प्रयोगदर्शनात् 'ऋतं सत्यं तथा धर्म' इति स्मृतेश्च। ऋतशब्दस्य सत्कर्मपरत्वात्, अनृतशब्दस्य दुष्कर्मपरत्वमिति वाच्यम्। श्रुतौ अनृतशब्देन मिथ्याऽज्ञानं नाभिधीयते, किन्तु ऋतशब्दस्य श्रुतौ सत्कर्मणि प्रयोगदर्शनात्, यथा 'ऋतं पिबन्तौ सुकृतस्य लोके' [काठ०, १।३।२] यथा वा "ऋतं सत्यं तथा धर्म" इति स्मृतौ ऋतशब्दस्य सत्कर्मणि प्रयोगदर्शनात्, अनृतशब्देन ऋतविपरीतं पापमेवाभिधीयते। तथा च 'अनृतेन प्रत्यूढा' इत्यस्य पापेन प्रतिबद्धा इत्येवार्थः; नात्र अद्वैतवादिसम्मताज्ञानकल्पनावकाश इति।

आत्मनोऽपहतपाप्मत्वेन, सुषुप्तौ कर्ममात्रस्य प्रलयाच्च न सुषुप्तौ पापप्रतिबन्धाद् ब्रह्मरूपस्य अस्फुरणमिति समाधत्ते—उत्तरत्र य आत्मा अपहतपाप्मा इत्यादिना आत्मनोऽपहतपाप्मत्वप्रतिपादनेन दुष्कर्मप्रत्यूढत्व-विरोधात्। सुषुप्तौ कर्ममात्रनाशे दुष्कर्मणोऽपि अभावात्। कारणात्मन अवस्थाने चाज्ञानस्यावश्यकत्वात्। कर्मण आवरककत्वानुपपत्तेश्च। ब्रह्मवेदनप्रतिबन्धकतया ह्यनादिब्रह्मावरकं ज्ञाननिवर्त्यं

वाच्यम्, तथा च कर्मेव प्रधानमपि नानृतपदाभिधेयं तयोर्ज्ञानानिवर्त्यत्वात्। ज्ञाननिवर्त्यत्वे च 'भूयश्चान्ते विश्वमायानिवृत्तिरि'त्यादिश्रुतिर्मानम्। 'अनृतेन हि प्रत्यूढा' इति श्रुतेरनन्तरमेव छान्दोग्यश्रुतौ य आत्मा अपहतपाप्मा [छान्दो० ८।७।१] इति वाक्येन आत्मनः पापराहित्यप्रतिपादनात् न दुष्कर्मप्रतिवन्धात् सुषुप्तौ ब्रह्मास्फुरणं संभवति। अतः पूर्वपक्ष्युक्तम् असङ्गतमिति भावः। किञ्च सुषुप्तौ कर्ममात्रस्य प्रविलयात् दुष्कर्मफलं सुषुप्तौ ब्रह्मास्फुरणमिति वक्तुमशक्यमेव। यद्येवमुच्येत—आत्मनोऽपहतपाप्मत्वेऽपि मिथ्यापापसत्त्वेऽविरोध इति तदप्यसंगतम्; मिथ्यापापसत्त्वे तदुपादानतया अज्ञानस्यापि मिथ्याभूतस्य अवस्थानमवर्जनीयम्। यदि सुषुप्तौ दुष्कृतं लीयमानं कारणात्मा अवतिष्ठते इत्युच्येत तदा सर्वजन्यदृश्यस्य परिणाम्युपादानमज्ञानमवतिष्ठते इत्येवापद्येत। तथा च भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायापातः। कर्मण आवरकत्वमपि अप्रसिद्धम्। उक्तञ्च विवरणे—न च कर्माणि स्वाश्रयावभासविरोधीनीति प्रमाणमस्ति। संस्कारत्वाच्च कर्मणां भ्रान्तिसंस्कारवदप्रतिवन्धकता। तस्मात् सुषुप्तौ स्वरूपानवभासव्यवहारोऽग्रहणमिथ्याज्ञानतत्संस्कारकर्मभ्योऽन्यदेव किंचित् प्रतिबन्धकम् अज्ञानं कल्पयतीत्यर्थः। [विवरणम्, पृ०, १६, विजयनगरसंस्करणम्] तथा च सुषुप्तौ जीवान् प्रति ब्रह्मस्फुरणप्रतिबन्धकतया अनादिब्रह्मावरकं ज्ञाननिवर्त्यं वाच्यम्। ब्रह्मस्फुरणप्रतिबन्धकस्य सादित्वे कारणपरम्पराकल्पनायामनवस्थेति तस्य अनादित्वं तस्य आवरकत्वं विना सुषुप्तौ ब्रह्मणः अस्फुरणं न स्यात्; ब्रह्मणः स्वप्रकाशत्वात् तस्य ज्ञाननिवर्त्यत्वं विना तत्त्वज्ञानस्य वैकल्येन मोक्षाभावप्रसंगाच्च। यच्च अनादिब्रह्मावरकं ज्ञाननिवर्त्यं तदेवाज्ञानम् अज्ञानस्य तल्लक्षणत्वात्। सुषुप्तौ ब्रह्मास्फुरणव्याप्यं यथा न कर्म एवं प्रधानमपीत्याह—कर्मेव प्रधानमपि न अनृतपदाभिधेयमिति। "अनृतं परिणामतः" इति पूर्वपक्ष्युदाहृतस्मृत्या परिणामिप्रधानमपि न सुषुप्तौ ब्रह्मस्फुरणप्रतिबन्धकम्, यथा न कर्मप्रतिबन्धकं तथा प्रधानमपि न ब्रह्मस्फुरणप्रतिबन्धकम्। तयोः कर्मप्रधानयोर्ज्ञानानिवर्त्यत्वात, ब्रह्मावरकस्य ज्ञाननिवर्त्यत्वम् अवश्यमङ्गीकरणीयम्। प्रमात्वेन ज्ञानमज्ञानस्यैव निवर्तकं नान्यस्य। उक्तञ्च पञ्चपादिकायां ज्ञानमज्ञानस्यैव निवर्तकमिति [पञ्चपा०,

न च—अत्र निवृत्तिस्तरणमात्रम्, 'मायामेतां तरन्ति ते' इति स्मृतेरिति—वाच्यम्; ज्ञानहेतुकतरणस्य निवृत्त्यतिरिक्तस्यासम्भवेन उभयोर्नाशमात्रार्थत्वात् ॥३॥

न च—'तम आसीदि'त्यस्य सत्त्वप्रतिपादकस्य बाधकं विना पारमार्थिकसत्त्वपरत्वेन कथमावरणस्यानृतत्वमिति—वाच्यम्, 'नासदासीन्नो सदासीदि'त्यनेन पारमार्थिकत्वतुच्छत्वयोर्निषेधेन व्यावहारिकसत्त्वपरत्वात् ॥४॥

---

पृ०, १-२, विजयनगरसंस्करणम्] प्रमात्वेन ज्ञाननिवर्त्यत्वानङ्गीकारे अज्ञानस्यैव नामान्तरं स्यात् । अज्ञानस्य ज्ञाननिवर्त्यत्वं साक्षात् श्रुतिरेव प्रतिपादयतीत्याह—'भूयश्चान्ते विश्वमायानिवृत्तिरि'ति श्रुतिर्मानम् [श्वेता०, १।१०] श्रुतौ मायाशब्देन अज्ञानमुच्यते । असत्त्वापादकम् अभानापादकञ्च अज्ञानं द्विविधम्; द्विविधाज्ञाननिवृत्तिप्रतिपादनाय विश्वमायानिवृत्तिरित्युक्तम् श्वेताश्वतरमन्त्रे ॥२॥

३—श्वेताश्वतरमन्त्रे यद् विश्वमायानिवृत्तिरित्युक्तं तन्न ज्ञाननिवर्त्यत्वप्रतिपादनाय; किन्तु विश्वमायातरणप्रतिपादनायेत्याशंक्य समाधत्ते—न च अत्र निवृत्तिस्तरणमात्रं "मायामेतां तरन्ति ते" इति स्मृतेरिति वाच्यं ज्ञानहेतुकतरणस्य निवृत्त्यतिरिक्तस्यासम्भवेन उभयोर्नाशमात्रपरत्वात् । 'मायामेतां तरन्ति ते' [गीता ७।१४] इति गीतास्मृतौ ज्ञानेन मायातरणमेवोक्तम्; उपबृंहकस्मृत्यनुसारेण श्रुतावपि निवृत्तिपदं मायातरणप्रतिपादकमेव न तु ज्ञानेन मायाया नाश इति; तथा च अज्ञानस्य ज्ञाननिवर्त्यत्वं न सिद्धमिति पूर्वपक्षिणा न वाच्यम् । यतः क्रियाहेतुकतरणम् अत्र नोक्तम् । तथात्वे हि पार्श्वतः पार्श्वान्तरगमनरूपं लंघनं तरणं स्यात्; अत्र तु प्रकाशाख्यज्ञानेन निवृत्तितरणे श्रुतिस्मृत्योरुक्ते, तेनात्र लंघनरूपतरणस्यासंभवात् अज्ञाननिवृत्तिरेवात्र निवृत्तितरणपदाभ्यामुक्तेति बोध्यम् ॥ ३ ॥

४—श्रुत्यां तमसोऽज्ञानस्य सत्त्वप्रतिपादनात् कथमज्ञानस्य अनृतत्वमित्याशङ्क्यसमाधत्ते—न च तम आसीदित्यस्य सत्त्वप्रतिपादकस्य बाधकं विना पारमार्थिकसत्त्वपरत्वेन कथमावरणस्य अनृतत्वमिति वाच्यम्? नासदासीन्नो सदासीदित्यनेन पारमार्थिकत्वतुच्छत्वयोर्निषेधेन

न च—अनेन माया प्रतिपाद्यते; मायाशब्दार्थश्च नाज्ञानम्, मायिनो ब्रह्मणोऽज्ञानित्वे सर्वज्ञत्वनिरवद्यत्वादिश्रुतिविरोधादिति—वाच्यम्; उपाधेः प्रतिबिम्बपक्षपातित्वेनेश्वरासार्वज्ञ्याद्यापादनायोगात्, सार्वज्ञ्याद्यैश्वर्यस्य मायानिबन्धनत्वाच्च ॥५॥

---

व्यावहारिकसत्त्वपरत्वात्। आवरणात्मकतमोरूपाया मायाया ज्ञाननिवर्त्यत्वेन मिथ्यात्वमिति वक्तुमशक्यम्; मायायाः मिथ्यात्वे सद्विलक्षणत्वं स्यात्। किन्तु श्रुतिः 'तम आसीत्तमसा गूढमग्रे' [ऋक् सं०, १० म०, ११ अनु०, १२९, सू०, ३ मन्त्रः] 'गौरनाद्यन्तवती नित्या सततविक्रिया' इत्यादिभिः मायाया सत्यत्वं नित्यत्वं प्रतिपादयतीति मायायाः मिथ्यात्वं वक्तुमशक्यम्। सत्त्वप्रतिपादकश्रुते-र्बाधकं विना परमार्थिसत्त्वपरत्वात्। आसीच्छब्देन तमसः सत्त्वप्रतिपादनादिति भावः। समाधत्ते सिद्धान्ती—तम आसीदित्यादिना मायाया व्यावहारिकसत्त्व-प्रतिपादनात् न मायायाः परमार्थिकसत्त्वं यतो नासदासीयसूक्ते [ऋक् सं० १०।११।१२९] नासदासीन्नो सदासीदिति श्रुतौ मायाया सदसद्विलक्षणत्व-स्योक्तेः। अतः सद्विलक्षणमायायां सत्तासम्बन्धो व्यावहारिक एव एवं द्वितीयश्रुतावपि मायाया अन्तराहित्यं यदुक्तं तत् तत्त्वज्ञानं विनेति बोध्यम्। नित्येत्यनेन दीर्घकालस्थायित्वमुक्तम्। मायाया अज्ञानरूपत्वात् तत्त्वज्ञाननाश्य-त्वस्य अवश्यम्भावात् ॥४॥

५—मायाऽज्ञानयोर्नैकत्वम् इति पूर्वपक्षिमतमाशंक्य समाधत्ते—न च अनेन माया प्रतिपाद्यते। मायाशब्दार्थश्च नाज्ञानं मायिनो ब्रह्मणोऽज्ञानित्वे सर्वज्ञत्वनिरवद्यत्वादिश्रुतिविरोधात् इति वाच्यम् उपाधेः प्रतिबिम्बपक्षपातित्वेन ईश्वरासार्वज्ञ्याद्यापादनायोगात्। सार्वज्ञ्याद्यैश्वर्यस्य मायानिबन्धनत्वाच्च। मायाया अज्ञानरूपत्वे तत्त्वज्ञाननाश्यत्वं स्यात्, मायाया अज्ञानरूपत्वमेवासिद्धम्, प्रदर्शितश्रुत्या माया प्रतिपाद्यते नाज्ञानम्; अन्यथा मायिनो ब्रह्मणः अज्ञानित्वे ब्रह्मणः सर्वज्ञ-त्वादिप्रतिपादकश्रुतिविरोधात् अतो माया नाज्ञानमिति पूर्वपक्षिणा न वाच्यम्। जीवेश्वरभेदप्रयोजकोपाधिरेव माया, मायोपाधौ चित्प्रतिबिम्बं जीवः बिम्ब-मीश्वरः। उपाधेः प्रतिबिम्बपक्षपातिवात्, उपाधिप्रयुक्तासर्वज्ञत्वादिकं प्रतिबिम्बे

न च—'मय ज्ञान' इति धात्वर्थानुसारात् मायाकथमज्ञानमिति—' वाच्यम्; 'एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासीकरोति माया चाविद्या च स्वयमेव भवती'ति श्रुत्या मायाविद्ययोरैक्यप्रतिपादनान्माया अज्ञानमेव। 'घट चेष्टाया-मि'ति धातुजस्यापि घटशब्दस्य चेष्टावाचकत्वाभाववदत्रापि ज्ञान-वाचकत्वाभावात्। माया प्रज्ञा वयुनमितिज्ञानपर्याये निघण्टुकारवचनं च ज्ञानाकारपरिणामित्वादज्ञानस्योपपन्नम्। वृत्तिज्ञानस्याज्ञानाभिन्नत्वात्। अज्ञानस्यैवानिर्वचनीयविचित्रशक्तियोगात् न विचित्रशक्तिमति माया-शब्दप्रयोगानुपपत्तिः। क्वचिन्मणिमन्त्रादौ तत्प्रयोगस्तूपचारात् ॥६॥

---

जीवे एव न बिम्बे इश्वरे इति भावः। ईश्वरसार्वज्ञ्यादेर्मायानिबन्धनत्वाच्च इति। उक्तञ्च चित्सुखाचार्यैः—

स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम्।
तच्चोभयं विनाऽविद्यासम्बन्धं नैव सिध्यतीति।

[तत्त्वप्रदीपिका, ४र्थ परिच्छेदः] द्वेधा हि सर्वज्ञत्वं सम्भवति स्वभाव-भूतप्रज्ञया वा यथा वैशेषिकादिमते ईश्वरस्य प्रमाणजनितप्रज्ञया वा यथा तन्मत-सिद्धयोगिनाम्; उभयथापि असङ्गचैतन्यस्य अविद्यासम्बन्धमन्तरेण नोपपद्यते इति। असङ्गचैतन्यस्य विषयसम्बन्धघटनाय अघटनघटनचतुरा अविद्यैव शरणम् ॥५॥

६—मायाशब्दनिर्वचनसामर्थ्यादपि माया नाज्ञानमिति पूर्वपक्षमितमाशङ्क्य-समाधत्ते—न च मय ज्ञाने इति धात्वर्थानुसारात् मायाकथमज्ञानमिति वाच्यम् "एवमेवैषा[माया]स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशौ आभासेन करोति माया च अविद्या च स्वयमेव भवती"ति श्रुत्या माया अविद्ययोरैक्यप्रतिपादनात्, माया अज्ञानमेव। घटचेष्टायामिति धातुजस्यापि घटशब्दस्य चेष्टावाचकत्वाभाववदत्रापि ज्ञानवाचकत्वाभावात्। माया प्रज्ञा वयुनमिति ज्ञानपर्याये निघण्टुकार-वचनञ्च ज्ञानाकारपरिणामित्वादज्ञानस्योपपन्नम्। वृत्तिज्ञानस्य अज्ञानाभिन्नत्वात्। अज्ञानस्यैव अनिर्वचनीयविचित्रशक्तियोगात् न विचित्रशक्तिमती मायाशब्दप्रयोगानुपपत्तिः। क्वचिन्मन्त्रादौ

प्रयोगतत्त्वस्तूपचारात्। पूर्वपक्षी शङ्कते पाणिनीयधातुपाठे मय धातुर्ज्ञानार्थे पठितः,मयज्ञाने इति। ज्ञानार्थकमयधातोः अण् प्रत्यये णकारानुबन्धात् उपधावृद्धौ माय इति निष्पन्नम्, स्त्रीलिङ्गे आप्प्रत्ययेन मायापदं निष्पन्नम्। अतो ज्ञानार्थकमय धातुना निष्पन्नं मायापदं ज्ञानस्यैव बोधकं भवितुमर्हति, न तु अज्ञानस्येति समाधत्ते—मायाअविद्यापदयोरेकार्थकत्वं श्रुतिरेव निर्दिशति—नृसिंहोत्तरतापनीये 'एवमेवैषा माया जीवेशौ आभासेन करोति माया अविद्या च स्वयमेव भवती'ति [नृसिं०उ० ता—९ म खण्डः। २३०–३१ पृ०] वाक्येन मायाऽविद्ययोरैक्यं प्रतिपादितम्। अतो मायापदस्य अज्ञानमर्थः। ज्ञानार्थकमय-धातुना निष्पन्नमित्येव मायापदं न ज्ञानार्थकं भवितुमर्हति, व्युत्पत्तिमात्रं निमित्तं तत्, न तु प्रवृत्तिनिमित्तम्। अन्यथा घट चेष्टायामिति पाणिनीयधातुपाठात् चेष्टार्थकघटधातुना निष्पन्नं घटपदमपि चेष्टामेव बोधयेत्, न तु कम्बुग्रीवादि मद्वस्तु इति। एवञ्च यथा चेष्टार्थकघटधातुनिष्पन्नं घटपदं न चेष्टावाचकम् एवं मायापतमपि न ज्ञानवाचकम्। लघुचन्द्रिकाकृतस्तु वस्तुतः—प्रमाणार्थक मी [मा] धातोर्मायेति पदं माच्छाससिभ्यो य इत्यौणादिकसूत्रसिद्ध 'य' प्रत्ययान्तम्। माच्छाससिभ्यो य इति सूत्रम् उणादिसूत्रपाठे पठितम् [उणादि० ४। १०९] एतत्सूत्रवृत्तौ उज्ज्वलदत्तेन मायाछाया, ऽभृतिपदानां निष्पत्तिर्दर्शिता मयज्ञाने इति तु पाणिनीयधातुपाठे नास्त्येव। अय्पय्मय्चय्तय्नय् गतौ इत्यस्यैव तत्र सत्त्वात्। माङ् माने इति धातुपाठात्। मानशब्दस्य परिमाणज्ञानयोः प्रयोगात् योगेन ज्ञानार्थकत्वमिव रूढ्या अज्ञानार्थकत्वम्। छद्मनोऽपि दुर्घटकार्यकारित्वरूपेण रूढ्यर्थगुणेन मायापदबोध्यत्वात्। अत एव 'माया स्यात् शाम्बरबुद्धयोर्मयः पीताम्बरे असुरे, इति मेदिनी युक्ता। शाम्बर्यामविद्यायामपि उक्तगुणयोगेन मायापदप्रयोगात् न च दुर्घटकारित्वमेव रूढ्यर्थोऽस्तु इति वाच्यम्; ऋते अर्थं यत् प्रतीयते इत्यादिस्मृत्या मिथ्यात्वविशिष्टे मायापदशक्तिनिरूपणात्। तिलरसमुख्यार्थकस्यापि तैलपदस्य भूरिप्रयोगेण सार्षपरसे निरूढगौणत्ववत् दुर्घटकारिणि मायापदस्य गौणत्वादिति भावः। पूर्वपक्षी शङ्कते माया, प्रज्ञा, वयुनमित्यादिशब्दाः ज्ञानपर्यायाः इति निघण्टुकारवचनात् मायापदस्य ज्ञानमेवार्थः न तु अज्ञानमिति समाधत्ते—अज्ञानमेव वृत्तिज्ञानस्य उपादानम्; अज्ञानमेव वृत्तिज्ञानरूपेण परिणमते। अतो

न च—शुक्तिरूप्यादौ मायाशब्दाप्रयोगात् न मृषार्थोऽयमिति—वाच्यम्, वज्रादौ पृथिवीत्वादिव्यवहाराभावेऽपि पृथिवीत्ववत् व्यवहाराभावेऽपि मायात्वानपायात्। ऐन्द्रजालिकादौ बहुशो मायाशब्द-प्रयोगदर्शनाच्च, मायाया अज्ञानान्यत्वे ज्ञाननिवर्त्यत्वविरोधाच्च। नीहारतमःशब्दावप्यस्मिन्मते अज्ञानस्यावारकत्वाद्युज्येते, नान्यमते। अनृतनीहारादिशब्दानां दुष्कर्मपरत्वे श्रुत्यन्तरोक्तजीवेशभेदकत्वोपादान-त्वादिविरोधश्च। तस्मा 'दनृतेन प्रत्यूढाः' 'नीहारेण प्रावृताः' 'तम आसीत्' 'मायां तु प्रकृतिं विद्यात्' 'अजामेकां लोहितशुक्लकृष्णाम्' 'अविद्यायामन्तरे वर्तमानाः' 'भूयश्चान्ते विश्वमायानिवृत्तिरि'त्याद्या श्रुतयो वर्णिता अज्ञाने प्रमाणमिति स्थितम् ॥७॥

इत्यद्वैतसिद्धाववविद्याप्रतिपादकश्रुत्युपपत्तिः ॥

---

मायापदं ज्ञानपर्याये पठितमपि न दोषमावहति। वृत्तिज्ञानम् अज्ञानोपादानकमिति अज्ञानाभिन्नम्। अज्ञानस्य विचित्रा शक्तिर्वर्तते; अतो विचित्रशक्तिमति मायापद-प्रयोग उपपन्न एव। कुत्रचित् मणिमन्त्रादौ मायाशब्दप्रयोगः औपचारिकः। मणिमन्त्रादीनां मिथ्याभूतवस्तुनिमित्तत्वात् मिथ्यावस्तुप्रतिपादको मायाशब्दः मिथ्यावस्तुनिमित्तकारणे मणिमन्त्रादावपि प्रयुज्यते ॥६॥

७—शुक्तिरजतादौ मिथ्याभूते वस्तुनि मायाशब्दप्रयोगात् न मायाशब्दो मिथ्यावस्तुवाचक इति पूर्वपक्षिमतमाशङ्क्य समाधत्ते—न च शुक्तिरूप्यादौ मायाशब्दाऽप्रयोगात् न मृषार्थोऽयमिति वाच्यम् वज्रादौ पृथिवी-त्वादिव्यवहाराभावेऽपि पृथिवीत्ववत् व्यवहाराभावेऽपि मायात्वान-पायात्। ऐन्द्रजालिकादौ बहुशो मायाशब्दप्रयोगदर्शनाच्च। मायाया अज्ञानान्यत्वे ज्ञाननिवर्त्यत्वविरोधाच्च।' नीहारतमःशब्दावपि अस्मन्मते अज्ञानस्यावरकत्वात् युज्यते नान्यमते। अनृतनीहारादि-शब्दानां दुष्कर्मपरत्वे श्रुतेरुक्तजीवेशाभेदकत्वोपादानत्वादिविरोधश्च। तस्मादनृतेन प्रत्यूढाः, नीहारेण प्रावृताः, तम आसीत्, मायां तु प्रकृतिं विद्यात्, अजामेकां लोहितशुक्लकृष्णाम्, अविद्यायामन्तरे

वर्तमानाः, भूयश्चान्ते विश्वमायानिवृत्तिरित्याद्याः श्रुतयो वर्णिता अज्ञाने प्रमाणमिति स्थितम् ।

इत्यद्वैतसिद्धौ अविद्याप्रतिपादकश्रुत्युपपत्तिः ।

मायाशब्दो न मिथ्यावस्तुनो बोधकः मिथ्याभूते शुक्तिरजतादौ मायाशब्दाप्रयोगात् इति पूर्वपक्ष्युक्तं न युक्तम् । यथा हीरकमणिमुक्तादीनां पार्थिवत्वेऽपि तेषु पृथिवीत्वाव्यवहारात् तेषु पृथिवीत्वाव्यवहारेऽपि तेषु पृथिवीत्वं वर्तते एव । पृथिवीत्वजातेर्व्यञ्जकाभावदशायां हीरकादिषु पृथिवीत्वं न व्यवह्रियते । गन्धवत्त्वादि पृथिवीत्वव्यञ्जकम्, व्यञ्जकसत्त्वदशायां तेषु पृथिवीत्वव्यवहारोऽपि कदाचित् भवति; एवं शुक्तिरजतादिषु मायात्वव्यञ्जकसत्त्वदशायां मायात्वव्यवहारोऽपि भवति । ज्ञाननिवर्त्यत्वादि मायात्वव्यञ्जकम् । अत एव सांख्याचार्यैः 'यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकमि'ति दृश्यवस्तुमात्रं मायाशब्देन निर्दिश्यते । अत एव महाभारते मोक्षधर्मे "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद, [मोक्षधर्मपर्वणि—३३९ अ०, ४५ श्लो०] इत्यादिवाक्येन दृश्यमात्रं मायाशब्देन निर्दिश्यते । अत एव ऐन्द्रजालिकसृष्टमिथ्यावस्तुनि मायाशब्दप्रयोगो लोकानाम् । माया यदि अज्ञानाद् भिन्ना स्यात् तदाज्ञाननिवर्त्या न स्याद् । तथा च 'भूयश्चान्ते विश्वमायानिवृत्तिः,' 'मायामेतां तरन्ति ते' इति श्रुतिस्मृती बाधिते भवेताम् । नीहारतमःशब्दावपि श्रुतिषु अज्ञानस्य प्रतिपादकौ; अज्ञानस्य आवरणशक्तिर्विद्यते, नीहारतमसोरपि आवरकत्वं वर्तते । अतोऽज्ञानस्य आवरकत्वबोधनाय श्रुतिषु नीहारतमःशब्दाभ्याम् अज्ञानं निर्दिश्यते । येषां मते अज्ञानं नावरकं तेषां मते नीहारतमःशब्दाभ्याम् अज्ञानस्य निर्देशो न सङ्गच्छते । विवरणाचार्यैस्तु 'न तं विदाथ य इमामजान,' 'नीहारेण प्रावृता' इत्यादिश्रुतिरुदाहृता [विवरणम्, पृ०, ४२, विजयनगरसंस्करणाम्]; श्रुतिरियं शुक्लयजुःसंहितायाम् [१७।३१, मन्त्रः]। ऋक्संहितायाञ्च, [८।३।१७ मन्त्रः] आम्नाताः माधवीयभाष्ये एवं व्याख्याताः—नीहारसदृशेन अज्ञानेनावृताः अनृतेन प्रत्यूढाः [छान्दोग्योपनिषदि ८।३।२ खण्डे] इत्यत्र अनृतशब्देन अज्ञानं निर्दिश्यते । अनृतनीहारादिशब्दा यदि दुष्कर्मप्रतिपादकाः स्युस्तर्हि 'अनीशया शोचति भुज्यमानः'

इति मुण्डकश्रुतौ [मु० ३।२] अज्ञानस्य जीवेश्वरभेदकत्वम्, माया तु प्रकृतिं विद्यादिति श्वेताश्वतरश्रुतौ [श्वेता० ४।१०] मायायाः प्रपञ्चोपादानत्वम्, 'अजामेकाम्' इति श्वेताश्वतरश्रुतौ [श्वेता० ४।५] प्रकृतेः त्रिगुणात्मकत्वम्, उक्तं सर्वं विरुध्येत। दुष्कर्मण एव मोहरूपतया जीवेश्वरभेदकत्वे कर्मणः सादित्वेन अनादिजीवेश्वरभेदज्ञापकत्वाभावात्। सादेरनादिप्रयोजकत्वाभावात्। दुष्कर्मणः सर्वकार्योपादानत्वमपि न संभवति। विष्णुपुराणेऽपि 'भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्' [विष्णु०, ६।७।९३] इत्यनेन जीवेश्वरभेदोऽज्ञानप्रयुक्त इति स्पष्टमुक्तम्। अतः 'अनृतेन हि प्रत्यूढाः' [छान्दो० ८।३।२] 'नीहारेण प्रावृताः' [ऋक् सं०, ८।३।१७], 'तम आसीत्तमसा गूढमग्रे' [ऋक् सं०, ८।७।१७], 'मायां तु प्रकृतिं विद्यात्' [श्वेताश्व० ४।१०], 'अजामेकां लोहितशुक्लकृष्णां' [श्वेता०, ४।५], 'अविद्यायामन्तरे वर्तमानाः [कठ०, २।५], 'भूयश्चान्ते विश्वमायानिवृत्तिः' [श्वेता०, १।१०] इत्यादिश्रुतयो अज्ञाने प्रमाणम् ॥७॥

इतिश्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासि-
श्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धि-
टीकायां बालबोधिन्यामज्ञानवादे
श्रुत्युपपत्तिविवरणम् ॥

## अथाज्ञानवादे अर्थापत्त्युपपत्तिः ।

### (१) जीवस्यानवच्छिन्नब्रह्मानन्दाप्रकाशान्यथानुपपत्तिश्च तत्र

१—योऽयम् अविद्याविषयकः सुविस्तृतो विचारो अद्वैतदीपिकाऽद्वैतसिद्ध्यादिषु नवीनवेदान्तग्रन्थेषु दृश्यते तस्य मूलं यद्यपि वार्तिकपंचपादिकादिषु प्राचीनवेदान्तग्रन्थेषु विद्यते, तथापि सुस्पष्टतया विग्रहवानिव पञ्चपादिकाविवरणे एव उपलभ्यते । अद्वैतदीपिकादयो ग्रन्था विवरणस्यैव व्याख्यास्थानीयाः । आक्षेपस्य-समाधानं व्याख्याकृतां प्रधानं कर्तव्यम् । उक्तञ्च—

पदच्छेदः पदार्थोक्तिर्विग्रहः पदयोजना ।
आक्षेपस्य समाधानं व्याख्यानं पञ्च लक्षणम् ॥ इति

पञ्चपादिकायाम् अविद्यायाम् अर्थापत्तिप्रमाणं प्रदर्शितम् । "अन्यथा मिथ्यार्थावभासानुपपत्तेः" [पञ्चपादिका, पृ०, ४, काशीविजयनगरसंस्करणम् ] अयं ग्रन्थः विवरणे सुविशदं व्याख्यातः । विवरणग्रन्थखण्डनाय माध्वरामानुजादयः सन्नद्धाः वर्तन्ते । माध्वरामानुजादिप्रदर्शितखण्डनोद्धराय अद्वैतसिद्धिकारादयः प्रवर्तन्ते । अतो विवरणोपरि आक्षेपस्य समाधानाय रचिता अद्वैतसिद्ध्यादयो ग्रन्थाः विवरणस्यैव व्याख्यास्थानीयाः । उद्धृतपञ्चपादिकाग्रन्थस्यायमभिप्रायः—अर्थज्ञानात्मकं मिथ्याज्ञानमध्यासः । अध्यासे ज्ञानं विषयश्च द्वयं मिथ्या, मिथ्याविषयकं ज्ञानं सत्यं न भवितुमर्हति, मिथ्याज्ञानस्यापि विषयो न सत्यो भवितुमर्हति । अतोऽर्थज्ञानात्मकोऽध्यासो मिथ्याभूतः । मिथ्याभूतमुपादानं विना अनुपपन्नः मिथ्याभूताज्ञानमुपादानं कल्पयतीति अर्थापत्त्या मिथ्याऽज्ञानं सिध्यति[इति] । विवृतोऽयं विवरणकृद्भिः—विशुद्धे ब्रह्मणि मिथ्याबन्धरूपस्य अहंकारस्य शुक्तौ मिथ्याभूतरजतस्य अध्यासो अर्थज्ञानात्मा मिथ्याभूतः मिथ्याभूतोपादानमन्तरेण अनुपपन्नः मिथ्याभूतोपादानमज्ञानं कल्पयति । किन्तु एवं न भवितुमर्हति सत्यविषयस्य ज्ञानमेव मिथ्याभूतमध्यास इति मिथ्याज्ञानस्य विषयः सत्यो न भवितुमर्हति; सत्यविषयकं ज्ञानं अन्तःकरणवृत्तिरूपं सत्यमेव भवेत मिथ्या-

मानम्। न च जीवस्य ब्रह्मभेदेनैव तादृगप्रकाशोपपत्तिः; जीवब्रह्म-भेदस्याग्रे निरसिष्यमाणत्वात् ॥ १॥

---

ज्ञानमविद्यावृत्तिरूपमेव। मिथ्याभूतोपादानं विना उपादेयस्य मिथ्यार्थावभासस्य अनुपपत्तिरेव। सत्योपादानकत्वे उपादेयस्यापि सत्यत्वं स्यात्। सादिभाव-कार्यस्य सोपादानकत्वनियमात्। मिथ्याध्यासस्य उपादानं यदि सादि स्यात्तर्हि उपादानपरम्पराकल्पने अनवस्था स्यात्। अतो मिथ्याभूताध्यासोपादानम् अनाद्यज्ञानमेव सिध्यति। यद् अनादि स्वयं मिथ्या मिथ्योपादानम्। आत्मसम्बन्धि च तदज्ञानम्। [विवरणम्, पृ०, १३, काशीविजयनगरसं०] न्यायामृतकृता प्रथमतो विवरणप्रदर्शितार्थापत्तेरेव खण्डनं कृतम्। सिद्धिकृद्भिः न्यायामृतकृतप्रदर्शितक्रममुल्लङ्घ्य एतत्प्रकरणसमाप्तौ या अर्थापत्तिः खण्डिता न्यायामृतकृता तस्या एवार्थापत्तेः प्रथमतः समर्थनं कृतं सिद्धिकृद्भिः। क्रमोल्लं-घनेऽपि न्यायामृतकारस्य सर्वाणि खण्डनान्युद्धृतानि सिद्धिकृद्भिः।

अद्वैतवादिनो वदन्ति—जीवस्य अपरिच्छिन्नानन्दरूपब्रह्मणा अभिन्नत्वात् सदैव जीवानाम् अपरिच्छिन्नानन्दब्रह्मस्फुरणं स्यात्, ब्रह्मणः स्वप्रकाशत्वात् जीवानां ब्रह्माभिन्नत्वात्। अतो जीवानाम् अपरिच्छिन्नानन्दब्रह्मणोऽप्रकाशाय ब्रह्मप्रकाशप्रतिबन्धिका अविद्या अवश्यं कल्पनीया, अन्यथा जीवानां सदैव ब्रह्मस्फुरणं स्यादित्याह—**जीवस्यानवच्छिन्नब्रह्मानन्दाप्रकाशान्यथानुप-पत्तिश्च तत्र मानम्।** अन्यथा अनुपपत्तिरर्थापत्तिरित्यर्थः तत्र अविद्यायां प्रमाण-मित्यर्थः। अस्मिन्प्रकरणे अर्थापत्तिद्वयं पूर्वपक्षिणा दूषितम्, सिद्धान्तिना च समाहितमिति बोध्यम्।

जीवब्रह्मणोर्भिन्नत्वादेव जीवस्य ब्रह्मानन्दाप्रकाश इति पूर्वपक्षिमतमाशङ्क्य समाधत्ते—**न च जीवस्य ब्रह्मभेदेनैव तादृगप्रकाशोपपत्तिः। जीवब्रह्म-भेदस्य अग्रे निरसिष्यमाणत्वात्।** प्रदर्शितायां अन्यथानुपपत्तेरन्यथोपपत्ति-माह पूर्वपक्षी जीवब्रह्मणोरात्यन्तिकभेदाभ्युपगमेनैव अन्यथानुपपत्तिः समाहिता स्यात्, न तदर्थम् अविद्या कल्पनीया। तन्न, जीवब्रह्मभेदस्य निरसिष्यमाणत्वात्। सिद्धौ द्वितीयाध्याये जीवब्रह्मभेदसाधकानां सर्वेषामेव प्रमाणानां निरसिष्यमाण-त्वात्। भेदमात्रमेवाप्रामाणिकमिति द्वितीयाध्यासे प्रदर्शयिष्यते। इयमपि अर्था-

न चानवच्छिन्नानन्दस्यापि प्रकाशमानप्रत्यङ्मात्रत्वेनाप्रकाशमानत्वानुपपत्तिः; शरीरप्रतियोगिकस्यात्मनि स्वरूपभेदस्यात्माकारेण प्रकाशमानत्वेऽपि भेदाकारेणाप्रकाशमानत्ववद्रूपान्तरेण ब्रह्मणः प्रकाशमानत्वेऽपि उक्ताकारेणाविद्यावशादप्रकाशमानत्वोपपत्तेरुक्तत्वात् । (२) भ्रमस्य सोपादानत्वान्यथानुपपत्तिरपि अविद्यायां प्रमाणम् ॥२॥

---

पत्तिर्विवरणे प्रदर्शिता—"सुषुप्तेः मिथ्याज्ञानाभावात् तत्संकारस्य चाप्रतिबन्धकत्वात् कादाचित्कग्रहणाभावस्य च स्वतः सिद्धग्रहणविरोधित्वाभावात् स्वरूपचैतन्येनैव ब्रह्मस्वरूपावभासे प्राप्ते तदवभासप्रतिबन्धनिमित्तम् अनृतं दर्शयति अनृतेन हि प्रत्यूढाः" इति [विवरणम्; पृ०, ४२, विजयनगरसं०] ॥१॥

२—अनवच्छिन्नानन्दस्वरूपब्रह्मणाप्रकाशमानजीवचैतन्यस्याभेदे अनवच्छिन्नानन्दस्य जीवसविधे अप्रकाशमानत्वं सर्वथैवानुपपन्नमिति पूर्वपक्षिमतमाशंक्य समाधत्ते—न चानवच्छिन्नानन्दस्यापि प्रकाशमानप्रत्यङ्मात्रत्वेन अप्रकाशमानत्वाऽनुपपत्तिः । शरीरप्रतियोगिकस्य आत्मनि स्वरूपभेदस्य आत्माकारेण प्रकाशमानत्वेऽपि भेदाकारेण अप्रकाशमानत्ववद्रूपान्तरेण ब्रह्मणः प्रकाशमानत्वेऽपि उक्ताकारेण अविद्यावशात् अप्रकाशमानत्वोपपत्तेरुक्तत्वात् । जीवब्रह्मणोरैक्ये जीवचैतन्ये भासमानेऽपि अनवच्छिन्नानन्दरूपं ब्रह्म, जीवसविधे न भासते इति प्रतिबन्धकशतेनापि न भवितुमर्हति । प्रतिबन्धेन यदि ब्रह्मानन्दो न भासेत तेनैव प्रतिबन्धेन जीवचैतन्यमपि न भासेत तथा च जगदान्ध्यं स्यात् । जीवचैतन्ये भासमानेऽपि यदि ब्रह्मरूपं न भासते तर्हि जीवब्रह्मणोर्भेद एव सिध्येदित्यभिप्रायः । समाधत्ते—शरीरप्रतियोगिकस्येति । स्वरूपभेदवादिनो हि पूर्वपक्षिणः । शरीरप्रतियोगिको भेदः आत्मनि वर्तते इति पूर्वपक्षिणापि स्वीकार्यम्, अन्यथा तस्य लोकायतमतप्रवेशः स्यात् । आत्मा तु सर्वदा भासते एव, आत्मरूपेण शरीरभेदे भासमानेऽपि शरीरप्रतियोगिकभेदत्वेन आत्मा न भासते इत्यङ्गीकर्तव्यम् । संसारदशायां शरीरप्रतियोगिकभेदत्वेन आत्मनो भानाङ्गीकारे तत्त्वज्ञानसद्भावात् मोक्षापत्तिः स्यात् । शरीरप्रतियोगिकभेदप्रत्यक्षं तत्त्वसाक्षात्कार इति मतेन इदं

बोध्यम् । तथा च यथा आत्मत्वेन आत्मनि भासमानेऽपि शरीरप्रतियोगिक-भेदत्वेन संसारदशायामात्मा न भासते, तथा चिद्रूपेण आत्मनि प्रकाशमानेऽपि अपरिच्छिन्नानन्दब्रह्मरूपेण न भासते, अविद्यावरणवशात् । तादृशानन्दाप्रकाशाय अविद्यारूपं प्रतिबन्धकमवश्यमङ्गीकर्तव्यम् । प्रतिबन्धिकाया अविद्याया अनङ्गीकारे अनवच्छिन्नानन्दाप्रकाशो नैव उपपद्यते । चैतन्यापरिच्छिन्नानन्दयोर्वस्तुगत्या एकत्वेऽपि चैतन्ये भासमानेऽपि तादृशानन्दस्य अभानात् तयोराविद्यकभेदोऽङ्गी-क्रियते । अनङ्गीकारेऽपि न दोषः, यतः वेदान्तमहावाक्यजन्याखण्डाकार-प्रमावृत्तिरेव ब्रह्मावरकाज्ञानविरोधिनी । तस्याः प्रमावृत्तेरभावकाले संसारदशायां स्वप्रकाशशुद्धचैतन्ये अज्ञानं तिष्ठति । शुद्धचैतन्यम् अज्ञानसाधकमेव न बाधकम् । अतः अज्ञानप्रतिबन्धादेव चिद्रूपेण आत्मनि भासमानेऽपि अपरिच्छिन्ना-नन्दरूपेण आत्मा न भासते इति ।

अज्ञानभिन्नस्य भ्रमोपादानत्वासम्भवात् भ्रमस्य सोपादानत्वान्यथानुपपत्तिरपि अविद्यायां प्रमाणमित्याह—**भ्रमस्य सोपादानत्वान्यथानुपपत्तिरपि अवि-द्यायां प्रमाणम्** । अध्यासभाष्ये मिथ्याऽज्ञाननिमित्तः सत्यानृते मिथुनी-कृत्येत्युक्तम् । तद्विवरणावसरे पञ्चपाद्यां मिथ्या च तदज्ञानं च मिथ्याऽज्ञानं तन्निमित्तस्तदुपादान इत्यर्थ इत्युक्तम् [ पञ्चपादिका, पृ०, ४, काशीविजयनगर-संस्करणम् ] एतद्व्याख्यानावसरे विवरणे—ननु कथं मिथ्याऽज्ञानम् अध्या-सोपादानम् ? तस्मिन् सति अध्यासस्योदयाद्सति चानुदयादिति ब्रूमः इत्यादि... मिथ्याऽज्ञानमेवाध्यासोपादानं न आत्मान्तःकरणकाचादिदोषा इति सूक्तमित्युक्तम् [विवरणम्, पृ०, ६१।१२, काशीविजयनगर सं०] । एतद्विवरणीयसिद्धान्तमा-कलय्याह— **भ्रमस्य सोपादानत्वान्यथानुपपत्तिरिति** । विवरणमतमनुसृत्यैव भ्रमोपादानत्वमज्ञानस्य द्वितीयलक्षणमुक्तं प्राक्; सिद्धान्तिमते भ्रमात्मकाध्यासस्य विषयज्ञानोभयरूपतया अध्यासो भावकार्यम् 'साद्यध्यासमात्रमेव भावकार्यं भावकार्यस्य च उपादानजन्यतया सोपादानत्वम्' । भावकार्यस्य निरुपादानत्वानु-पपत्तेः अध्यासस्य उपादानापेक्षायाम् अन्यस्यासम्भवाद् अविद्यैवोपादानम् । अविद्याया अनङ्गीकारे अध्यासस्य सोपादानत्वानुपपत्तिः । अध्यासस्य सोपादानत्वा-न्यथानुपपत्त्या अविद्या सिध्यतीति अर्थापत्तिरपि अविद्यायां प्रमाणमिति भावः ॥२॥

न चान्तःकरणमुपादानम्; अन्तःकरणस्य ज्ञानजनने प्रमाणव्यापारसापेक्षत्वेन प्रमाणाविषये शुक्तिरूप्यादौ ज्ञानाजनकत्वात्, सादित्वेनानादिभ्रमपरम्परानुपादानत्वाच्च। न च ब्रह्मैवोपादानम्; तस्यापरिणामित्वात्। न च विवर्ताधिष्ठानत्वेन शुक्त्यादेरिवोपादानत्वम्; अविद्यामन्तरेणातात्त्विकान्यथाभावलक्षणस्य विवर्तस्यैवासम्भवात्, शुक्त्यादेरधिष्ठानावच्छेदकतया विवर्ताधिष्ठानत्वाभावात्॥३॥

---

३—अस्यामर्थापत्तौ अन्यथोपपत्तिमाशंक्य परिहरति—न च अन्तःकरणमुपादानम्। अन्तःकरणस्य ज्ञानजनने प्रमाणव्यापारसापेक्षत्वेन प्रमाणाविषये शुक्तिरजतादौ ज्ञानाजनकत्वात्। सादित्वेन अनादिभ्रमपरम्परानुपादनत्वाच्च। न च ब्रह्मैवोपादानं तस्य अपरिणामित्वात्। न च विवर्ताधिष्ठानत्वेन शुक्त्यादेरिव उपादानत्वम् अविद्यामन्तरेण अतात्त्विकान्यथाभावलक्षणस्य विवर्तस्यैवासम्भवात्। शुक्त्यादेरधिष्ठानतावच्छेदकतया विवर्ताधिष्ठानत्वाभावात्। अध्यासस्य ज्ञानविषयोभयात्मकतया ज्ञानांशस्य उपादानम् अन्तःकरणं प्रसिद्धमेव न तदर्थम् अविद्या अपेक्ष्यते। असत्ख्यातिमते भ्रमज्ञानस्य विषयोऽसन्नेव शशविषाणादिवन्निरुपादान इति न विषयस्य उपादानायापि अविद्याया अपेक्षेति अन्यथैवोपपत्त्या न प्रदर्शिता अन्यथानुपपत्तिः अविद्यायां प्रमाणमिति पूर्वपक्षी शंकते—न च अन्तःकरणमुपादानमिति। विवरणोक्त्या समाधत्ते—उक्तञ्च विवरणे अन्तःकरणस्य इन्द्रियसंयोगादिसापेक्षत्वात् मिथ्यार्थे च प्रत्ययमात्रविपरिवर्त्तिनि तदयोगात् अधिष्ठानज्ञानेन अन्यथासिद्धत्वाच्च तदन्वयव्यतिरेकयोरन्तःकरणस्य जडत्वाद् अज्ञातृत्वात् आत्मनोऽभ्रान्तत्वप्रसङ्गाच्च। [विवरणम्, पृ०, १२, विजयनगरसं०] "परतन्त्रं वहिर्मनः" इति मण्डनोक्त्या चक्षुरादिप्रमाणव्यापाराधीनम् अन्तःकरणस्य ज्ञानजननम् मनस्तु प्रमाणव्यापारनिरपेक्षं ज्ञानं जनयितुं नार्हति, अन्यथा अन्धवधिराद्यभावप्रसङ्गादिति। अतः सुखादिज्ञानमपि न मानसं किन्तु साक्षिरूपमेवेति सिद्धान्तः। मिथ्याज्ञानविषये शुक्तिरजतादौ प्रातिभासिके इन्द्रियसन्निकर्षायोग्ये अतः प्रमाणाविषये अन्तःकरणं न ज्ञानं जनयितुमर्हति इति न भ्रमज्ञानम् अन्तःकरणोपादानकम्, किन्तु अविद्योपादानक-

न च—उपादानापेक्षस्य विवर्तस्य तात्त्विकातिरिक्तोपादानकल्पनवदविद्यादेराश्रयसापेक्षस्य ब्रह्मातिरिक्तमतात्त्विकमधिकरणं कल्प्यं

---

मेवेति भावः। तुष्यतु दुर्जनन्यायेनाह—सादित्वेनेति। अन्तःकरणस्य भ्रमोपादानत्वाङ्गीकारेऽपि अन्तःकरणस्य उत्पत्तिश्रुत्या सादित्वेन अनादिभ्रमपरम्पराया अनुपादानत्वाच्च। रजतादीनां चाक्षुषभ्रमे प्रातिभासिकरजतादिभिश्चक्षुषोऽसन्निकर्षाद् असन्निकृष्टविषयकं ज्ञानं कथमपि इन्द्रियजन्यं न भवितुमर्हति। ये तु रजतादिभ्रमस्य चाक्षुषत्वोपपत्तये रजतादिसंस्कारज्ञानदोषादीनां सन्निकर्षत्वमङ्गीकुर्वन्ति तेषां मतमप्यसङ्गतम्। द्रव्यविषयकचाक्षुषज्ञाने क्लृप्तकारणं चक्षुर्द्रव्यसंयोगः, क्लृप्तकारणाभावे कुकल्पितकारणसहस्रसत्त्वेऽपि कार्यानुदयात् पूर्वपक्षी शंकते—सर्वोपादानं ब्रह्मैव भ्रमस्य उपादानमस्तु कृतम् अविद्ययेति न वाच्यं ब्रह्मणोऽपरिणामित्वेन उपादानत्वाभावात्। न च यथा रजतादिविवर्ताधिष्ठानत्वं शुक्त्यादीनाम् एवं ब्रह्मणोऽपि अधिष्ठानत्वरूपोपादानत्वं स्यादिति वाच्यम् अतात्त्विकान्यथाभावो हि विवर्तः। अविद्यायाः अस्वीकारे ब्रह्मणोऽतात्त्विकान्यथाभावरूपविवर्त एव न सम्भवति। अतात्त्विकान्यथाभावमात्रमविद्यायत्तम्। यदुक्तं शुक्त्यादीनामिव ब्रह्मणोऽधिष्ठानत्वं स्यादिति तन्न, शुक्त्याद्यवच्छिन्नचैतन्यस्यैव अधिष्ठानत्वात्, न शुक्त्यादेरधिष्ठानत्वम्; चिन्निष्ठाधिष्ठानताया अवच्छेदकत्वं शुक्त्यादीनामिति भावः। शुक्त्यादिरधिष्ठानतावच्छेदक एव न अधिष्ठानम् इति। यच्चोक्तं भ्रमविषयस्य अत्यन्तासत्त्वादेव न तस्य उपादानापेक्षेति तदसत्, अत्यन्तासतो वन्ध्यापुत्रादेरिव भ्रमविषयः शुक्तिरजतादिः प्रत्यक्षतया न भासेत, भासते च इदं रजतमिति प्रत्यक्षतया। अत्यन्तासत्त्वे सत्त्वेन न प्रतीयेत प्रतीयते च इदं रजतं सदिति। अतो भ्रमविषयो नासन्निति ॥३॥

४—विवर्तस्य उपादानापेक्षायां यथा तात्त्विकोपादानातिरिक्तम् अतात्त्विकमुपादानं कल्प्यते एवं अविद्यादेरधिकरणापेक्षायां तात्त्विकाधिकरणातिरिक्तम् अतात्त्विकमधिकरणमपि कल्प्यतामिति पूर्वपक्षिशंकामुपस्थाप्य समाधत्ते—न च उपादानापेक्षस्य विवर्तस्य तात्त्विकातिरिक्तोपादानकल्पनवदविद्यादेराश्रयसापेक्षस्य ब्रह्मातिरिक्तम् अतात्त्विकमधिकरणं कल्प्यं स्यादिति

स्यादिति—वाच्यम्; ब्रह्मण एव विकारित्वे अनित्यत्वादिप्रसक्तिवत् ब्रह्मण एवाधिष्ठानत्वे बाधकाभावेन द्वितीयस्याधिकरणस्याकल्पनात्। न च—असत्यस्य सत्यरूपान्तरापत्तिलक्षणपरिणाम्यनपेक्षत्वेन परिणामित्वेनापि नाविद्याकल्पनमिति—वाच्यम्; परिणामिसत्तासमानसत्ताकत्वनियमेनासत्यत्वस्यैवाभावात् ॥४॥

---

वाच्यम्। ब्रह्मण एव विकारित्वे अनित्यत्वंप्रसक्तिवत् ब्रह्मण एव अधिष्ठानत्वे बाधकाभावेन द्वितीयस्याधिकरणस्य अकल्पनात्। विवर्तस्य यथा सत्यब्रह्मातिरिक्तम् मिथ्या अज्ञानं विवर्तोपादानत्वेन कल्प्यते तथा आश्रयसापेक्षाविद्यादेः ब्रह्मातिरिक्तं मिथ्याश्रयान्तरम् अपि कल्प्यताम्। इति पूर्वपक्षे प्राप्ते सिद्धान्तमाह—ब्रह्म न विवर्तस्य परिणाम्युपादानं सम्भवति ब्रह्मणो निर्विकारत्वाद् ब्रह्मणो विकारित्वे तस्य अनित्यतापत्तिः। विकारिवस्तुमात्रमनित्यमिति ब्रह्मणोऽविद्याद्यधिष्ठानत्वेन विकारित्वापत्तिरित्यविद्याद्यधिष्ठानत्वाय ब्रह्मातिरिक्तं नाश्रयान्तरमपेक्ष्यते। अविद्याश्रयत्वं ब्रह्मणः अविद्याद्यधिष्ठानत्वमेव इति भावः।

सत्यरूपान्तरापत्तिरेव परिणामः विवर्तस्य असत्यतया परिणाम्युपादानापेक्षैव नास्तीत्याशंक्य समाधत्ते—न च असत्यस्य सत्यरूपान्तरापत्तिलक्षणपरिणाम्यनपेक्षत्वेन परिणामित्वेनापि नाविद्याकल्पनमिति वाच्यम्। परिणामिसत्तासमानसत्ताकत्वनियमेन असत्यत्वस्यैवाभावात्। असत्ख्यातिवादित्वेन पूर्वपक्षिमते असतो विवर्तस्य परिणाम्युपादानापेक्षैव नास्ति; सत्यरूपान्तरापत्तिरेव परिणामः असन् विवर्तो न कस्यचित् परिणामः। अतो विवर्तस्य परिणाम्युपादानतया नाविद्यायाः सिद्धिरिति। समाधत्ते—नोक्तलक्षणः परिणामः किन्तु परिणामिसमानसत्ताकरूपान्तरापत्तिरेव परिणामः; यथा घटादयः मृदादिसमानसत्ताकतया मृदादेः परिणामा उच्यन्ते। परिणामस्य परिणामिसमानसत्ताकतया न परिणाम्यपेक्षया परिणामोऽसत्यो भवितुमर्हति। परिणामपरिणामिनोर्द्वयोः समानसत्ताकत्वात्; अतः परिणाम्युपादानाविद्याम् अपेक्ष्य विवर्तो न असत्यः। सत्याधिष्ठानमपेक्ष्यैव विवर्तस्य मिथ्यात्वं व्यवह्रियते ॥४॥

न च—घटादौ स्वसमानसत्ताकोपादानकत्वदर्शनेन प्रपञ्चेऽपि तादृशोपादानकल्पने घटादेः स्वाधिकसत्ताकोपादानानपेक्षत्ववत् वियदादेरपि ब्रह्मानुपादानकत्वं स्यादिति—वाच्यम्; 'तदभिध्यानादेव तु तल्लिङ्गात्सः' इत्यनेन न्यायेन घटादेरपि मृदवस्थचैतन्योपादानकतया तादृशोपादानानपेक्षत्वासिद्धेः ।

अत एव—रूप्येऽपि स्वसमानसत्ताकस्य निमित्तस्यापि कल्पनापत्तिरिति—निरस्तम्; निमित्तमात्रे वा इयं कल्पना, विशेषे वा । नाद्यः; अधिष्ठानरूपनिमित्तस्य सर्वत्राधिकसत्ताकत्वात् । द्वितीये तूत्तरोत्तरभ्रमे पूर्वपूर्वभ्रमस्य निमित्तत्वेनेष्टापत्तेः ॥५॥

---

५—भावकार्यमात्रस्य स्वसमानसत्ताकोपादानकत्वनियमात् वियदादिभावकार्यस्य स्वाधिकसत्ताकोपादानकत्वासम्भवात् ब्रह्मणो जगदुपादानत्वं न स्यात् । तथा च श्रुतिसूत्रविरोध इति पूर्वपक्षिमतमाशंक्य समाधत्ते—न च घटादौ स्वसमानसत्ताकोपादानकत्वदर्शनेन प्रपञ्चेऽपि तादृशोपादानाकल्पने घटादेः स्वाधिकसत्ताकोपादानानपेक्षत्वात् वियदादेरपि ब्रह्मानुपादानकत्वं स्यादिति वाच्यम् । तदभिध्यानादेव तु तल्लिङ्गात् स इत्यनेन न्यायेन घटादेरपि मृदवस्थचैतन्योपादानकतया तादृशोपादानानपेक्षत्वासिद्धेः । अत एव रूप्येऽपि स्वसमानसत्ताकस्य निमित्तस्यापि कल्पनापत्तिरिति निरस्तम् । निमित्तमात्रे वा इयं कल्पना विशेषे वा । नाद्यः अधिष्ठानरूपनिमित्तस्य सर्वत्राधिकसत्ताकत्वात् । द्वितीये तु उत्तरोत्तरभ्रमे पूर्वपूर्वभ्रमस्य निमित्तत्वेनेष्टापत्तेः । यथा घटादिभावकार्यं स्वसमानसत्ताकमृत्तिकादिकमेव उपादानत्वेन अपेक्षते, घटादीनां मृदाद्युपादानकत्वदर्शनात्, मृदादीनां घटादिसमानसत्ताकत्वाच्च । घटादि न स्वाधिकसत्ताकम् उपादानत्वेन अपेक्षते, तथा वियदादिप्रपञ्चोऽपि स्वाधिकसत्ताकं ब्रह्म स्वोपादानत्वेन नापेक्षिष्यते । अतोऽद्वैतमते ब्रह्मणो जगदुपादानत्वं न सिध्यतीति पूर्वपक्षे प्राप्ते सिद्धान्तमाह—तदभिध्यानादेव तु इति । तदभिध्यानादेव तु तल्लिंगात् सः [ब्र० सू० २।३।१३] इति सूत्रसूचितन्यायेन स्वसमानसत्ताकोपादानकत्वनियमं निरस्यन् आह—घटादेरपि मृदवस्थचैतन्योपादानकतया स्वसमानसत्ताको-

न च—त्रिगुणात्मकं प्रधानमुपादानमिति—वाच्यम्; तस्यासत्यत्वे अविद्यानतिरेकात्। सत्यत्वेऽपि सावयवम्, निरवयवम् वा। आद्ये अनादित्वभङ्गः। द्वितीये परिणामित्वायोगो ब्रह्मवत्। न चाविद्यापक्षेऽपि समः पर्यनुयोगः; तस्याः काल्पनिकत्वेन पर्यनुयोगायोगात्। तस्मादर्थापत्तिरविद्यायां प्रमाणम् ॥६॥

इत्यद्वैतसिद्धावविद्यायामर्थापत्तिः ॥

---

पादानकत्वनियमाभावात्; उक्तञ्च भाष्ये—स एव परमेश्वरः तेन तेन आत्मनाऽवतिष्ठमानो अभिध्यायन् तं तं विकारं सृजतीति। तथा च पूर्वपक्षिप्रदर्शितः स्वसमानसत्ताकोपादानकत्वनियमोऽसिद्ध एव। घटादिकार्याणां स्वसमानसत्ताकनिमित्तकारणजन्यत्वदर्शनेन शुक्तिरजतादेरपि कार्यस्य स्वसमानसत्ताकनिमित्तकारणजन्यत्वं कल्पनीयम्; प्रातिभासिकनिमित्तकारणजन्यत्वकल्पने अपसिद्धान्तापत्तिरिति शंकायाः समाधानमाह—रूप्येऽपीति। शुक्तिरजतेऽपीत्यर्थः। पूर्वपक्षिणा किं कार्यस्य निमित्तकारणमात्रे अयं नियमोऽभ्युपगम्यते? अथ वा निमित्तकारणविशेषे? आद्यस्तु असिद्ध एव अद्वैतमते कार्यमात्रस्य अध्यस्ततया अध्यस्तम् अधिष्ठानमपेक्षते; अधिष्ठानं निमित्तकारणमेव, ब्रह्मण एव अधिष्ठानत्वात्। अतोऽधिष्ठानस्य ब्रह्मणो निमित्तकारणतया सर्वत्र कार्ये स्वाधिकसत्ताकनिमित्तकारणजन्यत्वस्य सत्त्वात् प्रथमः पक्षोऽसिद्ध एव। द्वितीयन्तु इष्टापत्त्या परिहरन्नाह—द्वितीये तु इति। उत्तरोत्तरभ्रमे पूर्वपूर्वभ्रमस्य संस्कारद्वारानिमित्तकारणत्वात् पूर्वोत्तरभ्रमयोः समानसत्ताकत्वात्, कुत्रचित् भ्रमे निमित्तकारणं कार्यसमानसत्ताकं भवत्येव इति द्वितीये पक्षे इष्टापत्तिरेव ॥५॥

६—निर्विकारब्रह्मणो जगदुपादानत्वसिद्धये अविद्या ब्रह्मण उपादानत्वनिर्वाहिका कल्प्यते इति सिद्धान्तिनो मतम् तन्न, श्रुतिर्न ब्रह्मण उपादानत्वमाह—किन्तु त्रिगुणात्मकप्रधानस्यैवं। अतो ब्रह्मण उपादानत्वप्रतिपादकश्रुतेरुपपत्तये न अविद्या कल्प्या इति पूर्वपक्षिमतमाशंक्य परिहरति—न च त्रिगुणात्मकं प्रधानमुपादानमिति वाच्यम्, तस्य असत्यत्वे अविद्यानतिरेकात्। सत्यत्वेऽपि सावयवं निरवयवं वा? आद्ये अनादित्वभङ्गः। द्वितीये परिणामित्वायोगो ब्रह्मवत्। न च अविद्यापक्षेऽपि समः पर्यनुयोगः। तस्याः

काल्पनिकत्वेन पर्यनुयोगायोगात्। तस्मादर्थापत्तिः अविद्यायां प्रमाणम्।

इत्यद्वैतसिद्धौ अविद्यायामर्थापत्तिः।

श्रुतिर्न निर्विकारब्रह्मणो जगदुपादानत्वं प्रतिपादयति; किन्तु त्रिगुणात्मकसत्यप्रधानस्यैव जगदुपादानत्वं प्रतिपादयतीति पूर्वपक्ष्युक्तम् अयुक्तम्। कुत इति चेत्? तस्य प्रधानस्य असत्यत्वे अविद्यानतिरेकात् नाममात्रे विवादः स्यात्। अतः प्रधानस्य सत्यत्वं वाच्यम्। प्रधानस्य सत्यत्वे तत् सावयवं वा निरवयवं वा स्यात्? सावयवत्वे प्रधानस्य अनादित्वं न स्यात्, सावयवघटादेः सादित्वदर्शनात्। निरवयवत्वे परिणामित्वं न स्यात्, ब्रह्मवत्। यथा निरवयवं ब्रह्म न परिणमते एवं निरवयवं प्रधानमपि न परिणमेत। अविद्यायाः परिणाम्युपादानत्वपक्षेऽपि समानोऽयं दोष इति पूर्वपक्षिशंकायामाह—तस्याः काल्पनिकत्वेनेति। सत्यत्वं युक्तिविरुद्धत्वव्याप्यम्; सत्यञ्च युक्तिविरुद्धञ्चेति न सम्भवति, व्यापकविरुद्धोपलब्ध्या सत्यत्वहानात्। पूर्वपक्षिमते एव अयं दोषः प्रधानस्य सत्यत्वाङ्गीकारात्। सिद्धान्ते अविद्यायाः काल्पनिकत्वात् काल्पनिकत्वस्य युक्तिविरुद्धत्वव्याप्यत्वात्; व्यापकं युक्तिविरुद्धत्वं व्याप्यं काल्पनिकत्वं न व्याहन्तीत्यर्थः। अविद्या यदि युक्तिविरुद्धा न स्यात् काल्पनिकी न स्यात्; युक्तिविरुद्धत्वं काल्पनिकत्वव्यापकम्। अतो काल्पनिक्या अविद्यायाः युक्तिविरुद्धत्वं भूषणमेव न दूषणम्। अतः काल्पनिक्यामविद्यायां न पर्यनुयोगावकाश इति। तस्मात् प्रदर्शितार्थापत्तिद्वयम् अविद्यायां प्रमाणमेव। इति ॥६॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासि-
श्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां
बालबोधिन्यामविद्यायाम् अर्थापत्तिप्रमाणविवरणम्।

## अथाज्ञानवादे तत्प्रतीत्युपपत्तिः ।

सा चाविद्या साक्षिवेद्या, न तु शुद्धचित्प्रकाश्या । साक्षी चाविद्यावृत्तिप्रतिबिम्बितचैतन्यम् । तेन—निर्दोषचित्प्रकाश्यत्वेनाज्ञानस्य पारमार्थिकत्वापत्तिः, मोक्षेऽपि तत्प्रकाशापत्तिः, न च तदानीमविद्याया निवृत्तत्वात् प्रकाशाभावः; प्रतीतिमात्रशरीरस्य प्रतीत्यनुवृत्तौ निवृत्त्ययोगादित्यादिदोषानवकाशः । अत एवोच्यते राहुवत् स्वावृतचैतन्यप्रकाश्याऽविद्येति । न चैवं कदाचिदविद्याया अप्रतीत्यापत्तिः;

---

अविद्यायाः साक्षिवेद्यत्वनिरूपणम्

१—एवं किलात्र पूर्वपक्षिणा शंकितम्—यदद्वैतमते अविद्याया अप्रामाणिकत्वाद् अविद्यासिद्धये अनुमानादिप्रमाणोपन्यासोऽसंगत एव । प्रमाणैरविद्याया असिद्धिमुक्त्वा साक्षिसिद्धत्वमपि अविद्याया नास्तीत्युक्तं प्रकरणद्वयेन । सामान्यतोऽविद्यायां प्रमाणभंगं प्रथममुक्त्वा साक्षिणा अविद्यायाः प्रतीतिभंगप्रकरणं द्वितीयमुक्तम् । अद्वैतसिद्धौ एतत्प्रकरणद्वयखण्डनाय एकमेव प्रकरणमुक्तं खण्डनसौकर्याय प्रथमतो अस्मिन्नेव अविद्याप्रतीत्युपपत्तिप्रकरणे अविद्यायाः साक्षिसिद्धत्वमुपपाद्य अनन्तरम् अविद्यायां प्रमाणोपन्यासस्य प्रयोजनमुक्तम् । तथाप्यस्य एकस्य प्रकरणस्य भागद्वयम् अनायासेनैव प्रदर्शयितुं शक्यते । सा च अविद्या साक्षिवेद्या इत्यारभ्य—स्वस्या एव स्वभानोपाधित्वादित्यन्तम् एकं प्रकरणम् । ननु प्रमाणागम्यायां प्रमाणोपन्यासवैयर्थ्यमित्यारभ्य—तथा च असद्व्यावृत्त्युपनये प्रमाणानां चरितार्थत्वादित्यन्तं द्वितीयं प्रकरणम् । अस्य प्रकरणस्य विभज्योपन्यासे शिक्षार्थिनां बोधसौकर्यं स्यादिति । आदौ सिद्धान्ती अविद्यायाः साक्षिसिद्धत्वं प्रदर्शयति—सा च अविद्या साक्षिवेद्या न तु शुद्धचित्प्रकाश्या । साक्षी च अविद्यावृत्तिप्रतिबिम्बितं चैतन्यम् । तेन निर्दोषचित्प्रकाश्यत्वेन अज्ञानस्य पारमार्थिकत्वापत्तिः, मोक्षेऽपि तत्प्रकाशापत्तिः, न च तदानीमविद्याया निवृत्तत्वात् प्रकाशाभावः, प्रतीतिमात्रशरीरस्य प्रतीत्यनुवृत्तौ निवृत्त्ययोगात् इत्यादिदोषानवकाशः । अत एवोच्यते राहुवत् स्वावृतचैतन्यप्रकाशप्रकाश्या

इष्टापत्तेः, समाधौ तथाभ्युपगमात्। न चाविद्यावृत्तेर्दोषजन्यत्वादत्र कथमविद्यावृत्तिः ? अविद्याया एव दोषत्वात्। न च वृत्तेरपि वृत्त्यन्तर-प्रतिबिम्बितचिद्भास्यत्वे अनवस्था; स्वस्या एव स्वभानोपाधित्वात्।

---

अविद्येति। न चैवं कदाचिदविद्याया अप्रतीत्यापत्तिः। इष्टापत्तेः। समाधौ तथाभ्युपगमात्। न च अविद्यावृत्तेर्दोषजन्यत्वात् अत्र कथम-विद्यावृत्तिः अविद्याया एव दोषत्वात्। न च वृत्तेरपि वृत्त्यन्तरप्रति-बिम्बितचिद्भास्यत्वे अनवस्था स्वस्या एव स्वभानोपाधित्वात्। सा च अविद्या स्वरूपतः साक्षिमात्रवेद्या न प्रमाणवेद्या; अविद्यायाः साक्षिवेद्यत्वेऽपि न शुद्धचित्प्रकाश्यत्वम्। शुद्धचितः साक्षिणो वैलक्षण्यात्। वैलक्षण्यमेवाह—साक्षी च अविद्यावृत्तिप्रतिबिम्बितं चैतन्यमिति। यदाकाराविद्यावृत्तिप्रतिबिम्बितं यच्चैतन्यं तत् तस्य साक्षीत्यर्थः। अत एव सुखाकाराविद्यावृत्तिप्रतिबिम्बितं चैतन्यं सुखसाक्षीति भावः। अविद्यायाः शुद्धचिन्मात्रभास्यत्वे तस्याः पारमार्थिकत्वापत्तिः—स्यात्; शुद्धचितो निर्दोषत्वात् निर्दोषज्ञानवेद्यस्य पारमार्थिकत्वनियमात्। पूर्वपक्षिणा निर्दोषचित्प्रकाश्यत्वेन अज्ञानस्य पारमार्थिकत्वं यदा शंकितं तन्निरस्तम्। यच्च तेनैवाशंकितं मोक्षेऽपि अविद्यायाः प्रकाशापत्तिरिति तदपि निरस्तम्—अयं भावः—साक्षिभास्य-शुक्तिरजतादिवत् अविद्याया अपि साक्षिभास्यायाः प्रातिभासिकत्वमेव। प्राति-भासिकस्य यावत् प्रतिभासकालमात्रस्थायित्वेन अविद्याप्रतिभासे शुद्धचैतन्ये मोक्षदशास्थायिनि अविद्याप्रकाशोऽपि मोक्षे स्यात्; प्रतिभासे विद्यमाने प्राति-भासिकस्य प्रतिभासनियमात्। अविद्याकाराविद्यावृत्तिप्रतिबिम्बितचैतन्यस्य अविद्यासाक्षित्वेन इयमापत्तिरपि निरस्तेति भावः। अविद्यायाः साक्षिभास्यत्वेऽपि साक्षिभास्यसुखदुःखादिवत् व्यावहारिकत्वात्। शुक्तिरजतादीनां न साक्षिभास्यत्वेन प्रातिभासिकत्वम्। किन्तु आगन्तुकदोषजन्यत्वेन। अविद्याकाराविद्यावृत्तेरागन्तुक-दोषजन्यत्वाभावात् तद्विषयाविद्याया न प्रातिभासिकत्वं किन्तु व्यावहारिकत्वमेव। अत एव मोक्षे अविद्यायाः अभावात् न तदा अविद्याप्रतीत्यापातः इति सिद्धान्तिना न वाच्यम्। प्रतीतिमात्रशरीरस्य प्रातिभासिकस्य अज्ञानस्य शुद्धचैतन्यरूपसाक्षिप्रकाश[श्य]स्य मोक्षेऽनुवृत्तौ अज्ञानस्य निवृत्त्ययोगादिति

पूर्वपक्ष्युक्तं निरस्तम् । यतः शुद्धचैतन्यं न साक्षीति भावः । अत एव सिद्धान्तिभिर्यदुच्यते—अविद्या राहुवत् । अविद्यावृतचैतन्यप्रकाश्येति तदपि युक्तम् । यतोऽविद्या न शुद्धचैतन्यप्रकाश्या । शुद्धचैतन्याप्रकाश्यत्वप्रतिपादनाय एव सिद्धान्तिभिस्तथोक्तमिति भावः । न च अविद्याया अविद्याकाराविद्यावृत्तिप्रतिबिम्बितचित्प्रकाश्यत्वे अविद्यावृत्तेः कादाचित्कत्वाद् अविद्यावृत्तेरभावदशायां विद्यमानाया एव अविद्याया अप्रतीत्यापातः इष्टापत्तेः । अविद्यावृत्तेरभावदशायाम् अविद्याया अप्रतीतिरिष्टैवास्माकम् । यतः समाधिदशायाम् अविद्याकाराविद्यावृत्तेरनुदयात् समाधौ अविद्या न प्रतीयते । अन्यथा समाधितो व्युत्थाने 'एतावन्तं कालं गूढोऽहमासम्' इति परामर्शः स्यात्; यथा सुप्तोत्थितस्य तदभावात् समाधौ अविद्या न प्रतीयते । काचित्काविद्यावृत्तेस्तदानीमभावात् । पूर्वपक्षी शंकते—अविद्यावृत्तिमात्रस्य दोषजन्यत्वात् संसारदशायां सर्वदा अविद्यावृत्तिः कथमुत्पद्येत इति पूर्वपक्षिणा न वाच्यम् । यतो अविद्याया एव दोषत्वात्, अविद्यैव अविद्यात्वेन वृत्तेरुपादानं दोषत्वेन च निमित्तकारणम्; एकस्य निमित्तोपादानात्वयोरविरोधात् । परमते सुखादौ तथादर्शनात् आत्मैव आत्मत्वेन सुखादेः समवायिकारणम् अदृष्टवत्त्वेन च निमित्तकारणम् । सिद्धान्ते च ब्रह्मण एव अभिन्ननिमित्तोपादानत्वात् । दोषत्वेन अविद्याया निमित्तत्वेऽपि अविद्याया अनागन्तुकत्वेन अविद्यावृत्तेर्न प्रातिभासिकत्वम्, किन्तु अविद्यावद् व्यावहारिकत्वमेव । न च स्वाकाराविद्यावृत्तिप्रतिबिम्बितचैतन्यं यदि स्वस्य साक्षी तर्हि वृत्तेः साक्षी वृत्त्याकारवृत्तिप्रतिबिम्बितचैतन्यमेव वाच्यम् । एवञ्च वृत्तिपरम्पराभ्युपगमे अनवस्था स्यादिति वाच्यम्, वृत्तिभाने वृत्तेरेवोपाधित्वात् । एकैवाविद्यावृत्तिः अविद्याभाने अविद्यावृत्तिभाने च उपाधिः स्वस्यावृत्तेः स्वपरनिर्वाहकत्वादिति भावः ।

अविद्याया साक्षिवेद्यत्वनिरूपणं समाप्तम् ।

अविद्यायां प्रमाणोपन्यासे प्रयोजनम् ।

अविद्याया अविद्यात्वे इदमेव तु लक्षणम् ।
मानापाताऽसहिष्णुत्वमसाधारणमिष्यते ॥

[सम्बन्धवार्तिकम्, ५७ श्लो०]

ननु—प्रमाणागम्यायामविद्यायां प्रमाणोपन्यासवैयर्थ्यम्, न च—प्रमाणैरसद्व्यावृत्तिमात्रं बोध्यत इति—वाच्यम्; अज्ञानमगृह्णतां तत्रासद्व्यावृत्तिबोधेऽप्यसामर्थ्यादिति—चेन्न; प्रमाणोपनीतासद्व्यावृत्तिवि-

---

इति सुरेश्वरवार्तिकात् अविद्याप्रमाणागम्यैव; प्रमाणागम्यायां प्रमाणोपन्यासो व्यर्थ एव इति पूर्वपक्षी शंकते—ननु प्रमाणागम्यायाम् अविद्यायां प्रमाणोपन्यासवैयर्थ्यम् । अतिरोहितमेतत् । अत्र च साक्षिवेद्यस्याज्ञानस्य प्रमाणैरभावव्यावृत्तिः प्रदर्श्यते इति न तस्य प्रमाणवेद्यत्वप्रसंगः इति [विवरणम्, पृ०, ४२ काशीविजयनगरसं०] विवरणवाक्यमनुसृत्य शंकते—न च प्रमाणैरसद्व्यावृत्तिमात्रं बोध्यते इति वाच्यम् । अज्ञानस्वरूपं साक्षिमात्रसिद्धम् न प्रमाणसिद्धम् । उक्तञ्चाद्वैतदीपिकायां नृसिंहाश्रमश्रीचरणैः—येन विना यस्य असत्त्वशंका न निवर्तते सति च तस्मिन् निवर्तते तत् तस्मिन् प्रमाणम् यथा रूपे चक्षुः धर्मब्रह्मणोर्वेदः । अन्यथा अतिप्रसंगात् । अज्ञानस्य च असत्त्वशंका अहमज्ञ इत्यादिसाक्षिप्रत्यक्षेणैव निवर्तते इति प्रत्यक्षमेव साक्ष्यात्मकं तत्र प्रमाणं नानुमानादि; तेन विनापि तन्निवृत्तेः । [अद्वैतदीपिका, पृ०, ४०४ काशीविजयनगरसं०] विवृतञ्चैतत् नारायणाश्रमश्रीचरणैः—प्रमागोचरस्य प्रामाणिकत्वनियममभ्युपेत्यापि अनुमानादेरज्ञानांशे न प्रामाण्यमित्यभिप्रेत्य तत्प्रयोजकमाह येनेति । तत्रैवान्यदप्युक्तम्—आचार्यास्तु [विवरणाचार्याः] व्यावहारिकमप्यज्ञानं साक्षिमात्रप्रमेयम् अनुमानादिभिस्तु न तत्स्वरूपसिद्धिः किन्तु तस्य अभावव्यावृत्यादि बोध्यत इत्याहुः । [अद्वैतदी०, पृ०, ४००] तट्टीकायाम् अनादित्वज्ञाननिवर्त्यत्वे अभावव्यावृत्त्यादीत्यादिपदार्थ इति मूले असद्व्यावृत्तिरभावव्यावृत्तिरित्यर्थः । साक्षिसिद्धत्वेनैव अज्ञाने असद्व्यावृत्तिसिद्धेरिति भावः । अज्ञाने वादिभ्रान्तिप्रसक्ताभावरूपताव्यावृत्तये अज्ञाने प्रामाण्योपन्यासः । अज्ञानस्वरूपमगृह्णता प्रमाणेन तत्र अभावव्यावृत्तिरपि बोधयितुं न शक्यते इत्याह पूर्वपक्षी—अज्ञानमगृह्णतां तत्रासद्व्यावृत्तिबोधेऽपि असामर्थ्यादिति चेत् । प्रमाणेन यत्राज्ञाने अभावव्यावृत्तिर्बोध्यते तदज्ञानं यदि प्रमाणेन अगृहीतं स्यात् तदा कुत्राभावव्यावृत्तिर्बोध्यते इति शंकार्थः ।

प्रमाणविषयीभूतासद्व्यावृत्तिविशिष्टाज्ञानं साक्षिणा गृह्यते इत्याह सिद्धान्ती

शिष्टाज्ञानं हि साक्षिणा गृह्यते । तथा चासद्व्यावृत्त्युपनयने प्रमाणानां चरितार्थत्वात् न काप्यनुपपत्तिः ॥१॥

इत्यद्वैतसिद्धावविद्याप्रतीत्युपपत्तिः ॥

---

—न प्रमाणोपनीतासद्व्यावृत्तिविशिष्टाज्ञानं हि साक्षिणा गृह्यते तथा च असद्व्यावृत्त्युपनयेन प्रमाणानां चरितार्थत्वात् न काप्यनुपपत्तिः ।

इत्यद्वैतसिद्धौ अविद्याप्रतीत्युपपत्तिः ।

अज्ञानस्वरूपग्रहणे प्रमाणमसमर्थमिति अज्ञानस्वरूपे अभावव्यावृत्तिबोधेऽपि असमर्थमिति न युक्तम्, चक्षुर्मात्रवेद्ये रूपे गुणत्वमनुमानेन गृह्यते । अतोऽज्ञानस्य यद्रूपं साक्षिणा गृह्यते न तदनुमानादिना । अनुमानादिना यद्रूपं गृह्यते न तत् साक्षिणा इति । तथा च असद्व्यावृत्तिविशिष्टरूपेण प्रमाणगम्यमप्यज्ञानं सविषयकत्वादिरूपेण साक्षिमात्रवेद्यमेव । सविषयकत्वादिरूपेण साक्षिमात्रवेद्यमज्ञानस्वरूपम् अज्ञानासम्बन्ध्यपि अभावव्यावृत्तिविशिष्टरूपेण अज्ञानम् अज्ञानसम्बन्धि भवति । यद्रूपेण अज्ञानसम्बन्धोऽज्ञाने तदज्ञाननिवृत्तये अनुमादीनामपेक्षा । मूले प्रमाणोपनीतासद्व्यावृत्तिविशिष्टाज्ञानम् इत्यस्य असद्व्यावृत्तिविशिष्टरूपेण अज्ञानं प्रमाणविषयीभूतमर्थः । उपनीतपदस्य विषयीभूतत्वमर्थः, न तु उपनयसन्निकर्षेण उपनीतत्वमर्थः; उपनयसन्निकर्षस्यैव निरस्तत्वात् । साक्षिणा यदज्ञानस्वरूपं गृह्यते अभावव्यावृत्तिविशिष्टरूपेण तदेवानुमानादिना गृह्यते । विशिष्टाकारज्ञाने विशेष्यस्य विशिष्टरूपेण भाननियमेऽपि प्रकृते विशिष्टस्य अज्ञातत्वेन अज्ञाननिवृत्तिरूपप्रमाणफलवत्त्वात् तत्रैव विशिष्टरूपे प्रमेयता न शुद्धरूपे । शुद्धरूपस्य साक्षिसिद्धत्वात्, न पूर्वपक्षिप्रदर्शितानुपपत्तिरिति भावः ।

एषैव शंका अद्वैतदीपिकायामुद्धृत्य वक्ष्यमाणरीत्या निरस्ता—"न च अनुमानादिप्रमाणस्य अज्ञानस्वरूपाविषयत्वे कथं ततो अभावव्यावृत्तिः प्रतीयते, तद्विषयत्वे वा कथमज्ञानस्य प्रमाणागोचरत्वमिति वाच्यम् । भ्रमविषयस्य रूप्यादेरनुव्यवसायप्रमाणगम्यत्वेऽपि अप्रामाणिकत्ववत् अज्ञानस्य अप्रामाणिकत्वाविरोधादिति केचित् । रजतस्य "इदं रजतं न" इति प्रमाणविषयत्वेऽपि अप्रमाणिकत्ववत् अज्ञानेऽपि" तथात्वमित्यपरे । विवृतञ्च नारायणाश्रमचरणैः—ननूक्तप्रमाणैर-

भावव्यावृत्तिमत्तया अज्ञानमपि प्रतीयते न वा, अन्त्ये तस्य नाभावव्यावृत्ति-सिद्धिः । आद्ये अज्ञानस्य प्रामाणिकत्वापातः । इत्यपि न वाच्यम् इत्याह—अनुमानादीति । तत्राद्यं पक्षमङ्गीकृत्य अनुमानादेः साक्षिसिद्धाज्ञानस्वरूपांशेऽनधिगतार्थताऽभावात् न तत्र प्रामाण्यमिति केषाञ्चित् परिहारमाह—भ्रमेति । अज्ञानस्य प्रमाणजन्यप्रतीतिविषयत्वमात्रेण प्रामाणिकत्वमापादयितुं न शक्यते व्यभिचारादित्यपरेषां परिहारमाह—रजतस्येति ॥१॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासि-
श्रीयोगेन्द्रनाथदेवशर्मविरचितायां अद्वैतसिद्धिटीकायाम्
बालबोधिन्यामविद्याप्रतीत्युपपत्तिविवरणम् ।

## अथाज्ञानवादेऽविद्यायाः चिन्मात्राश्रयत्वोपपत्तिः ।

अविद्यया आश्रयस्तु शुद्धं ब्रह्मैव । तदुक्तम्—

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः" ॥ इति

दर्पणस्थ मुखमात्रसम्बन्धेऽपि प्रतिमुखे मालिन्यवत् प्रतिबिम्बे जीवे संसारः, न बिम्बे ब्रह्मणि; उपाधेः प्रतिबिम्बपक्ष पातित्वात् ।

---

१—उक्तं विवरणे—नन्वविद्या किं सम्बन्धिनी भेदनिमित्तम् ? ननु दर्पणादिद्रव्यं वा किं सम्बन्धिबिम्बभेदनिमित्तम्, मुखमात्रसम्बन्धीति चेत्, इहापि चित्स्वरूपमात्रसम्बन्ध्यज्ञानं तत्र जीवब्रह्मव्यवहारभेदं प्रवर्तयतीति । [विवरणम्, पृ०, ४९, विजयनगर सं०] । प्रदर्शितविवरणवाक्यात् चिन्मात्रसम्बन्धिनी अविद्येति प्रतीयते ।

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो, नाश्रयो भवति नापि गोचरः ॥
[संक्षेपशा०, १।३१९ श्लो०] इति

संक्षेपशारीरकपद्यादपि शुद्धचिन्मात्रसम्बन्धिन्येवाविद्येति प्रतीयते । अनाद्यविद्यायाः कश्चनानादिरेवाश्रयो भवितुमर्हतीति शुद्धं चैतन्यं वा ईश्वरचैतन्यं वा जीवचैतन्यं वा अनादित्वेन आश्रयो भवितुमर्हतीति त्रिष्वपि पक्षेषु प्रथमतः शुद्धचैतन्याश्रितत्वमविद्याया उपपादयितुं इदं प्रकरणमारभ्यते । अन्ययोरपि पक्षयोरुपपादनम् अग्रे भविष्यति । अयं प्रथमः पक्षः विवरणसंक्षेपशारीरककारसम्मतः । अन्यौ पक्षौ अन्याचार्यसम्मतौ, तद् यथास्थानं निवेदयिष्यते । मूलाविद्याया एव आश्रयनिरूपणाय इदं प्रकरणमारब्धमिति बोध्यम् । सिद्धान्ताभिधानमुखेन प्रकरणमवतारयति—अविद्याया 'आश्रयस्तु शुद्धं ब्रह्मैव । तदुक्तम्—

"आश्रयत्वविषयत्वभागिनी, निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो, नाश्रयो भवति नाऽपि गोचरः" ॥
[संक्षेपशा०, १।३१९ श्लोकम्]

ननु—कथं चैतन्यमज्ञानाश्रयः? तस्य प्रकाशस्वरूपत्वात्, तयोश्च तमः प्रकाशवद्विरुद्धस्वभावत्वादिति—चेत् .

---

दर्पणस्य मुखमात्रसम्बन्धेऽपि प्रतिमुखे मालिन्यवत् प्रतिबिम्बे जीवे संसारः न बिम्बे ब्रह्मणि उपाधेः प्रतिबिम्बपक्षपातित्वात्। विवरणसंक्षेपशारीरककारयोर्मतमनुसृत्य तद्वाक्यान्युपजीव्य सिद्धान्तं दर्शयति—शुद्धं ब्रह्मैव अविद्याया आश्रयः। तत्र संक्षेपशारीरकोक्तिः प्रमाणम्। संक्षेपशारीरकपद्यस्यायमर्थः—नन्वहमज्ञ इति जीवाश्रयं तदज्ञानमनुभूयते एवं विषयोऽपि ब्रह्म न जानामीत्यनुभवात् अज्ञानस्य विषयोऽपि ब्रह्मैव; तत् कथं पूर्वपद्ये चिति भवेत्तिमिरं तमिस्रमित्युक्तम्? तत्राह आश्रयत्वेति। अज्ञानस्य आश्रयत्वविषयत्वभागिनी निर्विभागा केवला चितिरेव इत्यर्थः। अज्ञानस्य आश्रयत्वं विषयत्वं च भजते इत्याश्रयत्वविषयत्वभागिनी। केवला अद्वितीयैव, अत एव निर्विभागा जीवेश्वरविभागरहिता। न चैवं प्रदर्शितानुभवविरोधः, तस्य अन्यथासिद्धत्वात् अन्यथा अन्योन्याश्रयः स्यात् इत्याशयेनाह—पूर्वसिद्धेति। स्वसत्ताप्रयोजकाज्ञानस्येत्यर्थः। हि हेतौ, यतो जीवेश्वरविभागसत्त्वप्रयोजकमज्ञानं ततः पश्चिमः अज्ञानप्रयोज्यो ब्रह्मविभक्तो जीवस्तदविभक्तं ब्रह्म च यथाक्रमं नाश्रयो भवति नापि गोचरः। यद्यपि जीवेश्वरविभागादिरनादिः, तथापि न वास्तवः मायिकस्तु सोऽद्वयब्रह्मानवभासदशायामेव भवतीति तदज्ञानाधीनसत्ताक एव। अज्ञानं तु स्वसत्तायां विभागादिसत्त्वं नापेक्षते इति न तत् प्रयोज्यम्। एवञ्च अनादिभूतोऽपि जीवब्रह्मविभागोऽज्ञानविकार एव। एतदभिप्रेत्य पूर्वसिद्धेत्याद्युक्तम्। ततश्च आत्मनि अज्ञानसत्त्वम् अज्ञानस्य विभक्तजीवे चैतन्याश्रयत्वं तदधीनं सत्त्वम् इत्यन्योन्याश्रयः। अहमज्ञ इत्यादिप्रतीतिस्तु अज्ञानाश्रयपूर्णचैतन्यस्यैव अहंकाराद्युपाधितया तत्रापि तत्सम्भवादुपपद्यते। अत एव एतदनुभवात् अहंकाराश्रयं ब्रह्मविषयं तदिति प्रत्युक्तम्। अज्ञानस्य केवलजडवृत्तित्वानुपपत्तेश्च। मुखमात्रं बिम्बत्वप्रतिबिम्बत्वाभ्याम् अनाक्रान्तमित्यर्थः, शुद्धमुखमिति यावत्। दर्पणादेर्मुखमात्रसम्बन्धात् बिम्बप्रतिबिम्बभावेन मुखं भिद्यते, उपाधिदर्पणादिगतमालिन्यकम्पत्वादि प्रतिबिम्बमुखे एव प्रतीयते न बिम्बमुखे इति यथा तथैव शुद्धचैतन्ये अनाद्यविद्योपाधिसम्बन्धात् जीवेश्वरभावेन

प्रतिबिम्वबिम्बभावेन शुद्धचैतन्यमपि भिद्यते यथा दर्पणादेर्मालिन्यादिप्रतिबिम्बे एव प्रतीयते तथैव उपाध्यविद्याकृतः संसारः प्रतिधिम्बे जीवे एव प्रतीयते न बिम्बे ईश्वरे। अत्र ब्रह्मपदम् ईश्वरपरम्। उपाधिकृतदोषः प्रतिबिम्बे एवेति कुतः इत्याह—उपाधेः प्रतिबिम्बपक्षपातित्वादिति उक्तश्च विवरणे कथं पुनः स्वरूपमात्रसम्बन्धिनोऽज्ञानस्य ब्रह्मस्वरूपं परिहृत्य जीवविभागैकपक्षपातिता, दर्पण-घटादेर्मुखाकाशभेदे हेतुतया मुखादिसंसर्गिणोऽपि बिम्बाकाशौ परिहृत्य प्रति-बिम्बघटाकाशादिपक्षपातित्वादिति वदामः [विवरणम्; पृ०, ४५ विजयनगरसं०]। उपाधेः प्रतिबिम्बे एव अतिशयकार्यकरत्वादिति भावः। एतच्च अग्रे स्फुटी-भविष्यति।

अविद्यायाः शुद्धचिदाश्रयत्वं दूषयितुं पूर्वपक्षिणा अविद्यायाः शुद्धचिदाश्रय-त्वे चत्वारि दूषणानि संजग्राह—

विरोधाद्धर्मिमानेन बाधात् श्रुतिविरोधतः।

भ्रान्त्यैकाधिकरण्याच्च नाज्ञानं शुद्धचिद्गतमिति॥ विरोधः, धर्मिग्राहक-मानबाधः, श्रुतिविरोधः, अज्ञानस्य भ्रान्तिज्ञानेन सामानाधिकरण्यमिति चत्वारि दूषणानि अविद्यायाः शुद्धचैतन्याश्रयत्वे आपतेयुरिति। एतेषां दूषणानां समाधान-मेवानेन प्रकरणेन भविष्यति। तत्रादौ विरोधं दूषणमुद्भावयति पूर्वपक्षी—ननु कथं तस्य प्रकाशस्वरूपत्वात् तयोश्च तमःप्रकाशवद् विरुद्धस्वभावत्वादिति चेत्। शुद्धं चैतन्यमज्ञानाश्रयः, इत्युक्ते ज्ञानमज्ञानाश्रयः, इत्युक्तं भवति। ज्ञानस्य प्रकाशरूपत्वात् अज्ञानस्य तद्विरुद्धस्वभावत्वात्। अतो विरुद्धस्वभावयोः कथ-माधाराधेयभाव इति। ज्ञानाज्ञानयोस्तमःप्रकाशवद्विरुद्धस्वभावात् नाधा-राधेयभाव इति। इष्टसिद्धौ अस्यैव पूर्वपक्षस्य उद्भावनसमाधाने दृश्येते—

"नन्वविद्या स्वयं ज्योतिरात्मानं ढौकते कथम्।
कूटस्थमद्वितीयञ्च सहस्रांशुं यथा तमः॥ इति
प्रसिद्धत्वादविद्यायाः सापह्नोतुं न शक्यते।
अनात्मनो न सा युक्ता विना नात्मा तया नहि॥

[इष्टसिद्धिः, १३६-१३७ श्लो०] दुरुद्धर इति मत्वा, भास्कररामानु-जादिभिरपि अयमेव पूर्वपक्षः प्रदर्शितः।

न; अज्ञानविरोधि ज्ञानं हि न चैतन्यमात्रम् किन्तु वृत्तिप्रतिबिम्बितम्; तच्च नाविद्याश्रयः, यच्चाविद्याश्रयः, तच्च नाज्ञानविरोधि ॥१॥

न च तर्हि शुद्धचितोऽज्ञानविरोधित्वाभावे घटादिवदप्रकाशत्वापत्तिः; वृत्त्यवच्छेदेन तस्या एवाज्ञानविरोधित्वात् । स्वतस्तृणतूलादिभासकस्य सौरालोकस्य सूर्यकान्तावच्छेदेन स्वभास्यतृणतूलादिदाहकत्ववत् स्वतोऽविद्यातत्कार्यभासकस्य चैतन्यस्य वृत्त्यवच्छेदेन तद्दाहकत्वात् ॥२॥

---

शुद्धचैतन्यमज्ञानसाधकमेव न बाधकम्, द्वयसापेक्षान्तःकरणवृत्तिप्रतिबिम्बितं चैतन्यमज्ञानविरोधि, न तदज्ञानस्याश्रय इति समाधत्ते सिद्धान्ती—

न अज्ञानविरोधिज्ञानं हि न चैतन्यमात्रं किन्तु वृत्तिप्रतिबिम्बितम् । तच्च नाविद्याश्रयः । यच्च अविद्याश्रयः तच्च नाज्ञानविरोधि । ज्ञानाज्ञानयोर्विरोधादित्यत्र कोऽयं विरोधः परस्परविरहरूपो वा बध्यघातक [भाव] रूपो वा ? नाद्यः, परस्परविरहरूपयोरपि घटतदभावयोराश्रयाश्रयिभावसत्त्वात् घटे घटात्यन्ताभाव इति प्रतीतेः सर्वसिद्धत्वात् । नापि द्वितीयः, तमःप्रकाशयोरपि वैशेषिकमते परस्परविरहरूपत्वात् । यदि मीमांसकमतमाश्रित्य तमसो भावरूपत्वमङ्गीक्रियेत तर्हि तमःप्रकाशयोर्बध्यघातक [भाव] लक्षणो विरोधः स्यात् । अतः प्रकाशे तमो नाश्रितम्, प्रकृते च अज्ञानशुद्धचैतन्ययोर्बध्यघातकभाव एव नास्तीति न विरोधः । शुद्धचैतन्यं नाज्ञानबाधकम् । किन्तु तदज्ञानसाधकमेव । अन्यथा अज्ञानस्य सिद्धिरेव न स्यादिति प्रागेवोक्तम् । प्रमाणजन्यान्तःकरणवृत्तिप्रतिबिम्बितं चैतन्यम् अज्ञानविरोधि, समानाश्रयविषयकज्ञानाज्ञानयोर्विरोधात्, अनाश्रयं निर्विषयकचिन्मात्रं कथमपि अज्ञानस्य विरोधि न भवितुमर्हतीति भावः । अन्तःकरणवृत्तिप्रतिबिम्बितं चैतन्यम् अज्ञानविरोधि किन्तु तन्न अज्ञानस्याश्रयः । अज्ञानस्य आश्रयस्तु शुद्धं चैतन्यम् । अतो यच्चचैतन्यम् अज्ञानविरोधि तन्न अज्ञानाश्रयः, यदज्ञानाश्रयः तन्नाज्ञानविरोधीति विरोधवार्त्तैव नास्ति ॥१॥

२—शुद्धचैतन्यस्य अज्ञानविरोधित्वाभावे शुद्धचैतन्यस्य घटादिवदप्रकाशः स्यादित्याशंक्य समाधत्ते—न च तर्हि शुद्धचितोऽज्ञानविरोधित्वाभावे

नंनु—अहमज्ञ इति धर्मिग्राहिकेण साक्षिण अहङ्काराश्रितत्वेनाज्ञानस्य ग्रहणात् बाधः।

---

घटादिवदप्रकाशत्वापत्तिः। वृत्त्यवच्छेदेन तस्या एवाज्ञानविरोधित्वात्। स्वतस्तृणतूलादिभासकस्य सौरालोकस्य सूर्यकान्तावच्छेदेन स्वभास्यतृणतूलादिदाहकत्ववत् स्वतोऽविद्यातत्कार्यभासकस्य चैतन्यस्य वृत्त्यवच्छेदेन तद्दाहकत्वात्। अज्ञानविरोधित्वादेव चैतन्यं घटादिजडविलक्षणम्, चैतन्यं यदि अज्ञानविरोधि न स्यात् जडं स्यादिति पूर्वपक्षे प्राप्ते आह सिद्धान्ती—चैतन्यं नाज्ञानविरोधीति नास्माकं सिद्धान्तः किन्तु शुद्धं चैतन्यं नाज्ञानविरोधीति। अन्यथा अज्ञानस्य सिद्धिरेव न स्यात्। अज्ञानस्वरूपं न प्रमाणेन सिध्यतीत्युक्तं प्राक्। प्रमाणसिद्धम् अज्ञानं यदि चैतन्येनापि न सिध्येत् सर्वथा असिद्धिरेवाज्ञानस्य स्यात्, ततोऽहमज्ञ इत्यादिप्रतीतिरेव न स्यात्। स्वतोऽविरोध्यपि चैतन्यं वृत्तिप्रतिबिम्बितं सत् अज्ञानविरोधीति न चैतन्यस्य जडत्वापत्तिः। किञ्च—

"तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत्।
सूर्यकान्तमुपारुह्य न्यायोऽयं योज्यतां धिया॥"

इति वार्तिकोक्तिमनुसृत्य सिद्धान्तरहस्यं दर्शयति—स्वतस्तृणतूलादिभासकस्येति। यथा सूर्यदीप्तिः तृणादेर्भासिका नाशिका च एवं चैतन्यमपि स्वतोऽविद्यातत्कार्याणां भासकं वृत्तिप्रतिबिम्बितं सत् अविद्यादीनां नाशकमपीति भावः॥२॥

३—इदमेव विरोधदूषणमवलम्ब्य रामानुजीयादीनां कण्ठकोलाहलः आचार्येण प्रशमितः। इदानीं धर्मिग्राहकमानेन बाधादिति द्वितीयं दूषणं समाधातुं पूर्वपक्षं दर्शयति—ननु अहमज्ञ इति धर्मिग्राहकेण साक्षिणा अहंकाराश्रितत्वेन अज्ञानस्य ग्रहणाद् बाधः। उक्तञ्च विवरणे "ननु अहमज्ञ इति प्रतिभास एव विशिष्टाश्रयत्वे प्रमाणमिति"[विवरणम्, पृ०, ४५, काशीविजयनगरसं०]अहंकारे धर्मिणि आश्रितत्वेन अज्ञानस्य साक्षिणा ग्रहणात् शुद्धचैतन्याश्रितत्वाङ्गीकारे इदं साक्षिप्रत्यक्षमेव बाधकं स्यात्। अथ वा अज्ञानस्वरूपं धर्मि साक्षिणैव गृह्यते, तच्च साक्षिप्रत्यक्षम् अहंकाराश्रितत्वेनैवाज्ञानं गृह्णातीति शुद्धचैतन्याश्रितत्वाङ्गीकारे

न च स्थौल्याश्रय देहैक्याध्यासादहं स्थूल इति वदज्ञानाश्रयंचिदैक्याध्यासात् दग्धृत्वायसोरेकाग्निसंबन्धा दयो दहती'ति वदज्ञानाहङ्कारयोरेकचिदैक्याध्यासाद्वा 'अहमज्ञ' इति धीर्भ्रान्तेति—वाच्यम्; चितोऽज्ञानाश्रयत्वासिद्ध्या अन्योन्याश्रयादिति—चेत्।

---

भवत्येव साक्षिप्रत्यक्षमेव बाधकम्। अत एव मण्डनादिमते जीवाश्रितमज्ञानं स्वीकृतम्। मण्डनादिमते अज्ञानस्य जीवाश्रितत्वेऽपि अहंकाराश्रितत्वं नाङ्गीकृतम्। अत्र पुनरयं विशेषः। अहमज्ञ इति प्रतीतेर्भ्रमत्वान्न अहमज्ञ इति प्रतीत्या अज्ञानस्य अहंकाराश्रितत्वासिद्धिरित्याह—न च स्थौल्याश्रयदेहैक्याध्यासादहं स्थूल इति वदज्ञानाश्रयचिदैक्याध्यासात् दग्धृत्वायसोरेकाग्निसम्बधादयो दहतीतिवदज्ञानाहंकारयोरेकचिदैक्याध्यासात् वा अहमज्ञ इति धीर्भ्रान्ता इति वाच्यम्। स्थौल्याश्रयदेहेन आत्मनो अभेदाध्यासात् देहधर्मः स्थौल्यं यथा आत्मधर्मत्वेन भासते, तथा अज्ञानाश्रयचैतन्ये अहंकारस्य ऐक्याध्यासात् चिद्धर्मोऽज्ञानम् अहंकारधर्मत्वेन भासते। तथा च अहमज्ञ इति प्रतीतिर्भ्रान्तिरेव। प्रकारान्तरेण अस्याः प्रतीतेर्भ्रमत्वमाह—दग्धृत्वायसोरिति। दग्धृत्वायसोरेकाग्निसम्बन्धात् अग्न्यन्तर्भावे तयोः सामानाधिकरण्यात् समानाधिकरण एको धर्मः अन्यस्मिन् आश्रिततया भासते; अतो अयो दहतीति प्रतीतिर्यथा भ्रान्तिरेव तथा अज्ञानाहंकारयोः एकस्मिन् चैतन्ये अध्यासात् अध्यस्तयोः समानाधिकरणयोः अज्ञानाहंकारयोः अहंकारे अज्ञानाश्रयत्वं प्रतीयते, अतः अहमज्ञ इति प्रतीतिर्भ्रान्तिरेव। एवञ्च भ्रान्तिर्न बाधिकेति भावः। मूले दृष्टान्तद्वयं मतभेदेन बोध्यम्—अज्ञानस्योपादानत्वपक्षे प्रथमो दृष्टान्तः। ब्रह्मण उपादानत्वपक्षे द्वितीयो दृष्टान्तः। एतद्दृष्टान्तद्वयं विवरणे एव प्रदर्शितम् [विवरणम्, पृ०, ४५, काशीविजयनगरसंस्करणम्]

अन्योन्याश्रयान्नेयं प्रतीतिर्भ्रान्तिरिति पूर्वपक्षी शंकते—चितोऽज्ञानाश्रयत्वासिद्ध्याऽन्योन्याश्रयादिति चेत्। शुद्धचितोऽज्ञानाश्रयत्वमद्याप्यसिद्धमेव। अतः शुद्धचितोऽनाश्रयत्वे सिद्धेऽहमज्ञ इति प्रतीतेर्भ्रमत्वं सिद्ध्यति। अहमज्ञ इति प्रतीतेर्भ्रमत्वसिद्धौ शुद्धचितोऽज्ञानाश्रयत्वं सिद्ध्यतीति अन्योन्याश्रयात् न अहमज्ञ इति प्रतीतेर्भ्रमत्वमिति भावः। प्रकारान्तरेण शुद्धचितो-

न, अहंकारस्याविद्याधीनत्वेन तदनाश्रयतया चित एवाज्ञानाश्रयत्वे सिद्धे 'अहमज्ञ' इति प्रतीतेरैक्याध्यासनिबन्धनत्वेन अबाधकत्वात् ॥३॥

न च—अविद्याश्रयत्वादेवाहङ्कारोऽकल्पितोऽस्तु, कल्पित एव वा तदाश्रयत्वमस्तु अविद्यायामनुपपत्तेरलङ्कारत्वादिति—वाच्यम्;

---

ऽज्ञानाश्रयत्वसिद्धौ न अन्योन्याश्रय इत्याह सिद्धान्ती—न अहंकारस्याविद्याधीनत्वेन तदनाश्रतया चित एव अज्ञानाश्रयत्वे सिद्धेऽहमज्ञ इति प्रतीतेरैक्याध्यासनिबन्धनत्वेन अबाधकत्वात्। मायाविद्याप्रकृत्यादिशब्दा एकार्थका इति श्रुतिषु अहंकारस्य अविद्याधीनत्वश्रवणात् अविद्याधीनस्याहंकारस्य सादित्वात् अनाद्यविद्याया आश्रयो न भवितुमर्हत्यहंकारः। अहंकारादीनां ब्रह्मोपादानकत्वम् अविद्योपादानकत्वञ्च इत्यस्ति मतद्वयम्। उभयमतसाधारण्याय अहंकारस्य अविद्योपादानकत्वमनुक्त्वा अविद्याधीनत्वमुक्तं मूले। ब्रह्मोपादानकत्वेऽपि अविद्याधीनत्वमक्षतमेव। अनाद्यविद्याशवलितं ब्रह्मैव प्रपञ्चस्य उपादानं शुद्धस्य उपादानत्वायोगात्; अविद्याधीनमविद्योपादानकं वा न अविद्याया आश्रयो भवितुमर्हति, सादित्वादनादेराश्रयत्वासंवात्। अहंकारस्य सादित्वञ्च—'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च,' [मु० २।१।३] 'मायां तु प्रकृतिं विद्यात्', [श्वेता०, ४।१०] 'एवमेवैषा माया क्षेत्राणि दर्शयित्वा,' [नृसिंह उ० ता०—९म खण्डः] 'तन्मनोऽसृजत' इत्यादिश्रुतिभ्यः अन्तःकरणाख्यस्याहंकारस्य सादित्वावधारणात्। अहंकारोत्पत्तेः प्राक् सिद्धाया अविद्यायाः परभावी अहंकारः कथमाश्रयः स्यात्? अतोऽनाद्येव किञ्चिदविद्याश्रयत्वेन स्वीकरणीयम्। प्रकृते च अनादिशुद्धचैतन्यमेवाविद्याया आश्रयत्वेन स्वीकरणीयम्। अनादिजीवेश्वरयोरपि यथा अविद्याश्रयत्वसम्भवस्तथा अग्रे उपपादयिष्यते। अविद्याश्रयचैतन्येऽहमर्थस्य ऐक्याध्यासाद् अहमज्ञ इति प्रतीतौ अहंकाराश्रितत्वेन अविद्या भासते। अतोऽध्यासनिबन्धनत्वेन अहमज्ञः इति प्रतीतिर्भ्रान्तिरेव। भ्रान्तिश्च न बाधिकेति भावः ॥३॥

४—अहमज्ञ इति प्रतीतेः प्रमात्वाय अहंकारोऽकल्पित एव अङ्गीकरिष्यते, कल्पितस्यापि वा अहंकारस्य अनाद्यविद्याश्रयत्वम् अविद्यायामनुपपत्तेरलंकारत्वादिति शंकते—न च अविद्याश्रयत्वादेव अहंकारोऽकल्पितोऽस्तु, कल्पित एव वा तदाश्रयत्वमस्तु, अविद्यायामनुपपत्तेरलंकारत्वादिति वाच्यम्।

अहमर्थस्य ज्ञाननिवर्त्यत्वेन दृश्यत्वेनाकल्पितत्वायोगात्, चिन्मात्राश्रितत्वं विना तद्गोचरचरमवृत्त्यनिवर्त्यत्वापातात्, स्वकल्पितस्य स्वाश्रितत्वेन स्वाश्रयत्वायोगात्। न चाविद्यायामनुपपत्तिरलङ्कारः; अनुपपत्तिमात्रं नालङ्कारः, किंतु सत्त्वादिप्रापकयुक्तावनुपपत्तिः, अन्यथा वादिवचसोऽनवकाशापत्तेः ॥४॥

---

अहमज्ञ इति प्रतीतौ अज्ञानाश्रयत्वेन भासमानोऽहंकार अनाद्यकल्पित एव स्वीकरिष्यते। अनाद्यविद्याश्रयत्वेन प्रतीयमानोऽहंकार अनाद्यकल्पित एव भवितुं युक्तः। अविद्याकल्पितत्वे अन्योऽन्याश्रयात्। अकल्पितत्वे तु नायं दोषः। किञ्च अनुपपत्तिमात्रमेव अविद्यायामलङ्कारः। अहंकारस्य अविद्याश्रयत्वे प्रदर्शिताऽनुपपत्तिर्न आश्रयत्वदूषणाय किन्तु गुणायैव स्यात्, अनुपपत्तेः अविद्यायामलङ्कारत्वात्। यदि सूपपन्ना स्यात् अविद्यैव न स्यात् किन्तुं विद्यैव स्यादिति।

अहमर्थस्य ज्ञाननिवर्त्यत्वेन अकल्पितत्वासम्भवात् नापि अनुपपत्तिमात्रमलङ्कारः, न चानुपपन्नार्थस्वीकारः अद्वैतिनां कुलधर्म इति समाधत्ते—अहमर्थस्य ज्ञाननिवर्त्यत्वेन दृश्यत्वेन अकल्पितत्वायोगात्। चिन्मात्राश्रितत्वं विना तद्गोचरचरमवृत्त्यनिवर्त्यत्वापातात्। स्वकल्पितस्य स्वाश्रितत्वेन स्वाश्रयत्वायोगात्। न च अविद्यायामनुपपत्तिरलंङ्कारः, अनुपपत्तिमात्रं नालङ्कारः किन्तु सत्त्वादिप्रापकयुक्तावनुपपत्तिः। अन्यथा वादिवचसोऽनवकाशापत्तेः। अहमर्थस्य तत्त्वज्ञाननिवर्त्यत्वात् कल्पितत्वमेव। अकल्पितस्य ज्ञाननिवर्त्यत्वासम्भवात् ब्रह्मवत् शशविषाणवच्च। किञ्च दृश्यत्वं कल्पितत्वव्याप्यम्, कल्पितं न स्यात् दृश्यं न स्यात्। किञ्च चिन्मात्रमनाश्रित्य यदि अविद्या अहमर्थे आश्रिता स्यात्, तर्हि चिन्मात्रगोचरचरमतत्त्वज्ञानाद् अविद्या न निवर्तेत। चिन्मात्राश्रितत्वादेव अविद्याचिन्मात्रविषयकचरमज्ञानेन निवर्तते। अन्यथा चरमज्ञानेन अविद्या न निवर्तेत। किञ्च अविद्याकल्पितस्य अविद्याश्रितत्वात् तस्य कल्पितस्य कल्पकाविद्याश्रयत्वायोगात्, अहंकारस्य अविद्याकल्पितत्वेन अविद्याश्रितत्वात्, अहंकारस्य अविद्याश्रयत्वानुपपत्तेः। न च अनुपपत्तिरविद्यायामलंकार इति वाच्यम्, अनुपपत्तिमात्रं

ननु—'निरनिष्टो निरवद्यः शोकं मोहमत्येतिनित्यमुक्त' इति श्रुतिविरोधात् न शुद्धचितोऽविद्याश्रयत्वम्; नहि मौढ्यं न दोषः, नापि बन्धकाज्ञानाश्रयो मुक्तः, न च तात्त्विकाविद्यादेरेव निषेधः; त्वन्मते तस्याप्रसक्तेः, जीवेऽपि तदभावेन जीवब्रह्मणोः सावद्यत्वनिरवद्यत्वव्यवस्थाश्रुतिविरोध इति चेत् ।।५।।

---

नालंकारः । तथात्वेऽद्वैतिनां वादकथायामनधिकारः स्यात् । वादिवाक्यानामनवकाश एव स्यात् । किन्तु अद्वैतवादेऽविद्यायाः सत्त्वासत्त्वप्रतिपादकयुक्तीनाम् अनुपपत्तिरेवालंकार इत्युक्तम् । अविद्याया अनिर्वाच्यत्वात् सत्त्वासत्त्वप्रतिपादकयुक्तीनामनुपपत्तिरेव । युक्त्या सत्त्वादिकोटेरनुपपन्नत्वमेवानिर्वाच्यत्वम् । अतोऽनिर्वाच्यायामविद्यायामनुपपत्तिरलंकार इत्युक्तम् । उपपन्नत्वे निर्वाच्यत्वमेव स्यात् । न च अनुपपत्तिस्वीकार एव अद्वैतिनां कुलधर्मः । किन्तु यत्र समस्तैर्वादिभिरनुपपत्तिः परिहर्तुं न शक्यते, तादृशानुपपत्तिरनुपपन्नस्य वस्तुनोऽलंकारः, अनिर्वाच्यत्वव्यापकत्वात् । उक्तञ्च खण्डने—

उपपादयितुं तैस्तैर्मतैरशकनीययोः ।
अनिर्वचनतावादपादसेवागतिस्तयोः ॥ [खण्डन०, १।४० श्लो०]

अशक्योपपादनवस्तुधीवस्तुव्यवहारयोरनिर्वाच्यतैव गतिरिति भावः ।।४।।

धर्मिग्राहकमानबाधोद्धारः समाप्तः ।

५—पूर्वपक्षिणा नाज्ञानं शुद्धचिद्गतमित्युक्तम्; तत्र चत्वारो हेतव उपन्यस्ताः । तत्र हेतुद्वयं निरस्य तृतीयं श्रुतिविरोधं परिहर्तुं पूर्वपक्षं दर्शयति—

ननु 'निरनिष्टो निरवद्यः', 'शोकं मोहमत्येति', 'नित्यमुक्त' इति श्रुतिविरोधात् न शुद्धचितोऽविद्याश्रयत्वम् । न हि मौढ्यं न दोषः, नापि बन्धकाज्ञानाश्रयो मुक्तः । न च तात्त्विकाविद्यादेरेव निषेधः त्वन्मते तस्याप्रसक्तेः । जीवेऽपि तदभावेन जीवब्रह्मणोः सावद्यत्वनिरवद्यत्वव्यवस्थाश्रुतिविरोध इति चेत् । अज्ञानस्य शुद्धचैतन्याश्रितत्वेऽभ्युपगम्यमाने श्रुतिविरोधः स्यात्; श्रुत्या ब्रह्मणो निरनिष्टत्वनिरवद्यत्वयोः प्रतिपादनात् । 'शुद्धे चैतन्येऽनिष्टसम्बन्धस्य अभावप्रतिपादनाद् एवमवद्यसम्बन्धस्यापि । अवद्यशब्दस्य दोषार्थकत्वात् चैतन्यं निर्दोषम् । चैतन्येऽविद्या-

न, अवद्यस्य चिति कार्यंकारित्वाभावेन कार्यंकरत्वाकार्यंकरत्वाभ्यमेव सावद्यत्वनिरवद्यत्वव्यवस्थोपपत्तेः, उपाधेः प्रतिबिम्बपक्षपातित्वात् ॥६॥

---

सम्बन्धस्य स्वीकारेऽविद्याया दोषरूपत्वात् निरवद्यश्रुतिर्विरुध्येत । एवं चैतन्येऽनिष्टसम्बन्धोऽपि नास्ति । अविद्याया अनिष्टरूपत्वात् चैतन्येऽविद्यासम्बन्धस्य स्वीकारे निरनिष्टश्रुतिर्विरुद्ध्येत । अन्या श्रुतिः शुद्धचैतन्यस्य शोकमोहातीतत्वं दर्शयति—शोकं मोहमत्येतीति । अविद्यामोहशब्दौ एकार्थकौ । चैतन्येऽविद्यासम्बन्धस्य स्वीकारे मोहमत्येतीति श्रुतिर्विरुध्येत । अन्यश्रुतिश्चैतन्यं नित्यमुक्तमाह—नित्यमुक्त इति । अविद्याया बन्धरूपत्वात् बन्धकारणत्वाद्वा चैतन्येऽविद्यासम्बन्धस्वीकारे ब्रह्मणो नित्यमुक्तत्वश्रुतिर्विरुध्येत । अविद्याया मोहरूपत्वात् अविद्यासम्बन्धो मौढ्यं तच्च दोष एव । ब्रह्मणो मौढ्ये निरवद्यत्वश्रुतिर्विरुध्येत । कर्तृत्वभोक्तृत्वाद्यनर्थहेतुत्वात् अविद्या बन्धजननी । कर्तृत्वादेर्बन्धरूपत्वेऽविद्या बन्धजनिका । आविद्याया एव बन्धरूपत्वे नित्यमुक्तत्वश्रुतेर्विरोधः स्पष्ट एव बन्धकाविद्याश्रयस्य नित्यमुक्तत्वप्रतिपादिकायाः श्रुतेर्विरोध एव स्यात् । न च निरनिष्टादिश्रुत्या ब्रह्मणः पारमार्थिकाविद्यादेर्निषेधः, न तु व्यावहारिकाविद्यादेरिति वाच्यम् । सिद्धान्तिमते तात्त्विकाविद्यादेरप्रसिद्धत्वात्, तात्त्विकाविद्यादेर्निषेधेऽप्रसक्तप्रतिषेधः स्यात्, प्रसक्तं हि प्रतिषिध्यते इति न्यायात् । अप्रसिद्धप्रतियोगिकनिषेधेऽभ्युपगम्यमानेऽपि तस्य जीवेऽपि सत्त्वात् जीवब्रह्मणोस्तुल्यत्वमेव स्यात्, तथा च जीवः सावद्यः ब्रह्म निरवद्यम् इति श्रौती व्यवस्था विरुध्येत । तस्मात् प्रदर्शितश्रुतिभिर्विरोधात् न शुद्धचैतन्यस्य अविद्याश्रयत्वं सम्भवतीति भावः ॥५॥

६—अनाद्युपाध्यविद्यायाः प्रतिबिम्बे एव विशेषेण कार्यकरत्वात् प्रदर्शिता श्रौती व्यवस्था उपपद्यते इत्याह सिद्धान्ती—न, अवद्यस्य चिति कार्यकारित्वाभावेन कार्यकरत्वाकार्यकरत्वाभ्यामेव सावद्यत्वनिरवद्यत्वव्यवस्थोपपत्तेः । उपाधेः प्रतिबिम्बपक्षपातित्वात् । अविद्यायाः शुद्धचिन्मात्राश्रयत्वे प्रदर्शिताभिः श्रुतिभिर्न विरोध इत्याह—अविद्योपाधिवशात् शुद्धं चैतन्यं बिम्बप्रतिबिम्बभावेन भिद्यते । बिम्बम् ईश्वरः प्रतिबिम्बं जीवः । विवरणकृद्भि-

न च—चिन्मात्रस्याविद्याश्रयत्वे प्रमाणाभावः, जीवाश्रितत्वे च प्रमाणमस्तीति—वाच्यम्; 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'तिश्रुतेरेव प्रमाणत्वात्। न च 'ज्ञाज्ञावीशानीशावि'ति जीवाज्ञानप्रति-

---

२पाधेः प्रतिबिम्बपक्षपातित्वमुक्तम्। तद्रीत्या उपाधेर्बिम्बे कार्यकरत्वाभावेन चिन्मात्रस्य अविद्याश्रयत्वेऽपि अविद्याकृतदोषाणां बिम्बे शुद्धचैतन्ये च अभावात् न निरवद्यश्रुतिर्विरुध्यते। उपाधेः प्रतिबिम्बे एव विशेषेण कार्यकरत्वात् अविद्याकृतदोषाणां प्रतिबिम्बे जीवे एव सत्त्वात् सावद्यत्वनिरवद्यत्वव्यवस्थोपपत्तेः। अविद्यायाः शुद्धचैतन्ये सत्त्वेऽपि तत्र बिम्बे ईश्वरे वा कार्यकरत्वाभावेन शुद्धचैतन्येश्वरयोर्निरवद्यत्वमक्षतम्। उपाधेः प्रतिबिम्बपक्षपातित्वं मणिकृपाणदर्पणादौ दृष्टम्। उपाधेः प्रतिबिम्बपक्षपातित्वं नाम प्रतिबिम्बे एव अतिशयेन कार्यकरत्वम् दर्पणाद्युपाधिगतमालिन्यादीनां प्रतिबिम्बे एव उपलम्भात्। उपाधेः प्रतिबिम्बपक्षपातित्वात् बिम्बप्रतिबिम्बयोः निरवद्यत्वसावद्यत्वयोर्व्यवस्थोपपत्तेः न कोऽपि दोषः ॥६॥

७—अविद्यायाः शुद्धचिन्मात्राश्रयत्वे प्रमाणाभावात् जीवाश्रितत्वेऽहमज्ञ इति साक्षिप्रत्यक्षस्य विद्यमानत्वान्नैवमिति पूर्वपक्षिशंकां निरस्यति—**न च चिन्मात्रस्याविद्याश्रयत्वे प्रमाणाभावः जीवाश्रितत्वे च प्रमाणमस्तीति वाच्यम्। 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरमि'ति श्रुतेरेव प्रमाणत्वात्।** अविद्याया जीवाश्रितत्वे "अविद्यायामन्तरे वर्तमानाः" 'अनीशया शोचति मुह्यमानः' 'अनृतेन हि प्रत्यूढ़ा,' 'नीहारेण प्रावृता' इत्यादिश्रुतयः अहमज्ञ इत्यादिसाक्षिप्रत्यक्षं च प्रमाणम्। अविद्यायाश्चिन्मात्राश्रितत्वे च श्रुतिप्रमाणाभावः, अतोऽविद्यायाश्चिन्मात्राश्रितत्वं न सिद्धयतीति भावः। समाधत्ते सिद्धान्ती—श्वेताश्वतरश्रुतिरेवाविद्यायाश्चिन्मात्राश्रितत्वे प्रमाणम्; मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। [श्वेताश्व०, ४।१०] इति श्वेताश्वतरमन्त्र एव प्रमाणम्। यद्यपि शुद्धचैतन्यमेवाविद्याया आश्रयः, अतः शुद्धचैतन्यमेव मायि तथापि महेश्वरत्वोपहितचैतन्येन शुद्धचैतन्यस्य तादात्म्यस्य सत्त्वात् महेश्वरं मायित्वेन निर्दिशति श्रुतिः। यदि शुद्धचैतन्येन उपहितचैतन्यस्याभेदात् उपहितचैतन्यं मायीत्युच्यते तर्हि उपहितजीवचैतन्यस्यापि शुद्धचैतन्येनाभेदात् जीवचैतन्यमपि मायि स्यात्; तथापि

पादकश्रुतिविरोधः; तदाश्रयत्वाभावेऽपि तत्कार्ययोगितया अज्ञत्वव्यपदेशोपपत्तेः। न च—ब्रह्मणोऽपि जीवाश्रिताज्ञानविषयत्वेन मायित्वोपपत्तिरिति—वाच्यम्; जीवत्वस्याश्रयतावच्छेदकत्वे परस्पराश्रयप्रसङ्गात् ॥७॥

---

श्रुतिर्महेश्वरमेव मायिनं निर्दिशति; जीवं तु मायानिरुद्धं वदति "मायया सन्निरुद्धः" "मूढ इव व्यवहरन् आस्ते मायया"। ईश्वरस्तु मायी न मायानिरुद्धः। किन्तु मायाधीशः। ईश्वरस्तु सन्नपि न मायानिरुद्धः। अविद्या यं प्रति अखण्डचित्प्रकाशमावृणोति स एव मायानिरुद्धः, मायामूढ इत्युच्यते। अविद्या यं प्रति अखण्डचित्प्रकाशं नावृणोति स मायी मायाधीशः, न तु मायानिरुद्धः। अतोऽविद्योपाधेः प्रतिबिम्बपक्षपातित्वेन कार्यवैलक्षण्यात् महेश्वरो मायी जीवस्तु मायानिरुद्धः यथा कथञ्चिन्मायासम्बन्धमात्रेण न मायी, ततो जीवो न मायीति भावः।

श्रुतिरेव जीवस्य अज्ञानाश्रयत्वं प्रतिपादयतीति चिन्मात्राश्रयत्वे श्रुतिविरोधः स्यादित्याशङ्क्य समाधत्ते—"न च ज्ञाज्ञौ ईशानीशौ" इति जीवाज्ञानप्रतिपादकश्रुतिविरोधः। तदाश्रयत्वाभावेऽपि तत्कार्ययोगितया अज्ञत्वव्यपदेशोपपत्तेः। 'ज्ञाज्ञौ द्वावजावीशानीशौ' [श्वेताश्व०—१।९] इति श्रुतिरेव जीवस्य अज्ञानाश्रयत्वं प्रतिपादयति; अज्ञानाश्रयत्वादेव जीवमज्ञं निर्दिशति। समाधत्ते—अविद्याया अनाश्रयोऽपि जीवः अविद्याया अतिशयितं कार्यमखण्डचैतन्यावरणं जीवं प्रत्येव इति जीवमज्ञतया निर्दिशति। अज्ञानाश्रयत्वात् न जीवस्य अज्ञत्वं किन्तु जीवं प्रति अज्ञानावरणादेव।

मायाया जीवाश्रितत्वेऽपि मायाविषयत्वेन ब्रह्मणो मायित्वमुपपद्यते इत्याशंक्य समाधत्ते—न च ब्रह्मणोऽपि जीवाश्रिताज्ञानविषयत्वेन मायित्वोपपत्तिरिति वाच्यं जीवत्वस्य आश्रयतावच्छेदकत्वे परस्पराश्रयप्रसंगात्। जीवस्य अज्ञानाश्रयत्वं श्रुत्यनुभवसिद्धम्, तथात्वेऽपि जीवाश्रिताज्ञानविषयत्वेन ब्रह्मणो मायित्वमप्युपपद्यते। मायाविषयत्वेन मायासम्बन्धात् ब्रह्मणो मायित्वं न तु मायाश्रयत्वेन ब्रह्मणो मायित्वमिति। समाधत्ते—शुद्धचैतन्यस्याज्ञानाश्रयत्वमनुक्त्वा जीवचैतन्यस्य अज्ञानाश्रयत्वाभ्युपगमे जीवत्वस्य अज्ञानाश्रयतावच्छेदकत्वं स्यात्,

ननु—शुक्त्याद्यज्ञानवत् ज्ञातुरर्थाप्रकाशरूपमिदमप्यज्ञानं स्वकार्येण भ्रान्त्यादिना स्वनिवर्तकेन तत्त्वाज्ञनादिना स्वसमानयोगक्षेमेण ज्ञान-प्रागभावेन च सामानाधिकरण्याय ज्ञात्रात्मनिष्ठम्, न तु चैतन्यरूप-ज्ञानाश्रितमिति—चेत् ॥८॥

---

चैतन्यनिष्ठाज्ञानाश्रयतावच्छेदकं जीवत्वमिति वक्तव्यम्; ततोऽन्योन्याश्रयदोष-प्रसङ्गः। अज्ञानाश्रयतावच्छेदकं जीवत्वमपि पूर्वपक्षिमतें मनोऽवच्छिन्नचित्त्वमेव वक्तव्यम्। यतोऽहमज्ञ इति प्रतीतेरेव प्रमाणत्वेनोपस्थापानात्, मनोऽवच्छिन्न-चैतन्यमेव अहं पदार्थः। मनस्तु अज्ञानपरिणामः। अतो जीवत्वमज्ञानाधीनं जीवत्वाधीनञ्चाज्ञानमिति परस्पराश्रयप्रसंगः स्पष्ट एव। यद्यपि मण्डनवाचस्पतिमते जीवाश्रितमेवाज्ञानं स्वीकृतम्, तन्मतेऽज्ञानाश्रयतावच्छेदकधर्मोऽपि जीवत्वमेव। तथापि तन्मतें जीवत्वमज्ञानावच्छिन्नचित्त्वं न तु मनोऽवच्छिन्नचित्त्वम्। अज्ञानस्य जीवाश्रितत्वेऽपि न अज्ञानमहमर्थाश्रितं मनोऽवच्छिन्नं चैतन्यमहमर्थः, अविद्यावच्छिन्नचैतन्यञ्च जीवपदार्थः। इत्येव वाचस्पतिसिद्धान्तः। अविद्याया जीवाश्रितत्वपक्षं परित्यज्य चिन्मात्राश्रितत्वपक्षाङ्गीकारे इयमेव युक्तिर्यद् वाच-स्पतिमते जीवनिष्ठाविद्याश्रयता किंचिद्धर्मावच्छिन्ना शुद्धचिन्निष्ठाविद्याश्रयता तु निरवच्छिन्ना; अवच्छिन्नत्वानवच्छिन्नत्वयोर्मध्येऽनवच्छिन्नत्वपक्षः श्रेयान्। अतः स एव पक्षोऽत्र समाश्रियते। अज्ञानस्य अहमर्थाश्रितत्वं यत् पूर्वपक्षिणा उक्तं तदत्यन्तमेवासंगतम् यतः अहमर्थस्यानुत्पत्तिदशायामनाद्यविद्या कुत्राश्रिता स्यात्? अनाश्रिता, चैतन्ये अनाश्रिता वा अविद्या नैव सिद्ध्यति। अविद्यायाः प्रमाणासिद्धत्वात् साक्षिसंसृष्टतयाऽपि यदि न सिद्ध्येत्, तदा अविद्यायाः सिद्धिरेव न स्यात्। अहमर्थाश्रिताज्ञानपक्षेऽन्योऽपि दोषः—अज्ञानकार्ये अहमर्थेऽ-ज्ञानमाश्रितम्, अहमर्थश्चाज्ञानकार्यत्वात् अज्ञाने आश्रितः। अतः स्थितौ अन्योन्या-श्रयता स्यात् ॥७॥

तृतीयस्य श्रुतिविरोधदोषस्य परिहारः समाप्तः।

८—भ्रान्तिसामानाधिकरण्यस्य चतुर्थदोषस्य परिहार इदानीमुच्यते—दोषमिमं परिहरिष्यन् पूर्वपक्षमवतारयति—ननु शुक्त्याद्यज्ञानवत् ज्ञातुरर्थ-प्रकाशरूपमिदमप्यज्ञानं स्वकार्येण भ्रान्त्यादिना स्वनिवर्तकेन तत्त्व-

न; चैतन्यस्यैव ज्ञातृत्वेन ज्ञातुरर्थाप्रकाशरूपत्वस्य सम्यक्ज्ञाना-श्रयत्वस्य भ्रान्त्यादिसामानाधिकरण्यस्य चोपपत्तेः ॥९॥

---

ज्ञानादिना स्वसमानयोगक्षेमेण ज्ञानप्रागभावेन च सामानाधिकरण्याश्च ज्ञात्रात्मनिष्ठं न तु चैतन्यरूपज्ञानाश्रितमिति चेत्। पूर्वपक्षी मन्यतेऽज्ञानं शुद्धचैतन्ये आश्रितं न भवितुमर्हति। यतः अज्ञानस्य भ्रान्ति-सम्यग्ज्ञानसामानाधिकरण्यञ्च अवश्यं वक्तव्यम्। उक्तञ्च इष्टसिद्धौ—"यस्याज्ञानं भ्रमस्तस्य तत्त्वं सम्यक् च वेत्ति सः" [इष्ट सि०, पृ०, १९३]। अज्ञानस्य भ्रान्तिसामानाधिकरण्यात, शुद्धचैतन्ये भ्रान्तेरसम्भवात् नाज्ञानं शुद्धचिद्गतम्। ज्ञातुरर्थाप्रकाशो हि अज्ञानम्। ज्ञातारं प्रति शुक्तेरप्रकाशो हि शुक्तिविषयकाज्ञानम्। शुक्तिविषयकाज्ञानवत् सर्वमज्ञानं ज्ञात्राश्रितमेव वक्तव्यम्; न शुद्धचैतन्याश्रितम्। किञ्च भ्रमो हि अज्ञानकार्यं कार्यकारणयोः सामानाधिकरण्यमपेक्षितम्; अन्यथा कार्यकारणभाव एव न स्यात्। अज्ञानजन्यो यथा भ्रमः एवं संसारोऽपि। भ्रान्त्यादीत्यादिना संसारो ग्राह्यः। भ्रमसंसारो ज्ञातुर्जीवस्यैव न शुद्धचैतन्यस्य। एवमज्ञाननिवर्तकं प्रमाज्ञानमपि ज्ञातुरेव, न शुद्धचैतन्यस्य। निवर्त्यनिवर्तकयोः सामानाधिकरण्यमपेक्षितम् अन्यथा निवर्त्यनिवर्तकभाव एव न स्यात्। किञ्च यथा प्रागभावः प्रतियोगिजनकः प्रतियोगिनाश्यश्च भवति; जन्यजनकभावः नाश्यनाशकभावश्च समानाधिकरण-योरेव भवति। अतो ज्ञानप्रागभावः ज्ञानासमानाधिकरण इति कैरपि नाङ्गी-क्रियते। अज्ञानमपि ज्ञानप्रागभावसमानयोगक्षेमम्। द्वैतवादिनो यत्र ज्ञानप्राग-भावमङ्गीकुर्वन्ति, तत्रैवाद्वैतवादिनः भावरूपमज्ञानमङ्गीकुर्वन्ति। ज्ञानप्रागभावश्च ज्ञात्राश्रित एव। अतोऽज्ञानमपि ज्ञात्राश्रितमेव अङ्गीकार्यम्, नाशुद्ध-चैतन्याश्रितम् ॥८॥

९—अज्ञानस्य शुद्धचैतन्याश्रितत्वेऽपि भ्रमप्रमाभ्यामज्ञानस्य सामानाधि-करण्यं युज्यते इत्याह सिद्धान्ती—न, चैतन्यस्यैव ज्ञातृत्वेन ज्ञातुरर्था-प्रकाशरूपत्वस्य सम्यग्ज्ञानाश्रयत्वस्य भ्रान्त्यादिसामानाधिकरण्यस्य च उपपत्तेः। शुद्धचैतन्यस्य अज्ञानाश्रयत्वेऽपि ज्ञातुरज्ञानमित्युपपद्यते—शुद्धचैतन्याश्रितमप्यज्ञानं भवति ज्ञातृसम्बन्धीति भावः। शुद्धचैतन्यमेवान्तः

न चैवं—ज्ञातृत्वे सत्यविद्याश्रयत्वम्, अविद्यायां ज्ञातृत्वमित्यन्योन्याश्रय इति—वाच्यम्; अविद्याया ज्ञातृत्वानपेक्षत्वेनान्योन्याश्रयाभावात्। न हि सामानाधिकरण्यमस्तीत्येतावतैव तदपेक्षया अनया भवितव्यम्। न च—शरीरेऽपि ज्ञातृत्वाध्याससंभवेन तत्राप्यज्ञानाश्रय-

---

करणाध्यासात् भवति ज्ञातृ अन्तःकरणाध्यासात् चैतन्यस्य ज्ञातृत्वमुपपद्यते। ज्ञातुरर्थप्रकाशो हि ज्ञानम्, अतो ज्ञात्राज्ञानयोः सामानाधिकरण्यमुपपद्यते। एवमज्ञानभ्रान्तिज्ञानयोः सामानाधिकरण्यमप्युपपद्यते। शुद्धचैतन्येऽनादिसिद्धाऽविद्या वर्तते। अविद्याप्रयुक्तञ्च ज्ञातृत्वं चैतन्ये वर्तते। ज्ञातृत्वमविद्यासापेक्षमपि अतात्वविद्याज्ञातृत्वनिरपेक्ष्यैव इति ज्ञातृत्वधर्मो बुद्धिगत एव। बुद्धेश्चैतन्येऽध्यासात् ज्ञातृत्वमपि चैतन्येऽध्यस्तम्। ज्ञातृत्वमज्ञानञ्च एकस्मिन् चैतन्येऽध्यस्तमिति ज्ञातृत्वाज्ञानयोः सामानाधिकरण्यम्। ज्ञातुरर्थाप्रकाशोऽज्ञानमिति वाक्यात्, ज्ञातृपदोत्तरषष्ठीविभक्त्या ज्ञातृसम्बन्धोऽज्ञाने बोध्यते। न तु ज्ञातुरज्ञानाश्रयत्वं बोध्यते। अज्ञानस्य ज्ञातृसम्बन्धो अद्वैतमतेऽप्यविरुद्धः, अज्ञानाश्रये चैतन्ये ज्ञातृत्वधर्मविशिष्टान्तःकरणस्य तदात्म्याध्यासात् अन्तःकारणाध्यासदशायामनिर्वचनीयविषयाकाराऽविद्यावृत्तिरेव भ्रमः ज्ञातृत्वधर्मविशिष्टान्तःकरणाध्यासदशायां जायमानो भ्रमः ज्ञातुर्भ्रम इति प्रतीयते। भ्रमस्य साक्ष्याश्रितत्वेऽपि तस्मिन् साक्षिणि अन्तःकरणाध्यासस्यापि विद्यमानत्वात् ज्ञातुर्भ्रम इति प्रतीतिर्नास्मन्मते विरुध्यते। भ्रमस्याविद्यावृत्तित्वान्न तस्य प्रमातृधर्मत्वं साक्षिणोऽपि ज्ञातृत्वाव ज्ञातृधर्मत्वं तस्य युज्यते॥९॥

१०—ज्ञातृत्वाविद्याश्रयत्वयोरन्योन्यसापेक्षतयाऽन्योन्याश्रयमाशंक्य परिहरति—न चैवं ज्ञातृत्वे सति अविद्याश्रयत्वमविद्यायां ज्ञातृत्वमित्यन्योन्याश्रय इति वाच्यम्। अविद्यायां ज्ञातृत्वानपेक्षत्वेन अन्योन्याश्रयाभावात्। न हि सामानाधिकरण्यमस्तीत्येतावतैव तदपेक्षयाऽनया भवितव्यम्। चैतन्येऽविद्यायां सत्यां ज्ञातृत्वं ज्ञातृत्वे सति चैतन्येऽविद्याश्रयत्वमित्यन्योऽन्याश्रयत्वप्रसंग इति पूर्वपक्षिणा न वाच्यम्। अविद्याध्यासस्यानादित्वात् न तस्य ज्ञातृत्वाध्यासापेक्षा अतो नान्योऽन्याश्रयः। ज्ञातृत्वाविद्याश्रयत्वयोः सामानाधिकरण्यमात्रेण न परस्परापेक्षा। समानाधिकरणयोर्जन्यजनकभावे इति जन्यस्य

त्वापत्तिरिति—वाच्यम्; न हि ज्ञातृत्वाध्यासो अज्ञानाश्रयत्वे प्रयोजकः, येन तन्मात्रेण तदापद्येत, किंतु प्रसक्तप्रकाशत्वम् अज्ञानानाश्रितत्वं च ॥१०॥

न चैवं—अविद्याश्रयस्य ज्ञातृत्वभोक्तृत्वादिमत्त्वे जीवाश्रिताज्ञानपक्षप्रवेश इति—वाच्यम् ॥११॥

---

जनकापेक्षा स्यात् न सामानाधिकरण्यमात्रेण परस्परापेक्षा; अन्यथा समानाधिकरणयोः रूपरसयोरपि परस्परापेक्षा स्यात् ।

ज्ञातृत्वं यद्यविद्याध्यासापेक्षं तर्हि शरीरेऽपि ज्ञातृत्वाध्यासदर्शनात् शरीरेऽपि अविद्याध्यासः स्यादित्याशङ्क्य समाधत्ते—न च शरीरेऽपि ज्ञातृत्वाध्यासम्भवेन तत्रापि अज्ञानाश्रयत्वापत्तिरिति वाच्यं न हि ज्ञातृत्वाध्यासोऽज्ञानाश्रयत्वे प्रयोजकः येन तन्मात्रेण तदापद्येत किन्तु प्रसक्तप्रकाशत्वम् अज्ञानानाश्रितत्वञ्च । शुद्धचैतन्ये ज्ञातृत्वाध्यासाय यदि शुद्धचैतन्येऽज्ञानाध्यासोऽङ्गीक्रियते तर्हि शरीरेऽपि ज्ञातृत्वाध्यासात् शरीरेऽपि अज्ञानाश्रयत्वमङ्गीकार्यं स्यात् । यथा देवदत्तो जानाति, स्थूलोऽयं विज्ञः इत्यादिप्रतीतिः सर्वसिद्धैव, इति न पूर्वपक्षिणा वाच्यम् । न हि ज्ञातृत्वाध्यासः अज्ञानाश्रयताप्रयोजकः । अज्ञानाश्रयताप्रयोजकं तु प्रसक्तप्रकाशत्वम् । यत्र प्रकाशप्रसक्तिस्तत्रैवाज्ञानाश्रयता कल्प्यते । यच्च अज्ञानेऽनाश्रितं तत्राज्ञानाश्रयत्वम् । अज्ञानेऽनाश्रितं प्रसक्तप्रकाशं वस्तु अज्ञानाश्रयो भवति । प्रसक्तप्रकाशं वस्तुमात्रमेव यदि अज्ञानाश्रयस्स्यात्, तर्हि अहंकारोऽपि चैतन्यैक्याध्यासात् प्रसक्तप्रकाशत्वात् अहंकारोऽपि अज्ञानाश्रयः स्यात्; किन्तु-अहंकारः अज्ञानोपादानक इति अज्ञाने एव आश्रितः । अतो नाज्ञानस्य आश्रयो भवितुमर्हति ॥१०॥

११—अविद्याश्रयचैतन्ये ज्ञातृत्वभोक्तृत्वाध्यासाभ्युपगमे ज्ञातृत्वादिधर्मविशिष्टचैतन्यस्य जीवत्वात् जीवाश्रितैवाविद्या स्यात्; तथा च अविद्यायाः शुद्धचैतन्याश्रितत्वपरित्याग इति शङ्कते—न चैवम् अविद्याश्रयस्य ज्ञातृत्वभोक्तृत्वादिमत्त्वे जीवाश्रिताज्ञानपक्षप्रवेश इति वाच्यम् । जीवाश्रिताज्ञानपक्षो वाचस्पतिसम्मतः । शुद्धचैतन्याश्रिताऽज्ञानपक्षः विवरणसंक्षेपशारीर-

अविद्यावच्छिन्नस्य हि ज्ञातृत्वम्, अविद्या च नाविद्यावच्छेदेन; सामानाधिकरण्यं चावच्छेद्यांशैक्यमादाय । यथोपाधिसम्बन्धो मुखमात्र एव, औपाधिकमालिन्यसम्बन्धस्तु उपाध्यवच्छिन्ने, बिम्बप्रतिबिम्बयोरैक्यात्, तथा सामानाधिकरण्यमपि। यथा प्रतिबिम्बो न वस्त्वन्तरम्, तथा वक्ष्यते ॥१२॥

---

ककारसम्मतः। स एव पक्षः अस्मिन् प्रकरणे उपपाद्यते। पक्षान्तरप्रवेशे अपसिद्धान्तो नाम निग्रहस्थानमित्यभिप्रेत्य पूर्वपक्षी अविद्यावति चैतन्ये ज्ञातृत्वभोक्तृत्वाध्यासेऽध्यस्तज्ञातृत्वादिधर्मकस्यैव जीवत्वात् जीवाश्रिताविद्येति पक्षः परिगृहीतः स्यात्। तथा च अपसिद्धान्त इति भावः ॥११॥

१२—अविद्यावच्छिन्नचैतन्ये ज्ञातृत्वाद्यध्यासेऽपि अविद्या तु न अविद्यावच्छिन्नचैतन्ये किन्तु शुद्धचैतन्ये एव इति नापसिद्धान्त इति समाधत्ते—अविद्यावच्छिन्नस्य हि ज्ञातृत्वम् अविद्या च नाविद्यावच्छेदेन। सामानाधिकरण्यञ्च अवच्छेद्यांशैक्यमादाय। यथा उपाधिसम्बन्धो मुखमात्रे एव औपाधिकमालिन्यसम्बन्धस्तु उपाध्यवच्छिन्ने बिम्बप्रतिबिम्बयोरैक्यात् तथा सामानाधिकरण्यमपि यथा प्रतिबिम्बो न वस्त्वन्तरं तथा वक्ष्यते। अविद्यावच्छिन्नचैतन्ये ज्ञातृत्वाद्यध्यासस्तु अङ्गीक्रियत एव। अविद्याध्यासस्तु शुद्धचैतन्ये एव न अवच्छिन्नचैतन्ये। भामत्यादिमते तु जीवत्वावच्छिन्नचैतन्येऽविद्याध्यासात् नास्माकं जीवाश्रिताविद्यापक्षे प्रवेशः। अवच्छिन्नचैतन्ये नाविद्याध्यासः इत्याह—अविद्या च नाविद्यावच्छेदेनेति। यतोऽवच्छिन्नचैतन्येऽविद्याध्यासः स्यात्। तथात्वे आत्माश्रयः स्यादिति भावः। अविद्याऽज्ञत्वयोराश्रयभेदे योऽज्ञः स ज्ञाता इति सर्वजनप्रसिद्धा सामानाधिकरण्यप्रतीतिर्बाध्येत इति शंकायामाह—सामानाधिकरण्यञ्च अवच्छेद्यांशैक्यमादायेति। शुद्धचैतन्यमेवाविद्याऽध्यासात् अज्ञः। अविद्यावच्छिन्नचैतन्ये ज्ञातृत्वाध्यासात् ज्ञाता भवति। तथा च योऽज्ञः स एव ज्ञाता इति सामानाधिकरण्यप्रतीतिर्बाध्येत। समाधानमाह अवच्छेद्यांशैक्यमादायेति। अवच्छिन्नचैतन्यभेदेऽपि अवच्छेद्यचैतन्यैक्यात् सामानाधिकरण्यम्। यच्चैतन्यम् अवच्छेदकसम्बन्धात् अवच्छिन्नं भवति तदेव

ननु—शुक्त्यज्ञानमपि शुक्त्यवच्छिन्नचैतन्यगतं वाच्यम्, तथा चा-'हं जानामीच्छामी'तिवत् 'अहं न जानामी'ति ज्ञातृस्थत्वानुभवविरोध इति—चेत् ॥१३॥

---

अवच्छेद्यं चैतन्यम्; अवच्छेद्यं चैतन्यं अवच्छिन्नचैतन्यवत् नात्यन्तं भिद्यते अज्ञ इति प्रतीतौ अज्ञानाश्रयशुद्धं चैतन्यम्, ज्ञाता इति प्रतीतौ ज्ञातृत्वाश्रयः अविद्यावच्छिन्नं चैतन्यम्—एतयोर्द्वयोश्चैतन्ययोरैक्यात्—तादात्म्यादिति अविद्यावच्छेद्यचैतन्येन शुद्धचैतन्यस्य तादात्म्यात् इति भावः। अज्ञो ज्ञातेति सामानाधिकरण्यप्रतीतेः सम्भाव्यत्वप्रदर्शनाय दृष्टान्तं दर्शयति—यथा उपाधि-सम्बन्धो मुखमात्रे इति। यथा मुखमात्रे बिम्बत्वप्रतिबिम्बत्वाभ्यामनाक्रान्ते शुद्धमुखे दर्पणाद्युपाधिसम्बन्धे सति शुद्धं मुखं बिम्बत्वप्रतिबिम्बत्वाभ्यां भिद्यते। बिम्बप्रतिबिम्बयोर्मिथ्याभेदप्रतीतौ सत्याम् औपाधिकमालिन्यसम्बन्धस्तु प्रतिबिम्बमुखे एव उपाध्यवच्छिन्ने न बिम्बमुखे, बिम्बप्रतिबिम्बयोरैक्यात् मम मुखं मलिनमिति भ्रमात्मिका सामानाधिकरण्यप्रतीतिर्जायते। तथा अज्ञो ज्ञाता इत्यत्रापि अज्ञानाश्रयज्ञातृत्वाश्रययोर्भेदेऽपि ऐक्यम्—तादात्म्यं वर्तते। भेदाभेद-रूपत्वात् तादात्म्यस्य। तादात्म्येऽपि भेदः काल्पनिकः अभेदः पारमार्थिकः। यथा बिम्बप्रतिबिम्बयोरैक्यात् तादात्म्यात् सामानाधिकरण्यमेवम् अज्ञानाश्रय-ज्ञातृत्वाश्रययोरैक्यात्—तादात्म्यात् सामानाधिकरण्यम् इत्यर्थः। प्रतिबिम्बस्तु न छायादिवत्वस्त्वन्तरं किन्तु बिम्बमेव। बिम्बप्रतिबिम्बन्यायेन जीवब्रह्मणोरैक्य-सिद्धिप्रकरणे द्वितीयपरिच्छेदे [अद्वैतसिद्धिः, पृ०, ८४७-५१ निर्णयसागरसं०] वक्ष्यते। एवञ्च अविद्यायाः शुद्धचैतन्याश्रयत्वपक्षे अज्ञो ज्ञाता इत्यभेदोक्तिरपि सङ्गच्छते, नापि जीवाश्रिताज्ञानपक्षेऽपि प्रवेशः। यच्च न्यायामृतकृतोक्तं बिम्ब-प्रतिबिम्बयोर्न तादात्म्यम्, अतो बिम्बप्रतिबिम्बभावेन अभेदोक्तिर्न संगच्छते। यथा प्रकाशप्रतिरोधकद्रव्यस्य छायाप्रकाशप्रतिरोधकैद्रव्यात् अत्यन्तं भिद्यते, तथा बिम्बादपि प्रतिबिम्बम् अत्यन्तं भिद्यते, प्रतिबिम्बं छायादिवत् वस्त्वन्तरम्। तत्राह—यथा प्रतिबिम्बो न वस्त्वन्तरं तथा वक्ष्यते इति ॥१२॥

१३—मूलाज्ञानस्य को वा आश्रय इति निरूपयितुं प्रकरणमिदं प्रवृत्तम्, शुद्धचैतन्यञ्च मूलाज्ञानस्य आश्रय इत्यप्युक्तम्। इदानीं प्रकरणं भित्वा तूलाज्ञान-

न, अज्ञानद्वैविध्यात् एकं हि शुक्त्यवच्छिन्नचैतन्याश्रितं तद्गतापरोक्षभ्रमजनकं तद्विषयापरोक्षप्रमानाश्यम्, अपरं च परोक्षभ्रमजनकं तद्विषयप्रमामात्रनाश्यम् प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्याश्रितमित्युक्तं प्राक्। तत्र प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्यगताज्ञानविषयकोऽयमनुभवः। तेन प्रमातृनिष्ठत्वविषयतास्य न विरुध्यते। अत एव विषयगताऽज्ञाने विद्यमानेऽपि प्रमातृगताज्ञाननाशेन न जानामीति व्यवहाराभावः ॥१४॥

---

मादाय पूर्वपक्षी ज्ञातृस्थम् अज्ञानं दर्शयितुं शंकते—ननु शुक्त्यज्ञानमपि शुक्त्यवच्छिन्नचैतन्यगतं वाच्यं तथा च अहं जानामीच्छामीतिवत् अहं न जानामीति ज्ञातृस्थत्वानुभवविरोधः इति चेत्। शुक्तौ आरोपितप्रातिभासिकरजतोपादानतया शुक्त्यवच्छिन्नचैतन्यगतं शुक्त्यज्ञानं सिद्धान्तिना वाच्यम्; तथा च अज्ञानस्य शुद्धचैतन्याश्रितत्वनियमः अत्रैव भग्नः, नियमपरित्यागे ज्ञातृस्थमपि अज्ञानम् अनुभवानुरोधात् सिद्धान्तिना स्वीकार्यम् इत्याह--तथा च अहं जानामि इच्छामीतिवत् इति। अहं जानामीच्छामीति प्रतीतिभ्यां ज्ञानेच्छयोः ज्ञातृगतत्ववत् अहं न जानामीतिप्रतीत्या अज्ञानस्य ज्ञातृस्थत्वमपि स्वीकार्यम्, अन्यथा अनुभवविरोधः स्यात् ॥१३॥

१४—तूलाज्ञानद्वैविध्यात् प्रदर्शितद्विविधाऽपि प्रतीतिरस्मन्मते उपपद्यते इत्याह सिद्धान्ती—न अज्ञानद्वैविध्यात् एकं हि शुक्त्यवच्छिन्नचैतन्याश्रितं तद्गतापरोक्षभ्रमजनकं तद्विषयापरोक्षप्रमानाश्यम्। अपरञ्च परोक्षभ्रमजनकं तद्विषयप्रमामात्रनाश्यं प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्याश्रितमित्युक्तं प्राक्। तत्र प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्यगताज्ञानविषयकोऽयमनुभवः तेन प्रमातृनिष्ठत्वविषयताऽस्य न विरुध्यते। अत एव विषयगताज्ञाने विद्यमानेऽपि प्रमातृगताज्ञाननाशेन न जानामीति व्यवहाराभावः। अज्ञानमात्रम् अहमर्थावच्छिन्नचैतन्ये अनाश्रितमिति नास्माभिरुच्यते; किन्तु तूलाज्ञानद्वैविध्यं स्वीक्रियते। तत्र एकम् असत्त्वापादकाज्ञानं प्रमातृचैतन्यनिष्ठम् अपरम् अभानापादकाज्ञानं विषयावच्छिन्नचैतन्यनिष्ठम्। अवच्छिन्नचैतन्याश्रितं तूलाज्ञानमनवच्छिन्नचैतन्याश्रितं

ननु—उपाधेः प्रतिबिम्बपक्षपातित्वान्न ब्रह्मणः संसारित्वमित्युक्तम्, तदयुक्तम्; बिम्बप्रतिबिम्बभावस्यैवासंभवात्। तथा हि—अचाक्षुषस्य चैतन्यस्य गन्धरसादिवत् प्रतिबिम्बतानर्हत्वात्, प्रतिबिम्बत्वे जीवस्य

---

मूलाज्ञानमित्येव मूलतूलाज्ञानयोर्भेदः एकं हि तूलाज्ञानम् अभानापादकं शुक्त्यवच्छिन्नचैतन्यनिष्ठं शुक्तिगतेदमंशावच्छिन्नचैतन्ये रजतविषयज्ञानात्मकमपरोक्षभ्रमजनकं शुक्त्यज्ञानमेव 'आरोपितरजतस्य तज्ज्ञानाभासस्योपादानम्। तदज्ञानं शुक्तिविषयकापरोक्षप्रमया नश्यति। अपरञ्च तूलाज्ञानं विषयासत्त्वापादकं परोक्षभ्रमजनकम् परोक्षभ्रमजनकमज्ञानमज्ञानविषयविषयकप्रमामात्रनाश्यम्, परोक्षप्रमया अपरोक्षप्रमया च नश्यति। तच्च प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्यनिष्ठं प्रमातृत्वप्रयोजकोपाधिश्च देहावच्छिन्नवृत्तिमदन्तःकरणम्। देहावच्छेदेन प्रमाणजन्यान्तःकरणवृत्तौ जातायां तादृशवृत्तिमदन्तःकरणमेव प्रमातृत्वप्रयोजकोपाधिः। यद्यपि अन्तःकरणोपहितचैतन्यमेव प्रमातृचैतन्यमुच्यते तथापि तन्न युक्तं यतः स्वप्नदशायामन्तःकरणस्य सत्त्वात् स्वप्नद्रष्टापि अन्तःकरणोपहितचैतन्यमेव, तथापि स्वप्नद्रष्टा न प्रमाता। स्वप्नदशायां प्रमाणजन्यान्तःकरणवृत्तेरभावात् एवं स्मृतिद्रष्टापि न प्रमाता। अतः प्रमाणजन्यवृत्तिमदन्तःकरणमेव प्रमातृत्वप्रयोजकोपाधिरित्युक्तम्। अहं न जानामीत्यनुभवो प्रमातृचैतन्यगतासत्त्वापादकाज्ञानविषयकः। प्रमातृचैतन्यगतासत्त्वापादकतूलाज्ञानविशेषस्य स्वीकारात्, अहं न जानामीत्यनुभवो न विरुद्ध्यते। एतत् सर्वं प्रतिकर्मव्यवस्थाप्रकरणे प्रागेवोक्तम्। [अ० सि०, पृ०, ४८७, निर्णयसागरसंस्क०]. असत्त्वापादकाभानापादकतूलाज्ञानयोर्भेदात्, विषयावच्छिन्नचैतन्यगताभानापादकाज्ञाने विद्यमानेऽपि परोक्षप्रमया प्रमातृचैतन्यगतासत्वापादकाज्ञाननाशात् जानामीत्येव व्यवहारो जायते, न जानामीति व्यवहारो न जायते इति ॥१४॥

१५—अचाक्षुषचैतन्यस्य प्रतिबिम्बासम्भवात् प्रतिबिम्बत्वे जीवस्य सादित्वापातात् चिदसमानसत्ताकाज्ञानस्य चितं प्रति उपाधित्वायोगाच्चेति शंकते— ननु उपाधेः प्रतिबिम्बपक्षपातित्वान्न ब्रह्मणः संसारित्वमित्युक्तं तदयुक्तम्, बिम्बप्रतिबिम्बभावस्यैवासम्भवात्। तथा हि—अचाक्षुषस्य चैतन्यस्य

सादित्वापाताच्च, सूर्यस्य सरिज्जल इव मरीचिकाजलेष्वप्रतिफलनेन चिदसमानसत्ताकस्याज्ञानस्य चितं प्रत्युपाधित्वायोगात्, अस्वच्छस्याज्ञानस्य प्रतिबिम्बतोपाधित्वायोगाच्च, अविद्यायाश्चिन्मात्राभिमुख्यासंभवाच्च, अज्ञानस्याकाशाद्यात्मना परिणामे प्रतिबिम्बापायापाताच्चेति- चेत् न; रूपवत एव प्रतिबिम्ब इत्यस्या व्याप्तेः रूपादौ व्यभिचारात्

---

गन्धरसादिवत् प्रतिबिम्बतानर्हत्वात्। प्रतिबिम्बत्वे जीवस्य सादित्वापाताच्च। सूर्यस्य सरिज्जले इव मरीचिकाजलेषु अप्रतिफलनेन चिदसमानसत्ताकस्याज्ञानस्य चितं प्रति उपाधित्वायोगात्। अस्वच्छस्य अज्ञानस्य प्रतिबिम्बनोपाधित्वायोगाच्च। अविद्या शुद्धचैतन्याश्रितापि न शुद्धचैतन्यस्य अज्ञत्वसम्पादिका, उपाधेः प्रतिबिम्बपक्षपातित्वात्, प्रतिबिम्बे जीवे एव अज्ञत्वसंसारित्वादेः सम्पादिकेति यदुक्तं तदसङ्गतम्। अविद्योपाधिना चैतन्यस्य बिम्बप्रतिबिम्बभाव एवासम्भावितः; अचाक्षुषचैतन्यस्य प्रतिबिम्बनमेव न संभवति यथा अचाक्षुषगन्धरसादेर्न प्रतिबिम्बनम् उक्तञ्च भामत्याम्—रूपवद्धि द्रव्यम् अतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात्। चिदात्मत्तरूपो विषयी न विषयच्छायाम् उद्ग्रहितुमर्हति। यथाहुः शब्दगन्धरसानाञ्च कीदृशी प्रतिबिम्बतेति। [भामती, पृ०, ७·८, निर्णयसागरसं०]। किञ्च प्रतिबिम्बमात्रं सादि, जीवस्य प्रतिबिम्बत्वे सादित्वापातात्। अचाक्षुषचैतन्यस्य प्रतिबिम्बस्वीकारेऽपि अविद्योपाधौ चित्प्रतिबिम्बनं न सम्भवति। असमानसत्ताकत्वात्। मुखसमानसत्ताके दर्पणादौ मुखप्रतिबिम्बो युज्यते चैतन्याविद्ययोः विषमसत्ताकत्वात् न अविद्यायां चैतन्यप्रतिबिम्बनं सम्भवति। उपाध्युपधेययोः समानसत्ताकत्वनियमात्। अत एव सूर्यस्य नद्यादिजले प्रतिबिम्बनेऽपि मरीचिकाजले प्रतिबिम्बनाभावात्। किञ्च स्वच्छस्य दर्पणसरिज्जलादेः प्रतिबिम्बोपाधित्वेऽपि अस्वच्छाविद्यायाः न प्रतिबिम्बनोपाधित्वं सम्भवति।

अविद्यायाश्चित्प्रतिबिम्बोपाधित्वे दूषणान्तरमप्याह—अविद्यायाश्चिन्मात्राभिमुख्यासम्भवाच्च। अज्ञानस्य आकाशाद्यात्मना परिणामे प्रतिबिम्बापायापाताच्चेति चेत्। किञ्च मुखाभिमुखतया स्थिते दर्पणादौ

यथा भङ्गः, एवमाकाशादौ व्यभिचाराच्चाक्षुषस्यैव प्रतिबिम्ब इत्यस्यां अपि व्याप्तेर्भङ्गः। वस्तुतस्तु—श्रुतिबलाच्चितः प्रतिबिम्बे सिद्धे तत्रैव व्यभिचारान्नेयं व्याप्तिः; तथा च रसादिव्यावृत्तं फलैकोन्नेयं प्रतिबिम्बप्रयोजकम्। नापि जीवस्य सादित्वापत्तिः; उपाधिबिम्बसम्बन्धानादित्वेनानादित्वोपपत्तेः। विस्तरस्तु सिद्धान्तबिन्दौ। यतूक्तं मरीचिकाजले सूर्यप्रतिबिम्बादर्शनात् बिम्बसमानसत्ताकत्वं प्रतिबिम्बोद्ग्राहित्वे प्रयोजकमिति। तन्न; अध्यस्तस्य स्फटिकलौहित्यस्य दर्पणे प्रतिबिम्बदर्शनात्। तस्मान्मरीचिकाजलव्यावृत्तं स्वच्छत्वं फलैकोन्नेयम् अननुगतमेव प्रतिबिम्बोद्ग्राहित्वे प्रयोजकम्, तच्च प्रकृतेऽप्यस्ति। अत एवाज्ञानस्यास्वच्छत्वान्न प्रतिबिम्बोपाधित्वमिति निरस्तम्। यच्चोक्तं—चिन्मात्रा-

---

मुखस्य प्रतिबिम्बनात् अविद्यायाश्चिदभिमुखत्वाभावात् न अविद्यायां चित्प्रतिबिम्बनम्। किञ्च अद्वैतमते मूलाज्ञानमेव आकाशादिप्रपञ्चात्मना परिणमते इत्यङ्गीकारात्, अज्ञाने चैतन्यप्रतिबिम्बनेऽपि आकाशादिप्रपञ्चरूपेण परिणतेऽज्ञाने चैतन्यप्रतिबिम्बो न स्थातुमर्हति। नद्यादिजलेऽतिमात्रतरङ्गायिते न तीरतरवस्तत्र प्रतिबिम्बन्तीति भावः०।

समाधत्ते सिद्धान्ती—न, रूपवत एव प्रतिबिम्ब इत्यस्याव्याप्तेः, रूपादौ व्यभिचारात् यथा भङ्गः एवमाकाशादौ व्यभिचाराच्चाक्षुषस्यैव प्रतिबिम्ब इत्यस्या अपि व्याप्तेर्भङ्गः। वस्तुतस्तु श्रुतिबलात् चितः प्रतिबिम्बे सिद्धे तत्रैव व्यभिचारात् नेयं व्याप्तिः। तथा च रसादिव्यावृत्तं फलैकोन्नेयं प्रतिबिम्बप्रयोजकम्। नापि जीवस्य सादित्वापत्तिः, उपाधिसम्बन्धानादित्वेनानादित्वोपपत्तेः। विस्तरस्तु सिद्धान्तबिन्दौ। यच्चोक्तं मरीचिकाजले सूर्यप्रतिबिम्बादर्शनात् बिम्बसमानसत्ताकत्वं प्रतिबिम्बोद्ग्राहित्वे प्रयोजकमिति तन्न अध्यस्तस्य स्फटिकलौहित्यस्य दर्पणे प्रतिबिम्बदर्शनात्। तस्मान्मरीचिकाजलव्यावृत्तं स्वच्छत्वं फलैकोन्नेयमननुगतमेव प्रतिबिम्बोद्ग्राहित्वे प्रयोजकं तच्च प्रकृतेऽप्यस्ति। अत एव अज्ञानस्य अस्वच्छत्वात् न प्रतिबिम्बोपाधित्वमिति

भिमुख्याभावादिति, तत्किं सर्वात्मना चिदाभिमुख्याभावाद्वा आभिमुख्य-मात्राभायाद्वा । नाद्यः; चैतन्यवद्विभुत्वपक्षे सर्वात्मनापि संभवात् । न्यूनपरिमाणत्वेऽपि न दोषः; न्यूनपरिमाणस्यापि अधिकपरिमाणा-काशादिप्रतिबिम्बोद्ग्राहित्वदर्शनात् । न द्वितीयः; चैतन्यस्य सर्वतोऽपि प्रसृतत्वेन व्यवधानाभावेन च आभिमुख्यस्य सद्भावात् । न चाकाशा-द्यात्मना परिणामे प्रतिबिम्बापायापत्तिः; प्रतिबिम्बप्रयोजकरूपा-विरोधिपरिणामस्य प्रतिबिम्बाविरोधित्वेन प्रतिबिम्बानपायात् ।

---

निरस्तम् । यच्चोक्तं चिन्मात्राभिमुख्याभावादिति तत् किं सर्वात्मना चिदाभिमुख्याभावाद् वा ? आभिमुख्यमात्राभावाद् वा ? नाद्यः, चैतन्यवद् विभुत्वपक्षे सर्वात्मनाऽपि सम्भवात् । न्यूनपरिमाणत्वेऽपि न दोषः, न्यूनपरिमाणस्यापि अधिकपरिमाणाकाशादिप्रतिबिम्बोद्-ग्राहित्वदर्शनात् । न द्वितीयः, चैतन्यस्य सर्वतोऽपि प्रसृतत्वेन व्यवधानाभावेन च आभिमुख्यस्य सद्भावात् । न च आकाशाद्या-त्मना परिणामे प्रतिबिम्बापायापत्तिः प्रतिबिम्बप्रयोजकरूपाविरोधि-परिणामस्य प्रतिबिम्बाविरोधित्वेन प्रतिबिम्बानपायात् । ये तु रूपवतः एव प्रतिबिम्ब इति व्याप्तिमङ्गीकुर्वन्ति तेषां नीरूपरूपादीनां प्रतिबिम्बे व्याप्तेर्व्यभिचारात् प्रदर्शितव्याप्तिरेव न सिद्ध्यति । रूपसंयोगविभागपरि-माणानां रूपसमवेतरूपत्वादीनां प्रतिबिम्बदर्शनेन व्याप्तेर्व्यभिचाराच्च । एवं चाक्षुषस्यैव प्रतिबिम्ब इत्यस्या अपि व्याप्तेर्जले आकाशप्रतिबिम्बदर्शनेन व्यभि-चारात् । अचाक्षुषमाकाशं जले प्रतिबिम्बते इति सर्वानुभवसिद्धम् । वस्तुतस्तु श्रुतिभिश्चित्प्रतिबिम्बस्य सिद्धत्वात् तत्रैव चित्प्रतिबिम्बे प्रदर्शितव्याप्तेर्व्यभिचा-रात् प्रदर्शितव्याप्तिरेव न सिद्ध्यतीति भावः । श्रुतयश्च—'जीवेशौ आभासेन करोति', [नृसिंह उ० ता० ९ म खण्डः] 'रूपं रूपं प्रतिरूपो बभूव', [ऋक्सं० ४।१।३३ वर्ग] 'यथा ह्ययं ज्योतिरात्मा विवस्वान् आपो भिन्ना बहुधैकोऽनुगच्छन्' [ब्र सू०, ३।२।१८] 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' [ब्र०वि०उ०, १२] चित्प्रतिबिम्बप्रतिपादिका वर्तन्ते । यस्य वस्तुनः प्रतिबिम्बः प्रमाणसिद्धः तत्र प्रतिबिम्बनप्रयोजकरूपमपि स्वीकर्तव्यम् ।

यस्य तु प्रतिविम्बं न प्रमाणसिद्धं तत्र प्रतिबिम्बनप्रयोजकं रूपमपि नास्तीत्यङ्गीकर्तव्यम्। प्रतिबिम्बनप्रयोजकं रूपं फलमात्रोन्नेयम् प्रतिबिम्बनरूपफलेन उन्नीयते। प्रमाणसिद्धफलान्यथानुपपत्त्या प्रयोजकं रूपमपि कल्पनीयम्। फले विद्यमानेऽपि तत्प्रयोजकं रूपं नास्तीति कथयितुं न शक्यते प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपीति न्यायात्। यच्च चित्प्रतिबिम्बत्वे जीवस्य सादित्वापत्तिरित्युक्तं तत्तुच्छम्। यतश्चित्प्रतिबिम्बोपाधेरविद्याया अनादित्वात् चिदविद्यासम्बन्धोऽपि अनादिः, उपाधिसम्बन्धस्य अनादित्वेन प्रतिबिम्बजीवस्यापि अनादित्वमुपपद्यते। दशश्लोकीटीकायां सिद्धान्तविन्दुसमाख्यायामाचार्यप्रणीतायां चित्प्रतिबिम्बस्य समर्थनमनुभूतिश्रुतियुक्तिभिः कृतम्। तट्टीकायां न्यायरत्नावल्यामपि ब्रह्मानन्दश्रीचरणैः चित्प्रतिबिम्बसमर्थनं बहुधा कृतम्; [सिद्धान्तविन्दुः, पृ०, २८८, राजेन्द्रनाथघोषसं०] यच्च मरीचिकाजले सूर्यस्याप्रतिविम्बनात् प्रतिबिम्बग्राहकोपाधेर्बिम्बसमानसत्ताकत्वमपेक्षितमिति, तन्न, स्फटिकशिलायामध्यस्तं लौहित्यमपि दर्पणादौ प्रतिबिम्बते। अतो बिम्बसमानसत्ताकत्वस्य प्रतिबिम्बोपाधेरभावात् नेदमपि प्रयोजकं सिद्धयतीति भावः। यच्च अविद्यायाः स्वच्छत्वाभावात् न प्रतिबिम्बनोपाधित्वमिति तन्न मरीचिकाजलव्यावृत्तमुपाधिगतस्वच्छत्वम् उपाधेः प्रतिबिम्बग्रहणे प्रयोजकम्। स्वच्छे उपाधौ प्रतिबिम्बो जायते अथ च मरीचिकाजले प्रतिबिम्बो न जायते। अत उपाधेस्तादृशं स्वच्छत्वं प्रतिबिम्बग्रहणे प्रयोजकं यत् मरीचिकाजले न विद्यते। अविद्याया चैतन्यप्रतिबिम्बने बाधकं नास्ति, अविद्या न मरीचिकाजलम्। अतः प्रतिबिम्बग्रहणे प्रयोजकं स्वच्छत्वमविद्यायामस्ति, उपाधेः स्वच्छत्वं फलमात्रोन्नेयम्। यस्मिन्नुपाधौ प्रतिबिम्बो न जायते स न स्वच्छः, यत्र जायते स स्वच्छः। अतो यावदुपाधिषु एकं स्वच्छत्वमनुगतं वक्तुं न शक्यते। अविद्यायां चित्प्रतिबिम्बो जायते अतः फलोन्नेयं स्वच्छत्वम् अविद्यायां वर्तते। अतोऽविद्यायाः स्वच्छत्वाभावात् न तत्र चित्प्रतिबिम्ब इत्यपि निरस्तम्। फलोन्नेयं स्वच्छत्वमविद्यायां वर्तते। यच्चोक्तमविद्यायां चिदाभिमुख्यं नास्तीति तत्रेयं जिज्ञासा सर्वात्मना चिदाभिमुख्याभावो वा विवक्षितः? आभिमुख्यमात्राभावो वा विवक्षितः? नाद्यः, अविद्यायाश्चैतन्यवदविभुत्वपक्षे सर्वात्मना चिदाभिमुख्य-

न च—मुखप्रतिमुखानुगतमुखत्वातिरिक्तमुखमात्ररूपव्यक्त्यन्तरस्येव जीवब्रह्मानुगतचित्त्वातिरिक्तचिन्मात्ररूपस्याज्ञानाश्रयत्वयोग्यव्यक्त्यन्तरस्याभावान्मुखमात्रसंबन्ध्यादर्शवच्चिन्मात्रसंबन्ध्यज्ञानमिति कथमिति—वाच्यम्; अपरामृष्टभेदस्य मुखादेर्मात्रार्थत्वेनानुगतधर्म्यतिरेकसंभवात् ॥१५॥

---

सम्भवात्। अविद्यायाश्चिदपेक्षया न्यूनपरिमाणत्वपक्षेऽपि न्यूनपरिणामस्य तडागादिजलस्य स्वापेक्षयाऽधिकपरिमाणाकाशादिप्रतिबिम्बोद्ग्राहित्वदर्शनात्। आभिमुख्याभावात् न प्रतिबिम्ब इति न युज्यते। न द्वितीयः, चैतन्यस्य सर्वव्यापित्वेन व्यवधानाभावात् चिदाभिमुख्यस्यापि सम्भवात्। यदि बिम्बोपाध्योर्देशविशेषस्थितिरेवाभिमुख्यमविद्याचैतन्ययोस्तदभावात् न अविद्यायां चित्प्रतिबिम्बनमित्यपि न युक्तम्, बिम्बोपाध्योर्देशविशेषस्थितिर्न अनुगतः कश्चिद्धर्मः। अतोऽननुगतदेशविशेषस्थितिर्नाभिमुख्यमित्यपि बोध्यम्। यच्च अविद्यायामाकाशादिरूपेण परिणतायां तत्र चित्प्रतिबिम्बो न स्थातुमर्हतीति तदप्यसंगतम्। यतोऽविद्याया आकाशादिरूपेण परिणामो न तत्र चित्प्रतिबिम्बविरोधी अविरोधित्वात्, परिणामेऽपि तत्र चित्प्रतिबिम्बानपायात्। यथा स्फटिकशिलायाश्चूर्णरूपेण परिणामे न तत्र प्रतिबिम्बो जायते अतस्तस्यं चूर्णरूपपरिणामः प्रतिबिम्बविरोधीति निश्चीयते, किन्तु तस्या एव स्फटिकशिलायाः पात्रविशेषादिरूपेण परिणामेऽपि प्रतिबिम्बो जायते, पूर्वप्रतिबिम्बोऽपि तिष्ठति; अतस्तस्याः पात्रविशेषपरिणामः न प्रतिबिम्बविरोधी एवम् अविद्यायां गगनादिरूपेण परिणामोऽपि न चित्प्रतिबिम्बविरोधीति बोध्यम्।

यथा दर्पणाद्युपाधिसम्बन्धान्मुखमात्रं बिम्बप्रतिबिम्बभावेन भिद्यते एवमनाद्यविद्योपाधिसम्बन्धाच्चैतन्यमात्रं बिम्बप्रतिबिम्बभावेन भिद्यते इति सिद्धान्त्युक्तमसंगतम्; बिम्बप्रतिबिम्बमुखानुगतमुखत्वातिरिक्तमुखमात्रस्याभाववत् बिम्बप्रतिबिम्बचिदनुगतचित्त्वातिरिक्तचिन्मात्रस्य धर्मिणोऽभावात् चिन्मात्रसम्बन्ध्यविद्येति रिक्तं वचः, चिन्मात्रवस्तुनोऽनिरूपणादिति शङ्कते—न च मुखप्रतिमुखानुगतमुखत्वातिरिक्तमुखमात्ररूपव्यक्त्यन्तरस्येव जीवब्रह्मानुगतचित्त्वातिरिक्तचिन्मात्रस्य अज्ञानाश्रयत्वयोग्यव्यक्त्यन्तरस्या-

ननु—उपाधिः प्रतिबिम्बपक्षपातीति सामान्यव्याप्तेरज्ञानं स्वाश्रय एव भ्रान्त्यादिहेतुरिति विशेषव्याप्त्या बाध इति—चेत्; न विशेषव्याप्तिग्राहकसहचारदर्शनस्य विवादविषयातिरिक्तेऽसंभवेन विशेषव्याप्त्यसंभवात् ॥१६॥

---

भावात् मुखमात्रसम्बन्ध्यादर्शवत् चिन्मात्रसम्बन्धज्ञानमिति कथमिति वाच्यम्। बिम्बमुखप्रतिबिम्बमुखानुगतं मुखत्वसामान्यमेवास्ति, मुखत्वसामान्याश्रयबिम्बप्रतिबिम्बातिरिक्तं व्यक्त्यन्तरं नास्ति यत् मुखमात्रं भवेत्, मुखमात्रस्य धर्मिणोऽभावे किं सम्बन्धी दर्पणः स्यात्। एवमेव जीवब्रह्मानुगतचित्त्वधर्मातिरिक्तचिन्मात्रस्य धर्मिणोऽभावे किं सम्बन्धिनी अविद्या स्यात्। मुखमात्रं चिन्मात्रम् इत्यत्र मात्रपदेन प्रतिपाद्यं किम्? बिम्बप्रतिबिम्बमुखातिरिक्तं मुखमात्रं यथा नास्ति एवमेव जीवब्रह्मातिरिक्तं चिन्मात्रं नास्तीत्यभिप्रायः।

बिम्बत्वप्रतिबिम्बत्वविशिष्टमुखे भिन्नेऽपि ते मुखान्न भिद्येते, अतः परामृष्टभेदान्मुखात् अपरामृष्टभेदं मुखं भिन्नमित्याह सिद्धान्ती—**अपरामृष्टभेदस्य मुखादेर्मात्रार्थकत्वेन अनुगतधर्मातिरेकसम्भवात्।** परामृष्टभेदाभ्यां बिम्बप्रतिबिम्बमुखाभ्यामपरामृष्टभेदं मुखं भिन्नम्। यन्मुखं बिम्बत्वप्रतिबिम्बत्वाभ्यामनाक्रान्तं तदेवं मुखमात्रम्। एवमेव बिम्बत्वप्रतिबिम्बत्वाभ्यामपरामृष्टचैतन्यं चिन्मात्रम्। तदेवोपाधिसम्बन्धीति न दोषः। यच्चोक्तमनुगतधर्मातिरिक्तं मात्रपदप्रतिपाद्यं नास्तीति तन्मन्दम्; मुखमात्रस्य चिन्मात्रस्य च दर्शितत्वादिति बिम्बप्रतिबिम्बमुखे परस्परं भिन्नेऽपि ते मुखान्न भिद्येते। परस्परव्यावृत्तयोरनुवृत्तं भिन्नमित्यर्थः ॥१५॥

१६—विशेषव्याप्त्या सामान्यव्याप्तेर्बाधात् उपाधिः प्रतिबिम्बपक्षपातीति सामान्यव्याप्तेरज्ञानं स्वाश्रये एव भ्रान्त्यादिजनकमिति विशेषव्याप्त्या बाधः स्यादिति शङ्कते—ननु उपाधिप्रतिबिम्बपक्षपातीति सामान्यव्याप्तेरज्ञानं स्वाश्रय एव भ्रान्त्यादिहेतुरिति विशेषव्याप्त्या बाध इति चेत्। अनादिभावो न निवर्तते इति सामान्यव्याप्तिः यथा अज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्त्या बाध्यते इति सिद्धान्तिना स्वीक्रियते एवमेव उपाधिः प्रतिबिम्बपक्षपातीति सामान्यव्याप्तिः अज्ञानं स्वाश्रये एव भ्रान्त्यादिजनकमिति विशेषव्याप्त्या बाध्यते।

न च बन्धस्य चिन्मात्राश्रितमोक्षसामानाधिकरण्याद्यनुपपत्तिः; अवच्छेद्यांशमादाय सामानाधिकरण्यस्योक्तत्वात् ॥१७॥

---

अज्ञानस्य स्वाश्रये भ्रान्त्यादिजनकत्वे सिद्धे चिन्मात्राश्रितमज्ञानमिति न सिद्ध्येदिति भावः ।

सहचारदर्शनस्थलस्य विवादग्रस्तत्वात् सहचारदर्शनाभावे विशेषव्याप्तिरेवासिद्धेति समाधत्ते—न, **विशेषव्याप्तिग्राहकसहचारदर्शनस्य विवादविषयतातिरिक्तेऽसम्भवेन विशेषव्याप्त्यसम्भवात्।** निश्चिता विशेषव्याप्तिः सामान्यव्याप्तेर्बाधिका स्यात्; अगृहीता विशेषव्याप्तिः कथं सामान्यव्याप्तेर्बाधिका भवेत्। अज्ञानं स्वाश्रये एव भ्रान्त्यादिजनकं भवतीति व्याप्तिः कुत्र गृहीता इति वाच्यम्। सहचारदर्शनं विना व्याप्तिर्ग्रहीतुं न शक्यते। सहचारदर्शनस्थलमपि उभयसम्मतं वाच्यम्, विवादास्पदीभूतस्थले सहचारदर्शनमकिञ्चित्करम्। अज्ञानं स्वाश्रये एव भ्रान्त्यादिजनकमिति व्याप्तिः सिद्धान्तिना नाङ्गीक्रियते। अज्ञानाश्रयः शुद्धचैतन्यं भ्रान्त्यादेराश्रयस्तु प्रतिबिम्बरूपं जीवचैतन्यम्। जीवचैतन्यं तु नाज्ञानाश्रयः। अतो विवादग्रस्तस्थलादन्यत् स्थलान्तरं नास्ति यत्र पूर्वपक्षिसम्मता विशेषव्याप्तिर्गृह्येत। अतोऽसिद्धविशेषव्याप्त्या न सिद्धायाः सामान्यव्याप्तेर्बाध इति ॥१६॥

१७—बन्धमोक्षयोर्वैयधिकरण्यमाशङ्क्य समाधत्ते—न च बन्धस्य **चिन्मात्राश्रितमोक्षसामानाधिकरण्याद्यनुपपत्तिः अवच्छेद्यांशमादाय सामानाधिकरण्यस्य उक्तत्वात्।** सिद्धान्ते बन्धस्य जीवाश्रितत्वात् मोक्षस्य च चिन्मात्राश्रितत्वात् न बन्धमोक्षयोः सामानाधिकरण्यम्, अन्यो बद्धः अन्यश्च मुक्त इति स्यात्। 'तथा च एका निषादी तनयं प्रसूते अन्यो निषादस्तु कषायपायीति न्यायापातः।' समाधत्ते—अवच्छेद्यांशमादाय समानाधिकरण्यस्योक्तत्वात्। उक्तञ्च सामानाधिकरण्यञ्च अवच्छेद्यांशैक्यमादाय। [अद्वैतसिद्धिः, पृ०, ५७८, निर्णयसागरसंस्करणम्] अज्ञो ज्ञातेति प्रतीतिव्यपदेशयोः सामानाधिकरण्योपपादनावसरे इतः प्रागेवोक्तम्। अविद्यावच्छिन्नचैतन्येन शुद्धचैतन्यस्य तादात्म्यात्। रोगी अरोगः, निर्धनो धनी, मूर्खो विद्वान् इत्यादिषु

ननु—उपाधेः प्रतिबिम्बपक्षपातित्वं तत्र स्वधर्मप्रतिभासकत्वं वा, स्वकार्यप्रतिभासकत्वं वा, स्वकार्यनिष्ठधर्मप्रतिभासकत्वं वा, प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वं वा। नाद्यः; सुषुप्त्याद्यनुवृत्तस्या-विद्यारूपस्याविद्यावच्छिन्नत्वरूपस्य वा, तत्प्रतिबिम्बितत्वस्य वा, सुषुप्तादावननुवृत्तस्य कर्तृत्वप्रमातृत्वादिरूपस्या वा संसारस्याज्ञाननिष्ठ-त्वाभावात्, ज्ञानक्रियासंस्कारादीनां त्वन्मते अज्ञाननिष्ठत्वेऽपि नित्या-तीन्द्रियाणां तेषामात्मनि कदाप्यप्रतीतेः। 'अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः'। इति त्वन्मतेऽपि अविद्या बन्धिका बन्धो वा, न तु बद्धा, येन स्वनिष्ठबन्धरूपधर्मसंक्रामकत्वं स्यात्। न द्वितीयः; विच्छेदादेरुपाधिकार्यस्य बिम्बे महाकाशे च दर्शनात्, मुखस्य बिम्ब-त्वादेर्ब्रह्मस्थसार्वज्ञ्यादेश्चानौपाधिकत्वापाताच्च। नापि तृतीयचतुर्थौ; दर्पणघटादावदृष्टेः। एवं बुद्धिरूपोपाधिरपि न प्रतिबिम्बपक्षपा-तीति—चेत् ॥१८॥

---

सर्वत्र एषैव गतिः। एवमेव पक्षः साध्यवान् इत्यत्रापि एषैव गति-रूहनीया इति ॥१७॥

१८—उपाधेः प्रतिबिम्बपक्षपातित्वमुक्तं विवरणे, सिद्धान्तिनापि तदेव समर्थितम्, तत् प्रतिबिम्बपक्षपातित्वमुपाधेर्विकल्प्य दूषयन्नाह पूर्वपक्षी—ननु उपाधेः प्रति-बिम्बपक्षपातित्वम्, तत्र स्वधर्मप्रतिभासकत्वं वा? स्वकार्यप्रतिभास-कत्वं वा? स्वकार्यनिष्ठधर्मप्रतिभासकत्वं वा? प्रतिबिम्बं प्रति स्ववि-षयाच्छादकत्वं वा? नाद्यः, सुषुप्त्याद्यनुवृत्तस्य अविद्यारूपस्य अविद्या-वच्छिन्नत्वरूपस्य वा? तत्प्रतिबिम्बितत्वस्य वा? सुषुप्त्यादौ अननु-वृत्तस्य कर्तृत्वप्रमातृत्वादिरूपस्य वा? संसारस्य अज्ञाननिष्ठत्वाभावात्, ज्ञानक्रियासंस्कारादीनां त्वन्मतेऽज्ञाननिष्ठत्वेऽपि नित्यातीन्द्रियाणां तेषामात्मनि कदाप्यप्रतीतेः। "अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः" इति त्वन्मतेऽपि अविद्या बन्धिका बन्धो वा न तु बद्धा, येन स्वनिष्ठबन्धरूपधर्मसंक्रामकत्वं स्यात्। न द्वितीयः, विच्छे-दादेरुपाधिकार्यस्य बिम्बे महाकाशे च दर्शनात्। मुखस्य बिम्बत्वा-

देर्ब्रह्मस्थसार्वज्ञ्यादेश्च अनुपाधिकत्वापाताच्च । नापि तृतीयचतुर्थौ, दर्पणघटादौ अदृष्टेः । एवं बुद्धिरूपोपाधिरपि न प्रतिबिम्बपक्षपातीति चेत् । यदुक्तं सिद्धान्तिना उपाधेः प्रतिबिम्बपक्षपातित्वमिति किं तत् प्रतिबिम्ब-पक्षपातित्वमिति प्रतिबिम्बपक्षपातित्वं चतुर्धा विकल्प्य दूषयन्नाह पूर्ववादी—स्वधर्मप्रतिभासकत्वं वा इति । उपाधिः प्रतिबिम्बे स्वधर्मं—उपाधिधर्मं प्रतिभासयति इति किम् उपाधेः पक्षपातित्वम् ? अथ वा प्रतिबिम्बे उपाधिः स्वकार्यं प्रतिभासयति इति वा ? अथ वा उपाधिः प्रतिबिम्बे उपाधि-कार्यनिष्ठधर्मं प्रतिभासयति ? अथ वा उपाधिः प्रतिबिम्बं प्रति स्वविषयम् आच्छादयति—इति चतुर्षु पक्षेषु प्रथमः पक्षोऽसङ्गत एव । अविद्याया उपाधित्वात् अविद्यागता धर्मा एव प्रतिबिम्बे जीवे भासन्ते इत्यभ्युपगमे चित्प्रतिबिम्बे जीवे चिद्रूपत्वव्यतिरिक्तानि यानि रूपाणि भासन्ते तानि सर्वाण्येव आविद्यकानि, अविद्याया रूपाणि वक्तव्यानि । जाग्रदाद्य-वस्थासु तिसृष्वपि अविद्यावच्छिन्नत्वमविद्याप्रतिबिम्बितत्वञ्च चित्प्रतिबिम्बे जीवे भासते । अथ च एतत् रूपद्वयम् उपाधौ अविद्यायां नास्ति, न हि अविद्या अविद्यावच्छिन्ना नाप्यविद्याप्रतिबिम्बिता । अथ च उपाधौ अविद्यमानं रूपद्वयं प्रतिबिम्बे भासते । अतः प्रतिबिम्बे यावन्ति रूपाणि भासन्ते तावन्ति उपाधिगतान्येव इति वक्तुं न शक्यते । किञ्च यथा अविद्यावच्छिन्नत्वम् अविद्या-प्रतिबिम्बितत्वं सर्वावस्थासु जीवे वर्तते, तथा कर्तृत्वप्रमातृत्वधर्मौ जाग्रदवस्थायां जीवे वर्तेते, न च तौ उपाधिरूपायाम् अविद्यायां स्तः । एवञ्च प्रतिबिम्बस्य यावन्तो धर्मास्ते उपाधौ वर्तन्ते इति वक्तुं न शक्यते । एवम् उपाधिगता यावन्तो धर्माः प्रतिबिम्बे भासन्ते [ते उपाधौ वर्तते] इत्यपि वक्तुं न शक्यते । यतः ज्ञानजन्यसंस्कारस्य भावनाख्यस्य क्रियाजन्यसंस्कारस्य धर्माधर्माख्यस्य अविद्यायां विद्यमानत्वेऽपि न ते संस्काराः प्रतिबिम्बे जीवे भासन्ते संस्काराणामतीन्द्रियत्वात् । अविद्यासम्बन्धादेव जीवो बद्ध इत्युच्यते, न च अविद्यायां बन्धो वर्तते । अविद्या बन्धिका बन्धरूपा वा न तु अविद्याऽपि बद्धा भवितुमर्हति । अविद्यायां बन्धाभावे जीवस्य बन्धः न आविद्यकः इति 'सा च बन्ध उदाहृत' इति त्वद्वाक्यात् अविद्यैव बन्धः, बन्धपदं भावव्युत्पत्त्या [बन्धनस्य]करणव्युत्पत्त्या वा बन्धजनकस्य प्रतिपादकं न तु कर्मव्युत्पत्त्याबन्धस्य

बद्धस्य प्रतिपादकं भवितुमर्हति। यदि अविद्यैव बद्धा स्यात्, तर्हि प्रतिबिम्बे जीवे स्वधर्मस्य बन्धस्य आसंजिका भवेत्, न तु अविद्या बद्धा इति प्रथमः पक्षोऽसंगत एव। एवं द्वितीयपक्षोऽपि असंगत इत्याह—न द्वितीय इति। यदि उपाधिः प्रतिबिम्बे एवं स्वकार्यमवभासयतीति उपाधिः प्रतिबिम्बपक्षपातीत्युच्यते, तर्हि प्रतिबिम्बभिन्ने स्वकार्यम् नावभासयतीत्यर्थो लभ्यते। तन्न, जलरूपे उपाधौ प्रतिबिम्बिताकाशस्य महाकाशाद् विच्छेदोऽनुभूयते, उपाधिवशादेव महाकाशं प्रतिबिम्बाकाशाद् विच्छिन्नमनुभूयते। विच्छेदो यदि विभागः, अथ वा भेदः? किं वा पृथक्त्वं? यदि विभागस्तर्हि विभागस्य द्विष्ठत्वात् यथा प्रतिबिम्बाकाशे तथा महाकाशेऽपि विभागो वर्तते, बिम्बप्रतिबिम्बयोरुभयत्र स्वकार्यविभागावभासकत्वात् प्रतिबिम्बपक्षपातित्वमुपाधेर्विहन्यते। यदि उच्येत विच्छेदो भेदः, भेदस्य अनादित्वात् न भेदस्य उपाधिकार्यत्वम्, किञ्च बिम्बप्रतियोगिकभेदः उपाधावपि वर्तते अतः प्रतिबिम्बे बिम्बभेदः उपाधिप्रयुक्त एव भासते, अत उपाधेः प्रतिबिम्बपक्षपातित्वमक्षतमिति। तन्न; उपाधिर्यदि बिम्बपक्षपाती न स्यात् तर्हि मुखस्य बिम्बत्वं ब्रह्मणः सर्वज्ञत्वमनौपाधिकमेव स्यात्। उपाधेर्बिम्बपक्षपातित्वाभावात्। तथा च बिम्बत्वसर्वज्ञत्वयोरनौपाधिकत्वेऽद्वैतिनां सिद्धान्तहानिः स्यात्। अत उपाधेः प्रतिबिम्बे एव स्वकार्यावभासकत्वेन प्रतिबिम्बपक्षपातित्वं निरस्तम्। उपाधेः प्रतिबिम्बे स्वकार्यगतधर्मावभासकत्वेन प्रतिबिम्बपक्षपातित्वमिति तृतीयोऽपि पक्षोऽसङ्गतः, दर्पणघटादौ अदृष्टेः। मुखप्रतिबिम्बे ह्युपाधिर्दर्पणः गगनविच्छेदावभासे उपाधिर्घटः। दर्पणस्योपाधेः प्रतिबिम्बमुखे स्वकार्यगतधर्मस्यानवभासकत्वात्। घटोपाधेश्च गगनविच्छेदे स्वकार्यगतधर्मस्यानवभासकत्वाच्च। दर्पणघटयोर्द्वयोरुपाध्योः उपादाने न्यायामृतकारस्य अयमभिप्रायः—उपाधिर्द्विविधः प्रतिबिम्बनोपाधिः विच्छेदोपाधिश्च। प्रतिबिम्बनोपाधिर्दर्पणः, विच्छेदोपाधिर्घट इति। एवं चतुर्थोऽपि पक्षोऽसंगत एव दर्पणघटयोरुपाध्योः प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वाभावात्। दर्पणघटयोर्विषय एव अप्रसिद्धः तयोर्निर्विषयकत्वात्। अत उपाधेः प्रतिबिम्बपक्षपातित्वं यदुक्तं तदसंगतमेव। अविद्याया उपाधित्वमनभ्युपगम्य अन्तःकरणस्य उपाधित्वाभ्युपगमेऽपि प्रदर्शिता दोषा एव स्युः। अविद्यायां चित्प्रतिबिम्बो जीव इत्युक्त्वा अन्तःकरणे चित्प्रतिबिम्बो जीव इत्यभ्युपगमेऽपि

न; अतिशयेन कार्यंकरत्वमेव तत्पक्षपातित्वम्। तथा च विच्छेदादिरूपकार्यंकरत्वसाम्येऽपि स्थौल्याद्यवभासरूपकार्यंकरत्वेन दर्पणादेः प्रतिबिम्बपक्षपातित्ववत् कर्तृत्वभोक्तृत्वादिसंसाररूपकार्यंकरत्वेनाविद्यायामपि प्रतिबिम्बपक्षपातित्वोपपत्तेः। यत्तूक्तं मुखादिगतं बिम्बत्वं ब्रह्मगतं सार्वज्ञ्यादिकं चानौपाधिकं स्यादिति। तन्न; उपाधौ बिम्बकार्यकरत्वमेव नेतीति न ब्रूमः, किंतु प्रतिबिम्बे अतिशयेनेति। यदपि बुद्धिरूपोपाधेरपि न प्रतिबिम्बपक्षपातित्वम्, तस्य प्रतिबिम्बापक्षपातिजपाकुसुमस्थानीयत्वेन तत्पक्षपात्यादर्शस्थानीयत्वाभावादिति। तन्न; स्वनिष्ठस्थौल्यावभासकत्वेनादर्शस्येवास्यापि स्वनिष्ठधर्मावभासकत्वेन तद्वत् पक्षपातित्वसंभवात्। तस्मादविद्याकृतविच्छेदेन ब्रह्मण्येव नित्यमुक्तत्वसंसारित्वसर्वज्ञत्वकिंचिज्ज्ञत्वादिव्यवस्थोपपत्तिः ॥१९॥

---

पूर्वोक्ता एव दोषाः स्युरिति। तथा च उपाधेः प्रतिबिम्बपक्षपातित्वं यदुक्तं सिद्धान्तिना तदसंगतमेव ॥१८॥

१९—स्वकपोलकल्पितम् अर्थमुपादाय दोषप्रदर्शनेऽपि सिद्धान्तिसम्मतार्थे दोषाभावादित्याह सिद्धान्ती—न, अतिशयेन कार्यकरत्वमेव तत्पक्षपातित्वम्। तथा च विच्छेदादिरूपकार्यकरत्वसाम्येऽपि स्थौल्याद्यवभासरूपकार्यकरत्वेन दर्पणादेः प्रतिबिम्बपक्षपातित्ववत् कर्तृत्वभोक्तृत्वादिसंसाररूपकार्यकरत्वेन अविद्यायामपि प्रतिबिम्बपक्षपातित्वोपपत्तेः। यत्तूक्तं मुखादिगतं बिम्बत्वं ब्रह्मगतं सार्वज्ञ्यादिकञ्च अनुपाधिकं स्यादिति। तन्न, उपाधौ बिम्बकार्यकरत्वमेव नास्तीति न ब्रूमः किन्तु प्रतिबिम्बे अतिशयेनेति। यदपि बुद्धिरुपोपाधेरपि न प्रतिबिम्बपक्षपातित्वं, तस्य प्रतिबिम्बापक्षपातिजपाकुसुमस्थानीयत्वेन तत्पक्षपात्यादर्शस्थानीयत्वाभावात् इति तन्न स्वनिष्ठस्थौल्यावभासकत्वेन आदर्शस्येव अस्यापि स्वनिष्ठधर्मावभासकत्वेन तद्वत् पक्षपातित्वसम्भवात्। तस्मादविद्याकृतविच्छेदेन ब्रह्मण्येव नित्यमुक्तत्वसंसारित्वसर्वज्ञत्वकिञ्चिज्ज्ञत्वादिव्यवस्थोपपत्तिः। प्रतिबिम्बे एव उपाधेरतिशयितकार्यकरत्वात् प्रतिबिम्बपक्षपातित्वमुक्तम्, न तु उपाधेर्बिम्बे कार्यकरत्वमेव

नास्तीति नेत्र्म ब्रूमः। उपाधेर्बिम्बे कार्यकरत्वेऽपि प्रतिबिम्बे एवातिशयितकार्य-करत्वेन प्रतिबिम्बपक्षपातित्वमुक्तम्। यदपि दर्पणाद्युपाधेर्बिम्बे प्रतिबिम्बे च विच्छेदादिकार्यकरत्वं समानमिति तदस्माकमपि सम्मतम्, दर्पणाद्युपाधेर्बिम्बे कार्यकरत्वेऽपि प्रतिबिम्बे स्थौल्याद्यवभासहेतुत्वेन प्रतिबिम्बे अतिशयित-कार्य करत्वेन प्रतिबिम्बपक्षपातित्वमुक्तम्। दर्पणाद्युपाधेः प्रतिबिम्बेऽतिशयित-कार्यकरत्ववद् अविद्योपाधिरपि प्रतिबिम्बे कर्तृत्वभोक्तृत्वादिसंसाररूपकार्य-करत्वेनाविद्योपाधेः प्रतिबिम्बपक्षपातित्वमुपपद्यते। यदपि मुखादिगतं बिम्बत्वं ब्रह्मगतं सार्वज्ञ्यादिकमनौपाधिकं स्यादिति तन्न उपाधेर्बिम्बे कार्यकरत्वेऽपि अतिशयितकार्यकरत्वं प्रतिबिम्बे एवेति ब्रूमः। तथा च बिम्बत्वं सार्वज्ञ्यादिकञ्च औपाधिकमेव। सिद्धिकृता पूर्ववादिप्रदर्शितपक्षचतुष्टयमनभ्युपगम्य कश्चन पञ्चमः पक्षः स्वीकृतः। लघुचन्द्रिकाकृता पूर्वपक्षिप्रदर्शितचतुर्थपक्षोऽपि समर्थितः, उपाधेः प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वं प्रतिबिम्बपक्षपातित्वम्। यद्यपि चतुर्थे पक्षे दर्पणघटाद्युपाधौ दोषः प्रदर्शितः दर्पणघटादेर्नि-र्विषयत्वादिति तथापि दर्पणघटादेर्निर्विषयत्वेऽपि अविद्योपाधेः स्वविषय-त्वात् सर्वेषु उपाधिषु एकजातीयं प्रतिबिम्बपक्षपातित्वं नास्ति, विजातीयेषु उपाधिषु प्रतिबिम्बपक्षपातित्वमपि विजातीयमेव। अविद्योपाधिप्रतिबिम्बं प्रत्येव स्वविषयमावृणोति न बिम्बेश्वरं प्रति, ईश्वरं प्रति अविद्याया आवरणाभावात् नेश्वरे भ्रान्तिलेशोऽपीति; प्रतिबिम्बं जीवं प्रति अविद्योपाधिना स्वविषयावरणात् जीवस्य भ्रान्तिः रागद्वेषादिरूपः संसार इति भावः। यच्च अतिशयितकार्य-करत्वमेव उपाधेः प्रतिबिम्बपक्षपातित्वमुक्तं सिद्धिकृता तत्र किमिदमतिशयित-कार्यम्? तत् किं बिम्बनिष्ठकार्यसंख्यापेक्षया प्रतिबिम्बनिष्ठं कार्यमधिकसंख्यक-मुच्यते। अथ वा बिम्बनिष्ठकार्यापेक्षया प्रतिबिम्बनिष्ठं कार्यं विलक्षणमिति अतिशयितकार्यमुच्यते। तत्र नाद्यः पक्षो युज्यते, बिम्बप्रतिबिम्बनिष्ठकार्याणां संख्यातारतम्यम् अद्वैतवादिना कथं निरूप्येत। उभयनिष्ठकार्याणां संख्या न केनापि गणयितुं शक्यते। द्वितीयपक्षोऽपि असंगतः बिम्बनिष्ठकार्यात् प्रति-बिम्बनिष्ठकार्यस्य वैलक्षण्यमात्रेण यदि उपाधेः प्रतिबिम्बपक्षपातित्वं स्यात्तर्हि उपाधेर्बिम्बपक्षपातित्वमपि कथं न स्यात्? प्रतिबिम्बनिष्ठकार्यापेक्षया बिम्बनिष्ठ-

कार्यस्यापि वैलक्षण्यात्। अन्तिमः पक्ष एव युज्यते इति ब्रूमः। अतिशयितकार्यमपि बिम्बनिष्ठकार्यापेक्षया प्रतिबिम्बनिष्ठं कार्यं विलक्षणमित्येव। प्रतिबिम्बं प्रति स्वविषयावरणमेव अविद्योपाधेर्विलक्षणं कार्यम्। एतच्च विलक्षणं कार्यं प्रतिबिम्बे एव न बिम्बे; अतो विलक्षणकार्यमेवातिशयितकार्यम्, तत्करत्वादुपाधेः प्रतिबिम्बपक्षपातित्वम्। अतः सिद्धमिदं यत् पूर्वपक्षिणा चतुर्थपक्षतया उपन्यस्तं यच्च सिद्धिकृता पञ्चमपक्षतया उपन्यस्तं तदेकमेव। सिद्धिकृतोक्तपक्षस्य समीक्षणे कृते पूर्वपक्ष्युक्तचतुर्थपक्ष एव पर्यवसानं भवेत्। प्रतिबिम्बपक्षपातित्वसिद्धान्तस्यायमेव निर्यासः। विवरणेऽपि यत् प्रतिबिम्बपक्षपातित्वमुक्तं तस्यापि अयमेवाभिप्रायः।

यदपि पूर्वपक्षिणा उक्तम् अविद्याया यथा नोपाधित्वम् एवमन्तःकरणस्यापि उपाधित्वं न सम्भवति, बुद्धेः प्रतिबिम्बपक्षपातित्वाभावात् प्रतिबिम्बपक्षपातिदर्पणादेरिव बुद्धेस्तदभावात्। जपाकुसुमादिवत् बुद्धेरुपाधित्वेऽपि प्रतिबिम्बपक्षपातित्वाभावात्। स्फटिकलौहित्ये जपाकुसुमम् उपाधिरपि न प्रतिबिम्बपक्षपाति, यतः स्फटिकलौहित्यं न जपाकुसुमप्रतिबिम्बरूपं किन्तु आभासः। आभासप्रतिबिम्बयोर्महत् वैलक्षण्यम्, प्रतिबिम्बोऽव्याप्यवृत्तिः आभासस्तु व्याप्यवृत्तिः। जपाकुसुमसान्निध्यात् स्फटिकस्य सर्वतो भावेन रक्तिमा जायते, दर्पणे मुखप्रतिबिम्बस्तु न दर्पणव्यापी किन्तु दर्पणैकदेशवृत्तिः। स्फटिकलौहित्यस्य प्रतिबिम्बत्वाभावात् जपाकुसुमं न प्रतिबिम्बपक्षपाति; बुद्धिरूपोपाधिरपि जपाकुसुमस्थानीयः। अतः सोऽपि न प्रतिबिम्बपक्षपाती भवितुमर्हतीति। यथा दर्पणाद्युपाधिर्न तथा बुद्ध्युपाधिरिति पूर्वः पक्षः। समाधत्ते—तन्नेति। दर्पणाद्युपाधिर्यथा प्रतिबिम्बे स्वगतस्थौल्यमालिन्यादिधर्मस्य अवभासको भवति एवं बुद्ध्युपाधिरपि प्रतिबिम्बे जीवे स्वगतकर्तृत्वादिधर्मस्य अवभासको भवति जपाकुसुमं तु स्फटिकलौहित्ये स्वगतस्थौल्यादिधर्माणां नावभासकम्। अतः स्फटिकलौहित्यं न प्रतिबिम्बः। बुद्धिर्न जपाकुसुमस्थानीया यतः बुद्धिप्रतिबिम्बितचैतन्ये बुद्धिगतधर्माणामवभासात् बुद्धिप्रतिबिम्बपक्षपातिन्येव। अतो विशुद्धचैतन्यमविद्योपाधिसम्बन्धात् बिम्बप्रतिबिम्बभावेन भिद्यते। तथा च बिम्बचैतन्ये ईश्वरे नित्यमुक्तत्वं प्रतिबिम्बे जीवे संसारित्वम् एवं बिम्बेश्वरे सर्वज्ञत्वं प्रतिबिम्बे जीवे किञ्चिज्ज्ञत्वं भासते। अतो जीवेश्वरव्यवस्थाया न काप्यनुपपत्तिः ॥१९॥

एतेन—असर्वज्ञत्वादिनानुभवसिद्धाज्जीवात् अन्यस्य चेतनस्याभावेन सार्वज्ञ्यादिश्रुतिर्निर्विषया स्यात्, एकजीववादे संसार्यसंसारिव्यवस्थाऽयोगात् 'द्वा सुपर्णा' 'य आत्मनि तिष्ठन्' इत्यादिश्रुतिभिः 'अन्यश्च परमो राजन् तथाऽन्यः पञ्चविंशकः। तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप' इत्यादिस्मृतिभिः 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'भेदव्यपदेशाच्च' इत्यादिसूत्रैः 'तस्माच्छारीरादन्य एवेश्वरः। आत्मानौ तावेतौ चेतनौ एकः कर्ता भोक्ता अन्यस्तद्विपरीतोऽपहतपाप्मत्वादिगुण' इत्यादिभाष्यैः 'तत्त्वज्ञानसंसरणे चावदातत्वश्यामत्वादिवत् नेतरेतरत्रावतिष्ठेते' इत्यादिविवरणग्रन्थैश्च विरोध इति—निरस्तम् ॥२०॥

---

२०—जीवेश्वरव्यवस्थाया उपपन्नत्वात् यदुक्तं पूर्वपक्षिणा तदपि निरस्तमित्याह सिद्धान्ती—एतेन असर्वज्ञत्वादिना अनुभवसिद्धाज्जीवात् अन्यस्य चेतनस्याभावेन सार्वज्ञ्यादिश्रुतिर्निर्विषया स्यात्। एकजीववादे संसार्य्यसंसारिव्यवस्थाऽयोगात्। 'द्वा सुपर्णा', 'य आत्मनि तिष्ठन्' 'अन्यश्च परमो राजन् तथा अन्यः पञ्चविंशकः' 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप' इत्यादिश्रुतिभिः 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते,' "भेदव्यपदेशाच्च" इत्यादिसूत्रैः तस्माच्छारीरादन्य एव ईश्वरः। आत्मानौ तावेतौ चेतनौ एकः कर्ता भोक्ता अन्यस्तद्विपरीतोऽपहतपाप्मत्वादिगुणः इत्यादिभाष्यैः तत्त्वज्ञानसंसरणे चावदातत्वश्यामत्वादिवत् नेतरेतरत्रावतिष्ठते इत्यादिविवरणग्रन्थैश्च विरोध इति निरस्तम्। शुद्धचैतन्येऽनाद्यविद्यासम्बन्धात् बिम्बप्रतिबिम्बभावेन जीवेश्वरव्यवस्थाया उपपादितत्वात् पूर्वपक्ष्युत्प्रेक्षिता दोषा निरस्ता इत्याह—एतेनेति। पूर्वपक्षी मन्यते ब्रह्मैव स्वाविद्यया जीवभावेन संसरति चेत् असर्वज्ञादनुभवसिद्धाज्जीवाद् भिन्नं ब्रह्मैव नास्ति, ब्रह्मैव स्वविद्यया जीवरूपतां प्राप्तमतो ब्रह्मणः सार्वज्ञ्यादिप्रतिपादिका श्रुतयो निर्विषयाः स्युः। ब्रह्मणः सर्वात्मना जीवभावप्राप्तेः। किञ्च एकजीववादे संसारित्वासंसारित्वव्यवस्थाया अभावात् जीवेश्वरभेदप्रतिपादिन्यः 'द्वा सुपर्णा' [मु० ३।१।१], 'य आत्मनि तिष्ठन्' [माध्यन्दिन बृ० आ० ३।७।२२] इत्यादिश्रुतयो

ननु—चिन्मात्रस्याज्ञानं स्वाभाविकमौपाधिकं वा। नाद्यः, आत्मवदनिवृत्तिप्रसङ्गात्। नान्त्यः; स्वस्यैवोपाधित्वे आत्माश्रयात्, एतदपेक्षान्यापेक्षत्वे अन्योन्याश्रयात्, तदन्यान्यापेक्षत्वे चानवस्थानादिति—चेत्; न; स्वस्यैवाश्रयत्वोपाधित्वात्। न चात्माश्रयः; भेदस्य स्वभेद-

---

बाध्येरन्। एवमेव 'अन्यश्च परमो राजन् तथान्यः पञ्चविंशकः' 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप' [गीता—४।५ श्लो०] इत्यादिस्मृतयोऽपि बाध्येरन्। एवमेव "शरीरश्चोभयेऽपि हि भेदेनैनमधीयते" [ब्र० सू० १।२।२०], "भेदव्यपदेशाच्चान्यः" [ब्र० सू० १।१।२१] इत्यादीनि जीवेश्वरभेदप्रतिपादकानि ब्रह्मसूत्राणि बाध्येरन्। "तस्माच्छारीरादन्य एव ईश्वरः" इत्यादिशांकरभाष्यम् [१।२।२० सू०] विरुध्येत। तत्त्वज्ञानसंसरणेऽवदातत्वश्यामत्वादिवत् इत्यादिविवरणवाक्यम् [विवरणम्, पृ०, ४३, काशीविजयनगरसंस्करणम्] विरुध्येत। एतत् सर्वं पूर्वपक्ष्युक्तं निरस्तम्, अविद्यया विम्बप्रतिविम्बभावेन भेदात्। एकजीववादेऽपि जीवेश्वरभेदव्यवस्था तत्रैवोपपादिता विम्बप्रतिविम्बभावेन। श्रुतिस्मृतिसूत्रभाष्यविवरणानि अविद्याप्रयुक्तविम्बप्रतिविम्बभावेन जीवेश्वरभेदात् उपपन्नानीत्यर्थः ॥२०॥

२१—शुद्धचैतन्ये यदनाद्यज्ञानं सिद्धान्तिना स्वीकृतं तदज्ञानं स्वाभाविकमौपाधिकं वा उभयथापि दोषात् नाऽयं सिद्धान्तः साधुरिति पूर्वपक्षी शंकते—ननु चिन्मात्रस्य अज्ञानं स्वाभाविकमौपाधिकं वा ? नाद्यः, आत्मवदनिवृत्तिप्रसंगात्। नान्त्यः, स्वस्यैवोपाधित्वे आत्माश्रयात्। एतदपेक्षान्यापेक्षत्वेऽन्योन्याश्रयात्। तदन्यान्यापेक्षत्वे चानवस्थानादिति चेत्। शुद्धचैतन्याश्रितमज्ञानं स्वाभाविकम् औपाधिकं वा ? अज्ञानस्य स्वाभाविकत्वे आत्मवदज्ञानस्यानिवृत्तिप्रसंगः। स्वभावासिद्धमपि यदि निवर्तेत तर्हि स्वभावसिद्धस्यात्मनोऽपि निवृत्तिः स्यात्; स्वभावसिद्धत्वाविशेषादिति। नाप्यौपाधिकम् अविद्याया औपाधिकत्वे कस्तत्रोपाधिः ? यद्यविद्यैव तर्हि आत्माश्रयः स्यात् अविद्यायाः स्वसापेक्षसिद्धिकत्वात्। अन्योपाध्यपेक्षत्वे अन्योन्याश्रयः चक्रकम् अनवस्था वा स्यात्। अविद्यायाः स्वापेक्षत्वे आत्माश्रयः अन्योपाध्यपेक्षत्वे तयोः परस्परापेक्षायामन्योन्याश्रयः। एतदुपाधिद्वयातिरिक्त-

कत्ववदुपपत्तेः; स्वाभाविकस्यापि घटरूपस्य तत्प्रागभावस्य च निवृत्तिदर्शनात् ॥२१॥

इत्यद्वैतसिद्धौ अज्ञानस्य चिन्मात्राश्रयत्वोपपत्तिः ॥

---

तृतीयं वा चतुर्थं वा पञ्चमं वा उपाधिमपेक्ष्य तृतीयादीनां प्रथमापेक्षत्वे चक्रकं निरवधिकोपाधिपरम्परापेक्षायाम् अनवस्था स्यात् ।

अविद्याया औपाधिकत्वेऽपि सैवाविद्या उपाधिः, अविद्योपाधेः स्वपरनिर्वाहकत्वात् त्वन्मतसिद्धभेदवदिति समाधत्ते—न, स्वस्यैव आश्रयोपाधित्वात् । न च आत्माश्रयः भेदस्य स्वभेदकत्ववदुपपत्तेः । स्वाभाविकस्यापि घटरूपस्य तत्प्रागभावस्य च निवृत्तिदर्शनात् ।

इत्यद्वैतसिद्धौ अज्ञानस्य चिन्मात्राश्रयत्वोपपत्तिः ।

अविद्याया औपाधिकत्वे स्वाभाविकत्वे वा दोषाभावात् इत्याह सिद्धान्ती—अविद्याया औपाधिकत्वेऽपीति । अविद्याया औपाधिकत्वेऽपि स्वातिरिक्तोपाध्यनपेक्षत्वात्, चैतन्ये या अविद्याश्रयता सा अविद्योपाधिप्रयुक्ता । अविद्यैव अविद्याश्रयताया उपाधिः । न आत्माश्रयः, यथा पूर्वपक्षिमते भेदस्य भेदकत्वेऽपि नात्माश्रयः एवं प्रकृतेऽपीति । यथा भिद्यमानयोर्घटपटयोर्विद्यमानो भेदः घटात् पटो भिन्न इति प्रतीतेर्जनकः एवं भेदोऽपि घटपटाभ्यां भिन्नः इति प्रतीतेरपि जनकः । एक एव भेदः यथा घटात् पटस्य भेदप्रतीतिं जनयति एवं घटपटाभ्यामपि स्वस्य भेदप्रतीतिं जनयति । भेदः धर्मिप्रतियोगिभ्यां भिद्यमान एव, घटात् पटस्य भेदप्रतीतिं जनयति । भेदो धर्मिप्रतियोगिभ्यां भिन्न इति प्रतीतिनिर्वाहाय भेदान्तरं नापेक्ष्यते । धर्मिप्रतियोगिनोर्भेदप्रतीतिमुपजनयन् धर्मिप्रतियोगिभ्यामपि स्वस्य भेदजनने भेदान्तरं नापेक्ष्यते एवं प्रकृतेऽपीति । भेदस्य स्वपरनिर्वाहकत्वाभ्युपगमात् यथा नात्माश्रयः, एवमविद्याया अविद्याश्रयत्वे उपाधित्वात् उपाध्यन्तरमनपेक्ष्यैव अविद्याया औपाधिकत्वात् भेदवत् नात्माश्रयो दोषः ।

एवम् अविद्यायाः स्वाभाविकत्वेऽपि न दोषः, स्वाभाविकशब्दार्थो यदि आगन्तुककारणाजन्यो यदि वा अनादिरुभयथापि न दोषः इत्याह—घटरूपस्य

तत्प्रागभावस्य च निवृत्तिदर्शनादिति। आगन्तुककारणाजन्यत्वेन घटरूपं स्वाभाविकमपि यथा नश्यति यथा वा अनादिरपि प्रागभावो नश्यति एवं स्वाभाविकी अविद्यापि तत्त्वसाक्षात्कारात् नश्यतीति भावः। प्रागभावनिवृत्तिवत् ज्ञानेन अज्ञाननिवृत्तेरपि सर्वानुभवसिद्धत्वात् ॥२१॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्र-नाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्याम-ज्ञानस्य चिन्मात्राश्रयत्वोपपत्तिविवरणम्।

अथाज्ञानवादेऽविधायाः सर्वज्ञाश्रयत्वोपपत्तिः।

ननु—शुद्धब्रह्मणः चिन्मात्रस्याज्ञानाश्रयत्वे सार्वज्ञ्यविरोधः। न च—विशिष्ट एव सार्वज्ञ्यम्; 'तुरीयं सर्वदृक्सदा' इति शुद्धस्यैव सर्वज्ञत्वोक्तेरिति—चेत्; न, सर्वदृक्पदेन सर्वेषां दृग्भूतं चैतन्यमित्युच्यते;

---

१—विवरणसंक्षेपशारीरककृन्मतमाश्रित्य अनाद्यविद्याशुद्धचैतन्याश्रितेत्युक्तम्। शुद्धचैतन्यमेव अविद्याया आश्रयः न सविशेषब्रह्मचैतन्यम्, अविद्यासम्बन्धादेव शुद्धस्य ब्रह्मणः सविशेषत्वम्; अतः सविशेषचैतन्यं नाविद्याश्रयो भवितुमर्हतीत्युक्तम्।

श्रुतिस्मृत्यादिभिः शुद्धस्य ब्रह्मणः सर्वज्ञत्वप्रतिपादनात् सर्वज्ञे च शुद्धे ब्रह्मणि अज्ञानं सर्वथैवानुपपन्नमिति पूर्वपक्षी शंकते—ननु शुद्धब्रह्मणः चिन्मात्रस्य अज्ञानाश्रयत्वे सार्वज्ञ्यविरोधः। न च विशिष्टे एव सार्वज्ञ्यं तुरीयं सर्वदृक् सदेति शुद्धस्यैव सर्वज्ञत्वोक्तेः इति चेत्। अद्वैतिमते शुद्धब्रह्मणश्चिन्मात्रस्वरूपत्वेऽपि श्रुतिस्मृत्यादिभिः शुद्धब्रह्मणः सर्वज्ञत्वप्रतिपादनात्; सर्वज्ञे शुद्धे ब्रह्मणि अज्ञानाश्रयत्वासंभवात्। यद्युच्येत शुद्धं ब्रह्म ज्ञप्तिरूपं न ज्ञातृरूपम्, यत् न ज्ञातृरूपं तत् सर्वज्ञमपि न भवति। तन्न, अद्वैतिभिः शुद्धब्रह्मणो ज्ञातृत्वस्यानङ्गीकृतत्वेऽपि श्रुत्यादिभिस्तस्य अङ्गीकृतत्वात्। उक्तञ्च आनन्दतीर्थभगवत्पादेन अनुव्याख्याने—'अज्ञताखिलसंवेत्तुर्घटते न कुतश्चन' इति। सर्वसंवेदितुः शुद्धस्य ब्रह्मणोऽज्ञता कथमपि न घटते इति तस्यार्थः। यद्युच्येत सर्वज्ञो नाज्ञानाश्रयः इति नियम एवासिद्धः अन्वयव्यतिरेकाभावात्। यो यः सर्वज्ञः स अज्ञानानाश्रय इति व्याप्तेर्ग्रहणाय सर्वज्ञब्रह्मातिरिक्तं स्थलं नास्ति। एवं व्यतिरेकग्रहणदृष्टान्तोऽपि न सम्भवति। अद्वैतिभिः ब्रह्मभिन्नस्य अज्ञानाश्रयत्वानभ्युपगमात्। यो अज्ञानाश्रयः स सर्वज्ञभिन्नः इति व्यतिरेकग्रहणस्थलाभावात्। अतो भगवत्पादीयं वचनमसंगतमित्यालोच्य, अनुव्याख्यानटीकायां न्यायसुधायामुक्तं जयतीर्थेन—सर्वज्ञं ब्रह्म अज्ञानाश्रयो न भवतीति विशेषव्याप्तिग्रहणस्थलाभावात्।

न तु सर्वज्ञं तुरीयम्; तस्माद्विशिष्ट एव सार्वज्ञ्यम्। तच्चाविद्यां विना न संभवतीत्यविद्यासिद्धिः। तथा हि—सर्वज्ञो हि प्रमाणतः, स्वरूपज्ञप्त्या वा। तत्र प्रमाणस्य भ्रान्तेश्चाविद्यामूलत्वात्, असङ्गस्वरूपज्ञप्तेश्चाविद्यां विना विषयासङ्गतेः। तदुक्तम्—

'स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम्।
तच्चोभयं विनाऽविद्या संबन्धं नैव सिध्यति॥' इति ॥१॥

---

यद्यपि विशेषव्याप्तिः ग्रहितुं न शक्यते तथापि यस्य यद्विषयं ज्ञानमस्ति तस्य तद्विषयमज्ञानं नास्तीति सामान्यतो व्याप्तिग्रहस्य चैत्रमैत्रादौ संभवादिति जयतीर्थोक्तिमनुसृत्य उक्तं न्यायामृतकृता व्यासतीर्थेन—

"सर्वं हि यो विजानाति तस्य कुत्रापि नाज्ञता।
न हि यो यद् विजानाति स तत्राज्ञानवान् भवेत् ॥" इति

सामान्यव्याप्तिबलेन सर्वज्ञब्रह्मणोऽपि अज्ञानाश्रयत्वाभावः सिद्ध्यतीति भावः। यदद्वैतिभिरेवमुच्येत—शुद्धं ब्रह्म न सर्वज्ञं किन्तु बिम्बभूतमीश्वरचैतन्यमेव सर्वज्ञम्, तन्न, तुरीयं सर्वदृक् सदेति श्रुत्या तुरीयस्य शुद्धचैतन्यस्य सर्वज्ञत्वप्रतिपादनात्। जाग्रदाद्यवस्थात्रयमपेक्ष्य वा विराडाद्यवस्थात्रयमपेक्ष्य वा तुरीयं शुद्धं चैतन्यं तस्यैव सर्वज्ञत्वप्रतिपादनादिति।

सर्वेषां दृग्भूतचैतन्यस्य सर्वदृक्शब्देन प्रतिपादनान्न उदाहृतश्रुतिविरोधोऽस्मन्मते इति समाधत्ते—न सर्वदृक्पदेन सर्वेषां दृक्भूतं चैतन्यमित्युच्यते न तु सर्वज्ञं तुरीयम्। तस्मात् विशिष्टे एव सार्वज्ञ्यम् तच्च अविद्यां विना न सम्भवतीति अविद्यासिद्धिः। तथा हि सर्वज्ञो हि प्रमाणतः स्वरूपज्ञप्त्या वा। तत्र प्रमाणस्य भ्रान्तेश्च अविद्यामूलत्वात् असंगस्वरूपज्ञप्तेश्च अविद्यां विना विषयासङ्गतेः। तदुक्तम्—

स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम्।
तच्चोभयं विनाऽविद्या सम्बन्धं नैव सिध्यतीति॥

शुद्धं ब्रह्म न सर्वज्ञं किन्तु बिम्बभूतं विशिष्टं ब्रह्मैव सर्वज्ञम्। श्रुत्या तुरीयस्य यत् सर्वज्ञत्वमुक्तं तेन न शुद्धस्य सर्वज्ञत्वसिद्धिः। सर्वदृक्पदस्य सर्वावभासकं चैतन्यमर्थः। सर्वेषामवभासकं यत् चैतन्यं तत् शुद्धमेव। किन्तु

शुद्धं चैतन्यम् असंगत्वात् अविद्या सम्बन्धं विना न विषयावच्छिन्नं भवितुमर्हति। अविद्यासम्बन्धात् सर्वावभासकं चैतन्यं शुद्धचैतन्येन अभिन्नमिति कृत्वा श्रुतौ तुरीयस्य सर्वदृक्त्वमुक्तम्। अत एव सिद्धौ सर्वेषां दृग्भूतं चैतन्यमित्युक्तम्। सर्वावभासकचैतन्येन शुद्धचैतन्यस्य अभेदादित्यर्थः। ईश्वरचैतन्यमेव सर्वज्ञं तेन शुद्धचैतन्यस्य आध्यासिकाभेदो वर्तते। अविद्यां विना असंगं चैतन्यं न विषयेण सम्बद्ध्यते। अतः शुद्धं चैतन्यं न कथमपि सर्वज्ञं भवितुमर्हति। अतः श्रुतेः प्रदर्शित एव अर्थो ग्राह्यः। शुद्धचैतन्यस्य सर्वज्ञत्वसिद्धये— अविद्याऽवश्यं स्वीकार्या। शुद्धचैतन्यस्य सार्वज्ञ्यं द्वेधा भवितुमर्हति—वृत्तिज्ञानेन वा स्वरूपज्ञानेन वा। उभयथापि सर्वज्ञत्वसमर्थनाय अवश्यम् अविद्या स्वीकार्या। सिद्धौ प्रमाणेनेति यदुक्तम्, तन्न प्रमाणजन्यान्तःकरणवृत्त्या इत्यर्थः। प्रमाणजन्यान्तःकरणवृत्तिरेव प्रमा, सा च अज्ञाननिवर्तिका। अज्ञानानिवर्तिका वृत्तिः प्रमा न भवति। अतः प्रमाणजन्या प्रमावृत्तिर्जीवानामेव सम्भवति न तु ईश्वरस्य। यतः ईश्वरस्य अज्ञानं नास्ति। ईश्वरीयज्ञानमज्ञानानिवर्त्तकम्। ईश्वरस्य अज्ञानमप्रसिद्धमेव। अतो ईश्वरीयज्ञानं न प्रमा। जीवानाम् अज्ञान-सत्त्वात् अज्ञाननिवर्तिका प्रमावृत्तिर्जीवानामेव। ईश्वरोपाधिभूताया मायाया अविद्याया वा परिणामविशेष एव ईश्वरस्य ज्ञानाख्या वृत्तिः। अतो अद्वैतसिद्धौ अन्येषु आकरग्रन्थेषु च प्रमाणेन ईश्वरस्य सर्वज्ञत्वं यदुक्तं तत् ईश्वरोपाधिभूत-मायावृत्त्या तादृशाविद्यावृत्त्या वा ईश्वरस्य सर्वज्ञत्वं बोद्धव्यम्। न तु प्रमाण-जन्यान्तःकरणवृत्त्या ईश्वरस्य सर्वज्ञत्वम्। अतः प्रमाणतः—मायावृत्त्या अविद्या-वृत्त्या वा इत्यर्थः। स्वरूपचैतन्यरूपज्ञप्त्या वा ईश्वरस्य सर्वज्ञत्वम्। एतत् द्विविधमपि सर्वज्ञत्वम् अविद्यासापेक्षमेव। अविद्यावृत्त्या सर्वज्ञत्वे अविद्यासापेक्षत्वं स्पष्टमेव। स्वरूपज्ञप्त्यापि सर्वज्ञत्वे स्वरूपचैतन्यस्य असंगत्वात् चैतन्यस्य विषयसम्बन्धाय—अध्यासो अपेक्षितः। आध्यासिकसम्बन्धं विना विषयेण चैतन्यस्य पारमार्थिकसम्बन्धाभावात् आध्यासिकसम्बन्धाय अविद्या अपेक्ष्यते। अविद्यां विना अध्यासाभावात् अध्यासोपादानत्वमेव अविद्यालक्षणं प्रागुक्तम्। यच्चोक्तं प्रमाणस्य भ्रान्तेश्च अविद्यामूलत्वादिति तस्यायमर्थः गौडब्रह्मानन्द-चरणैरुक्तः। अत्र प्रमाणशब्देन भाविवस्तुविषयकानुमितिरूपा अविद्यावृत्तिः

उच्यते भ्रान्तिशब्देन च वर्तमानविषया अविद्यावृत्तिः अतीतविषया स्मृति-रूपाविद्यावृत्तिश्च उच्यते । अन्यत्रापि ब्रह्मानन्दस्वरणैरेवमेवोक्तम् "ईश्वरज्ञानं हि मन्मते मायावृत्त्यवच्छिन्नं चैतन्यम्, सा तु वृत्तिर्नैका सर्वविषयिका किन्तु भविष्येषु अनुमितिः भूतेषु स्मृतिः विद्यमानेषु प्रत्यक्षरूपा इति [लघुचन्द्रिका, आत्मस्वप्रकाशत्वप्रकरणम्, पृ०, ७८३ निर्णयसागरसंस्करणम्] अत्र ईश्वरस्य अनुमितिरूपा अविद्यावृत्तिरिति यदुक्तं तत्रेदमवधेयम्—अविद्यावृत्तिर्नाविद्याविरोधिनी प्रमाण-जन्यान्तःकरणवृत्तिरेव अविद्याविरोधिनी । ईश्वरीयाविद्यावृत्तिरूपानुमितिः न जीवीयानुमितिवत् प्रमारूपा, किन्तु भाविविषयकप्रत्यक्षस्मृत्योरसम्भवात् अनुमिति-रित्युक्तम् । अविद्यावृत्तिरूपानुमितिर्न परामर्शजन्या प्रमाणव्यापारजन्यत्वाभ्युपगमे प्रमाणविषयस्य अज्ञातत्वमवश्यमङ्गीकर्तव्यम् । भाविवस्तुनोऽज्ञातत्वम् ईश्वरं प्रति असिद्धम्, अतस्तत प्रमाणजन्यवृत्तेरपि विषयो न भवति । ईश्वरं प्रति कस्यापि अज्ञातसत्त्वाभावात् । परामर्शाजन्यत्वेऽपि ईश्वरीयाविद्यावृत्तेरनुमितित्वं यदुक्तं तदक्षाजन्येऽपि ईश्वरज्ञाने प्रत्यक्षपदप्रयोगो यथा नैयायिकानां परिभाषामात्रम् एवमत्रापि । अनागते विषये प्रत्यक्षस्मृत्योरसम्भवात् अनागतविषयकं ज्ञानमनुमिति-रूपमुक्तम् । इदं ज्ञानप्रत्यक्षमित्युक्तावपि नातीव दोषः, अनागतविष-यकप्रत्यक्षमप्रसिद्धमिति कृत्वा अस्य ज्ञानस्यानुमितित्वोक्तिः । प्रत्यक्षज्ञाने विषयो वर्तमानत्वेन भासते प्रत्यक्षज्ञानं वर्तमानविषयकमेव । उक्तञ्च जैमिनिना—विद्यमानोपलम्भनत्वादिति [जै० सू० १।१।४] । अतो अतीतविषयकं भाविविषयकञ्च ज्ञानं प्रत्यक्षं न भवितुमर्हति । अतीतभाविनोः वर्तमानत्वेन भाने ज्ञानस्य भ्रमत्वं स्यात् । योगीश्वरप्रत्यक्षज्ञानयोरतीतभाविविषयकत्वे तयो-र्भ्रमत्वमपरिहार्यम्, सत्कार्यवादाभ्युपगमेऽपि अतीतानागतयोरव्यक्तावस्थयो-र्व्यक्तत्वेन ज्ञानेऽपि स एव दोषः । एतत् सर्वमालोच्यैव मीमांसकैर्योगिनः सर्वविषयकं प्रत्यक्षज्ञानं नाङ्गीकृतम् । सर्वज्ञतानिरसनप्रकरणे श्लोकवार्तिके एतत् प्रपञ्चितम् । सिद्धौ भ्रान्तेश्च अविद्यामूलत्वादिति यदुक्तं तस्यायमभिप्रायः—प्रमाणाजन्या अविद्यावृत्तिरत्र भ्रान्तिपदेनाभिप्रेता । सा च नष्टगोचरा स्मृतिः विद्यमानविषयकाविद्यावृत्तिश्च । प्रमाणाजन्यत्वादेव कस्या अविद्यावृत्तेर्भ्रान्तित्वं न तु दोषजन्यत्वेन ईश्वरे दोषाभावात् शुक्तिरजतादिविषयिणी भ्रान्तिर्यथा

प्रमाणाजन्येति अविद्यावृत्तिरेवमीश्वरस्य नष्टविद्यमानविषयिणी अविद्यावृत्तिरपि प्रमाणाजन्या। प्रसिद्धभ्रान्तिसाधर्म्येण ईश्वरीयाविद्यावृत्तेर्भ्रान्तित्वमुक्तम्'। ईश्वरीयाविद्यावृत्तेर्दोषजन्यत्वेन अबाधितविषयकत्वेन च प्रमासाम्यात् प्रमात्वोक्तावपि न दोषः। अत एव सुखदुःखादिप्रत्यक्षस्य प्रमाणाजन्यस्यापि अबाधित-विषयकत्वेन शास्त्रे क्वचित् प्रमात्वेन व्यवहारोऽपि। एवमीश्वरीयाविद्यावृत्तिरपि प्रमाणाजन्या अज्ञाननिवर्तिकेति भ्रान्तिपदेनोक्ता; अबाधितविषयकत्वेन प्रमात्वोक्तावपि न दोषः। विवरणेऽपि ईश्वरस्य अतीतविषयिणी मायावृत्तिः स्मृतिरित्युक्तम्। अतो अतीतविषयिण्या ईश्वरोपाधिमायावृत्तेः स्मृतित्वं विवरण-सम्मतम्। आगामिसर्वविषयकज्ञानमपि ईश्वरोपाधिमायापरिणाम एव। अयं परिणामः गौडब्रह्मानन्देन अनुमितिरूपः उक्तः। विवरणकृता अनुमितीतिनामोल्लेखो न कृतः। [विवरणम्, पृ०, २१० काशीविजयनगर सं०] संस्कारसहकृतमायापरिणामत्वेन अतीतविषयिण्या मायावृत्तेः स्मृतित्वेनोल्लेखः विवरणादिषु; स्मृतिः परोक्षरूपापि नेयं स्मृतिः परोक्षरूपा किन्तु अपरोक्षरूपैवेति निरूपितं तत्त्वदीपने। ईश्वरस्य स्मृतिर्वर्तते इत्युक्तं विवरणतत्त्वदीपनलघुचन्द्रिकादिषु। एतन्मतमनुसृत्य आपोदेवेन न्यायप्रकाशे "ईश्वरस्तु गतकल्पीयं वेदं स्मृत्वा अस्मिन् कल्पे उपदिशतीत्युक्तम्। उत्तरमीमांसासंस्कारप्राबल्यात्" "सर्वज्ञो हि प्रमाणतः स्वरूपज्ञप्त्या वा तत्र प्रमाणस्य भ्रान्तेश्च अविद्यामूलत्वादिति" यदुक्तं सिद्धौ तत्र प्रमाणपदस्य प्रमिति-रर्थः। किन्तु अविद्यावृत्तिरविद्यावृत्तित्वेन सा भ्रान्तिर्वा अबाधितविषयकत्वेन। प्रमा वा ईश्वरीयाविद्यावृत्तिर्भ्रान्तिपदेन प्रमापदेन च विभिन्नस्थलेषु अभिलप्यते। भ्रान्तिप्रमापदाभ्यामेकैव ईश्वरीयाविद्यावृत्तिरुच्यते। एतदबुद्ध्वा न्यायामृतकृता यद्विकल्पितम्—"एतेन सर्वज्ञत्वं भ्रान्त्या प्रमाणतो वा स्वरूपज्ञप्त्या वा त्रेधाऽपि अविद्यासिद्धिः, भ्रान्तेः प्रमातृत्वादेश्च अविद्यामूलत्वादिति निरस्तमि"ति तदपि निरस्तम्। सर्वत्राद्वैतशास्त्रे ईश्वरस्य सर्वज्ञत्वं द्वेधा निरूपितं स्वरूपतः प्रमाणैर्वा इति न्यायामृतकृता सिद्धान्तिमतं त्रेधा विकल्पितम्। भ्रान्त्या ईश्वरस्य सर्वज्ञत्व-समर्थनं कथंकारं सम्भवेदिति यत्तेनोपहसितम्, तदद्वैतसिद्धान्ताज्ञानविजृम्भित-मिति बोध्यम्। भ्रान्त्या सर्वज्ञत्वमुपपादयितुं सिद्धिकृता प्रमाणस्य भ्रान्तेश्चेति उक्तम्। स्यादेतत् ईश्वरस्य सर्वज्ञत्वं स्वोपाधिमायावृत्त्या असंगस्वरूप-

न च—स्वरूपज्ञप्तेः स्वतः कालाद्यसंबन्धेऽसत्त्वापातेन, स्वतः संबन्धाभावेऽसर्वगतत्वापातेन चाविद्ययेव स्वत एवान्येन संबन्धो वक्तव्य इति—वाच्यम्; अविद्यासंबन्धस्याप्याविद्यकत्वेनाविद्ययेवेति दृष्टान्तानु-

---

चैतन्येनापि ... भवति। मायावृत्त्या यथा सर्वज्ञत्वं तथोक्तम्; स्वरूप-चैतन्येनापि सर्वज्ञत्वं भवति; स्वरूपचैतन्यमसङ्गमिति विषयसम्बन्धाय अविद्या अपेक्ष्यते। स्वरूपचैतन्येऽविद्यासम्बन्धं विना असंगस्य विषयैः सह सम्बन्धो न भवितुमर्हति—तदुक्तं चित्सुखाचार्यैः—स्वरूपतः प्रमाणैर्वेति। [तत्त्वप्रदीपिका, चतुर्थपरिच्छेदः, पृ०, ३६६, निर्णय-सागरसं०]। एवञ्च अविद्याश्रयत्वं सर्वज्ञत्वमनुरुणद्धि न विरुणद्धि इत्युक्तम्। प्रदीपवत् चैतन्यं स्वसम्बद्धविषयप्रकाशकं चैतन्यञ्च अविद्यया विना न विषयेण सम्बन्धुमर्हतीति सर्वज्ञत्वमविद्याश्रयत्वेन न विरुध्यते किन्तु अनुरुध्यते। सिद्धिस्थप्रमाणपदेन प्रदर्शितरूपानुमानं गृह्यते, भ्रान्तिपदेन च भूतेषु स्मृतिः वर्तमानेषु च अविद्यावृत्तिर्गृह्यते इति विवेकः ॥१॥

२—चैतन्यस्य असंगत्वे कालसम्बन्धित्वस्याप्यभावात् चैतन्यस्य असत्ता-पत्तिः कालसम्बन्धित्वस्य सत्त्वादिति शंकते—न च स्वरूपज्ञप्तेः स्वतः कालाद्यसम्बन्धेऽसत्त्वापातेन स्वतः सम्बन्धाभावेऽसर्वगतत्वापातेन च अविद्ययैव स्वतः एव अन्येन सम्बन्धो वक्तव्य इति वाच्यम्। चैतन्यस्य सर्वथा असंगत्वे तस्य असत्त्वमेव स्यात्, कालसम्बन्धित्वस्यैव सत्त्वात्, कालासम्बन्धि असत् यथा शशविषाणम्। इदानीं शशविषाणमित्याद्यप्रतीतेः। स्वरूपचैतन्यस्य असत्तापत्तिभयाद् न केवलं कालसम्बन्धित्वमेव असर्वगतत्वापत्ति-भयात् सर्वदेशसम्बन्धित्वमपि स्वीकार्यम्। सर्वदेशकालसम्बन्धित्वाभ्युपगमे स्वतो विषयैः सह सम्बन्धाभ्युपगमेऽपि को दोषः ? किञ्च असंगचैतन्यस्य अविद्यया सम्बन्धस्तु स्वीकृत एव। अविद्यासम्बन्धस्यापि आविद्यकत्वेऽनवस्था स्यात्, अविद्यया सम्बन्धाभ्युपगमे विषयेण सह सम्बन्धाभ्युपगमेऽपि को दोषः। पूर्वपक्षिमतमनुसृत्य चैतन्यस्य सर्वसम्बन्धित्वाभ्युपगमेऽसङ्गत्वश्रुतेः का गतिरिति चेत्; सर्वसम्बन्धित्वमसंगत्वत्वं च न परस्परविरुद्धम्, असंगमपि चैतन्यं सर्वसम्बन्धि। [सर्वसम्बन्धमात्रेण असंगत्वं न विरुध्यते। विषयसम्बन्धेन

पपत्तेः । स्वतः परतो वा कालादिसंबन्धेन सर्वसंबधेन चासद्वैलक्षण्य-सर्वगतत्वयोरुपपत्तेर्न तयोरर्थे स्वतः कालसंबन्धसर्वसंबन्धापेक्षा । असङ्गत्वश्रुतिरपि स्वतः सङ्गाभावविषयत्वेनोपपद्यते । अत एव—'अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चने' ति—निरस्तम् । तस्माच्चिन्मात्राश्रितैवाविद्या ॥२॥

इत्यज्ञानवादे सर्वज्ञस्याविद्याश्रयत्वोपपत्तिः ॥

---

चैतन्यं न लिप्यते इति लेपाभाव एव असंगश्रुत्या प्रतिपाद्यते । यथा जीवः विषयसम्बन्धाल्लिप्यते न तथा चैतन्यं विषयसम्बन्धाल्लिप्यते । निर्लिप्तता-प्रयुक्तमेव चैतन्यस्य असंगत्वमिति भावः ।

चैतन्येऽकल्पितसम्बन्धो नास्ति, चैतन्ये सम्बन्धमात्रस्य कल्पितत्वादविद्यये-वेति दृष्टान्तानुपपत्तेरित्याह सिद्धान्ती—अविद्यासम्बन्धस्य आविद्यकत्वेन अविद्ययेवेति दृष्टान्तानुपपत्तेः । स्वतः परतो वा कालादिसम्बन्धेन सर्वसम्बन्धेन च असद्वैलक्षण्यसर्वगतत्वयोरुपपत्तेः न तयोरर्थे स्वतः कालसम्बन्धसर्वसम्बन्धापेक्षा । असंगत्वश्रुतिरपि स्वतः संगाभाव-विषयत्वेनोपपद्यते। अत एव अज्ञताखिलसंवेत्तुर्घटते न कुतश्चने" ति निरस्तम् । तस्माच्चिन्मात्राश्रितैवाविद्या ।

इत्यज्ञानवादे सर्वज्ञस्याविद्याश्रयत्वोपपत्तिः ।

चैतन्येऽविद्यासम्बन्धस्य कल्पितत्वात् अविद्यासम्बन्ध आविद्यक एव । आविद्यकाविद्यासम्बन्धवत् अन्येनापि चैतन्यस्य आविद्यकसम्बन्धस्वीकारे सिद्धान्तिनोऽरुचिर्नास्ति । चैतन्येऽकल्पितः सम्बन्धो नास्तीत्यत्र अस्माकं निर्भरः । कल्पितस्तु सम्बन्धोऽविद्यया विना न सम्भवतीत्यविद्यासम्बन्धवत् विषय-सम्बन्धोऽपि कल्पित एवेति स्वीक्रियते । अविद्याया जडत्वात् चिद्भास्यत्वाच्च चैतन्ये आध्यासिक एव सम्बन्धोऽविद्यायाः । दृग्दृश्यसम्बन्धोऽकल्पितः पार-मार्थिको न भवितुमर्हतीत्युक्तम् । अविद्यावदविद्यासम्बन्धोऽपि अनादिः स्वरूप-सम्बन्ध एव । अविद्यासम्बन्धस्य अविद्याव्याप्यत्वात् अविद्यानाशजन्यनाशप्रति-योगित्वम् अविद्यासम्बन्धे वर्तते । अतोऽविद्यासम्बन्धवत् विषयसम्बन्धोऽपि अकल्पितः चैतन्ये स्वीकार्यः इत्युक्तिरेवासंगता, दृष्टान्तस्यैवासिद्धत्वादिति भावः ।

यच्चोक्तं कालसम्बन्धं विना चैतन्यस्य असत्तापत्तिरिति तदतितुच्छम्। कालस्य कालसम्बन्धस्य च कालसम्बन्धाभावेऽपि सत्त्ववत् न चैतन्यस्यासत्तापत्तिः। वस्तुतः कालसम्बन्धित्वं न सत्त्वं किन्तु अबाधितस्वप्रकाशरूपत्वं तच्च प्रकाशस्वरूपमेव न तु कश्चिद्धर्मः। यस्मिन् सद्वस्तुनि जडमात्रमध्यस्तं सत् मिथ्यावस्त्वपि सत्त्वेन भासते तस्य अधिष्ठानस्य सद्रूपत्वे का कथा। अबाधितस्वप्रकाशरूपत्वं सत्त्वं विहाय अन्यस्य कस्यापि सत्त्वे आत्माश्रयादयो दोषाः प्रादुर्भवेयुरिति। एवमेव देशपरिच्छेदराहित्यमेव विभुत्वम्, कालपरिच्छेदराहित्यं नित्यत्वमिति द्वितीयमिथ्यात्वनिरुक्त्यवसाने आचार्येणैवोक्तम्। आत्मतत्त्वविवेके उदयनेनाप्युक्तम् "अत एव न देशावच्छेद इति व्यापकम्" [आत्मतत्त्वविवेकः, पृ०,५०१, सोसाइटी सं०]। सिद्धान्ते एवं व्यवस्थितेऽपि पूर्वपक्षिमतमनुसृत्य कालसम्बन्धित्वं सत्त्वम्, सर्वदेशसम्बन्धित्वं विभुत्वमित्यभ्युपगमेऽपि स्वतः परतो वा कालसम्बन्धित्वं सत्त्वं परतः कालसम्बन्धित्वं चैतन्येऽपीति सन्तोष्टव्यम्। कालसम्बन्धित्वमेव सत्त्वं न तु स्वतः कालसम्बन्धित्वं सत्त्वं वृथा गौरवापत्तेः। वन्ध्यापुत्रादेस्तु स्वतः परतो वा कथमपि कालसम्बन्धित्वं नास्तीति न दोषः। स्वतो असम्बन्धित्वमेव चैतन्यस्य असंगत्वम्। एवमेव देशसम्बन्धोऽपि चैतन्ये परतः एव न स्वतः परतो देशसम्बधेनापि चैतन्यस्य विभुत्वमुपपद्यते। असद्वैलक्षण्याय सर्वगतत्वसिद्धये च असंगे चैतन्ये स्वतः कालदेशसम्बन्धस्य अनपेक्षितत्वेनासिद्धेरिति। यच्च पूर्वपक्षिणा स्वतः संगराहित्यरूपमसंगत्वं परित्यज्य निर्लेपत्वमसंगत्वमुक्तं तेन असंगशब्दस्य स्वारसिकार्थ एव परित्यक्तः स्यात्। चैतन्यस्य असंगत्वप्रतिपादनाय श्रुतिषु स्वतः संगाभाव उक्तः? निर्लेपार्थत्वार्थग्रहणे श्रुतयः कदर्थिताः स्युः। जडमात्रेण सह चैतन्यस्य स्वतः सम्बन्धोऽनुपपन्न एव। ये तु चैतन्यमपि जडमभ्युपयन्ति तेषां मते स्वतः संबन्धोऽपि स्यात्। जडेन सह चैतन्यस्य स्वतः सम्बन्धे परिणामित्वात् चैतन्यस्यापि जडत्वं स्यात्। प्रदर्शितरीत्या अविद्यायाश्चिन्मात्राश्रितत्वे दोषाभावात् अविद्यासम्बन्धादेव चैतन्यस्य सर्वज्ञत्वमपि उपपद्यते। यदपि अनुव्याख्याने आनन्दतीर्थीयवचनमुदाहृतम् "अज्ञताखिलसंवेत्तुर्घटते न कुतश्चने"ति—अत्र संवेतुरिति पदमशुद्धम्। यतः ज्ञानार्थकविद्धातुः सेट्कः अतः संवेदितुरित्येव स्यात्। ज्ञानार्थकविद्धातोः तृचि प्रत्ययेन

संवेदितुरिति पदं निष्पन्नम्, न तु ताच्छील्यार्थकतृन्प्रत्ययेन। यतश्चैतन्यं न विषयसंवेदनस्वभावम्, चैतन्ये विषयसम्बन्ध औपाधिकः; अविद्योपाधिप्रयुक्त एव चैतन्ये विषयसम्बन्धः। अतः कैवल्येऽविद्योपाधेरभावात् विषयसम्वेदनं न भवति अतश्चैतन्यं न विषयसंवेदनशीलमिति भावः ॥२॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्ते-
वासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैत-
सिद्धिटीकायां बालबोधिन्यामविद्यायाः
सर्वज्ञाश्रयत्वोपपत्तिविवरणम्।

## अथाज्ञानवादेऽविद्यायाः वाचस्पतिसंमतजीवाश्रयत्वोपपत्तिः ।

वाचस्पतिमिश्रैस्तु जीवाश्रितैवाऽविद्या निगद्यते ॥१॥

---

१—वाचस्पतिमिश्रैस्तु जीवाश्रितैवाविद्या निगद्यते । विवरणादिमते अविद्या शुद्धचैतन्याश्रितेत्युक्तम् । असंगत्वात् शुद्धं चैतन्यं न स्वभावतः सर्वज्ञं भवितुमर्हतीति अविद्याविशिष्टं चैतन्यं सर्वज्ञम् । यथा अविद्यैव चैतन्यस्य सर्वज्ञत्वसम्पादिका, अविद्याश्रयत्वादेव चैतन्यस्य सर्वज्ञत्वं तदपि सुस्पष्टं निरूपितम् । यद् यस्य अनुकूलं तन्न तस्य विरोधीत्युक्तम् । अधःस्थितप्रकरणद्वयेन एतदेव प्रतिपादितम् । अविद्यायाः सर्वज्ञाश्रयत्वोपपत्तिप्रकरणे चिन्मात्राश्रयत्वोपपत्तिप्रकरणात् नूतनं किमपि नोक्तम् । केवलं चिन्मात्राश्रयत्वोपपत्तिप्रकरणस्य निष्कर्ष एव प्रदर्शितः । तस्मात् सिद्धावपि तत्प्रकरणपर्यवसाने "तस्मात् चिन्मात्राश्रितैवाविद्या" इति प्रकरणद्वयस्य उपसंहारः प्रदर्शितः । चिन्मात्राश्रयत्वोपपत्तिप्रकरणोपक्रमेऽविद्याया आश्रयस्तु शुद्धं ब्रह्मैवेत्युक्तम् । अत उपक्रमोपसंहारयोरेकार्थे पर्यवसानात् प्रकरणद्वयस्य प्रतिपाद्य एकोऽर्थ इति निश्चीयते । अविद्यायाश्चिन्मात्राश्रितत्वोपपत्त्या चिन्मात्रस्य सर्वज्ञत्वसिद्धिः फलमित्येतावन्मात्रेण प्रकरणभेदः कृतः । वाचस्पतिमिश्रास्तु मण्डनमिश्रमतानुसारिणः । उक्तञ्च प्रकटार्थविवरणे—"वाचस्पतिस्तु मण्डनपृष्ठसेवी" [प्रकटार्थविवरणम्, २।४।४७] अतो मण्डनमतमेव वाचस्पतिमतस्योपजीव्यम् । मण्डनेन ब्रह्मसिद्धौ ब्रह्मकाण्डे जीवाश्रितैवाविद्या ब्रह्मविषयिणी नाविद्या ब्रह्माश्रितेत्युक्तम् । ब्रह्मसिद्धौ "कस्याविद्येति जीवानामिति ब्रूमः" इत्युक्तम् । भामत्यामपि "नाविद्या ब्रह्माश्रया किन्तु जीवे सा तु अनिर्वचनीये"त्युक्तम् [ब्र० सू०, १।१।४] । विवृतञ्च कल्पतरौ—"ब्रह्मणि नाविद्या किन्तु जीवे सा च अनिर्वचनीया इत्युक्तमध्यासभाष्ये"; विवृतं परिमले—अध्यासभाष्ये इति अन्तःकरणाद्यवच्छिन्नप्रत्यगात्मा इदमनिदं रूपश्चेतनः कर्ता भोक्ता कार्यकारणाविद्याद्वयाधार इत्यध्यासभाष्यटीकायामुक्तम् । जीवाश्रिताप्यविद्या न सर्वजीवसाधारणी एका, किन्तु प्रतिजीवम् अविद्या भिद्यते इत्यप्युक्तं भामत्याम्—"न

ननु—जीवाश्रिताऽविद्यां तत्प्रतिबिम्बितचैतन्यं वा, तदवच्छिन्न-चैतन्यं वा, तत्कल्पितभेदं वा जीवः; तथा चान्योन्याश्रय इति—चेत्;

---

वयं प्रधानवदविद्यां सर्वजीवेषु एकामाचक्ष्महे येनैवमुपालभेमहि, किन्तु इयं प्रतिजीवं भिद्यते तेन यस्य जीवस्य विद्या उत्पन्ना तस्यैवाविद्या अपनीयते न जीवान्तरस्य" [ब्र० सू०, १।४।३] सम्प्रति मण्डनवाचस्पतिमतमनुसृत्य अविद्याया जीवाश्रितत्वपक्षमुपपादयिष्यन् आह — वाचस्पतिमिश्रैस्तु इति। न्यायमकरन्दतत्त्व-प्रदीपिकादिषु वाचस्पतिमतस्य प्रत्याख्यातत्वेऽपि आचार्येण तन्मतमप्युपपादितम्; सर्वेषामद्वैताचार्याणां विचारसहानि सर्वाणि मतानि आचार्येण उपपादितानीति सर्वाचार्यमतोपपादकत्वमेव आचार्यस्य वैलक्षण्यम्। चित्सुखाचार्यैस्तु एतत् वाचस्पतिमतं दूषितम्, उक्तञ्च—जीवाश्रयाविद्यापक्षोद्भाविताश्तु दोषास्तदनङ्गी-कारादेव परास्ताः इति। [तत्त्वप्रदीपिका, चतुर्थपरिछेदः, पृ०, ३६८] भामतीमते जीवाश्रिताविद्योपादानकत्वेऽपि प्रपञ्चस्य व्यावहारिकसत्त्वं न विरुध्यते इत्याह कल्पतरौ—"अज्ञातसत्त्वं प्रपञ्चस्य व्यावहारिकसत्त्वात् न च जीवाविद्याजत्वे तदयोगः स्वेन्द्रियादिवदुपपत्तेः।" [कल्पतरुः, सू०, १।४।३] एतेन वाचस्पतेर्दृष्टिसृष्टिरेवाभिप्रेतेति पक्षोऽप्यपास्तः॥१॥

२—अविद्याया जीवाश्रितत्वाभ्युपगमेऽन्योन्याश्रयः स्यादित्याह पूर्वपक्षी—

**ननु जीवाश्रिता अविद्या तत्प्रतिविम्बतचैतन्यं वा ? तदवच्छिन्नचैतन्यं वा ? तत्कल्पितभेदं वा ? जीवः तथा च अन्योन्याश्रयः इति चेत्।**

अन्योन्याश्रयं दर्शयितुं जीवस्वरूपं त्रिधा विकल्प्य अन्योन्याश्रयं स्पष्टयति—अविद्याया जीवाश्रितत्वं किम् अविद्याप्रतिबिम्बितचैतन्यं जीवः, अथ वा अविद्यावच्छिन्नं चैतन्यं जीवः, अथ वा अविद्यया ईश्वरप्रतियोगिककल्पितभेद-विशिष्टं चैतन्यं [वा] जीवः। एतत् त्रिविधमपि जीवस्वरूपमविद्याधीनमेव। असत्याम् अविद्यायाम् अविद्याप्रतिबिम्बितं वा ? अविद्यावच्छिन्नं वा ? अविद्या-कल्पितभेदविशिष्टं चैतन्यं वा ? त्रिविधमपि जीवस्वरूपं न सम्भवति। अत-श्चैतन्यस्य जीवत्वमविद्यायत्तं सिद्धे च जीवत्वे अविद्याया जीवाश्रितत्वसिद्धिः इति अन्योऽन्याश्रयः आविद्याधीना चैतन्यस्य जीवत्वसिद्धिः, सिद्धे च जीवत्वे अविद्याया जीवाश्रितत्वसिद्धिरिति सुस्पष्टोऽन्योन्याश्रयः।

न, किमयमन्योन्याश्रय उत्पत्तौ, ज्ञप्तौ, स्थितौ वा। नाद्यः; अनादित्वादुभयोः। न द्वितीयः; अज्ञानस्य चिद्भास्यत्वेऽपि चितेः स्वप्रकाशत्वेन तदभास्यत्वात्। न तृतीयः; स किं परस्पराश्रितत्वेन वा, परस्परसापेक्षस्थितिकत्वेन वा स्यात्। तन्न; उभयस्याप्यसिद्धेः, अज्ञानस्य चिदाश्रयत्वे चिदधीनस्थितिकत्वेऽपि चिति अविद्याश्रितत्व-तदधीनस्थितिकत्वयोरभावात् ॥२॥

---

अन्योऽन्याश्रयादीनां त्रिधा दूषकत्वं सम्भवति—उत्पत्तौ, ज्ञप्तौ, स्थितौ च। प्रकृते च उत्पत्त्यादिषु परस्परापेक्षाऽभावात् न दोष इत्याह सिद्धान्ती—न, किमयमन्योन्याश्रयः उत्पत्तौ, ज्ञप्तौ, स्थितौ वा। नाद्यः, अनादित्वादुभयोः। न द्वितीयः, अज्ञानस्य चिद्भास्यत्वेऽपि चितेः स्वप्रकाशत्वेन तदभास्यत्वात्। न तृतीयः, स किं परस्पराश्रितत्वेन वा ? परस्परसापेक्षस्थितिकत्वेन वा ? स्यात्। तन्न, उभयस्याप्यसिद्धेः अज्ञानस्य चिदाश्रयत्वे चिदधीनस्थितिकत्वेऽपि चिति अविद्याश्रितत्व-तदधीनस्थितिकत्वयोरभावात्। उत्पत्तौ नान्योऽन्याश्रयः इत्याह— नाद्य इति। जीवाविद्ययोर्द्वयोरनादित्वेन उत्पत्तेरेवाभावात्। नापि ज्ञप्तौ अन्योऽन्याश्रय इत्याह—न द्वितीय इति। अज्ञानस्य साक्षिरूपजीवचैतन्यभास्यत्वेऽपि साक्षि-चैतन्यस्य स्वप्रकाशत्वेन अज्ञानभास्यत्वाभावात्। अविद्याया ज्ञप्तेर्जीवायत्तत्वेऽपि जीवज्ञप्तेरविद्यायत्तत्वाभावादिति। स्थितौ अन्योऽन्याश्रयः द्वेधा सम्भवति—द्वयोः परस्पराश्रितत्वेन वा, द्वयोः परस्पराश्रितत्वाभावेऽपि द्वयोः परस्परसापेक्ष-स्थितिकत्वेन वा; स्थितौ द्विविधोऽपि अन्योऽन्याश्रयः प्रकृते न सम्भवति अविद्याया जीवाश्रितत्वेऽपि जीवस्य अविद्याश्रितत्वाभावात्। जीवस्य शुद्ध-चैतन्येऽध्यस्तत्वात्। अज्ञानं जीवाधीनस्थितिकमपि जीवभिन्नेऽविद्यमान-मपि जीवः अज्ञानभिन्ने, नावृत्तिः, जीवस्य शुद्धचैतन्यवृत्तित्वात् उक्तञ्च कल्पतरौ—

> अधिष्ठानं विवर्तानामाश्रयो ब्रह्मशुक्तिवत्।
> जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम् ॥ इति

[कल्पतरुः, १।२।८, सर्वत्रप्रसिद्धाधिकरणम्, पृ०, २३६] अतो न परस्पर-

नं चैवमन्योन्याधीनता क्षतिः; समानकालोनयोरप्यवच्छेद्यावच्छेदकभावमात्रेण तदुपपत्तेः, घटतदवच्छिन्नाकाशयोरिव प्रमाणप्रमेययोरिव च। तदुक्तम्—

'स्वेनैव कल्पिते देशे व्योम्नि यद्वत् घटादिकम्।
तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः' इति।

---

सापेक्षस्थितिकत्वमिति अन्योऽन्याश्रयदोषलेशस्यापि अभावात्; पूर्वपक्ष्युक्तमकिंचित्करमिति भावः। मूले चित्पदं जीवचैतन्यपरं बोध्यम् ॥२॥

३—जीवाविद्ययोः सर्वथा अन्योऽन्याश्रयत्वाभावे जीवाविद्ययोः परस्पराधीनत्वमिति सिद्धान्तो भज्येत इत्याशङ्क्य समाधत्ते—न चैवम् अन्योऽन्याधीनताक्षतिः। समानकालीनयोरप्यवच्छेद्यावच्छेदकभावमात्रेण तदुपपत्तेः। घटतदवच्छिन्नाकाशयोरिव प्रमाणप्रमेयोरिव च। तदुक्तं—

"स्वेनैव कल्पिते देशे व्योम्नि यद्वत् घटादिकम्।
तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः ॥ इति

जीवाविद्ययोरन्योऽन्याधीनतास्वीकारे केनापि रूपेण अन्योऽन्याश्रयः स्यादेव। यदि तु केनापि रूपेण नान्योऽन्याश्रयः तर्हि जीवाविद्ययोरन्योऽन्याधीनतासिद्धान्तोऽपि भज्येत इति पूर्वपक्षिणामाशयः। समाधत्तेऽन्योऽन्याधीनत्वेऽपि अन्योऽन्याश्रयं न स्वीकुर्मः। अन्योऽन्याश्रयं विनापि अन्योऽन्याधीनता सम्भवति। जीवाविद्ययोरन्योऽन्याधीनता प्रकारद्वयेन सम्भवति—जीवनाशव्यापकोऽविद्यानाशः जीवनाशोऽविद्यानाशव्याप्यः एवं नाशयोर्व्याप्यव्यापकभावसत्त्वादन्योऽन्याधीनता सम्भवति। अथ वा अविद्याया जीवोपाधित्वात् उपाध्युपहितयोरन्योऽन्याधीनता स्यात्। एतत् प्रकारद्वयं सूचयन्नाह मूलकारः—समानकालीनयोरप्यवच्छेद्यावच्छेदकभावमात्रेणेति। समानकालीनयोरित्यस्य व्याप्यव्यापकभावापन्नयोरित्यर्थः। जीवाविद्ययोर्व्याप्यव्यापकभावमंप्रदर्श्य जीवनाशाविद्यानाशयोर्व्याप्यव्यापकभावः प्रदर्शितः। यदा यदा अविद्या तदा जीवः इति व्याप्त्या अविद्याया व्यापको जीवः अविद्या जीवव्याप्या। अतो व्याप्यनाशो व्यापकः व्यापकनाशस्तु व्याप्यः।

नियम्यत्वनियन्तृत्वे भावयोर्यादृशे मते ।
विपरीते प्रतीयेते त एव तदभावयोरिति ॥भट्टपादोक्तेः ।

एवञ्च जीवाविद्ययोरन्वयव्यतिरेकव्याप्त्योः सम्भवाद् अन्योऽन्याधीनता स्वीक्रियते । प्रदर्शितव्याप्यव्यापकभावबोधनाय सिद्धिकृता समानकालीनयोरित्युक्तम् । एवम् अविद्या उपाधिः, जीवस्तु उपहितः, उपाध्युपहितभाव एव अन्योऽन्याधीनता, अवच्छेद्यावच्छेदकभावशब्देन उपाध्युपहितभावं सूचयति सिद्धिकारः । अविद्योपाधिना उपहिते जीवे अविद्याश्रयत्वं सम्भवति । अविद्याश्रयत्वे अविद्याया उपाधित्वं न दोषमावहति—स्वाश्रयत्वे स्वम् उपाधिरेव, न विशेषणम् । स्वाश्रयत्वे स्वस्य विशेषणत्वे अंशतो विशेषणस्य विशेषणवृत्तित्वापातात् स्वविशेषणविशिष्टे स्वं वर्तते इति न भवितुमर्हति । अत एव रूपवति रसः इति प्रतीतौ रूपं न विशेषणम्, अन्यथा रूपेऽपि रसाश्रयत्वापत्तेः अत एव चिन्तामणिकृतः रूपवति रस इति प्रतीतौ रूपं न विशेषणं किन्तु उपलक्षणमित्याहुः । अतोऽविद्याविशेषणविशिष्टे जीवे अविद्या इति स्वीकारेऽविद्याया अपि अविद्याश्रयत्वापत्तेः । किन्तु अविद्योपहिते अविद्येति स्वीकारे नाविद्याया अविद्याश्रयत्वापत्तिः । अतोऽविद्यया सह जीवस्य विशेषणविशेष्यभावमनुक्त्वा उपाध्युपहितभाव एवोक्तः । तेन जीवाविद्ययोरन्योऽन्याधीनतासिद्धान्तोऽपि रक्षितः । विशेषणोपाध्योर्वैलक्षण्यमन्यत्र लघुचन्द्रिकायां निरूपितम् [लघुचन्द्रिका, पृ०, ४४९-४५०, असतः साधकत्वप्रकरणम्] उपाध्युपहितभावेन अन्योऽन्याधीनत्वेऽपि स्वस्य स्वाश्रितत्वापत्तिर्न भवतीति प्रदर्शयितुं पूर्वाचार्यसम्मतिमाह—तदुक्तमिति । आकाशे यो घटो वर्तते तेन घटेन 'कल्पिते आकाशप्रदेशे एव स घटो वर्तते । घटोपहिताकाशे एव घटो वर्तते इत्यर्थः । अखण्डविभुपरिमाणमाकाशम्, घटस्तु परिच्छिन्नः; आकाशे घटस्य वृत्तौ सर्वत्रैव घटोपलब्धिप्रसंगः । स्वभावतः आकाशस्य कश्चन प्रदेशो नास्ति । अतः घटेन कल्पिते आकाशप्रदेशे घटो वर्तते । घटस्य उपाधित्वात् घटोपहिताकाशे घटस्य वृत्तौ घटे घटवृत्तिताप्रसंगो यथा न भवति तथा अविद्योपहितचैतन्येऽविद्याया, वृत्तावपि न अविद्यायामविद्यावृत्तित्वप्रसंगः । घटघटाकाशयोर्यथा उपाध्युपहितभावः अन्योऽन्याधीनता च, एवमविद्याजीवयोरुपाध्युपहितभावात् अन्योऽन्या-

एतेन—यद्युत्पत्तिज्ञप्तिमात्रप्रतिबन्धकत्वेनान्योन्यापेक्षतायां अदोषत्वम्, तदा चैत्रमैत्रादेरन्योन्यारोहणाद्यापत्तिरिति—निरस्तम्; परस्परमाश्रयाश्रयिभावस्यानङ्गीकारात्। नचेश्वरजीवयोरीश्वरजीवकल्पितत्वे

---

धीनता; एवं प्रमाप्रमेययोरपि उपाध्युपहितभावात् अन्योऽन्याधीनता। उक्तञ्च कल्पतरौ—नैव कुण्डबदरवत् अधरोत्तरीभावः जीवाविद्ययोरमूर्तत्वात्, अवच्छेद्यावच्छेदकत्वं तु तत्रेतरेतरापेक्षं प्रमाणप्रमेयादिषु सुलभोदाहरणम्। विवृतञ्च परिमले—प्रमेयत्वाकारावगाहिप्रमाणं निरूपकप्रमेयादवच्छेद्यं प्रमेयञ्च स्वविशेषणीभूतप्रमाणावच्छेद्यमित्येवमादिषु अवच्छेद्यावच्छेदकत्वस्य इतरेतरतन्त्रत्वं दृष्टमित्यर्थः। [ब्र० सू०,पृ०,२३६, निर्णयसागरसं०] जीवाश्रिताविद्यापक्षे अन्योऽन्याधीनत्वेऽपि अन्योऽन्याश्रयतादोषो न सम्भवति; उत्पत्तौ ज्ञप्तौ च अन्योन्याश्रयताऽभावादिति यदुक्तं तन्मन्दम्; केवलमुत्पत्तिज्ञप्तिप्रतिरोधे एव अन्योऽन्याश्रयस्य न दूषकता परस्पराश्रयाश्रयिभावापत्तौ अपि अस्य दूषकता वाच्या। अन्यथा

यद्युत्पत्तिज्ञप्तिमात्रप्रतिबन्धेन दोषता।
तर्हि स्याच्चैत्रमैत्रादेरन्योन्यारोहणादिकम्॥

तथा च परस्परोत्पत्तिसापेक्षतायां परस्परज्ञप्तिसापेक्षतायामिव अन्योन्यवृत्तावपि—परस्पराश्रयाश्रयिभावस्वीकारेऽपि अन्योन्याश्रयो दोषः स्यादेवेति पूर्वपक्षिमतमाशङ्क्य समाधत्ते—एतेन यद्युत्पत्तिज्ञप्तिमात्रप्रतिबन्धकत्वेन अन्योन्याश्रयताया दोषत्वं तदा चैत्रमैत्रादेरन्योऽन्यारोहणाद्यापत्तिरिति निरस्तम्। परस्परमाश्रयाश्रयिभावस्यानङ्गीकारात्। न च अन्योन्यवृत्तितायामपि न दोषः प्रमेयत्वाभिधेयत्वयोरन्योऽन्यवृत्तितायाः प्रमाणसिद्धत्वादिति वाच्यम्; प्रमाणसिद्धस्य अदोषत्वेऽपि अप्रमितान्योऽन्यवृत्तिताया दोषत्वात्। अप्रमितपरस्पराश्रयाश्रयिभावेऽपि यदि न दोषः तर्हि कुत्रापि अस्य दोषत्वं न स्यात्। एकदैव चैत्रमैत्रयोः परस्परारोहणं यथा प्रमाणबाधितं तथा जीवाविद्ययोरपीति। एतत् पूर्वपक्षिशंकितं निरस्तम् यतोऽस्माभिर्जीवाविद्ययोः परस्पराश्रयाश्रयिभाव एव नाङ्गीक्रियते। अविद्याया जीवाश्रितत्वेऽपि जीवस्याविद्याश्रितत्वानङ्गीकारात् अनुक्तोपालम्भनमेतत्; तथा च निरनुयोज्यानुयोगो निग्रहस्थानं पूर्ववादिनः। कल्पतरुकृद्भिरपि इयमाशंका अन्यथा समाहिता। तथा हि—तथापि स्वस्कन्धा-

आत्माश्रयः, जीवेशकल्पितत्वे चान्योन्याश्रयः, न च शुद्धा चित् कल्पिका, तस्या अज्ञानाभावादिति—वाच्यम्; जीवाश्रिताया अविद्याया एव जीवेशकल्पकत्वेनैतद्विकल्पानवकाशात्। तस्माज्जीवाश्रयत्वेऽप्यदोषः ॥३॥

इत्यद्वैतसिद्धौ अज्ञानस्यं जीवाश्रयत्वोपपत्तिः ॥

---

रूढारोहणवत् स्वाश्रिताश्रितत्वं विरुद्धमिति चेन्न स्वाश्रिताश्रितत्वस्य क्वचित् प्रमितौ अविरोधात्। अप्रमितौ अव्याप्यादस्मात् अव्यापकस्य विरोधस्य दुष्प्रसञ्जनत्वात्। [कल्पतरु; पृ०, २३६, १।२।१ सर्वत्र प्रसिद्धाधिकरणम् ]।

अद्वैतिमते जीवेश्वरयोः कल्पितत्वाङ्गीकारात्, किन्तु कल्पकाभावेन तयोः कल्पितत्वासंभवादिति शंकते—न च ईश्वरजीवयोरीश्वरजीवकल्पितत्वे आत्माश्रयः। जीवेशकल्पितत्वे चान्योऽन्याश्रयः, न च शुद्धा चित् कल्पिका तस्या अज्ञानाभावादिति वाच्यम्। अद्वैतिमते किं जीवः स्वस्य कल्पकः ईश्वरो वा स्वस्य कल्पक आस्थीयते। तथात्वे आत्माश्रयः स्यात् स्वस्य स्वसापेक्षसिद्धिकत्वे आत्माश्रयः। यदि वा जीवेन ईश्वरः कल्प्यते ईश्वरेण च जीवः, तथात्वेऽन्योन्याश्रयः स्यात्। शुद्धचैतन्यमेव जीवेश्वरकल्पकमित्यपि न सम्भवति अज्ञानस्य जीवाश्रितत्वपक्षे शुद्धचैतन्येऽज्ञानाभावात्, अज्ञानायत्तकल्पनाया अप्यभावात्, कल्पनाया अभावे शुद्धचैतन्यस्य कल्पकत्वमपि न स्यादिति।

जीवेश्वरशुद्धचैतन्यानाम् अकल्पकत्वेऽपि जीवाश्रिता अविद्यैव कल्पिका इति समाधत्ते—जीवाश्रिताया अविद्याया एव जीवेशकल्पकत्वेन एतद् विकल्पानवकाशात्। तस्मात् जीवाश्रयत्वेऽपि अदोषः।

इत्यद्वैतसिद्धौ अज्ञानस्य जीवाश्रयत्वोपपत्तिः।

जीवाश्रिताविद्यैव जीवेश्वरकल्पिका इति प्रदर्शितविकल्पानामनवकाशः। अविद्यायाः कल्पकत्वं नाम कल्पनाहेतुत्वं तच्च अविद्यायामस्त्येव कल्पनाया अविद्यावृत्तिरूपत्वात्। अविद्यावृत्तिं प्रति अविद्याया उपादानत्वात् कल्पनाया दोषजन्यत्वेन अविद्याया दोषत्वेनापि निमित्तकारणत्वात्। अतः कल्पनाया उपादानत्वं निमित्तत्वञ्च अविद्यायामस्त्येव इति भावः। कल्पितजीवेश्वरजनकत्वरूपं कल्पकत्वमप्रसिद्धं जीवेश्वरयोरनादित्वात्। जीवेश्वरचैतन्ययोः

स्वप्रकाशत्वाद् द्रष्टृत्वस्वरूपकल्पकत्वमपि न सम्भवति तयोर्दृश्यत्वाभावेन तद्-द्रष्टृत्वस्यापि असम्भवात्। ईश्वरस्तु स्वरूपचैतन्येन अविद्याश्रयत्वरूपेण जीवानां द्रष्टा एवं जीवाश्रिताविद्याविषयत्वेन ईश्वरः स्वस्यापि द्रष्टा भवतीति सर्वमतिमङ्गलम्।

वाचस्पतिमतेऽविद्याया आश्रयो जीवः आविद्याविषयो ब्रह्म। ब्रह्मविषयिणी जीवाश्रिताविद्या ईश्वरस्तु स्वरूपचैतन्येनैव जीवानां द्रष्टा, अत्राविद्यावृत्तेनपेक्षा। अविद्याया ईश्वराश्रितत्वाभावात्। जीवस्तु स्वाश्रिताविद्यावृत्त्या अविद्याविषयत्व-रूपेण ईश्वरस्य आविद्याश्रयत्वरूपेण स्वस्यापि द्रष्टा भवति। अस्मिन् मते ब्रह्मण एव प्रपञ्चाधारत्वस्वीकारे विषयतासम्बन्धेन अविद्या प्रपञ्चनिमित्त-कारणम्। आधारतासम्बन्धेन प्रपञ्चं प्रति विषयतासम्बन्धेन अविद्या निमित्त-कारणम्। किन्तु अविद्या नोपादानम्, ब्रह्मण एव प्रपञ्चाधारत्वेन उपादानत्वात्। अविद्यायाः ब्रह्मण उपादानत्वसम्पादकत्वमात्रम्। यद्यस्मिन् मते जीव एव प्रपञ्चाधारः स्वीक्रियते, तदा जीवाविद्ययोरुभयोरपि प्रपञ्चोपादानत्वं बोध्यम्। जीवब्रह्मणोर्वास्तवभेदाभावेन जीवोपादानकप्रपञ्चे ब्रह्मोपादानकत्वमपि विद्यते इति ब्रह्मणो जगदुपादानत्वश्रुतिरपि संगच्छते। जीवब्रह्मणोरभेदात् जीवो-पादानकप्रपञ्चे ब्रह्मोपादानकत्वस्य अस्वीकारेऽपि "यतो वा इमानी"ति श्रुत्या ब्रह्मणो जगदुपादानत्वं न प्रतिपादितम्। किन्तु जगदुपादानाज्ञानविषयत्वमेव ब्रह्मणः प्रतिपादितम्। एतदेव ब्रह्मणो लक्षणं बोध्यम्। शुद्धब्रह्माश्रिताविद्याया जगदुपादानत्वमते यथा जगदुपादानत्वं न ब्रह्मलक्षणं किन्तु जगदुपादानाविद्या-श्रयत्वमेव ब्रह्मणो लक्षणं वक्तव्यम् एवम् अस्मिन्नमपि मते जगदुपादानाज्ञान-विषयत्वमेव ब्रह्मलक्षणं बोध्यम्। एवञ्च अविद्याया जीवाश्रितत्वमते न कोऽपि दोषः।

इदमिहावधातव्यम्—अविद्याया जीवाश्रितत्वं न वाचस्पतेः स्वकीयं मतम्; किन्तु ब्रह्मसिद्धौ एतन्मतं सप्रपञ्चं निरूपितं मण्डनमिश्रेण। ब्रह्मसिद्धौ अनाद्यविद्यायाः जीवाश्रितत्वे उत्पत्तौ ज्ञप्तौ च अन्योऽन्याश्रयदोषो नास्तीति निरूपितम्। मण्डनमतं दूषयितुमेव न्यायामृतकारः स्थितौ अन्योऽन्याश्रयम् उद्भावयामास प्रमेयत्वाभिधेयत्वयोः अन्योऽन्योश्रयत्वं प्रमितमिति कृत्वा तत्र

स्थितौ अन्योऽन्याश्रयदूषणं नोद्भावितं नैयायिकैः। न्यायसतमनुसृत्यैव मण्डनेनापि स्थितौ अन्योऽन्याश्रयदूषणं नोद्भावितम्। न्यायामृतकृता पुनः मण्डनोक्तेः रन्ध्रमन्विष्य स्थितौ दूषणमुद्भावितम्। किन्तु नैयायिकसंतोषाय अभिधेयत्वप्रमेयत्वयोः स्थितौ अन्योऽन्याश्रयो न दोषः प्रमितत्वादित्युक्तं न्यायामृतकृता। अप्रमितत्वात् जीवाविद्ययोरन्योऽन्याश्रयः दोष एव इत्यभिहितम्। सिद्धिकृता पुनर्जीवाविद्ययोरन्योऽन्यस्थितिकतैव नास्तीति परिहृतम्। प्रकरणमिदं वाचस्पतिमिश्रीयत्वेन उक्तमपि वस्तुतः मण्डनमिश्रीयमेव। "वाचस्पतिस्तु मण्डनपृष्ठसेवी" ति प्रवादः सुप्रसिद्ध एव ॥३॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासि-
श्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धि-
टीकायां बालबोधिन्यामज्ञानस्य
जीवाश्रयत्वोपपत्तिविवरणम्।

## अथाज्ञानवादेऽज्ञानविषयनिरूपणम् ।

अविद्याया विषयोऽपि सुवचः । तथा हि—चिन्मात्रमेवाविद्या-विषयः; तस्याकल्पितत्वेनान्योन्याश्रयादिदोषाप्रसक्तेः, स्वप्रकाशत्वेन

---

१—स्वप्रकाशचैतन्यं मूलाज्ञानाश्रय इत्युक्तम् । इदानीं स्वप्रकाशचैतन्यमेव मूलाज्ञानविषय इति निरूप्यते । अज्ञानविषयो दुर्निरूपण इति पूर्वपक्षिणो मन्यन्त । तत्राह—सिद्धौ "अविद्याया विषयोऽपि सुवचः" । चिन्मात्रमेव अविद्याया विषयः । अविद्याकल्पितम् अविद्याया विषयो न भवितुमर्हति, तथात्वेऽन्योऽन्याश्रयः स्यात् । निराश्रया निर्विषया च अविद्या सर्वथैवाप्रसिद्धा । सविषयाविद्याकल्पितस्य अविद्याविषयत्वेऽन्योऽन्याश्रयात्, अकल्पितस्यैव अविद्या-विषयत्वं वाच्यम्; अकल्पितञ्च शुद्धं चैतन्यमेव नान्यत् । अत एव "आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला" इत्युक्तं संक्षेपशारीरके । उक्तञ्च विवरणे—"तस्मादतिशयाभावात् नाज्ञानविषयोऽनात्मेति" [विवरणम्, पृ०, १४, काशीविजयनगरसंस्करणम्], अन्यच्च "न च स्वयमेव प्रकाशहीनस्य जडस्य आवरणार्थोऽपि सम्भवति" [विवरणम्, पृ०, १४] । अविद्यावृतचैतन्येनैव अविद्या प्रकाश्यते । कल्पितजडस्य अविद्याविषयत्वे अविद्यायाः सिद्धिरेवं न स्यात् । न हि प्रमाणेन अविद्या सेद्धुमर्हति । किन्तु स्वावृतप्रकाशप्रकाश्यैवाविद्या । किञ्च स्वप्रकाशं चैतन्यं प्रसक्तप्रकाशम्, तद् यदि अज्ञानावृतं न स्यात्तर्हि सर्वान् जीवान् प्रति सर्वदा भासेत; एवञ्च जीवब्रह्मैक्यप्रतिपादकशास्त्रोपदेशो व्यर्थः स्यात् । अतः अज्ञानावरणेन स्वप्रकाशचैतन्यस्य प्रकाशप्रतिबन्धनं क्रियते । अज्ञाने आवरणशक्तिर्विद्यते; शक्तिशक्तिमतोरभेदात् अज्ञानमपि आवरणमित्यु-च्यते । आव्रियते अनेनेति करणव्युत्पत्त्या यदि अज्ञानमावरणमित्युच्यते तदा आवरणरूपाज्ञानस्य कृत्यम् आवृत्तिः—प्रसक्तप्रकाशप्रतिबन्धनम् । अज्ञानं यदि प्रसक्तप्रकाशचैतन्यविषयकं स्यात् तदेव अज्ञानरूपावरणस्य कृत्यम् आवृतिः सम्भवति । अप्रकाशजडस्य आवरणं व्यर्थमेव । स्वप्रकाशब्रह्मचैतन्यं यदि जीवान् प्रति अज्ञानावृतं न स्यात् तर्हि 'सर्वे जीवाः अहं ब्रह्मास्मीति

प्रसक्तप्रकाशे तस्मिन् आवरणकृत्यसंभवाच्च, नान्यत्; तस्याज्ञान-कल्पितत्वात्, अप्रसक्तप्रकाशत्वेनावरणकृत्याभावाच्च। ननु—

---

सदैवानुभवेयुः; तथात्वे च शास्त्रोपदेशानर्थक्यं जीवानां संसारोऽपि अनुपपन्नश्च स्यात्। जाग्रदादौ जाग्रदादिवृत्तीनां प्रतिबन्धकत्वस्वीकारेऽपि सुषुप्तौ ब्रह्मात्मतायाः स्फुरणमनिवार्यं स्यात्। अतो जीवान् प्रति ब्रह्मचैतन्यं मूलाज्ञानेन आवृतं तिष्ठति। मूलाज्ञानस्य स्वप्रकाशब्रह्मचैतन्यविषयकत्वे एव तत् सम्भवतीति मूलाज्ञानं ब्रह्मचैतन्यविषयकमेव स्वीकार्यम्। अज्ञानकल्पितं वस्तु साद्यनादिभेदेन द्विविधम्। अतोऽज्ञानकल्पितस्य अज्ञानजन्यत्वमनुक्त्वा अज्ञानप्रयुक्तत्वं वाच्यम् अज्ञानप्रयुक्तमज्ञानव्याप्यमित्यर्थः। साद्यनादिकल्पितमात्रम् अज्ञानव्याप्यम्। एवञ्च अज्ञानकल्पितस्य अज्ञाननाशजन्यनाशप्रतियोगित्वमपि सिद्ध्यति। किञ्च अज्ञानं तत्त्वज्ञाननाश्यं सत्यविषयकज्ञानमेव तत्त्व ज्ञानम्; मिथ्याविषयकज्ञानमतत्त्वज्ञानमेव; तन्नाज्ञाननिवर्तकम्। समानविषयकज्ञानाज्ञानयोरेव विरोधात्, भिन्नविषयकयोर्विरोधासम्भवात्। अज्ञानं तत्त्वज्ञाननिवर्त्यमिति अज्ञानमपि तत्त्वविषयकमेव सिद्ध्यति। अतोऽज्ञानं न असत्यविषयकं न अतत्त्वविषयकं भवितुमर्हतीति शुद्धचिन्मात्रं मूलाज्ञानस्य विषयः इत्यादि सिद्धौ निरूपितम्। एतत् सर्वं विवरणे अविद्याविषयनिरूपणप्रसंगेऽभिहितम् [विवरणम्, पृ०, ४४-४६ काशीसंस्करणम्]। न्यायामृतकृतापि पदे पदे विवरणवाक्यमुद्धृतम्। अद्वैतसिद्धौ सर्वत्र विवरणवाक्यस्य अनुल्लेखात् यैर्विवरणं नालोचितं तैः एतत् सर्वं सिद्धिकारैरेवोद्भावितमिति मन्येत [मन्यते]। अतो विवरणं न्यायामृतञ्च आलोच्य अद्वैतसिद्धेरालोचनं क्रियते चेत्, तर्हि सिद्धान्तपरिज्ञानं सुदृढं भवेत्। एतत् सर्वमभिप्रेत्य उक्तं मूले—तथा हि चिन्मात्रमेव अविद्याविषयः तस्य अकल्पितत्वेन अन्योऽन्याश्रयादिदोषाप्रसक्तेः स्वप्रकाशत्वेन प्रसक्तप्रकाशे तस्मिन् आवरणकृत्यसम्भवाच्च। नान्यत्। तस्य अज्ञानकल्पितत्वात् अप्रसक्तप्रकाशत्वेन आवरणकृत्याभावाच्च। नान्यदिति प्रसक्तप्रकाशादन्यत् जडम् अज्ञानकल्पितं न अज्ञानविषय इत्यर्थः। तस्य जडस्य अज्ञानकल्पितस्य अप्रसक्तप्रकाशत्वेन जडत्वेन इत्यर्थः। अज्ञानावरणकृत्याभावाच्च। आवरणकृत्यं प्रकाशप्रतिबन्धनं जडेऽप्रसक्तप्रकाशे प्रकाशप्रतिबन्धनस्य असम्भवादित्यर्थः।

किमावरणकृत्यम् [१] सिद्धप्रकाशलोपो वा, [२] असिद्धप्रकाशानुत्पत्तिर्वा, [३] सतः प्रकाशस्य विषयासंबन्धो वा, [४] प्राकट्याख्यकार्यप्रतिबन्धो वा, [५] नास्ति न प्रकाशत इति व्यवहारो वा, [६] अस्ति प्रकाशत इति व्यवहाराभावो वा, [७] नास्तीत्यादिव्यवहारयोग्यत्वं वा, [८] अस्तीत्यादिव्यवहारायोग्यत्वं वा। नाद्यद्वितीयौ; स्वरूपप्रकाशस्य नित्यसिद्धत्वेन तल्लोपानुत्पत्त्योरसंभवात्, तदन्यस्य च स्वप्रकाशे तस्मिन्ननपेक्षितत्वात्। न तृतीयः; ज्ञानस्य विषयसंबन्धैकस्वभावत्वात्, स्वयं ज्ञानरूपत्वेन त्वन्मते संबन्धानपेक्षणाच्च। नापि चतुर्थः; त्वन्मते चैतन्यातिरिक्तस्य

---

उक्तञ्च विवरणे—न च स्वयमेव प्रकाशहीनस्य जडस्य आवरणार्थोऽपि सम्भवति। [विवरणम्, पृ०, १४, काशीसंस्करणम्] स्वयं प्रकाशं ब्रह्मचैतन्यं प्रसक्तप्रकाशमिति तत्रैव आवरणकृत्यं सम्भवति, अप्रसक्तप्रकाशे आवरणकृत्यासम्भवात्।

विवरणोक्तमावरणकृत्यं निरसितुम् आवरणकृत्यमष्टधा विकल्पयन् शङ्कते पूर्वपक्षी—ननु किमावरणकृत्यम्—[१] सिद्धप्रकाशलोपो वा? [२] असिद्धप्रकाशानुत्पत्तिर्वा? [३] सतः प्रकाशस्य विषयासम्बन्धो वा? [४] प्राकट्याख्यकार्यप्रतिबन्धो वा? [५] नास्ति न प्रकाशते इति व्यवहारो वा? [६] अस्ति प्रकाशते इति व्यवहाराभावो वा? [७] नास्तीत्यादिव्यवहारयोग्यत्वं वा? [८] अस्तीत्यादिव्यवहारायोग्यत्वं वा?। नाद्यद्वितीयौ, स्वरूपप्रकाशस्य नित्यसिद्धत्वेन तल्लोपानुत्पत्त्योरसम्भवात्। तदन्यस्य च स्वप्रकाशे तस्मिन्ननपेक्षितत्वात्। न तृतीयः, ज्ञानस्य विषयसम्बन्धैकस्वभावत्वात् स्वयं ज्ञानरूपत्वेन त्वन्मते सम्बन्धानपेक्षणाच्च। नापि चतुर्थः, त्वन्मते चैतन्यातिरिक्त-

---

१. अविद्योपाधेः प्रतिबिम्बपक्षपातित्वनिरूपणे यदुक्तं जीवरूपप्रतिबिम्बं प्रति मूलाविद्यायाः स्वविषयाच्छादकत्वमेव अविद्योपाधेः प्रतिबिम्बपक्षपातित्वम्। अविद्यायाः स्वविषयाच्छादकत्वनिरूपणायैव अज्ञाननिमित्तावरणकृत्यं निरूप्यते। अतः प्रतिबिम्बपक्षपातित्वनिष्कर्षप्रदर्शनार्थं प्रकरणमिदमारभ्यते इति बोध्यम्।

तस्याभावात्। नापि पञ्चमः; सुषुप्तौ व्यवहाराभावेनानावरणापातात्। नापि षष्ठः; व्यवहारस्याभिज्ञात्वे स्वरूपाभिज्ञाया इदानीमपि सत्त्वात्, वृत्तेश्च मोक्षेऽप्यसत्त्वात्। अभिलपनरूपत्वे मोक्षेऽप्यावरणप्रसङ्गात्। नापि सप्तमाष्टमौ; तयोरप्यारोपितत्वेनावरणं विनायोगादिति—चेत्॥ १॥

---

स्य तस्याभावात्। नापि पञ्चमः सुषुप्तौ व्यवहाराभावेन अनावरणापातात्। नापि षष्ठः, व्यवहारस्यापि अभिज्ञात्वे स्वरूपाभिज्ञाया इदानीमपि सत्त्वात्। वृत्तेश्च मोक्षेऽप्यसत्त्वाच्च। अभिलपनरूपत्वे मोक्षेऽप्यावरणप्रसङ्गात्। नापि सप्तमाष्टमौ, तयोरपि आरोपितत्वेन आवरणं विना अयोगादिति चेत्। उक्तञ्च विवरणे—नन्वेवम् आत्मन्यपि अज्ञाननिमित्तमावरणकृत्यं नास्ति। कथं न तावदावरणं प्रकाशविलोपः स्वरूपस्यानपायात्। नापि सत एव प्रकाशस्य कार्यप्रतिबन्धः ज्ञानस्य विषयावभासात्मना उदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावात्। तस्मान्नैव आत्मन्यपि भावरूपमज्ञानमनुपयोगादिति [विवरणम्, पृ०, १५, काशी-संस्करणम्] विवरणोक्तमावरणकृत्यं विवरणे एव दूषितं समाहितञ्च। तत्र विवरणोक्तदूषणजातं प्रपञ्चयन्नाह पूर्वपक्षी—ननु किमावरणकृत्यमिति। विकल्प्य दूषयितुं विवरणोक्तमावरणकृत्यं पृच्छति—ननु किमिति। अज्ञानस्य आवरणकृत्यं किं सिद्धस्य आत्मप्रकाशस्य लोपः। जायमानप्रकाशः उत्पत्तेः प्राक् असिद्धः, असिद्धस्य प्रकाशस्य अनुत्पत्तिर्वा इति द्वितीयो विकल्पः। सतो विद्यमानस्य प्रकाशस्य विषयेण असम्बन्धो वा इति तृतीयः। ज्ञातताऽपरनामधेयं प्राकट्यं ज्ञानकार्यमिति भट्टाः। सति ज्ञाने स्वकार्यप्राकट्यप्रतिबन्धो वा इति चतुर्थो विकल्पः। व्यवहारश्चतुर्विधो विवरणे उक्तः—व्यवहारोऽभिज्ञाभिवदनमुपादानमर्थक्रियेति चतुर्विधः—[विवरणम्, पृ०, १०, काशीसंस्करणम्] तत्राभिज्ञाभिवदनरूपव्यवहारमादाय नास्ति न प्रकाशते इति व्यवहारो वेति पञ्चमः पक्षः उक्तः। प्रकाशमाने ब्रह्मणि नास्ति न प्रकाशते इति ज्ञानरूपो व्यवहारः। नास्ति न प्रकाशते इति शब्दप्रयोगरूपाभिवदनव्यवहारो वेति पञ्चमः पक्षः। षष्ठेऽपि पक्षे व्यवहारपदस्य पूर्वोक्त एवार्थः। प्रकाशमाने ब्रह्मणि अस्ति प्रकाशते इति अभिज्ञाभिवदनरूपव्यवहाराभावः षष्ठः विकल्पः। प्रकाशमाने

ब्रह्मणि नास्तीत्यादिव्यवहारयोग्यत्वं सप्तमो विकल्पः। प्रकाशमाने ब्रह्मणि अस्तीत्यादिव्यवहारायोग्यत्वम् अष्टमो विकल्पः। विकल्पितान् पक्षान् क्रमशो दूषयति—नाद्यद्वितीयौ इति। सिद्धप्रकाशस्य लोपस्तदैव स्यात् यदि प्रकाशोऽनित्यः स्यात्; एवमनित्यप्रकाशस्यैव प्रतिबन्धादनुत्पत्तिरपि स्यात्। नित्यसिद्धात्मप्रकाशस्य लोपानुत्पत्ती न सम्भवतः। यथा घटस्य प्रकाश आलोकः; स च सिद्धघटस्य प्रकाशः; सिद्धघटप्रकाशस्य लोपः अन्धकारसाध्यमावरणम् एतदावरणमेव घटप्रकाशस्य लोपः। एवं जायमानघटप्रकाश एव उत्पत्तेः प्राक् असिद्धः। असिद्धघटप्रकाशस्य अनुत्पत्तिः अन्धकारेण क्रियमाणमावरणमेव। अन्धकारावरणमेव जनिष्यमाणप्रकाशस्य असिद्धस्य अनुत्पत्तिः। नित्यसिद्धस्वप्रकाशस्वरूपे चित्प्रकाशे प्रकाशलोपस्य प्रकाशानुत्पत्तेश्च असम्भवात्। घटप्रकाशे आलोकस्येव चित्प्रकाशेऽपि यदि प्रकाशान्तरापेक्षा स्यात् स्यादपि चित्प्रकाशस्य लोपोऽनुत्पादो वा न तु स्वप्रकाशे प्रकाशान्तरापेक्षा। एवं तृतीयपक्षोऽपि असङ्गतः इत्याह— न तृतीय इति। विद्यमानचित्प्रकाशेन विषयस्य असम्बन्धो नावरणकृत्यम्। ज्ञानस्य विषयसम्बन्धैकस्वभावत्वात्, विषयसम्बन्धवर्जितं ज्ञानमेव न सम्भवति। ज्ञानं यदि विषयसम्बन्धवर्जितं स्यात् तर्हि ज्ञानमेव न स्यात् घटादिवत्। स्वन्मते सम्बन्धानपेक्षणाच्चेति। अद्वैतमते ज्ञानातिरिक्तविषयस्य अभावात् चैतन्ये विषयसम्बन्धापेक्षैव नास्तीति भावः। चतुर्थपक्षोऽपि असङ्गतः इत्याह—नापि चतुर्थ इति। भाट्टमते ज्ञानजन्यज्ञाततायाः स्वीकारेऽपि अद्वैतिनो न स्वीकुर्वन्ति। अभिव्यक्तचित्सम्बन्ध एव अद्वैतिमते ज्ञातता। चैतन्यसम्बन्धस्य चैतन्यस्वरूपत्वात् ज्ञाततायाश्चैतन्यकार्यत्वाभावात्। पञ्चमपक्षोऽपि असङ्गत इत्याह—नापि पञ्चम इति। अभिज्ञाभिलापभेदेन व्यवहारो द्विविधः। सुषुप्तौ द्विविधस्यापि व्यवहारस्य अभावात् अनावरणापातात्। प्रकाशमाने ब्रह्मणि नास्ति न प्रकाशते इति ज्ञानरूपो व्यवहारः भ्रम एव वाच्यः। भ्रान्तिश्च अज्ञानावृतिसाध्या; अज्ञानावृतिसाध्या भ्रान्तिर्नाज्ञानावृत्तिरूपा भवितुमर्हति साध्यसाधनयोर्भेदात्। एवमभिलापरूपव्यवहारोऽपि न सम्भवति; यतः अभिलापः शब्दप्रयोगः। शब्दप्रयोगरूपव्यवहारः ज्ञानसाध्यः, ज्ञानञ्चात्र भ्रान्तिरेव। तथा च शब्दप्रयोगरूप-

नं, नास्ति न प्रकाशत इति व्यवहार एवाभिज्ञादिसाधारणः; अस्ति प्रकाशत इत्येतद्व्यवहाराभावो वा आवरणकृत्यम्। आवरणं च यद्योग्यता अज्ञानसंबन्धरूपा सुषुप्त्यादिसाधारणी आब्रह्मज्ञानमवतिष्ठते। तेन सुषुप्तिकाले नानावरणम्, मोक्षकाले च नावरणम् यदुक्तमस्या-

---

व्यवहारजनिका भ्रान्तिः भ्रान्तिजनकं च आवरणम्; एवञ्च स्वजनकजनकं न स्वजन्यजन्यस्वरूपं भवितुमर्हतीति भावः। किञ्च प्रदर्शितव्यवहारस्य अज्ञानावरण-कृत्यरूपत्वे सुषुप्तौ व्यवहाराभावेन चैतन्यस्य अनावरणत्वापाताच्च। एवं षष्ठ-पक्षोऽपि असङ्गत इत्याह—नापि षष्ठः। यद्यपि पञ्चमपक्षे व्यवहारस्य अज्ञानावृतिरूपत्वात् सुषुप्तौ व्यवहाराभावेन अनावरणत्वापातात् एतत्समाधानाय व्यवहाराभाव एव आवरणकृत्यमुक्तम्, तथापि षष्ठः पक्षोऽसङ्गत एव। अस्ति प्रकाशते इति व्यवहारस्य अभिज्ञारूपत्वे आत्मस्वरूपाभिज्ञाया इदानीमपि अज्ञानावरणदशायां सत्त्वात् व्यवहाराभावो नावरणकृत्यं भवितुमर्हति। स्वरूप-चैतन्यस्य अज्ञानावरणदशायां चैतन्यमस्ति चैतन्यं प्रकाशते इति ज्ञानं सर्वेषामेवा-स्तीति न व्यवहाराभावः आवरणकृत्यम्। यदि अन्तःकरणवृत्तिरूपज्ञानमेव ज्ञानपदेन विवक्ष्यते, तर्हि तादृशवृत्तिज्ञानरूपव्यवहारस्य अभावो मोक्षदशायामपि वर्तते इति मोक्षेऽपि अज्ञानावरणापत्तिः स्यात्। व्यवहारस्य अभिलपनरूपत्वे मोक्षेऽपि अस्ति प्रकाशते इत्यभिलापाभावात् मोक्षेऽपि अज्ञानावरणापातात्। सप्तमाष्टम-पक्षौ असङ्गतौ इत्याह—नापि सप्तमाष्टमौ इति। नास्तीत्यादिव्यवहारयोग्यत्व-मस्तीत्यादिव्यवहारायोग्यत्वञ्च सप्तमाष्टमपक्षौ अभिप्रेतौ। योग्यत्वायोग्यत्वे च धर्मौ ब्रह्मणि न स्तः। अतो धर्मद्वयं ब्रह्मणि आरोपितं वक्तव्यम्। आरोपश्च अज्ञानावरणसाध्यः। आरोपस्य आवृतिसाध्यत्वात्, आरोपितधर्मद्वयस्य आवृति-रूपत्वं न सम्भवति। यदा वृतिसाध्यं न तदा वृतिरूपं साध्यसाधनयोर्भेदा-पेक्षत्वात्, अभेदे साध्यसाधनभावासम्भवात्। अतः प्रदर्शिता अष्टौ पक्षाः न सम्भवन्तीति पूर्वः पक्षः ॥१॥

२—पञ्चमषष्ठपक्षौ निर्दोषौ इति समाधत्ते—**न नास्ति न प्रकाशते इति व्यवहार एव अभिज्ञादिसाधारणः, अस्ति प्रकाशते इत्येतद्व्यव-हाराभावो वा आवरणकृत्यम्। आवरणञ्च तद्योग्यता अज्ञानसम्बन्ध-**

प्यारोपितत्वेनावरणसापेक्षत्वमिति । तन्न; अज्ञानसंबन्धरूपस्यावरणस्यानादित्वेन चित्प्रकाश्यत्वेन च उत्पत्तौ ज्ञप्तौ स्थितौ वा स्वानपेक्षणात् ॥ २ ॥

---

रूपा सुषुप्त्यादिसाधारणी आत्मब्रह्माज्ञानमवतिष्ठते । तेन सुषुप्तिकाले न अनावरणम् । मोक्षकाले च नावरणम् । यदुक्तमस्यापि आरोपितत्वेन आवरणसापेक्षत्वमिति तन्न अज्ञानसम्बन्धरूपस्य आवरणस्य अनादित्वेन चित्प्रकाश्यत्वेन च उत्पत्तौ ज्ञप्तौ स्थितौ वा स्वानपेक्षणात् । अज्ञानावरणस्य कृत्यं दर्शयिष्यन् प्राग्विकल्पितपञ्चमषष्ठपक्षौ आवरणकृत्यत्वेन निर्दिशति आवरणस्य कृत्यं फलमित्यर्थः; प्रदर्शिताभिज्ञाभिवदनरूपव्यवहारः अस्ति प्रकाशते इति व्यवहाराभावो वा आवरणफलमित्यर्थः । विवरणोक्तचतुर्विधव्यवहाराणामभिज्ञाभिवदनाख्यौ द्विविधव्यवहारौ अत्र गृह्येते योग्यत्वात् । अहं ब्रह्म नास्मि, नाहं ब्रह्मरूपेण प्रकाशे इति अभिज्ञाभिवदनरूपो व्यवहारः आवरणकृत्यम् अज्ञानावरणफलमित्यर्थः । अनेन पञ्चमः पक्षः प्रदर्शितः । षष्ठं पक्षं दर्शयन्नाह—अस्ति प्रकाशते इति । अहं ब्रह्मास्मि, अहं ब्रह्मरूपेण प्रकाशे इति अभिज्ञाभिवदनरूपव्यवहाराभावो वा आवरणकृत्यम् अज्ञानावरणफलमित्यर्थः । आवरणं च तद्योग्यतेति । अविद्यासम्बन्धत्वादेवावरणस्येति विवरणोक्तेः [विवरणम्, पृ०, १५ काशीसंस्करणम्] चैतन्ये अविद्यासम्बन्ध एव आवरणम्, तच्च पूर्वोक्तव्यवहारव्यवहाराभावयोग्यतारूपम् । अविद्याचैतन्यसम्बन्धरूपावरणस्य व्यवहारव्यवहाराभावयोग्यतारूपोक्तेः सप्तमाष्टमपक्षौ निरस्तौ वेदितव्यौ । पूर्वपक्षे सप्तमाष्टमपक्षयोर्विकल्पितयोग्यत्वस्य आवरणरूपत्वोक्तेस्तस्य आवरणकृत्यरूपत्वाभावात् । योग्यतारूपावरणञ्च अज्ञानचैतन्यसम्बन्धरूपम् । तच्च आवरणमनाद्येव "षडस्माकमनादय" इति सिद्धान्तात् । तद्योग्यतारूपावरणस्य अविद्याचैतन्यसम्बन्धस्य अनादित्वात् ब्रह्मज्ञानैकनिवर्त्यत्वाच्च जाग्रदाद्यवस्थात्रये विद्यमानत्वात् मोक्षेऽविद्यमानत्वाच्च न सुषुप्तिकालेऽनावरणं न वा मोक्षकाले आवरणम् अविद्याचैतन्यसम्बन्धस्य सुषुप्तौ सत्त्वात् मोक्षेऽसत्त्वाच्च । व्यवहारयोग्यत्वं व्यवहाराभावयोग्यत्वञ्च नावरणकृत्यम्, किन्तु तादृशयोग्यत्वमेवावरणं फलफलिनोर्भेदादिति भावः । चिदज्ञानसम्बन्धरूपं यत् पूर्वोक्तव्यवहारयोग्यत्वं व्यवहाराभावयोग्यत्वं वा तस्य अनादित्वात् चित्प्रकाश्य-

ननु—अद्वितीयत्वादिविशिष्टे तथा व्यवहारेऽपि अवस्थात्रयेऽप्य-सन्दिग्धाविपर्यस्तत्वेन प्रकाशमानात्मरूपे अध्यासाधिष्ठाने सुखादिज्ञान-

---

त्वाच्च नोत्पत्तौ ज्ञप्तौ वा आत्माश्रयादिः। अनादित्वेन तस्य उत्पत्तिरेव नास्ति। चिदज्ञानसम्बन्धस्य चित्प्रकाश्यत्वेऽपि चितो नाज्ञानचितः सम्बन्धप्रकाश्यत्वम्, चितः स्वप्रकाशत्वात्। एवं स्थितावपि न अन्योऽन्याश्रयः चिदज्ञानसम्बन्धस्य चिदाश्रितत्वेऽपि चितश्चिदज्ञानसम्बन्धानाश्रितत्वात्। चितः स्वमहिमप्रतिष्ठत्वेन अनाश्रितत्वात् आत्माश्रयत्वस्यापि अनवकाशात्। साक्षात् परम्परया वा स्वानपेक्षणात् नात्माश्रयादेरिति भावः।

विवरणे अज्ञाननिमित्तमावरणकृत्यमुक्तम् [विवरणम्, पृ०, १४]। व्याख्यातं तत्त्वदीपने—अज्ञानं निमित्तं यस्य तदज्ञाननिमित्तम् आवरणं च तत्कृत्यं चेति आवरणकृत्यम् [तत्त्वदीपनम्, पृ०, १११] इति तदनेन अज्ञाननिमित्तकम् आवरणरूपं कृत्यमित्यर्थो लभ्यते। अज्ञानजन्यचैतन्यावरणमेव आवरणकृत्यम्। विवरणकृता अज्ञानचैतन्यसम्बन्धस्यैव आवरणत्वाभिधानात् "अविद्यासम्बन्धत्वादेव आवरणस्य" [विवरणम्, पृ० १५] तत्त्वदीपनकृन्मते आवरणकृत्यशब्दस्य कृत्यभागो अनर्थक एव संवृत्तः। एतदानर्थक्यं न विवरणसम्मतम्; उक्तञ्च विवरणे—"अस्ति प्रकाशते इत्याद्यभिज्ञादिव्यवहारं प्रति पुष्कलकारणे सति नास्ति न प्रकाशते चेति योऽयमात्मतत्त्वालम्बनो व्यवहारः स भावरूपेण केनचिदात्मन्यावरणमन्तरेण नोपपद्यते" इति [विवरणम्, पृ०, १५ काशीसंस्करणम्] नास्ति न प्रकाशते इति व्यवहारसिद्धिरेव आवरणफलमित्युक्तं विवरणे। अतः विवरणमते प्रदर्शित-व्यवहारसिद्धिरेव आवरणकृत्यं न तु आवरणमेव कृत्यमित्यर्थः।

विवरणग्रन्थमदृष्ट्वैव पूर्वपक्षी आवरणकृत्यं खण्डयितुमुद्युक्तः। स हि एवं मेने अज्ञानमेवावरणं तस्य कृत्यमावृतिरिति। व्यवहारस्तु आवृतिजन्येति आवृतिव्यवहारयोर्जन्यजनकभावात् तयोर्नैक्यमिति पूर्वपक्षिणा दूषितम्। तत्त्वदीपनकृद्विवरणयोरपि आवरणकृत्ययोरर्थभेदो नास्तीत्युक्तं कर्मधारयसमास-प्रदर्शनात्। एतत् सर्वं विवरणविरुद्धम्, सिद्धिकृद्भिरेव विवरणाभिप्रायः सम्यक् प्रतिपादितः ॥२॥

३—अद्वितीयत्वादिविशिष्टचैतन्यस्य अज्ञानविषयत्वेऽपि जाग्रदाद्यवस्थात्रये

रूपे चिन्मात्रे तदभावेन तत्कल्प्ययोर्योग्यत्वायोग्यत्वयोरभाव इति—चेत् न; शुद्धरूपायाश्चितः प्रकाशमानत्वेऽपि तस्या एव परिपूर्णाद्याकारेणाप्रकाशमानत्वात्, तदर्थं तस्या एवावरणकल्पनात्, परिपूर्णाद्याकारस्य मोक्षदशानुवृत्तत्वेन शुद्धचिन्मात्रत्वात् ॥३॥

---

असन्दिग्धाविपर्यस्तत्वेन भासमाने सुखादिसाक्षितया च भासमाने चिन्मात्रे अज्ञानावृतिकल्पनमप्रामाणिकमेवेति शंकते—ननु, अद्वितीयत्वादिविशिष्टे तथा व्यवहारेऽपि अवस्थात्रयेऽपि असन्दिग्धाविपर्यस्तत्वेन प्रकाशमानात्मरूपेऽध्यासाधिष्ठाने सुखादिज्ञानरूपे चिन्मात्रे तदभावेन तत्कल्प्ययोर्योग्यत्वायोग्यत्वयोरभाव इति चेत्। शुद्धं चैतन्यमेवाज्ञानावृतमिति सिद्धान्त्युक्तमसङ्गतं सन्दिग्धे विपर्यस्ते वा विषये अज्ञानावरणकल्पनं युक्तमपि सर्वथा असन्दिग्धे आवरणकल्पनम् असङ्गतमेव। अद्वितीयत्वादिधर्मविशिष्टं चैतन्यं संसारदशायां न भासते इति विशिष्टचैतन्यगोचरमावरणं स्वीकर्तुमुचितम्। अद्वितीयं चैतन्यं नास्ति न भासते इति व्यवहारदर्शनात् विशिष्टचैतन्यगोचरमावरणमनङ्गीकृत्य यच्चैतन्यं जाग्रदाद्यवस्थात्रयेऽसन्दिग्धम् अविपर्यस्तं भासते, देहाद्यध्यासाधिष्ठानत्वेन सुखादिसाक्षितया च भासते तस्मिन् चिन्मात्रे अज्ञानावरणकल्पनं सर्वथा अयुक्तमेव। भासमाने चिन्मात्रे नास्ति न भासते इत्यादिव्यवहारयोग्यत्वरूपमावरणकृत्यमेवमस्ति प्रकाशते इत्यादिव्यवहारायोग्यत्वरूपम् आवरणकृत्यं कथमपि न कल्पनीयम्। चिन्मात्रे प्रदर्शितयोग्यत्वायोग्यत्वयोरभावात्। यस्मिन् विशिष्टचैतन्ये आवरणकृत्यमङ्गीकर्तुमुचितं तत्र न कल्प्यते; यस्मिन् चिन्मात्रे सर्वदा भासमाने आवरणकृत्यमेव नास्ति तत्र आवरणकृत्यं कल्प्यते, महदेतच्चित्रम् इति भावः।

चिद्रूपेण प्रकाशमानेऽपि परिपूर्णानन्दरूपेण अप्रकाशमानत्वात्, यद्रूपेण चैतन्यमप्रकाशमानं तद्रूपेण चैतन्ये आवरणं कल्प्यते इति समाधत्ते—न, शुद्धरूपायाश्चितः प्रकाशमानत्वेऽपि तस्या एव परिपूर्णाद्याकारेण अप्रकाशमानत्वात् तदर्थं तस्या एव आवरणकल्पनात्। परिपूर्णाद्याकारस्य मोक्षदशानुवृत्तत्वेन शुद्धचिन्मात्रत्वात्। परिपूर्णानन्दा-

न च—निर्विभागचितः कथमेवं घटत इति—वाच्यम्; आवरण-महिम्नैव परिपूर्णं ब्रह्म नास्ति न प्रकाशत इति व्यवहारः अस्ति प्रकाशत इति व्यवहारप्रतिबन्धश्च, अध्यासाधिष्ठानत्वादिना प्रकाश-मानता चाविरुद्धेति ॥४॥

---

द्याकारेण चैतन्यं मोक्षदशायामेव भासते। संसारदशायां भासमानं चैतन्यं शुद्धं चैतन्यमेव न भवति। यद्रूपेण संसारदशायामभासमानं चैतन्यं तद्रूपेण अज्ञानावृतमेव; अतो अज्ञानं शुद्धचैतन्यावरकं शुद्धचैतन्यविषयकमेव इत्येव युक्तम् ॥३॥

४—चैतन्यस्य निर्विभागत्वात् पूर्णत्वापूर्णत्वादिरूपेण भेदशून्ये निरंशे चैतन्ये प्रदर्शितिविभागव्यवस्थैव नास्तीति। आशङ्क्य समाधत्ते—न च निर्वि-भागचितः कथमेवं घटते इति वाच्यम्; आवरणमहिम्नैव परिपूर्णं ब्रह्म नास्ति न प्रकाशते इति व्यवहारः अस्ति प्रकाशते इति व्यवहार-प्रतिबन्धश्च अध्यासाधिष्ठानत्वादिना प्रकाशमानता च अविरुद्धेति। परिपूर्णत्वापरिपूर्णत्वाभ्यां चिद्भेदाभावात् अपरिपूर्णत्वेन संसारदशायां भासते, न परिपूर्णत्वेनेति विभागः कथं स्यात्; चैतन्यस्य एकत्वात् निर्विभागत्वात् निरंश-त्वाच्च। चैतन्यं भासते चेत् सर्वात्मनैव भासते न पुनरंशतो भासते, अंशतो न भासते इति भवितुमर्हतीत्याशङ्क्य समाधत्ते—परिपूर्णानन्दरूपचैतन्येऽज्ञाना-वरणं सर्वानुभवसिद्धम्; चिद्रूपेण प्रकाशमानत्वमपि सर्वानुभवसिद्धम्। अतो अनुभवसिद्धस्य उपपादनाय आवरणस्यैव तादृशो महिमेति अङ्गीकरणीयः। चिद्रूपपरिपूर्णानन्दरूपयोर्वस्तुगत्या भेदाभावेऽपि चेतनोऽहमस्मि परिपूर्णानन्द-रूपो नाहमस्मीति व्यवहारसिद्धये परिपूर्णानन्दरूपे अज्ञानावरणम् अवश्यमेव कल्पनीयम्। चिद्रूपपरिपूर्णानन्दरूपयोराविद्यकभेदोऽङ्गीकार्यः। चिदविद्या-सम्बन्धस्येव अयमपि आविद्यको भेदो अनादिः तत्त्वज्ञाननाश्यश्च। प्रदर्शित-व्यवहारव्यवस्थोपपत्तये चित्पूर्णानन्दयोरनादिराविद्यको भेदोऽङ्गीक्रियते। वस्तुगत्या चिदानन्दयोरेकत्वेऽपि आविद्यकभेदेन निरंशे चैतन्ये सामान्यविशेष-भावो भवति। अतः अध्यासाधिष्ठानत्वेन सामान्यतश्चिद्रूपेण भासमानत्वेऽपि परिपूर्णानन्दरूपेण अज्ञानावृतत्वात् संसारदशायां न भासते। अज्ञानावरण-

'अत एव—अवेद्यत्वे' सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्व-विरुद्धे योग्यत्वायोग्यत्वे कथमिदानीमपि ब्रह्मणि स्याताम्?. न च—अज्ञानादिमत्त्वेनापरोक्षव्यवहारयोग्यत्वं स्वरूपेण च तदयोग्यत्वमित्य-विरोध इति—वाच्यम्; स्वरूपस्याप्रकाशत्वादिति—निरस्तम्; परि-पूर्णाद्याकारेण इदानीं व्यवहाराभावेऽपि अपरोक्षव्यवहारयोग्यत्वान-पायात् ॥५॥

---

महिम्ना निरंशेऽपि चैतन्ये कल्पितसामान्यविशेषभावेन प्रकाशमानत्वाप्रकाश-मानत्वयोरविरोधः। चिद्रूपस्य स्वप्रकाशत्वेन संसारदशायां परिपूर्णानन्द-रूपेण प्रकाशप्रसक्तौ अज्ञानेनावृतत्वात् न प्रकाशते। अज्ञानावरणाभावात् चिद्रूपेण प्रकाशते। इति भासमानेऽपि अज्ञानावरणं त्वदुक्तमर्थं न जानामीत्यादौ यथा स्पष्टं तथा प्रकृतेऽपीति भावः ॥४॥

५—अद्वैतिनां मते चैतन्यस्य स्वप्रकाशत्वात् स्वप्रकाशचैतन्ये नास्तीत्यादिव्य-वहारयोग्यत्वम् अस्तीत्यादिव्यवहाराभावयोग्यत्वञ्च कथं समर्थ्येते इति पूर्वपक्षि-शङ्कामनूद्य सिद्धान्तिना निराक्रियते—अत एव अवेद्यत्वे सति अपरोक्ष-व्यवहारयोग्यत्वरूपस्वप्रकाशत्वविरुद्धे योग्यत्वायोग्यत्वे कथमिदानीमपि ब्रह्मणि स्याताम्। न च अज्ञानादिमत्त्वेन अपरोक्षव्यवहारयोग्यत्वं स्वरूपेण च तदयोग्यत्वम् इत्यविरोध इति वाच्यम् स्वरूपस्य अस्व-प्रकाशत्वापातात् इति निरस्तम्। परिपूर्णाद्याकारेण इदानीं व्यवहाराभावेऽपि अपरोक्षव्यवहारयोग्यत्वानपायात्। स्वप्रकाशचैतन्यं कदापि नास्तीत्यादिव्यवहारयोग्यम् अस्तीत्यादिव्यवहाराभावयोग्यञ्च न भवितु-मर्हति। यतो अद्वैतिनां मते स्वप्रकाशत्वं न स्ववेद्यत्वं बौद्धप्राभाकरमाध्वानां मते स्ववेद्यत्वमेव स्वप्रकाशत्वं परवेद्यत्वेन घटादीनां जडत्वम्, स्ववेद्यत्वेन ज्ञानस्य अजडत्वं स्वप्रकाशत्वं च। एतेषां मते वेद्यत्वं केवलान्वयिधर्मः। स्ववेद्यत्वपर-वेद्यत्वाभ्यामजडं जडादिभ्यो भिद्यते। अद्वैतिमते तु नैवं स्वप्रकाशत्वम्, किन्तु अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वम्। एतन्मते स्वप्रकाशस्य वेद्यत्वं नास्ति, चिद्रूपं ज्ञानमेव स्वप्रकाशम्। अज्ञानस्य विषयनिरूपणप्रकरणे चिन्मात्रस्यैव अज्ञानविषयत्वाङ्गीकारात्। अज्ञानावरणप्रयुक्तमेव स्वप्रकाशचैतन्यस्य नास्तीत्यादि-

व्यवहारयोग्यत्वम् अस्तीत्यादिव्यवहाराभावयोग्यत्वञ्च अङ्गीक्रियेते । एतच्च विरुद्धम्; 'अपरोक्षव्यवहारयोग्ये स्वप्रकाशचैतन्ये' कथं नास्तीत्यादिव्यवहारयोग्यत्वं स्यात् । अपरोक्षव्यवहारयोग्यम् अस्तीत्यादिव्यवहारयोग्यमेव । विद्यमानविषयकत्वादपरोक्षव्यवहारस्य । तथा च कथम् एकस्य युगपत् अस्ति नास्तीति विरुद्धव्यवहारयोग्यत्वं स्यात् । एवमेव अस्तीत्यादिव्यवहाराभावयोग्यत्वमपि स्वप्रकाशे चैतन्ये विरुद्धमेव । चैतन्यस्य स्वप्रकाशत्वरक्षायै अपरोक्षव्यवहारयोग्यत्वे स्वीक्रियमाणे न तस्य कथमपि नास्तीत्यादिव्यवहारयोग्यत्वं सम्भवति । "एकं सन्धित्सतो अपरं प्रच्यवते" इति न्यायापातात् । तथा च स्वप्रकाशचैतन्ये अज्ञाननिमित्तावरणकृत्यं न सम्भवतीति भावः । चैतन्ये अज्ञाननिमित्तावरणकृत्याभ्युपगमे तस्य स्वप्रकाशत्वं न स्यात् । एकस्मिन् चैतन्ये स्वप्रकाशत्वम् अज्ञानावरणकृत्यञ्च परस्परविरुद्धम् । तथा च अद्वैतिनामुभयतः पाशा रज्जुरिति भावः । चैतन्यस्य स्वमतसिद्धं स्वप्रकाशत्वमपि अज्ञाननिमितावरणकृत्यमपि दुर्घटमापतितं सिद्धान्तिन इति भावः । मूले योग्यत्वायोग्यत्वे विरुद्धे इति । तस्यायमर्थः—नास्तीत्यादिव्यवहारयोग्यत्वम् अस्तीत्यादिव्यवहाराभावयोग्यत्वं बोध्यम् । अयोग्यत्वमित्यस्य व्यवहाराभावयोग्यत्वम् अर्थः योग्यत्वायोग्यत्वरूपधर्मद्वयं योग्यत्वरूपमेव । योग्यत्वान्वयी अभावः व्यवहारान्वयी स्यात्, योग्यतायाः अभावम् अगृहीत्वा व्यवहाराभावो ग्राह्यः । तेन व्यवहारयोग्यत्वव्यवहाराभावयोग्यत्वे एव योग्यत्वायोग्यत्वे इति मूलस्थितवाक्यस्यार्थः । पूर्वपक्षीविकल्पितसप्तमाष्टमपक्षद्वयमेव मूलस्थितयोग्यत्वायोग्यत्वे इत्यनेन संगृहीतम् ।

अत्र यद्यद्वैतिन एवं वदेयुः अज्ञानादिविशिष्टरूपेण चैतन्यम् अपरोक्षव्यवहारयोग्यमतः स्वप्रकाशम् । स्वरूपचैतन्यं च अज्ञानावृतमिति कृत्वा अपरोक्षव्यवहारायोग्यं ततः विशिष्टचैतन्ये स्वप्रकाशत्वं केवलचैतन्यस्य अज्ञानावृतत्वमिति स्वप्रकाशत्वाज्ञानावृतत्वयोरविरोधः इति तदसंगतम् । स्वरूपचैतन्यस्य अस्वप्रकाशत्वापत्तेः । यतः स्वरूपचैतन्यम् अज्ञानावृतमिति तस्य अपरोक्षव्यवहारायोग्यत्वात् । अवेद्यत्वे सति अपरोक्षव्यवप्रहारयोग्यत्वमेव स्वप्रकाशत्वम्; तदभावात् स्वरूपचैतन्यमस्वप्रकाशमेव स्यात् । तथा च अद्वैतिनां सिद्धान्तहानिरिति ।

न चैवं—सुखादेरज्ञानानवच्छिन्नचित्प्रकाश्यत्वे 'सुखादिकं न

---

समाधत्ते सिद्धान्ती इदानीम्—संसारदशायां परिपूर्णाद्याकारेण अपरोक्षव्यवहाराभावेऽपि अपरोक्षव्यवहारयोग्यत्वानपायात्। अयम्भावः—स्वप्रकाशत्वलक्षणे अपरोक्षव्यवहारयोग्यत्वं न सर्वदा अपरोक्षव्यवहारयोग्यत्वम्। चित्सुखाचार्यैरेतल्लक्षणनिष्कर्षप्रदर्शनावसरे अभिहितम् अपरोक्षव्यवहारयोग्यत्वं मोक्षदशायां निर्धर्मकचैतन्ये न वर्तते। अतः अपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वमनुक्त्वा योग्यत्वात्यन्ताभावानधिकरणत्वं स्वप्रकाशत्वमुक्तम्। यत्र कदाचित् योग्यत्वमासीत् तत्र योग्यत्वात्यन्ताभावो न वर्तते। कदाचित् योग्यत्वधर्मस्य सत्तामात्रेण स्वप्रकाशत्वोपपत्तेः अतः परिपूर्णत्वाकारेण स्वरूपचैतन्यस्य इदानीमपरोक्षव्यवहाराभावेऽपि अपरोक्षयोग्यतायाः प्रदर्शितरूपायाः न हानिः। यदा कदाचित् योग्यत्वसत्त्वेन तदत्यन्ताभावानधिकरणत्वस्य अक्षतत्वात्। उक्तञ्च तत्त्वप्रदीपिकायाम् "न च योग्यतालक्षणधर्माङ्गीकारे अव्याप्तिर्मोक्षदशायां तदसम्भवात् अपसिद्धान्तापत्तिश्चेति शङ्कनीयम्, योग्यत्वात्यन्ताभावानधिकरणत्वस्य तत्त्वात्। गुणवत्त्वात्यन्ताभावानधिकरणस्य द्रव्यत्ववत्। तेन नाव्याप्तिः। उक्तञ्च नयनप्रसादिन्याम्—तस्मात् कदाचिदपि योग्यताधिकरणं तदत्यन्ताभावानधिकरणमेवेति सिद्धम्। इतरथा गुणवद्द्रव्यमिति कणादोक्तगुणवत्त्वस्य द्रव्यलक्षणत्वभंगप्रसंगात्। उक्तञ्च लक्षणावल्याम् उदयनेन गुणात्यन्ताभावानधिकरणं द्रव्यमिति। तदत्यन्ताभावानधिकरणत्वस्य तत्प्रतियोग्यधिकरणत्वनियतत्वात्। अतः परिपूर्णत्वाकारेण स्वरूपचैतन्यस्य इदानीमपरोक्षव्यवहाराभावेऽपि अपरोक्षव्यवहारयोग्यताया न हानिः।

चैतन्यं भाति स्फुरतीति व्यवहार एव अपरोक्षव्यवहारः। तत्त्वज्ञानानुदयदशायां पूर्णानन्दस्वरूपचैतन्यस्य भातीत्यादिव्यवहाराभावेऽपि पूर्णानन्दाभानापादकाज्ञाननाशकान्तःकरणवृत्तेः कदाचित् विषयत्वात् चैतन्यस्य अपरोक्षव्यवहारयोग्यतायाः न हानिः। अभानापादकाज्ञाननाशकवृत्तेः कदाचिद्विषयत्वं चैतन्ये वर्तते। अतोऽपरोक्षव्यवहारयोग्यत्वं चैतन्ये वर्तत एवेति ॥५॥

६—स्वरूपचैतन्यस्य अज्ञानावृतत्वे सुखादीनां स्फुरणं न स्यात्; सुखादीनां साक्षिभास्यत्वाङ्गीकारादिति पूर्वपक्षी शङ्कते—न चैवं सुखादेरज्ञानावच्छिन्न-

प्रकाशत' इत्यनुभवापातेन सुखादिकं प्रकाशत इत्यनुभवार्थं चितोऽज्ञानानवच्छेदेन प्रकाशोऽङ्गीकरणीय इति—वाच्यम्; इष्टापत्तेः, अनुक्तोपालम्भनत्वात्। न ह्यज्ञानावच्छेदेन चित् प्रकाशत इति ब्रूमः। अत एव च– नित्यातीन्द्रियेऽप्यज्ञानावच्छेदकतया अपरोक्षव्यवहारेण तत्रापि स्वप्रकाशापत्तिरिति—निरस्तम्; अज्ञानानवच्छेदेन तादृशस्य व्यवहारस्योक्तेः ॥६॥

---

चित्प्रकाश्यत्वे सुखादिकं न प्रकाशते इत्यनुभवापातेन सुखादिकं प्रकाशते इत्यनुभवार्थं चितोऽज्ञानानवच्छेदेन प्रकाशोऽङ्गीकरणीयः इति वाच्यम्। सुखादिभासकं साक्षिचैतन्यं यदि संसारदशायाम् अज्ञानावृतं स्यात् तदा सुखादेः प्रकाशो न स्यात्; अथ च सुखादेः प्रकाशोऽनुभवसिद्ध एव। अतः सुखादेः प्रकाशरूपं साक्षिचैतन्यं नाज्ञानावृतमिति अवश्यं वक्तव्यम्; अनावृतचैतन्यमेव प्रकाशरूपं नत्वावृतचैतन्यम्। अतः सुखादिप्रकाशानुरोधेन अज्ञानेन अनावृतं चैतन्यं संसारदशायां भासते इत्यवश्यमङ्गीकरणीयम्। चैतन्यं न केवलमज्ञानावच्छेदेनैव प्रकाशते, किन्तु अज्ञानान्यसुखाद्यवच्छेदेनापि प्रकाशते इत्यङ्गीकरणीयम्।

अज्ञानान्यसुखाद्यवच्छेदेनापि चैतन्यं प्रकाशते इत्यस्माकमिष्टमेवेति परिहरति—इष्टापत्तेः। अनुक्तवोपालम्भनत्वात्। न हि अज्ञानावच्छेदेनैव चित्प्रकाशते इति ब्रूमः। अज्ञानान्यसुखाद्यवच्छेदेन चित् न प्रकाशते इति कदापि नोक्तम्; अतोऽनुक्तोपालम्भनं निरनुयोज्यानुयोगो निग्रहस्थानं परेषामिति।

नित्यतीन्द्रिये परमाणुस्वप्रकाशत्वलक्षणस्य अतिव्याप्तिमाशङ्क्य समाधत्ते—अत एव च नित्यातीन्द्रियेऽप्यज्ञानावच्छेदकतया अपरोक्षव्यवहारेण तत्रापि स्वप्रकाशापत्तिरिति निरस्तम्। अज्ञानानवच्छेदेन तादृशस्य व्यवहारस्योक्तेः। नित्यातीन्द्रियः परमाणुरपि अज्ञानव्यावर्तकतया साक्षिचैतन्येन भास्यते। परमाणुरज्ञातं भातीति व्यवहारात्। परमाणुविषयकमज्ञानं यदा साक्षिचैतन्येन भास्यते तदा अज्ञानव्यावर्तकपरमाणुरपि साक्षिणैव भास्यते। अद्वैतिनो हि अवेद्यम् अपरोक्षव्यवहारयोग्यं स्वप्रकाशं वदन्ति। अवेद्यं च फलाव्याप्यम्।

ननु प्रदीपावारकघटादिवच्चैतन्यावारकाविद्या चैतन्यस्यान्यसंबन्धं प्रतिबध्नातु अन्यं प्रति चैतन्यमाच्छादयतु, न तु चैतन्यं प्रत्येव चैतन्ये उक्तयोग्यत्वरूपप्रकाशविरोधिनी सा, न हि दीपो घटावृतोऽपि स्वयं न प्रकाशते; तमःसंबन्धापातात्, न च—कल्पितभेदं जीवचैतन्यं प्रति शुद्धचैतन्यमाच्छादयतीति—वाच्यम्; आवरणं विना भेदकल्पनस्यै-

---

प्रमाणवृत्त्या अभिव्यक्तं चैतन्यमेव फलम्। अभिव्यक्तचैतन्येन फलेन अप्रकाश्य-मेव फलव्याप्यम्। परमाणुस्तु फलाव्याप्यत्वात् परमाण्वाकारप्रमाणवृत्त्या अभिव्यक्तचैतन्येन परमाणुरभास्यत्वात् साक्षिभास्या अज्ञानावच्छेदकतया परमाणु-रज्ञातं भातीति अपरोक्षव्यवहारयोग्यत्वाच्च परमाणुस्वप्रकाशत्वलक्षणमतिव्यासम्। अतिव्याप्तिं निरस्यति अज्ञानानवच्छेदेनेति। स्वप्रकाशत्वलक्षणे अपरोक्षव्यवहार-योग्यत्वं यदुक्तं तदज्ञानानवच्छेदेन अपरोक्षव्यवहारयोग्यत्वं बोध्यम्। साक्षि-भास्याज्ञानव्यावर्तकतया यदपरोक्षव्यवहारयोग्यं तन्न स्वप्रकाशमित्यर्थः। साक्षि-भास्यत्वमात्रेण अपरोक्षव्यवहारयोग्यत्वे तेनैव स्वप्रकाशत्वे च वस्तुमात्रस्य स्वप्रकाशत्वं स्यात्। अतो न तादृशमपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वलक्षणे विवक्षितमिति। साक्षिवेद्यसुखादीनां फलाव्याप्यत्वे सति अपरोक्षव्यवहारयोग्य-त्वात् स्वप्रकाशत्वापत्तिः। एतदापत्तिसमाधानाय अपरोक्षव्यवहारयोग्यत्वम् एवं वक्तव्यम्। अभानापादकाज्ञानविरोधिप्रमाणवृत्तेः कदाचिद्विषयत्वं तेन न सुखा-देरपरोक्षव्यवहारयोग्यत्वम्; साक्षिभास्यसुखादीनामभानापादकाज्ञानस्यैवाप्रसिद्धम्। साक्षिभास्यवस्तुनः अज्ञातसत्त्वाभावात्। अभानापादकाज्ञानविरोधिप्रमाणवृत्तिविषय-त्वस्य सुखादौ अभावात् न सुखादीनां स्वप्रकाशत्वम् ॥६॥

७—स्वप्रकाशचैतन्ये अज्ञानावरणकल्पनं व्यर्थम्, चैतन्यमज्ञानावृतमपि स्वं प्रति न प्रकाशते इति भवितुमर्हति। यथा घटावृतः प्रदीपः अन्यान् प्रति अप्रकाश-मानोऽपि स्वं प्रति प्रकाशते एव इति पूर्वपक्षी शंकते—ननु प्रदीपावरक-घटादिवच्चैतन्यावारिकाऽविद्या चैतन्यस्य अन्यसम्बन्धं प्रतिबध्नातु, अन्यं प्रति चैतन्यमाच्छादयतु, न तु चैतन्यं प्रत्येव चैतन्ये उक्त-योग्यत्वरूपप्रकाशविरोधिनी सा। न हि दीपो घटावृतोऽपि स्वयं न प्रकाशते तमः सम्बन्धापातात्। न च कल्पितभेदं जीवचैतन्यं प्रति

वायोगात्। यो मोक्षे भावी चिन्मात्रस्यैव चिन्मात्रं प्रति प्रकाशः, तदभावस्यैवेदानीमज्ञानेन साधनीयत्वाच्चेति—चेत् ॥७॥

---

शुद्धचैतन्यमाच्छादयतीति वाच्यम्, आवरणं विना भेदकल्पनस्यैवायोगात्। यो मोक्षे भावीचिन्मात्रस्यैव चिन्मात्रं प्रति प्रकाशः तद्भावस्यैव इदानीमज्ञानेन साधनीयत्वाच्च इति चेत्। यथा घटावृतो दीपः स्वयं प्रकाशमानोऽपि घटेन प्रतिबन्धात् अन्यं न प्रकाशयति एवं घटावृतः; दीपः अन्यस्य प्रत्यक्षज्ञानविषयोऽपि न भवति न तु घटावृतो दीपः स्वयं न प्रकाशते। यदि 'आवृतोऽपि दीपः स्वयं न प्रकाशेत तर्हि दीपो न प्रकाशते इति स्यात्। ततः आवृतदीपस्वरूपे तमः सम्बन्धः स्वीकार्यः स्यात्। स च सर्वथा असम्भाव्य एव। तथैव अविद्या रूपमावरणमविद्यावृतचैतन्यस्य अन्येन सह सम्बन्धं प्रतिबध्नातु एवमविद्या अन्यं पुरुषं प्रति स्वावृतचैतन्यमाच्छादयतु किन्तु अविद्याचैतन्यं प्रत्येव चैतन्यमाच्छादयतीति न युक्तम्; स्वप्रकाशं वस्तु स्वं प्रति स्वयमप्रकाशमानं न भवितुमर्हति। अविद्यया स्वं प्रति स्वयम् आच्छादितं न भवति, स्वस्य स्वप्रकाशत्वात्। स्वप्रकाशस्य अपरोक्षव्यवहारयोग्यत्वात् अपरोक्षव्यवहारयोग्यत्वविरोधि आवरणं चैतन्ये न सम्भाव्यते; अतश्चैतन्ये अज्ञानावरणकल्पनं व्यर्थमेव।

यच्चाद्वैतिभिरेवमुच्येत अविद्यया चैतन्यं प्रति चैतन्यं नाच्छाद्यते किन्तु अविद्याकल्पितभेदजीवचैतन्यं प्रतिशुद्धं चैतन्यमविद्यया आच्छाद्यते इति— तदतिमन्दम्; अन्योन्याश्रयापातात् चैतन्यस्य आव्रियमाणत्वसिद्धौ आवरणसिद्धिः आवरणसिद्धौ च कल्पितभेदजीवचैतन्यं प्रति शुद्धचैतन्यस्य आव्रियमाणत्वसिद्धिः। आवरणसिद्धौ चैतन्ये भेदकल्पनैव न स्यात्। 'यच्चोक्तम् अविद्या जीवचैतन्यं प्रति शुद्धचैतन्यमावृणोतीति तदपि असंगतम्। यतः मोक्षदशायां चैतन्यं प्रत्येव चैतन्यस्य प्रकाशो भवति। मोक्षे कल्पितभेदो जीवो न स्थास्यति। अतः एवं कथयितुं कथमपि न युज्यते यत् मोक्षे कल्पितभेदजीवचैतन्यं प्रति शुद्धचैतन्यस्य प्रकाशो भविष्यतीति मोक्षदशायां यद् भावि तदभाव एव संसारदशायाम् अज्ञानेन सम्पादनीयम्। मोक्षे चैतन्यं प्रत्येव चैतन्यस्य प्रकाशो भविष्यतीति संसारदशायां चैतन्यं प्रत्येव चैतन्यस्याप्रकाशः अज्ञानेन उपपादनीयः। स च कथमपि उपपादयितुं न शक्यते इत्युक्तम् ॥७॥

न; कल्पितभेदं जीवं प्रति शुद्धचैतन्यस्यावृतत्वात्। न च—भेदकल्पनस्यावरणोत्तरकालीनत्वादिदमयुक्तमिति—वाच्यम्; भेदावरणयोरुभयोरप्यनादित्वेन परस्परमानन्तर्याभावात्। यच्चोक्तम्—यो मोक्षे भावी चैतन्यं प्रति प्रकाशः तदभाव इदानीमज्ञानसाध्य—इति। तन्न; मोक्षे जन्यस्य चैतन्यप्रकाशस्याभावात्, कल्पितभेदापगमे शुद्धचैतन्यं प्रत्येव प्रकाशस्य जीवं प्रत्यपि संभवात् ॥८॥

---

८—अविद्या तत्सम्बन्धजीवानामनादित्वात् अविद्यानाशजन्यनाशप्रतियोगित्वाच्च मोक्षदशायां चैतन्यं प्रति चैतन्यस्य प्रकाशः संसारदशायाम् अविद्यया कल्पितभेदं जीवं प्रति चैतन्यस्य अप्रकाशः तत्त्वज्ञानेन आविद्यकभेदोच्छेदे जीवचैतन्यमेव शुद्धं चैतन्यम्। अतः जीवचैतन्यं प्रति चैतन्यस्य अप्रकाश एव शुद्धचैतन्यं प्रति अप्रकाशः। मोक्षे पुनः शुद्धचैतन्यं प्रति शुद्धचैतन्यप्रकाशः एवञ्च प्रकाशाप्रकाशाभ्यां मोक्षसंसारयोर्वैपरीत्यमपि समर्थितं भवतीति समाधत्ते—न, कल्पितभेदं जीवं प्रति शुद्धचैतन्यस्य आवृतत्वात्। न च भेदकल्पनस्य आवरणोत्तरकालीनत्वात् इदमयुक्तमिति वाच्यम् भेदावरणयोरुभयोरनादित्वेन परस्परम् आनन्तर्याभावात्। यच्चोक्तं यो मोक्षे भावी चैतन्यं प्रति प्रकाशः तदभाव इदानीमज्ञानसाध्य इति तन्न मोक्षे जन्यस्य चैतन्यप्रकाशस्य अभावात्। कल्पितभेदापगमे शुद्धचैतन्यं प्रत्येव प्रकाशस्य जीवं प्रत्यपि सम्भवात्। अविद्या, कल्पितभेदं जीवं प्रत्येव शुद्धं चैतन्यमावृणोति; किन्तु चैतन्यं प्रति चैतन्यं नावृणोति। शुद्धचैतन्यमेव अविद्योपाधिवशात् बिम्बप्रतिबिम्बभावेन ईश्वरजीवरूपेण भिद्यते। न च चैतन्यभेदकल्पनस्य अविद्यावरणोत्तरकालीनत्वेनान्योन्याश्रय इति वाच्यम्; भेदाविद्यावरणयोरनादित्वात्; उभयोः पौर्वापर्याभावात् पौर्वापर्ये हि स्यादपि अन्योन्याश्रयता तन्नास्ति, उभयोरनादित्वात्। यच्च मोक्षे भाविन एव संसारदशायां तदभावोऽविद्यया साध्य इति तन्न। मोक्षे जन्यचैतन्यप्रकाशस्यैवासंभवात्, मोक्षे नूतनं किञ्चिदुत्पत्स्यते इति एकान्तमसंभवि। तत्त्वज्ञानेन अविद्याकल्पितभेदापगमे जीवचैतन्यमेव शुद्धचैतन्यरूपेण अवतिष्ठते। अतः मोक्षे शुद्धचैतन्यं प्रति प्रकाश एव जीवचैतन्यं प्रति प्रकाशः। आविद्यकभेदापगमे जीवचैतन्यमेव

यच्चोक्तं—प्रकाशस्वरूपे चैतन्ये कथमज्ञानम्? न ह्यालोके तमः—इति। तन्न; अज्ञानतमसोर्विरोधितायामनुभवसिद्धविशेषात्। तथा हि—'त्वदुक्तमर्थं न जानामी'ति प्रकाशमाने वस्तुनि अज्ञानस्यानुभवात् स्वरूपचैतन्यं साक्षी वा नाज्ञानविरोधि, तमसस्तु आलोके

---

शुद्धचैतन्यम्। संसारदशायां जीवचैतन्यं प्रति शुद्धाप्रकाश एव शुद्धं प्रति शुद्धाप्रकाशः। अयमप्रकाशोऽविद्याप्रयुक्त एव। यच्चाशंकितं मोक्षे जीवचैतन्यं प्रति शुद्धाप्रकाशात् असंगतमिति तन्न, मोक्षे अविद्यापगमे जीवचैतन्यमेव शुद्धचैतन्यम्; शुद्धचैतन्यं प्रति प्रकाशस्तु मोक्षे विद्यते एवेति न दोषलेशावकाश इति भावः ॥८॥

अज्ञाननिमित्तावरणकृत्यनिरूपणं समाप्तम्।

९—शुद्धचैतन्यमेव अज्ञानस्याश्रयो विषयश्चेत्युक्तम्; अज्ञाननिमित्तावरण कृत्यञ्च प्रदर्शितम्। इदानीं पूर्वपक्षी शंकते—स्वप्रकाशचैतन्ये अज्ञानं कथंकारं तिष्ठेत्। यथा आलोके अन्धकारो न तिष्ठति एवं स्वप्रकाशचैतन्येऽपि अज्ञानं न तिष्ठेत्। उक्तञ्चेष्टसिद्धौ—

"नन्वविद्या स्वयंज्योतिरात्मानं ढौकते कथम्।
कूटस्थमद्वितीयञ्च सहस्रांशुं यथा तमः ॥ इति
[इष्टसिद्धिः, पृ०, २०७ श्लो० १३६]

पञ्चदश्यामपि "स्वप्रकाशे कुतो विद्या तां विना कथमावृत्तिरिति"। इयं शंका भास्कररामानुजादिभिरपि प्रदर्शिता समाहिता च प्रागेव; यथेष्टसिद्धौ—

प्रसिद्धत्वादविद्यायाः सापह्नोतुं न शक्यते।
अनात्मनो न सा युक्ता विना नात्मा तया नहि ॥
[इष्टसिद्धिः, पृ०, २०७ श्लो० १०३]

पञ्चदश्यामपि—"इत्यादितर्कजालानि स्वानुभूतिर्ग्रसत्यसौ" इति। अस्माभिरपि अस्याः शंकायाः समाधानं प्रसंगत उक्तम्; अत्र सुविशदं करिष्यते। प्रदर्शितां शंकां दर्शयन् समाधत्ते—यच्चोक्तं प्रकाशस्वरूपे चैतन्ये कथमज्ञानं न हि आलोके तमः इति तन्न, अज्ञानतमसोर्विरोधितायाम् अनुभवसिद्धविशेषात् तथा हि—त्वदुक्तमर्थं न

सत्यननुभवात् आलोकमात्रं तद्विरोधि। वस्तुतस्तु—अवतमसे विषय-प्रकाशकालोकसहभावदर्शनेन तमस्यपि नालोकमात्रं विरोधि ॥९॥

---

ज्ञानामीति प्रकाशमाने वस्तुनि अज्ञानस्यानुभवात्। स्वरूपचैतन्यं साक्षि वा नाज्ञानविरोधि, तमसस्तु आलोके सति अननुभवात् आलोकमात्रं तद्विरोधि। वस्तुतस्तु अवतमसे विषयप्रकाशकालोक-सहभावदर्शनेन तमस्यपि नालोकमात्रं विरोधि.। आश्रयैक्यमनन्तर्भाव्य प्रकाशतमसोर्विरोधः केनापि दर्शयितुं न शक्यते। यस्मिन् आश्रये आलो-कस्तत्र न तमः। न हि आलोकोऽस्तीति कुत्रापि 'तमो न स्यात्, तथात्वे तमः कथैवोच्छिद्येत एवं ज्ञानाज्ञानयोर्विरोधेऽपि समानाश्रयत्वं समानविषयत्वं वक्तव्यम्; यस्मिन्नाश्रये यद्विषयकं ज्ञानं तत्र तद्विषयकमज्ञानं न तिष्ठतीत्येव विरोधो वक्तव्यः। निराश्रयनिर्विषयकज्ञानेन अज्ञानस्य विरोधकथैव नास्ति। यदि ज्ञानमस्तीति अज्ञानं न तिष्ठेत्, तर्हि जगति अज्ञानकथयैवोच्छिद्येत। किं ब्रह्मचैतन्यं स्वरूपचैतन्यं वा साश्रयं सविषयकञ्च वक्तुमिष्यते पूर्वपक्षिभिः? चैतन्यस्य साश्रयत्वे सविषयत्वे च तस्य किं ब्रह्मत्वं स्यात्? निराश्रय-निर्विषयकचैतन्येन अज्ञानस्य कथंकारं विरोधो भवेत्। सर्वथा युक्तिविरुद्धमपि बहुकृत्य उद्घोषयन् केवलं कंठशोषमेव उपैष्यतीति नात्र प्रामाणिकानामादरः। उक्तञ्च विवरणे—न हि तमो वस्तुद्वयसापेक्षमवभासते अज्ञानमिति च द्वयसापेक्षज्ञानपर्युदासेन अभिधानात् द्वयसापेक्षवदवभासते इति [विवरणम्, पृ०, ४३, काशी सं०] अतो निराश्रयनिर्विषयकचिद्रूपज्ञानेन सह अज्ञानस्य विरोधगन्धोऽपि नास्तीति बोध्यम्। किञ्च ब्रह्मणो ज्ञानरूपत्वादेव साश्रयत्व-सविषयकत्वादिकल्पने तस्य भ्रमप्रमान्यतररूपत्वमपि कल्पनीयम्; तथात्वे च गुणदोषान्यतरजन्यत्वमपि कल्प्यम्; तथा च ब्रह्मणो ध्रुवमनित्यत्वम् एवञ्च सुष्ठु समर्थितो ब्रह्मवादः। "सत्यं ज्ञानमि"त्यादिश्रुतयो ब्रह्मणो ज्ञानरूपतां श्रावयन्ति; "स्वे महिम्नी"त्यादिश्रुतयो निराश्रयत्वमपि प्रतिपादयन्ति। आलोकान्धकारयोर्वि-रोधमभ्युपगम्यापि ज्ञानाज्ञानयोस्तथा विरोधो नास्तीत्याह—अज्ञानतमसोर्विरोधि-तायाम् अनुभवसिद्धविशेषात्, आलोकप्रकाशिते अन्धकाराभावेऽपि त्वदुक्तमर्थं न जानामीत्यादौ. अज्ञानावच्छेदकतया साक्षिभास्येऽपि त्वदुक्तार्थं न जानामीति

न च—'त्वदुक्तार्थो न प्रकाशत' इत्यनुभवादस्तु तत्र भासमाने अज्ञानम्, सुखादिस्फुरणं भासमाने न प्रकाशत इत्यननुभवात् कथं तत्राज्ञानमिति—वाच्यम्; सुखादिस्फुरणं न प्रकाशत इत्यनुभवाभावेऽपि अनवच्छिन्नाकारेण न प्रकाशत इत्यनुभवात्, आवरकाज्ञानस्य तत्राप्यावश्यकत्वात् ॥१०॥

---

अज्ञानस्यानुभूयमानत्वात् न ज्ञानाज्ञानयोः आलोकान्धकारवद् विरोधः। तथा च चैतन्ये कथमज्ञानमिति प्रश्न एव अनवसरदुस्थ इति भावः। स्वरूपचैतन्यं यथा नाज्ञानविरोधि तथोक्तमितः प्रागेव। साक्षिचैतन्यमपि यथा नाज्ञानविरोधि तथा दर्शितमेव त्वदुक्तमर्थं न जानामीत्यादौ। आलोकवितते देशे तमसोऽननुभवात् यथा आलोकमात्रं तमोविरोधि नैवं स्वरूपचैतन्यं साक्षिचैतन्यं वा अज्ञानविरोधि, द्वयोर्विरोधयोर्महद्वैलक्षण्यस्य सर्वानुभवसिद्धत्वात्। आलोकान्धकारयोः विरोधमभ्युपगम्य ज्ञानाज्ञानयोर्विरोधे तद्वैलक्षण्यमुक्तम्। वस्तुतस्तु आलोकतमसोरपि सहानवस्थानलक्षणो विरोधो नास्तीत्याह—वस्तुतस्त्विति। अवतमसे गर्भगृहदेवमन्दिरादौ आलोकतमसोः सहावस्थानस्य अनुभवसिद्धत्वात् नालोकमात्रं तमोविरोधीति भावः। तथा च चैतन्ये कथमज्ञानमिति रिक्तं वचः। मध्याह्नमार्तण्डकिरणोद्भासितेऽपि देशे दर्पणादिप्रतिफलितरविकिरणसम्पाते प्रकाशाधिक्यदर्शनात्, तत्रापि तमस इषदनुवृत्तिरनुमीयते। अन्यथा तत्र प्रकाशाधिक्यं न स्यात् ॥९॥

१०—त्वदुक्तार्थं न जानामीत्यत्र भासमानेऽज्ञानसम्भवेऽपि न सर्वत्र भासमाने अज्ञानसम्भवः; यथा सुखादिस्फुरणदशायां सुखं न स्फुरतीति अनुभवासम्भवात् इति पूर्वपक्षिमतमाशंक्य सुखस्फुरणेऽपि अनवच्छिन्नसुखस्य अस्फुरणमस्तीति समाधत्ते—न च त्वदुक्तार्थो न प्रकाशते इत्यनुभवादस्तु तत्र भासमानेऽज्ञानं सुखादिस्फुरणे भासमाने न प्रकाशते इत्यननुभवात् कथं तत्राज्ञानमिति वाच्यम्। सुखादिस्फुरणं न प्रकाशते इत्यनुभवाभावेऽपि अनवच्छिन्नाकारेण न प्रकाशते इत्यनुभवात् आवरकाज्ञानस्य तत्राप्यावश्यकत्वात्। त्वदुक्तार्थो न प्रकाशते इत्यनुभवात्' कुत्रचित् भासमानेऽपि अज्ञानस्य स्वीकारेऽपि न सर्वत्र भासमाने अज्ञानमनुभवसिद्धम्;

यदपि—'त्वदुक्तमर्थं न जानामी'त्यत्र भासमाने नाज्ञानम्, किंतु गुहास्थं तमश्छन्नमितिवत् त्वदुक्तं न जानामीत्यनावृतसामान्यावच्छेदेनैव विशेषाज्ञानमनुभूयते, न हि परचित्तस्थमज्ञानं प्रातिस्विकरूपेणानूद्यते, एवं च तद्विशेषसंशयं प्रति तत्सामान्यनिश्चय इव तद्विशेषावच्छिन्नाज्ञानज्ञानं प्रति तत्सामान्यज्ञानमेव हेतुः ; तथा दर्शनात्, न हि विशेषे ज्ञाते तदज्ञानधीर्दृष्टा, अवच्छेदकज्ञानस्य ह्यवच्छिन्नज्ञानहेतुतापि दर्शनादेव कल्प्या, न चातिप्रसङ्गः, सामान्यविशेषभावस्यैव नियामकत्वात्—इति ॥११॥

---

प्रत्युत भासमानेऽज्ञानं विरुद्धमेव। आभासमाने एव अज्ञानम् अनुभवसिद्धम्। यथा सुखादौ भासमाने सुखं न भासते, न स्फुरतीति व्यवहाराभावेन प्रकाशमाने नाज्ञानमित्येव स्वीकार्यम्। अतः प्रकाशस्वरूपचैतन्ये नाज्ञानं तिष्ठतीत्येव युक्तम्। समाधत्ते—सुखादिस्फुरणं न प्रकाशते इति व्यवहाराभावेऽपि सुखं भासमानमपि अखण्डं सुखम् परिपूर्णं सुखं न भासते इति अनुभवात्, अवच्छिन्नसुखे भासमानेऽपि अनवच्छिन्नपरिपूर्णसुखस्य अप्रकाशाय आवरकमज्ञानमवश्यं स्वीकार्यम्। अतः प्रकाशरूपे चैतन्ये अज्ञानमनुभवसिद्धमिति नापलापमर्हतीति भावः ॥१०॥

११—भासमानेऽज्ञानं सर्वानुभवविरुद्धम्। यद्भासते तन्नाज्ञानावृतं यदज्ञानावृतं तन्न भासते। अतो भासमानेऽज्ञानसमर्थनाय अद्वैतिभिः त्वदुक्तार्थो न प्रकाशते इति यदुक्तं तदसंगतम्। सामान्यरूपेण भासमाने विशेषरूपविषयकमज्ञानमेव तत्रानुभूयते त्वदुक्तार्थस्वरूपेण सामान्येन भासमाने त्वदुक्तार्थगतघटत्वादिविशेषो नानुभूयते इत्येव प्रदर्शितोदाहरणेन सिद्धयतीति शंकते—यदपि त्वदुक्तमर्थं न जानामीत्यत्र भासमाने नाज्ञानं किन्तु गुहास्थं तमश्छन्नमितिवत् त्वदुक्तं न जानामीत्यनावृतसामान्यावच्छेदेनैव विशेषाज्ञानमनुभूयते। न हि परचित्तस्थमज्ञानं प्रातिस्विकरूपेणानूद्यते एवञ्च तद्विशेषसंशयं प्रति तत्सामान्यनिश्चय इव तद्विशेषावच्छिन्नाज्ञानज्ञानं प्रति तत्सामान्यज्ञानमेव हेतुः तथा दर्शनात्। न हि विशेषे ज्ञाते तदज्ञानधीर्दृष्टा। अवच्छेदकज्ञानस्य ह्यवच्छिन्नज्ञानहेतुतापि दर्शनादेव कल्प्या न चातिप्रसंगः सामान्यविशेषभावस्यैव नियामकत्वात् इति। यद् येन रूपेण

भासते न तत् तेन रूपेण अज्ञातमिति सम्भवति। रूपभेदेन ज्ञानाज्ञानयोरविरोधात्। सामान्येन ज्ञातस्यापि विशेषेण अज्ञातत्वं सम्भवति इत्याह यद्यपि त्वदुक्तार्थं [त्वदुक्तमर्थं] न जानामीति। त्वदुक्तत्वरूपसामान्येन भासमानेऽपि तद्गत-विशेषघटत्वादिरूपेण अज्ञानमनुभूयते। यथा गुहास्थं तमश्छन्नमित्यत्र गुहास्थत्व-सामान्यरूपेण गुहास्थितं भासमानमपि तत्, गुहास्थत्वव्याप्यविशेषरूपेण तमसा आच्छन्नत्वात् न भासते। एवं त्वदुक्तं न जानामीत्यत्रापि त्वदुक्तत्वसामान्य-रूपेण त्वदुक्तं वस्तु भासमानमपि त्वदुक्तत्वव्याप्यविशेषघटत्वादिरूपेण न भासते अतः सामान्यरूपेण भासमानेऽपि सामान्यव्याप्यरूपेण अभासनात् विशेष-विषयकमज्ञानं स्वीकार्यं येन रूपेण यद् भासते तद्रूपेण तदज्ञातं न भवितुमर्हति, येन रूपेण न भासते तद्रूपेण तद् अज्ञातं भवति। न हि भासमानेऽज्ञानं कदाप्यनुभूयते। न हि परचित्तस्थमस्मदादिभिरज्ञातं विशेषरूपेण अनुवदितुं शक्यते। परचित्तस्थबुभुक्षापिपासादि अस्माभिरज्ञातमिति कृत्वैव नानूद्यते। ननु विशेषरूपेणाज्ञातत्वात् विशेषविषयकमप्यज्ञानं विशेषेण व्यावृत्तं सत् साक्षिणा गृह्यते इति वक्तव्यम्। व्यावर्तकाप्रकाशे तद्व्यावृत्तं कथं प्रकाशेत ? विशेष-व्यावृत्तमज्ञानं गृह्णन् साक्षी व्यावर्तकविशेषमपि गृह्णीयात्। अन्यथा साक्षिणा विशेषाज्ञानं ग्रहीतुं न शक्यते। तथा च विशेषे भासमाने एव तत्राज्ञानं स्वीकार्य-मिति घट्टकुटीप्रभातन्यायापातः इत्याशंक्याह पूर्वपक्षी—एवञ्च तद्विशेष-संशयं प्रतीति। यथा विशेषविषयकसंशयं प्रति सामान्यनिश्चयः कारणम्; सामान्यतो धर्मिणि निश्चिते तत्र विशेषप्रकारकः संशयो जायते; न हि धर्मिवृत्ति-तया प्रकारीभूतविशेषस्य ज्ञानमपि संशये कारणम्। तथात्वे संशयस्यैवानुदयात्। सामान्यतो ज्ञानात् यथा विशेषतः संशयः एवं विशेषावच्छिन्नाज्ञानज्ञानं प्रति सामान्यावच्छिन्नाज्ञानज्ञानं कारणम्; सामान्यतो ज्ञाते तद्गतविशेषो अज्ञातो भवति। विशेषरूपेण अज्ञानस्य ज्ञानं प्रति सामान्यरूपेण अज्ञानस्य ज्ञानं कारण-मित्येव अस्माभिर्गुहास्थं तमश्छन्नमिति दृष्टान्तेन समर्थितम्। विशेषविषयकाज्ञाने सामान्यविषयकाज्ञानज्ञानमेव कारणम्। न हि विशेषे ज्ञाने विशेषाज्ञानधीर्भवितु-मर्हति। यदि तु विशेषविषयकाज्ञानस्य साक्षिप्रत्यक्षे विशेषविषय एव अज्ञान-व्यावर्तकतया स्फुरति, व्यावर्तकाप्रकाशे तद्व्यावृत्तस्य प्रकाशासम्भवात्, सामान्य-

तन्न, अज्ञानं हि विशेषावच्छिन्नतया भासते, सामान्यावच्छिन्नतया वा। आद्ये विशेषे भासमानत्वमागतमेव। न हि विशेषमभासयन्विशेषाज्ञानमित्यवभासयति। तथा च सामान्यनिश्चयजनितोऽपि संशयो विशेषमवगाहते यथा, तथा सामान्यज्ञानजनितोऽप्यज्ञानप्रत्ययो विशेषं विषयीकरिष्यतीति कुतो भासमाने नाज्ञानमिति। न द्वितीयः; सामान्यज्ञानेन तदवच्छिन्नतयैव गृहीतस्याज्ञानस्य विशेषसंबन्धित्वे मानाभावेन भासमाने सामान्य एवाज्ञानमवगत्तम्। वस्तुनः प्रतीतिप्रमाणकत्वात्। तथा च परचित्तस्थं यथा अनूद्यते, तथा ज्ञानं तथैवाज्ञानं चेति सिद्धम् ॥१२॥

---

वावृत्ताज्ञानज्ञानात् न विशेषव्यावृत्ताज्ञानज्ञानं सम्भवति। अनवच्छेदकज्ञानात् अवच्छिन्नज्ञानासम्भवात्; यथा घटज्ञानात् न दण्डी देवदत्त इति ज्ञानं जायते इत्युच्येत—नायमतिप्रसंगः। न हि वयं यस्य कस्यचिदनवच्छेदकज्ञानात् अविच्छिन्नस्य [अवच्छिन्नस्य] ज्ञानं ब्रूमः, येनायमतिप्रसंगः स्यात्। किन्तु यस्य विशेषरूपेण अज्ञानज्ञानं तस्यैव सामान्यरूपेणाज्ञानज्ञानादिति ब्रूमः; सामान्यविशेषभावस्य नियामकत्वाङ्गीकारात् न प्रदर्शितातिप्रसंगावकाशः इति भावः ॥११॥

१२—विशेषव्यावृतमज्ञानं साक्षिणा गृह्यते सामान्यव्यावृत्तं वा—उभयथापि भासमाने एव अज्ञानमनुभूयते इति स्वीकर्तव्यम् इति समाधत्ते—तन्न अज्ञानं हि विशेषावच्छिन्नतया भासते, सामान्यावच्छिन्नतया वा? आद्ये, विशेषे भासमानत्वमागतमेव। न हि विशेषमवभासयन् विशेषाज्ञानमित्यवभासयति। तथा च सामान्यनिश्चयजनितोऽपि संशयो विशेषमवगाहते यथा तथा सामान्यज्ञानजनितोऽपि अज्ञानप्रत्ययो विशेषं विषयीकरिष्यतीति कुतो भासमाने नाज्ञानमिति। न द्वितीयः, सामान्यज्ञानेन तदवच्छिन्नतयैव गृहीतस्याज्ञानस्य विशेषसम्बन्धित्वे मानाभावेन भासमाने सामान्ये एव अज्ञानमागतम्। वस्तुनः प्रतीतिप्रमाणकत्वात्। तथा च परचित्तस्थं यथा अनूद्यते तथा ज्ञातं तथैवाज्ञातं चेति सिद्धम्। सामान्यविशेषभावस्य नियामकत्वमङ्गीकृत्य अतिप्रसंगः परिहर्तुं न शक्यते इत्याह—तन्नेति। त्वदुक्तमर्थं

ननु—यथा द्वेषस्येष्टत्वेऽपि द्विष्टस्य नेष्टत्वम्, ईश्वरस्य भ्रान्ति-

न जानामीति साक्षिप्रत्यक्षे यदज्ञानं भासते तत् किं विशेषव्यावृत्ततया भासते, सामान्यव्यावृत्ततया वा ? आद्ये विशेषे साक्षिणा भासमानत्वमागतमेव। यतः विशेषव्यावृत्तमज्ञानं भासयन् साक्षी अज्ञानव्यावर्तकं विशेषमपि भासयति। न हि व्यावर्तकं विशेषमभासयन् विशेषाज्ञानं भासयितुमर्हति। न हि विषयमगृह्णन् विषयिणं ग्रहीतुं शक्नुयात्। उक्तञ्च मनोविषयनिरूप्यं हि ज्ञानम्। अतो ज्ञानवित्तिवेद्यो विषयः॥ ज्ञानवदज्ञानमपि विषयनिरूप्यमेव। सामान्यनिश्चयजन्यो विशेषविषयकसंशयोऽपि विशेषमवगाहते। साधारणधर्मज्ञानाद् विशेषोपस्थित्या विशेषविषयं संशयज्ञानमुत्पद्यते। संशयो विशेषं न विषयीकरोतीति कथयितुं न युज्यते। एवं सामान्यज्ञानजनितमपि विशेषाज्ञानप्रत्यक्षं विशेषमपि विषयीकरोति। अतः साक्षिणा भासमाने एव विशेषे अज्ञानं साक्षिवेद्यमिति भासमाने एव विषये अज्ञानं गृह्यते इति सिद्धम्। न द्वितीय इति सामान्यावच्छिन्नतया अज्ञानं भासते इति द्वितीयपक्षस्वीकारोऽपि साक्षिणा गृहीते सामान्ये एव अज्ञानं साक्षिवेद्यमिति भासमाने एव अज्ञानं गृह्यते इति नियमः स्थित एव। किञ्च अस्मिन् पक्षे विशेषविषयकाज्ञानस्य सर्वथा असिद्धिरेव। विशेषव्यावृत्तमज्ञानं नानुभूयते चेत्, कुतो विशेषविषयकाज्ञानसिद्धिः स्यात्। विशेषविषयकं सामान्यविषयकं वा अज्ञानं सिद्ध्यतु, सर्वथा भासमाने एव अज्ञानमिति नियमः स्थित एव। भासमाने कथमज्ञानमिति प्रश्न एव असंगतः। यतो वस्तुमात्रस्य प्रतीतिप्रमाणकत्वात् यथा प्रतीतिवस्तु अभ्युपगन्तव्यमिति स्थितिः। भासमाने एव अज्ञानमनुभूयते, साक्षिणा अभासमाने विषये अज्ञानमेव नानुभूयते इति किं कुर्मः। प्रतीतेरपर्यनुयोज्यत्वात्। परचित्तस्थम् अज्ञातं वस्तु यथाप्रतीति अनूद्यते। ज्ञानाज्ञानयोर्व्यावर्तकौ विषयौ ज्ञानाज्ञानग्राहकेण साक्षिणैव गृहीतौ। तौ च यथा साक्षिणा गृहीतौ तथैवानूद्येते। ज्ञानावच्छेदकविषयस्तु ज्ञातत्वेन अज्ञानावच्छेदकविषयो अज्ञातत्वेन साक्षिणा गृह्यते तथैवानूद्येते इति भासमाने एव अज्ञानं साक्षिसिद्धमिति ॥१२॥

१३—अवच्छिन्नज्ञानस्य अवच्छेदकज्ञानजन्यत्वेऽपि स्थलविशेषे अस्य नियमस्य अन्यथात्वम् अवश्यं स्वीकरणीयमिति स्थलविशेषं दर्शयन्नाह पूर्वपक्षी—

ज्ञत्वेऽपि न भ्रमविषयज्ञत्वम्; अस्मदादीनामीश्वरसार्वज्ञ्यज्ञानेऽपि न सर्वज्ञत्वम्, एवमज्ञातज्ञानाभावेऽपि अज्ञानज्ञानमिति—चेत् ॥१३॥

न; दृष्टान्तासंप्रतिपत्तेः। तथा हि—इच्छा तावज्ज्ञानसमानविषया, ज्ञानं चावच्छेदकतया द्विष्टमपि विषयीकरीतीति इच्छाया अप्यवच्छेद-

---

ननु यथा द्वेषस्य इष्टत्वेऽपि द्विष्टस्य नेष्टत्वम्, ईश्वरस्य भ्रान्ति ज्ञत्वेऽपि न भ्रमविषयज्ञत्वम्, अस्मदादीनामीश्वरसार्वज्ञ्यज्ञानेऽपि न सर्वज्ञत्वम्, एवम् अज्ञातज्ञानाभावेऽपि अज्ञानज्ञानमिति चेत्। विशेषावच्छिन्नाज्ञानज्ञानं सामान्यज्ञानजन्यं स्वीकार्यं नतु विशेषावच्छिन्नाज्ञानज्ञानं विशेषज्ञानजन्यं भवितुमर्हति। विशेषज्ञाने सति विशेषविषयकाज्ञानमेव न स्यात्। अतः पूर्वोक्तनियमस्य अन्यथात्वमवश्यं स्वीकरणीयम्। न केवलं लोकदृष्ट्या अन्यथात्वं स्वीकार्यम्, युक्त्यापि नियमस्य अन्यथात्वस्वीकार्यमित्याह ननु यथा द्वेषस्य इष्टत्वेऽपीति। त्रिषु स्थलेषु नियमस्य अन्यथात्वं स्वीकार्यमित्याह द्वेषस्येति। यथा चैत्रविषयकद्वेषस्य मैत्रस्य इष्टत्वेऽपि चैत्रस्य न इष्टत्वं चैत्रस्य द्विष्टत्वात्। चैत्रस्य द्विष्टत्वेऽपि चैत्रविषयकद्वेषस्य यथा इष्टत्वम्। चैत्रावच्छिन्न-द्वेषस्य इष्टत्वेऽपि द्वेषावच्छेदकचैत्रस्य न इष्टत्वम्, किन्तु द्विष्टत्वमेव; एवं विशेषावच्छिन्नाज्ञानस्य ज्ञातत्वेऽपि अवच्छेदकविशेषस्य न ज्ञातत्वमङ्गीकरणीयम्। अवच्छेदकविशेषस्य ज्ञातत्वे विशेषावच्छिन्नाज्ञानमेव न स्यात्। चैत्रावच्छिन्न-द्वेषस्य इष्टत्वाय अवच्छेदकचैत्रस्य इष्टत्वं यथा नापेक्ष्यते तथा प्रकृतेऽपीति। यथा वा ईश्वरस्य अस्मद् भ्रान्तिज्ञत्वेऽपि न अस्मद् भ्रान्तिविषयज्ञत्वमीश्वरस्य अस्मद् भ्रान्तिविषयज्ञत्वम् अस्मदादिवदेव भ्रान्तत्वप्रसंगात्; भ्रान्तिविषय-ज्ञत्वं विनापि ईश्वरस्य यथा भ्रान्तिज्ञत्वम् एवं विशेषज्ञत्वं विनापि विशेषा-वच्छिन्नाज्ञानज्ञत्वं सम्भवतीति भावः। ईश्वरः सर्वज्ञः इति जानन्तोऽपि वयं सर्वज्ञीयज्ञानविषयं सर्वं न जानीमः। अन्यथा अस्मदादीनामपि सर्वज्ञ-त्वप्रसंगात्। सर्वमजानन्तोऽपि वयं सर्वविषयकेश्वरज्ञानं जानीमः; तथा प्रकृतेऽपि विशेषमजानन्तोऽपि विशेषविषयकाज्ञानं जानीमः। तथा च भासमाने विषये अज्ञानं न कदापि प्रतीयते। अज्ञानविषयस्य ज्ञातत्वाभावेऽपि विषयविशेषितम-ज्ञानमनुभूयते इति अवश्यं स्वीकार्यमिति भावः ॥१३॥

कतया तद्विषयत्वात्। न हीच्छा इष्टतावच्छेदकाविषया भवति। एतावानेवं विशेषः। किंचित् साध्यतया विषयीकरोति, किंचित् अवच्छेदकतया। ईश्वरोऽपि भ्रमविषयमगृहीत्वा भ्रमं न गृह्णाति। भ्रमो हि भ्रमत्वेन ग्राह्यः। भ्रमत्वं च रजताभाववति रजतख्यातित्वं वा, असत्ख्यातित्वं वा, अनिर्वचनीयख्यातित्वं वा। तस्मिन गृह्यमाणे सर्वथा विषयग्रहः। इयांस्तु विशेषः। यत् भ्रान्तः स्वातन्त्र्येण गृह्णाति, ईश्वरस्तु तज्ज्ञानावच्छेदकतयेति, ईश्वरसार्वज्ञज्ञानमस्माकं तु सर्वज्ञपदेन। तत्र सर्वपदप्रतिपाद्यं जानन्नेवास्मदादिस्तत्र ज्ञानसंबन्धं गृह्णातीति ईदृशं सार्वज्ञ्यमिष्टमेव। विशेषस्त्वीश्वरस्य न कुत्राप्यज्ञानम्, अस्मादृशां तु विशेषेष्वज्ञानमिति कृत्वा। एवं च ज्ञात एव विशेषे अज्ञानज्ञानमिति ॥१४॥

---

१४—प्रदर्शितदृष्टान्तत्रयमप्यसंगतमिति समाधत्ते सिद्धान्ती—न दृष्टान्तासम्प्रतिपत्तेः। तथा हि इच्छा तावत् ज्ञानसमानसमानविषया ज्ञानं च अवच्छेदकतया द्विष्टमपि विषयीकरोति इतीच्छायाऽपि अवच्छेदकतया-तद्विषयत्वात् न हि इच्छा ईष्टतावच्छेदकविषया भवति। एतावानेव विशेषः किञ्चित् साध्यतया विषयीकरोति किञ्चित् अवच्छेदकतया। ईश्वरोऽपि भ्रमविषयमगृहीत्वा भ्रमं न गृह्णाति। भ्रमो हि भ्रमत्वेन ग्राह्यः। भ्रमत्वं च रजताभाववति रजतख्यातित्वं वा, असत्ख्यातित्वं वा, अनिर्वचनीयख्यातित्वं वा, तस्मिन् गृह्यमाणे सर्वथा विषयग्रहः इयांस्तु विशेषः यद्भ्रान्तः स्वातन्त्र्येण गृह्णाति, ईश्वरस्तु तज्ज्ञानावच्छेदकतया इति। ईश्वरसार्वज्ञ्यज्ञानमस्माकं तु सर्वज्ञपदेन। तत्र सर्वपदप्रतिपाद्यं जानन्नेवास्मदादिस्तत्र ज्ञानसम्बन्धं गृह्णातीति ईदृशं सार्वज्ञ्यम् इष्टमेव। विशेषस्तु ईश्वरस्य न कुत्राप्यज्ञानम् अस्मादृशां तु विशेषेष्वज्ञानमिति कृत्वा। एवञ्च ज्ञाते एव विशेषे अज्ञानज्ञानमिति। यत् दृष्टान्तत्रयमुक्तं तन्नोभयसम्मतम्। पूर्वपक्षिणा स्वीकृतमपि अस्माभिर्नाङ्गीक्रियते। न केवलमस्माभिर्नाङ्गीक्रियते कैरपि प्रामाणिकैर्नाङ्गीकर्तुं शक्यते। दृष्टान्तत्रयमुभयासम्प्रतिपन्नम्। कुतो न सम्प्रतिपन्नमित्याह—तथा-हीति। यदुक्तं द्वेषे इच्छायामपि द्विष्टे नेच्छा इति अत्र वक्तव्यम्—अज्ञाते

नेच्छा, अत इच्छा ज्ञानविषयविषयिणी। द्वेषे इच्छायां द्वेषस्य ज्ञानं स्वीकार्यम्; अज्ञाते द्वेषे नेच्छा, निर्विषयकद्वेषस्यापि न ज्ञानं यतः द्वेषः सविषयक एव अतो विषयविशेषितद्वेष एव ज्ञानस्य विषयो भवति, द्विष्ट एव द्वेषविषयः। अतो द्वेषव्यावर्तकद्विष्टोऽपि द्वेषज्ञानस्य विषयो भवति। द्विष्टाविषयकद्वेषविषयकज्ञानं न भवितुमर्हति। अतः द्विष्टविशेषितद्वेषविषयकज्ञानजन्या द्वेषविषयिणी इच्छापि द्वेषव्यावर्तकद्विष्टमपि विषयीकरोति। द्विष्टविशेषितद्वेषविषयकज्ञानजन्या द्विष्टविशेषितद्वेषविषयिणी इच्छा भवति इच्छाविषयता द्वेषे विद्यमानाऽपि द्विष्टस्तु इच्छाविषयतावच्छेदक एव। द्वेषस्य इष्टत्वे द्विष्टस्तु इष्टतावच्छेदकः। इष्टतावच्छेदकाविषयिणी इच्छा अप्रामाणिकी। अत इष्टवत् इष्टतावच्छेदकोऽपि इच्छाविषय एव। द्वयोर्वैलक्षण्यमेतत्—इच्छाविषयस्य द्वेषस्य साध्यत्वेन इष्टकावच्छेदकस्य द्विष्टस्य साध्यतावच्छेदकत्वेन इच्छाविषयता। द्वेषद्विष्टयोरुभयोः इच्छाविषयत्वेऽपि द्वेषे इच्छीयं साध्यत्वाख्यविषयता द्विष्टे पुनः साध्यतावच्छेदकत्वाख्यविषयता। अतो द्विष्टस्य इच्छाविषयत्वमेव नास्तीति कथनम् असंगतमेव। तथा च प्रथमो दृष्टान्तः प्रकृतासंगत एव। एवं द्वितीयोपि दृष्टान्तोऽसंगत इत्याह ईश्वरोऽपीति। अस्मदादिभ्रान्तिविषयमजानन् ईश्वरः भ्रान्तिं ज्ञातुं न शक्नुयात्। ईश्वरो यथा अस्मदादिभ्रान्तिं जानाति तथा भ्रान्तिविषयमपि; ईश्वरस्तु अस्मदादिभ्रमं भ्रमत्वेनैव जानाति; अन्यथा वयं भ्रान्ता इत्यजानन् कथमस्मान् कृपायीत। अतो अस्मदादिभ्रमं भ्रमत्वेन जानातीश्वरः इति वक्तव्यम्। भ्रमश्च अन्यथाख्यातिमते रजताद्यभाववति देशान्तरीयसत्यरजतादीनां ख्यातिरूपः। असत्ख्यातिवादिमाध्यमिकबौद्धमते रजताद्यभाववति असत् रजतादीनां ख्यातिरूपः अनिर्वचनीयख्यातिवादिसिद्धान्तिनां मते रजताद्यभाववति अनिर्वचनीयरजतादीनां ख्यातिरूपः वाच्यः; तथा च भ्रमे गृह्यमाणे तादृशत्वेनैव गृह्यते इति वक्तव्यम्। तथा च भ्रमविषयमगृह्णन् कथं भ्रमत्वेन भ्रमं गृह्णीयादीश्वरः, भ्रमत्वप्रमात्वयोर्विषयघटितत्वात्। विषयं परित्यज्य ज्ञानं न भ्रमः नापि प्रमा भवितुमर्हति। भ्रमत्वप्रमात्वे न ज्ञानगतजातिरूपे, किन्तु तदभाववति तत्ख्यातित्वरूपं भ्रमत्वम्, तद्वतितत्प्रकारकज्ञानत्वरूपं प्रमात्वम्। ईश्वरो यदि अस्माकं भ्रमं भ्रम[त्व]त्वेन जानीयात् तदा सर्वेषामति[पि]वादिनां मते ईश्वरो भ्रमविषय-

मपि जानीयात्। भ्रमविषयमपि जानन् ईश्वरः कथं नास्मदादिवद् भ्रान्तः स्यादित्यत आह इयांस्तु विशेष इति। भ्रान्तभ्रान्तिज्ञयोरियान् विशेषः यद्भ्रान्तः स्वातन्त्र्येण भ्रमविषयं गृह्णाति, भ्रान्तिज्ञस्तु न स्वातन्त्र्येण किन्तु भ्रान्तिं गृह्णन् भ्रान्तिविशेषणतया विषयं गृह्णाति। अतो भ्रान्तिज्ञ ईश्वरः भ्रमविषयं न जानातीति युक्त्यनुभवविरुद्धं वचः।

एवं तृतीयोऽपि दृष्टान्तः असंगत एव इत्याह ईश्वर सार्वज्ञ्यज्ञानमिति। वयं यदीश्वरं सर्वज्ञं जानीमः तत् "ईश्वरः सर्वज्ञः" इति सर्वज्ञशब्दात् सर्वं जानातीति सर्वज्ञः, ज्ञ पदेन ज्ञानाश्रय उच्यते। सर्वपदेन सर्वं वस्तु बोध्यते, सर्वपदप्रतिपाद्यम् अर्थं जानद्भिरेव ज्ञानार्थके ज्ञाधातुना सर्वपदस्य सम्बन्धो गृह्यते। अतः सर्वपदप्रतिपाद्यार्थज्ञानमस्माकं वर्तते। सर्वज्ञमीश्वरं ज्ञातुं सर्वपदप्रतिपाद्यर्थज्ञानमपेक्षितं तच्च ज्ञानमस्माकं वर्तते। सर्वज्ञमीश्वरं ज्ञातुं यादृशं सर्वज्ञत्वम् अस्माकपेक्षितं तादृशं सर्वज्ञत्वमस्माकं वर्तते एव। तादृशं सर्वज्ञत्वमस्माकमिष्टमेव नानिष्टं किञ्चिदापाद्यते। सर्वपदस्य अर्थम् अजानन्तो वयं नेश्वरं सर्वज्ञं जानीमः। ईश्वरवत् अस्माकमपि सर्वपदार्थाभिज्ञप्ते ईश्वरात् अस्माकं वैलक्षण्यं किम् इत्यत आह विशेषस्त्विति। ईश्वरस्य कुत्रापि नाज्ञानम्, अस्माकं विशेषेषु अज्ञानम्; अस्माकं विशेषविषयमज्ञानम् अस्मत्सविधे विशेषा अज्ञानावृता एव। अज्ञानस्य आवरणशक्तिनिरूपणे अभिहितं बिम्बेश्वरचैतन्यं प्रति उपाधेरज्ञानस्य नावरकत्वं किन्तु प्रतिबिम्बं जीवं प्रत्येवेति। पूर्वपक्षिणा दृष्टान्तत्रयेण विषये अगृह्यमाण एव विषयविशेषितमज्ञानं गृह्यते इति समर्थयितुम् अभिलष्यते तत् दृष्टान्तत्रयं यथा पूर्वपक्ष्यभिप्रेतं साधयितुमसमर्थं तथैवोक्तम्। अतः ज्ञाते एव विशेषे विशेषाज्ञानं साक्षिणा गृह्यते इति सिद्धम्। अज्ञानावच्छेदकतया विषयं भासयन्नपि साक्षिविषयावरकम् अज्ञानं नोत्सारयतीति प्रतीतिसिद्धमिति नापह्नवमर्हतीति बोध्यम् ॥१४॥

१५—अज्ञानावच्छेदकविषयः साक्षिणा भास्यते, अथ च साक्षिज्ञानेन विषयावरकमज्ञानं न निवार्यते। अतो अज्ञानाविरोधि साक्षिज्ञानं सिद्धान्तिना उच्यते; अज्ञानाविरोधिज्ञानं यदि स्वीक्रियेत तर्हि अज्ञानाविरोधिनी अज्ञाननिवृत्तिरपि स्वीक्रियतां को दोषः; अनुभवविरोधभयं तु तस्य नास्त्येव इति शंकते—

न च—घटादेरज्ञानावच्छेदकतया भानेऽपि घटाद्यज्ञाननिवृत्ति विना तदवच्छिन्नसंयोगादिज्ञानादर्शनेन प्रकृतेऽपि विषयावच्छिन्नाज्ञान-ज्ञानार्थं तदवच्छेदकविषयाज्ञाननिवृत्तेरपि वक्तव्यत्वेनाज्ञानाविरोधि-ज्ञानवत् अज्ञानाविरोधिनी अज्ञाननिवृत्तिरपि स्वीकार्या स्यादिति—वाच्यम्; संयोगादिसत्त्वस्यावच्छेदकघटादिसत्त्वसापेक्षत्वेऽपि यथा

---

न च घटादेरज्ञानावच्छेदकतया भानेऽपि घटाद्यज्ञाननिवृत्तिं विना तदवच्छिन्नसंयोगादिज्ञानादर्शनेन प्रकृतेऽपि विषयावच्छिन्नाज्ञान-ज्ञानार्थं तदवच्छेदकविषयाज्ञाननिवृत्तेरपि वक्तव्यत्वेन अज्ञाना-विरोधिज्ञानवत् अज्ञानाविरोधिनी अज्ञाननिवृत्तिरपि स्वीकार्या स्यादिति वाच्यम्। विषयविशेषिताज्ञानस्य साक्षिप्रत्यक्षे अज्ञानावच्छेदक-विषयोऽपि साक्षिणैव भास्यते; अथ च साक्षिभास्ये विषये अज्ञानं न निवर्तते विषयो भासते च अज्ञानावृतश्चैति साक्षिज्ञानम् अज्ञानाविरोधि च यथा सिद्धान्तिना उच्चते तथैव अज्ञाननिवृत्तिरपि अज्ञानविरोधिनी तूच्यताम्। अज्ञाननिवृत्तिरपि अज्ञानाविरोधिनीति कथं स्वीक्रियेत इत्यत आह पूर्वपक्षी—यथा घटावच्छिन्नसंयोगः इति प्रतीतौ संयोगसम्बन्धावच्छेदकस्य संयोगसम्बन्धस्य सम्बन्धिनः घटस्य ज्ञानं घटावच्छिन्नसंयोगज्ञाने कारणं घटावच्छिन्नसंयोगे ज्ञातव्ये अवच्छेदकघटस्य ज्ञानं कारणम्। यस्य संयोगावच्छेदकघटस्य ज्ञानं नास्ति तस्य घटावच्छिन्नसंयोगज्ञानमपि न भवितुमर्हति। संयोगावच्छेदकघटस्य अज्ञानावच्छेदकतया ज्ञानेऽपि घटा-विषयकाज्ञाननिवृत्तिं विना घटावच्छिन्नसंयोगस्य ज्ञानं न भवितुमर्हतीति सर्वैरेव स्वीकार्यम्। घटं न जानामीति प्रतीतौ घटः अज्ञानावच्छेदकतया भासते इति अद्वैतिभिरङ्गीक्रियते। अतः घटं न जानामीति प्रतीतेः घटावच्छिन्नः संयोग इति प्रतीतेरपि उत्पत्तिः स्यात् यतो अज्ञानावच्छेदकतया घटो भासते एव घटावच्छिन्नः संयोग इति प्रतीतावपि घट एव संयोगसम्बन्धस्य अवच्छेदकतया भासते। संयोगसम्बन्धस्य योऽवच्छेदकः तस्य घटस्य ज्ञानं साक्षिरूपं सिद्धमेव। अथ च घटं न जानामीति प्रतीत्या घटावच्छिन्नः संयोग इति प्रतीतिर्नोपपद्यते। घटविषयकाज्ञाननिवृत्तिं विना न घटावच्छिन्नः संयोग इति प्रतीतिरुपपद्यते। संयोगावच्छेदकघटस्य अज्ञाननिवृत्तिः घटावच्छिन्नः संयोग

अभावे न स्वाधिकरणीयप्रतियोगिरूपावच्छेदकसत्त्वापेक्षा, विरोधात्; तथा अज्ञानज्ञानस्यापि न स्वविषयाज्ञाननिवृत्त्यपेक्षा, विरोधात् ॥ १५ ॥

---

इति प्रतीतौ अपेक्ष्यते। एवमेव विषयावच्छिन्नाज्ञानप्रतीतावपि अज्ञानावच्छेदक-घटविषयकाज्ञाननिवृत्तिरपि अपेक्ष्यते। यद्युच्येत घटावच्छिन्नाज्ञानसत्त्वे घटविषयकाज्ञानस्य निवृत्तिः कथं स्यात्? तत्राद्वैतिभिरेवं वक्तव्यम्—साक्षिज्ञानं यथा नाज्ञानविरोधि एवमेव घटविषयकाज्ञाननिवृत्तिरपि घटावच्छिन्नाज्ञानस्य न विरोधिनी। ज्ञानं यथा नाज्ञानस्य विरोधि एवम् अज्ञाननिवृत्तिरपि नाज्ञानविरोधिनीति। यतः अवच्छेदकविषयकाज्ञानानिवृत्तौ अवच्छिन्नविषयकप्रतीतिर्न जायते। यथा घटावच्छिन्नसंयोगप्रतीतौ घटविषयकाज्ञाननिवृत्तिरपेक्षिता एवं घटं न जानामीति प्रतीतावपि अज्ञानावच्छेदकघटविषयकाज्ञाननिवृत्तिरपि अपेक्षिता। अद्वैतिभिः साक्षिज्ञानं यथा अज्ञानाविरोधि इति उच्यते एवम् अज्ञाननिवृत्तिरपि अज्ञानाविरोधिनीति स्वीक्रियताम् एवमस्वीकारे घटावच्छिन्नाज्ञानप्रतीतिरपि कथं स्यात्। अथ च अज्ञाननिवृत्तिरज्ञानाविरोधिनीति कैरपि स्वीकर्तुं न शक्यते, अनुभवविरोधात्। किन्तु विरोधात् भयाभावात् अद्वैतिभिः स्वीकार्यम्। ज्ञानाज्ञानयोरविरोध इव प्रतियोगिनिवृत्त्योरविरोधः स्वीकार्यः अद्वैतवादिभिरिति उपहासः।

अविरुद्धस्थले अवच्छिन्नसत्ता अवच्छेदकसत्ता सापेक्षापि विरुद्धस्थले नावच्छेदकसत्ता सापेक्षा; एवमविरुद्धस्थले अवच्छिन्नस्य ज्ञानमवच्छेदकविषयकाज्ञाननिवृत्तिसापेक्षमपि विरुद्धस्थले अवच्छिन्नस्य ज्ञानम् अवच्छेदकविषयकाज्ञाननिवृत्तिसापेक्षं न भवति इति समाधत्ते—"संयोगादिसत्त्वस्य अवच्छेदकघटादिसत्त्वसापेक्षत्वेऽपि यथा अभावे न स्वाधिकरणीयप्रतियोगिरूपावच्छेदकसत्त्वापेक्षा विरोधात्। तथा अज्ञानज्ञानस्यापि न स्वविषयाज्ञाननिवृत्त्यपेक्षा विरोधात्। यथा घटावच्छिन्नसंयोगसत्ता संयोगावच्छेदकघटसत्तासापेक्षा घटाभावे घटसंयोगो न तिष्ठति घटावच्छिन्नसंयोगसत्ताया व्यापिका अवच्छेदकघटस्य सत्ता न तथा घटावच्छिन्नाभावाधिकरणे अभावावच्छेदकघटस्य सत्ता अपेक्ष्यते। अभावप्रतियोग्येव अभावावच्छेदकः। घटावच्छिन्नाभावाधिकरणे अभावावच्छेदकस्य घटस्य सत्ता विरोधिनीति अविरुद्धस्थले

न चैवम्—तद्विषयकज्ञानापेक्षापि मास्तु; विरोधस्य समानत्वात्, अविरोधकल्पनाबीजस्य ज्ञान इवाज्ञाननिवृत्तावपि समानत्वात्; तथा च विषये अज्ञात एवाज्ञानं ज्ञायते, विषयविशेषावच्छिन्नबुद्धिस्तु तमसीव विशेषज्ञानानन्तरम् 'एतावत्कालममुमर्थं नाज्ञासिषमि'त्येवंरूपा जायत इति—वाच्यम् ॥ १६ ॥

---

अवच्छिन्नसत्ता अवच्छेदकसत्ता सापेक्षापि विरुद्धस्थले अवच्छिन्नसत्ता नावच्छेदकसत्तामपेक्षते। तत्र अवच्छेदकसत्तां विनैव अवच्छिन्नसत्ता अङ्गीक्रियते यथा घटावच्छिन्नसंयोगसत्ता घटसत्तासापेक्षापि घटावच्छिन्नाभावाधिकरणे अवच्छेदकघटसत्ता नापेक्ष्यते विरोधात्। तद्वद् अविरुद्धस्थले अवच्छिन्नज्ञानम् अवच्छेदकाज्ञाननिवृत्तिसापेक्षमपि विरुद्धस्थले अवच्छिन्नज्ञानम् अवच्छेदकाज्ञाननिवृत्तिं नापेक्ष्यते। अज्ञानावच्छेदकविषयस्य अज्ञाननिवृत्तौ अज्ञानमेव न तिष्ठेत्। अज्ञानाभावे च अज्ञानस्य साक्षिप्रत्यक्षं कथं स्यात्? संसृष्टविद्यमानाज्ञानस्यैव साक्षिप्रत्यक्षं भवति नाविद्यमानस्येति भावः ॥ १५ ॥

१६—विरोधादेव यदि विषयावच्छिन्नाज्ञानप्रत्यक्षे अवच्छेदकविषयस्य अज्ञाननिवृत्तिर्नापेक्ष्यते, तर्हि त्वदुक्तमर्थं न जानामीत्यज्ञानप्रत्यक्षेऽपि अज्ञानावच्छेदकविषयस्य ज्ञानं नापेक्षिष्यते इति शंकते—न चैवं तद्विषयकज्ञानापेक्षापि मास्तु, विरोधस्य समानत्वात्। अविरोधकल्पनाबीजस्य ज्ञाने इवाज्ञाननिवृत्तावपि समानत्वात् तथा च विषये अज्ञाते एवाज्ञानं ज्ञायते। विषयविशेषावच्छिन्नबुद्धिस्तु तमसीव विशेषज्ञानानन्तरम् "एतावत्कालममुमर्थं नाज्ञासिषमि"त्येवंरूपा जायते इति वाच्यम्। अज्ञानावच्छेदकस्य त्वदुक्तार्थस्य ज्ञाने अज्ञानमेव न स्थास्यति, समाने विषये ज्ञानाज्ञानयोर्विरोधात्। त्वदुक्तार्थविषयस्य ज्ञानं अज्ञानञ्च युगपत् स्थातुं नार्हतः। अतो विषयविशेषितज्ञानप्रत्यक्षमपि विषयज्ञानसापेक्षं न भवतीति स्वीकार्यम्। यथा विरोधात् विषयावच्छिन्नाज्ञानप्रत्यक्षे अवच्छेदकविषयस्य अज्ञाननिवृत्तिर्नापेक्ष्यते तद्वत्। विषयावच्छिन्नाज्ञानप्रत्यक्षेऽपि अवच्छेदकविषयस्य ज्ञानं नापेक्ष्यते। उभयत्र विरोधस्य तुल्यत्वात्। किञ्च अज्ञानं वृत्तिज्ञाननिवर्त्यमपि न साक्षिज्ञाननिवर्त्यमिति अद्वैतिभिरङ्गीक्रियते एवं घटसंयोगादिप्रतीतौ अवच्छेदकघटादेर्ज्ञानाभावो घटाद्यवच्छिन्नसंयोगज्ञानस्य विरोधीति

हन्त्वैवमभावस्वभावविरोधिप्रतियोगिज्ञाननिरपेक्षज्ञानविषयत्वम-

अवच्छेदकज्ञानाभावे अवच्छिन्नज्ञानस्यासम्भवात् । अयं विरोधोऽपि स्वीकार्योऽपि विषयावच्छिन्नाज्ञानप्रतीतौ अवच्छेदकविषयस्य ज्ञानाभावो न विरोधीति कुतो न स्वीक्रियेत । अज्ञानस्य ज्ञाननिवर्त्यत्वेऽपि यथा साक्षिज्ञानेन न निवर्त्यते इति सिद्धान्तिना उच्यते साक्षिज्ञानम् अज्ञानाविरोधि यथा सिद्धान्तिमते तथा अस्मन्मतेऽपि विषयावच्छिन्नाज्ञानप्रतीतौ अवच्छेदकविषयस्य ज्ञानाभावो न विरोधीति बोध्यम् । यदन्यत्र विरुद्धं तत् कुत्रचिदविरुद्धम् । विरोधाविरोधयोः फलदर्शनोन्नेयत्वात् । सिद्धान्तिना यथा अविरोधः कल्प्यते तथा अस्माभिरपि अविरोधः कल्प्यते । साक्षिज्ञानं यथा अज्ञानाविरोधि तथा अज्ञाननिवृत्तिरपि अज्ञानाविरोधिनीति कल्प्यताम् । अत एवं वाच्यम् साक्षिज्ञानस्य अज्ञाना-विरोधित्वमकल्पयित्वा विषयविशेषिताज्ञानप्रतीतौ न विषयज्ञानापेक्षा । अज्ञानविषये अभासमाने एव विषयविशेषितमज्ञानं भासते । विषये भासमाने तद्विषयकम-ज्ञानमेव न स्यात् । विषयप्रकाशमात्रमेव अज्ञानविरोधि इति भावः । न च विषये अभासमाने एव यदि अज्ञानं प्रतीयेत तर्हि विषयेण सह अज्ञानसम्बन्धो न सिध्येत् तथा च विषयविशेषावच्छिन्नतया अज्ञानप्रतीतिरेवासिद्धा स्यात् । एवञ्च त्वदुक्तार्थं न जानामीति प्रतीतिरेव न स्यादिति वाच्यम्, अज्ञानस्य विषयविशेषावच्छिन्नतया प्रतीतिस्तु अज्ञातविषयस्य विशेषज्ञानानन्तरम् एतावत्कालम् अमुमर्थं नाज्ञासिषमिति पूर्वाज्ञानस्य विषयविशेषसम्बन्धः सिध्यति । अज्ञानस्य विद्यमानतादशायाम् अज्ञाने विषयविशेषसम्बन्धासिद्धावपि अज्ञातविषयस्य ज्ञानानन्तरं विषयविशेषसम्बन्धः सिध्यत्येव । यथा तमसि अप्रकाशमानोऽपि घटादिः आलोकसम्पाते प्रकाशते एवम् अज्ञानदशायाम् अप्रकाशमानोऽपि विषयः ज्ञाने जाते प्रकाशते । अतो ज्ञानानन्तरं निवृत्तपूर्वाज्ञानेन विषय-सम्बन्धो ज्ञायते, न तु अज्ञानस्य सत्त्वदशायाम् अज्ञानेन विषयविशेषसम्बन्धो भासते इत्यर्थः ॥१६॥

१७—एवं ब्रुवता स्वसिद्धान्तविरोध एव आपादितः पूर्वपक्षिणा, यतः पूर्व-पक्षिमते भावरूपाज्ञानानङ्गीकारात् ज्ञानाभावस्यैव अज्ञानत्वकथनात् । ज्ञानाभावरूपा-ज्ञानस्य प्रत्यक्षं कदापि प्रतियोगिज्ञाननिरपेक्षं न भवितुमर्हति । त्वदुक्तार्थं न

भाववैलक्षण्यसाधकमज्ञाने उपपादितमायुष्मता । किंच यद्यज्ञानं स्वकाले विषयावच्छिन्नतया न भासयेत्, तदा तु 'त्वदुक्तमर्थं न जानामी'ति विषयावच्छिन्नाज्ञानस्य वर्तमानार्थप्रत्ययो विरुद्ध्येत । तस्मात् विषयाज्ञानसाधकत्वात् साक्षिरूपविषयप्रकाशोऽपि नाज्ञान-विरोधी, किन्तु प्रमाणवृत्तिः । एकविषयत्वेऽपि प्रमाणवृत्तितदतिरिक्त-वृत्त्योरज्ञानविरोधित्वाविरोधित्वे घटविषयकयोः सौरालोकज्ञानयोः सौरचाक्षुषप्रकाशयोर्वा तमोविरोधित्वाविरोधित्ववदुपपद्येते ॥१७॥

---

जानामीत्यस्य त्वदुक्तार्थविषयकज्ञानाभाववान् अहम् इत्येव पूर्वपक्षिमते अर्थः । ज्ञानाभावप्रत्यक्षे प्रतियोगिज्ञानस्य ज्ञानमपेक्षितम् । त्वदुक्तार्थविषयकज्ञानज्ञानमपि त्वदुक्तार्थमपि विषयीकरोति, ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमात् । तथा च त्वदुक्तार्थाज्ञाने कथं त्वदुक्तार्थज्ञानाभावप्रत्यक्षं स्यात् अथ च त्वदुक्तार्थज्ञानं विनैव त्वदुक्तार्थं न जानामीति साक्षिप्रत्यक्षम् उपपाद्यते । अतः साक्षिप्रत्यक्षस्य विषयः अभावविलक्षण एव पूर्वपक्षिणैव समर्थ्यते इति समाधत्ते—हन्तैवम् अभावस्वभावविरोधिप्रतियोगिज्ञाननिरपेक्षज्ञानविषयत्वमभाववैलक्षण्य-साधकमज्ञाने उपपादितम् आयुष्मता । किञ्च यद्यज्ञानं स्वकाले विषया-वच्छिन्नतया न भासयेत् तदा तु त्वदुक्तमर्थं न जानामीति विषया-वच्छिन्नाज्ञानस्य वर्तमानार्थप्रत्ययो विरुध्येत । तस्मात् विषया-ज्ञानसाधकत्वात् साक्षिरूपविषयप्रकाशोऽपि नाज्ञानविरोधी किन्तु प्रमाणवृत्तिः । एकविषयत्वेऽपि प्रमाणवृत्तितदतिरिक्तवृत्त्योरज्ञान-विरोधित्वाविरोधित्वे घटविषयकयोः सौरालोकज्ञानयोः सौरचाक्षुषप्रकाशयोर्वा तमोविरोधित्वाविरोधित्ववदुपपद्येते । त्वदुक्तार्थं न जानामीति प्रतीतिः यद्यभावविषयिणी प्रतियोगिज्ञान-निरपेक्षा स्यात् तर्हि न इति वा नास्तीति वा इत्याकारा स्यात्; न कथमपि त्वदुक्तार्थं न जानामीति स्यात् तथा च प्रतियोग्य-रूपितायाः अभावप्रतीतेर्गतिर्दर्शितैव । एवञ्च त्वदुक्तमर्थं न जानामीति प्रतीतिः पूर्वपक्षिमते न कथमपि अभावविषयिणी भवितुमर्हतीति पूर्वपक्षिणैव अस्याः प्रतीतेर्भावविषयत्वं समर्थितम् इति महत्कौशलं प्रदर्शितमिति सोपहासमाह—

न च—वृत्तिश्चैतन्यस्य विषयोपरागार्थेति मते अस्या अज्ञान-निवर्तकत्वाभावात् इदमयुक्तमिति—वच्यम्; अज्ञाननिवर्तकत्वेन निवृत्तिप्रयोजकत्वस्यैव उक्तत्वात्। तच्च संबन्धसंपादनद्वाराऽस्मिन् पक्षेऽपि अस्त्येव ॥१८॥

---

हन्तैवमित्यादि। त्वदुक्तार्थं न जानामीति साक्षिसिद्धाज्ञाने अभावस्वभाव-विरोधिप्रतियोगिज्ञाननिरपेक्षज्ञानविषयत्वमभ्युपगच्छता अज्ञाने अभाववैलक्षण्यमेव उपपादितं त्वयेति भावः। प्रतियोगिज्ञाननिरपेक्षज्ञानविषयत्वम् अभावे नास्ति, अज्ञाने त्वस्तीति त्वयैव प्रतिपाद्यते। अतः त्वदुक्तार्थं न जानामीति प्रतीतेर्विषयो न ज्ञानाभाव इति सिद्धम्। यच्चोक्तम् अज्ञाने विद्यमाने नाज्ञानं विषयावच्छिन्न-तया प्रतीयते इति तदनुभवविरुद्धमुक्तम्। त्वदुक्तमर्थं न जानामीति प्रतीतौ विषयावच्छिन्नाज्ञानमेव वर्तमानतया प्रतीतेः। साक्षिणः सविषयकाज्ञानसाधकत्वात् अज्ञानविषयस्य साक्षिरूपप्रकाशो नाज्ञानविरोधीत्यनुभवसिद्धमेव। अज्ञानविषयस्य साक्षिरूपप्रकाशो यद्यपि नाज्ञानविरोधी तथापि प्रमाणजन्यान्तःकरणवृत्तिरेव अज्ञानविरोधिनी। साक्षिप्रमाप्रकाशकयोरेकविषयत्वेऽपि साक्षिप्रकाशो नाज्ञान-विरोधी प्रमाप्रकाशस्तु अज्ञानविरोध्येव इत्यत्र दृष्टान्तद्वयमाह —**घटविषयकयोः सौरालोकज्ञानयोरिति**। यथा सौरालोकः घटावरकतमोविरोधी न घटविषयक-ज्ञानं तमोविरोधि, अथ च ज्ञानसौरालोकयोः घटविषयकत्वं समानं घटप्रकाश-कत्वेन द्वयोर्घटविषयकत्वात्। यथा वा सौरप्रकाशचक्षुःप्रकाशयोः तेजस्त्वेन समान-जातीयोरपि सौरप्रकाशस्य तमोविरोधित्वं न चक्षुः प्रकाशस्य तमोविरोधित्वम् एवं प्रमाज्ञानम् अज्ञानविरोधि साक्षिज्ञानन्तु नाज्ञानविरोधि भवति। मूले प्रमाणवृत्तिः प्रमारूपान्तःकरणवृत्तिर्बोध्या अत्रेदमवधेयम्—प्रमात्वेन गृहीता प्रमावृत्तिरेवाज्ञान-विरोधिनी न तु प्रमात्वेन अगृहीता प्रमावृत्तिः ॥१७॥

१८—वृत्तेश्चिदुपरागार्थत्वमते प्रमावृत्तेरपि नाज्ञानविरोधित्वम्, अज्ञानमनि-वर्तयन्त्येव प्रमावृत्तिश्चिदुपरागार्थत्वमते उदयमासादयतीति पूर्वपक्षिमतमाशंक्य समाधत्ते—**न च वृत्तिश्चैतन्यस्य विषयोपरागार्थेति मते अस्या अज्ञान-निवर्तकत्वाभावात् इदमयुक्तमिति वाच्यम्। अज्ञाननिवर्तकत्वेन निवृत्ति-प्रयोजकत्वस्योक्तत्वात्। तच्च सम्बन्धसम्पादनद्वारा अस्मिन् पक्षेऽपि**

न च—अज्ञानस्य स्वविरोधिज्ञानाभावव्यापकत्वेन मोक्षेऽप्यज्ञानापातं इति—वाच्यम्; मोक्षदशायामज्ञाननिवृत्तिश्रवणेन स्वविरोधिज्ञानप्रागभावमात्रव्यापकत्वात् ॥१९॥

---

अस्त्येव। प्रतिकर्मव्यवस्थाप्रकरणे मतभेदेन प्रमावृत्तेस्त्रिविधम् फलमुक्तम्—प्रमाणजन्यान्तःकरणवृत्तिः प्रमातृचैतन्यस्य विषयोपरागार्था, आवरणाभिभवार्था, अभेदाभिव्यक्तार्था वेति। प्रमावृत्तेश्चिदुपरागार्थत्वमते प्रमातृचैतन्यस्य विषयोपराग एव वृत्त्या सम्पादनीयः न अज्ञाननिवृत्तिरपि। अतो वृत्तेश्चिदुपरागार्थत्वमते प्रमावृत्तेर्नाज्ञाननिवर्तकत्वम्। अतः कथं सिद्धान्तिना प्रमावृत्तिमात्रस्य अज्ञानविरोधित्वमुक्तम्। समाधत्ते अज्ञाननिवर्तकत्वेन निवृत्तिप्रयोजकत्वस्यैव उक्तत्वादिति। प्रतिकर्मव्यवस्थाप्रकरणे इति शेषः। उक्तञ्च प्रतिकर्मव्यवस्थाप्रकरणे "द्वितीये तु आवरणाभिभवार्था" इति। एतद् व्याख्यायां गौडब्रह्मानन्दचरणैरुक्तम्—आवरणाभिभवार्थेति एवकारः शेषः, तेन उपरागार्थत्वपक्षेऽपि आवरणाभिभवार्थत्वलाभः। अनुपरागनिवृत्तिद्वारैव वृत्तिरुपरागार्था भवति, अनुपरागस्तु अविद्याप्रयुक्त एव। अविद्यानिवृत्त्या अनुपरागे निवृत्ते विषयश्चिता उपरज्यते। अन्यथा नोपरज्यते एवमभेदाभिव्यक्तिपक्षेऽपि बोध्यम्। अज्ञानप्रयुक्तानभिव्यक्तिरज्ञाननिवृत्त्यैव निवर्तते। अनभिव्यक्तिनिवृत्त्या अभेदोऽभिव्यज्यते। अतस्त्रिष्वपि पक्षेषु प्रमावृत्तेरज्ञाननिवर्तकत्वमस्त्येव। अज्ञाननिवृत्तिप्रयोजकत्वम् अज्ञाननिवृत्तिजन्यत्वादनुपरागनिवृत्तेरनुपरागनिवृत्तिरेवोपरागः। आवरणाभिभवपक्षे तु केवलम् अज्ञाननिवृत्तिरेव। अन्यत्र तु अज्ञाननिवृत्त्या अनुपरागानभिव्यक्तौ निवृत्तिरिति विशेषः। अज्ञाननिवृत्तिस्तु त्रिष्वपि पक्षेषु समानैवं। चिदुपरागार्थत्वपक्षे प्रमावृत्त्या जीवचैतन्यस्य विषयसम्बन्धे अज्ञाननिवृत्तिरस्त्येव इत्युक्तं सम्बन्धसम्पादनद्वारेति ॥१८॥

१९—प्रमाज्ञानस्य अज्ञानविरोधित्वे प्रमाज्ञानाभावस्य व्यापकमज्ञानं स्यात् विरोध्यभावस्य व्याप्यत्वात्, तथा च मुक्तिदशायां प्रमाज्ञानाभावात् तद्व्यापकमज्ञानम् अपरिहार्यं स्यादित्याशंक्य समाधत्ते—न च अज्ञानस्य स्वविरोधिज्ञानाभावव्यापकत्वेन मोक्षेऽप्यज्ञानापात इति वाच्यम्। मोक्षदशायाम् अज्ञाननिवृत्तिश्रवणेन स्वविरोधिज्ञानप्रागभावमात्रव्यापकत्वात्।

न च—कथं प्रमाणवृत्तिमात्रविरोधित्वे अज्ञानस्य ज्ञानमात्रविरोधित्वेनैव न जानामीत्याकारेण प्रत्ययः ? इति—वाच्यम्, घटादिमात्रविरोधिनो घटाभावादेः भावसामान्यविरोधित्वेनाभावत्वेन प्रतीतिवत् ज्ञानविशेषविरोधिनोऽप्यज्ञानस्य ज्ञानसामान्यविरोधित्वेन प्रतीतिसंभवात्। नह्यभावपदादिना भावप्रतीतौ घटाभावो न भासते। अथ सा विरोधिता तत्र विशेषमात्रपर्यवसन्ना, समं मक्तेऽपि; अन्यत्राभिनिवेशात् ॥२०॥

---

विरोध्यभावस्य इतरविरोधिव्याप्यत्वात् प्रमाज्ञानाभावस्य अज्ञानव्याप्यत्वं स्यात्। अज्ञानञ्च अज्ञानविरोधिप्रमाज्ञानाभावव्यापकं स्यात्। तथा च मोक्षदशायाम् अज्ञानविरोधिप्रमाज्ञानाभावात् व्यापकाज्ञानस्य सत्त्वम् अपरिहार्यं स्यात्। समाधत्ते—'ज्ञाते तत्त्वे सर्वपाशापहानिरित्यादिश्रुत्या मोक्षदशायाम् अज्ञाननिवृत्तिप्रतिपादनात् न मोक्षे अज्ञानसत्त्वं सम्भाव्यते। यद्युच्येते अज्ञानव्याप्यप्रमाज्ञानाभावात् व्यापकमज्ञानं स्यादेवेति तन्न, प्रदर्शितव्याप्यव्यापकभावे एव असिद्धः। मोक्षे अज्ञाननिवृत्तिप्रतिपादकश्रुत्यनुसारेण अज्ञानविरोधिप्रमाज्ञानप्रागभावमात्रम् अज्ञानव्याप्यमित्येव स्वीकर्तव्यं न तु प्रमाज्ञानाभावमात्रम् अज्ञानव्याप्यम्। मोक्षे प्रमाज्ञानाभावे विद्यमानेऽपि प्रमाज्ञानप्रागभावो न विद्यते। यत्र अग्रे प्रमाज्ञानमुत्पत्स्यते तत्रैव प्रमाज्ञानप्रागभावः स्वीक्रियते। मुक्तस्य न प्रमाज्ञानम् उत्पत्स्यते इति न तत्र प्रमाज्ञानप्रागभावः स्वीकार्य इति भावः ॥१९॥

२०—अद्वैतिभिरज्ञानस्य प्रमाज्ञानमात्रविरोधित्वं स्वीकृतम्, न तु ज्ञानमात्रविरोधित्वम्। प्रतीयते च अज्ञानं ज्ञानमात्रविरोधित्वेन न तु प्रमामात्रविरोधित्वेन तथा च अज्ञानस्य ज्ञानमात्रनिवर्त्यत्वं वक्तव्यम् न तु प्रमानिवर्त्यत्वमित्याशंक्य समाधत्ते—न च कथं 'प्रमाणवृत्तिमात्रविरोधित्वे अज्ञानस्य ज्ञानमात्रविरोधित्वेनैव न जानामीत्याकारेण प्रत्ययः इति वाच्यम्। घटादिमात्रविरोधिनो घटाभावादेः भावसामान्यविरोधित्वेन अभावत्वेन प्रतीतिवत् ज्ञानविशेषविरोधिनोऽपि अज्ञानस्य 'ज्ञानसामान्यविरोधित्वेन प्रतीतिसम्भवात्। न हि अभावपदादिना 'अभावप्रतीतौ घटाभावो न भासते। अथ सा विरोधिता तत्र विशेषमात्रपर्यवसन्ना

समं प्रकृतेऽपि अन्यत्राभिनिवेशात्। जानामीतिप्रतीतौ ज्ञानसामान्यभासते न तु प्रमाज्ञानमात्रम्। जानामीतिप्रतीतौ यद्भासते तद्विरोधिरूपमेव न जानामीतिप्रतीतौ भासते इत्यवश्यमङ्गीकर्तव्यम्। तथा च न जानामीतिप्रतीतिविषयोऽज्ञानं ज्ञानसामान्यविरोध्येव न तु प्रमाज्ञानमात्रविरोधि; एवञ्च अद्वैतिभिरुक्तमसङ्गतम्। प्रमामात्रविरोधिनोऽज्ञानस्य ज्ञानसामान्यविरोधित्वेन प्रतिभासायोगात् इति भावः समाधत्ते—ज्ञानविशेषविरोधिनोऽपि अज्ञानस्य ज्ञानसामान्यविरोधित्वेन प्रतिभासो भवितुमर्हति। विशेषविरोधिनोऽपि सामान्यविरोधित्वेन भानं दृष्टं यथा घटमात्रविरोधिनो घटाभावस्य भावमात्रविरोध्यभावत्वेन प्रतीतिः; घटाभावोऽपि अभाव एव, अभावप्रतीतेर्विषयो घटाभावोऽपि भवति। घटाभावोऽपि भावसामान्यविरोध्यभावत्वेन प्रतीयते। घटाभावोऽभावत्वेन भावसामान्यविरोधितया यथा प्रतीयते तथा ज्ञानविशेषविरोध्यज्ञानं ज्ञानसामान्यविरोधितया न जानामीति प्रतीयते। प्रमामात्रविरोध्यज्ञानं न प्रमिणोमीत्येवंरूपेण अप्रतीयमानं न जानामीत्येवंरूपेण प्रतीयते। विशेषविरोध्यपि सामान्यविरोधितया प्रतीयते एव। अभावपदेन अभावप्रतीतौ घटाभावोऽपि प्रतीयते; यतो घटाभावोऽपि अभाव एव। भावविरोधित्वञ्च अभावत्वम्, भावमात्रविरोध्यभावः यथा भावविशेषविरोधितया प्रतीयते एवं ज्ञानविशेषविरोध्यज्ञानं ज्ञानसामान्यविरोधितया प्रतीयते। यद्युच्येत यत्र अभावपदं भावमात्रविरोधिप्रतिपादकमपि भावविशेषघटमात्रविरोधिनः प्रतिपादकं तत्र सामान्यतो विरोधिता विशेषविरोधिता पर्यवसायिनी एवं तर्हि न जानामीतिप्रतीतिरपि न प्रमिणोमीति विशेषपर्यवसायिनीति सामान्यतो विरोधिता विशेषविरोधितापर्यवसायिनी। यथा हरिभक्ते बलौ शिवभक्ते वा बाणे प्रयुक्तम् असुरपदं सामान्यतः सुरविरोधित्वेन सुरविरोधिनः प्रतिपादकमपि सुरविशेषविरोध्यर्थप्रतिपादने पर्यवसितम् एवं प्रकृतेऽपीति भावः। सामान्यविरोधितायाः विशेषविरोधितापर्यवसाने अनुभवसिद्धेऽपि तस्यानङ्गीकारे सुभगाभिक्षुकन्यायापातः स्यादित्युक्तम् अन्यत्राभिनिवेशात्। अभिनिवेशात् दुराग्रहादन्यत्र समानं समाधानम्। दुराग्रहे तु उक्तमेव सुभगाभिक्षुकन्यायापातः। वयं तु पश्यामः अज्ञानस्य ज्ञानविरोधित्वं ज्ञाननिवर्त्यत्वेन वक्तव्यम् "ज्ञानेन तु तदज्ञानं

न च—'न जानामी'ति ज्ञप्तिविरोधित्वस्यैवानुभवात् कथं वृत्तिविरोधित्वम्? त्वन्मते चैतन्यस्यैव ज्ञप्तित्वात्, चैतन्याज्ञानयोरविरोधे ज्ञानत्वाज्ञानत्वायोगादिति—वाच्यम्; मन्मते वृत्तिप्रतिबिम्बितचैतन्यं

---

येषां नाशितमात्मनः" इति गीतास्मरणात् प्रमाज्ञाने ज्ञानपदप्रयोगाच्च। अप्रमारूपाणां ज्ञानाभासानां तु साक्षाज्ज्ञानोपादानकत्वेन अज्ञाननिवर्तकत्वाभावात् नाज्ञानस्य ज्ञानाभासविरोधित्वम्। अतोऽनाभासज्ञाननिवर्त्यत्वादज्ञानस्य प्रमाज्ञानविरोधित्वमेवाज्ञानस्य न ज्ञानाभासविरोधित्वम्। ज्ञानाभासव्यावृत्तं ज्ञानं प्रमैवेति प्रमाविरोधित्वमज्ञानस्येति युक्तम्। हेत्वाभासस्य अहेतुत्ववत् ज्ञानाभासस्यापि न ज्ञानत्वं संस्कारादिजनकत्वगुणयोगेन आभासेऽपि ज्ञानपदप्रयोगः। जानामीति प्रतीतिस्तु अन्तकरणवृत्तितादात्म्याध्यासादिति सर्वं निर्मलम् ॥२०॥

२१—अद्वैतिभिः अज्ञानस्य अन्तःकरणवृत्तिरूपप्रमाज्ञाननिवर्त्यत्वात् प्रमाज्ञानविरोधित्वमुक्तं न तु ज्ञप्तिरूपचैतन्यविरोधित्वम्, तन्न संगतम्। न जानामीति प्रतीतौ ज्ञाधात्वर्थज्ञप्तिविरोधित्वेनैव अज्ञानं भासते इति पूर्वपक्षी शंकते—न च **न जानामीति ज्ञप्तिविरोधित्वस्यैवानुभवात् कथं वृत्तिविरोधित्वम्? त्वन्मते चैतन्यस्यैव ज्ञप्तित्वात् चैतन्याज्ञानयोरविरोधे ज्ञानत्वाज्ञानत्वायोगात् इति वाच्यम्।** अद्वैतिभिर्ज्ञप्तिरूपचैतन्यस्य अज्ञानाविरोधित्वं स्वीकृतं तन्न संगतम्। न जानामीतिप्रतीतौ ज्ञाधात्वर्थज्ञप्तिविरोधित्वेनैव अज्ञानस्य भासमानत्वात् अद्वैतिमते चैतन्यमेव ज्ञप्तिः प्रमारूपवृत्तिविरोधित्वेन अज्ञानं नोक्तप्रतीतौ भासते। ज्ञप्तिरूपचैतन्यस्य अज्ञानाविरोधित्वे चैतन्यस्य ज्ञानत्वमनुपपन्नं स्यात्; अज्ञानविरोधिन एव ज्ञानत्वात्; अज्ञानाविरोधिनस्तु ज्ञानत्वं कथमपि न स्यात्। प्रमावृत्तेरपि ज्ञानरूपत्वाभावात्, प्रमावृत्तिविरोधिनः अज्ञानत्वमपि न स्यात्, ज्ञानविरोधिन एव अज्ञानत्वात्। चैतन्यस्यैव ज्ञानरूपत्वात् तद्विरोधिनः कथमज्ञानत्वम्। अतश्चैतन्याज्ञानयोरविरोधे तयोर्ज्ञानत्वाज्ञानत्वे न स्याताम्। मुख्यज्ञानविरोधिन एवाज्ञानत्वात्। प्रमावृत्तिस्तु न मुख्यं ज्ञानम्। अतः सिद्धान्तिमते अज्ञानं मुख्यज्ञानाविरोधि अमुख्यज्ञानविरोधि च स्यात्। मुख्यज्ञानाविरोधि च अज्ञानमपि न मुख्याज्ञानम् अज्ञानाविरोधि च चैतन्यमपि

जानामीति व्यवहारविषयः। तथा च न जानामीत्यनेन वृत्तिचित्तो-रुभयोरप्यज्ञानविरोधित्वं विषयीक्रियते। एवं च न चैतन्ये अज्ञान-विरोधित्वम्; नापि वृत्तौ; वृत्त्युपारूढचित एवार्थप्रकाशकत्वेन तथात्वात् ॥२१॥

---

न मुख्यं ज्ञानं स्यात् अज्ञानविरोध्येव मुख्यं ज्ञानमिमिति प्रमावृत्तेरेव मुख्यज्ञानत्वं स्यात्, न ज्ञप्तिरूपचैतन्यस्य। अतः सिद्धान्तिमते चैतन्यस्य न मुख्यज्ञानत्वं प्रमाविरोध्यज्ञानस्यापि न मुख्याज्ञानत्वमिति भावः।

सविषयप्रकाशस्यैव व्यवहारदशायां मुख्यज्ञानत्वं तच्च विषयाकारवृत्ति-प्रतिबिम्बितचैतन्यस्यैव, न तु केवलाया वृत्तेः केवलचैतन्यस्य वा; सविषयप्रकाश-विरोधिनः अज्ञानस्यैव मुख्याज्ञानत्वमिति समाधत्ते—मन्मते वृत्तिप्रतिबिम्बित-चैतन्यं जानामीति व्यवहारविषयः तथा च न जानामीत्यनेन वृत्तिचितोरुभयोरप्यज्ञानविरोधित्वं विषयीक्रियते। एवञ्च न चैतन्ये अज्ञानविरोधित्वं नापि वृत्तौ। वृत्त्युपारूढचितः एव अर्थप्रकाशकत्वेन तथात्वात्। अद्वैतिमते विषयाकारवृत्तिप्रतिबिम्बितचैतन्यमेव जानामीति-व्यवहारविषयः। केवलं चैतन्यं केवला वा वृत्तिर्न जानामीतिव्यवहारविषयो भवति। यच्चैतन्यम् अर्थप्रकाशकं तदेव अर्थावरकाज्ञानविरोधि। केवलचैतन्यस्य अर्थप्रकाशरूपत्वाभावात् न तत् अर्थावरकाज्ञानविरोधि। एवं केवलावृत्तिरपि न अर्थप्रकाशरूपा। अतः सापि केवला नाज्ञानविरोधिनी। जानामीतिप्रतीति-विरोधितयैव न जानामीतिप्रतीतिरुदयमासादयति। सविषयप्रकाशविरोधित्वादज्ञानस्य न चिन्मात्रविरोधित्वम्। असंगचिन्मात्रस्य विषयसम्बन्धित्वं न विषयाकारवृत्तिं विनेति वृत्तिप्रतिबिम्बितचैतन्यं विषयप्रकाशः। अतो विषयावरका-ज्ञानविरोधित्वं वृत्तिचितोरुभयोरेव न एकैकस्य। एवञ्च यादृशं ज्ञानं जानामीति व्यवहारविषयः यादृशञ्च अज्ञानं न जानामीति व्यवहारविषयः तयोः ज्ञानस्य न शुद्धचिद्रूपत्वं नापि शुद्धवृत्तिरूपत्वम् एवमज्ञानस्यापि न चिन्मात्रविरोधित्वं नापि-वृत्तिमात्रविरोधित्वमिति भावः ॥२१॥

२२—चैतन्यस्य स्फुरणरूपत्वात् स्फुरणे अज्ञाननिवर्तकत्वस्य अन्वयव्यति-रेकसिद्धत्वात् चिद्रूपस्फुरणमेव अज्ञाननिवर्तकमङ्गीकर्तव्यं न तु वृत्तेरिति शंकते—

ननु—वृत्तेरप्यर्थप्रकाशकत्वं विना जातिविशेषेणैवाज्ञानतत्कार्य-निवर्तकत्वे इच्छादिनिवर्त्यद्वेषादिवत् सत्त्वापत्त्या शुक्त्यादिज्ञानवदर्थ-प्रकाशकत्वेन तन्निवर्तकत्वे वक्तव्ये चैतन्यस्यापि तत्सत्त्वेन तन्निवर्तकत्वा-वश्यम्भावेन तन्निवृत्त्यापातः; नित्यातीन्द्रिये परोक्षवृत्तौ सत्यामप्यज्ञाना-निवृत्त्या सुखादावपरोक्षवृत्त्यभावेऽपि स्फुरणमात्रेणाज्ञानादर्शनेन चान्वय-व्यतिरेकाभ्यां स्फुरणस्यैवाज्ञानविरोधित्वात्—इति चेत् ॥२२॥

---

ननु वृत्तेरपि अर्थप्रकाशकत्वं विना जातिविशेषेणैव अज्ञानतत्कार्य-निवर्तकत्वे इच्छादिनिवर्त्यद्वेषादिवत् सत्यत्वापत्त्या शुक्त्यादिज्ञान-वदर्थप्रकाशकत्वेन तन्निवर्तकत्वे वक्तव्ये चैतन्यस्यापि तत्सत्त्वेन तन्निवर्तकत्वावश्यम्भावेन तन्निवृत्त्यापातः। नित्यातीन्द्रिये परोक्षवृत्तौ सत्यामपि अज्ञानानिवृत्त्या सुखादौ अपरोक्षवृत्त्यभावेऽपि स्फुरण-मात्रेण अज्ञानादर्शनेन च अन्वयव्यतिरेकाभ्यां स्फुरणस्यैव अज्ञान-विरोधित्वात् इति चेत्। चैतन्यस्य अज्ञाननिवर्तकत्वम् अवश्यमङ्गीकर्तव्यम्; यतोऽर्थप्रकाशकत्वमेव अज्ञाननिवर्तकतावच्छेदकम्। तच्च चैतन्येऽपि अतश्चैतन्य-मज्ञाननिवर्तकं भवत्येव। वृत्तेरपि अज्ञाननिवर्तकत्वे अर्थप्रकाशकत्वमेवावच्छेदकम्। वृत्तेरर्थप्रकाशकत्वं विनैव यदि वृत्तित्वचाक्षुषत्वादिप्रयुक्तमेव अज्ञानतत्कार्यनिवर्त-कत्वं स्यात्तर्हि इच्छावृत्तिनिवर्त्यद्वेषस्यैव चाक्षुषादिवृत्तिनिवर्त्याज्ञानस्य तत्कार्यस्य च सत्यत्वं स्यात्। चाक्षुषत्वादिजात्या वृत्तेरज्ञानतत्कार्यनिवर्तकत्वे इच्छानिवर्त्यद्वेषस्येव अज्ञानतत्कार्ययोः सत्यत्वं स्यात्। अज्ञानतत्कार्ययो-र्मिथ्यात्वोपादानाय वृत्तेरज्ञाननिवर्तकत्वे अर्थप्रकाशकत्वरूपधर्मत्वमेव अवच्छेदकं स्वीकर्तव्यम्। न तु वृत्तिगतचाक्षुषत्वादि। यथा शुक्त्यादिज्ञानं शुक्त्याद्यर्थप्रकाश-कत्वेनैव शुक्त्याद्यज्ञानतत्कार्ययोर्निवर्तकम् एवं वृत्तिरपि अर्थप्रकाशकत्वेनैव अज्ञानतत्कार्ययोर्निवर्तिकेति स्वीकार्यम्। वृत्तौ अर्थप्रकाशकत्वमिव चैतन्येऽपि अर्थप्रकाशकत्वं वर्तते। अतो वृत्तिवत् चैतन्यमपि अज्ञानतत्कार्यनिवर्तकं भवत्येव। येन रूपेण वृत्तेरज्ञाननिवर्तकत्वं तद्रूपस्य चैतन्येऽपि सत्त्वात् चैतन्यं नाज्ञाननिवर्तकमिति कथमपि सिद्धान्तिना वक्तुं न शक्यते। किञ्च स्फुरणरूप-चैतन्यस्य अज्ञाननिवर्तकत्वम् अन्वयव्यतिरेकसिद्धम् न वृत्तेरिति दर्शयन्नाह—

न; प्रमाणवृत्त्युपारूढप्रकाशत्वेन निवर्तकत्वं ब्रूमः, न तु जातिविशेषेण, प्रकाशत्वमात्रेण वा। अतो नेच्छादिनिवर्त्यद्वेषादिवदेतन्निवर्त्यानां सत्त्वापत्तिः, न वा चैतन्यमात्रस्य निवर्तकत्वापत्तिः। अत एव—शाब्दादिवृत्तौ सत्यामपि अज्ञानानिवृत्त्या सुखादौ प्रमाणवृत्त्यभावे स्फुरणमात्रेणाज्ञानादर्शनेनान्वयव्यतिरेकाभ्यां स्फुरणस्यैवाज्ञानादौ विरोधित्वमिति —निरस्तम्; परोक्षवृत्तेर्विषयपर्यन्तत्वाभावेन न विषयगताज्ञाननिवर्तकत्वम्, सुखादौ च ज्ञातैकसत्त्वादज्ञाननिवृत्तिं विनैवाज्ञाना-

---

नित्यातीन्द्रिय इति। नित्यातीन्द्रियधर्माधर्मादिगोचरपरोक्षवृत्तेः सत्त्वेऽपि धर्मादिविषयमकमज्ञानं न निवर्तते इति अन्वयव्यभिचारो वृत्तौ दर्शितः। वृत्तौ व्यतिरेकव्यभिचारमाह—सुखादौ इति। सुखादिविषयकापरोक्षवृत्तेरभावेऽपि साक्षिस्फुरणमात्रेण सुखादिगोचराज्ञानस्य अदर्शनं भवति। चैतन्यस्फुरणमात्रस्य अज्ञानानिवर्तकत्वे साक्षिवेद्यसुखादिकमज्ञानावृतमेव स्यात्, न कदापि भासेत। चैतन्यस्फुरणाभावात् सत्यापपि परोक्षवृत्तौ धर्मादिगोचराज्ञानस्य न निवृत्तिः। साक्षिचैतन्यस्फुरणसत्त्वात् अपरोक्षवृत्तेरभावेऽपि सुखादिगोचराज्ञानस्य निवृत्तिर्जायते। अतोऽन्वयव्यतिरेकाभ्यां चैतन्यस्फुरणमेवाज्ञानविरोधि न वृत्तिरज्ञानविरोधिनीति भावः। सुखादीनां साक्षात् साक्षिवेद्यत्वमतेनेदम्। उक्तञ्च संक्षेपशारीरकटीकायाम् आचार्यश्रीचरणैः "स्वच्छान्तःकरणसुखादिभाने च वृत्तिं विनापि तदाकारत्वसम्भवात् इति [संक्षेपशारीरकटीका, पृ०, ३७ काशी सं०]"। अतो यदुक्तं सिद्धान्तिना चैतन्यं अज्ञानसाधकमेव न बाधकम्, वृत्तिरेवाज्ञानबाधिकेति तन्न संगतम् ॥२२॥

२३—प्रमाणजन्यान्तःकरणवृत्त्युपारूढप्रकाशत्वेन अज्ञानतत्कार्यनिवर्तकत्वं न वृत्तिगतजातिविशेषरूपेण न वा प्रकाशत्वमात्रेण इति समाधत्ते—न, प्रमाणवृत्त्युपारूढप्रकाशत्वेन निवर्तकत्वं ब्रूमः, न तु जातिविशेषरूपेण प्रकाशत्वमात्रेण वा। अतो नेच्छादिनिवर्त्यद्वेषादिवत् एतन्निवर्त्यानां सत्त्वापत्तिः। न वा चैतन्यमात्रस्य निवर्तकत्वापत्तिः। अत एव शब्दादिवृत्तौ सत्यामपि अज्ञाननिवृत्त्या सुखादौ प्रमाणवृत्त्यभावे स्फुरणमात्रेण अज्ञानादर्शनेन अन्वयव्यतिरेकाभ्यां स्फुरणस्यैव अज्ञानादौ विरोधि-

दर्शनम्। अतोऽन्वयव्यतिरेकयोरन्यथासिद्ध्या स्फुरणमात्रं नाज्ञान-विरोधि। न चात्मनोऽज्ञानाश्रयविषयत्वे स्वसत्तायामप्रकाशविधुरत्वेन स्वप्रकाशत्वसाधनायोगः; परिपूर्णत्वादिना अप्रकाशविधुरत्वाभावेऽप्यध्यासाधिष्ठानत्वादिना प्रकाशमानतयाऽप्रकाशविधुरत्वसंभवात् ॥२३॥

---

त्वम् इति निरस्तम्। परोक्षवृत्तेर्विषयपर्यन्तत्वाभावेन न विषयगताज्ञाननिवर्तकत्वं सुखादौ च ज्ञातैकसत्त्वादज्ञाननिवृत्तिं विनैव अज्ञानादर्शनम् अतोऽन्वयव्यतिरेकयोः अन्यथासिद्ध्या स्फुरणमात्रं नाज्ञान-विरोधि। न च आत्मनो अज्ञानाश्रयविषयत्वे स्वसत्तायाम् अप्रकाशविधुरत्वेन स्वप्रकाशत्वसाधनायोगः परिपूर्णत्वादिना अप्रकाशविधुरत्वाभावेऽपि अध्यासाधिष्ठानत्वादिना प्रकाशमानतया अप्रकाशविधुरत्वसम्भवात्। पूर्वपक्ष्युक्तमसंगतं यतो न वयं वृत्तित्वचाक्षुषत्वादिवृत्तिगतजातिपुरस्कारेण वृत्तेर्नाज्ञाननिवर्तकत्वं ब्रूमः; न वा अर्थप्रकाशकत्वेन वृत्तेरज्ञाननिवर्तकत्वं ब्रूमः। नापि प्रकाशत्वमात्रेण चैतन्यस्यापि अज्ञाननिवर्तकत्वम्; किन्तु प्रमाणजन्यान्तःकरणवृत्त्यवच्छिन्नचित्येव प्रमात्वव्यवहारेण प्रमात्वेन प्रमानिवर्त्यस्य अज्ञानतत्कार्ययोः मिथ्यात्वम्। केवलायां वृत्तौ केवलचैतन्ये वा प्रमात्वाव्यवहारात् न केवलाया वृत्तेः केवलचिन्मात्रस्य वा नाज्ञाननिवर्तकत्वम्। इच्छादेर्द्वेषनिवर्तकत्वेऽपि न प्रमात्वेन निवर्तकता। अतो न द्वेषादेर्मिथ्यात्वम्। नैवं शुक्तिप्रमानिवर्त्यस्य रजतादेः सत्यत्वम्। चिन्मात्रस्य प्रमात्वाभावात् चित्प्रकाश्यमज्ञानं न चिन्मात्रनिवर्त्यम्। अतः प्रमात्वाभावात् चिन्मात्रं वृत्तिमात्रं वा नाज्ञाननिवर्तकम्। प्रमावृत्त्युपारूढप्रकाशत्वमेव अज्ञाननिवर्तकतावच्छेदकम्। यदपि नित्यातीन्द्रिये धर्माधर्मादौ सत्यामपि शब्दजन्यपरोक्षवृत्तौ धर्मादिविषय वा ज्ञानानिवृत्त्या न वृत्तेरज्ञाननिवर्तकत्वम्; वृत्तेः सत्त्वेऽपि अज्ञाननिवृत्तेरनुत्पादात्। सुखादौ प्रमाणवृत्तेरभावेऽपि साक्षिस्फुरणमात्रेण सुखादिगोचराज्ञानादर्शनेन वृत्तेरभावेऽपि अज्ञानादर्शनेन न वृत्तेरज्ञानविरोधित्वं किन्तु स्फुरणरूपचैतन्यस्यैव अज्ञानविरोधित्वमन्वयव्यतिरेकाभ्यां निश्चीयते इत्युक्तम् पूर्ववादिना तदपि निरस्तम्। यतः धर्मादिविषयकपरोक्षवृत्तेर्विषयपर्यन्ताप्रसरात् न परोक्षवृत्तेर्विषयगताज्ञाननिवर्तकत्वम्। एतेन वृत्तौ अन्वयव्यभिचारो

निरस्तः । वृत्तौ व्यतिरेकव्यभिचारमुद्धरति—सुखादौ चेति । सुखादेः साक्षिभास्यत्वात् ज्ञातैकसद्रूपत्वेन तत्राज्ञानप्रसक्तेरेवाभावात् सुखादिगोचराज्ञाननिवृत्तिं विनैव सुखादेः स्फुरणात् । वृत्तौ व्यतिरेकव्यभिचारो निरस्तः । अतः स्फुरणमात्रस्य अज्ञाननिवर्तकतासिद्धये पूर्वपक्षिणा स्फुरणे प्रदर्शितान्वयव्यतिरेकौ अन्यथासिद्धौ, अन्यथासिद्धाभ्याम् अन्वयव्यतिरेकाभ्यां स्फुरणमात्रस्य नाज्ञाननिवर्तकत्वं सिद्ध्यतीति भावः । स्फुरणस्य अज्ञाननिवर्तकतासिद्धये वृत्तेरज्ञाननिवर्तकत्वे अन्वयव्यतिरेकव्यभिचारप्रदर्शनं कृतं स्फुरणस्यापि अज्ञाननिवर्तकत्वे अन्वयव्यतिरेकौ अन्यथासिद्धौ वृत्तेरेवाज्ञाननिवर्तकत्वं साधयतः । वृत्तिरज्ञाननिवर्तिकेति प्रमाणवृत्त्युपारूढा चिदेव अज्ञाननिवर्तिकेति सिद्धान्तः । न तु केवला वृत्तिः न वा केवलं चैतन्यम् अज्ञाननिवर्तकम् । स्फुरणरूपचैतन्यस्य अज्ञानाविरोधित्वे सिद्धान्तिमते आत्मनः स्वप्रकाशत्वमेव न सिद्ध्येत् । यतः तैरेवमनुमानं प्रयुज्यते आत्मा, स्वप्रकाशो भवितुमर्हति, स्वसत्तायाम् अप्रकाशवैधुर्यात् । प्रदीपवत् आत्मा स्वसत्तायाम् अप्रकाशविधुरः—अज्ञानसम्बन्धरहित इत्यर्थः । आत्म अज्ञानावृत्तो न भवति । आत्मचैतन्यस्य अज्ञानविरोधित्वादेव अज्ञानावृत्तो न भवति । अज्ञानाविरोधिस्वभावत्वे आत्मनि सत्त्वे तस्य अप्रकाशोऽपि सम्भवेत् । ततो न स्वसत्तायाम् अप्रकाशवैधुर्यं स्यात् । एवञ्च आत्मनः स्वप्रकाशत्वं न सिद्ध्येत् । आत्मनः स्वप्रकाशत्वसिद्धये आत्मनो अज्ञानाश्रयत्वविषयत्वयोः कथमपि सिद्धान्तिना स्वीकर्तुमशक्यत्वात् । आत्मनो अज्ञानस्य आश्रयत्वे विषयत्वे च आत्मनः स्वप्रकाशत्वसिद्धिरेव न स्यात् । ततः प्रदर्शितानुमानमपि न सिद्ध्येत् ।

समाधत्ते सिद्धान्ती—पूर्वपक्ष्युक्तमसंगतम् । पूर्णानन्दरूपेण आत्मनोऽज्ञानावृतत्वेऽपि आत्मनि अप्रकाशवैधुर्याभावेऽपि अहंकाराद्यध्यासाधिष्ठानत्वेन [आत्मनः] सर्वदा प्रकाशमानत्वात् । अप्रकाशवैधुर्याभावात् न स्वप्रकाशत्वसाधकहेतोरसिद्धिः । परिपूर्णत्वेन आत्मनः स्वप्रकाशत्वासिद्धावपि अन्तःकरणाद्यध्यासाधिष्ठानत्वेन आत्मनः स्वप्रकाशत्वसम्भवात् न आत्मनोऽज्ञानाश्रयत्वविषयत्वयोरसम्भवः । पूर्णानन्दत्वेन आत्मनोऽज्ञानावृतत्वात् ॥२३॥

२४—घटप्रकाशसौरालोकज्ञानयोर्वैलक्षण्यवत् प्रमावृत्तिसाक्षिणोर्वैलक्षण्य

न च—वृत्तिचित्तोर्वैषम्योक्तिरयुक्ता, वृत्तिवत्साक्षिणोऽपि समानविषयतया अज्ञानविरोधित्वानुभवात्, अन्यथा साक्षिवेद्ये चैत्रेच्छासुखादौ मैत्रस्येव चैत्रस्याप्यज्ञानं स्यात्, नो चेन्मैत्रस्याप्यज्ञानं न स्यादिति—वाच्यम्; साक्षिणि यदज्ञानविरोधित्वमनुभूयते तन्नाज्ञाननिवर्तकत्व-

---

सर्वसम्मतम्। अन्धकारविरोधिनः सौरालोकस्य अज्ञानाविरोधित्ववत्, साक्षिणोऽज्ञानाविरोधित्वेऽपि प्रमावृत्तेरज्ञानविरोधित्वं स्वीकर्तव्यमिति सिद्धान्त्युक्तम् असंगतम्। यतः साक्षिप्रमावृत्त्योर्द्वयोरेव स्वविषयाज्ञानविरोधित्वं तुल्यमेव अनुभूयते; साक्षिज्ञानं नाज्ञानविरोधि किन्तु प्रमाज्ञानम् इति न युक्तम् इति पूर्वपक्षी शंकते—न च वृत्तिचितोः वैषम्योक्तिरयुक्ता वृत्तिवत् साक्षिणोऽपि समानविषयतया अज्ञानविरोधित्वानुभवात्। अन्यथा साक्षिवेद्ये चैत्रेच्छासुखादौ मैत्रस्येव चैत्रस्यापि अज्ञानं स्यात् नोचेत् मैत्रस्यापि अज्ञानं न स्यादिति वाच्यम्। प्रदर्शितरूपेण वृत्तिचितोर्वैषम्योक्तिरयुक्ता। यतः सिद्धान्तिना अज्ञानविषयकानुमितिरङ्गीकृता। अनुमितिरूपा प्रमावृत्तिर्यथा अज्ञानविषयकाज्ञानविरोधिनी एवमज्ञानविषयकसाक्षिज्ञानमपि अज्ञानविषयकाज्ञानविरोधि, अनुमितिरूपाप्रमावृत्तिः साक्षिज्ञानञ्च उभयम् अज्ञानसाधकम्। अतो द्वयोरेव अज्ञानविषयकाज्ञानविरोधित्वम् अनुमितिवृत्तेरज्ञानाविरोधित्वे अनुमानेन अज्ञानं न सिद्ध्येत्। एवं साक्षिज्ञानं यदि अज्ञानविरोधि न स्यात् तर्हि चैत्रेच्छासुखादौ मैत्रस्य यथा अज्ञातत्वं तथा चैत्रस्यापि स्यात्। चैत्रेच्छासुखादौ साक्षिवेद्ये चैत्रस्य ज्ञातत्वमेव। मैत्रस्य अज्ञातत्वमेव। अतः साक्षिचैतन्यमेव सुखादिविषयकाज्ञानविरोधि। साक्षिभास्ये सुखादौ यदि अज्ञानस्य प्रसक्तिरेव नास्तीत्युच्यते तर्हि चैत्रेच्छादौ मैत्रस्यापि अज्ञातत्वं न स्यात् चैत्रेच्छादीनां चैत्रं प्रतीव मैत्रं प्रत्यपि प्रकाशमानत्वमेव स्यात्। अन्यथेति। साक्षिणोऽज्ञानाविरोधित्वे, चैत्रेच्छादीनां चैत्रं प्रत्यपि प्रकाशमानत्वं न स्यात्। अज्ञानाप्रसक्तौ तु मैत्रस्यापि चैत्रेच्छादिषु अज्ञानं न स्यात्। साक्षिभास्यं यदि अज्ञानेन आवृतं यदि वा अनावृतम् उभयथापि अतिप्रसंगो दुर्वार इति भावः।

साक्षिचैतन्ये अज्ञानविरोधित्वानुभवस्तु न सुखादिविषयकाज्ञाननिवर्तकत्वनिबन्धनः किन्तु साक्षिभास्ये अज्ञानाप्रसक्तिनिबन्धन एव इति समाधत्ते सिद्धान्ती—

निबन्धनम्, किंतु स्वविषय इच्छादौ यावत्सत्त्वं प्रकाशादज्ञानाप्रसक्ति-निबन्धनम्। वृत्तेश्च स्वविषये प्रसक्ताज्ञाननिवृत्तिनिबन्धनमेवेत्युभयोर्वैष-म्योक्तिर्युक्तैव । अज्ञानाप्रसक्तेरेव चैत्रेच्छादौ चैत्रस्य नाज्ञानव्यवहारः, मैत्रस्य तु प्रमात्रज्ञानादेव तद्व्यवहारः ॥२४॥

---

साक्षिणि यदज्ञानविरोधित्वमनुभूयते तन्नाज्ञाननिवर्तकत्वनिबन्धनं किन्तु स्वविषय इच्छादौ यावत् सत्त्वं प्रकाशादज्ञानाप्रसक्तिनिबन्धनम्। वृत्तेश्च स्वविषये प्रसक्ताज्ञाननिवृत्तिनिबन्धनमेवेति उभयोर्वैषम्यो-क्तिर्युक्तैव । अज्ञानाप्रसक्तेरेव चैत्रेच्छादौ चैत्रस्य नाज्ञानव्यवहारः। मैत्रस्य तु प्रमात्रज्ञानादेव तद्व्यवहारः। साक्षिचैतन्ये प्रमावृत्तौ च अज्ञानविरोधित्वं द्वेधा, साक्षिभास्ये अज्ञानाप्रसक्तिनिबन्धनं साक्षिचैतन्यस्य अज्ञानविरोधित्वमनुभूयते। न हि साक्षिभास्ये प्रसक्तमज्ञानं निवर्तयत् साक्षिचैतन्यम् अज्ञानविरोध्यनुभूयते। अज्ञानसाधकस्य साक्षिणः अज्ञान निवर्तकत्वाभावात। साक्षिभास्यसुखादीनां यावत् सत्त्वं प्रकाशमानत्वनियमादेव साक्षिभास्ये अज्ञानाप्रसक्तिरिति भावः। अज्ञातं सुखमप्रसिद्धमेव। न हि नैयायि-कादिवत् अस्माभिः सुखादीनामवश्यवेद्यत्वनियमोऽङ्गीक्रियते। अज्ञातसुखादेरली-कत्वात्। साक्षिभास्यमपि यदि अज्ञातं स्यात तर्हि कदापि न प्रकाशेत। अज्ञानसाधकस्य साक्षिणोऽज्ञानबाधकत्वासंभवात्। प्रमावृत्तिरेव स्वविषये प्रसक्ताज्ञानं निवर्तयतीति अज्ञानविरोधिनी भवति। अतः साक्षिप्रमावृत्त्योः वैषम्यम् अनुभवयुक्तिभ्यां सिद्धम्। साक्षिभास्ये चैत्रसुखादौ अज्ञानाप्रसक्तेरेव चैत्रस्य नाज्ञातत्वव्यवहारः सम्भवति। चैत्रसुखे मैत्रस्य तु अज्ञातत्वव्यवहारः प्रमात्राश्रिता सत्त्वापादकाज्ञाननिबन्धनः। प्रतिजीवं जीवसाक्षिणोर्भिन्नत्वात् न प्रदर्शितशंकावकाशः। एतेन यदुक्तं पूर्वपक्षिणा—

> साक्षी स्वविषयेऽज्ञानविरोधी न भवेद्यदि।
> तद्वेद्ये सुखदुःखादौ अज्ञानं केन वार्यते ॥

इति निरस्तम्। साक्षिवेद्यस्य यावत् सत्त्वं प्रकाशमानत्वात् अज्ञानाप्रसक्तेरेव अज्ञातत्वव्यवहारासंभवात ॥२४॥

न च—तर्ह्यात्मन्यपि तत एव तदप्रसक्तिरिति—वाच्यम्; दत्तोत्तरत्वात्। किंच साक्षिवेद्यत्वं तदप्रसक्तौ तन्त्रम्, आत्मा तु न तद्वेद्यः; चिद्रूपत्वात् प्रकाश एवेति ॥२५॥

न च—तर्हि सुतरामज्ञानानुपपत्तिः तेजसीव तमसः, अन्यथा घटादिरालोकमिवात्मापि स्वव्यवहारे ज्ञानान्तरमपेक्षेतेति—वाच्यम्;

---

२५—साक्षिवेद्यस्य यावत् सत्त्वं प्रकाशमानत्वात् यदि तत्र अज्ञानस्य अप्रसक्तिस्तदा आत्मनोऽपि सर्वदा प्रकाशमानत्वात् तत्रापि अज्ञानाप्रसक्तिः स्यात्। तथा च आत्मनि अज्ञाननिवारणाय शास्त्रं व्यर्थं स्यादिति पूर्वपक्षिमतमाशङ्क्य समाधत्ते—न च तर्हि आत्मन्यपि तत एव तदप्रसक्तिरिति वाच्यम् दत्तोत्तरत्वात्। किंच साक्षिवेद्यत्वं तदप्रसक्तौ तन्त्रम्, आत्मा तु न तद्वेद्यः चिद्रूपत्वात् प्रकाश एवेति। अध्यासाधिष्ठानत्वेन सर्वदा प्रकाशमानेऽपि आत्मनि परिपूर्णत्वादिरूपेण आत्मनो अज्ञानावृतत्वात्। तथा च न शास्त्रवैयर्थ्यम्। किञ्च सुखादिषु अज्ञानाप्रसक्तौ साक्षिवेद्यत्वं प्रयोजकमुक्तम्। यद्यत् साक्षिवेद्यं तज्ज्ञातैकसत् यथा सुखादिकम्। नैतावता आत्मनि अज्ञानाप्रसक्तिः, आत्मनः साक्षिरूपत्वेन साक्षिवेद्यत्वाभावात्, चिद्रूपत्वेन प्रकाशमानत्वेऽपि पूर्णतया अज्ञानावृतत्वात् आसंसारं न तद्रूपेण प्रकाशते ॥२५॥

२६—आत्मनश्चिद्रूपत्वे सुतरां तत्राज्ञानानुपपत्तिः; तेजसीव तमसः यदि प्रमावृत्तिचैतन्ययोर्वैषम्यप्रतिपादनाय प्रमावृत्तेरज्ञानविरोधित्वेऽपि चैतन्यं नाज्ञानविरोधि, तर्हि स्वविषयाज्ञानाविरोधिनो घटादेरिव आत्मापि स्वव्यवहारे स्वातिरिक्तज्ञानम् अपेक्ष्येत इति शंकते—न च तर्हि सुतराम् अज्ञानानुपपत्तिः तेजसीव तमसः। अन्यथा घटादिरालोकमिव आत्मापि स्वव्यवहारे ज्ञानान्तरमपेक्ष्येतेति वाच्यम्। अद्यापि पूर्वपक्षिणो हृदये चिन्मात्राज्ञानयोर्विरोधो जागर्त्येव यस्य समाधानम् इतः प्रागेव विस्तरशः कृतम्। तथापि पुनः शंकते—तेजसीव तमसः चिन्मात्रेऽज्ञानमनुपपन्नं विरोधात्। प्रमाचैतन्ययोर्वैलक्षण्यप्रतिपादनाय यदि चैतन्याज्ञानयोर्विरोधो नाङ्गीक्रियेत तर्हि स्वविषयाज्ञानाविरोधिनो घटादेर्जडस्येव स्वप्रकाशाय आलोको यथा अपेक्ष्यते, तथा चिद्रूपस्य आत्मनोऽपि स्वव्यवहाराय स्वविषयकज्ञानमपेक्ष्येत। तथा च आत्मनो

जडत्वापत्त्या सिद्धान्तिनः स्वसिद्धान्तपरित्यागः स्यात्। आत्मनो जडत्वापत्तिभयात् अज्ञानविरोधित्वमङ्गीकरणीयम् इति भावः।

यद्यदज्ञानावृतं तत् स्वव्यवहाराय स्वातिरिक्तमज्ञाननिवर्तकमपेक्ष्यते। यथा अज्ञानावृतं घटादिवस्तु घटव्यवहारे स्वातिरिक्ताज्ञाननिवर्तकप्रमाज्ञानमपेक्ष्यते। पूर्वपक्षिणा एवमुक्ते अस्माकमिष्टमित्येव अस्माभिरुच्यते—यथा अज्ञानावृत आत्मा स्वव्यवहाराय स्वातिरिक्ताज्ञाननिवर्तकप्रमावृत्तिमपेक्ष्यते एव यदि पूर्वपक्षिणा एवमुच्येत यद्यद् वस्तु अज्ञातं तत् स्वव्यवहारे स्वातिरिक्तप्रकाशं यथा अज्ञातं घटादि स्वव्यवहाराय स्वातिरिक्तचित्प्रकाशमपेक्ष्यते एवमात्मापि स्वातिरिक्तचित्प्रकाशमपेक्षिष्यते। दृष्टान्तो घटाद्यज्ञातमपि—स्वव्यवहारे स्वातिरिक्तप्रकाशसापेक्षमपि, एवमात्मापि स्यात्। एतेन एवमनुमानं पूर्वपक्षिणा दर्शयितव्यम्—अज्ञात आत्मा, स्वव्यवहारे स्वातिरिक्तप्रकाशसापेक्षः, अज्ञातत्वात् घटवत्। अत्र वक्तव्यम् अस्मिन्ननुमाने आत्मा पक्षः, घटो दृष्टान्तः, अज्ञातत्वं हेतुः। अयं हेतुः सोपाधिकः; अत्र जडत्वमुपाधिः। दृष्टान्ते उपाधेः सत्त्वात् उपाधेः साध्यव्यापकत्वम्, पक्षे उपाधेरसत्त्वात् हेतोरव्यापकत्वम्। अज्ञातत्वमेव हेतुः। अयं हेतुरात्मनि वर्तते किन्तु जडत्वधर्मं आत्मनि नास्ति। तथा च भवत्येव जडत्वमुपाधिः। यद्येवमुच्येत उपाधित्वेनोद्भावितो जडत्वधर्मः कः, यदि चिद्भिन्नत्वं जडत्वं तदा पक्षेतरत्वापत्तिः। यतश्चिद्रूप आत्मा एव पक्षः। पक्षभेद उपाधिर्न भवति। पक्षभेदस्योपाधित्वेऽनुमानमात्रमुच्छिद्येत। हेतोर्व्यभिचारानुमानमेवोपाध्युद्भावनफलम्। हेतोर्व्यभिचारानुमाने यः पक्षो भविष्यति तस्य पक्षस्य भेदोऽपि पुनरुपाधिर्भविष्यति। एवं रीत्या पक्षभेदस्योपाधित्वे स्वव्याघातकत्वमेव स्यात्। कुत्रचित् पक्षभेदोऽप्युपाधिर्भवति। पक्षे बाधनिश्चयकाले पक्षभेदोऽपि भवत्युपाधिः। स्यादेतत्, सिद्धिकृता जडत्वस्य उपाधित्वमुक्तम्। जडत्वञ्च मिथ्यात्वम्। मिथ्यात्वं परिच्छिन्नत्वं वा जडत्वम्। अतः प्रदर्शितानुमानस्य सोपाधिकत्वात् साध्यसिद्धिर्न स्यात्। आत्मनः प्रकाशरूपत्वेऽपि प्रकाशरूपे आत्मनि यदज्ञानविरोधित्वं नास्ति तत् प्रागेवोक्तम्। अतो विवरणाचार्यैः उक्तम्—सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एव। तत् सुसंगतमेव। ज्ञानम् अज्ञानञ्च उभयं साक्षिभास्यम्। एतयोः

अज्ञानावृतत्वात् घटवदज्ञाननिवर्तकान्तरापेक्षा चेत्तर्हीष्टापत्तिः; वृत्तेरेवापेक्षणात्, प्रकाशान्तरापेक्षायां जडत्वस्योपाधित्वात्, प्रकाशत्वेऽप्यज्ञानाविरोधित्वस्योपपादितत्वात्। अत एव सर्वं वस्तु ज्ञाततयाज्ञाततया च साक्षिचैतन्यस्य विषयः; ज्ञानाज्ञानयोः स्वविषयावच्छिन्नयोरेव भानात्। एतेन—अन्धकारावृतवत् ज्ञानाभावावच्छेदकविषयवच्चाज्ञानावृतस्याप्यप्रकाशेन साक्षिवेद्यत्वायोग इति—निरस्तम्; विषयावच्छेदेनानुभवविरोधात् ॥२६॥

---

साक्षिभास्यत्वेऽपि स्वविषयावच्छिन्नस्यैव साक्षिभास्यत्वम्। विषयाविशेषिताज्ञानं साक्षिणा न भास्यते। विषयविशेषितं ज्ञानं यदा साक्षिणा भास्यते तदा ज्ञानस्य विषयोऽपि ज्ञातत्वेन, एवं विषयविशेषिताज्ञानस्य साक्षिभास्यत्वेऽज्ञानविषयोऽपि अज्ञातत्वरूपेण साक्षिचैतन्ये न प्रकाश्यते। एतत्सर्वं सिद्धावुक्तम्—अज्ञानावृतत्वात्, घटवदज्ञाननिवर्तकान्तरापेक्षा चेत्तर्हि इष्टापत्तिः। वृत्तेरेवापेक्षणात्। प्रकाशान्तरापेक्षायां जडत्वस्योपाधित्वात्। प्रकाशत्वेऽपि अज्ञानाविरोधित्वस्योपपादितत्वात्। अत एव सर्वं वस्तु ज्ञाततया अज्ञाततया च साक्षिचैतन्यस्य विषयः, ज्ञानाज्ञानयोः स्वविषयावच्छिन्नयोरेव भानात्। अयं सन्दर्भः प्रागेव कृतव्याख्यानः।

पूर्वपक्षी शंकते—अद्वैतवादिना यदुक्तं ज्ञानविषयवत् अज्ञानविषयोऽपि साक्षिवेद्य इति। तन्न संगतम्, यतोऽज्ञानावृतस्य प्रकाश एवासिद्धः। अतोऽज्ञानविषयस्य न साक्षिवेद्यत्वम्। यथा अन्धकारावृतं वस्तु न प्रकाशते, तद्वदेव अज्ञानविषयोऽपि न प्रकाशते। यथा वा ज्ञानाभावावच्छेदकविषयोऽपि न प्रकाशते तद्वत् अज्ञानविषयः साक्षिणा न भास्येत। यथा मयि घटज्ञानं नास्ति इत्येव ज्ञानाभावप्रतीतौ ज्ञानावच्छेदको घटः न प्रकाशते। यत् प्रकाशमानमेव न भवति तत् साक्षिवेद्यमपि न भवितुमर्हति पूर्वपक्षिमतमाशंक्य समाधत्ते—एतेनान्धकारावृतवत् ज्ञानाभावावच्छेदकविषयवच्च अज्ञानावृतस्यापि अप्रकाशेन साक्षिवेद्यत्वायोगः इति निरस्तम्। कृतविवरणमेतत्। अनुभवविरोधात् पूर्वपक्ष्युक्तं न संगतमित्याह सिद्धान्ती—विषयावच्छेदेऽनुभवविरोधात्। विषयानवच्छिन्नमज्ञानं साक्षिणा नानुभूयते। त्वदुक्तमर्थं

"ननु—वृत्तेरज्ञानविरोधित्वेऽप्यात्मविषया वृत्तिरिदानीमप्यस्त्येवेति कथं तत्राज्ञानम्? किंच त्वन्मते घटाद्यपरोक्षवृत्तेरपि घटाद्यवच्छिन्न-चिद्विषयत्वेन सुतरां चित्यज्ञानासंभवः, न च—विशिष्टचैतन्यरूपजीव-विषया वा घटावच्छिन्नचैतन्यविषया वा वृत्तिरज्ञानविषयीभूतकेवल-चिदविषयत्वादज्ञानविरोधिनी न स्यादिति—वाच्यम्; 'दण्डी चैत्र'

---

न जानामि शास्त्रार्थं न जानामीत्याद्यज्ञानसाक्षिप्रत्यक्षे विषयावच्छिन्नमेवाज्ञानं साक्षिणा अनुभूयते। अतोऽज्ञानविषयः साक्षिणा न वेद्यते इत्युक्तौ प्रदर्शितानुभवो विरुद्धयेत ॥२६॥

२७—पूर्वपक्षी शंकते—सिद्धान्तिमते प्रमावृत्तिरेव अज्ञानविरोधिनीति स्वीक्रियते। संसारदशायाम् आत्मविषयकप्रमावृत्तिर्विद्यत एव। अतोऽहमाकारा प्रमावृत्तिर्जीवमात्रस्यैव भवति। अत आत्मविषयकप्रमावृत्तेर्विद्यमानतादशायाम् आत्मावरकमज्ञानं कथं तिष्ठेत्? आत्मविषयकाज्ञानानवस्थाने जीवस्य संसार एवानुपपन्नः। आत्मविषयकप्रमावृत्त्या अर्थात् अहमित्याकारकप्रमावृत्त्या आत्मविषयकाज्ञाननिवृत्तौ सद्यो मोक्षापत्तिः स्यात्। ननु वृत्तेरज्ञानविरोधित्वेऽपि आत्मविषयावृत्तिरिदानीमप्यस्त्येव इति कथं तत्र अज्ञानम्? कृतविवरणमेतद् वाक्यम्।

किञ्च, घटाद्याकारापरोक्षप्रमावृत्त्या घटावच्छिन्नचिदावरकाज्ञाननाशेन चिति अज्ञानासम्भवः इत्याह—किञ्च, त्वन्मते घटाद्यपरोक्षवृत्तेरपि घटाद्यव-च्छिन्नचिद्विषयत्वेन सुतरां चिति अज्ञानासम्भवः। कृतविवरणमेतत्।

अत्र किञ्चित् सिद्धान्तिसमाधानमाशंक्य निरस्यन्नाह पूर्वपक्षी—न च विशिष्टचैतन्यरूपजीवविषया वा घटावच्छिन्नचैतन्यविषया वा वृत्तिः अज्ञानविषयीभूतकेवलचिद्विषयत्वात् अज्ञानविरोधिनी न स्यात् इति वाच्यम्। चैतन्यविषयमज्ञानमेव नोपपद्यते विरोधात्। अतः चैतन्यमेवाज्ञानस्य विषय इति सिद्धान्तोऽपि न संगच्छते। यद्यद्वैत-वादिन एवं ब्रूयुः—प्रमासमानविषयकाज्ञाननिवर्तिका किन्तु भिन्नविषयिणी प्रमा अज्ञाननिवर्तिका न भवति। अतः अहमाकारवृत्तेः विषयो जीवचैतन्यम्। शुद्धचैतन्यमहं वृत्तेर्विषयो न भवति। अन्तःकरणादिविशिष्ट-

इति वृत्त्या चैत्राज्ञानानभिभवापातात् । घटाकाशज्ञाने महाकाशाज्ञानस्य महत्त्वाज्ञाने पर्यवसानम् । अत एवाकाशो ज्ञात इति प्रतीतिः । न च श्रवणादिजन्यैव वृत्तिरज्ञानविरोधिनी; भ्रमकालीनापरोक्षज्ञानानधिकविषयज्ञानेन कारणान्तरजन्येनापि अज्ञानानिवृत्तावतिप्रसङ्गात्, अनधिकविषयत्वे श्रवणादिवैयर्थ्यात्, सत्यत्वापाताच्चेति—चेत् ॥२७॥

---

चैतन्यमेव जीवः । अतो विशिष्टचैतन्यविषयकः प्रमा शुद्धचैतन्यविषयकाज्ञानस्य न विरोधिनी । समानविषयकप्रमैव अज्ञानविरोधिनी भवति । एवं घटप्रमापि घटावच्छिन्नचैतन्यविषयिणी । घटावच्छिन्नचैतन्यविषयकप्रमा न शुद्धचैतन्यविषयिणीति शुद्धचैतन्यविषयकाज्ञानस्य न विरोधिनी । शुद्धचैतन्यं मूलाज्ञानस्य विषयः । मूलाज्ञानस्य निवृत्तिमन्तरा कदापि मोक्षो न भवितुमर्हति । अतो घटप्रमया वा अहमाकारया वृत्त्या वा सद्यो मोक्षः कथमपि न प्रसज्यते ।

विशिष्टविषयिणी वृत्तिर्यदि शुद्धविशेष्यविषयिणी न स्यात्तर्हि दण्डी चैत्र इति विशिष्टविषयिण्या प्रमया विशेष्यचैत्रगताज्ञानस्यापि निवृत्तिर्न स्यात् । अतो विशिष्टविषयकं ज्ञानमपि शुद्धविशेष्यविषयकाज्ञानस्यापि निवर्तकमभ्युपगन्तव्यम् । तथा च विशिष्टचैतन्यविषयकजीवप्रमया घटावच्छिन्नचैतन्यविषयकघटप्रमया वा शुद्धचैतन्यविषयकाज्ञानस्य निवृत्तिः कथं न भवति इति शंकते—दण्डी चैत्र इति वृत्त्या चैत्राज्ञानानभिभवापातात् । घटाकाशज्ञाने महाकाशाज्ञानस्य महत्त्वाज्ञाने पर्यवसानम् । अत एवाकाशो ज्ञात इति प्रतीतिः । न च श्रवणादिजन्यैव वृत्तिरज्ञानविरोधिनी, भ्रमकालीनापरोक्षज्ञानानधिकविषयज्ञानेन कारणान्तरजन्येनापि अज्ञाननिवृत्तौ अतिप्रसंगात् । अनधिकविषयत्वे श्रवणादिवैयर्थ्यात् सत्यत्वापाताच्च इति चेत् । विशिष्टविषयकज्ञानं यदि शुद्धविशेष्यविषयकमपि न भवेत् तदा दण्डी चैत्र इति प्रमावृत्त्या विशेष्यचैत्रविषयकाज्ञानस्यापि निवृत्तिर्न स्यात् । दण्डी चैत्र इत्येवंरूपा प्रमा केवलचैत्रविषयिणी न भवति । यदि दण्डी चैत्र इति प्रमया चैत्रविषयकाज्ञानस्य निवृत्तिर्न भवेत् तदा दण्डी चैत्र इति ज्ञानानन्तरमपि अयं चैत्रो न वेति संशयस्य, नायं चैत्र इति विपरीतनिश्चयस्य चापत्तिः स्यात् । यतो भ्रमोपादानाज्ञानस्य निवृत्तिर्न प्रदर्शित-

प्रमावृत्त्या सञ्ज्ञाता। यद्युच्येत—घटाकाशज्ञानानन्तरमपि, महाकाशविषयकमज्ञानं वर्तत एव, घटाकाशविषयकज्ञानेन शुद्धमहाकाशविषयकाज्ञानस्य निवृत्तिर्न भवति, एवं विशिष्टविषयकवृत्त्या शुद्धविशेष्यविषयकाज्ञानस्य निवृत्तिर्न भवति। तत्र वक्तव्यम्—घटाकाशज्ञानेनापि शुद्धाकाशविषयकाज्ञानस्य निवृत्तिर्भवत्येव। यतः घटाकाशज्ञानानन्तरम् आकाशमज्ञातमिति प्रतीतिर्न जायते, किन्तु आकाशं ज्ञातमित्येव प्रतीतिर्भवति। घटाकाशज्ञानानन्तरं महाकाशाज्ञानं न शुद्धाकाशविषयकम्, किन्तु आकाशगतमहत्त्वविषयकम्। घटाकाशे ज्ञातेऽपि आकाशगतं महत्त्वं न ज्ञातमिति महाकाशोऽज्ञात इति प्रतीतिर्जायते, किन्तु आकाशमज्ञातमिति प्रतीतिर्न कदापि भवति। आकाशे ज्ञातेऽपि महाकाशस्याज्ञानं न आकाशविषयकम्, किन्तु आकाशगतमहत्त्वविषयकम्। यदि सिद्धान्तिनैवमुच्येत—प्रमावृत्तिमात्रं नाज्ञानविरोधि, किन्तु वेदान्तवाक्यश्रवणादिजन्यब्रह्मसाक्षात्काररूपप्रमावृत्तिरेव मूलाज्ञानविरोधिनीति तन्न संगतम्। यतः, जगद्भ्रमकाले सन् घट इत्यादिः अपरोक्षप्रमाप्रतीतिः सन्मात्रब्रह्मविषयिणी भवति, वेदान्तवाक्यश्रवणजन्यसाक्षात्कारप्रतीतिरपि सन्मात्रब्रह्मविषयिण्येव। अतः जगद्भ्रमकालीनापरोक्षज्ञानं वेदान्तवाक्यश्रवणजन्यापरोक्षज्ञानं चोभयमपि सन्मात्रब्रह्मविषयकम्। जगद्भ्रमकालीनापरोक्षज्ञानात् तत्त्वज्ञानं नाधिकविषयकम्। अतो जगद्भ्रमकालीनेन्द्रियादिजन्यघटाद्यपरोक्षज्ञानं मूलाज्ञानस्य न निवर्तकम् किन्तु वेदान्तवाक्यश्रवणादिजन्यापरोक्षज्ञानमेवं मूलाज्ञाननिवर्तकं भवष्यितीत्युक्तौ ज्ञानकरणवैलक्षण्यप्रयुक्तमेव ज्ञानस्य अज्ञाननिवर्तकत्वमङ्गीकृतं स्यात्, किन्तु समानविषयकं ज्ञानमज्ञानविरोधि इति भवत्सिद्धान्तः परित्यक्तः स्यात्। समानविषयकं ज्ञानमेव अज्ञानविरोधि इति सर्वानुभवसिद्धम्। ज्ञानस्य करणमहिमप्रयुक्ताज्ञाननिवर्तकत्वाभ्युपगमे इन्द्रियजन्यप्रत्यक्षज्ञानं नाज्ञानविरोधि, किन्तु वेदान्तवाक्यश्रवणजन्यसाक्षात्कारि ज्ञानं अज्ञानविरोधि भविष्यतीत्येवं स्वीकारे अतिप्रसंगोऽपि स्यात्। यथा शंखे पीतिमभ्रमानन्तरम् इन्द्रियजन्यश्वेतशंखसाक्षात्कारः पीतभ्रमोपादानाज्ञाननिवर्तको न भवेत् किन्तु वेदान्तवाक्यजन्यश्वेतशंखसाक्षात्कार एवाज्ञाननिवर्तको भवेत्। भ्रमकालीनेन्द्रियजन्यप्रत्यक्षतः वेदान्तवाक्यश्रवणादिजन्यप्रत्यक्षस्य यदि अधिकविषयकत्वं न स्यात्तदा साक्षात्काराय वेदान्तवाक्यश्रवणादि व्यर्थमेव स्यात्। यतः वेदान्तवाक्यश्रवणात् पूर्वमपि सद्विषयक-

साक्षात्कारश्चक्षुरादिद्वारा सिद्ध एवासीत्। सिद्धे सद्विषयकसाक्षात्कारे सद्विषयसाक्षात्काराय वेदान्तवाक्यश्रवणं निरर्थकमेव किञ्चवेदान्तवाक्यजन्यसाक्षात्कारस्य एवम् अविद्यानिवर्तकत्वेऽभ्युपगम्यमाने अविद्यायाः सत्यत्वापत्तिः स्यात्। यतः शास्त्रात् देवताविशेषश्रवणजन्यसाक्षात्कारात् पापनिवृत्तौ निवर्तनीयपापस्य न मिथ्यात्वं सिध्यति। एवं वेदान्तश्रवणजन्यसाक्षात्कारात् अज्ञाननिवृत्तावपि अज्ञानस्य मिथ्यात्वं न सिध्यति। अत आत्मस्वरूपमात्रमज्ञानस्य विषय इति न सिध्यति[1] ॥२७॥

(१) अतः परं जराजीर्णदेहाः ब्रह्मिष्ठाः बालबोधिनिकाराः अभये अजरे अमृत्युपदे आनन्दघने परब्रह्मणि समवलीनाः।

